# विद्वदभ्यर्थनम्

यन्नामस्मरणात्प्रयान्ति विलयं प्रत्यूहपुञ्जाः क्षणाद्वैधेयोऽप्यखिलार्थदर्शनविधौ धत्तेऽद्भुतः कौशलम् ।
लोकेष्वादरपात्रतां मधुरतां चक्रे जगत्युन्नतिं तं श्रीदत्तगुरुं प्रणम्य विदुषो विप्रानदोऽभ्यर्थये ॥ १ ॥
श्रौतस्मार्तपरायणाः सुविमलाचाराः सुगौणीकृतस्वार्था मत्सरपङ्कलेशविधुराः शश्वत्परार्थोद्यताः ।
तेभ्योऽनङ्कितपूर्वमीप्सितमदभ्रं पारिजाताह्वयं ग्रन्थं मञ्जु समर्पये कृतधियः पात्राणि सर्वार्पणे ॥ २ ॥
ग्रन्थोऽयं गहनः प्रमाणविधुताः कोशास्त्वशुद्धा मिथो व्यस्तास्त्र निबन्धसंस्करणपर्याप्ता न मच्छेमुषी ।
यावद्बुद्धि मया विचार्य बहुलायासेन संशोधितो येचेतादृशसंस्कृतिव्यसनिनो विद्युस्त एव श्रमम् ॥ ३ ॥
ग्रन्थान्कोऽपि पुमान्प्रकाशयतिचेद्यत्नेन तद्गौरवं कृत्या वीक्ष्य कृपाकटाक्षितदृशा शंसन्ति तं सज्जनाः ।
हंहो प्रस्खलनं पथा प्रचलतो दृष्ट्वोपहासोद्यता निर्मन्दाक्षमहो हसन्ति विकसद्दन्तं पुनर्दुर्जनाः ॥ ४ ॥
दोर्गोऽश्वविनः खलास्यसुषिरास्जिह्वाहिराशीविषः संधुक्षत्प्रतियो गुणं गुणवतः कं वा न नाशं नयेत् ।
न स्याच्चेत्सविधेऽहितुण्डिकभूतं दिव्यौषधं मान्त्रिकं शास्त्रार्थोपनिषद्विदां शुभदृशां कारुण्यतः प्रेक्षणम् ॥ ५ ॥

## अथात्र किंचित्प्रास्ताविकम्—

गणेशं वाग्देवीमथ खलनाथं भगवतीं महालक्ष्मीं विप्रानपि च पितरौ पूज्यचरणौ ।
मुहुर्नत्वा बद्धाञ्जलिरसकृदानम्य शिरसा नृसिंहीयप्रास्ताविकमिह विधास्ये स्फुटतरम् ॥

सर्वेभ्यो देवेभ्यो नमः सर्वेभ्यो ब्राह्मणेभ्यो नमोनमः ।

जगदारम्भात्पुरा "बहु स्यां प्रजायेये"तिसंकल्पाङ्कुरोद्गमाव्यवहितक्षण एवाखिलविष्टपसर्गादावतर्क्यैन्द्रजालिकेन सिसृक्षुणा श्रीमद्भगवता स्थावरजङ्गमात्मकं जगत् धर्माधर्मावक्षरसमाम्नायं शब्दसमाम्नायं च निरवधिकं सृष्ट्वा अखिलव्यवहाराय तत्तच्छब्दानां तेनतेनार्थेन संबन्धं कल्पयित्वा धर्माधर्मप्रतिपादके पदे स्वनिःश्वसितात्मकान्स्वतःप्रमाणभूतान्वेदान्कल्पयित्वा हिरण्यगर्भादिभ्यः प्रतिपादितास्तैश्चान्येभ्य इत्येवमुत्तरोत्तरं समजनि शब्दार्थप्रतिपत्तिः । अथैवं परंपरासादितश्रुतिगणा मन्त्रद्रष्टारस्तावतैव स्वतःकृतकृत्या अपि जगदीशसृष्टजनानां ग्रहणधारणसौकर्याय प्रसङ्गमनुसृत्य राशिरूपान्वेदान्मन्त्रब्राह्मणविभागेन शाखाप्रशाखादिभेदेन च व्यभजन् । ततस्तदग्रेतनाः परमकारुणिका आश्वलायनाचार्यादयो महर्षयोऽपि निष्प्रमानुभावेनापचीयमानमेधासुर्वेलानामैदंयुगीनानां मानुषप्राणिनां निःश्रेयसाभ्युदयपूर्वकमखिलव्यवहा-

राय निर्दिष्टशाखात्मना प्रविभक्तानामपि केवलनिगमानामचारितार्थ्यं मन्वानाः सूत्रपरिशिष्टस्मृतीतिहासादीन्धर्मशास्त्रप्रतिपादकान्निबन्धानरीरचन् । ततश्च केचन महानुभावास्तदेकनिष्ठास्तेभ्योऽप्यनलंप्रत्ययास्तदुपजीवकान् श्रौतस्मार्तकर्मकाण्डप्रतिपादकान्याज्ञिकप्रयोगग्रन्थांश्च रचयांबभूवुः यदाधारेणैव याज्ञिका नानाविधानि गृह्याणि श्रौतानिच कर्माणि यथायथं पारयन्ति । तदत्रावसरप्राप्तं आश्वलायनप्रयोगं महानुभावश्रीमन्नृसिंहसूरिविरचितं प्रयोगपारिजातनामानं महानिबन्धमधिकृत्य किंचिदिव लेखनीं व्यापारयामः—

तत्रादौ प्रयोगपारिजातस्य महानिबन्धत्वाविष्करणायात्र प्रणेतुरुपक्रान्तानां प्रकरणानां विषयाणांच तन्निर्मात्रैवोद्धृतानुक्रमणिका विन्यस्यते ॥ **प्रथमं षोडशसंस्कारकाण्डम्**—"कर्मणां वक्ष्यमाणानामयं तावदनुक्रमः । पुण्याहवाचनविधिरङ्कुरार्पणमेव च ॥ अथो पितृभ्योऽभ्युदयश्राद्धं कौतुकबन्धनम् । विधिरग्निमुखस्यापि विधिर्ग्रहमखस्य च ॥ गर्भाधानं पुंसवनं ततश्चानवलोभनम् । सीमन्तोन्नयनं विष्णुबलिर्जननकर्म च ॥ नामकर्म तथा खट्वारोहणं दुग्धपानकम् । कर्णवेधो निष्क्रमणं नवान्नप्राशनं तथा । चौलकर्माऽक्षराभ्यासो धर्मोऽनुपनयस्य च ॥ अथोपनयनं मेधाजननं ब्रह्मचारिणः । धर्मा नैष्ठिकधर्माश्च तथोपाकरणक्रमः ॥ स्वाध्यायविधिरत्रापि तथैवोत्सर्जनक्रिया । महानाम्नी चाथ महाव्रतं चोपनिषद्व्रतम् ॥ गौदानिकं समावृत्तिर्नियता स्नातकस्य तु । पाणिग्रहविधिश्चैव ह्यग्नेरौपासनस्य च ॥ गृहप्रवेशस्य विधिः प्रतिपद्धोमनिर्णयः ॥ **पाकसंस्थाकाण्डम्**—श्रवणाकर्म सर्पाणां बलिराश्वयुजीविधिः । विधिराग्रयणस्यापि तथा प्रत्यवरोहणम् ॥ पार्वणं चाष्टकाः श्राद्धं आह्निकाचारनिर्णयः । तिथ्यादिनिर्णयश्चैव तत्र दानव्रतादि च । व्यवहारविधिश्चैव प्रायश्चित्तनिरूपणम् ॥ **अग्न्याधानादिश्रौतकाण्डम्**—अग्न्याधानं चाग्निहोत्रं पौर्णमासेष्टिनिर्णयः । तथाच वैश्वदेवस्य प्रघासस्य च निर्णयः ॥

साकमेधशुनासीर्यविधिराग्रयणस्य च । पशुबन्धस्य च विधिः सौत्रामण्या विधिस्तथा ॥ अग्निष्टोमस्य चात्यग्निष्टोमस्य च विधिस्तथा । उक्थ्यषोडशिनोश्चैव वाजपेयविधिस्तथा ॥ अतिरात्रस्य च विधिरप्तोर्यामस्य चैव हि ॥ प्रकीर्णकाण्डम्—द्रव्याद्यात्मगुणानां च द्रव्याणां चैव लक्षणम् । वानप्रस्थस्य चाचारः संन्यासस्य विधिस्तथा ॥ तेषां चाचारनियमाः संस्कारा विधिपूर्वकाः ॥ राजधर्मा वैश्यधर्माः शूद्रधर्मास्तथैवच । लक्ष्मीनृसिंहस्तोत्रं च वक्ष्यन्ते चात्र तत्त्वतः" इति ॥ एतेष्वधुना प्रथममौपत्पाकसंस्थासंक्षेपयुतं षोडशसंस्कारकाण्डं प्रकाशितम् । पाकं पाकसंस्थाकाण्डं श्राद्धनिर्णययुतं, आह्निककाण्डं चेति द्वयमपि महता प्रयत्नेन संपादितं चानुपदमेव प्रकाशयिष्यामः ।

प्रयोगपारिजातस्य प्रणयनसरणिरखिलेभ्योऽपि याज्ञिकग्रन्थेभ्यः सर्वोत्कृष्टेति व्यक्तीकरणाय क्रियतेऽयमुपन्यासः—अत्र प्रतिपिपादयिषितानां प्रयोगाणां मध्ये कस्यचनापि प्रयोगस्यारम्भे पूर्वं तत्प्रकरणप्रतिपादका भट्टकुमारिलकृता आश्वलायनकारिकाः, ततस्तावदेव आश्वलायनीयं गृह्यसूत्रं, तदधस्तदुपरि श्रीमद्गार्ग्यनारायणीया वृत्तिः, ततश्च भगवाञ्शौनकोऽपि तावानेव संगृहीतोऽस्ति । यत्र प्रयोगे गृह्यपरिशिष्टावश्यकता तत्र तस्यापि तावानेव भागो गृहीतः । तत्तत्प्रयोगसंबद्धवत्सरायनर्तुमासतिथिवारर्क्षादिविशेषः सप्रमाणोऽतिविशदश्च संगृहीतोऽस्ति येन तत्तत्प्रयोगदिनशुद्ध्यादिविचारणायां नेतरेषां ज्योतिर्ग्रन्थानां स्वल्पाप्यावश्यकता । तथाचोपक्रान्तेषु सर्वेष्वपि प्रयोगेषु तत्रतत्र विनियुक्तानां श्रौतानां मन्त्राणां सौत्राणां च प्रकरणानुगुणार्थकमर्थविवरणं पूर्वं निवेश्य अनन्तरं प्रयोगाः परिकल्पिताः सन्ति । अन्तरान्तरा केचन विषयास्तु इतरत्रार्थ्याध्यमप्रमाणत्वेनापि विवृता दृश्यन्ते ये तावदाश्वलायनाचार्येणोपेक्षिताः । विशेषश्चायं यत्र यत्र संकलितानां प्रमाणानां विसंवादावसरस्तत्र तत्र तन्निरसनपूर्वकं सुस्थैकवाक्यताप्रकारि ग्रन्थप्रणेत्रेति सर्वेभ्योऽप्याश्वलायनानुसारिप्रयोगग्रन्थेभ्य उत्कृष्टत्वमस्य

विराजीति । सांप्रतं याज्ञिकग्रन्थानुज्झित्य केवलसूत्रैरेव चारितार्थ्यं कल्पयतामधुनातनानां केषांचन पण्डितानामनवसरदुःस्थारम्भत्वे यथावत्प्रयोगापरिसमापनज्ञापने चायमेव निबन्धः सुतरां निर्णायकः स्यादिति मन्महे किमधिकलेखनेन ।

प्रयोगपारिजातकारोऽयं सुगृहीतनामधेयः **श्रीमन्नृसिंहसूरिः** कदा कतमं महीमण्डलप्रदेशं स्वीयजनुषा मण्डयांबभूवेति प्राचीनेतिहासविधुरा वयं याथातथ्येन निर्देष्टुं न पारयामो यद्यपि तथापि तेषां तत्समयानुमानमेवमनुमिनुमः—अस्मिन्निबन्धेऽग्निमुखाद्यारम्भकालीनसंकल्पकथनावसरे शारीरकभाष्यानुसारिणस्तस्योल्लेखनात्, पर्वनिर्णयमनुसृत्य प्रथमतो हेमाद्रिमतेनोल्लिख्य विद्यारण्यकृतः पर्वनिर्णयस्त्विति तयोर्निर्णयोपादानाच्छ्रीमद्विद्यारण्यस्वामिसमयाव्यवहितोत्तरकालीनोऽयं ग्रन्थकार इति निश्चीयते । देशविचारे तु—तत्रतत्र मङ्गलाचरणारम्भे मध्येऽन्तेऽपि श्रीमन्नृसिंहभगवदाराधनस्मरणसंनमनदर्शनेन तदेकान्तनिष्ठोऽतएव तन्निकटवर्तीत्यपि परं निश्चिनुमः । भगवत्कृपाकटाक्षमन्तरा कुत एतादृशोऽनुपमेयः प्रज्ञाप्रकर्षलाभः कुतोवाऽनुपमाखिलविद्वदादरणीयमहानिबन्धप्रणयनसामर्थ्यसंभावनेति । अथचाखिलाराधकार्थकामकल्पद्रुमः श्रीमन्नृसिंहो दक्षिणहैद्रावादपरिसरवर्तिश्रीगोदावरीरोधःप्रतिष्ठितधर्मपुरीतिसुविख्यातायां पुरि विराजत इति सुप्रसिद्धम् । तथाच—"प्रह्लादं दुरवापशोकजलधेरुत्तारयन्नैगमां बाह्यान्तःपरिपूर्णतां प्रकटयन्स्तम्भं विभिन्दन्बलात् ॥ हेमाक्षाग्रजमाजघान नखरैर्यो मङ्गलानां निधिः श्रीमान्धीर्वि(धर्म)पुरीश्वरो नरहरिः कुर्याज्जगन्मङ्गलम्" इति । निबन्धप्रणेतुर्मङ्गलं तु—"फलमुदधिसुतातपस्तरूणां परिमलमागममौलिमालिकानाम् । अमृतरसमुपासकामराणामतिजगदाकृतिमाश्रये नृसिंहम्" इति । तेन तत्रत्योऽयमाश्वलायनशाखाध्यायीति निश्चीयते । तथाचेतः प्राक्तनचतुःशताब्दकालीनप्रयोगरत्नाद्याकरेषु पारिजातस्य तत्रतत्र प्रामाण्येन परामर्शात्ततोऽप्यतीव प्राचीनोऽयमिति च निर्देष्टुं शक्यते—

अत्रोदारात्मभिर्महाशयैर्दत्तानामादर्शकोशानामुपन्यासः—

१ तत्रैकं श्रीमतां सांगलीसंस्थानपरिवृढानां ग्रन्थभाण्डागारस्थं हस्ताक्षरविलसितं सुवाच्यमातृकाद्युल्लसितं संस्कारकाण्ड–आह्निककाण्ड इति प्रकरणद्वयात्मकमेकं पाक्कं नातिशुद्धम् ॥

२ सावन्तवाडीसंस्थानस्थैः अळवणीत्युपाह्वयैर्विद्वद्भिरात्मारामशर्मभिः स्वसंग्रहाद्दत्तमेकं केवलसंस्कारकाण्डं पाक्कं नातिशुद्धं च ।

३ तत्रत्यैरेव घोपेश्वरकर इत्युपाधिभिः राजमानविराजमानैः विनायकराव इत्याख्यैः स्वीयप्राचीनहस्तलिखितग्रन्थसंग्रहाद्दत्तं संस्कारः–पाकसंस्था–हविस्संस्था–श्राद्धकाण्ड इति प्रकरणचतुष्टयात्मकं हस्तलिखितम् ।

४ मैसूरराजधान्यामान्ध्रलिपिभिर्मुद्रयित्वा प्रकाशितं केवलषोडशसंस्कारकाण्डं प्रायः शुद्धं च ।

तदेवमपूर्वोऽयं निबन्धः शिरोनिर्दिष्टग्रन्थसंवादनेन विदुषां साहाय्येन च यावद्बुद्धिबलं परिशोध्यान्तरान्तरा प्रकरणान्यन्तःपातिविषयांश्च सर्वेषां सौलभ्याय तत्तत्र विभज्य पाठान्तराणि संयोज्य महता प्रयासेन कथंकथमपि पारितोऽयं प्रथमः प्रकरणत्रयात्मको भागः । स च मुम्बापुरीविराजमानैः नानाविधानेकग्रन्थप्रकाशनबद्धपरिकरैः श्रीमद्भिः तुकाराम जावजीत्याख्यया प्रथितैः श्रेष्ठिवर्यैरिदानीं मुद्रणदौस्थ्यावहेऽपि काले सर्वोत्कृष्टतया संमुद्य प्रकाशितो निखिलद्विजचिराभीप्सितोऽयं ग्रन्थ इति तेषां विप्रकुलोपकारकत्वेन प्रशंसनं नातिशयोक्तये स्यादिति विरमामि ।

पणशीकरोपाह्वः श्रीमल्लक्ष्मणभट्टसूरितनयः वासुदेवशर्मा ।

# प्रयोगपारिजातषोडशसंस्कारकाण्डविषयानुक्रमणिका ।

| पत्रं | विषयाः |
|---|---|
| २३६ | अनुप्रवचनीयहोमः |
| २३७ | असंस्कृतस्य प्रायश्चित्तविशेषः |
| २३७ | मेधाजननम् |
| २३८ | मेधाजननमन्त्रार्थः |
| २३८ | मेधाजननप्रयोगः |
| २३८ | पुनरुपनयनम् |
| २३९ | पुनरुपनयनस्य निमित्तान्तराणि |
| २४० | ब्रह्मचारिधर्माः |
| २४० | उपाकरणपर्यन्तं गायत्र्या ब्रह्मयज्ञः |
| २४० | ब्रह्मचारिणा रेतस्त्यागे प्रायश्चित्तम् |
| २४० | ब्रह्मचारिणो शावाशौचनिर्णयः |
| २४१ | मातापित्रोर्मरणेऽपि ब्रह्मचारिणो नाशौचम् |
| २४१ | भिक्षाचरणम् |
| २४१ | आपद्यपि शूद्रपक्वान्नं न ग्राह्यम् |
| २४१ | सजातीयेभ्यः ब्राह्मणेभ्यो भिक्षेत |
| २४२ | आहारमात्रमेव भिक्षेत |

| पत्रं | विषयाः |
|---|---|
| २४२ | निषिद्धभैक्षाणि |
| २४२ | आहृतस्य भैक्षस्य गुरवे निवेदनम् |
| २४२ | भैक्षान्नसंस्कारः |
| २४२ | एकान्ननिषेधः |
| २४२ | भैक्षाकरणे प्रत्यवायः |
| २४२ | अग्निकार्यम् |
| २४२ | समिल्लक्षणम् |
| २४२ | अग्निकार्याकरणे प्रायश्चित्तम् |
| २४२ | अभिवादनविधिः |
| २४३ | ब्राह्मणसमवायेऽभिवादनप्रकारः |
| २४३ | आशिषोऽप्रयुञ्जानं नाभिवादयेत् |
| २४३ | ब्रह्मचर्यकालः |
| २४३ | नैष्ठिकधर्माः |
| २४३ | नैष्ठिकस्य फलश्रुतिः |
| २४४ | व्रतोपहतौ प्रायश्चित्तम् |
| २४४ | मारिकादिभुक्तौ प्रायश्चित्तम् |
| २४४ | ज्ञानपूर्वके विशेषः |

| पत्रं | विषयाः |
|---|---|
| २४४ | अनृते प्रायश्चित्तम् |
| २४४ | स्त्रीसङ्गदोषप्रायश्चित्तम् |
| २४४ | अष्टाङ्गमैथुनलक्षणानि |
| २४४ | शुनादष्टस्य प्रायश्चित्तम् |
| २४४ | नैष्ठिके द्विगुणं प्रायश्चित्तम् |
| २४४ | नैर्ऋतयागः |
| २४४ | कृच्छ्रादिकुर्वतो मध्ये रेतःस्खलने |
| २४५ | उपनयनव्रतमध्ये यज्ञोपवीतनाशे प्रायश्चित्तम् |
| २४५ | असद्भैक्षभोजने |
| २४५ | उपनयनप्रतिबन्धे मातृरजसि सूतके वा निर्णयः |
| २४६ | उपाकरणनिर्णयः |
| २४६ | उपाकरणदिने ग्रहणादौ |
| २४६ | श्रवणे खण्डे सति विचारः |
| २४७ | गुरुशुक्रयोर्मौढ्ये |
| २४७ | अधिमासे निषेधः |

| पत्रं | विषयाः |
|---|---|
| २४७ | उपाकरणकारिकाः |
| २५० | उपाकरणे इतिकर्तव्यताविशेषः |
| २५० | वेदोपाकरणे विशेषः |
| २५० | नित्याध्ययने विशेषः |
| २५० | ब्रह्मचारिविषये विशेषः |
| २५१ | उपाकरणफलम् |
| २५१ | अकरणे प्रत्यवायः |
| २५१ | उपाकरणमन्त्रार्थः |
| २५४ | उपाकरणप्रयोगः |
| २५६ | अध्ययनविधिः |
| २५७ | आपदि अब्राह्मणादध्ययनम् |
| २५७ | अन्यशाखाध्ययने तच्छाखासंस्कृतस्यैवाधिकारः |
| २५७ | उपाकर्म कृत्वैवाध्ययनम् |
| २५७ | वेदाद्यारम्भे तिथ्यादि |
| २५९ | परिसमाप्तिविधिः |
| २५९ | सारस्वतयोगः |

## इदमप्यपरं किंचिद्विज्ञापनम्—

श्रीमन्नृसिंहीयस्य प्रयोगपारिजाताख्यमहानिबन्धस्याद्यं षोडशसंस्कारकाण्डमत्रावसन्नं तस्यैव चेयं सुविस्तृता प्रकरणविषयावान्तरान्तर्गतविषयानुक्रमणिकेति ज्ञेयम् । यत्त्वस्यान्ते पाकसंस्थाकाण्डान्तर्वर्तिनां कतिचनविषयाणामारम्भोऽकारि स केवलं दिग्प्रदर्शनाय अग्रिमकाण्डप्रकाशनावधि साधारणव्यवहारसिद्ध्यै स्यादिति च । सविस्तरं पाकसंस्थाकाण्डं सर्वश्राद्धप्रकृतिविकृतिकलापवैशद्यसहितं समारब्धमुद्रणं विद्वदग्रेसराणामितरेषांच सर्वेषां चेतश्चक्षुषोराह्लादायानुपदमेव प्रकाशीभविष्यति । तथाच तदव्यवहितानेहस्यैवैतदीयमतिविस्तीर्णं नैकशःप्रमाणजातप्रमितं विविधसप्रमाणनिर्णयविलसितं आह्निककाण्डं प्रकाशितं स्यादिति सप्रमोदं निवेदयामः । अपिच प्रकाशिते प्रथमे षोडशसंस्कारकाण्डे निबन्धप्रणेत्रानुक्रान्तान् पाकसंस्थान्तर्गतान्विषयान्हविःसंस्थान्तर्गतांश्चासादयितुं प्रयतमानैरप्यस्माभिरेतावन्तंकालमनुपलब्धानाधानादीन् महामहिमभाजो ग्रन्थप्रकाशकसंशोधकप्रकाशनानुग्रहपरा उदाराशयाः प्रेक्षावन्तः अस्मदनुपलब्धैतदीयविषयसंग्रहवन्तः कृपयास्मत्सविधे यदि प्रेषयेयुः प्रकाशयामस्तदा भूमिकायां दातृनामनिर्देशपूर्वकं तानपि यथाक्रमं महता हर्षभरेण संख्यावतां सर्वोत्कृष्टविविधपारिजातपुष्पोपहारसपर्यायै । तेच विषयाः देवनागर्यां सन्तु उत द्रविडान्ध्रकेरलादियत्किंचित्कस्यां वा लिप्यां कृताक्षरविन्यासा वा सन्तु । तेषामस्मदायत्तीकरणे कंचितिकमपि ग्रन्थान्तरं द्रव्यादि वेप्सितं चेत्तदपि स्फुटतरविलासविलसितपत्रिकालेखनद्वारा यदि निवेदयेयुः करिष्यामस्तर्हि तदनुकूलं देयादिविचारं मपथेन प्रतिपत्रप्रेषणेनेति भूयोभूयः सविनयं प्रार्थयामः ।

यद्यपि प्राचीनभव्यशिष्टादृतसरण्याऽव्याहतगत्या प्रचलितानामतएव सर्वैर्यथावदनुसरणीयानामपि प्रयोगाणां कैश्चिदधुनातनैर्विद्वद्भिः किंचिदिव प्रमाणमूरीकृत्यान्यथा विपर्यस्तत्वेन व्यवह्रियमाणानां समीकरणायचैतादृशप्रकाशनीयग्रन्थप्रस्तावप्रसंगेन निर्णयाङ्कनमावश्यकं तथापीदानीमवसराभावात्स्थलसंकोचाच्च नाकारि किमपि तच्च सत्यवसरेऽवसरान्तरे स्वमनीषापरिणामावधि मनीषिप्रवरसाहाय्येन करिष्यामः ।

अत्रान्ते संगृहीतपाकसंस्थाविषयसंक्षेपे क्वचिदनवधानेन हविःसंस्थानामविन्यासः प्रामादिकः समजनीति पाकसंस्थेत्येव तत्र शोधयित्वा ग्राह्यमिति सविनयं विज्ञापयति—

ग्रन्थसंस्करणकर्ता ।

श्रीमन्महागणाधिपतये नमः ॥ ॥ मङ्गलाचरणम् ॥ श्रीमद्वागीशलक्ष्मीशगौरीशाद्यखिलामरैः । यः पूज्यते मुदा नित्यं तं वन्दे द्विरदाननम् ॥ १ ॥ कलमुदधिसुतातपस्तरूणां परिमलमागममौलिमौलिकानाम् । अमृतरसमुपासकामराणामतिजगदाकृतिमाश्रये नृसिंहम् ॥ २ ॥ ओंकारकिंकिणीनादमधुरस्तुतिबृंहितम् । चित्ते शृङ्खलितं भक्त्या चिन्तये चिन्मयं गजम् ॥ ३ ॥ कलये हृदि कल्याणीं कलां कामपि वाङ्मयीम् । कविताकलशाम्भोधिकल्लोलोल्लासकौमुदीम् ॥ ४ ॥ यदेकवशवर्तिनी विपरिवर्तिलोकत्रयी यदाप्तवचसां फलं विधितदर्थवादात्मनाम् । यतः परमवाप्यते सुखमयं पदं तत्परैरिदं विजयतेतरां किमपि वस्तु कर्माभिधम् ॥ ५ ॥ भगवन्तमुपैमि शौनकं मुनिमाचार्यमथाश्वलायनम् । बहिरन्तरपास्य यौ तमो जगतः पुष्पवतोरिव श्रियम् ॥ ६ ॥ विद्यन्ते विविधा ग्रन्था: श्रौतस्मार्तप्रबोधकाः । सूत्रं तद्वृत्तिभाष्ये च तद्व्याख्याः कारिकादयः ॥ ७ ॥ तदर्थतत्त्वनिष्कर्षप्रयासालसचेतसाम् । बह्वृचानां क्रियातत्त्वं सुखसंविदमिच्छताम् ॥ ८ ॥ प्रमोदाय समादाय सारमेकत्र सर्वतः । प्रयोगस्य प्रकारोऽयमिह संगृह्य कथ्यते ॥ ९ ॥ समासस्वच्छानां श्रुतिमुनिगिरां संग्रहविधावभिज्ञा भावज्ञा कलयत कियत्कौशलमिति । किमेषा सर्वेषामुचि-

---

पाठान्तराणि—१ अत्रैवारम्भे [वागीशाद्या सुमनस सर्वार्थानामुपक्रमे । य नत्वा कृतकृत्या स्युस्त नमामि गजाननम् ॥ १ ॥ शुक्लाम्बरधर विष्णु शशिवर्णं चतुर्भुजम् । प्रसन्नवदन ध्यायेत्सर्वविघ्नोपशान्तये ॥ २ ॥ अगजाननपद्मार्कं गजाननमहर्निशम् । अनेकद त भक्तानामेकदन्तमुपास्महे ॥ ३ ॥] इति पद्यत्रयमाद्याऽऽदिलकोशेऽधिक दृश्यते न प्राचीनकोशेषु । २ कालनानाम् । ३ मुपासता नराणाम् । ४ मेदुरस्तुति । ५ चिन्मयाननम् । ६ चिन्मयीम् । ७ विधिवदर्थं, विदितदार्थ्य । ८ पुष्पतरोरिव । ९ स्मार्तार्थबोधका । १० तत्वं सुख सवेत्तुमिच्छता । ११ प्रयोगाख्यप्रकारोऽय । १२ भावज्ञा ।

तघटनापाटवकला कलापे मुक्तानां कथयत भवेदत्र सुलभा ॥ १० ॥ अहो निरन्धनस्यास्य सौभाग्यं किमु वर्ण्यते । यतः श्रीनरसिंहोऽयमस्य कारयिता स्वयम् ॥ ११ ॥ फलमत्र परत्रापि पश्यतां प्रतिपादयन् । प्रयोगपारिजातोऽयं प्रथते पृथिवीतले ॥ १२ ॥ अमूलमनपेक्षं वा नच किंचिदिहोच्यते । यावदाकाङ्क्षितं यावदुपयुक्तं विलिख्यते ॥ १३ ॥ ॥ तत्र तावच्छ्रौतस्मार्तकर्मणोः प्रतिपिपादयिषितयोः श्रौतस्य प्रत्यक्षश्रुतिमूलकत्वेनाभ्यर्हितत्वात्प्रथमभावित्वेऽपि तदनुष्ठानस्य स्मार्तगर्भाधानादिसंस्कारानुष्ठानानन्तरभावित्वात्प्रथमतः स्मार्तकर्म निरूप्यते । तस्य च कर्मणो धर्मशास्त्रप्रमाणकत्वात् तत्कर्तारोऽभिधीयन्ते—'मनुर्बृहस्पतिर्दक्षो गौतमोऽथ यमोऽङ्गिराः । योगीश्वरः प्रचेताश्च शातातपपराशरौ । संवर्तोशनसौ शङ्खलिखितावत्रिरेव च । विष्णापस्तम्बहारीता धर्मशास्त्रप्रवर्तकाः । एते ह्यष्टादश प्रोक्ता मुनयो नियतव्रताः । जाबालिर्नाचिकेतश्च स्कन्दो लौगाक्षिकाश्यपौ । व्यासः सनत्कुमारश्च शंतनुर्जनकस्तथा । व्याघ्रः कात्यायनश्चैव जातूकर्ण्यः कपिञ्जलः । बौधायनश्च काणादो विश्वामित्रस्तथैव च । पैठीनसिर्गोभिलश्चेत्युपस्मृतिविधायकाः' इति । तथा—'वसिष्ठो नारदश्चैव सुमन्तुश्च पितामहः । बभ्रुः कार्ष्णाजिनिः सत्यव्रतो गार्ग्यश्च देवलः । जमदग्निर्भरद्वाजः पुलस्त्यः पुलहः क्रतुः । आत्रेयश्छागलेयश्च मरीचिर्वत्स एवच । पारस्करो ऋष्यशृङ्गो बैजवापस्तथैवच । इत्यन्ये स्मृतिकर्तार एकविंशतिरीरिताः । एतैर्यानि प्रणीतानि धर्मशास्त्राणि वै पुरा ।' इति । एतदनाश्वासे दोष

पाठा०—१ मुक्ताश्च कल्पत । २ श्रीमन्नृसिंहोय । ३ आत्रेयश्च गर्गेमश्च । ४ पराशरऋष्यशृङ्गौ इति पाठ । ५ इत्येते । ६ पुरेति एतेषामनादरपक्षे दोष उच्यते इति, एतेषामपविश्वासे दोष सत्यमिहोच्यत इति चाधिक पाठो मध्ये क्वचिद्दृश्यते ।

उच्यते—'तान्येतानि प्रवीणैस्तु न हन्तव्यानि हेतुभिः। यस्तानि हेतुभिर्हन्यात्सोऽन्धे तमसि मज्जति' इति। विष्णुः—'पुराण मानवो धर्मः साङ्गो वेदश्चिकित्सितम्। आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः'। वसिष्ठः—'अप्रामाण्यं च वेदानामार्षाणां चापि कुत्सनम्। अव्यवस्थापि सर्वत्र एतन्नाशनमात्मनः'। मनुश्च—'योऽवमन्येत ते तूभे हेतुशास्त्राश्रयो नरः। स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः' इति ॥ ❀ ॥ अथ धर्मप्रशंसा। तत्राचार्योश्वलायनः—'धर्मः संसेवितः शुद्धस्त्रायते महतो भयात्। श्रुत्वापि सन्तस्तुष्यन्ति दूराद्धर्मपरं नरम्। धर्मः कृतः श्रुतो दृष्टः कथितश्चिन्तितोऽपि वा। तथानुमोदितोऽपीह पुंण्णाति परमं शुभम्। तस्माद्धर्मो यथाशक्ति यत्नात्सेव्यो नृभिर्बुधै'रिति ॥ ❀ ॥ अथ धर्मस्वरूपनिरूपणम्। मनुः—'विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः। हृदयेनाभ्यनुज्ञातो यो धर्मं तं व्यवस्यत। अनाम्नातेषु वेदेषु कथं स्यादिति चेद्भवेत्। यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः' इति। विश्वामित्रः—'यमार्याः क्रियमाणं हि शंसन्त्यागमवेदिनः। स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते। वेदोक्तः प्रथमो धर्मो धर्मशास्त्रेषु चापरः। शिष्टाचारस्तृतीयस्तु त्रिविधं धर्मलक्षणम्' इति ॥ ❀ ॥ अथ धर्मप्रमाणानि। तत्र याज्ञवल्क्यः—'श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः। सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम्। धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः। ह्रीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्'। मनुः—'वेदोऽखिलो धर्ममूलं श्रुतिशीले च तद्विदाम्। आचारश्चैव साधूनामात्मनस्तुष्टिरेव च'। हारीतः—'अनुष्ठितं तु यद्देवैर्मुनिभि-

पाठा०—१ न हातव्यानि। २ परं नाशन। ३ त उभे हेतुशास्त्राश्रयान्नर। ४ पुनाति पुण्य शुभम्। ५ न्त्याम्नायवेदिन। ६ सकल्पित कामो। ७ दशधा।

यदनुष्ठितम् । नानुष्ठेयं मनुष्यैस्तु तदुक्तं कर्म चाचरेत्' इति ॥ ❀ ॥ अथ स्मृत्यध्ययनम् । चन्द्रिकायाम्—'यथा हि वेदाध्ययनं धर्मशास्त्रमिदं तथा । अध्येतव्यं ब्राह्मणेन नितरां स्वर्गमिच्छता' । मनुः—'धर्मशास्त्रमधीयानो ब्राह्मणः क्षत्रियोऽपि वा । पुनाति हि पितॄन्पूर्वान्सप्त सप्तावरांस्तथा । धर्मशास्त्रमधीयानो ब्राह्मणः संशितव्रतः । मनोवाग्देहजैर्नित्यं कर्मदोषैर्न लिप्यते' । शङ्खलिखितौ—'रागद्वेषाग्निदग्धानामज्ञानविषपायिनाम् । चिकित्सा धर्मशास्त्राणि व्याधीनामिव भेषजम्' । स्मृतिरत्नावल्याम्—'स्मृतिं विना नहि ज्ञानं धर्मस्य भवति क्वचित् । न जातु ज्ञायते रूपमालोकेन विना यथा' । बृहस्पतिरपि—'अधीत्य चतुरो वेदान्सहाङ्गान्सपदक्रमान् । स्मृतिहीना न शोभन्ते चन्द्रहीनेव शर्वरी' इति ॥ ❀ ॥ एतदध्ययनाकरणे दोषमाह बृहस्पतिः—'श्रुतिस्मृती हि विप्राणां चक्षुषी परमे मते । काणस्त्वेकतया हीनो द्वाभ्यामन्धः प्रकीर्तितः' इति । अन्यच्च—'श्रुतिस्मृती चक्षुषी द्वे द्विजानां न्यायवर्त्मनाम् । मार्गमुत्क्रान्तमाक्रम्य प्रपतन्ति पथश्च्युताः' इति ॥ ❀ ॥ अथ श्रुत्यादिप्रमाणम् । मनुः—'श्रुतिं पश्यन्ति मुनयः स्मरन्ति च यथाश्रुति । तस्मात्प्रमाणमुभयं प्रमाणैः प्रमितं भुवि' । स्मृत्यर्णवे—'वेदाद्विज्ञायते धर्मस्तस्मिन्नेव व्यवस्थितः । प्राप्यते च तदभ्यासात्स्मृतिशीलाच्च तद्विदाम् । अर्थशास्त्रेष्वसक्तानां धर्मज्ञानां विधीयते । धर्मं जिज्ञासमानानां प्रमाणं परमं स्मृतिः' इति । व्यासः—'धर्ममूलं वेदमाहुर्धर्मशास्त्रमकृत्रिमम् । तद्विदां

पाठा०—१ शुद्ध कर्माचरेदिति, तदुक्तं धर्ममाचरेत् । २ सहाङ्गान् सपदक्रमान् । ३ न्यायवर्त्मनि । ४ उशन्ति नार्गं कौशिक्य । ५ प्रामाण्यम् । ६ तथा श्रुतम् । ७ स्मृतिशीलादितद्विदाम् ।

स्मृतिशीलं च साध्वाचारं मनःप्रियम्' इति । अङ्गिराः—'प्रत्यक्षमनुमानं च शब्दश्च विविधागमः । त्रयं सुविदितं कार्यं धर्मसिद्धिमभीप्सता' । धर्मद्योते—'आविर्भूतप्रकाशानामनुपप्लवचेतसाम् । अतीतानागतज्ञानां प्रत्यक्षं न विशिष्यते । अतीन्द्रियानसंवेद्यान्पश्यन्त्यार्षेण चक्षुषा । ये भावान्वचनं तेषां नानुमानेन बाध्यते' । हारीतः—'वेदाः प्रमाणं स्मृतयः प्रमाणं धर्मार्थयुक्तं वचनं प्रमाणम् । यस्य प्रमाणं न भवेत्प्रमाणं कस्तस्य कुर्याद्वचनं प्रमाणम् । न यस्य वेदा न च धर्मशास्त्रं न वृद्धवाक्यं च भवेत्प्रमाणम् । सोऽधर्मकृद्दिष्टहतो दुरात्मा नात्मापि तस्येह भवेत्प्रमाणम्' । अङ्गिराः—'प्रमाणानि प्रमाणज्ञैः परिपाल्यानि यत्नतः । सीदन्ति हि प्रमाणानि प्रमाणैरव्यवस्थितैः । प्रमाणसहितं यत्स्यात्तत्सर्वं गम्यते सुखात् । अप्रमाणप्रमेयस्य दुःखेनाधिगमो भवेत्' । इति श्रुत्यादिप्रमाणम् ॥ ❀ ॥ अथ श्रुत्यादिबलाबलम् । लौगाक्षिः—'श्रुतिस्मृतिविरोधेऽपि श्रुतिरेव गरीयसी । अविरोधे सदा कार्यं स्मार्तं वैदिकवत्तथा' । संग्रहे—'श्रुतिस्मृतिपुराणेषु विरुद्धेषु परस्परम् । पूर्वं पूर्वं बलीयः स्यादिति न्यायविदो विदुः' । चतुर्विंशतिमते—'स्मृतेः श्रुतिविरोधे तु परित्यागो यथा भवेत् । तथैव लौकिकं वाक्यं स्मृतिबाधे परित्यजेत्' । व्यासश्च—'धर्मं यो बाधते धर्मो न स धर्मः कदाचन । अविरोधी तु यो धर्मः स धर्मः सद्भिरुच्यते । तस्माद्विरोधे धर्मस्य निश्चित्य गुरुलाघवम् । तयोर्भूयस्तमं विद्वान्कुर्याद्धर्मविनिर्णयम्' । मनुः—'स्मृतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ । उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः' ॥ ❀ ॥ मनुस्मृतेर्विशेषमाहाङ्गिराः—'यत्पूर्वं मनुना प्रोक्तं धर्मशास्त्रमनु-

पाठा०—१ श्रुतिमूल च । २ अनुक्त । ३ ये भावा वचन । ४ न यत्र मानं न । ५ सुखम् ।

चमम् । नहि तत्ममतिक्रम्य वचनं हितमात्मनः । वेदादुपनिबद्धत्वात्प्राधान्यं तु मनुस्मृतेः । मन्वर्थविपरीता तु या स्मृतिः सा विनश्यति' । श्रुतिश्च—'यद्वै किंच मनुरवदत्तद्भेषजमि'ति ॥ ❀ ॥ अथ कल्पसूत्रस्मृत्योर्विरोधे प्रत्यक्षश्रुतिमूलत्वेन कल्पसूत्रं प्रबलमित्याह हेमाद्रौ संग्रहे पुलस्त्यः—'श्रौतानां कर्मणां क्लृप्तिः कल्पसूत्रं तदुच्यते । तथैव गृह्यकल्पानां सार्तानामुपसंग्रहः । शाखानां विप्रकीर्णत्वात्पुरुषाणां प्रमादतः । नानाप्रकरणस्थत्वात्स्मृतेर्मूलं न लक्ष्यते' इति । याज्ञवल्क्योऽपि—'उत्सन्नशाखा याः काश्चित्तासां वेदान्तराणि च । अन्तर्धानं गतानीह स्मृत्वा ताः स्मृतयः कृताः' इति । इति श्रुत्यादिबलाबलम् ॥ अनुभूति प्रभूतिं केचनान्ये पौरुहूतिकाम् । वयं तु संस्मृतिं विद्मो नृसिंहपदसंस्मृतिम् ॥

अथ संस्कारनिरूपणम् । तत्राचार्यः—'अतःपरं द्विजातीनां संस्कृतिर्नियतोच्यते । संस्काररहिता ये तु तेषां जन्म निरर्थकम्' इति । नियता नित्या । निरर्थकत्वं ब्राह्मण्यानभिव्यक्तेः । अतएवाङ्गिराः—'चित्रकर्म यथाऽनेकै रङ्गैरुन्मील्यते शनैः । ब्राह्मण्यमपि तद्वत्स्यात्संस्कारैर्विधिपूर्वकैः । स्वे स्वे गृह्ये यथा प्रोक्तास्तथा संस्कृतयोऽखिलाः । कर्तव्या भूतिकामेन नान्यथा सिद्धिमृच्छति । पञ्चविंशतिसंस्कारैः संस्कृता ये द्विजातयः । ते पवित्राश्च योग्याः स्युः श्राद्धादिषु सुयन्त्रिताः । अत्रादिशब्दा-द्यजनादेः परिग्रहः । गर्भाधानं पुंसवनं सीमन्तो बलिरेव च । बलिर्विष्णुबलिः । जातकृत्यं नामकर्म निष्क्रमोऽन्नाशनं परम् । चौलकर्मोपनयनं तद्व्रतानां चतुष्टयम् । अत्र तद्व्रतानामिति तच्छब्देन प्रसिद्धिवाचिना वेदो विवक्षितः । स्नानोद्वाहौ चाग्रयणम-

पाठा०—१ क चान्ये पूर्वेदेनुकाम् । २ सिद्धिमिच्छता । ३ प्रसिद्धवाचिना । ४ द्वाहावाग्रयणे ।

ष्टका च यथातथम् । श्रावण्यामाश्वयुज्यां च मार्गशीर्ष्यां च पार्वणम् । श्रावण्यां कर्तव्यं श्रवणाकर्म । एवमाश्वयुज्यामाश्वयुजीकर्म । मार्गशीर्ष्यां प्रत्यवरोहणम् । पर्वणि क्रियमाणं पार्वणम् । उत्सर्गश्चाप्युपाकर्म महायज्ञाश्च नित्यशः । संस्कारा नियता ह्येते ब्राह्मणस्य विशेषतः' इति । गौतमस्तु—'गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनानि, चत्वारि वेदव्रतानि, स्नानं, सहधर्मिणीसंयोगः, पञ्चमहायज्ञानामनुष्ठानम्,—अष्टका, पार्वणः, श्राद्धं, श्रावणी, आग्रहायणी, चैत्री, आश्वयुजीति सप्त पाकयज्ञसंस्थाः,—अग्न्याधेयं, अग्निहोत्रं, दर्शपूर्णमासौ, चातुर्मास्यानि, आग्रयणेष्टिः, निरूढपशुबन्धः, सौत्रामणीति सप्त हविर्यज्ञसंस्थाः—अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमयज्ञसंस्थाः, इत्येते चत्वारिंशत्संस्काराः, अष्टावात्मगुणाः,—दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो माङ्गल्यमकार्पण्यमस्पृहेति । यस्यैते चत्वारिंशत्संस्कारा अष्टावात्मगुणाश्च स ब्रह्मणः सायुज्यमाप्नोती'ति । यदाह मनुः—'संस्कारैः संस्कृतः पूर्वैरुत्तरैरपि संस्कृतः ।

---

पाठा०—१ यथायथम् । २ स्नान समावर्तनम्, सहधर्मिणीसंयोगो विवाह । धर्मचारिणीति पाठ । ३ पार्वण. पर्वणि कर्तव्य स्थालीपाक । श्राद्धं मासिक तस्यैव सस्थात्वात्, श्रावणी पूर्णिमा तत्र कर्तव्यं श्रवणाकर्म, आग्रहायणी मार्गपूर्णिमा तत्रत्य प्रत्यवरोहण, चैत्री तस्या कर्तव्य शूलगव, आश्वयुज्याश्विनपूर्णिमा तत्र कर्तव्यमाश्वयुजीकर्म, । ४ दया आपन्नस्य द्वेष्टुरपि रक्षण, क्षान्ति' बाह्ये आभ्यन्तरे वा परेणोत्पादितेऽपि दुःखे तस्मिन्कोपाभाव, अनसूया गुणिना गुणानाविष्करणमसूया तद्रहिता, शौच निन्दितससर्गाभक्ष्यादिपरिहारपूर्वक स्वधर्मव्यवस्थानम्, अनायास. शरीरपीडावहक्षुद्रकर्माचरणमायासस्तद्रहित । माङ्गल्य अप्रशस्तकर्मविवर्जनपूर्वक प्रशस्तकर्माचरण मङ्गल तस्य भाव, अकार्पण्य अदैन्यपूर्वक सत्पात्रे भक्त्या शक्त्या च प्रत्यहं दानम्, अस्पृहा परकीयवस्तुन्यनभिलाष इति ।

नित्यमष्टगुणैर्युक्तो ब्राह्मणो ब्रह्मलौकिकः । ब्राह्मं पदमवाप्नोति यस्मान्न च्यवते पुनः' इति । गर्भाधानादयः पूर्वसंस्काराः । उत्तरे पाकयज्ञादयः । तथाच हारीतः—'द्विविधो हि संस्कारो ब्राह्मो दैवश्चेति । गर्भाधानादिः स्मार्तो ब्राह्मः । पाकयज्ञा हविर्यज्ञाः सौम्याश्च दैवः । ब्राह्मेण संस्कृत ऋषीणां समानतां सायुज्यं गच्छति । दैवेनोत्तरेण संस्कृतो देवानां समानतां सायुज्यं गच्छतीति ॥ ❀ ॥ प्रागुक्तानां संस्काराणां नैमित्तिकवार्षिकमासिकनित्यभेदेन चातुर्विध्यमाहाश्वलायनाचार्यः—'नैमित्तिकाः षोडशोक्ताः गर्भाद्वाहावसानकाः । तथैवाग्रयणाद्याश्च संस्कारा वार्षिका मताः । मासिकं पार्वणं प्रोक्तमशक्तानां तु वार्षिकम् । महायज्ञास्तु नित्याः स्युः संध्यावच्चाग्निहोत्रवत् । संस्काराणामथैतेषां यथावदिह निर्णयः । देशकालोऽनुरूपेण शास्त्रतश्च प्रवर्तते' इति । अत्र गर्भाधानाद्युपनयनपर्यन्ता एव संस्कारा नियताः सर्वेषां नतु स्नानादयः । अन्यथा 'ब्रह्मचर्यादेव प्रव्रजे'दित्यादि विरुध्येत । एते च संस्कारा द्विजातीनामेव । यथाह याज्ञवल्क्यः—'विप्रक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः । निषेकादिश्मशानान्तास्तेषां वै मन्त्रतः क्रियाः' इति । निषेको गर्भाधानम् । अत्र मन्त्रतः क्रिया इति वदता शूद्रस्यामन्त्रकाः संस्कारा इति सूचितम् । अतएव यमः—'शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः' इति ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे संस्कारनिरूपणम् ॥

---

पाठा०—१ ब्रह्मगेरमवाप्नोति । २ तस्मान्न । ३ यवैवाग्रयणाद्याश्च । ४ नुसारेण । ५ प्रवक्षते । ६ पञ्चसंस्कारा । ७ ब्रह्मक्षत्रिय. । ८ अतएव संस्कारा-धिकारे यम ।

अथानुक्रमणिका । कर्मणां वक्ष्यमाणानामयं तावदनुक्रमः । पुण्याहवाचनविधिरङ्कुरार्पणमेव च । अथो पितृभ्योऽभ्युदयश्राद्धं कौतुकबन्धनम् । विधिरग्निमुखस्यापि विधिर्ग्रहमखस्य च । गर्भाधानं पुंसवनं ततश्चानवलोभनम् । सीमन्तोन्नयनं विष्णुबलिर्जननकर्म च । नामकर्म तथा खङ्गारोहणं दुग्धपानकम् । कर्णवेधो निष्क्रमणं नवान्नप्राशनं तथा । चौलकर्माक्षराभ्यासो धर्मोऽनुपनयस्य च । अथोपनयनं मेधाजननं ब्रह्मचारिणः । धर्मो नैष्ठिकधर्मांश्च तथोपाकरणक्रमः । स्वाध्यायविधिरत्रापि तथैवोत्सर्जनक्रिया । महानाम्नी चाथ महाव्रतं चोपनिषद्व्रतम् । गौदानिकं समावृत्तिर्नियता स्नातकस्य तु । पाणिग्रहविधिश्चैव ह्यग्नेरौपासनस्य च । गृहप्रवेशश्च विधिः प्रतिपद्धोमनिर्णयः । श्रवणाकर्म सर्पाणां बलिराश्वयुजीविधिः । विधिराग्रयणस्यापि तथा प्रत्यवरोहणम् । पार्वणं चाष्टका श्राद्धमाह्निकाचारनिर्णयः । तिथ्यादिनिर्णयश्चैव तत्र दानव्रतादि च । व्यवहारविधिश्चैव प्रायश्चित्तनिरूपणम् । अग्न्याधानं चाग्निहोत्रं पूर्णमासेष्टिनिर्णयः । तथाच वैश्वदेवस्य प्रघासस्य च निर्णयः । साकमेधशुनासीर्यविधिराग्रयणस्य च । पशुबन्धस्य च विधिः सौत्रामण्या विधिस्तथा । अग्निष्टोमस्य चात्यग्निष्टोमस्य च विधिस्तथा । उक्थ्यषोडशिनोश्चैव वाजपेयविधिस्तथा । अतिरात्रस्य च विधिरप्तोर्यामस्य चैव हि । दयाद्यात्मगुणानां च हृष्टानां चैव लक्षणम् । वानप्रस्थस्य चाचारः संन्यासस्य विधिस्तथा । तेषां चाचारनियमाः संस्कारा विधिपूर्वकाः । राजधर्मा वैश्यधर्माः शूद्रधर्मास्तथैव च । लक्ष्मीनृसिंहस्तोत्रं च वक्ष्यते चात्र तत्त्वतः ॥ इत्यनुक्रमणिका ॥

पाठा०—१ गोदानक । २ पाणिग्रहाधिकारश्च कुलाकुलपरीक्षणम् । विवाहभेदानाहुश्च राशिकूटादिचिन्तनम् । कन्यादानप्रशंसा च परिवेदननिर्णय । एकमातृप्रसूतानां विवाहोपनयक्रम । मधुपर्कोद्वाहगृहप्रवेश प्रथमश्च य । इत्यधिकं क्वचित् । ३ शिष्टानां चैव ।

अथ स्वस्तिवाचनम् । भगवानस्तु वो भूत्यै यदाविर्भाववैभवे । भवनेषु वलारातेर्बभूव स्वस्तिवाचनम् ॥ ॥ अथानन्तरकर्तव्यगर्भाधानादिसंस्काराणां प्रायेण स्वस्तिवाचनाङ्कुरार्पणाभ्युदयश्राद्धकौतुकनन्धाग्निमुखग्रहयज्ञपूर्वकत्वेन तत्सापेक्षत्वात्प्रथमं तावदुद्देशक्रमप्राप्तः स्वस्तिवाचनविधिरभिधीयते । तत्र त्रिकाण्डः—'गर्भाधानादिसंस्कारेष्विष्टापूर्ते क्रतुष्वपि । वृद्धिश्राद्धं पुरा कार्यं कर्मादौ स्वस्तिवाचनमि'ति । व्यासः—'संपूज्य गन्धमाल्याद्यैर्ब्राह्मणान्स्वस्ति वाचयेत् । धर्मकर्मणि माङ्गल्ये संग्रामेऽद्भुतदर्शने' इति । कारिका—'स्वस्तिवाचनमत्रेष्टं गृह्यकर्मसु केषुचित् । आचार्येणापि शास्त्रेऽस्मिन्मङ्गलार्थमुदीरितम् । अर्चिता ब्राह्मणाः सम्यग्गन्धमाल्यैः सदक्षिणैः । तिष्ठेयुः प्राङ्मुखा युग्मा वक्तारो दर्भपाणयः । तिष्ठेद्वाचयिता तेषां दक्षिणस्यामुदङ्मुखः । निश्छुम्भमपां पूर्णं पिहिताननमर्चितम् । अथ वाचयितुर्बाहुं दक्षिणं तु समाश्रिताः । तिष्ठन्त्युदङ्मुखाः सम्यक्संस्कार्यास्तत्रयत्र तु । मनइत्यादिकं मन्त्रमेकाग्रमतिरादिशेत् । मनसःस्म इति ब्रूयुस्ते समाहितपूर्वकम् । प्रसीदन्तु भवन्त इत्यथ वाचयिता वदेत् । प्रसन्नाः स्म इति स्पष्टमाचक्षीरंस्तथान्विताः । शान्तिपुष्ट्यैरविघ्नाद्याः शब्दाः पञ्चदशैव तु । अस्तुशब्दान्तमुच्येरन्वाचयित्रा ततः परम् । अस्त्वित्यदेवतायास्तद्वहेन कुर्याद्विचक्षणः । तस्या नाम गृहीत्वाथ प्रीयतामिति भाषिते । पुण्याहं

पाठा०—१ यथाविभववैभवे । २ नन्तरवक्तव्य । ३ गर्भाधानादीत्यस्मिन्वाक्ये पूर्वं वृद्धिश्राद्ध तत स्वस्तिवाचनमित्येतावतैव सिद्धे पुन कर्मादावित्युक्तिर्वृद्धिश्राद्धसहितकर्मण आदौ स्वस्तिवाचनप्राप्त्यर्थां । ४ माल्याद्यैरिति वचन गन्धपूर्वमालिना पादप्रक्षालनादीनामुपचाराणामनावश्यकत्वबोधनार्थम् । आद्यशब्देन ताम्बूलादिग्रहणम् । ५ अविघ्नानि शिव कर्म तथैवच । ६ देवतान्तं तु होम (?) ।

स्वस्तिमृद्धिं च भवत्पूर्वं ब्रुवन्त्विति । प्रणवाद्यं त्रिराचष्टे भवदादिविना परे । पुण्याहादेस्त्रिरभ्यासे मन्द्रमध्योच्चनिःस्वनम् । आश्रयेरन्निमे सर्वे यथागमपरंपरम् । प्रत्युक्तिविषये भेदस्तृतीयस्त्वृद्ध्यतामिति । [तुर्ये श्रीरस्त्विति ब्रूयादस्तु श्रीरिति च द्विजाः ।] आप इत्यादिभिः शान्तिं ततः कुर्यात्समाहितः । स्वस्तिवाचनमन्त्रेष्टं सर्वेषामृद्धिकर्मणाम् । आदावन्ते प्रयोक्तव्यमिति यज्ञविदो मतम् । जयन्तस्वामिना प्रोक्तमिदं तु स्वस्तिवाचन'मिति । इदमत्र गृह्यम्—'अथ स्वस्त्ययनं वाचयीते'ति । अस्यार्थमाह नारायणः—'वाचयिता ॐस्वस्ति भवन्तो ब्रुवन्त्विति । भुक्तास्ते विप्राः ॐस्वस्तीति प्रत्यूचु'रिति । हरदत्तस्तु—'अथ तैर्भुक्तवद्भिः स्वस्त्ययनं वाचयेत् । स्वस्त्ययनमस्त्विति वाचयेदित्यर्थ' इत्याह । केचित्पुण्याहवाचनोपलक्षणमित्याहुः । गृह्यपरिशिष्टेतु—'अथ स्वस्तिवाचनंमृद्धिपूर्तेषु कर्मसु स्वस्त्ययनं वाचयीतेत्याचार्यः ऋद्धिर्विवाहान्ता अपत्यसंस्काराः प्रतिष्ठोद्यापने पूर्तं तत्तत्कर्मणश्चाद्यन्तयोः कुर्याच्छुचिः स्वलंकृतो वाचयिता तथाभूते सद्मनि मङ्गलसंभारान्संभृत्य युग्मान्ब्राह्मणान्प्रशस्तानाचारलक्षणसंपन्नान्गन्धादिभिरभ्यर्च्य दक्षिणया तोषयेदथ ते प्राङ्मुखाः प्रसन्ना दर्भपाणयस्तिष्ठेयुस्तद्दक्षिणतो वाचयितोदङ्मुखः संस्कार्यो वाचयितुर्दक्षिणं पार्श्वमभितिष्ठेयुरथ वाचयिता दर्भपाणिरपांपूर्णमुदकुम्भं स्वर्चितं सपल्लवमुखं धृत्वा तिष्ठन्समाहितो मनः समाधीयतामिति ब्राह्मणान्ब्रूयात् समाहितमनसःस इति ते ब्रूयुः प्रसीदन्तु भवन्त इति वाचयिता प्रसन्नाः स इतीतरेऽथ ते सर्वे संहत्य शान्तिः पुष्टिस्तुष्टिर्वृद्धिरविघ्नमायुष्यमारोग्यं शिवंकर्म कर्मसमृद्धिर्धर्मसमृद्धिः पुत्रसमृद्धिर्वेदसमृद्धिः शास्त्रसमृद्धिर्धनधान्यसमृद्धिरि-

---

पाठा०—१ इदमर्धं क्वचिदधिकम् । २ गृह्यविदो मतम् । ३ स्वस्त्ययनं वाचयेदित्याचार्य- । ४ प्रतिष्ठाग्रहणमुत्सर्गोपलक्षणम् ।

ध्दसंपदित्येतानि पञ्चदशास्त्वन्तान्युक्त्वा तन्नाम्ना कर्मदेवता प्रीयतामिति ब्रूयुरथ वाचयिता पूर्ववत्तल्लिङ्गमन्त्रान्पठित्वा त्रिस्त्रिर्मन्द्रमध्योच्चस्वरैरोंपुण्याहं भवन्तो ब्रुवन्तु ॐस्वस्ति भवन्तो ब्रुवन्तु ॐऋद्धिं भवन्तो ब्रुवन्त्विति ब्रूयात्तेपि तथा प्रत्येकं प्रतिब्रूयुरोमृध्यतामित्यृद्धौ प्रतिब्रूयुरथोत्थाय ब्रूयुरथ प्राङ्मुखमासीनं सामात्यं कर्तारं ब्राह्मणाः सपल्लवदर्भपाणयः प्रत्यङ्मुखास्तिष्ठन्तः शान्तिपवित्रलिङ्गाभिर्ऋग्भिरभिषिञ्चेयुः पुरन्ध्यो नीराजनादिमङ्गलं कुर्यु'रिति ॥꙰॥ अथ स्मृतिरूपेणाप्याहाचार्यः—'वैदिके तान्त्रिके चादौ ततः पुण्याह इष्यते । पुण्याहवाचने विप्रा युग्मा वेदविदः शुभाः । यज्ञोपवीतिनः शस्ताः प्राङ्मुखाः स्युः पवित्रिणः । गन्धपुष्पार्चिताः शुद्धाः सोत्तरीयाः कुशायुधाः । आसीनाः पश्चिमे भागे पूर्णकुम्भस्य सत्तमाः । गुरोर्दक्षिणभागे तु कर्तासीत तदाज्ञया । सूत्रेण वेष्टितं कुम्भमपां पूर्णं सुधूपितम् । मृत्ताम्रादिमयं भूमौ रत्नगर्भं समर्चितम् । सिततण्डुलपूर्णेन पात्रेण पिहितानननम् । पल्लवाद्यैश्च संगृह्य गुरुस्तिष्ठेदुदङ्मुखः । वक्तारश्चापि तिष्ठेयुर्विप्रास्तान्वाचयेद्गुरुः । मनः समाधीयतामित्युक्तास्ते गुरुणा द्विजाः । समाहितमनसः स्म इति ब्रूयुस्ततः स्थिताः । प्रसीदन्तु भवन्तश्चेत्युक्ते ते चानुमन्त्रणम् । कुर्युः प्रसन्नाः स्म इति ततो गुरुमुखा द्विजाः । शान्तिः पुष्टिस्तुष्टिर्वृद्धिरविघ्नारोग्यमित्यपि । शिवं कर्म च कर्मान्ते सिद्धिरस्त्वित्युदाहरेत् । प्रत्युक्ते तैश्च पुण्याहकाल इत्युत्तमेन तु । वाच्यतामितरे ब्रूयुराचार्यश्च ततो वदेत् । ॐपुण्याहं भवन्तश्च ब्रुवन्त्विति वचो द्विजाः । ॐपुण्याहमिति ब्रूयुरों स्वस्तीति ततो गुरुः । पूर्ववच्च ब्रुवन्त्वन्ते ते चर्द्धिं च तथा द्विजाः । पूर्ववत्ते समासीना गुर्वाद्याः कलशं गुरुः । स्नाप्य

पाठा०—१ चिंतास्ते तु सोत्तरीया कुशोपरि । २ मित्येव वाचयिता वदेत् । ३.०र्योऽग्गानित्युक्त एव तु ।

पात्रे शुभे तस्मिन्स्थिते तान्वाचयेत्ततः । सावित्र्यादिस्वगृह्योक्तमन्त्रैः पुण्याह इष्यते । बह्वृचोऽपीतरे तद्वदापोहिष्ठादिभिस्ततः । नवभिर्वैश्वदेवेन सूक्तेनान इति द्विजाः । अग्निमिन्धापन इति त्रिभिरेतोन्वितीरयेत् । स्वादिष्ठयेति नवभिरेकयर्चाथ च द्विजाः । तरत्समन्दीसूक्तेन शुचीव इति चैकया । यदन्तीति द्वादशभिरग्निः शुचिरिति त्र्यृचा । अखिलेष्वपि तस्मात्प्रागेवं पुण्याह-मीरितम् । कुशाम्बुमिश्रं कर्तारं प्रोक्षयेयुरिह द्विजाः । पठन्त्यृचो विशुद्ध्यर्थं बह्वृचाः स्वगृहे तथा । पुण्याहादि वदेत्पूर्वं मन्द्र-मध्योत्तमस्वरैः । पुण्याहान्तेऽर्चयेद्विप्रान्दक्षिणाद्यैः स्वशक्तितः । यत्किंचिच्छ्राद्धिकं भुक्त्वा प्रतिगृह्याथवाऽशुचि । अब्राह्मणश्च पुण्याहे नार्हः स्यादिति मे मतिः । पुण्याहवाचनं शस्तमादौ स्यात्सर्वकर्मसु । तत्कृत्वैव सदा कुर्यात्सर्वकर्माणि मानवः' इति ॥ ॥ अत्र भगवाञ्शौनकः—'पुण्याहवाचनविधिं वक्ष्यामोऽथ यथाविधि । प्रयोक्तुः कर्मणो ह्यादावन्ते चोदयसिद्धये । अर्चिता ब्राह्मणाः पूर्वं गन्धमाल्यैः सदक्षिणैः । तिष्ठेयुः प्राङ्मुखा युग्मा वक्तारो दर्भपाणयः । उदङ्मुखो वाचयिता तिष्ठेत्तेभ्यस्तु दक्षिणे । विप्रः कुम्भमपां पूर्णं पिहितानमर्चितम् । तत्रादावाप इत्येवं वदेद्वाचयिता ततः । वक्तारोऽपि शिवा आपः सन्त्वित्येवं ब्रुवन्त्यथ । गन्धा इति वदेत्कर्ता सुगन्धाः पान्त्वितीरे । वदेत्पूर्वं सुमनस इत्येवमपरेऽपि च । सौमनस्यमिति ब्रूयुरस्तुशब्दान्तमत्वराः । पश्चा-दक्षतमित्येवं ब्रूयाद्वाचयिता ततः । अन्येऽक्षतं चारिष्टं चास्त्वित्येवं ब्रूयुरर्चिताः । ततो वाचयिता विप्रो दक्षिणा इत्युदीरयेत् । स्वस्तिशब्दाद्यमुच्चार्य दक्षिणाः पान्त्वितीतरे । बहुदेयमिति ब्रूयुरस्तुशब्दान्तमत्वराः । कर्ताथ दक्षिणं जानु पातयित्वा महीतले ।

पाठा०—१ ऋचथापीतरे तद्वत् । २ अत्रतथापि ।

उदङ्मुखो जपेत्सूक्तं भद्रचेत्येवमादिकम् । जपित्वोत्थापितं कुम्भं विभ्रत्तिष्ठन्नुदङ्मुखः । मनः समाधीयतामित्येवं वाचयिता वदेत् । समाहितमनसःस्म इत्येवं च ब्रुवन्त्यथ । प्रसन्नाःस्म इति प्रीताः प्रतिब्रूयुस्तथेतरे । शान्तिः पुष्टिस्तथा तुष्टिर्वृद्धिविघ्नान्य-नुक्रमात् । आयुष्यमारोग्यमिति शिवं कर्मेत्यथापि च । अस्तुशब्दान्तमुच्चैरन्वाचयिता तथापरे । प्रजापतिः प्रीयतामित्यथ वाचयिता वदेत् । परे प्रथममुच्चार्य प्रीयतां भगवानिति । पश्चात्प्रजापतिरिति ब्रूयुः प्रयतमानसाः । पुण्याहं वाचयिष्येऽहमिति वाचयिता वदेत् । वाच्यतामिति भाषन्ते वक्तारश्च सुचेतसः । अथोद्गातेव शकुने साम गायसिपूर्विकाम् । ऋचं सर्वे सह ब्रूयुस्ततो वाचयिता द्विजः । ॐयुक्तिपूर्वं पुण्याहं भवन्त इति भाषितात् । परं ब्रुवन्त्विति ब्रूयुरोंपुण्याहमितीतरे । पुनरप्येवमेव द्विः कृत्वा पुण्याहवाचनम् । ततः स्वस्तिन इन्द्रेति ऋचं ब्रूयुः सहोभये । ततो वाचयिता पूर्वमोंस्वस्तीत्यभिधाय तु । पश्चाद्भ-वन्त इत्येवं ब्रुवन्त्विति च भाषते । ॐस्वस्तीति तथैवान्ये प्रतिब्रूयुरतः परम् । प्रारिप्सितं चतुर्थ्योक्त्वा कर्म वाचयिता ततः । स्वस्तीत्यादिसनन्त्यन्तं पूर्ववत्समुदीरयेत् । वक्तारश्च चतुर्थ्यन्तं तत्तत्कर्मोक्तिपूर्वकम् । स्वस्तीति च प्रतिब्रूयुरथ सर्वे द्विजातयः । ऋध्याम स्तोममित्यादि ऋचं ब्रूयुः सहोच्चकैः । ततो वाचयिता ऋद्धिं भवन्त इति पूर्वकम् । ब्रुवन्त्विति वदेदन्ये ब्रूयुरोम्ऋध्यतामिति । एवमेवोभयेपि द्विरभ्यस्येयुरिदं पुनः । ततो वाचयिता कुम्भजलं संस्कार्यमूर्धनि । किंचित्सिंचेत्सहैवान्ये ब्रूयुश्च विविधाशिषः । पुण्याहादेस्त्रिरभ्यासे मन्द्रमध्योच्चनिस्वनम् । आश्वेरन्निमे सर्वे यथागमपरंपरम् । स्वस्तिवाचनमेतत्तु सर्वेषामृद्धिकर्मणाम् ।

पाठा॰—१ कर्मधर्मैवेदशास्त्रपुनर्यान्येष्टसपदाम् । समृद्धिरस्तु प्रत्येकमुभयेपि ब्रुवन्त्यथ । इत्यधिकमेतस्मिन्कोशे । २ मृद्धिकारणम् ।

आदानन्ते च कर्तव्यमिति यज्ञविदो मतम्' इति ॥ ❀ ॥ अत्र कलशस्थापने विशेषमाह हारीतः—'गोमयेनोपलिप्योर्वी रङ्गवल्लिकयार्चयेत् । प्रस्थधान्योपरि स्थाप्य पूर्णं हि कलशद्वयम् । दक्षिणे चोत्तरे चैव उत्तरे तु निधापयेत् । पात्रमक्षतपूर्णं तु फलपुष्पसमन्वितम्' इति ।।❀।। कलशलक्षणमुक्तं विष्णुधर्मोत्तरे—'हैमराजतताम्रा वा मृन्मया लक्षणान्विताः । यात्रोद्वाहप्रतिष्ठादौ कुम्भाः स्युरभिषेचने । पञ्चपाङ्गुलिवैपुल्यमुत्सेधात्षोडशाङ्गुलः । द्वादशाङ्गुलिकं मूलं मुखमष्टाङ्गुलं तथा' इति ।। ❀ ।। क्षत्रिया-दीनां विशेषमाह यमः—'पुण्याहवाचनं चैव ब्राह्मणस्य विधीयते । तदेव च निरोंकारं कुर्यात्क्षत्रियवैश्ययोः' इति ।। अत्र कर्मदेवताग्रहणे बोधायनीयप्रयोगवचनम्—'प्रधानदेवता या तु स्वचिकीर्षितकर्मणः । असाविति च तां ब्रूयात्संदेहे तु प्रजापतिम्' इति ॥

अथ स्वस्तिवाचनप्रयोगः । तत्र यजमानः कृताभ्यङ्गादिक्रियः स्वलंकृतो दर्भपाणिः प्राणानायम्य शुचिर्भूत्वा मङ्गलसंभारं संभृत्य स्वलंकृते गृहे सोत्तरच्छदे भद्रासने उदङ्मुख उपविश्य दक्षिणपार्श्वे संस्कार्यमुदङ्मुखमुपवेश्य रङ्गवल्लिकयानुरञ्जिते भूतले प्रस्थपरिमितधान्यस्योपरि दक्षिणोत्तरयोः सौवर्णराजतताम्रमृण्मयाद्यन्यतमं कलशद्वयमुक्तलक्षणमव्रणं मनोहरं सुशुद्धपुण्यजलैरा-पूरितं सपल्लवं निधाय तत्र सूत्रवेष्टितोत्तरकलशे पञ्चरत्नानि निक्षिप्य सिततन्दुलपूरितं सफलं पात्रं निधाय तत्पश्चिमभागे प्रशस्ता-न्प्रतिवचनसमर्थान् तद्दिने श्राद्धादिष्वभुक्तवतो यत्रकुत्राप्यप्रतिगृहीतृन् शुचीन्सोत्तरीयान्दर्भपवित्रपाणीन्युग्मान्ब्राह्मणान्प्राङ्मुखा-

पाठा०—१ उभयत्रापि धारयेत् । २ ब्रतोद्वाह । ३ मुत्सेध षोडशाङ्गुल । ४ चिकीर्षितस्य कर्मण । ५ भद्रपीठासने ।

ुपवेश्य तान्गन्धाक्षतपुष्पादिभिरभ्यर्च्य दक्षिणाभिरुपतोष्य यथाचारं सुमुखश्चेत्यादिना गणाधिपतिं षोडशोपचारैरभ्यर्च्य [ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्नराजो गणाधिपः । धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणुयादपि । विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । संग्रामे सर्वकार्येषु विघ्नस्तस्य न जायते । शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये । गणाधिपतयेनमः । गणपतये नमः इति ध्यानावाहनादिषोडशोपचारपूजां कृत्वा समर्प्य ततः ] उत्तरकलशे देवतामावाहयेत् । तत्रायं क्रमः—कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुंधरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ अङ्गैश्च सहिताः सर्वे कलशाम्बु समाश्रिताः । गायत्री चाथ सावित्री शान्तिः पुष्टिकरी तथा ॥ गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिंधु कावेरि जलेस्मिन्संनिधिं कुरु । सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयान्तु मम देहस्य दुरितक्षयकारकाः । एवमेताः समावाह्य कलशे देवतास्ततः । एतन्मन्त्रस्थितान्देवान्संपूज्य प्रार्थयेत्क्रमात् । विष्ण्वादिभ्यो देवेभ्यो नमः ध्यानावाहनादिषोडशोपचारपूजां समर्पयामि । ततः—सर्वेषु कालेषु समस्तदेशेष्वशेषकार्येषु तथेश्वरेश्वरः । सर्वस्वरूपी भगवाननादिमान्ममास्तु माङ्गल्यविवृद्धये हरिः ॥ स्मृते सकलकल्याणभाजनं यत्र जायते । पुरुषं तमजं नित्यं व्रजामि शरणं हरिम् ॥ तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव । विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् । येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः ॥ यत्र योगेश्वरः कृष्णो यत्र

पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ सर्वेष्वारब्धकार्येषु त्रयस्त्रिभुवनेश्वराः । देवा दिशन्तु नः सिद्धिं
ब्रह्मेशानजनार्दनाः ॥ इत्यादिपठित्वा । कलशयोः लक्ष्मीनारायणाभ्यांनमः । उमामहेश्वराभ्यांनमः । वाणीहिरण्यगर्भाभ्यां-
नमः। शचीपुरंदराभ्यांनमः । अरुंधतिवसिष्ठाभ्यांनमः । सीतारामाभ्यांनमः । गणपतयेनमः । ॐ दुर्गायैनमः । ॐ क्षेत्रपाला-
यनमः । ॐ वास्तुपुरुषायनमः । ॐ मातृभ्योनमः । ॐ पितृभ्योनमः । ॐ गुरुभ्योनमः । ॐ आचार्येभ्योनमः । ॐ इष्टदेवताभ्यो-
नमः । ॐ कुलदेवताभ्योनमः । ॐ ग्रामदेवताभ्योनमः । ॐ सर्वेभ्योदेवेभ्योनमः । ॐ सर्वेभ्योब्राह्मणेभ्योनमः । इति सर्वा-
न्प्रत्येकं नमस्कृत्य प्राणानायम्य देशकालौ संकीर्त्य अमुककर्मकर्तुमादौ शुद्धिवृद्ध्यभ्युदयसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं ब्राह्मणैः
सह स्वस्तिपुण्याहवाचनं करिष्ये इति संकल्पं कुर्यात् । ततः सर्वे ब्राह्मणाः प्राङ्मुखास्तिष्ठेयुः । तद्दक्षिणतः कर्तोत्तरकलशं
बिभ्रदुदङ्मुखस्तिष्ठेत् । अथ कर्तुर्दक्षिणपार्श्वे संस्कार्यश्चोदङ्मुखस्तिष्ठेत् । अथ कर्ता आपः इत्युक्त्वा शिवा आपः सन्त्विति ब्राह्मणा-
न्वाचयित्वा, गन्धा इत्युक्त्वा सुगन्धाःपान्त्विति वाचयित्वा, सुमनस इत्युक्त्वा सौमनस्यमस्त्विति वाचयित्वा, अक्षता इत्युक्त्वा
अक्षतं चारिष्टंचास्त्विति वाचयित्वा, दक्षिणा इत्युक्त्वा स्वस्तिदक्षिणाः पान्तु बहुदेयं चास्त्विति वाचयित्वा, तं कलशं पूर्ववन्नि-
धाय दक्षिणं जानुं भूमौ पातयित्वोदङ्मुखः ॐ श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः । श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ॥
प्रियं श्रद्धे ददतः प्रियं श्रद्धे दिदासतः । प्रियं भोजेषु यज्वस्विदं म उदितं कृधि ॥ यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे । एवं
भोजेषु यज्वस्वस्माकमुदितं कृधि ॥ श्रद्धां देवा यजमाना वायुगोपा उपासते । श्रद्धां हृदय्य१याकूत्या श्रद्धया विन्दते वसु ॥

श्रद्धां प्रातर्हवामहे श्रद्धां मध्यंदिनं परि । श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः ॥ इत्यादिसूक्तं पठित्वा पुनस्तं कलशं गृहीत्वोत्थायोदङ्मुखो भोः स्वामिनः मनः समाधीयताम् । इत्युक्त्वा समाहितमनसःस्म इति तैरुक्ते, प्रसीदन्तु भवन्तः इत्युक्त्वा प्रसन्नाःस्म इति तैरुक्ते सर्वैः सह—शान्तिरस्तु पुष्टिरस्तु तुष्टिरस्तु वृद्धिरस्तु अविघ्नमस्तु आयुष्यमस्तु आरोग्यमस्तु शिवंकर्मास्तु कर्मसमृद्धिरस्तु धर्मसमृद्धिरस्तु पुत्रसमृद्धिरस्तु वेदसमृद्धिरस्तु शास्त्रसमृद्धिरस्तु धनधान्यसमृद्धिरस्तु इष्टसंपदस्त्विति पञ्चदशवाक्यान्युक्त्वा स्वयं कर्मदेवतात्मको भगवान्प्रजापतिः प्रीयतामित्युक्त्वा प्रीयतां भगवान्कर्मदेवात्मकः प्रजापतिरिति तैर्वाचयित्वा पुण्यं पुण्याहं वाचयिष्ये इत्युक्त्वा वाच्यतामिति तैरुक्ते—ॐ उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि । वृषेव वाजी शिशुमतीरपीत्या सर्वतो नः शकुने भद्रमावद विश्वतो नः शकुने पुण्यमावद । इत्यादिकामृचं सर्वैः सह पठित्वा ॐ पुण्याहं भवन्तो ब्रुवन्तु इति स्वयं मन्द्रस्वरेणोक्त्वा तथा ब्राह्मणैः ॐ पुण्याहमिति प्रत्युक्ते पुनरेवं मध्यमस्वरेणोक्त्वा तथैव तैरुक्ते पुनरेवमुच्चस्वरेणोक्त्वा तथैव तैरुक्ते—ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु । इत्यादिकामृचं सर्वैः सह पठित्वा ॐस्वस्ति भवन्तो ब्रुवन्त्विति पूर्ववदुक्त्वा ॐ स्वस्तीति तैः प्रत्युक्ते स्वस्त्यमुककर्मणे भवन्तो ब्रुवन्तु इति करिष्यमाणकर्मनाम पूर्ववदुक्त्वा अमुककर्मणे स्वस्तीति तैः पूर्ववदुक्ते ऋध्यामस्तोममित्यादिकामृचं सर्वैः सह पठित्वा ऋध्याम० ऋद्धिं भवन्तो ब्रुवन्त्विति पूर्ववदुक्त्वा ॐ ऋध्यतामिति तैस्तथैव प्रत्युक्ते सामात्यः प्राङ्मुख उपविशेत् । ततो ब्राह्मणाः प्राङ्मुखा उपविश्य तद्वृद्धिकलशोदकं विशालताम्रादिपात्रे निनीय यजमानं सामात्यं मन्त्रैरभिषिञ्चेयुः ॥ तत्र मन्त्राः । तत्सवितुरित्यस्य विश्वा-

मित्रः सविता गायत्री। आपोहिष्ठेति नवर्चस्य सूक्तस्यांबरीषः सिन्धुद्वीप आपो गायत्री पञ्चमी वर्धमाना सप्तमी प्रतिष्ठा अन्त्ये द्वे
अनुष्टुभौ। आनो भद्रा इति दशर्चस्य सूक्तस्य राहूगणो गोतमो विश्वेदेवास्त्रिष्टुप् पञ्चाद्याः सप्तमी च जगत्यः षष्ठी विराट् शिष्टा गायत्र्यः ॥
ॐ आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः। देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवे दिवे ॥
देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो निवर्तताम्। देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्रतिरन्तु जीवसे ॥
तान्पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम्। अर्यमणं वरुणं सोममश्विना सरस्वती नः सुभगा मयस्करत्॥ तन्नो
वातो मयोभु वातु भेषजं तन्माता पृथिवी तत्पिता द्यौः। तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम् ॥
तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ १ ॥
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ पृषदश्वा
मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः। अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसागमन्निह ॥ भद्रं कर्णेभिः
शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥ शतमिन्नु शरदो अन्ति देवा यत्रा
नश्चक्रा जरसं तनूनाम्। पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता
स पिता स पुत्रः। विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥ २ ॥ अपनः शोशुचदघमित्यष्टर्चस्य
सूक्तस्य कुत्सोऽग्निर्गायत्री। ॐ अप नः शोशुचदघमग्ने शुशुग्ध्या रयिम्। अप नः शोशुचदघम् ॥ सुक्षेत्रिया सुगातुया

वेसुया च यजामहे । अपं० ॥ प्रयन्द्रन्दिद्ध एषां प्रासाकासश्च सूरयः । अपं० ॥ प्रय ते अग्ने सूरयो जायेमहि प्रते वयम् ।
अपं० ॥ प्रयदुग्नेः सहस्वतो विश्वतो यन्ति भानवः । अपं० ॥ त्वं हि विश्वतोमुख विश्वतः परिभूरसि । अपं० ॥ द्विषो
नो विश्वतोमुखाति नावेव पारय । अपं० ॥ स नः सिन्धुमिव नावयातिपर्षा स्वस्तये । अपं० ॥ १ ॥ एतोन्विन्द्र-
मितितृचस्याङ्गिरसास्तिरश्चिरिन्द्रोऽनुष्टुप् । स्वादिष्ठयेति दशर्चस्य सूक्तस्य मधुच्छन्दाः पवमानःसोमो गायत्री । ॐ स्वादिष्ठया
मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥ रक्षोहा विश्वचर्षणिरभियोनिमयोहतम् । द्रुणा सधस्थमासदत् ॥ वरिवो
धातमो भव मंहिष्ठो वृत्रहन्तमः । पर्षि राधो मघोनाम् ॥ अभ्यर्ष महानां देवानां वीतिमन्धसा । अभि वाजमुत श्रवः ॥ त्वामच्छा
चरामसि तदिदर्थं दिवेदिवे । इन्दो त्वे न आशसः ॥१॥ पुनाति ते परिस्रुतं सोमं सूर्यस्य दुहिता । वारेण शश्वता तना ॥ तमीमण्वीः
समर्य आ गृभ्णन्ति योषणो दश । स्वसारः पार्ये दिवि ॥ तमीं हिन्वन्त्यग्रुवो धमन्ति बाकुरं दृतिम् । त्रिधातु वारणं मधु ॥ अभीइ
ममघ्न्या उत श्रीणन्ति धेनवः शिशुम् ॥ सोममिन्द्राय पातवे ॥ अस्येदिन्द्रो मदेष्वा विश्वा वृत्राणि जिघ्नते ॥ शूरो मघा च मंहते
॥२॥ तरत्समन्दीत्यृक्चतुष्टयस्यावत्सारः पवमानःसोमो गायत्री । ॐ तरत्समन्दी धावति धारा सुतस्यान्धसः । तरत्समन्दी धावति ।
उस्रा वेद वसूनां मर्तस्य देव्यवसः । तर० ॥ ध्वस्रयोः पुरुषन्त्योरा सहस्राणि दद्महे । तरत्स० ॥ आ ययोस्त्रिंशतं तना सहस्राणि
च दद्महे । तरत्स० ॥१॥ शुचीवोहव्या इति मन्त्रस्य वसिष्ठो मरुतस्त्रिष्टुप् । ॐ शुची वो हव्या मरुतः शुचीनां शुचिं हिनोम्यध्वरं
शुचिभ्यः । ऋतेन सत्यमृतसाप आयञ्छुचिजन्मानः शुचयः पावकाः ॥ यदन्तियच्चेतिमर्गद्वयस्य आद्याया वसिष्ठ ऋषिः अव-

शिष्टानामेकादशानां पवित्रवसिष्ठाद्यपी पवमानःसोमो गायत्री । यत्तेपवित्रमर्चिषीतिद्वे अग्निदेवत्ये । उभाभ्यां देवसवितरि-
त्यृगग्निसवितृदेवत्या । त्रिभिष्ट्वमित्यृगग्निसवितृदेवत्या । पुनन्तुमामित्यृग्वैश्वदेवी । अलाय्यस्येति ऋक् पुरउष्णिक् । पुनन्तुमामिति
यः पावमानीरिति पावमानीर्यो अध्येतीति चानुष्टुभः । यदन्ति ॐ यच्च दूरके भयं विन्दति मामिह । पवमान वि तज्जहि ॥
पवमानः सो अद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु नः ॥ यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनीहि
नः ॥ यत्ते पवित्रमर्चिवदग्ने तेन पुनीहि नः । ब्रह्मसवैः पुनीहि नः ॥ उभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनीहि
विश्वतः ॥ १ ॥ त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोम धामभिः । अग्ने दक्षैः पुनीहि नः ॥ पुनन्तु मां देवजनाः पुनन्तु वसवो
धिया । विश्वेदेवाः पुनीत मा जातवेदः पुनीहि मा ॥ प्र प्यायस्व प्रस्यन्दस्व सोम विश्वेभिरंशुभिः । देवेभ्य उत्तमं हविः ॥
उप प्रियं पनिप्नतं युवानमाहुतीवृधम् । अगन्म बिभ्रतो नमः ॥ अलाय्यस्य परशुर्ननाश तमा पवस्व देवसोम । आखुं चिदेव
देव सोम ॥ यः पावमानीरध्येत्यृषिभिः संभृतं रसम् । सर्वं स पूतमश्नाति स्वदितं मातरिश्वना ॥ पावमानीर्यो अध्येत्यृ-
षिभिः संभृतं रसम् । तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम् ॥ २ ॥ अग्निः शुचीव्रततम इति तृचस्य विरूपोऽग्निर्गायत्री ।
ॐ अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुची रोचत आहुतः ॥ समुद्रज्येष्ठा इति चतसृणां वसिष्ठ आपस्त्रिष्टुप् । ॐ समुद्र-
ज्येष्ठाः सलिलस्य मध्यात्पुनाना यन्त्यनिविशमानाः । इन्द्रो या वज्री वृषभो रराद ता आपो देवीरिह मामवन्तु ॥ या आपो
दिव्या उत वा स्रवन्ति खनित्रिमा उत वा याः स्वयंजाः ॥ समुद्रार्था याः शुचयः पावकास्ता आपो देवीरिह मामवन्तु ॥

यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् । मधुश्चुतः शुचयो याः पावकास्ता आपो देवीरिह मामवन्तु ॥ यासु राजा वरुणो यासु सोमो विश्वेदेवा यासूर्जं मदन्ति । वैश्वानरो यास्वग्निः प्रविष्टस्ता आपो देवीरिह मामवन्तु ॥ १ ॥ त्रायन्तामितितृचस्य सप्तर्षयो विश्वेदेवा अनुष्टुप् । त्रायन्तामिह देवास्त्रायतां मरुतां गणः । त्रायन्तां विश्वा भूतानि यथायमरपा असत् ॥ आप इद्वा उ भेषजीरापो अमीवचातनीः । आपः सर्वस्य भेषजीस्तास्ते कृण्वन्तु भेषजम् ॥ हस्ताभ्यां दशशाखाभ्यां जिह्वा वाचः पुरोगवी । अनामयित्नुभ्यां त्वा ताभ्यां त्वोपस्पृशामसि ॥ इमा आपः शिवतमा इत्यन्तेन तृचेन । इमा आपः शिवतमा इमाः सर्वस्य भेषजीः । इमा राष्ट्रस्य वर्धनीरिमा राष्ट्रभृतोऽमृताः ॥ याभिरिन्द्रमभ्यषिञ्चत्प्रजापतिः सोमं राजानं वरुणं यमं मनुम् । ताभिरद्भिरभिषिञ्चामि त्वामहं राज्ञां त्वमधिराजो भवेह ॥ महान्तं त्वा महीनां सम्राजं चर्षणीनां देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ देवस्यत्वेतिच यजुषा देवस्य त्वा सवितुः प्रसवे अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेणाभिषिञ्चामि । भूर्भुवःस्वरित्येताभिश्च व्याहृतिभिः कुशाग्रैः सपल्लवैरभिषिञ्चेयुः । ततः सुवासिनीभिराचरिष्यमाणनीराजनविधेरनन्तरं विविधा ब्राह्मणाशिषः स्वीकुर्यात् ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे स्वस्तिवाचनप्रकरणम् ॥

अङ्कुरार्पणविधिः ॥ शर्वरीरमणमण्डलवक्त्रं पुण्डरीकदलसंनिभनेत्रम् । अङ्कुरार्पणविधिं ह्यभिधास्ये श्रीपतिं नरहरिं प्रणिपत्य ॥ अथाङ्कुरार्पणविधिरभिधीयते । तत्र भगवाञ्शौनकः—'अथाङ्कुरार्पणविधिं प्रवक्ष्यामि विशेषतः । शौनको हि द्विजातीनां मङ्गलार्थमुदीरितम् । शुभे मुहूर्ते कल्याणे गोमयेनोपलिप्य च । सिताक्षतैः संप्रकीर्य पालिकाः स्थापयेद्द्विजः । मध्ये चतुर्मुखं

विधात्पूर्वे वज्रिणमेव च । दक्षिणे तु यमं विधात्पश्चिमे वरुणं तथा । उत्तरे शशिनं विधात्पालिकास्वाधिदेवता: । वाल्मीकीं मृत्तिकां हार्दीं शुष्कगोमयमेव च । एतानि प्रक्षिपेत्तासु पालिकासु यथाविधि । दूर्वोश्चाश्वत्थपर्णं च शिरीषं बिल्वपत्रकम् । तासां मूलेषु विन्यसेच्छ्वेतसूत्रेण मण्डितम् । मध्ये ब्रह्माणमाराध्य गन्धाद्यैरर्चयेत्क्रमात् । ऐन्द्रादिक्रम एवं स्यादमुष्मै नम एव च । तिष्ठन्कर्ता जपेन्मन्त्रं पश्चात्प्राङ्मुख एव च । दिशां पतीन्नमस्यामि सर्वकामफलप्रदान् । कुर्वन्तु सफलं कर्म कुर्वन्तु सततं शुभम् । व्रीहियवमापतिलमुद्गमिश्रितसर्षपान् । तान्प्रक्षाल्य च तोयेषु वापयेदङ्कुरार्पणम् । रात्रौ मुहूर्ते कल्याणे कारयेदङ्कुरार्पणम् । ब्रह्मजज्ञान-मिति तु मध्ये ब्रह्माणमर्चयेत् । यतइन्द्रेति मन्त्रेण प्राच्यां प्रक्षेपयेद्बुधः । नाके सुपर्णमिति च ततो दक्षिण एवतु । तत्त्वायामि ब्रह्मणेति प्रतीच्यां वापयेद्बुधः । सोमोधेनुमुदीच्यां च ह्योषधीर्वापयेत्क्रमात् । शुद्धाभिः सिकताभिश्च प्रच्छायापः प्रसेचयेत् । विधाय शुभये सर्वमात्मानमिति मन्यते । आसप्तमात्प्रजाता वा आपष्ठात्पुत्रनाशनम् । पञ्चमाद्भक्तिमान्विष्णोः सर्वकर्मफलप्रदे । चतुर्थे चाङ्कुरे विधात्पापीयाञ्जायते सुतः । त्र्यहे च सर्वकामानामङ्कुराहनि चोद्यते । आयुष्करं श्रीप्रदं च शुभेष्वन्येषु सर्वशः । तस्मात्सर्वेषु कार्येषु वापयेदङ्कुरार्पणम् । यदङ्कुराणां रहितं तत्सर्वमशुभं भवेत् । अथोऽङ्कुरार्पणं वापि सद्यः कर्तुं समाहितः । अशक्तौ तण्डुलैः शुद्धैः सद्य एव शुभाङ्कुरे । पालिकाश्च प्रपूर्यैव पञ्च त्रीण्येकमेव वा । अलंकृत्य च पद्माद्यैः पुष्पैरापूर्येतापि च । अङ्कुरोक्ताः क्रियाः सर्वास्तैस्तैरेव समाचरेत् । ओषधीनां तु सर्वासां चन्द्रः प्रोक्तोऽधिदैवतम् । तस्मात्सर्वप्रयत्नेन

पाठा०—१ वाल्मीकीं वल्मीकभवाम् । हार्दीं हृदगतपङ्कम् । २ वर्धीयात् । ३ च प्रक्षिपेद्बुध- । ४ प्रभा जाता । ५ विद्यते । ६ पद्माभे ।
पुष्पैराकीर्यते ।

रात्र्यां सादङ्कुरार्पणम् । आधानं गर्भसंस्कारं जातकर्म च नाम च । हित्वाङ्कुरार्पणं विद्यादन्यत्र शुभकर्मसु ॥' इति ॥ ॥

अथाङ्कुरार्पणप्रयोगः ॥ अथ लोकानुसारित्वादनुकल्पपक्षाश्रयणेनैव प्रयोगः कथ्यते । गर्भाधानादिनामकर्मान्तकर्माणि मुक्त्वान्नप्राशनादिविवाहान्तापत्यसंस्कारेष्वन्येषु नवागारप्रवेशादिषु शुभकर्मसु पूर्वदिने रात्रौ अङ्कुरार्पणं कुर्यात् । तद्यथा । तिथ्यादिसंकीर्त्य अमुककर्मकर्तुमादौ कर्मसाफल्यनिरन्तरशुभत्वसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमङ्कुरार्पणाख्यं कर्म करिष्य इति संकल्प्य शुद्धस्थलं गोमयेनोपलिप्य रङ्गवल्ल्यादिभिरलंकृत्य तत्र सिताक्षतान्संप्रकीर्य नववेणुपात्रं श्वेतसूत्रवेष्टिताः पालिकाः संस्थाप्य वल्मीकमृत्तिकां हृदपङ्कं शुष्कगोमयं च प्रक्षिप्य पालिकाः श्वेततन्दुलैः पूरयित्वा दूर्वाङ्कुराश्वत्थशिरीषबिल्वपत्राणामुपरि शुभे मुहूर्ते वंशेणुपात्रं निधाय तत्र सितरक्तहरिद्वर्णानि पुष्पाण्यवकीर्य मध्यादिपञ्चस्थानेषु ब्रह्मादिपञ्चदेवताः पूजयेत् । तत्रायं क्रमः । ब्रह्मजज्ञानं नैकुलो ब्रह्मा त्रिष्टुप् । अनेन मन्त्रेण पालिकामध्ये ब्रह्माणमावाहयेत् । यत इन्द्रभयामहे इत्यस्याङ्गिरस इन्द्रो बृहती । अनेन मन्त्रेण प्राच्यां पूर्वदले इन्द्रमावाहयेत् । नाकेसुपर्णमित्यस्य भार्गवो वेनस्त्रिष्टुप् । अनेन मन्त्रेण दक्षिणस्यां यममावाहयेत् । तत्त्वायामि शुनःशेपो वरुणस्त्रिष्टुप् । अनेन मन्त्रेण प्रतीच्यां वरुणमावाहयेत् । सोमोधेनुमित्यस्य गोतमः सोमस्त्रिष्टुप् । अनेन मन्त्रेण उदीच्यां सोममावाहयेत् । एवं क्रमेणावाह्य ब्रह्मणेनम आसनमित्यादिषोडशोपचारैर्देवतापञ्चकं सम्यगभ्यर्च्य पालिकापश्चाद्भागे प्राङ्मुखस्तिष्ठन्नुपस्थानं कुर्यात् । तत्रमन्त्रः—'दिशां पतीन्नमस्यामि सर्वकामफलप्रदान् । कुर्वन्तु सफलं कर्म

पाठा०—१ तेन रात्र्यङ्कुरार्पणम् । २ गोतमो वामदेवो । ३ इन्द्र वो मधुच्छन्दा इन्द्रो गायत्री । ४ यमायसोम यमोयमोऽनुष्टुप् ।

कुर्वन्तु सततं शुभम् ।' इति मन्त्रं जपित्वा श्वेततण्डुलांस्तोयेषु प्रक्षाल्य प्राच्यादिचतुर्दिक्षु बीजप्रतिनिधित्वेन तान्समन्त्रं वापयेत् । तत्र मन्त्राः प्रागुक्ताः । एवं चतुर्दिक्ष्वावाप्य पञ्चाभिः पुष्पैरलंकुर्यात् ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशसंस्कारकर्मकाण्डे अङ्कुरार्पणप्रयोगः ॥

अथ नान्दीश्राद्धप्रकरणम् ॥ ॥ प्रसरन्तु नृसिंहस्य प्रसन्ना वः कृपादृशः । यदधीना विभान्त्येते निलोस्यभ्युदया भृशम् ॥ अथेदानीमाभ्युदयिकविधिरभिधीयते । तत्र कारिका—'स्यादाभ्युदयिकं श्राद्धं वृद्धिपूर्तेषु कर्मसु' इति । वृद्धिपूर्तशब्दार्थं स्वयमेव विवृणोति—पुंसःसवनसीमन्तचौलोपनयनेष्विह । विवाहे चानलाधानप्रभृतिश्रौतकर्मसु । इदं श्राद्धं प्रकुर्वन्ति द्विजा वृद्धिनिमित्तकम् । अन्ये षोडशसंस्कारश्रावण्यादिष्वपीष्यते । वाप्याद्युद्यापनादौ तु कुर्युः पूर्तनिमित्तकम्' इति । इदमत्र गूढं— 'युग्मान्वृद्धिपूर्तेष्वयुग्मानितरेष्वि'ति । अस्यार्थमाह नारायणः—पुंसवनसीमन्तोन्नयनचौलकर्मोपनयनविवाहा इति पञ्च अग्न्याधेयादीनि च श्रौतानि वृद्धिश्राद्धस्य विषय इत्येके । अन्ये षोडशकर्मसंस्काराः श्रवणाकर्मादयश्च श्रौतानि चेत्याहुः । 'अनिष्ट्वा तु पितॄन्श्राद्धे वैदिकं कर्म नाचरेत्' इति स्मृतेः । वापीकूपतडागाद्युद्यापनादीनि पूर्तानि श्राद्धस्याविषयः । उभयत्र युग्मान्भोजयेदिति । अत्राश्वलायनाचार्यः स्मृतिरूपेणाह—'कार्यमभ्युदयश्राद्धं श्रौते स्मार्ते च कर्मणि' इति । भगवान्शौनकोऽपि—'अथाभ्युदयिकं श्राद्धमहं वक्ष्यामि शौनकः । भवेदभ्युदयश्राद्धं वृद्धिपूर्तेषु कर्मसु' इति । एतदावश्यकमित्युक्तं चन्द्रिकायां विष्णु-

पाठा०—१ नैलस्याभ्युदया । २ यज्ञनैमया श्रौतस्मार्तादिकमसु ।

पुराणे—'कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः। नामकर्मणि बालानां चूडाकर्मादिके तथा। सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने। नान्दीमुखान्पितृगणादौ तर्पयेत्प्रयतो गृही। नानिष्ट्वा पितृयज्ञेन वैदिकं कर्म चाचरेत्' इति। ब्रह्मपुराणेऽपि—'जन्मन्यथोपनयने विवाहे पुत्रकस्य च। पितृन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम्। वेदव्रतेषु चाधानयज्ञपुंसवनेषु च। नवान्नभोजने स्नाने चौढायाः प्रथमार्तवे। देवारामतटाकादिप्रतिष्ठाद्युत्सवेषु च। राज्ञाभिषेकबालान्नभोजने वृद्धिसंज्ञकान्। नान्दीमुखान्पूजयतमां तथा मातृगणानपि। वनस्थाश्रमं गच्छन्पूर्वेद्युः सद्य एव वा। पितॄन्पूर्वोक्तविधिना तर्पयेत्कर्मसिद्धये' इति॥ ॥अत्र चूडाकर्मादिकेष्वत्रादिशब्दात्सर्ववृद्धिकर्मसु 'नान्दीमुखान्पितृगणादौ तर्पये'दित्यादिवचनोक्तनान्दीमुखश्राद्धस्यानुष्ठानं कस्मिंश्चिद्विषये तन्त्रेण कार्यं नावृत्त्येत्याह मत्स्य—'गणशः क्रियमाणानां मातृभ्यः पूजनं सकृत्। सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु' इति। अस्यार्थः—देशान्तरगतस्य चिरकालाच्छ्रूयमाणसद्भावस्य मृत इति बुद्ध्या पुत्रादिना कृतमृतकार्यस्य कालान्तर आगतस्य यानि जातकर्मादीनि संस्कारकर्माणि पुनः क्रियन्ते तथोपनयनात्प्राक्स्वकाले कथंचिदकृतचौलकर्मपर्यन्तसंस्कारकस्य यानि जातकर्मादीन्युपनयनकाले संभूय क्रियन्ते तेषु गणशः संभूय क्रियमाणेषु जातकर्मादिसंस्कारेषु माथादिपूजायाः नान्दीश्राद्धस्य च सकृत्तन्त्रेण प्रथमं क्रियमाणस्य संस्कारकर्मण आदावनुष्ठानं न पृथगादिषु नावृत्त्या संस्कारकर्मणामादिष्वि'ति। अत्र पूर्वं मातृकापूजा कार्येत्युक्तं विष्णुपुराणे—'तत्रापि मातरः पूर्वं पूजनीयाः प्रयत्नतः। अकृत्वा मातृयागं तु वैदिकं यः समाचरेत्। तस्य क्रोधसमाविष्टा

पाठा०—१ त्रिविदाचरेत्। २ इच्छायाम्। ३ प्रमान्गच्छन्।

हिंमामिच्छन्ति मातरः' इति । मनुरपि—'कर्मादिषु च सर्वेषु मातरः सगणाधिपाः । पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः' इति । मातरो द्विप्रकाराः मानुष्यो दैव्यश्च । मानुष्यो मात्रादयः । दैव्यो ब्राह्म्यादयः । तथाच चन्द्रिकायां चतुर्विंशतिमते—'श्राद्धे ह्यभ्युदये प्राप्ते देवतास्थापनं स्मृतम् । जातिधर्मकुलश्रेणीलोकानां वृद्धिकारकम् । तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा । इत्येता मातरः प्रोक्ताः पितुर्मातुः स्वसाष्टमी । ब्राह्मीत्याद्यास्तथा सप्त दुर्गाक्षेत्रगणाधिपान् । वृद्ध्यादौ पूजयित्वा तु पश्चान्नान्दीमुखान्पितॄन्' । अस्यार्थः—अभ्युदये अभ्युदयनिमित्ते वृद्धिनिमित्तेश्राद्धे प्राप्ते कर्तव्यतया प्रस्तुते ततः प्रागेव मात्रादिपूजनार्थं देवतास्थापनं स्थण्डिलादौ मात्रादिगणाधिपान्तदेवताराधनं स्मृतमिति प्रथमश्लोकस्यार्थः । पितुः पक्षे पितृवर्गे । तिस्रो मातृपितामहीप्रपितामह्यः पूज्याः । तथा मातामहे मातामहवर्गे च मातामहीमातृपितामहीमातृप्रपितामह्यः पूज्याः । पितुर्मातुःस्वसाष्टमी पितृष्वसा सप्तमी मातृष्वसाष्टमी पूज्या । इत्यष्टौ मानुष्यो मातरः प्रोक्ता इति द्वितीयश्लोकार्थः । ब्राह्मीत्याद्यास्तथा सप्त ब्राह्मी माहेश्वरी कौमारी वैष्णवी वाराही माहेन्द्री चामुण्डेत्याद्याः सप्त देवतामातरः । दुर्गाक्षेत्रगणाधिपान् दुर्गा क्षेत्राधिपं गणाधिपं च वृद्ध्यादौ वृद्धिश्राद्धात्प्राक् षोडशभिरुपचारैः पूजयित्वा नान्दीमुखान्पितॄन्श्राद्धेन पूजयेदिति तृतीयश्लोकार्थः । शेषं व्यक्तम् ॥ ॐ ॥ कूर्मपुराणे व्यासगीतायाम्—'पूर्वं तु मातरः पूज्या भक्त्यैव सगणेश्वराः । स्थण्डिलेषु पवित्रेषु प्रतिमासु द्विजा-

पाठा०—१ पितु इतिपञ्चम्यन्त पद स्वसेतिपदेनान्वपज्यते । तथाच सप्तमीपदमर्थादुपस्थित सद वेति । एवच पितु स्वसा सप्तमी मातु स्वसाष्टमीत्यर्थ । २ मातृपूर्वा पितृत्वात्ततो मातामह्य अपि । मातामहीस्पत केचित्पुनमा भाव्या द्विनातय इति विशेप क्वचित् । ३ श्राद्धेनाति तृतीया ।

तिषु ॥ पुष्पैर्धूपैः सनैवेद्यैर्गन्धाद्यैर्भूषणैरपि । पूजयित्वा मातृगणं कुर्याच्छ्राद्धत्रयं बुधः ॥' इति ॥ ॥ अथ कात्यायनेनोक्ता देवताः घृतधारया समालिख्य पूजयेत् । तथाच तदीयवचनम्—'गौर्यादीसु विलेख्यासु पञ्चधारा घृतेन तु । कारयेत्सप्तधारा वा नातिनीचा न चोच्छ्रिताः । गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः । धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह । आवाह्य गन्धपुष्पाणि धूपं दीपं निवेदयेत् । आयुष्याणि च शान्त्यर्थं जपित्वात्र समाहितः । षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत्' इति । आत्मदेवता आत्मनोऽभीष्टदेवता । आयुष्याणि शान्त्यर्थं आनोभद्रा इत्यादीनि सूक्तानि जपित्वा क्रमादेषु नान्दीश्राद्धप्रयोजककर्मोपक्रमेषु षड्पितृभ्यः पित्रादिभ्यो मातामहादिभ्यश्च मातृश्राद्धपूर्वकं श्राद्धदानमुपक्रमेदित्यर्थः । हेमाद्रौ मत्स्यपुराणे—'उत्सवानन्दसंताने यज्ञोद्वाहादिकर्मसु । मातरः प्रथमं पूज्याः पितरस्तदनन्तरम् । ततो मातामहाः पूज्या विश्वेदेवास्तथैव च । मातरो मात्राद्यास्तिस्रः । एवं पितरो मातामहाश्चेति द्रष्टव्यमिति । तत्राश्वलायनाचार्यैः—'माता पितामही चैव संपूज्या प्रपितामही । पित्रादयस्त्रयश्चैव मातुः पित्रादयस्त्रयः । एते नैवार्चनीयाः स्युः पितरोऽभ्युदये द्विजैः' इति । यत्तु वृद्धवसिष्ठवचनं—'नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् । नाम संकीर्तयेद्विद्वानन्यत्र पितृपूर्वकं' इति । स्मृत्यर्थसारेपि—'वृद्धमुख्यास्तु पितरो वृद्धिश्राद्धेषु भुञ्जते' इति । तदेतच्छाखान्तरविषयम् । बह्वृचानां तु तच्छाखाप्रवर्तकाश्वलायनाचार्येणानुलोम्येन मात्रादिक्रमस्यैवोक्तत्वादयमेव पक्षः स्वीकार्यः ॥ ❀ ॥ तस्य कालविशेषमाह हेमाद्रौ वसिष्ठः—'पूर्वेद्युर्मा-

पाठा०—१ द्वाहादिमङ्गले । २ नव नवसङ्ख्याका पितर ।—

वृकं श्राद्धं कर्माहे पैतृकं तथा । उत्तरेद्युः प्रकुर्वीत मातामहगणस्य च' इति । अस्यानुकल्पकालमाह वृद्धशातातपः—'पूर्वाह्णे मातृकं श्राद्धं मध्याह्ने पैतृकं तथा । ततो मातामहानां तु वृद्धौ श्राद्धत्रयं स्मृतं' इति । एवंविधस्य कालभेदस्यासंभवे आह वृद्धमनुः—'अलाभे श्राद्धकालानां नान्दीश्राद्धत्रयं बुधः । पूर्वेद्युरेव कुर्वीत पूर्वाह्णे मातृपूर्वकम्' इति । कात्यायनोपि—'आभ्युदयिके प्रदक्षिणमुपचारः पूर्वाह्णः' इति । वृद्धशातातपोपि—'पृथग्दिनेष्वशक्तश्चेदेकस्मिन्पूर्ववासरे । श्राद्धत्रयं प्रकुर्वीत वैश्वदेवं तु तान्त्रिकम्' इति । अथ क्रममाह प्रचेताः—'मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदनन्तरम् । ततो मातामहानां तु वृद्धौ श्राद्धत्रयं स्मृतम्' इति । [ तथाच श्रुतिः—'तस्मात्पितृभ्यः पूर्वेद्युः क्रियते यत्पितृभ्यः पूर्वेद्युः करोति पितृत एव तद्यज्ञनिष्क्रयं यजमानः प्रतनुत' इति ]। एतच्च नान्दीश्राद्धं महत्सु कर्मसु पूर्वेद्युः कार्यं । अल्पेषु तु तदहरेव । तथाच गृह्यपरिशिष्टं—'महत्सु पूर्वेद्युस्तदहरल्पेष्वि'ति । अत्रिरपि—'पूर्वाह्णे तु भवेद्वृद्धिर्विना जन्मनिमित्तकम् । पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुधः' इति । अत्र पूर्वोक्तमात्रादिमनुष्यपितृनान्दीमुखविशेषणकान्कुलार्चयेदिति हेमाद्रिणा प्रपञ्चितम् । तथाच तत्रत्यवचनम्—'ऊर्ध्ववक्त्रास्तु ये तत्र ते नान्दीमुखसंज्ञकाः' इति । एते दिव्यपितरः मात्रादयश्च मानुष्यपितरः प्राधान्येनोद्देश्याः । नान्दीमुखाश्च तदभेददृष्टिविधया उद्देश्यस्वरूपेऽन्तर्भावनीया इति । अत्रोक्तनान्दीमुखानां पितॄणामिदमासनं नान्दीमुखान्पितॄनावाहयिष्ये इत्येवमादिभिर्वाक्यैः प्रयोगो विधेयः । एवमेव च कात्यायनीयं प्रयोगवचनम्—नान्दीमुखान्पितॄनावाहय इति पृच्छति । नान्दीमुखाः पितरः

पाठा०—१ कुण्डलितो भागो नान्धाङ्किते ग्रन्थे दृश्यते ।

प्रीयन्तामिति । अक्षय्यस्थाने नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च प्रीयन्तामिति । कर्माङ्गाभ्युदयिकेभ्येत एव पितरो देवताः । 'निषेककाले सोमे च सीमन्तोन्नयने तथा । ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिमत्कृतम्' इति वचने वृद्धिश्राद्धकर्मातिदेशात् । तदेवमत्र मातृपितामहीप्रपितामहीनां पितृपितामहप्रपितामहानां मातामहप्रमातामहवृद्धप्रमातामहानां च वृद्धिश्राद्धे देवतात्वे स्थिते वृद्धौ नान्दीमुखान्पितॄन्यजेतेत्यादिषु तएव नान्दीमुखशब्दाभिधेयत्वेन विवक्षिताः । 'ये तु ब्रह्मपुराणेऽभिहिताः—'ये स्युः पितामहादूर्ध्वं ते स्युर्नान्दीमुखास्त्विह । प्रसन्नमुखसंज्ञाः स्युः मङ्गलीया यतस्तु ते । पिता पितामहश्चैव तथैव प्रपितामहः । त्रयोऽप्यश्रुमुखा ह्येते पितरः संप्रकीर्तिताः । तेभ्यः पूर्वे त्रयो ये स्युस्ते तु नान्दीमुखाः स्मृताः' इति । ते प्रौष्ठपदपौर्णमासीनिमित्त एव श्राद्धे देवताः न पुत्रजन्मादिकालिके तत्र महालयप्रकरणे पठितत्वात् । इह तावदेतावत्सिद्धम्—यो नामकरणचौलोपनयनविवाहादिषु कर्ता स नान्दीमुखविशेषणवद्भ्यो मनुष्यपितृभ्यः श्राद्धं कुर्यादिति ॥

अथ विश्वेदेवनिर्णयः । अस्मिन्श्राद्धे कौ विश्वेदेवावित्यपेक्षिते निर्णयः—वृद्धिश्राद्धकर्माङ्गश्राद्धयोस्तत्करणे विषयविशेषश्चोच्यते

पाठा०—१ वृद्धिमत्कं । २ नान्दीमुखा इति प्रकीर्णकाम्यकालप्रकरणे वक्ष्यमाणाः । ३ इत आरभ्य कारिकाकारः इत्येतदवधि विषयस्थाने—तत्र संकल्पविषये विशेषो दर्शितः संग्रहे—'शुभार्थी प्रथमान्देव वृद्धौ संकल्पमाचरेत् । न पश्चात्, यदि वा कुर्यान्महादोषोऽभिजायते' इति । कारिका 'संबन्धनामगोत्राणि वर्जयेदत्र धार्मिकः' इति । संग्रहेऽपि 'अनभ्युदयमद्दानामन्नाशामगोत्रिणाम् । अनाम्रा चातिलश्चैव नान्दीश्राद्धं च सव्यवत्' इति । आचार्यः 'वरकर्तुमिच्छेत्पूर्वेद्युर्नान्दीपार्वणमार्गेण । कुर्यान्नान्दीमुखेन क्रियाः कुर्यात्प्रदक्षिणाः' इति पुस्तकान्तरे ग्रन्थो लिखितश्चोपलभ्यते ।

चन्द्रिकायाम्। तत्र शङ्खः—'इष्टिश्राद्धे क्रतुर्दक्षः संकीर्त्यौ वैश्वदेविकौ। नान्दीमुखे सत्यवसू काम्ये च धुरिलोचनौ। पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ। नैमित्तिके कालकामावेवं सर्वत्र कीर्तयेदि'ति। इष्टिश्राद्धं यागादिकर्मश्राद्धं श्रौतस्मार्तकर्मणामाधानसोमयागगर्भाधानपुंसवनानामादौ तदङ्गत्वेनानुष्ठीयमानं श्राद्धमिति यावत्। 'निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृत'मिति कर्माङ्गलक्षणश्राद्धमभिदधता पारस्करेणैवाभिधानात्। वृद्धिवत्कृतमित्यभिदधता कर्माङ्गं वृद्धिश्राद्धादन्यदिति दर्शितं वृद्धिश्राद्धमिति यावत्। 'एवं प्रदक्षिणावृत्को वृद्धौ नान्दीमुखान्पितॄन्यजेत' इति याज्ञवल्क्येन वृद्धिश्राद्धे नान्दीमुखसंज्ञकानां पितॄणां देवतात्वेन विधानात्। वृद्धिश्राद्धं च वृद्धवसिष्ठेन निरूपितम्—'पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम्' इति। पुत्रजन्मविवाहादौ क्रियमाणमाभ्युदयिकश्राद्धं वृद्धिश्राद्धमिति व्यपदिश्यत इत्यर्थः। अत्र आदिशब्देन गर्भाधानपुंसवनसीमन्तव्यतिरिक्तानामन्नप्राशनचूडाकरणादिसंस्कारकर्मणां ग्रहणम्। गर्भाधानपुंसवनसीमन्तेषु क्रियमाणाभ्युदयश्राद्धस्य कर्माङ्गश्राद्धकोटित्वादिति। काम्यादिवचनशेषस्तु पाकयज्ञकाण्डे वैश्वदेवप्रकरणे व्याख्यास्यते। नान्दीमुखे सत्यवसू विश्वेदेवौ। कर्माङ्गे श्राद्धे तु क्रतुदक्षाविति सिद्धम्॥ ❀॥ अत्रेदं विचार्यते—किं निषेकादिषोडशकर्मसु आधानादिश्रौतकर्मसु च गृह्यादिग्रन्थजातोक्तप्रकारेणाभ्युदयिकश्राद्धं कर्तव्यम्, उत पारस्करवचनोक्तप्रकारेण निषेकादिषु चतुर्षु कर्मसु कर्माङ्गश्राद्धं वा कर्तव्यं, आहोस्विदुभयं वा कर्तव्यमिति संदेहे प्राप्ते ब्रूमः—वचनद्वयप्रामाण्यादुभयमपि कर्तव्यमिति। तन्न। एककार्यत्वादेककालत्वादन्यतरेणैवालमिति गृह्यपरिशिष्टोक्तेरेकमेव कर्तव्यम्। ननु पितृदेवतयोरपि विश्वेदेवदेवताभेदादेककार्यं न भवति।

गत्यम् । पितृनुपजीव्यागतानां विश्वेदेवानामङ्गदेवतात्वं पितॄणां प्रधानदेवतात्वं । तस्मात्प्रधानदेवतैक्येनैककार्यत्वं सिद्धम् । अस्तु नामैकत्वम् । तत्र निषेकादिकालेषु पारस्करवचनस्य विशेषपरत्वेन तदुक्तमेव कर्तव्यमिति चेन्न । 'यदल्पं वा स्वगृह्योक्तं यस्य कर्म प्रचोदितम् । तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्' इति परिभाषावचनात्सर्वत्र गृह्योक्तवृद्धिश्राद्धमेव कर्तव्यम् । तर्हि पारस्करवचनस्य का गतिरिति चेत्, येषां गृह्ये सर्वत्र वृद्धिश्राद्धोक्त्यभावस्तेषामिति मन्तव्यमिति ।

तथाभ्युदयश्राद्धप्रकारमाह कारिकाकारः—'प्राङ्मुखोऽत्रोपवीती स्यादुपचाराः प्रदक्षिणम् । तिलकार्यं यवैः कुर्याद्युग्मानत्र निमन्त्रयेत् । ऋजून्दर्भानमूलांस्तु दर्भेषामासनेषु तु । शास्रसंस्पेप्वप आसिच्य पूर्ववच्चानुमन्त्र्य तान् । पूर्ववत्पितृयज्ञवत् शंनोदेव्यृचा-नुमन्त्रणं कुर्यात् । तिलोऽसीति पदस्थाने यवोऽसीति पदं वदेत् । स्वधयेति पदस्थाने पुष्ट्याशब्दं वदेदिह । पितॄनिति पदात्पूर्वं वदेन्ना-न्दीमुखानिति । स्वधानमःपदस्थाने वदेत्स्वाहानमःपदम् । अथान्यत्तु यथापाठमुक्त्वार्घेप्वावपेद्यवान् । नान्दीमुखास्तु पितरः प्रीयन्तामिति मन्त्रतः । संबन्धनामरूपाणि वर्जयेदत्र कर्मणि । पित्रर्थमुपविष्टेभ्यः सकृदर्घ्यं निवेदयेत् । इममेव वदेन्मन्त्रं पितामह-पदान्वितम् । तदर्थमुपविष्टेभ्यः सकृदर्घ्यं निवेदयेत् । प्रपितामहसंयुक्तं मन्त्रमुक्त्वा तमेव तु । तदर्थमुपविष्टेभ्यस्तृतीयं सकृदेव तु । नान्दीमुखास्तु पितर इदं वो अर्घ्यमित्यथ । दत्वार्घ्यं सकृदेशात्स्यादर्घ्यदानं प्रतिद्विजम् । आवृत्तिरपि मन्त्रस्य प्रतिब्राह्मणमिष्यते ।

पाठा०—१ प्राङ्मुखोऽत्रोपवीतीति पाठ. । २ प्रयोजयेत् । ३ अत्र गन्धानुशातनं न कर्तव्यमित्याह कात्यायन. 'निधाती नहि गन्धस्य ज्ञातुनो विद्यते क्वचित्' इति कश्चिदभिप्राय ।

प्रतिद्विजं पृथक्कुर्यात्प्रवीत्यर्घ्यानुमन्त्रणम् । यवोसीत्युक्तमन्त्रः स्यादर्घ्य इत्यपरे विदुः । द्विर्द्विर्गन्धादि दातव्यं पाणिहोमो भवेदिह। अग्नये कव्यवाहेति मन्त्रेण प्रथमाहुतिः । सोमायेति द्वितीया स्यादथान्येषां च पाणिषु । आभ्यामेव तु मन्त्राभ्यां द्वेद्वे हुत्वाहुती इह । एकैकामाहुतिं केचिद्द्विगृह्यैव प्रजुह्वति । स्वधानमःपदस्थाने स्वाहाकारो भवेदिह । अथ तृप्तिपरिज्ञानपर्यन्तं पूर्ववद्भवेत् । मधुवाता ऋतां स्थाने उपास्मै गायता नरः । पञ्चर्चं श्रावयित्वाऽक्षन्नमीति श्रावयेदृचम् । संपन्नवचनादि स्यादाचान्तेषु द्विजन्मसु । द्विजेभु- क्ताश्रयं सम्यग्गोमयेनोपलेपयेत् । तत्र प्रागग्रकान्दर्भानास्तृणाति ततः परम् । पृषदाज्यं च कुर्वीत दध्यानयति सर्पिषि । पृष- दाज्येन संमिश्रं भुक्तशेषोद्धृतं भवेत् । एकैकस्योक्तमन्त्रेण द्वौ द्वौ पिण्डौ तु निर्वपेत् । अथानुमन्त्रणादि स्यात्तत्तु नेच्छन्ति केचन । अथ संपन्नवचनं विप्राणां तु विसर्जनम्' इति । इदमत्र गृह्यम्—'प्रदक्षिणमुपचारो यवैस्तिलार्थः' इति । अस्यार्थः—आभ्यु- दयिके युग्मा ब्राह्मणाः अमूलादर्भाः प्राङ्मुखो यज्ञोपवीती स्यात्प्रदक्षिणमुपचारो यवैस्तिलार्थः । गन्धादिदानं द्विर्द्विः । ऋजुदर्भो- नासनं दद्यात् । यवोसि सोमदेवत्यो० अत्र: पुष्पा नान्दीमुखान्पितॄनिमाँल्लोकान्प्रीणयाहिनः स्वाहेति यवावपनम् । नान्दीमुखाः पितरः इदं वोऽर्घ्यमित्यर्घ्यप्रदानमन्त्रो यथालिङ्गं । यथालिङ्गं पाणौ होमः । अग्नयेकव्यवाहनायस्वाहा । सोमायपितृमतेस्वाहेतिमन्त्रौ । मधुवाताऋतायत इति तृचस्थानेउपास्मै गायत इति पञ्च । मधुमतीः श्रावयेत् । अक्षन्नमीमदन्तेतिच पृष्ट्वा भुक्तानभ्यनुज्ञाप्य आचा- न्तेषु भुक्ताश्रयान्गोमयेनोपलिप्य प्राचीनाग्रान्दर्भान्संस्तीर्य तेषु पृषदाज्यमिश्रेण भुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यात्तेनैव मन्त्रेण

पाठा०—१ द्विजभुक्तिस्थलं सम्यक् इति ।

मन्त्रावृत्तिरुक्ता। अन्ये तु नान्दीमुखेभ्यः पितृभ्यः स्वाहेत्येवं यथालिङ्गं पिण्डान्निर्वृणन्ति। सर्पिंपि दध्यानयत्येतदेव पृपदाज्यम्। अनुमन्त्रणादि पूर्ववत्। अन्येत्वनुमन्त्रणादि नेच्छन्ति। ॐ स्वधोच्यतामित्यस्य स्थाने ॐ संपन्नमिति। शेषं पार्वणवदिति॥ ❀॥ अत्र गृह्यपरिशिष्टम्—'अथाभ्युदयिके नान्दीमुखाः पितर एकैकस्य युग्मा ब्राह्मणा अमूला दर्भाः प्रदक्षिणमुपचारो यवैस्तिलार्थः प्राङ्मुखो यज्ञोपवीती कुर्यादृजुदर्भासनं दक्षिणतो दद्यादर्घ्यपात्राणि प्राक्संस्थानि स्युः। यवोसि सोमदेवत्यो गोसवे देवनिर्मितः। प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान्पितॄनिमाँल्लोकान्प्रीणयाहि नः स्वाहेति यवावपनं नान्दीमुखाः पितरः इदं वो अर्घ्यमिति प्रत्येकं विसृज्य दत्त्वानुमन्त्रणं द्विर्द्विर्गन्धादि दद्यात् अग्नयेकव्यवाहनायस्वाहा सोमायपितृमतेस्वाहेति पाणिपूक्तवद्धोमस्तृप्तेषूपास्मै गायतानर इति पञ्च मधुमतीरक्षन्नमीमदन्तेति श्रावयेदनाचान्तेषु भुक्ताशयानुपलिप्य प्रागग्रान्दर्भानास्तीर्य तेषु पृपदाज्यमिश्रेण भुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यात्पूर्वेण मन्त्रेण नान्दीमुखेभ्यः पितृभ्यः स्वाहेति वा यथालिङ्गमन्यत् एके नानुमन्त्रणादीच्छन्ति नेह पिण्डा इत्यन्ये सर्पिंपि दध्यानयत्येवमेतत्पृपदाज्यमिश्रणमों संपन्नमिति विसृजेत्तदेतत्पुंसवनादिष्वपत्यसंस्कारेष्वग्न्याधेयादिषु श्रौतेषु च गृह्येषु च पूर्तेषु च क्रियते महत्सु पूर्वेद्युस्तदहरल्पेषु तदिदमेके मातृणां पृथक्कुर्वन्त्यथ पितृणां ततो मातामहानामिति त्रितयमिच्छन्ति तस्माज्जीवत्पितृकः सुतसंस्कारेषु मातृमातामहयोः कुर्याच्चस्यां च जीवत्यां मातामहस्य कुर्यादिति' इत्याश्वलायन-गृह्यपरिशिष्टे द्वितीयोऽध्यायः॥ ❀॥ तत्राचार्यः स्मृतिरूपेणाप्याह—'तत्कर्तुमिच्छन्पूर्वेद्युर्नान्दीश्राद्धं यथाविधि। कुर्वन्पा-

पाठा०—१ निर्वपन्ति।

वेणमार्गेण क्रियाः कुर्यात्प्रदक्षिणाः । द्वौ द्वौ निमन्त्र्य चैकैके संभोज्या ब्राह्मणाः शुभाः । प्राङ्मुखाश्चोपवेश्याः स्युर्विप्रा देवादिकास्ततः । क्रिया यज्ञोपवीती च कुर्याद्दाता तदीरिताः । द्वौद्वावेकैकशः पिण्डौ दद्यादष्टादशापि च' इति ॥ ❀ ॥ अत्र भगवान्—'शुचिर्भूलान्तिकं गत्वा पूर्वेद्युश्चाग्रजन्मनाम् । स्वयमेव द्विजाग्र्याणां तेषां कुर्यान्निमन्त्रणम् । निमन्त्रयेत पूर्वं द्वौ विश्वेदेवार्थमाहितः । पितृभ्यस्तु यथाशक्ति युग्मान्गुणवतो द्विजान् । अपरेद्युः समानीय ब्राह्मणांस्तान्निमन्त्रितान् । स्नानद्रव्यैः कृतस्नानानक्रोधान्वेदमूर्तिकान् । तैलैरभ्यक्तसर्वाङ्गान्कुर्याद्देवपुरःसरम् । ततः स्नात्वा समायातानुपवेश्य यथापुरम् । पादान्प्रक्षाल्य सर्वेषां प्राङ्मुखानुपवेश्य च । तेभ्योऽपि दद्यात्पूर्वमासनार्थमृजून्कुशान् । तेषु तेषूदगग्रेषु निषीदेयुरथो पुनः । तेषां हस्तेष्वपो दद्यादथार्घ्यमुपकल्पयेत् । देवेभ्योपि पृथग्दद्यादिहार्घ्यं स्मृतिचोदनात् । पुरो निधाय पात्रे द्वे विश्वेदेवार्थविप्रयोः । अन्तर्धाय ततो दर्भान्निषिच्य च जलं तयोः । यवोसीत्यादियुक्तेन मन्त्रेण प्रतिभाजनम् । यवान्विकीर्य विप्रेभ्यः स्वाहाशब्दैर्निवेदयेत् । विश्वेदेवा इदं वोऽर्घ्यमिति मन्त्रमुदीरयेत् । दत्त्वार्घ्यमाभ्यां पित्रर्थमथार्घ्यमुपकल्पयेत् । त्रिषु पित्रादिपात्रेषु कुशानन्तर्निधाय च । क्रमेणैव तु पात्रेषु निषिच्यापोऽथ ता अपः । मन्त्रेण शंनोदेवीरित्याद्यर्चाचानुमन्त्र्य च । यवोसीत्यादियुक्तेन मन्त्रेण प्रतिभाजनम् । यवान्क्षिप्त्वाथ पित्रर्थद्विजन्मभ्यो निवेदयेत् । अपः प्रथमपात्रस्थाः स्वाहार्घ्या इति मन्त्रतः । तेषामाद्यस्य विप्रस्य हस्तेऽन्यज्जलमाहितः । सिक्त्वार्घ्यं समादाय जलं दक्षिणपाणिना । द्वितीयपात्रतः किंचिज्जलमादाय पूर्ववत् । तत्रेदं तेऽर्घ्यमित्येष पितृनामपदादिकम् । मन्त्रो

पाठा०—१ यथासुखम् । २ क्रमशोऽथ ततस्तेषु । ३ स्वाहार्घ्यमिति ।

विभज्यतेऽन्नान्यत्तत्रं पूर्ववदाचरेत् । एवं पित्रर्थविप्रेभ्यः प्रदायार्घ्यं यथाविधि । पितामहार्थविप्रेभ्यो दत्त्वार्घ्यं च यथापुरा । प्रपितामहशब्दादिमिदं तेऽर्घ्यमितीरयेत् । मन्त्रमत्र यथापूर्वं तन्त्रमन्यत्समाचरेत् । पित्रादित्रितयस्यार्थे यथावत्तरुणौ द्विजौ । द्वौ वृणीत तदा तत्र तयोरेवार्घ्यकल्पनम् । भोजनं चेति विद्वांसो वदन्ति बहुवेदिनः । आसिञ्चेत्प्रथमे पात्रे जलमुत्तरयोर्द्वयोः । तामिर्मुखं सम्मृज्जीत पुत्रं यद्यभिवाञ्छति । पात्रं तच्च तृतीयेन पात्रेणैव पिधाय तु । यथावस्थितमाश्राद्धसमाप्तेस्तत्तु नोद्धरेत् । अत्र गाथाद्वयं गीतमाचार्येणापि तद्यथा । नोद्धरेत्प्रथमं पात्रं पितृणामर्घ्यपातितम् । आवृतास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत् । उद्धरेद्यदि चेत्पात्रं विवृतं वा यदा भवेत् । तदाऽऽसुरं भवेच्छ्राद्धं क्रुद्धैः पितृगणैर्गतैः । एतस्मिन्नेव काले तु गन्धमाल्यादिभिर्द्विजान् । अभ्यर्च्य सर्वं श्राद्धाङ्गं वसनाभरणादिकम् । तेभ्यः प्रदद्यात्सश्रद्धो विश्वेदेवपुरःसरम् । भोजनार्थमथानीतादादायादाय किंचन । सर्पिषाऽक्तमवदायाथ मेक्षणेन यथाविधि । यथाविधीति अवदानधर्मेणेत्यर्थः । तदंशीकृत्य मन्त्राभ्यां जुहुयाद्द्विजपाणिषु । अत्र स्वधानमःशब्दस्थाने स्वाहेत्युदीरयेत् । हुत्वा सोमाय पितृमते (?) कव्यवाहनायेति मन्त्रतः । सोमायेत्यादिना पश्चान्मन्त्रेण जुहुयादिह । तत्र भुक्तवतो विप्रान्यथेष्टं भोजयेत्ततः । तृप्तानथ द्विजाञ्ज्ञात्वा मधुवाता ऋतायते । इत्यादिकं तृचमथो उपास्मै गायता नरः । पश्चर्चमक्षन्नित्याद्यामेकां चर्चं यथाक्रमम् । श्रावयित्वापि संपन्नमिति पृच्छेद्द्विजानथ । तेऽपि संपन्नमेवेति ब्रूयुस्तृप्तिसमन्विताः । अन्नशेषेण किं कार्यमिति पृच्छेद्द्विजांस्ततः । त इष्टैः सह भोक्तव्यमिति प्रत्युक्तिपूर्वकम् । प्रदद्युः सकलं तस्मै स्वीकरोति यथा-

पाठा०—१ यथाभरणादिकं । २ यदा तदुद्धृत पात्रं । ३ असौम्य तद्भवेच्छ्राद्ध । ४ स श्राद्ध विश्वेदेवपुर सरम् ।

विधि । नोद्वासयेच्च विप्राणामुच्छिष्टान्यादिनक्षयात् । प्रकीर्यान्नं च तेष्वग्रे विप्रानाचमयेत्ततः । आचम्यासनसंस्थेभ्यः प्रदद्याद्भुक्तिदक्षिणाम् । सर्वांश्चाभ्यर्च्य गन्धाद्यैः पितृपूर्वं विसर्जयेत् । तेषां विसर्जनारम्भे पात्रं विधूर्णयात्पितुः । ब्राह्मणांस्तांस्तु पिण्डान्ते गमयेदोंस्वधोच्यताम् । इत्युच्चार्य ततस्ते तु स्वधेत्युक्त्वा गृहाद्बहिः । गच्छेयुरथ वा तांस्तु प्रत्युच्चार्य स्वधोच्यताम् । इत्येवं गमयेत्तेपि तथैवोक्त्वा व्रजन्त्यथ । विश्वेदेवा इति वचः पूर्वमुक्त्वा ततः परम् । प्रीयन्तामिति निर्दिश्य विश्वेदेवान्समुत्सृजेत् । नान्दीपितरः प्रथमं प्रीयन्तामिति पश्चिमम् । विश्वेदेवा इत्युदीर्य निर्गच्छेयुर्गृहाद्बहिः । एवमिच्छन्ति पूर्वेद्युः पूर्तेपूद्यकर्मसु । नान्दीश्राद्धाभिधानं तु नित्यं श्रुतिनिबन्धनम् ।' इति ॥

अत्र सांकल्पविषये विशेषो दर्शितः संग्रहे—'शुभार्थी प्रथमान्तेन वृद्धौ संकल्पमाचरेत् । न षष्ठ्या, यदि वा कुर्यान्महादोषोऽभिजायते । अनसद्द्वद्वशब्दानामरूपाणामगोत्रिणाम् । अनाम्नां चातिलाद्यैश्च नान्दीश्राद्धं च सव्यवत्' इति । अत्र सव्यजानुनिपातनं पित्र्येषु न कर्तव्यमित्याह कात्यायनः—'निपातो नहि सव्यस्य जानुनो विद्यते क्वचित्' इति । परिवेषणादौ विशेषो भविष्यपुराणे दर्शितः—'मधुरं भोजनं दद्यान्न चान्नं परिवेषयेत् । रक्तपुष्पं तिलाश्चैव अपसव्यं च वर्जयेत्' इति । सूक्तजपविषये विशेषः स्मृत्यर्थसारे दर्शितः—'राक्षोघ्नानैन्द्रान्मैत्रांश्च श्रावयेत्' इति । भोजनस्थाननिमार्जनविषये चन्द्रिकायां प्रचेताः—'न जपेत्पैतृकं जाप्यं न मांसं तत्र दापयेत् । प्राङ्मुखो देवतीर्थेन भुक्तदेशनिमार्जनम्' इति । पिण्डदाने

पाठा०—१ विधूणुयाद्विज । २ नान्दीमुखाश्च प्रथमम् । ३ मन्त्रानाश्रावयेत् । ४ क्षिप्रदेश ।

विशेषमाह वसिष्ठः—'तृप्तिप्रश्ने तु संपन्नं दैवे रुचितमित्यपि। दधिकर्कन्धुसंमिश्राः पिण्डाः कार्या यथाक्रमम्। कर्कन्धूर्बदरीफलम्। प्राङ्मुखो देवतीर्थेन प्राक्कूलेषु कुशेषु च। दद्यात्पिण्डान्न कुर्वीत पिण्डपात्रमधोमुखम्' इति। प्राक्कूलेषु प्रागग्रेषु। पिण्डदानमुच्छिष्टसमीपे भोजनशालाया बहिः कार्यमित्याह वृद्धशातातपः—'प्रदद्यात्प्राङ्मुखः पिण्डं वृद्धौ नाम्ना स वाह्यतः' इति। चतुर्विंशतिमते तु—'एकं नाम्ना परं तूष्णीं दद्यात्पिण्डं पृथक्पृथक्' इति। अत्र प्रथमं नामगोत्रसहितं दद्यात्। द्वितीयं तूष्णीं दद्यादित्यर्थः। अत्र वरयाचने मन्त्रविशेषश्चोक्तश्चन्द्रिकायाम्—'माता पितामही चैव तथैव प्रपितामही। पिता पितामहश्चैव तथैव प्रपितामहः। मातामहस्तत्पिता च प्रमातामहकादयः। एते भवन्तु मे प्रीताः प्रयच्छन्तु च मङ्गलम्' इति। 'अत्र पिण्डनिर्वापः पाक्षिकः' इति गृह्यपरिशिष्टेऽभिहितं, नेह पिण्ड इत्यन्ये' इति। भविष्यपुराणेपि—'पिण्डनिर्वापणं कुर्यान्न वा कुर्यान्नराधिप। वृद्धिश्राद्धे महाबाहो कुलधर्मानपेक्ष्य तु' इति। इत्थं पक्षद्वयं प्रदर्शितम्॥

सांकल्पिकश्राद्धनिर्णयः। विस्तृतः पार्वणविधिरुक्तः। यथाकथंचित्पार्वणरूपसंकल्पश्राद्धविधिस्तु चन्द्रिकाकारोक्तप्रकारेण लिख्यते। तत्र व्यासः—'संकल्पं तु यदा कुर्यान्न कुर्यात्पात्रपूरणम्। नावाहनाग्नौकरणं पिण्डांश्चैव न निर्वपेत्' इति। पात्रपूरणं अर्घ्यदानम्। आवाहनस्य समन्त्रकस्य निषेधो नत्वावाहनस्वरूपस्य। तदभावे देवतासांनिध्याभावप्रसङ्गात्। तत्रावाहनमन्त्रमनुक्त्वैव सत्यवसुसंज्ञकान्विश्वान्देवानावाहयामीत्येतावदुक्त्वा देवावाहनं कार्यम्। पित्राद्यावाहनमप्येवमेव। पिण्डांश्चैवेत्यत्र चशब्देनोच्छिष्टपिण्डस्यापि निषेधः। अतएव स्मृत्यन्तरम्—'संकल्पं तु यदा कुर्यान्न कुर्यात्पात्रपूरणम्। विकिरश्च न दातव्यः

पिण्डांश्चैव न निर्वपेत्' इति । स्मृत्यन्तरेपि—'अङ्गानि पितृयज्ञस्य यदा कर्तुं न शक्नुयात् । स तदा वाचयेद्विप्रान्सकलान्सिद्धिरस्त्विति' । एवमनुष्ठाने शास्त्रासंभवे सति मुख्यकल्पानुष्ठानफलं भवति । तथाच स्मृत्यन्तरम्—'श्राद्धानुकल्पं यः कुर्याज्जात्यवस्थाद्यपेक्षया । श्राद्धांशेनाप्यवाप्नोति मुख्यश्राद्धफलं,नरः' इति । इति सांकल्पिकश्राद्धनिर्णयः ॥

अथ जीवत्पितृकविषयम्—अथात्राभ्युदयिके कर्मणि जीवत्पितृकविषये निर्णय उच्यते । सायणीये—'नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे पुनः । अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम्' । चन्द्रिकायां कात्यायनः—'स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु । पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात्' इति । अस्यार्थः—सुतसंस्कारकर्मसु जातकर्मादिषु तेषां सुतानामोद्वाहनाद्विवाहपर्यन्तं पिता स्वपितृभ्यः पिण्डान्दद्याद्वृद्धिश्राद्धं कुर्यात् । तस्याभावे पितुरभावे तु तेषां संस्कार्याणां जातकर्मादिषु संस्कारकर्मसु 'असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतै'रित्यादिवचनाद्यो गम्यमानः कर्तृक्रमस्तेन क्रमेण ज्येष्ठभ्रात्रादिः स्वपितृभ्यो दद्यादिति । समावर्तनस्यापि विवाहात्प्राचीनसुतसंस्कारत्वाज्जीवत्पितृकसमावर्तने पिता स्वपितृभ्यो दद्यात् । अजीवत्पितृकस्तु पूर्वसंस्कृतभ्रात्रसंभवे स्वयमेव स्वपितृभ्यो दद्यात् । उपनयनेन कर्माधिकारस्य जातत्वात् । विवाहेऽप्येवमेव द्रष्टव्यमिति । तस्याभावे तु तत्क्रमादित्यंशस्य हेमाद्रिकृतव्याख्या लिख्यते—पित्रभावे अन्यो यः कश्चित्संस्कारं कुर्यात्स तत्क्रमात् तं पितरमारभ्य यः संस्कार्यस्य पितॄणां क्रमः तेन क्रमेण दद्यात् नतु स्वकीयेभ्यः पितृभ्य इत्यर्थं स्थापयित्वा निगमनवाक्येन सिद्धान्तः प्रदर्शितः । तस्मात्पितृव्याचार्यमातुलादयः संस्कार्यस्योपनेयादेरेव पितृभ्यः श्राद्धं दद्युर्न स्वपितृभ्य इत्यत्र पारमार्थिकः पक्षो

विपर्ययत-इति । अत्र संस्कर्तो जीवत्पितृकश्चेत्तदा विशेष उक्तो गृह्यपरिशिष्टे—'जीवत्पितृकः सुतसंस्कारेषु मातृमातामहयोः कुर्यात्तस्यां च जीवत्यां मातामहस्यैव कुर्या'दिति । तथात्र कात्यायनः—'सपितुः पितृकृत्येषु अधिकारो न विद्यते । न जीवन्तमतिक्रम्य किंचिद्दद्यादिति श्रुतिः' इति । पितृकृत्येषु श्राद्धेषु पितामहादिसंबन्धेष्वित्यर्थः । अत्र केषुचिदपवादो मैत्रायणीयपरिशिष्टे दर्शितः—'उद्वाहे पुत्रजनने पुत्रेष्ट्यां सौमिके मखे । तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः' इति । पुत्रस्य षडेते श्राद्धकाला इत्यर्थः । पुत्रेष्ट्यां चातुर्मास्येषु । सौमिके मखे सोमादौ पुरोडाशात् पिण्डदाने च । एतत्साग्निकाभिप्रायम् । अतएव सुमन्तुः—'न जीवतः पितुः कुर्याच्छ्राद्धमग्निमृते द्विजः । येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः' । इति 'पितामहेष्येवमेव कुर्याज्जीवति साग्निकः । साग्निकोऽपि न कुर्वीत जीवति प्रपितामहे' इति । प्रपितामहग्रहणं पितृपितामहोपेतप्रपितामहदर्शनार्थम् । अतएव विष्णुः—'पितरि पितामहे प्रपितामहे च जीवति नैव दद्यादि'ति । पितरि पितामहे च जीवति कथं कार्यमित्यपेक्षिते स एवाह—'पितरि जीवति यः श्राद्धं कुर्यात्स येषां पिता कुर्यात्तेषां कुर्यात् । पितरि पितामहे च येषां पितामह इति' । इति जीवत्पितृकश्राद्धाधिकारनिर्णयः । एतद्वृद्धिश्राद्धाकरणे प्रत्यवायमाह वृद्धशातातपः—'वृद्धौ न तर्पिता येन पित्रर्थे गृहमेधिना । तद्दानमफलं सर्वमासुरो विधिरेव सः' इति ॥

अथ प्रयोगः—अथात्र प्रचुराचारपरिग्राह्यतया गृह्यपरिशिष्टभविष्योत्तरपुराणोक्तपक्षेण संकल्पविधिना प्रयोगः प्रदर्श्यते ।

पाठा०—१ पिता कुर्यात्तेभ्यः । २ कुर्यादिति । ३ येऽभवन्ति गृहमेधिभिः । ४ सर्वं विधुरो विधिरेव सः । ५ विधानप्रयोगः ।

उपनयनादिषु महत्सु कर्मसु पूर्वेद्युरेव । जातकर्माद्यल्पकर्मसु तदहरेव नान्दीश्राद्धं कुर्यात् । तत्रायं क्रमः ( कर्ता कृतस्नानो धौतवासाः कृतस्वस्त्ययनो नान्दीश्राद्धस्य पूर्वाङ्गभूतमातृकापूजां कुर्यात् )। शुद्धस्थलं गोमयेनोपलिप्य रङ्गवल्ल्यादिभिरलंकृत्य स्थण्डिले प्रतिमासु द्विजातिषु वा यथाचारमर्चयेत् । ( ब्राह्म्यादिमातृकाप्रीत्यर्थं नान्दीश्राद्धाङ्गभूतां मातृकापूजां करिष्ये इति संकल्प्य ) प्रतिमाः कारयित्वा तत्र तण्डुलेषु वा ब्राह्मीं माहेश्वरीं कौमारीं वैष्णवीं वाराहीं माहेन्द्रीं चामुण्डां दुर्गां गणाधिपतिं क्षेत्रपालं च यथाशक्त्युपचारैरभ्यर्च्य आयुष्यसूक्तं आनोभद्रा इत्याद्याशीःसूक्तानि च पठित्वा नान्दीश्राद्धस्य संकल्पं कुर्यात् । तत्र तिथ्यादिकं संकीर्त्योपवीती मातृपितामहीप्रपितामह्यः नान्दीमुख्यः । पितृपितामहप्रपितामहाः नान्दीमुखाः । मातामहमातुःपितामहमातुःप्रपितामहाः पत्नीसहिताः नान्दीमुखाः । सत्यवसुसंज्ञका विश्वेदेवाश्च एतानुद्दिश्य संकल्पविधानेन नान्दीश्राद्धं करिष्य इत्युक्त्वा लक्षणलक्षितान्ब्राह्मणान्विषमसंख्याकानष्टसंख्याकान्वा पूर्वेद्युः सद्य एव वा देवपूर्वकं निमन्त्र्य कृताभ्यङ्गादिस्नानान्तान्पूर्वाह्णे परिचारकैराकार्य संयुग्मोक्त्वा तेषां पादान्प्रक्षाल्य प्राङ्मुखानुपवेश्य षष्ठीविभक्त्योक्त्वा ऋजूनि दर्भयुग्मान्यासने प्रदाय अपः प्रदाय क्षणं दत्त्वा द्वितीयाविभक्त्योच्चार्य तेषु युग्मेषु अमन्त्रकमावाह्य गन्धाक्षतशुक्लमाल्यधूपदीपाच्छादनाभरणानि प्रथमान्तमुच्चार्य द्विर्द्विर्दत्त्वा मधुरद्रव्यसहितमम्लरहितमन्नं परिवेष्य पृथिवी ते पात्रमित्यादिकमुच्चार्य चतुर्थीविभक्त्योक्त्वा स्वाहा हव्यं नममेति सर्वत्र त्यक्त्वा तृप्तेषु तेषु उपास्मैगायतानर इति पञ्चर्चस्य सूक्तस्य कश्यपोऽसितः पवमान सोमो गायत्री ।

पाठा०—१ जिह्वितोयंभागोनकचित्कोशेषु । २ वृद्ध्यादौ पूजयित्वा पश्चान्नान्दीमुखान्पितॄनित्येतेन वाक्येन नान्दीश्राद्धात्प्राक् मातृकापूजनमुक्तं तेनाङ्गत्वेन संकल्प । नाङ्गत्वमिति केचित्तच्चिन्त्यम् । ३ वसिष्ठः सितः ।

उपास्मै गायता नरः पवमानायेन्दवे । अभिदेवाइयक्षते ॥ अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः । देवं देवाय देवयु ॥ स नः पवस्व शं गवे शं जनाय शमर्वते । शं राजन्नोषधीभ्यः ॥ बभ्रवे नु स्वतवसेऽरुणाय दिविस्पृशे । सोमाय गाथमर्चत ॥ हस्तच्युतेभिरद्रिभिः सुतं सोमं पुनीतन । मधावाधावता मधु ॥ इति । एतान्श्रावयित्वा तैरुत्तरापोशनादौ कृते हस्तशुद्ध्यादिकं कृत्वा । माता पितामही चैव तथैव प्रपितामही । (एता भवन्तु मे प्रीताः प्रयच्छन्तु च मङ्गलम्) । पिता पितामहश्चैव तथैव प्रपितामहः । मातामहस्तत्पिता च प्रमातामहकादयः । एते भवन्तु सुप्रीताः प्रयच्छन्तु च मङ्गलम् । इत्युक्त्वा कृताञ्जलिः संप्रार्थ्य प्रणिपत्य ब्राह्मणान्विसृज्याचामेत् ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशसंस्कारकर्मकाण्डे आभ्युदयिकप्रकरणम् ॥

अथ कौतुकबन्धनविधिः । शुल्लन्तकान्तारनरं मयूरं पुराणवेद्यं पुरुहूतवन्द्यम् । नत्वा नृसिंहं जगदीशमेनं निगद्यते कौतुकबन्ध एषः ॥ अथ कौतुकबन्धविधिरभिधीयते । तत्र भगवान्—'अथ कौतुकबन्धस्य प्रयोगोऽत्र निगद्यते । विवाहादौ शुभे कार्ये रात्र्यां यादि कृते तथा । साङ्कुरे पालिकायुक्ते स्थले दुन्दुभिपूरिते । सहाक्षतेन कांस्येन सोदकुम्भं निधाय च । कार्पासोद्भवसूत्रं तु त्रिगुणीकृत्य पञ्च वा । निधाय तण्डुलान्पात्रे कूर्चे कुम्भं निधाय च । कुशैः कुम्भोदकैर्मन्त्रैः प्रोक्ष्य विप्रे सुखासने । ॐ भूर्भुवःस्वःसावित्र्या ऋग्भिर्वेदादिभिस्तथा । आपोहिष्ठादिकाभिर्लिङ्गैः शुद्धिमत्यघमर्षणैः । भद्रावत्यः स्वस्तिमत्यः पावमान्यस्तथैव च । रक्षोहणं च रात्री च कृणुष्वेति तथैव च । तरत्समन्दी पुरुषं विष्णुसूक्तं तथैवच । अतोदेवा अवन्त्विति परोमात्र

पाठा०—१ सुप्रीताः इदं पद्यार्धमेकस्मिन्नधिकं दृष्टम् । २ स्थण्डिले कुम्भपूरिते ।

तथैव च। श्रीसूक्तं शिवसंकल्पं वायुसूक्तं तथैव च। मुञ्चामि त्वेति सूक्तं च स्योनापृथिविभवेति च। द्रविणोदाः सवितेति नवो विद्युन्नयेति च। उल्कया पिशङ्गेति ऋग्भिरेताभिरन्वितैः। जातवेदस इत्यृचा सूत्रमादाय लेपयेत्। गन्धेन दक्षिणे हस्ते बध्वा पुंसस्तु तन्तुना। विश्वेत्तातेसवनेति स्त्रीणां सव्ये करे तथा। श्रियेजात ऋचैकयाप्यध्वर्युश्च समाहितः। शतंजीवेति द्वाभ्यां च बृहत्सामेत्यृचैकया। येयज्ञेनेति चाष्टाभिस्त्रियम्बकमृचैकया। भस्मना वाक्षतैर्वापि रक्षां कृत्वा समापयेत्। दद्यादाचार्याय हेम ऋत्विग्भ्यः पूज्य शक्तितः। इरिते प्रस्तुते नित्यं कर्म पूर्वापरेपि वा। विद्वान्सर्वप्रयत्नेन कुर्यात्कौतुकबन्धनम्' इति ॥

अथ प्रयोगः। विवाहादिशुभकर्मणि पूर्वदिने रात्रौ साङ्कुरे पालिकायुक्ते स्थले मङ्गलतूर्यनादे कृते कौतुकबन्धनं कुर्यात्। तत्रायं क्रमः—आचार्यस्तिथ्यादिकं संकीर्त्य अमुककर्मकर्तुमादौ श्रीपरमेश्वरप्रीत्यर्थं कौतुकबन्धनं करिष्यामीति संकल्प्य नवसप्तपञ्चसन्यतमसंख्याकाः कुशशलाका गृहीत्वा चतुरङ्गुलाग्रं द्व्यङ्गुलग्रन्थि षोडशाङ्गुलमूलं यथा भवति तथा पवित्रवद्बद्ध्वैवं कृतं कूर्चं प्रागग्रं निधाय तत्र कुम्भं संस्थाप्य साक्षतकांस्यपात्रे पञ्चगुणीकृतं कार्पाससूत्रं निधाय तत्समीपे यजमानमुपवेश्य कुशहस्तैर्ऋत्विग्भिः सह कुम्भोदकेन तत्सूत्रं समन्त्रकमभिषिञ्चेत्। तत्र मन्त्राः—तत्सवितुरित्यस्य विश्वामित्रः सविता गायत्री। तत्सवितुर्वरेण्यं०। अग्निमीळेमधुच्छन्दाअग्निर्गायत्री। अग्निमीं०। इषेत्वोर्जेत्वा। अग्न आयाहि वीतये। शंनो देवीरभिष्टये। आपोहिष्ठेति-त्र्यृचस्य सूक्तस्याम्बरीषः सिन्धुद्वीप आपो गायत्री पञ्चमी वर्धमाना सप्तमी प्रतिष्ठान्त्ये द्वे अनुष्टुभौ। आपोहिष्ठा० ९। एतोन्विन्द्र-

पाठा०—१ दद्यादाचार्यहेमादि इदमर्धं क्वचित्पुस्तकेस्ति।

मिति तृचस्यविश्वमनाइन्द्रउष्णिक् । एतोन्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना । शुद्धैरुक्थैर्वावृध्वांसं शुद्ध आशीर्वान्ममत्तु ॥ ऋतं चेतितृचस्याघमर्षणो भाववृत्तोनुष्टुप् । ऋतंचसत्यं ० ३ प्रशर्धायेतिपञ्चदशर्चस्य सूक्तस्य श्यावाश्वो मरुतो जगती अंत्या त्रिष्टुप् । प्रशर्धाय मारुताय स्वभानव इमां वाचमनजा पर्वतच्युते । घर्मस्तुभे दिव आपृष्ठ यज्वने द्युम्नश्रवसे महि नृम्णमर्चत ॥ प्रवो मरुतस्तविषा उदन्यवो वयोवृधो अश्वयुजः परिज्रयः । संविद्युता दधति वाशति त्रितः स्वरन्त्यापो वना परिज्रयः ॥ विद्युन्महसो नरो अश्मदिद्यवो वातत्विषो मरुतः पर्वतच्युतः । अब्दया चिन्मुहुरा ह्रादुनीवृतस्तनयदमा रभसा उदोजसः ॥ व्यक्तून्रुद्रा व्यहानि शिक्वसो व्यन्तरिक्षं विरजांसि धूतयः । वि यदज्राँ अजथ नाव ईं यथा वि दुर्गाणि मरुतो नाह रिष्यथ ॥ तद्वीर्यं वो मरुतो महित्वनं दीर्घं ततान सूर्यो न योजनम् । एता न यामे अगृभीत शोचिषोऽनश्वदां यन्न्ययातना गिरिम् ॥ १ ॥ अभ्राजि शर्धो मरुतो यदर्णसं मोषथा वृक्षं कपनेव वेधसः । अध स्मा नो अरमतिं सजोषसश्चक्षुरिव यन्तमनु नेषथा सुगम् ॥ न स जीयते मरुतो न हन्यते न स्रेधति न व्यथते न रिष्यति । नास्य राय उप दस्यन्ति नोतय ऋषिं वा यं राजानं वा सुषूदथ ॥ नियुत्वन्तो ग्रामजितो यथा नरोऽर्यमणो न मरुतः कबन्धिनः । पिन्वन्त्युत्सं यदिनासो अस्वरन्व्युन्दन्ति पृथिवीं मध्वो अन्धसा ॥ प्रवत्वतीयं पृथिवी मरुद्भ्यः प्रवत्वती द्यौर्भवति प्रयद्भ्यः । प्रवत्वतीः पथ्या अन्तरिक्ष्याः प्रवत्वन्तः पर्वता जीरदानवः ॥ यन्मरुतः सभरसः स्वर्णरः सूर्य उदिते मदथा दिवो नरः । न वोऽश्वाः श्रथयन्ताह सिस्रतः सद्यो अस्याध्वनः पारमश्नुथ ॥ २ ॥ अंसेषु व ऋष्टयः पत्सु खादयो वक्षःसु रुक्मा मरुतो रथे शुभः । अग्निभ्राजसो विद्युतो गभस्त्योः शिप्राः शीर्षसु वितता हिरण्ययीः ॥ तं नाकमर्यो अगृभीत शोचिषं

स्वातिपर्पलं मरुतो विधूनुथ । समच्यन्त वृजना तित्विपन्त यत्स्वरन्ति घोषं विततमृतायवः ॥ युष्मादत्तस्य मरुतो विचेतसो रायः स्याम रथ्योइ वयस्वतः । न योयुच्छति तिष्योइ यथा दिवोइ स्मे रारन्त मरुतः सहस्रिणम् ॥ यूयं रयिं मरुतः स्पार्हवीरं यूय मृषि मवथ सामविप्रम् । यूयमर्वन्तं भरताय वाजं यूयं धत्थ राजानं श्रुष्टिमन्तम् ॥ तद्वो यामि द्रविणं सद्य ऊतयो येना स्व१र्ण ततनाम नॄँरभि । इदं सु मे मरुतो हर्यता वचो यस्य तरेम तरसा शतं हिमाः ॥३॥ स्वस्तिन इत्यस्य स्वस्त्यात्रेयो विश्वेदेवास्त्रिष्टुप् । स्वस्ति न इन्द्रो० । स्वादिष्ठयेति दशर्चस्य सूक्तस्य मधुच्छन्दाः पवमानः सोमो गायत्री । स्वादिष्ठया० १० । रक्षोहणमिति पञ्चविंशर्चस्य सूक्तस्य भरद्वाजः पायू रक्षोहाग्निस्त्रिष्टुप् अन्त्याश्चतस्रोनुष्टुभः । रक्षोहणं वाजिनमाजिघर्मि मित्रं प्रथिष्ठमुपयामि शर्म । शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा स रिषः पातु नक्तम् ॥ अयोदंष्ट्रो अर्चिषा यातुधानानुपस्पृश जातवेदः समिद्धः । आजिह्वया मूरदेवान्रभस्व क्रव्यादो वृक्त्व्यपिधत्स्वासन् ॥ उभोभयाविन्नुप धेहि दंष्ट्रा हिंस्रः शिशानोऽवरं परं च । उतान्तरिक्षे परि याहि राजन्जम्भैः संधेह्यभि यातुधानान् ॥ यज्ञैरिषूः संनममानो अग्ने वाचा शल्यॉ अशनिभिर्दिहानः । ताभिर्विध्य हृदये यातुधानान्प्रतीचो बाहून्प्रति भङ्ग्ध्येषाम् ॥ अग्ने त्वचं यातुधानस्य भिन्धि हिंस्राशनिर्हरसा हन्त्वेनम् । प्रपर्वाणि जातवेदः शृणीहि क्रव्यात्क्रविष्णुर्वि चिनोतु वृक्णम् ॥ १ ॥ यत्रेदानीं पश्यसि जातवेदस्तिष्ठन्तमग्न उत वा चरन्तम् । यद्वान्तरिक्षे पथिभिः पतन्तं तमस्ता विध्य शर्वा शिशानः । उतालब्धं स्पृणुहि जातवेद आलेभानादृष्टिभिर्यातुधानात् । अग्ने पूर्वो निजहि शोशुचान आमादः क्ष्विङ्कास्तमदन्त्वेनीः ॥ इह प्रब्रूहि यतमः सो अग्ने यो यातुधानो य इदं कृणोति । तमारभस्व समिधा यविष्ठ नृचक्षसश्चक्षुषे रन्धये-

नम् ॥ तीक्ष्णेनाग्ने चक्षुषा रक्ष यज्ञं प्राञ्चं वसुभ्यः प्रणय प्रचेतः । हिंस्रं रक्षांस्यभिशोशुचानं मा त्वा दभन्यातुधाना नृचक्षः ॥
नृचक्षा रक्षः परिपश्य विक्षु तस्य त्रीणि प्रतिशृणीह्यग्रा । तस्याग्ने पृष्टीर्हरसा शृणीहि त्रेधा मूलं यातुधानस्य वृश्च ॥ २ ॥ निर्या-
तुधानः प्रसिति त एत्वृतं यो अग्ने अनृतेन हन्ति । तमर्चिषा स्फूर्जयन्जातवेदः समक्षमेनं गृणते निवृङ्ग्धि ॥ तदग्ने चक्षुः प्रति-
धेहि रेभे शफारुजं येन पश्यसि यातुधानम् । अथर्ववज्ज्योतिषा दैव्येन सत्यं धूर्वन्तमचितं न्योष ॥ यदग्ने अद्य मिथुना शपातो
यद्वाचस्तृष्टं जनयन्त रेभाः । मन्योर्मनसः शरव्या३ जायते या तया विध्य हृदये यातुधानान् ॥ पराशृणीहि तपसा यातुधानान्प-
राग्ने रक्षो हरसा शृणीहि । परार्चिषा मूरदेवाञ्छृणीहि परासुतृपो अभिशोशुचानः ॥ पराद्य देवा वृजिनं शृणन्तु प्रत्यगेनं शपथा
यन्तु तृष्टाः । वाचा स्तेनं शरव ऋच्छन्तु मर्मन्विश्वस्यैतु प्रसितिं यातुधानः ॥ ३ ॥ यः पौरुषेयेण क्रविषा समङ्क्ते यो अश्व्येन
पशुना यातुधानः । यो अघ्न्याया भरति क्षीरमग्ने तेषां शीर्षाणि हरसापि वृश्च ॥ संवत्सरीणं पय उस्रियायास्तस्य माशीद्यातुधानो
नृचक्षः । पीयूषमग्ने यतमस्तितृप्सात्तं प्रत्यञ्चमर्चिषा विध्य मर्मन् ॥ विषं गवां यातुधानाः पिबन्त्वावृश्च्यन्तामदितये दुरेवाः ।
परैनान्देवः सविता ददातु परा भागमोषधीनां जयन्ताम् ॥ सनादग्ने मृणसि यातुधानान्न त्वा रक्षांसि पृतनासु जिग्युः । अनु
दह सह मूरान्क्रव्यादो मा ते हेत्या मुक्षत दैव्यायाः ॥ त्वं नो अग्ने अधरादुदक्तात्त्वं पश्चादुत रक्षा पुरस्तात् । प्रति ते ते अजरा-
सस्तपिष्ठा अघशंसं शोशुचतो दहन्तु ॥ ४ ॥ पश्चात्पुरस्तादधरादुदक्तात्कविः काव्येन परि पाहि राजन् । सखे सखायमजरो ज-
रिम्णेऽग्ने मर्तां अमर्त्यस्त्वं नः ॥ परि त्वाग्ने पुरं वयं विप्रं सहस्य धीमहि । धृषद्वर्णं दिवेदिवे हन्तारं भङ्गुरावताम् ॥ विषेण भङ्गु-

रावतः प्रतिस्म रक्षसो दह । अग्ने तिग्मेन शोचिषा तपुरग्राभिर्ऋष्टिभिः ॥ प्रत्यग्ने मिथुना दह यातुधाना किमीदिना । सं त्वा
शिशामि जागृह्यदब्धं विप्र मन्मभिः ॥ प्रत्यग्ने हरसा हरः शृणीहि विश्वतः प्रति । यातुधानस्य रक्षसो बलं विरुज वीर्यम् ॥५॥
रात्रीत्यष्टर्चस्य सौभरिः कुशिकोऽत्रिर्वा भरद्वाजी रात्रिस्तवो गायत्री । रात्री व्यख्यदायती पुरुत्रा देव्य१क्षभिः । विश्वा
अधि श्रियोऽधित ॥ ओर्वप्रा अमर्त्या निवतो देव्यू१द्वतः । ज्योतिषा बाधते तमः ॥ निरु स्वसारमस्कृतोषसं देव्यायती ।
अपेदु हासते तमः ॥ सा नो अद्य यस्या वयं नि ते यामन्नविक्ष्महि । वृक्षे न वसतिं वयः ॥ नि ग्रामासो अविक्षत नि पद्वन्तो
नि पक्षिणः । नि श्येनासश्चिदर्थिनः ॥ यावया वृक्यं१ वृकं यवय स्तेनमूर्म्ये । अथा नः सुतरा भव ॥ उप मा पेपिशत्तमः कृष्णं व्य
क्तमस्थित । उष ऋणेव यातय ॥ उप ते गा इवाकरं वृणीष्व दुहितर्दिवः । रात्रि स्तोमं न जिग्युषे ॥ १ ॥ कृणुष्वेति पञ्चद-
शर्चस्य सूक्तस्य वामदेवो रक्षोहाग्निस्त्रिष्टुप् । कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन । तृष्वीमनु प्रसितिं द्रूणा-
नोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥ तव भ्रमास आशुया पतन्त्यनु स्पृश धृषता शोशुचानः । तपूंष्यग्ने जुह्वा पतङ्गान संदितो विसृ-
ज विष्वगुल्काः ॥ प्रति स्पशो विसृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः । यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे
व्यथिरादधर्षीत् ॥ उदग्ने तिष्ठ प्रत्यातनुष्व न्य१मित्राँ ओषतात्तिग्महेते । यो नो अरातिं समिधान चक्रे नीचा तं धक्ष्यतसं
न शुष्कम् ॥ ऊर्ध्वो भव प्रति विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने । अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून्
॥ १ ॥ स ते जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत् । विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो वि दुरो अभि द्यौत् ॥

सेदग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः । पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना सासदिष्टिः ॥ अर्चामि ते सुमतिं घोष्यर्वाक्संते वावाता जरतामियं गीः । स्वश्वास्त्वा सुरथा मर्जयेमास्मे क्षत्राणि धारयेरनु द्यून् ॥ इह त्वा भूर्या चरेदुप त्मन्दोषावस्तर्दीदिवांसमनु द्यून् । क्रीळन्तस्त्वा सुमनसः सपेमाभि द्युम्ना तस्थिवांसो जनानाम् ॥ यस्त्वा स्वश्वः सुहिरण्यो अग्न उपयाति वसुमता रथेन । तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग्जुजोषत् ॥ २ ॥ महो रुजामि बन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय । त्वं नो अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनाः ॥ अस्वप्नजस्तरणयः सुशेवा अतन्द्रासोऽवृका अश्रमिष्ठाः । ते पायवः सध्र्यञ्चो निषद्याग्ने तव नः पान्त्वमूर ॥ ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन् ॥ ररक्ष तान्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो नाह देभुः ॥ त्वया वयं सधन्य १ स्त्वोतास्तव प्रणीत्यश्याम वाजान् । उभा शंसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण ॥ अया ते अग्ने समिधा विधेम प्रति स्तोमं शस्यमानं गृभाय । दहाशसो रक्षसः पाह्य३ स्मान्द्रुहो निदो मित्रमहो अवद्यात् ॥ ३ ॥ तरत्समन्दीतिचतुष्कस्य सूक्तस्यावत्सारः पवमानः सोमो गायत्री । तरत्समन्दी० ४ । सहस्रशीर्षेति षोडशर्चस्य सूक्तस्य नारायणः पुरुषोऽनुष्टुबन्त्या त्रिष्टुप् । सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ एतावानस्य महिमातो ज्यायांश्च पूरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः । ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥ तस्माद्विराळजायत विराजो अधि पूरुषः । स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ १ ॥ यत्पुरु-

ण हविषा देवा यज्ञमतन्वत । वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः । तेन
देवा अयजन्त साध्या ऋषयश्च ये । तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम् । पशूँस्ताँश्चक्रे वायव्यानारण्यान् ग्राम्याश्च ये ॥ त-
स्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ तस्मादश्वा अजायन्त ये के चोभयादतः । गावो
ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥२॥ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् । मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते ॥
ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥ नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ-
अकल्पयन् । सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः । देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् । यज्ञेन यज्ञमयजन्त देवास्तानि
धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ ३ ॥ विष्णोर्नुकमिति
पञ्चर्चस्य सूक्तस्यौचथ्यो दीर्घतमा विष्णुस्त्रिष्टुप् । विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि । यो अस्कभायदुत्तरं
सधस्थं विचक्रमाणस्त्रेधोरुगायः । प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति
भुवनानि विश्वा ॥ प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे । य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित्पदेभिः ॥
यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति । य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ॥ तदस्य प्रियमभि
पाथो अश्यां नरो यत्र देवयवो मदन्ति । उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥ ता वां वास्तून्युश्मसि

गमध्ये यत्र गावो भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि ॥ १ ॥ ( प्र वः पान्तमन्धसो धि-
यायते महे शूराय विष्णवे चार्चत । या सानुनि पर्वतानामदाभ्या महस्तस्थतुरर्वतेव साधुना ॥ त्वेषमित्था समरणं शिमीवतोरि-
न्द्राविष्णू सुतपा वामुरुष्यति । या मर्त्याय प्रतिधीयमानमित्कृशानोरस्तुरसनामुरुष्यथः ॥ ता ईं वर्धन्ति मह्यस्य पौंस्यं नि मात-
रा नयति रेतसे भुजे । दधाति पुत्रोऽवरं परं पितुर्नाम तृतीयमधि रोचने दिवः ॥ तत्तदिदस्य पौंस्यं गृणीमसीनस्य त्रातुरवृकस्य
मीढुषः । यः पार्थिवानि त्रिभिरिद्विगामभिरुरु क्रमिष्टोरुगायाय जीवसे ॥ द्वे इदस्य क्रमणे स्वर्दृशोऽभिख्याय मर्त्यो भुरण्यति । तृतीयमस्य
नकिरा दधर्षति वयश्चन पतयन्तः पतत्रिणः ॥ चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत् । बृहच्छरीरो विमि-
मान ऋक्वभिर्युवाऽकुमारः प्रत्येत्याहवम् ॥ २ ॥ भवा मित्रो न शेव्यो घृतासुतिर्विभूतद्युम्न एवया उ सप्रथाः । अधा ते विष्णो
विदुषा चिदर्ध्यः स्तोमो यज्ञश्च राध्यो हविष्मता ॥ यः पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति । यो जातमस्य
महतो महि ब्रवत्सेदु श्रवोभिर्युज्यं चिदभ्यसत् ॥ तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन । आस्य जानन्तो नाम
चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे ॥ तमस्य राजा वरुणस्तमश्विना क्रतुं सचन्त मारुतस्य वेधसः । दाधार दक्षमुत्तममहर्विदं व्रजं
च विष्णुः सखिवाँ अपोर्णुते ॥ आ यो विवाय सचथाय दैव्य इन्द्राय विष्णुः सुकृते सुकृत्तरः । वेधा अजिन्वत्त्रिषधस्थ आर्यमृतस्य भागे
यजमानमाभजत् ॥ ३ ॥ तव श्रिये मरुतो मर्जयन्त रुद्र यत्ते जनिम चारु चित्रम् । पदं यद्विष्णोरुपमं निधायि तेन पासि गुह्यं नाम
गोनाम् ॥) अतो देवा इति षण्णां काण्वो मेधातिथिर्देवा विष्णुर्गायत्री । अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्त धाम-

मिः । इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूळ्हमस्य पांसुरे ॥ त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ ९ ॥ परो मात्रयेति मस्त्रस्य सूक्तस्य मैत्रावरुणिर्वसिष्ठो विष्णुस्त्रिष्टुप् । परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति । उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य वित्से ॥ न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप । उदस्तभ्ना नाकमृष्वं बृहन्तं दाधर्थ प्राचीं ककुभं पृथिव्याः ॥ इरावती धेनुमती हि भूतं सूयवसिनी मनुषे दशस्या । व्यस्तभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः ॥ उरुं यज्ञाय चक्रथुरु लोकं जनयन्ता सूर्यमुषासमग्निम् । दासस्य चिद्वृषशिप्रस्य माया जघ्नथुर्नरा पृतनाज्येषु ॥ इन्द्राविष्णू दृंहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम् । शतं वर्चिनः सहस्रं च साकं हथो अप्रत्यसुरस्य वीरान् ॥ इयं मनीषा बृहती बृहन्तोरुक्रमा तवसा वर्धयन्ती । ररे वां स्तोमं विदथेषु विष्णो पिन्वतमिषो वृजनेष्विन्द्र ॥ वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥१॥ नू मर्तो दयते सनिष्यन्यो विष्णव उरुगायाय दाशत् । प्र यः सत्राचा मनसा यजात एतावन्तं नर्यमाविवासात् ॥ त्वं विष्णो ( सुमतिं विश्वजन्यामप्रयुतामेवयावो मतिं दाः । पर्चो यथा नः सुवितस्य भूरेरश्वावतः पुरुश्चन्द्रस्य रायः ॥ त्रिर्देवः पृथिवीमेष एतां वि चक्रमे शतर्चसं महित्वा । प्र विष्णुरस्तु तवसस्तवीयान्त्वेषं ह्यस्य स्थविरस्य नाम ॥ विचक्रमे पृथिवीमेष एतां क्षेत्राय विष्णुर्मनुषे

दशसन् । प्रवासो अस्य कीरयो जनास उरुक्षिति सुजनिमा चकार ॥ प्रतत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् ।
तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके ॥ किमित्ते विष्णो परिचक्ष्यं भूत्प्रयद्ववक्षे शिपिविष्टो अस्मि । मावर्पो
अस्मदपगूह एतद्यदन्यरूपः समिथे बभूथ । वषट् ते विष्णवास आकृ० ॥ २ ॥) हिरण्यवर्णामितिपञ्चदशर्चस्य सूक्तस्यानन्दकर्द-
मचिक्लीतेन्दिरासुता ऋषयः श्रीरग्निश्चेत्युभेदेवते आद्यास्तिस्रोऽनुष्टुभः चतुर्थीबृहती पञ्चमीषष्ठ्यौ त्रिष्टुभौ ततोऽष्टावनुष्टुभः अन्त्या
प्रस्तारपङ्क्तिः । हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ तां म आवह जातवेदो ल-
क्ष्मीमनपगामिनीम् । यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् । श्रियं देवीमुपह्वये
श्रीर्मा देवी जुषताम् ॥ कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ।
चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् । तां पद्मिनीमीं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ॥ १ ॥
आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोथ बिल्वः । तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः ॥ उपैतु
मां देवसखः कीर्तिश्च मणिना सह । प्रादुर्भूतोस्मि राष्ट्रेस्मिन् कीर्तिमृद्धिं ददातु मे ॥ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्य-
हम् । अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये
श्रियम् ॥ मनसः काममाकूतिं वाचः सत्यमशीमहि । पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ २ ॥ कर्दमेन प्रजा भूता
मयि संभव कर्दम । श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥ आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे । नि च देवीं

मातरं श्रियं वामये मे कुले ॥ आर्द्रां यःकरिणीं यष्टिं सुवर्णां हेममालिनीम् । सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्विन्देयं पुरुषानहम् ॥ ३ ॥ यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् । सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥ ॐयज्जाग्रतो दूरमुदैतु दैवं तदु सुप्तस्य तथैवैति । दूरंगमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु । येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम् । येन यज्ञस्तायते सप्तहोता तन्मे० । येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः। यदपूर्वं यक्षमन्तः प्रजानां तन्मे० । यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु। यस्मान्न ऋते किंचन कर्म क्रियते तन्मे० । यस्मिन्नृचः साम यजूंषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः । यस्मिंश्चित्तꣳ सर्वमोतं प्रजानां तन्मे० । सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव । हृत्प्रतिष्ठं यदजिरं यविष्ठं तन्मे० । विहि होत्रेति पञ्चर्चस्य सूक्तस्य वामदेवो वायुरनुष्टुप् । वि हि होत्रा अवीता विपो न रायो अर्यः । वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ॥ निर्युवाणो अशस्तीर्नियुत्वाँ इन्द्रसारथिः । वायवा० ॥ अनु कृष्णे वसुधिती येमाते विश्वपेशसा । वायवा० ॥ वहन्तु त्वा मनोयुजो युक्तासो नवतिर्नव । वायवा० ॥ वायो शतं हरीणां युवस्व पोष्याणाम् । उत वा ते सहस्रिणो रथ आयातु पाजसा ॥ १ ॥ मुञ्चामित्वेति पञ्चर्चस्य सूक्तस्य प्राजापत्यो यक्ष्मनाशन इन्द्राग्नी त्रिष्टुबन्त्यानुष्टुप् । मुञ्चामि त्वा हविषा जीवनायकमज्ञातयक्ष्मादुत राजयक्ष्मात् । ग्राहिर्जग्राह यदि वैतदेनं तस्या इन्द्राग्नी प्रमुमुक्तमेनम् ॥ यदि क्षितायुर्यदि वा परेतो यदि मृत्योर-

न्तिकं नीत एव । तमाहरामि निर्ऋतेरुपस्थादस्पार्षमेनं शतशारदाय ॥ सहस्राक्षेण शतशारदेन शतायुषा हविषाहार्षमेनम् । शतं यथेमं शरदो न यातीन्द्रो विश्वस्य दुरितस्य पारम् ॥ शतं जीव शरदो वर्धमानः शतं हेमन्तान्छतमु वसन्तान् । शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ॥ आहार्षं त्वाविदं त्वा पुनरागाः पुनर्नव। सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च ते निदम् ॥ १ ॥ स्योनापृथिवीत्यस्य मेधातिथिर्भूमिर्गायत्री । स्योना पृथिवि० । द्रविणोदा इत्यस्याङ्गिरसः कुत्सो द्रविणोदा अग्निस्त्रिष्टुप् । द्रविणोदा० । सविता पश्चातादित्यस्य धानाको ध्रुवो विश्वेदेवास्त्रिष्टुप् । सविता पश्चा० । नवो नव इत्यस्य सूर्यासावित्री चन्द्रमास्त्रिष्टुप् । नवो नवो० । विद्युन्नयापतन्तीत्यस्य पुरूरवोर्वशी त्रिष्टुप् । विद्युन्नया पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि । जनिष्ठो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः ॥ उलूकयातुमित्यस्य वसिष्ठ इन्द्रास्त्रिष्टुप् । उलूकयातुं० । पिशङ्गेत्यस्य दैवोदासिः पारुच्छेप इन्द्रो गायत्री । पिशङ्गभृष्टि मं० । एतैर्मन्त्रैः सूत्रमभिषिच्य । जातवेदस इत्यस्य मारीचः कश्यपो जातवेदा अग्निस्त्रिष्टुप् । जातवेदसे० । अनेन मन्त्रेण गन्धेन सूत्रं लेपयित्वा । विश्वेत्तात इति मन्त्रस्य भार्गवो नेम इन्द्रो जगती । विश्वेत्ताते सवनेषु प्रवाच्या या चकर्थ मघवन्निन्द्र सुन्वते । पारावतं यत्पुरु संभृतं वस्वपावृणोः शरभाय ऋषिबन्धवे ॥ अनेन मन्त्रेण पुंसो दक्षिणहस्ते बध्नीयात् । श्रिये जात इत्यस्य काण्वः पवमानः सोमस्त्रिष्टुप् । श्रिये जात० । अनेन मन्त्रेण स्त्रियो वामहस्ते बध्नीयात् । तत ऋत्विजो-ऽक्षतैर्यजमानस्य समन्त्रं रक्षां कुर्युः । तत्रमन्त्राः । शतं जीवेति मन्त्रद्वयस्य प्राजापत्यो यक्ष्मनाशन इन्द्रस्त्रिष्टुबन्त्यानुष्टुप् । शतं जीव० । बृहत्साम क्षत्रभृद्वृद्धवृष्णियं त्रिष्टुभौजः शुभितमुग्रवीरम् । इन्द्रस्तोमेन पञ्चदशेन मध्यमिदं वातेन सगरेण रक्ष । ये यज्ञेनेत्येका-

दशर्चस्य मानवो नाभानेदिष्ठो विश्वेदेवाः प्रनूनमित्यादिचतसृणां सावर्णिर्जगती पञ्चम्यष्टमीनवम्योरनुष्टुभः षष्ठी बृहती सप्तमी सतोबृहती दशमीगायत्र्यन्त्यात्रिष्टुप् । ये यज्ञेन दक्षिणया समक्ता इन्द्रस्य सख्यममृतत्वमानश । तेभ्यो भद्रमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥ य उदाजन्पितरो गोमयं वस्वृतेनाभिन्दन्परिवत्सरे वलम् । दीर्घायुत्वमङ्गिरसो वो अस्तु प्रतिगृभ्णी० ॥ य ऋतेन सूर्यमारोहयन्दिव्यप्रथयन्पृथिवीं मातरं वि । सुप्रजास्त्वमङ्गिरसो वो अस्तु प्रतिगृ० ॥ अयं नाभा वदति वल्गुवो गृहे देवपुत्रा ऋषयस्तच्छृणोतन ॥ सुब्रह्मण्यमङ्गिरसो वो अस्तु प्र० ॥ विरूपास इदृषयस्त इद्गम्भीरवेपसः । ते अङ्गिरसः सूनवस्ते अग्नेः परिजज्ञिरे ॥ १ ॥ ये अग्नेः परि जज्ञिरे विरूपासो दिवस्परि । नवग्वो नु दशग्वो अङ्गिरस्तमः सचा देवेषु मंहते । इन्द्रेण युजा निःसृजन्त वाघतो व्रजं गोमन्तमश्विनम् ॥ सहस्रं मे ददतो अष्टकर्ण्यः श्रवो देवेष्वक्रत ॥ प्र नूनं जायतामयं मनुस्तोक्मेव रोहतु । यः सहस्रं शताश्वं सद्यो दानाय मंहते ॥ न तमश्नोति कश्चन दिव इव सान्वारभम् । सावर्ण्यस्य दक्षिणा विसिन्धुरिव पप्रथे ॥ उत दासा परिविषे स्मद्दिष्टी गोपरीणसा । यदुस्तुर्वश्च मामहे ॥ सहस्रदा ग्रामणीर्मा रिषन्मनुः सूर्येणास्य यतमानैतु दक्षिणा । सावर्णेर्देवाः प्रतिरन्त्वायुर्यस्मिन्नश्रान्ता असनाम वाजम् ॥ २ ॥ त्र्यम्बकमित्यस्य वसिष्ठो रुद्रोऽनुष्टुप् । त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ एतैर्मन्त्रैः रक्षां कुर्युः । ततो यजमानः कर्मसाद्गुण्यार्थमाचार्यादिभ्यो यथाशक्ति दक्षिणां दद्यात् ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे कौतुकबन्धनप्रकरणम् ॥

अथाग्निमुखम् । अमरारिकुलाधीशहविरग्निमुखायितम् । अव्याजमित्रमार्तानामाश्रये श्रीसखं महः ॥ अथाग्निमुखविधिरभिधीयते । तत्रादौ कर्मप्रारम्भकालसंकल्पे विशेष उच्यते । तत्र तावदखिलकर्मसु संकल्प आवश्यक इत्याह मार्कण्डेयः— 'संकल्प्यैव यथा कुर्यात्स्नानदानव्रतादिकम् । अन्यथा पुण्यकर्माणि निष्फलानि भवन्ति हि' इति । यथा यथावदित्यर्थः । स च संकल्पविशेषः सर्वेषामनुष्ठातॄणामनुष्ठानसौकर्याय संक्षिप्य निरूप्यते । संकल्पभेदो हि कर्मभेदनिबन्धनः । कर्म तावन्नैमित्तिककाम्यभेदेन द्विविधम् । तत्र नैमित्तिकमपि नियतनिमित्तमनियतनिमित्तं चेति द्विविधम् । तत्र नियतनिमित्तमेव नित्यमित्युच्यते । तथाच नित्यनैमित्तिककाम्यभेदेन संकल्पस्त्रेधा भिद्यते । तत्र नित्ये तावत् 'अहरहः संध्यामुपासीत', 'वसन्ते वसन्ते ज्योतिषा यजेते'त्यादौ वीप्सयाऽहरादीनां निमित्तत्वप्रतीतेः । 'यावज्जीवमग्निहोत्रं जुहोती'त्यादौ यावच्छब्दोपनिरुद्धं हि जीवनं 'धातुसंबन्धे प्रत्ययाः' इति धातुसंबन्धे विहितेन 'यावति विन्दजीवो'रिति णमुल्प्रत्ययेन संबन्धान्तरासंभवात् । निमित्तनैमित्तिकभावसंबन्धस्याप्रतीतेर्निमित्तस्य च सत्त्वसमिन्सत्यवश्यं कर्तव्यमित्येवंरूपत्वाच्च किंचिदङ्गलोपेऽपि यावच्छक्त्योपसंहृताङ्गयुक्तप्रधानानुष्ठानेनैवापूर्वसिद्धिः । अतएवावश्यकत्वान्मुख्याङ्गासंभवेऽपि प्रतिनिधायानुष्ठानेऽपि नापूर्वसिद्धेर्वैगुण्यम् । काम्ये तु कामनाया निमित्तत्वाभावादावश्यकत्वस्यासिद्धत्वादङ्गबाधो न युक्त इति सर्वाङ्गोपसंहारसमर्थस्यैवाधिकार इति सर्वाङ्गयुक्तप्रधानानुष्ठानेनैवापूर्वसिद्धिः । अतएव श्रुत्याङ्गत्यागासंभवान्न काम्ये प्रतिनिधिः । गुरुमतेतु काम्याभिसं-

पाठा०—1 संकल्प्य च यथा । यथेति तत्कर्मयोग्यतानुसारेणेत्यर्थं ।

हिते फले करणस्यैव विषयत्वात्सेतिकर्तव्यताकस्यैव करणत्वात्किंचिदङ्गत्यागे करणत्वाभावाद्विषयविलयान्नापूर्वकार्यसिद्धिः । नित्येतु केवलस्यैव विषयत्वाधावच्छक्त्योपसंहृताङ्गयुक्तप्रधानानुष्ठानेनैवापूर्वकार्यसिद्धिरिति । तत्रायं संकल्पप्रकारः— नित्ये कौमारिलमते तावदधिकारवाक्ये चोदितफलाभावेपि मन्त्रलिङ्गार्थवादादिबहुवाक्यपर्यालोचनया उपात्तदुरितक्षय एव फलत्वेन परिकल्पित इति तदनुरोधादुपात्तदुरितक्षयार्थं प्रातःसंध्यामुपासिष्ये ज्योतिष्टोमेन यक्ष्ये इति सर्वत्र नित्यमात्रे संकल्पः । गुरुमते तु विधिसिद्धिरेव विधेः फलमिति चोदितफलाभावेपि विधिसिद्ध्यर्थं प्रातःसंध्यामुपासिष्ये, ज्योतिष्टोमेन यक्ष्ये इति संकल्पः । नैमित्तिकेपि यत्र जातेष्ट्यादौ फलश्रवणं भवति तत्र निमित्तफलसंवलिताधिकारात्पुत्रजन्मनिमित्तं पुत्रगतपूतत्वादिकामो जातेष्ट्या यक्ष्य इत्यादि संकल्पः । यत्र तूपरागे स्नायादित्यादौ निमित्तमात्रश्रवणं तत्रोपरागनिमित्तं स्नानं करिष्य इति संकल्पः । काम्येत्वधिकारवाक्यप्रतिपादितफलोद्देशेन वृष्टिकामः कारीर्या यक्ष्य इत्यादिसंकल्प इति संक्षेपः । विस्तरस्तु मतद्वये सर्वशक्त्यधिकरणे तिर्यगधिकरणे च द्रष्टव्यः ॥

अथ शारीरकभाष्यकारप्रतिपादितया यथानुवृत्त्यापि संकल्पप्रकारः कथ्यते । 'जन्माद्यस्य यतः' इति सूत्रे 'यतो वा—' इत्यादिविषयवाक्यव्याख्याने ब्रह्मणः सकाशादेव प्रपञ्चजातमुत्पन्नं, यथा मृदः सकाशादुत्पन्नो घटः स्वोपादानं मृदमत्यक्त्वा जीवति प्रलीयमानोपि मृद्येव प्रलीयते एवं ब्रह्मणि जातं जगदपि ब्रह्मात्यक्त्वा जीवति, प्रलीयमानं च ब्रह्मण्येव प्रलीयत इत्यु-

पाठा० —१ ब्रह्मणो जात । २ ब्रह्मणि, ब्रह्मण्येव ।

स्त्वोत्तरशास्त्रसंदर्भेण ब्रह्मणि समन्वयादिकं प्रतिपाद्य ब्रह्मार्पणबुद्ध्यैव कर्माणि कर्तव्यानीत्युक्तम् । श्रुत्यन्तरमपि—'एष एवाऽसाधुकर्म कारयति तं यमधो निनीषते । एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत' इति । भणितं च भगवता भगवद्गीतायाम्—'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्' इति । उक्तंच कूर्मपुराणे—'ब्रह्मण्याधाय कर्माणि निःसङ्गः कामवर्जितः । प्रसन्नेनैव मनसा कुर्वाणो याति तत्पदम् । ब्रह्मणा दीयते देयं ब्रह्मणा संप्रदीयते । ब्रह्मैव दीयते चेति ब्रह्मार्पणमिदं परम् । नाहं कर्ता सर्वमेतद्ब्रह्मैव कुरुते तथा । एतद्ब्रह्मार्पणं प्रोक्तमृपिभिस्तत्त्वदर्शिभिः । प्रीणातु भगवानीशः कर्मणानेन शाश्वतः । इति यत्कुरुते बुद्ध्या ब्रह्मार्पणमिदं परम् । यद्वा फलानां संन्यासं प्रकुर्यात्परमेश्वरे । कर्मणामेतदप्याहुर्ब्रह्मार्पणमिदं परम् । कार्यमित्येव यत्कर्म नियतं सङ्गवर्जितम् । क्रियते विदुषा कार्यं तद्भवेदपि मोक्षदम् । अथवा यदि कर्माणि कुर्यान्नित्यान्यपि द्विजः । अकृत्वा फलसंन्यासं बध्यते तत्फलेन तु । तस्मात्सर्वप्रयत्नेन त्यक्त्वा कर्माणि तत्फलम् । अविद्वानपि कुर्वीत कर्मणाप्नोति तत्फलम्' इति । अपिच ब्रह्मार्पणबुद्ध्या कर्मकरणे फलबाहुल्यमपि भवति । तदुक्तं व्यासेन—'वासुदेवे मनो यस्य जपहोमार्चनादिषु । तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलमि'ति । तस्माच्चतुर्विधपुरुषार्थसार्थोऽपि परमेश्वरप्रीत्यैव भवति । ततश्च परमेश्वरप्रीत्यर्थं प्रातःसंध्यामुपासिष्ये, ज्योतिष्टोमेन यक्ष्य इति स्वाभीष्टदेवताप्रीत्युद्देशेन संकल्पः कार्य इत्यलमतिविस्तरेण । प्रकृतेप्वेवमात्माधिकारसदृशं कर्मादौ संकल्पं कुर्यात् । इति संकल्पनिर्णयः ॥

पाठा०—१ एष परमात्मा साधु । २ 'याति मत्पद । ३ जपहोमादिकं फल ।

अथ स्थण्डिलकरणम् । कारिका—'आश्वलायनमाचार्यं नत्वा तद्गृह्यकर्मणाम् । प्रयोगं वच्मि केषांचिद्वृत्तिकारादिभाषितम् । प्राणानायम्य संकल्प्य परितः स्थण्डिलं शुचिः । अधिकं वेषुमात्रं वा गोमयेनोपलिप्य च । यज्ञियं शकलं किंचिदाददीत ततः परम् । अग्निस्थापनदेशस्य पश्चात्प्रादेशसंमिताम् । उल्लिखेदुदगायामां तस्या उभयतोऽपरे । प्रागायते उदक्संस्थे असंसृष्टे च पूर्वया । मध्ये तिस्र उदक्संस्थाः प्रागायामा असंहताः । लिखिता येन शकलं यज्ञियं तन्निधाय च । अद्भिरभ्युक्ष्य शकलं निरस्याप उपस्पृशेत्' इति । इदमत्र गृह्यम्—'इषुमात्रावरं सर्वतः स्थण्डिलमुपलिप्योल्लिख्य षड्लेखा उदगायतां पश्चात्प्रागायते नानान्तयोस्तिस्रो मध्ये तदभ्युक्ष्य' इति । अस्यार्थमाह नारायणः—'अथशब्दोऽधिकारार्थः । इत उत्तरं यानि वक्ष्यन्ते तेषामेवायं होमविधिर्भवतीति । तेन वैश्वदेवेः क्वचग्रहणेन प्राप्यमाणो होष्यन्धर्मो न भवतीति । खलुशब्दोऽपार्थकः । 'मिताक्षरेष्वनर्थकः' इति वचनात् । यत्रक्वचग्रहणमहरहःक्रियान्तरविध्याशङ्कानिवृत्त्यर्थम् । यत्र क्व च होष्यन्स्यादिति होममनूद्य धर्मविधिः तर्हि यत्रेत्येवास्तु क्वचग्रहणमनर्थकम् । न । तत्र प्रतिषेधविषयेऽप्यौपासनाग्निपरिचरणे एतत्सूत्रविहितपरिसमूहनपरिस्तरणपर्युक्षणानां प्राप्त्यर्थं क्वचग्रहणम् । लेखादयस्तु नेति वक्ष्यामः । इषोर्मात्रेव मात्रा यस्य स्थण्डिलस्य तदिषुमात्रम् । एकस्य मात्राशब्दस्य लोप उष्ट्रमुखवत् । तच्च तदवरं च इषुमात्रावरम् । अवरं निकृष्टमित्यर्थः । सर्वतः सर्वासु दिक्षु चतसृष्वित्यर्थः । चतसृष्वपि दिक्षु इषुमात्रप्रमाणं ततोऽधिकं वा चतुरस्रं स्थण्डिलं गोमयेनोपलिप्य षड्लेखा लिखेत् । षड्ग्रहणं पट्स्वपि लेखास्वेवः प्रति-

पाठा०—१ इषुर्नामारत्निनित्यमित्यम्रे स्पष्टम् ।

ष्ठापनं यथा स्यादिति । केनचिद्यज्ञियेन शकलेन स्थण्डिलमध्ये उदक्दीर्घां प्रादेशमात्रां न्यूनां वा लेखामग्निप्रतिष्ठापनदेशस्य पश्चाल्लिखेत् । नानेलसंसर्गार्थम् । तस्या अन्तयोर्नाना असंसृष्टे प्रागायते द्वे लेखे लिखेत् । ततस्तिस्रो मध्ये असंसृष्टाः प्रागायता लेखा लिखेत् । शकलं तत्रैव निधाय स्थण्डिलमभ्युक्ष्य शकलं निरस्याप उपस्पृशेदि'ति । गृह्यपरिशिष्टे तु—'अथ होष्यन् धर्मे किंचिदुन्नता समाकृत्रिमा भूमिः स्थण्डिलमुच्यते । तदिषुमात्रावरं सर्वतो गोमयेन प्रदक्षिणमुपलिप्य यज्ञियवृक्षमूलेनोल्लिख्य शकलं प्रागग्रं निधाय स्थण्डिलमभ्युक्ष्य शकलमाग्नेय्यां निरस्याप उपस्पृशेदेष आयतनसंस्कारः' इति । भगवानपि—'अथ शुद्धे समे देश आसीनः प्राङ्मुखः शुचिः । इषुमात्रं चतुर्दिक्षु गोमयेन सवारिणा ॥ उपलिप्य स्थण्डिलं तु चतुरस्रं च सर्वतः । तस्मिन्नरोपयेज्ञियस्य शकलेन पडुल्लिखेत् ॥ उदक्संस्थां लिखेत्पश्चाल्लेखां प्रादेशसंमिताम् । तदन्तयोरसंस्पृष्टे द्वे च प्रागायते लिखेत् ॥ तिस्रो मध्ये ततो लिख्य लेखाः प्रागायता अपि । निधाय शकलं तस्मिन्नभ्युक्ष्य स्थण्डिलं जलैः ॥ निरस्य शकलं पश्चात्पाणिं प्रक्षाल्य वाग्यतः' इति ॥❀॥ अत्र मौनविषये स्मृत्यन्तरम्—'स्नाश्नतो वरुणः कान्तिं जुहतोऽग्निः श्रियं हरेत् । अश्नतो मृत्युरायुष्यं तस्मान्मौनं त्रिषु स्मृतम्' इति ॥ ॥ स्थण्डिलमुपक्रम्य गृह्ये इषुमात्रावरमित्युक्तं तस्यार्थ उच्यते—इषुर्नाम अरत्नित्रितयम् । 'त्रिररत्निरिषुः स्मृतः' इत्यभिधानात् । अरत्निस्तु कूर्परमारभ्य कनिष्ठिकापर्यन्त आयामः । तदुक्तम्—'प्रकोष्ठे विस्तृतकरे हस्तो मुष्ट्या तु बद्धया । सरत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना' इति । आपस्तम्बस्तु—'चतुर्विंशत्यङ्गुलोऽरत्निः । तदर्धं प्रादेशस्तथि'रिति । इति स्थण्डिलकरणम् ॥

अथाग्निप्रतिष्ठा । तत्र तावदग्निनिर्णयमाह भगवान्—'स्मार्तोऽग्निर्द्विविधो ज्ञेयो गृह्यः पौरुप इत्यपि । यस्मिन्विवाहं कुरुते सोऽग्निर्गृह्य इति स्मृतः । जातकर्मादिसिद्ध्यर्थं यो व्याहृतिभिराहृतः । सोऽग्निः पौरुष इत्युक्तः शालाग्निर्लौकिकस्तथा । गृह्ये गृह्याग्निकर्माणि चेतराण्येव पौरुषे' इति । गृहशब्दोऽत्र गृहिणीवचनः तन्निमित्तोऽग्निर्गृह्यः तस्मिन्गृह्याग्नौ तन्निमित्तानि कर्माणि कुर्यादित्यर्थः । विष्णुरपि—'स्मार्तमौपासने कुर्याच्छ्रौतं वैतानिके गृही । लौकिकेऽपीतरेषां तु विधिरेष सनातनः' इति । तथाच काचन गाथा कथ्यते कारिकायाम्—'चौलकर्मण्युपनये विवाहप्रथमाहुतौ । व्रतेषु स्नातकस्यापि लौकिकाग्निरिति स्थितिः' इति ॥ आचार्योऽपि—'गर्भपुंसवसीमन्तवलि चौलं च निष्कृतिः । काम्यांश्च कुर्यात्स्मार्ताग्नावुत्सर्गोपाकृती च वा । निष्कृतीष्टिश्च काम्यांश्च कुर्याच्छ्रौतेऽपि मानवः' इति । तदित्थमग्निविशेषे कर्मविशेषमवगम्याग्निः प्रतिष्ठापनीयः । तत्र कारिका—'प्रतिष्ठाप्याथ लेखासु होमायालं हविर्भुजम् । एतदन्तं प्रकुर्वीत होष्यन्संस्थापितेऽनले' । होमायालं होमपर्याप्तम् । योग्यमिति यावत् । योग्यत्वं च द्वेधा—अरण्यादिजन्यत्वं प्रदीप्तबहुलाङ्गारवत्त्वं च ॥❀॥ तत्राग्नौ विशेषमाह भगवान्—'निर्मथ्य यज्ञियात्काष्ठादानीतं वा द्विजालयात्' इति । सिद्धान्तशेखरेपि—'उत्तमोऽरणिजन्योऽग्निरुत्तमः सूर्यकान्तजः । उत्तमः श्रोत्रियागारान्मध्यमः स्वगृहादिजः' इति । प्रदीप्तबहुलाङ्गारक्षमं तं तु हविर्भुजम् । लेखासु प्रतिष्ठाप्येत्यनेन प्रतिपाद्यते । तथाच जयन्तः—'उक्ते पट्त्वे पुनः पट्त्वं प्रतिष्ठाग्नेर्यथा भवेत् । षण्णामुपरि लेखानामिति सूत्रविदो विदुः' इति । ईदृशमग्निं सौवर्णराजतताम्रपात्रादिना प्रणयेत् । तदुक्तमत्रिणा—

पाठा०—१ गृह्याणि कर्माणि । २ चौलकर्मोपनयने विवाहप्रथमास्तथा । व्रतादिस्नानमित्येषा ।

'पात्रान्तरेण पिहिते ताम्रपात्रादिके शुभे । अग्निप्रणयनं कुर्याच्छरावे तादृशेऽपि वा' इति । यत्तु स्मृतिसारे—'शरावे भिन्नपात्रे वा कपाले वोल्मुकेऽपि वा । नाग्निप्रणयनं कुर्याद्व्याधिहानिभयावहम्' इति । तस्य मुख्यपात्रसंभवे शरावो न ग्राह्य इति तात्पर्यं नतु सर्वथा शरावो न ग्राह्य इति । 'शरावे तादृशेऽपि वा' इत्यत्रिसरणात् ॥ एवमानीतं हविर्भुजं समस्तव्याहृत्युच्चारणपूर्वकं पट्-स्थाने लेखासभ्यात्मं प्रतिष्ठाप्य प्रबोधयेदिति शेषः । तथाच गृह्यपरिशिष्टे—'स्थण्डिलेऽग्निं व्याहृतिभिरभ्यात्मं प्रतिष्ठाप्ये'ति । अत्र व्याहृतिभिरित्युपलक्षणम्, एह्यग्ने जुष्टोदमूना इत्येतयोर्मन्त्रयोर्हरदत्तेन मन्त्रभाष्येऽग्निप्रतिष्ठापनपरत्वेन व्याख्यातत्वात् ॥ ❀ ॥ तथाग्निप्रबोधने साधनान्तरनिषेधमाह देवलः—'वस्त्रेण चाथ पर्णेन पाणिशूर्पास्यदारुभिः । न कुर्यादग्निधमनं कुर्याच्च व्यजनादिना' इति । अत्र संग्रहकारः—'पर्णेन वै भवेद्व्याधिः शूर्पेण धननाशनम् । पाणिना मृत्युमाप्नोति आयुःक्षीणं मुखेधमे ॥ धमनीमन्तरं कृत्वा तृणं वा काष्ठमेव वा । मुखेनाग्निं समिन्धीत मुखादग्निरजायत ॥ वेणोरग्निप्रसूतत्वाद्वेणुरग्नेश्च पावनः । तस्माद्वेणुधमन्यैव धमेदग्निं विचक्षणः' इति । श्रूयतेचात्र—'वेणुना करोति तेजो वै वेणुस्तेजसैव तेजः प्रवर्ग्यस्तेजः समर्धयति' इति । अत्र विशेषमाह देवलः—'अग्नौ न प्रक्षिपेदग्निमग्निर्नाशमियात्तथा' इति । एवं संस्थापिते सम्यग्विधिना स्थापितेऽग्नौ होष्यन्होमं करिष्यन्नेतदन्तमिदानीमुक्तप्रकारकप्रतिष्ठापनान्तं कर्म कुर्वीत । किमर्थमिदमुच्यते 'होष्यन्संस्थापितेऽनले'इति । 'यत्र क्व होष्यन्स्यात्' इति गृह्यकारकटाक्षेणाग्निप्रतिष्ठापनविधेर्विषयताप्रदर्शनार्थमिति ब्रूमः । यत्र प्रतिष्ठाविधिनाग्निं प्रतिष्ठाप्य होमः करिष्यते तत्रोपलेपनादिरुक्तो विधिर्विधेय इति तात्पर्यार्थः । धार्याग्निकर्तव्यकर्मव्यतिरिक्तेषु सर्वेषु कर्मसु धार्याग्निकर्तव्यकर्मस्वपि

गृहप्रवेशवास्तुहोमशूलगवान्वष्टक्यप्रभृतिषु च विधिवदग्निं प्रतिष्ठाप्य होतव्यमिति संक्षेपः ॥ ❀ ॥ अत्र प्रतिष्ठापनानन्तरं प्रोक्षितैरिन्धनैः प्रबोधयेत् । तदाहापस्तम्बः—'नाप्रोक्षितमिन्धनमग्नावादध्यात्' इति ॥

अथान्तरागमनम् । अत्राग्नियजमानयोर्मध्ये केनाप्यन्तरागमने कृते तस्य प्रायश्चित्तमुच्यते । पराशरप्रायश्चित्तकाण्डे—'द्वौ विप्रौ ब्राह्मणाग्नी च दंपती गोद्विजोत्तमौ । अन्तरेण यदा गच्छेत्कृच्छ्रं सांतपनं चरेत्' इति । एतदकर्मकालविषयं ज्ञेयम् । कर्मकालविषये तु विशेष उच्यते । तत्रैव—'होमकाले तथा दोहे स्वाध्याये दानसंग्रहे । अन्तरेण यदा गच्छेद्द्विजश्चान्द्रायणं चरेत्' इति । इत्यग्निप्रतिष्ठापनम् ॥

अथाग्निध्यानम् । आचार्यः—'होप्यन्नग्नेर्विजानीयात्स्वरूपं श्रुतिचोदितम् । अजानता कृतं कर्म तदल्पफलमिष्यते' । श्रुतिचोदितमिति चत्वारि शृङ्गेत्यनया श्रुत्या चोदितमित्यर्थः । विवृतं चैतदाचार्येण—'स्मरेदग्निं द्विजो होप्यन्वक्तं गोवृषरूपिणम् । विततोर्ध्वाननं मध्ये बृहत्कर्णं सुलोचनम् ॥ चतुःशृङ्गं त्रिपादं च द्विशीर्षं सप्तहस्तकम् । द्विपुच्छं च त्रिधाबद्धं चतुर्नेत्रं त्रयीमयम् ॥ शृङ्गाश्चत्वार उद्दिष्टा यां ऊर्ध्वसमिधश्च ते । वैदिकं तान्त्रिकं वक्त्रे पादाः परिधयस्त्रयः ॥ ऋगाद्याश्च त्रयो वेदाः पुरुषार्थास्तदीक्षणाः । छन्दांसि सप्त हस्तानि पुच्छौ पक्षौ सितासितौ ॥ रोमाण्यूरूणि तस्याहुश्चातुर्मास्यानि बन्धनम् । संवत्सरोऽनुयाज्याख्यः समित्कर्मसु गद्यते ॥ तदौ पञ्चदिनान्येव समिधः प्राहुरुत्तमाः । तच्च सर्वात्मनो वह्नेरात्मत्वेन निगद्यते' इति । अन्येप्याहुः—'पादौ पश्चिमतो वह्नेः पूर्वतः शिर उच्यते । दक्षिणोत्तरबाहुभ्यामूर्ध्वेवकाग्निरन्ध्रयोः ॥ अधोमुखस्तूर्ध्वबाहुः प्राङ्मुखो

पाठा०—१ यतूर्ध्वसमिधश्च । २ दशपञ्चदिनान्येव ।

हव्यवाहनः । तिष्ठत्यनेन भावेन आहुतिः कुत्र दीयते ॥ ताम्रभौ प्राङ्मुखौ ज्ञेयावाहुतीः कुत्र जुह्वति । करेण तोयमादाय वह्निं कृत्वा प्रदक्षिणम् ॥ एष हि देवेति मन्त्रेण पवित्रोदकहस्तकृत् । हव्यवाट् सलिलं दृष्ट्वा भीतः प्रत्यङ्मुखो भवेत् ॥ अथाग्निरूपं वक्ष्यामि सर्वाभीष्टप्रदायकम् । एकदेहं द्विशीर्षस्कं जटामुकुटमण्डितम् ॥ सुदीप्तं स्वर्णवपुषं शशाङ्कशकलान्वितम् । चतुःश्रोत्रं द्विनासं च षडक्षं पिङ्गलप्रभम् ॥ आस्यद्वयं सुताम्रोष्ठं सप्तजिह्वासमन्वितम् । दक्षिणास्ये चतुर्जिह्वास्तिस्रो वै वामवक्त्रके ॥ प्रसन्नं सुस्मितं शान्तं सप्तहस्तसमन्वितम् । दक्षिणे च चतुर्हस्तं वामभागे त्रिहस्तकम् ॥ स्रुक्स्रुवौ शक्तिमिध्मं च दधानं दक्षिणैर्भुजैः । दधानं तोमरं वामैर्व्यजनं घृतपात्रकम् ॥ त्रिमेखलं त्रिपादं च मेषारूढं वरप्रदम् । यज्ञसूत्रधरं सौम्यं सर्वाभरणभूषितम् ॥ रक्ताम्बरधरं देवं रक्तमालाविभूषितम् । रक्तचन्दनलिप्ताङ्गं ज्वालाकोटिसमप्रभम् ॥ स्वाहां च दक्षिणे पार्श्वे देवीं वामे स्वधां तथा । एवं संचिन्त्य मनसा वह्निमध्ये तमाह्वयेत्[3] इति । अन्येत्वाहुः—'सप्तहस्तश्चतुःशृङ्गः सप्तजिह्वो द्विशीर्षकः । त्रिपात्प्रसन्नवदनः सुखासीनः शुचिस्मितः ॥ स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां तथा । बिभ्रद्दक्षिणहस्तैश्च शक्तिमन्नं स्रुचं स्रुवम् ॥ तोमरं व्यजनं वामैर्घृतपात्रं च धारयन्[2] । मेषारूढं जटाबद्धं गौरवर्णं महौजसम् । धूमध्वजं लोहिताक्षं सप्तार्चिः सर्वकामदम् । आत्माभिमुखमासीनमेवं ध्यायेद्धुताशनम्' इति । संग्रहेऽपि—'अग्निमूर्तिमविज्ञाय होमो भवति निष्फलः । (शुभदा दक्षिणावर्ता ह्यशुभा वामभागतः ॥ घृतभारसहस्राणि काष्ठभारायुतानि च । एवं च क्रियते होमो ध्यानहीने न सिध्यति' ) । इत्यग्निध्यानम् ॥

पाठा०—१ अग्निमूर्ति प्रवक्ष्यामि, अथाग्निमूर्ति वक्ष्यामि । २ धारयन् । ३ मेषंस्थं हुताशने ।

अथान्वाधानम्। तत्र कारिका—'प्रातरौपासनं हुत्वा समिधौ द्वे निधाय च। अथवा तिस्र आदध्यात्क्रतुसंकल्पपूर्वकम्' इति। देशकालकथनपूर्वकमहमस्मिन्कर्मणि देवतापरिग्रहार्थमन्वाधानाख्यं कर्म करिष्ये। अस्मिन्नन्वाहितेऽग्नाविमां देवतामनेन द्रव्येण यक्ष्य इति क्रमेण याज्यदेवताद्रव्याणि समुच्चार्याङ्गदेवताः प्रधानदेवताः सर्वाः संनिहिताः सन्तु इति संकल्प्य समिद्द्वयं त्रयं वा पाणिनादाय व्याहृत्याऽग्नावादध्यात्। अनेनान्वाधानाख्येन कर्मणा यक्ष्यमाणदेवतापरिग्रहः क्रियते। इदमत्र गृह्यम्—'अग्निं प्रतिष्ठाप्यान्वाधाय' इति। अस्यार्थः—अग्निं प्रतिष्ठाप्यान्वादधाति। तेन पाकयज्ञानामित्यतिदेशप्राप्तं बर्हिष इध्मस्य च संनहनं करोति। अन्वाधानं नाम कर्माङ्गत्वेन द्वयोस्तिसृणां वा समिधामभ्याधानमिति। तदुक्तं गृह्यपरिशिष्टे—'अन्वादधाति कर्मसंकल्पपुरःसरं द्वयोस्तिसृणां वा समिधामभ्याधान'मिति। भगवानपि—'प्रदीप्तमग्निं संमृज्य संप्रोक्ष्य परितो जलैः। ईशानीं दिशमारभ्य अन्वादध्यात्समिद्द्वयम्॥ काष्ठत्रयं वा संकल्प्य अमुं यक्ष्य इति ब्रुवन्। अनेन यक्ष्यमाणाया देवतायाः परिग्रहः॥ अन्वाधानमिदं कार्यमग्निध्यानादनन्तरम्' इति॥ ❁॥ समिद्धोमप्रकार उच्यते संग्रहे—'मूलतः कर्मनाशः स्यान्मध्यतः पुत्रनाशनम्। अग्रेण तूच्यते व्याधिरेकपाणिर्धनक्षयः। मूलमध्यममध्येन समिद्धोमस्य लक्षणम्' इति। अत्रैकपाणिना होमनिषेधेन सव्यपाण्यन्वारब्धदक्षिणपाणिना होमविधिर्गम्यते॥ इत्यन्वाधानम्॥

अथ बर्हिःसंनहनादि। तत्र कारिका—'अथ रज्जुं प्रकुर्वीत त्रिसंधिं त्रिवृतां कुशैः। स्याद्रज्जुकरणे पूर्वं सव्यः पाणिरिहो-

---

पाठा०—१ मिति प्राप्तं। २ आरब्धकर्माङ्गतया। ३ होमनिषेधात्सव्यपाणिना, होमे निषिद्धे।

त्तरः ॥ पश्चाद्दक्षिण इत्याह जयन्तस्तन्निबन्धने' इति । 'अस्य दर्भसंख्यामाहाचार्यैः—'रज्जुर्द्वादशभिर्दर्भैः ख्याता संधित्रयैः पृथक् । एकैका चेद्ववेत्ताभिर्विवृता यज्ञकर्मणि ॥ निदध्यादुदगग्रां तां रज्जुमग्रत आत्मनः । कुशमुष्टिं छिनत्त्यस्यां प्रागग्रं तं निधाय च ॥ तया बर्हिर्द्विरावेष्ट्य रज्जुमूलं च वेष्टयेत् । पूर्वं या वेष्टिता तस्या अधस्तात्तां नयेदथ॥ निधायोपरि चान्यांश्च परिस्तृत्यादिसिद्धये । कृत्वान्यां पूर्ववद्रज्जुं निदध्यात्तां च पूर्ववत् ॥ द्विप्रादेशो भवेदिध्म एकविंशतिदारुकः । पालाशः खादिरो वा स्यात्तं प्रागग्रं निधाय च ॥ शम्यश्वत्थादिकं ग्राह्यमनयोर्वृक्षसंभवे । वेष्टयेत्सकृदेवेध्मं बध्नोपरि निधाय च॥जयन्तमतमनोक्तं वक्ष्ये वृत्तिकृतो मतम्। इध्मबर्हिर्बन्धनं कार्यं मन्त्रस्यात्रोह इष्यते ॥ अरत्न्यायाम इध्मः स्यात्स्यात्पञ्चदशदारुकः । एतच्च वृत्तिकारेण शान्तिकर्मणि साधितम् ॥ ( स्मार्ते प्रादेश इध्मोऽपि अरत्न्यायाम एव वा ।) विष्णादयस्तु नेच्छन्ति मन्त्रं संनहने तयोः ॥ इच्छत्येव जयन्तस्तु मन्त्रमूहं तु नेच्छति' इति । इदमत्र गृह्यम्—'इध्माबर्हिषोश्च संनहनम्' इति । अस्यार्थः—अनयोश्च संनहनं ताभ्यामेव व्याख्यातम् 'इध्मः पञ्चदशदारुकः' इति शान्तिकर्मणि साधयिष्याम इति । हरदत्तस्तु संनहनं बन्धनम् । तच्च दर्शपूर्णमासाभ्यां व्याख्यातं समन्त्रकममन्त्रकं वा शाखान्तरे द्रष्टव्यमिति । अत्र दर्शपूर्णमासाभ्यां व्याख्यातमित्यतिदिष्टत्वादापस्तम्बोक्तिः प्रदर्श्यते—'अदित्यै रास्नासीति त्रिधातु पञ्चधातु वा शुल्बं करोत्यधुपिता योनिरिति प्रतिनिदधात्यदित्यै रास्नासीत्युदगग्रां वितत्य—सुसंभृतात्वा संभरामीति तस्मिन्निन्धनानि संभृत्याप्तुभिता योनिरित्युत्तमे निधने प्रस्तरमभ्याधायेन्द्राण्यै संनहनमिति संनह्यति पूषा ते ग्रन्थिं ग्रथ्नात्विति

पाठा०—१ शमीवटादिक । २ इध्मस्तु स्यात् । ३ सुसंभरात्वा । ४ तस्मिन्निदधाति ।

ग्रन्थि करोति सं ते मास्थादिति पुरस्तात्प्रत्यञ्चं ग्रन्थिमुपगूहति पश्चात्प्राञ्चं वा' इति । अस्यार्थमाह रुद्रदत्तः—'धातुः संधिः । शुल्वं एकाकारा रज्जुः । 'यानि शुल्वानि समासं गच्छन्ती'ति लिङ्गात्' इति । गृह्यपरिशिष्टेतु—'अथेध्माबर्हिषी संनह्येद्दर्भैः प्रादेशमात्रीं त्रिसंधि त्रिरावृतां रज्जुं कुर्यात् पाणिभ्यां सव्योत्तराभ्यां पूर्वमावर्तयेत्ततो दक्षिणोत्तराभ्यां पाणिभ्यामन्ते प्रदक्षिणवृत्तं ग्रन्थि कुर्यादेतद्रज्जुकरणम् प्रथमां रज्जुमुदगग्रामास्तीर्य प्रादेशमात्रां दर्भमुष्टिं छित्त्वा प्रागग्रां तस्यां निधाय तया बर्हिर्द्विरावेष्ट्य तन्मूलं च सकृदावेष्ट्य तां प्रथमं वेष्टितस्याधस्तादुन्नमयेदेवं द्वितीययेध्मं सकृदावेष्ट्यारत्न्यायाम इध्मः पञ्चदशदारुकस्तमुपरि निदध्यादेतदिध्माबर्हिषोः संनहनम्' इति । भगवांस्तु—'अथेध्मस्य संनहनं बर्हिषश्च विधीयते । बर्हीं रज्ज्वा द्विरावेष्ट्य इध्मं च सकृदेव तु ॥ रज्जुमूलं द्विरावेष्ट्य तदग्रेण प्रदक्षिणम् । तदग्रशेषं रज्ज्वाधो द्वावध्युपरि धापयेत् ॥ आयामेनेध्मसमिधः प्रादेशद्वयमुच्यते । वितस्तिमात्रमथ वा संख्यया चैकविंशतिः ॥ त्रयः परिधयोऽत्र द्वे[2] चाघारसमिधावपि । अनूयाजसमिच्चैका आधाने दशपञ्च च ॥ एकविंशतिसंख्यैवमिध्मस्य परिगण्यते' इति । अत्रोपरिनिधानमायतनात्पश्चाद्भागे कुर्यात् । अथचार्थत आहापस्तम्बः—'देवंगमनसीत्यनधो निदधाति यथा प्रागुपसादयेत्' इति । उपरि निधाने श्रुतिः—'अनधः सादयति गर्भाणां धृत्या अप्रपादाय तस्माद्गर्भाः प्रजानामप्रपादुकाः उपरीव निदधाति उपरीव हि सुवर्गो लोकः सुवर्गस्य लोकस्य समष्ट्यै' इति । इति बर्हिःसंनहनादि ॥

---

पाठा०—१ एकसरा रज्जु । २ द्वेऽन्वाधानसमिधावपि ।

अथ कुशप्रशंसा । तत्र कारिकायां बर्हिरर्थं कुशमुष्टिं छिनत्तीत्युक्तं तत्कुशप्रशंसामाह गोभिलः—'कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः । कुशाग्रे शंकरं विद्यात्त्रयो देवा व्यवस्थिताः' इति । वसिष्ठस्तु—'कुशस्तु रौद्रो विज्ञेयः काशं ब्राह्मं तथा स्मृतम् । आर्षं दौर्वं समाख्यातं विश्वामित्रं च वैष्णवमि'ति । कुशाभावेतु दर्भान्तराण्युक्तानि स्मृत्यर्थसारे—'बर्हिः काशमयं ग्राह्यं न लभ्यन्ते कुशा यदि । दारुशीरमुचथ्यांश्च बल्वजमुञ्जार्जुनेधवः ॥ सुगन्धयोऽर्जुनादारुदूर्वा क्षीरद्रुमा अपि । यद्वा सर्वतृणेभ्योऽपि ग्राह्यं बर्हिर्यथेप्सितम् ॥ शुष्कमूलं कृष्णमूलं दुर्गन्धितृणवर्जितम्' इति । एतद्दर्भाहरणं स्वयमेव कुर्यात् । तथाचोक्तम्—'समित्पुष्पकुशादीनि श्रोत्रियः स्वयमाहरेत् । शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन्पतत्यधः' इति ॥ ❀ ॥ कुशोत्पाटनविधिमाह कौशिकः—'शुचौ देशे शुचिर्भूत्वा स्थित्वा पूर्वोत्तरामुखः । ओंकारेणैव मन्त्रेण कुशान्स्पृष्ट्वा द्विजोत्तमः ॥ विरिञ्चिना सहोत्पन्न परमेष्ठिनिसर्गज । नुद पापानि सर्वाणि दर्भ स्वस्तिकरो मम ॥ इमं मन्त्रं समुच्चार्य ततः पूर्वोत्तरामुखः । हुंफट्कारेण दर्भांस्तु सकृच्छित्त्वा समुद्धरेत्' इति ॥❀॥ कुशोत्पाटनकालमाहाङ्गिराः—'अहन्यहनि कर्मार्थं कुशोत्पाटः प्रशस्यते । न पूर्वेषु धृताः कुशा योग्याश्चैवोत्तरेषु च' इति । 'दर्शे श्रावणमासस्य समस्तोत्पाटिताः कुशाः । अयातयामास्ते दर्भा नियोज्याः स्युः पुनः पुनः' इति ॥ ❀ ॥ दर्भलक्षणमाह हारीतः—'अच्छिन्नाग्रान्पविनांश्च समूलान्कोमलाञ्छुभान् । पितृदेवजपार्थं तु समादद्यात्कुशान्बुधः' इति ॥❀॥ अत्र पवित्रविधिमाह हारितः—'जपहोमहरा ह्येते असुरा दिव्यरूपिणः । पवित्रकृतहस्तस्य विद्रवन्ति दिशो दश' इति । गोभिलः—'वज्रो यथा सुरेन्द्रस्य शूलो हस्ते हरस्य च । चक्रायुधं यथा विष्णोरेवं विप्रकरे कुशः' इति । शातात-

पस्तु—'सव्यापसव्ये कुर्वीत सपवित्रकरो बुधः' इति। अत्रिरपि—'उभाभ्यामेव पाणिभ्यां विप्रैर्दर्भपवित्रके। धारणीये प्रयत्नेन ब्रह्मग्रन्थिसमन्विते' इति ॥ ❀ ॥ ब्रह्मग्रन्थिलक्षणमुक्तं गरुडपुराणे—अस्त्यन्यो वैष्णवो मार्गो ब्रह्ममार्गविनिर्मितः। सकृत्प्रदक्षिणीकृत्य पवित्रमभिधीयते। तद्ब्रह्मग्रन्थिमत्प्रोक्तं पवित्रं वेदवेदिभिः' इति। पवित्रकर्तुरभिमुखप्रदेशो ब्रह्ममार्गः। अन्यस्तु—'अङ्गुष्ठं धर्षयेदूर्ध्वं तर्जन्यां तु पुनः पुनः। ज्ञानमुद्रामधः कृत्वा कूर्चेतद्ग्रन्थिरिष्यते' इति ॥ पवित्रे दर्भसंख्या तत्रैव प्रोक्ता—'सप्तभिः कुशपिञ्जूलैः कुर्याद्ब्रह्मपवित्रकम्। चतुर्भिः क्षत्रियस्यैव [1]त्रिभिः कार्यं तथा विशः ॥ द्वाभ्यां शूद्रस्य विहितमान्तराणां तथैव च' इति। मार्कण्डेयस्तु—'चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम्। एकैकन्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम् ॥ सर्वेषां वा भवेद्द्वाभ्यां पवित्रं ग्रन्थितं न वा। त्रिभिस्तु शान्तिकं कार्यं पौष्टिकं पञ्चभिस्तथा ॥ चतुर्भिरभिचाराख्यं कुर्वन्कुर्यात्पवित्रकम्' इति ॥❀॥ अत्र हैमपवित्रप्रशंसोच्यते। हेमाद्रौ—अन्यानि च पवित्राणि कुशदूर्वात्मकानि च। हेमात्मकपवित्रस्य एकां नार्हन्ति वै कलाम्' इति।

दर्भान्विशेषतो ग्राह्याग्राह्यानाह। भरद्वाजस्तु—'[3]नदीतीरेऽब्धितीरेऽद्रौ तीर्थे क्षेत्रे च कानने। जातः कुशः समस्तासु क्रियासु श्रेष्ठ उच्यते ॥ पाण्डुरारुणपीताः स्युर्विप्रराड्वैश्यभूमयः। कृष्णा शुपलभूरन्या भूमयः संकराः स्मृताः ॥ द्विजो वैश्यो नृपः शूद्र इत्ययं साचतुर्विधः। गौरपीतारुणश्यामसुमनोभिर्यथाक्रमम् ॥ पुमान्स्त्री क्लीब इत्येवं तत्रापि त्रिविधः स्मृतः। तस्माज्जातिक्रियास्वेव

पाठा०—१ चतुर्भिस्तु तथा। २ हेमपवित्रकमिदं पञ्चगुञ्जात्मकषोडशमाषपरिमितमशीतिगुञ्जात्मकं कार्यमित्यन्यत्र। ३ नदीतीराब्धितीरादौ।

प्रयोक्तव्याः फलार्थिभिः ॥ क्लीबो नहि प्रयोक्तव्यः स्त्रीपुंकर्मणि जातुचित् । स्त्रीपुंसावेव सर्वत्र प्रयोक्तव्यौ च लाभतः ॥ समन्ताद्धूसरो गाढः पुष्पश्चन्दनः कुशः । समस्तकर्मसु श्रेष्ठः सुमान्योऽसौ फलप्रदः ॥ समन्ततो हरित्स्निग्धः कुशः कोमलपत्रकः । कुशः स योषिदित्युक्तस्तत्कर्मसु शुभप्रदः ॥ ह्रस्वोऽसौम्यस्तु मलिनः कुशो यः स्तचकाकृतिः । स नपुंसक इत्युक्तः सर्वकर्मसु निन्दितः ॥ वल्मीकस्थः श्मशानस्थ ऊपरस्थस्तरूद्भवः । अन्त्यजात्यालयान्तस्थः कुशः कर्मस्वशोभनः ॥ सदा घनरसान्तस्थः सदाछायाप्रवर्धितः । अग्नीया धाम्नि चोप्तश्च कुशः कर्मस्वशोभनः ॥ हीनाग्रकः स्वयं शुष्कः शुष्काग्रः कृमिदुष्टकः । भिन्नाग्रकः सकुसुमः कुशः कर्मस्वशोभनः ॥ पलाशाश्वत्थखदिरवटवृक्षसमीपगः । बिल्ववैकङ्कतान्तस्थः प्रशस्तः स कुशः स्मृतः ॥ अनोकहानामन्येषां समयाभूसमुद्भवः । छायाश्रितोपि हि कुशो मध्यमः सर्वकर्मसु ॥ स्नात्वा संध्योपासनादि नित्यकर्म समाप्य च । नित्यहोमं ततः कृत्वा तस्मिन्सप्तार्चिषि द्विजः ॥ दात्रं प्रणवसंयुक्तं व्याहृत्या च समस्तया । निष्क्रम्य भवनात्प्राचीमुदीचीमपि वा दिशम् ॥ निष्क्रामेदुक्तदेशेषु यत्रास्ति कुशसंचयः । तत्र गत्वा सचरणौ हस्तौ प्रक्षाल्य वाग्यतः ॥ आचम्य सुमनाः सम्यक्प्राणायामं समाचरेत् । ततोऽनलमिनं वायुं यमं वरुणमश्विनौ ॥ ओषधीशं शचीनाथं विश्वान्देवान्सरस्वतीम् । देवानृषीन्पितृन्स्कन्दं गुरुं गणपतिं ततः ॥ वसून्रुद्रांस्तथादित्यान्ब्रह्माणं विष्णुमीश्वरम् । वेदांश्च हृदये ध्यायन्नेतान्देवान्पृथक्पृथक् ॥ ततो दात्रेण पूर्वास्य उदगास्योऽथवा कुशान् । मुष्टिमात्रोपरिष्टात्तु छिन्द्यात्प्रणवमुच्चरन् ॥ प्रेतक्रियार्थं पित्र्यर्थमभिचारा-

संस्कारप्र.
अग्निमुखं.

॥ ३५ ॥

पाठा०—१ चोदित, नोदित. ।

र्थकं तथा । दक्षिणाभिमुखश्छिन्द्यात्प्राचीनावीतको द्विजः ॥ हीनाग्रपूर्वकांस्त्यक्त्वा कुशान्प्राग्द्विजसत्तमः । अन्यान्सलक्षणकुशान्संगृह्णीयात्प्रयत्नतः ॥ त्रिवृच्छुल्वं कुशैः कृत्वा प्रागग्रं वोदगग्रकम् । वितत्य च कुशानेतान्क्षिपेत्तस्मिन्यथा पुरा ॥ पश्चाच्छुल्वेन तेनैव कुशान्बध्वा दृढं यथा । प्रागग्रमुदगग्रं वा शुचौ देशे क्षिपेद्गृहे ॥ पित्रर्थमेकवच्छुल्वं विपरीतं वितत्य च । क्षिप्त्वा कुशांस्तथा बध्वा स्थापयेत्तान्पृथग्बुधः ॥ ततोऽनुपहतैरेतैः कुशैः कर्माणि बुद्धिमान् । श्रौतस्मार्तानि सर्वाणि कुर्वीत फलभाग्भवेत् ॥ शुनाऽशुद्धवराहेण मार्जारेणैकचक्षुपा । खरेण कुक्कुटेनैव स्पृष्टः कर्मरिपुः कुशः ॥ कपिना कृकलासेन पतितेनान्त्यजन्मना । भिषजा रोगिणा स्पृष्टः कुशः कर्मस्वशोभनः ॥ देवलेन च षण्ढेन व्रात्येनाज्ञातजन्मना । वर्ज्यः सूतकिना स्पृष्टः कुशोऽनुष्ठेयकर्मसु ॥ रक्तश्लेष्मादिभिः स्पृष्टः क्रियायुक्तः पुरा धृतः । उच्छिष्टजनसंस्पृष्टः कुशः कर्मविनाशकः ॥ सूतिकाऽत्रेयिका वेश्या ज्ञातपूर्वाभिसारिका । अन्याः सदोषा यास्ताभिः कुशः स्पृष्टः क्रियारिपुः ॥ आत्रेयिका गर्भिणी । दोषैरेवंविधैरन्यैरपि स्पृष्टः प्रमादतः । कुशः कर्मस्वयोग्यः स्यादाघ्रातः पशुभिस्तथा ॥ पिण्डकर्मणि ये युक्ताः कुशाश्च पितृतर्पणे । उन्छिष्टेऽपि च ये युक्तास्ते योग्या नहि कर्मसु ॥ दोषदुष्टान्कुशांस्त्यक्त्वा गुणयुक्तैः कुशैर्बुधः । श्रुतिस्मृत्युक्तकर्माणि कारयेत्कर्मसिद्धये ॥ आर्द्रः श्रेष्ठतमः कर्मस्वन्यः श्रेष्ठोऽपि चाकुशः । विश्वामित्राश्वबालौ द्वौ तथार्धावितरौ स्मृतौ ॥ विधिना स्वीकृतान्दर्भान्द्विजन्मान्यद्विजन्मना । अनुष्ठानाय चौर्येण नाहरेज्जातुचिद्बुधः ॥ तदनुज्ञां विना विप्रः कुशानाहृत्य तैर्यदि । कुर्यात्स्वकर्मानुष्ठानं तत्सर्वमफलं भवेत् ॥ कुर्यात्कुशैस्त्रिभिः सद्भिः पवित्रं वाथ पञ्चभिः । द्वाभ्यां वा शान्तिकाम्येषु सर्वकर्मसु शस्यते ॥

कुशैश्चतुर्भिरकुल्या पवित्रे धारयेदुभे । भुक्तिकर्मणि नाऽन्येषु द्विजन्माखिलकर्मसु ॥ चतुर्भिरभिचारेषु पितृकर्मणि चैकतः । तत्तत्कर्मानुरूपेण कृत्वा धृत्वा क्रियाश्चरेत् ॥ अत्रोक्तसंख्यापिञ्जूलान्येकीकृत्य समं यथा । मूलानि दक्षिणे हस्ते धृत्वाग्राण्यन्यपाणिना ॥ दक्षहस्तेन तद्वाममनुवर्त्य यथा दृढम् । एकीकृत्याथ मूलाग्राण्यनुवर्त्य प्रदक्षिणम् । तथैवाग्रेण चावेष्ट्य कुर्याद्ग्रन्थिं यथा दृढम् । पवित्रकरणं त्वेवमुदितं सर्ववेदिनाम् ॥ वलयं स्याद्कुलीमानं ग्रन्थिरेकाङ्गुलिप्रमः । चतुरङ्गुलमग्रं स्यादस्य स्थानमनामिका ॥ वलयग्रन्थिकाग्राणां ब्रह्मविष्णुमहेश्वराः । पवित्रस्य भवन्त्येते क्रमेणैवाधिदेवताः ॥ पूर्वोत्तरप्रकारेण कुर्यादेकेन बर्हिषा । पवित्रं पितृकार्येषु तत्समस्तेषु भाषितम् ॥ अन्यद्व्राह्मं यथापूर्वमनुवर्त्यैकबर्हिषा । कुर्यात्पवित्रं पित्र्ये स्याद्ग्रन्थिर्ब्रह्मपवित्रवत् ॥ मन्त्रेण धारयेद्विप्रः पवित्रं सर्वकर्मसु । मन्त्रं विना धृतं यत्तत्पवित्रमफलं भवेत् ॥ तस्मात्पवित्रे मन्त्राभ्यां धारयेदभिमन्त्र्य च । पवित्रवन्त इत्यादिमन्त्रद्वितयमस्य तु ॥ ऋषिर्ब्रह्मा तयोश्छन्दो जगती च बृहस्पतिः । देवता ब्रह्मविष्ण्वीशा अधिदेवा इति स्मृताः ॥ प्रणवस्तस्य मन्त्रः स्यात्समस्ता व्याहृतीस्तु वा । दद्यात्पवित्रमनयोरेकेन श्रुतिवर्जितः ॥ श्रुतिवर्जितः शूद्रः । पवित्रोक्तप्रकारेण हेम्ना कुर्यात्पवित्रकम् ॥ तद्धार्यममरैर्भूपैः शुचये मङ्गलाय च । अमरैर्भूसुरैः । श्रौतस्मार्तानि कर्माणि यावन्तीहोदितानि वै । तानि सर्वाणि कुर्वीत सपवित्रकरो द्विजः ॥ नित्ये नैमित्तिके वापि कर्मोपग्रहणे द्विजः । धृतं पवित्रं कर्मान्ते ग्रन्थिं मुक्त्वाथ तत्त्यजेत् ॥ कुशहस्तः पिबेत्तोयं कुशहस्तः समाचरेत् । सग्रन्थिकुशहस्तेन न कदाचिदुपस्पृशेत् ॥ मुक्त्वा ग्रन्थिं विमुच्याथ तेन पीत्वा जलं सह । पवित्रं तु त्यजेद्भूमौ तन्नाममे न आतुचित् ॥ विस्मृत्य यदि पाने तु पवित्रं विसृजेदधीः । प्राजापत्यं चरेत्कृच्छ्रं तत्किल्बिष-

विशुद्धये ॥ शमलप्रस्नोत्सृष्टौ चण्डालान्त्यजभाषणे । पवित्रं करशाखास्थं दक्षिणश्रवणे न्यसेत् ॥ गोपुच्छरोमभिः कृत्वा पूर्वाभिहितलक्षणम् । पवित्रं धारयेद्विप्रः कर्मोपक्रमणे सदा ॥ रोम्णां पवित्रकरणे नियमो न कुशेष्विव । कुशरज्ज्वोर्यथा स्थूलं प्रमाणं कारयेत्तथा ॥ कर्मान्ते पुनरादाय पवित्रद्वितयं द्विजः । शुचौ देशे विनिक्षिप्य दद्यादेतत्पुनः पुनः ॥ यद्युच्छिष्टाद्युपहतं पवित्रं चेच्छिदं यथा । तथैव ग्रन्थिमुत्सृज्य त्यजेदितरथा नहि ॥ रोमाणि मध्यमे बध्वा सुदृढं च कुशैः सह । हेमाङ्गुलीयकेनापि मार्जनं सर्वपापहम् ॥ रोमसंग्रहणे विप्रप्रमुखानां द्विजन्मनाम् । धवलारुणपीताः स्युर्गावस्तत्र यथाक्रमम् ॥ एतासामपि सर्वासां प्रशस्ता कपिला गवाम् । सर्वेषां विप्रमुख्यानां रोमसंग्रहणे भृशम् ॥ अञ्जनाभा विजीर्णा गौर्वन्ध्यजातिरकर्णका । नवप्रसूता सरुजा चित्रा कृष्णा न शोभना ॥ सम्योक्तवर्णा पुनतिः सवत्सा शान्तविग्रहा । संपूर्णावयवा या गौः सोत्तमा रोमसंग्रहे ॥ स्नात्वा सम्यग्द्विजो दात्र स्वाग्रौ निक्षिप्य पूर्ववत् । गा तु प्रदक्षिणीकृत्य मन्त्रेण प्रणमेदथ ॥ रुद्रमातर्वसुसुते आदित्यानां स्वसस्तथा । सर्वदेवात्मके गौस्त्वा नौम्यहं त्वं प्रसीद मे ॥ मन्त्रेणानेन नत्वा गां पुच्छरोमाणि दान्ततः । भव्यानि छेदयेद्विप्रः पवित्रार्थं शुभानि च ॥ गोपुच्छरोमकैर्दर्भैः पवित्रकरणक्रमः । आख्यातोऽनन्तरं वच्मि कूर्चस्य करणक्रमम् ॥ नवभिः सप्तभिर्दर्भैः पञ्चभिः क्रमशः स्मृतः । कूर्चः श्रेष्ठो मध्यमश्च कनीयान्स इतीरितः ॥ तद्ग्रन्थिर्द्व्यङ्गुला ज्ञेया तदूर्ध्वं चतुरङ्गुलम् । षोडशाङ्गुलमायाममधस्ताच्च नियोजयेत् ॥ पवित्रे प्राग्यथा प्रोक्ता ग्रन्थिस्तेन क्रमेण तु । ग्रन्थिं दद्याद्विजः कूर्चे तद्विधा स्यात्पवित्रवत् ॥ आसने देवतादीनामपि च स्नानवारिणि । पञ्चगव्यप्रयोगे च द्विजः कूर्चं प्रयोजयेत् ॥ अमृतेषु च गव्येषु पञ्चसु स्नानकर्मणि । पुण्याहकुम्भतोयेषु

द्विजः कूर्चं प्रयोजयेत् ॥ प्रागग्रमुदगग्रं वा स्थापयेत्कूर्चमासने । ऋष्यर्थं देवतार्थं च पित्रर्थं दक्षिणाग्रकम्' इति ॥ ॥

अथ दर्भव्यय उक्तः संग्रहे—'दर्भाणां व्ययमाचष्टे देवकर्मणि सर्वदा । हस्तयोरुभयोर्द्वौद्वावागमने च तथैव च ॥ अग्नेश्चतसृभिर्दिक्षु स्तरणे षोडश स्मृताः । द्वौचार्थौ च तथा बर्हिःप्रस्तरार्थं तथैव च ॥ इध्मसंनहने कुर्याच्चतुर्दर्भैः क्रमात्ततः । समे द्वे त्र्यौल्यदैर्घ्याभ्यां पवित्रे च तथा भवेत् ॥ प्रणीतासन आच्छादे त्रयस्त्रय उदीरिताः । अष्टात्रिंशतिदर्भैस्तु ब्रह्मार्थब्राह्मणाय च ॥ पर्यग्निकरणे चैव कुर्यात्पञ्चशलाकिकाः । चतुर्भिश्च चतुर्भिश्च स्रुक्स्रुवौ प्रति तापयेत्' इति ॥ अत्र बर्हिर्दर्भसंख्या इध्मसंनहनदर्भसंख्या च आश्वलायनग्रन्थविरोधित्वाच्छाखान्तरविषया । आश्वलायनकारिकाकारेणतु बर्हिरर्थं मुष्टिप्रमाणा दर्भा उक्ताः । इध्मसंनहनरज्जुकरणे त्वाश्वलायनाचार्येण 'रज्जुर्द्वादशभिर्दर्भै'रित्यादिना षट्त्रिंशद्दर्भा उक्तास्तसात्तथैव कर्तव्येति । इति कुशप्रशंसा ।

अथेध्मयोग्यवृक्षानाह । मरीचिः—'पलाशः खदिरोऽश्वत्थः शमी वट उदुम्बरः । अपामार्गोऽर्कदूर्वाश्च कुशाश्चेत्यपरे विदुः ॥ दश द्वादशकाङ्गुल्यः समाः पञ्चदश स्मृताः । नात्यङ्गुष्ठाः सत्वचश्च सार्द्रा इध्म इहोत्तमाः' इति । ब्रह्मपुराणेपि—'शमीपलाशन्यग्रोधप्लक्षवैकङ्कतोद्भवाः । अश्वत्थोदुम्बरौ बिल्वश्चन्दनः सरलस्तथा ॥ सालश्च देवदारुश्च खदिरश्चैव यज्ञियाः' इति ॥ ❀ ॥ समिल्लक्षणं स्मृत्यर्थसारेपि—'सत्वचः समिधः कार्या ऋज्व्यः श्लक्ष्णाः समास्तथा । शस्ता दशाङ्गुलास्तास्तु द्वादशाङ्गुलिकास्तथा ॥ आर्द्राः पक्वाः समाश्चैव तर्जन्यङ्गुलिवर्तुलाः । अपाटिता अद्विशाखाः कृमिदोषविवर्जिताः ॥ ईदृशीर्होमयेत्प्राज्ञः

पाठा०—१ अपामार्गश्च दूर्वाश्च । २ होमयेत्प्राज्ञ ।

प्राप्नोति विपुलां श्रियम् । समित्पवित्रं वेदश्च त्रयः प्रादेशसंमिताः । इध्मस्तु द्विगुणः कार्यस्त्रिगुणः परिधिः स्मृतः ॥ स्मार्ते प्रादेश इध्मो वा त्रिगुणः परिधिः स्मृतः' इति ॥ ❁ ॥ अथ वर्ज्यसमिधः—'वनस्पतीनां सर्वेषामिध्मः कार्यो विशेषतः । तत्रापि वर्जयेद्विद्वान्कोविदारविभीतकान् ॥ कपित्थामलकौ राजवृक्षं शाकद्रुमं तथा । नीपं निम्बं करञ्जं च तिलकं शाल्मलीमपि ॥ दग्धाः कृशास्तथा स्थूला ह्रस्वा दीर्घाश्च वर्जयेत्' इति । व्यासः—'विशीर्णायुःक्षयं कुर्याद्द्विशाखा व्याधिसंभवम् । ह्रस्वया मृत्युमाप्नोति वक्रा विघ्नकरी तथा ॥ पाटिता हरते लक्ष्मीं कृशा बान्धवहानिदा । द्विशाखा मैत्र्यहानिश्च कीटदुष्टार्थनाशिनी ॥ द्वेषं प्रकुर्ते दीर्घा प्राणभ्यो विस्त्वचः स्मृताः' इति । कात्यायनस्तु—'न सपर्णा समित्कार्या होमकर्मणि जानता' इति । इतीध्मयोग्यवृक्षाः समिल्लक्षणं च ॥

अथ परिसमूहनादि । अत्र कारिका—'पाणिना सोदकेनाग्रे समन्तात्परिमार्जनम् । तत्समूहनमत्रेष्टं जयन्तवचनं यथा ॥ अपराजितां दिशमारभ्य तत्पर्यन्तं सोदकेन पाणिना प्रदक्षिणं त्रिःपरिमार्जनं परिसमूहनम् । 'सुसमिद्धस्याग्नेः सोदकेन पाणिना यत्प्रदक्षिणं त्रिःपरिमार्ष्टि तत्पर्युक्षणम्' इति ॥ ❁ ॥ अथ परिस्तरणम् । कारिका—'दिक्षु पूर्वाप्युदक्संस्था प्राच्यादिषु परिस्तृतिः । कांश्चिदुत्तरतो नास्ति न तिर्यक्परिपिञ्चति ॥ पर्यूहपरिषेकौ स्तः सर्वतांस्त्रिभिरम्भसा' इति । इदमत्र गृह्यम्—'परिसमुह्य परिस्तीर्य पुरस्ताद्दक्षिणतः पश्चादुत्तरत इत्युदक्संस्थं तूष्णीं पर्युक्षणम्' इति । अस्यार्थः—परिसमूहनंनामाग्नेः समन्तात्परिमार्जनम् ।

---

पाठा०—१ द्विदत्र व्याधिसंभवम् । २ अग्रमध्ये 'अग्ने षोडशभिर्दर्भैः पूर्वादिषु परिस्तृतिः' । स्तृणेद्दक्षिणत कांश्चिद्गावस्थापि कर्मसु' इति क्वचित् ।

द्विजः कूर्चं प्रयोजयेत् ॥ प्रागग्रमुदगग्रं वा स्थापयेत्कूर्चमासने । कव्यर्थं देवतार्थं च पित्रर्थं दक्षिणाग्रकम्' इति¹ ॥ ॥ संस्कारम.

अथ दर्भव्यय उक्तः संग्रहे—'दर्भाणां व्ययमाचष्टे देवकर्मणि सर्वदा । हस्तयोरुभयोर्द्वौद्वावासने च तथैव च ॥ अग्नेश्चतसृभिर्दिक्षु स्तरणे षोडश स्मृताः । द्वौचाष्टौ च तथा बर्हिःप्रस्तरार्थं तथैवच ॥ इध्मसंनहने कुर्याच्चतुर्दर्भैः क्रमात्ततः । समे द्वे स्थौ- अग्निमुखं.
ल्यदर्व्याभ्यां पवित्रे च तथा भवेत् ॥ प्रणीतासन आच्छादे त्रयस्त्रय उदीरिताः । अष्टाविंशतिदर्भैस्तु ब्रह्मार्थब्राह्मणाय च ॥ पर्यग्निकरणे चैव कुर्यात्पञ्चशलाकिकाः । चतुर्भिश्च चतुर्भिश्च स्रुक्स्रुवौ प्रति तापयेत्' इति ॥ अत्र बर्हिर्दर्भसंख्या इध्मसंनहनदर्भसंख्या च आश्वलायनग्रन्थविरोधित्वाच्छाखान्तरविषया । आश्वलायनकारिकाकारेणतु बर्हिरर्थं मुष्टिप्रमाणा दर्भा उक्ताः । इध्मसंनहन-रज्जुकरणे त्वाश्वलायनाचार्येण 'रज्जुर्द्वादशभिर्दर्भै'रित्यादिना षट्त्रिंशद्दर्भा उक्तास्तस्मात्तथैव कर्तव्येति । इति कुशप्रशंसा ।

अथेध्मयोग्यवृक्षानाह । मरीचिः—'पलाशः खदिरोऽश्वत्थः शमी वट उदुम्बरः । अपामार्गार्कदूर्वाश्च कुशाश्चेत्यपरे विदुः ॥ दश द्वादशकाङ्गुल्यः समाः पञ्चदश स्मृताः । नात्यङ्गुष्ठाः सत्वचश्च साद्रा इध्म इहोत्तमाः' इति । ब्रह्मपुराणेपि—'शमीपलाशन्यग्रोधप्लक्षवैकङ्कतोद्भवाः । अश्वत्थोदुम्बरौ बिल्वश्चन्दनः सरलस्तथा ॥ सालश्च देवदारुश्च खदिरश्चैव यज्ञियाः' इति ॥ ❀ ॥ समिल्लक्षणं स्मृत्यर्थसारेपि—'सत्वचः समिधः कार्या ऋज्व्यः श्लक्ष्णाः समास्तथा । शस्ता दशाङ्गुलास्तास्तु द्वादशाङ्गुलिकास्तथा ॥ आर्द्राः पक्वाः समाश्चैव तर्जन्यङ्गुलिवर्तुलाः । अपाटिता अद्विशाखाः कृमिदोषविवर्जिताः ॥ ईदृशीर्होमयेत्प्राज्ञः

पाठा०—१ अपामार्गश्च दूर्वाश्च । २ होमयन्प्राज्ञ ।

प्राप्नोति विपुलां श्रियम् । समित्पवित्रं वेदश्च त्रयः प्रादेशसंमिताः । इध्मस्तु द्विगुणः कार्यस्त्रिगुणः परिधिः स्मृतः ॥ सार्द्रे प्रादेश इध्मो वा त्रिगुणः परिधिः स्मृतः' इति ॥ ❀ ॥ अथ वर्ज्यसमिधः—'वनस्पतीनां सर्वेषामिध्मः कार्यो विशेषतः । तत्रापि वर्जयेद्विद्वान्कोविदारविभीतकान् ॥ कपित्थामलकौ राजवृक्षं शाकद्रुमं तथा । नीपं निम्बं करञ्जं च तिलकं शाल्मलीमपि ॥ दग्धाः कृशास्तथा स्थूला ह्रस्वा दीर्घाश्च वर्जयेत्' इति । व्यासः—'विशीर्णायुःक्षयं कुर्याद्विशाखा व्याधिसंभवम् । ह्रस्वया मृत्युमाप्नोति वक्रा विघ्नकरी तथा ॥ पाटिता हरते लक्ष्मीं कृशा बान्धवहानिदा । द्विशाखा मैत्र्यहानिश्च कीटदुष्टार्थनाशिनी ॥ द्वेषं प्रकुरुते दीर्घा प्राणघ्नो विसचः स्मृताः' इति । कात्यायनस्तु—'न सपर्णा समित्कार्या होमकर्मणि जानता' इति । इतीध्मयोग्यवृक्षाः समिल्लक्षणं च ॥

अथ परिसमूहनादि । अत्र कारिका—'पाणिना सोदकेनाग्रे समन्तात्परिमार्जनम् । तत्समूहनमत्रेदं जयन्तवचनं यथा ॥ अपराजितां दिशमारभ्य तत्पर्यन्तं सोदकेन पाणिना प्रदक्षिणं त्रिःपरिमार्जनं परिसमूहनम् । 'सुसमिद्धस्याग्नेः सोदकेन पाणिना यत्प्रदक्षिणं त्रिःपरिमार्ष्टि तत्पर्युक्षणम्' इति ॥ ❀ ॥ अथ परिस्तरणम् । कारिका—'दिक्षु पूर्वाप्युदक्संस्था प्राच्यादिषु परिस्तृतिः । क्वाचिदुत्तरतो नास्ति न तिर्यक्परिपिञ्चति ॥ पर्यूहपरिषेकौ स्तः सर्वतस्त्रिभिरम्भसा' इति । इदमत्र गृह्यम्—'परिसमुह्य परिस्तीर्य पुरस्ताद्दक्षिणतः पश्चादुत्तरत इत्युदक्संस्थं तूष्णीं पर्युक्षणम्' इति । अस्यार्थः—परिसमूहनंनामाग्नेः समन्तात्परिमार्जनम् ।

पाठा०—१ द्विदला व्याधिसंभवम् । २ अत्रमध्ये 'अग्नेः षोडशभिर्दर्भैः पूर्वादिषु परिस्तृतिः । स्तृणेद्दक्षिणतः क्वाचित्प्राक्स्थापि कर्मसु' इति क्वचित् ।

तच्चाग्निहोत्रवत् । ततः परिस्तीर्य पुरस्ताद्दक्षिणतः पश्चादुत्तरत इत्युदक्संस्थम् । उदक्संस्थवचनमेकैकस्यां दिश्युदक्संस्थताप्राप्त्यर्थम् । ततस्तूष्णीं पर्युक्षणं करोति । तूष्णींग्रहणं मन्त्रवर्जमन्ये धर्मा अग्निहोत्रदृष्टा भवन्तीत्येवमर्थम् । त्रिस्त्रिरेकैकं पुनः पुनरुदकमादायादावान्ते च कर्मणां पर्युक्षणम् । उभयत्र परिसमूहनपूर्वकत्वमित्यत्र पुनः परिसमूहनविधानं मध्ये परिस्तरणविध्यर्थम् ॥ एतस्मिन्काले उत्तरतोऽग्नेरपः प्रणयति चमसेन कांस्येन मृन्मयेन वा उत्तरत्र निनयनदर्शनादिति । गृह्यपरिशिष्टेपि—'अथ सोदकेन पाणिना प्रागुदीचीमारभ्य प्रदक्षिणमग्निं त्रिःपरिसमुह्य प्रादेशमात्रैर्दर्भैः प्रदक्षिणं प्राच्यादिषु प्रतिदिशमुदक्संस्थं परिस्तृणीयाद्दक्षिणोत्तरयोः संधिषु मूलान्यग्रैराच्छादयेद्द्राघिष्ठान्वा दर्भांस्तथा स्तृणीयादुत्तरतः पात्रासादनाय दक्षिणतो ब्रह्मासनार्थं कांश्चिद्दर्भानास्तीर्याग्निं पर्युक्षेदपोऽभिसंस्कारः' इति । द्राघिष्ठान् दीर्घतमान् । भगवांस्तु—'उच्यते सुसमिद्धस्य सोदकेनैव पाणिना । प्रदक्षिणं त्रिःसंमार्ष्टीत्येतत्परिसमूहनम् ॥ प्रादेशमात्रैर्दर्भैरग्रैर्बाहुमात्रैरथापि वा । परितोऽग्नेर्यत्स्तरणं परिस्तरणमुच्यते ॥ यदि प्रादेशमात्राः स्युश्चतुर्भिस्तृणमुष्टिभिः । परिस्तृणीयात्प्रागग्रैश्चतुर्दिक्षु यथाक्रमम् ॥ पुरस्ताद्दक्षिणतः पश्चादुत्तरतः क्रमात् । उदक्संस्थं दिशिदिशि दक्षिणोत्तरयोस्तृणैः ॥ तैरग्रैस्तीर्यमाणानां तृणमूलानि छाद्य च । अथ दीर्घैः स्तृणीयाच्चेद्दक्षिणोत्तरयोर्दिशोः । प्रादेशमात्रास्तत्रयायात्सर्वे प्रादेशसंमिताः ॥ चतुर्दिक्षु च वा दीर्घैः पूर्वपश्चिमयोर्दिशोः । दक्षिणान्युत्तराणि स्युरधस्तादुत्तराणि तु ॥ ऋत्विग्ब्रह्मा वृतश्चेत्स्यादग्नेर्दक्षिणतस्तृणैः । तदासनार्थं प्राकूलैस्तृणानां मुष्टिसंमितैः ॥ प्रणीतासादनार्थं च पात्राणां सादनाय

पाठा०—१ समार्ष्टि यत्तत् ।

च । संमीर्योत्तरतो वह्नेः पर्युक्षेच्चं हुताशनम् ॥ पाणिनोदकमादाय प्रागुदक् त्रिःप्रदक्षिणम् । आरभ्योक्षति यत्तूष्णीमाहुः पर्युक्षणं बुधाः' इति ॥ ❀ ॥ अत्र परिषेकादेर्देशक्रममाह कात्यायनः—'अष्टाङ्गुलिमिते देशे परीषेचनमाचरेत् । नवाङ्गुलिप्रमाणे तु विधिना परिधीन्न्यसेत् ॥ दशाङ्गुलिप्रमाणे तु परिस्तीर्य कुशान्क्रमात् । एकादशाङ्गुले देशे गन्धपुष्पाक्षतादिभिः' इति । इति परिसमूहनादि ॥

अथ पात्रासादनादि । तत्र कारिका—'दर्भपुलरतो द्वन्द्वं पात्राणि न्युब्जि सादयेत् । तत्क्रमं भगवानाह श्लोकेनैकेन गृह्यकृत् ॥—स्थालीं चरोः प्रोक्षणभजनं च दर्वीस्रुवौ सादय दर्विहोमे । पात्रं प्रणीतार्थमथाज्यपात्रमिध्मं क्रमेण क्रमवित् कुशैश्च ॥ अस्यार्थः—दर्व्या क्रियमाणो होमो दर्विहोमः । सादयेति प्राप्तकाले लोट् । आसादनकालोऽयं प्राप्त इत्यर्थः । हे क्रमवित् यजमान, एवं क्रमेण पात्राण्यासादयेति योजनीयम् ॥ ❀ ॥ अथ पवित्रलक्षणमाह स एव—'अनन्तर्गर्भिणौ यौ तु कुशौ प्रादेशसंमितौ । अनखच्छेदितौ साग्रौ तौ पवित्राभिधानकौ ॥ अग्रच्छिन्नाग्रयोर्नैव त्यागः सूत्रे प्रशस्यते' इति । अत्र विशेषमाहापस्तम्बः—'समावप्रच्छिन्नाग्रौ प्रादेशमात्रौ पवित्रे कुरुतः' इति । समौ स्थौल्येन समाविति । रुद्रदत्तः—'उत्ताने प्रोक्षणार्थेऽपो निनयेत्सपवित्रके । पवित्राभ्यां त्रिरुत्पूय त्रिः प्रोक्ष्योर्ध्वबिलानि तु' इति । अत्र गृह्यपरिशिष्टम्—'अथ तेषु पवित्रेषु पात्राणि न्युब्जिलानि द्वन्द्वं प्राक्संस्थान्युदगपवर्गं प्रयुनक्ति प्रोक्षणीपात्रस्रुवौ चममाज्यपात्रे इध्माबर्हिषी चेत्याज्यहोमेषु,

पाठा०—१ द्वे द्वे पात्राणि ।

तथा चरुस्थालीप्रोक्षणपात्रे दर्वीस्रुवौ चमसाज्यपात्रे इध्माबर्हिषी चेति दर्विहोमेषु, प्रोक्षणपात्रमुद्धृत्य पवित्रेऽन्तर्धायाप आसिच्य तूष्णीं ताः पवित्राभ्यां त्रिरुत्पूय पात्राण्युत्तानानि कृत्वेध्मं विस्रस्य पात्राणि ताभिरद्भिर्युगपत्रिः प्रोक्षेदेतत्पात्रासादनम्' इति । अत्राह भगवान्—'तृणेष्वधोमुखान्येव यज्ञपात्राणि सादयेत् । अन्यैश्च साधनैः सार्धं प्राक्संस्थानि यथाक्रमम् ॥ चरुप्रोक्षणयोः पात्रे स्रुवं जुह्वा तथैव च । प्रणीतापात्रमाज्यस्य पात्रेणेध्मं च बर्हिषा ॥ त्रिरद्भिः प्रोक्ष्य पात्राणि तूर्णः प्रच्छाद्य यज्ञियैः । कृत्वा पवित्रे आसिच्य वारि प्रोक्षणभाजने ॥ उत्पुनीयात्पवित्राभ्यामापस्तूर्णीं त्रिरेव तु । अङ्गुष्ठानामिकाभ्यां तु पाण्योरुत्तानयोः पृथक् ॥ गृहीत्वा मूलतूलाभ्यामित्युत्पवनमुच्यते । कृत्वोत्तानानि पात्राणि इध्मं विस्रस्य बन्धनात् ॥ अद्भिराभिः सह प्रोक्षेत्रिरन्यैर्यज्ञसाधनैः' इति ।

अथोपयुक्तपात्रप्रकृतिवृक्षा उच्यन्ते । स्मृत्यर्थसारे—'जुहूः पालाश्युपभृदाश्वत्थी वैकङ्कती ध्रुवा । यद्वा सर्वाः स्रुचः कार्या एतेषामन्यवृक्षतः ॥ शमीमय्यः स्रुचः कार्याः सर्वा वा मूर्ववृक्षजाः । तदलाभे यथालाभमन्ययज्ञियवृक्षजाः ॥ खादिरस्तु स्रुवः कार्यः शम्या प्राशित्रमेक्षणे । खादिरो मुसलः कार्यः पालाशः सादुलूखलः । मुख्याभावे तु सदृशं द्रव्यं प्रतिनिधीयते' इति । संग्रहेतु—'मृन्मयानि च पात्राणि तैजसान्मयानि वा । सर्वेषामेव पात्राणां शङ्खः शुक्तिश्च शस्यते ॥ तयोश्च शङ्ख उत्कृष्टो गृह्णीयाद्यज्ञकर्मणि । दारवाणि च कार्याणि यथाशक्त्यनुरूपतः ॥ पूर्णपात्रादयो ग्राह्याः शस्ता यज्ञद्रुमोद्भवाः । प्रशस्ताः

पाठा०—१ स्रुवेण प्रोक्षणीपात्रं प्रणीतापात्रमेतया । आज्यस्थाल्या सहेध्मं च बर्हिषा द्वन्द्वसादनम् । २ नाशिकैः । ३ मूलकूलाभ्या । ४ विस्रस्येध्मं च बन्धनात् ।

पूर्णपात्रार्थे दारुकांस्यमयौ मखे ॥ खादिरेण स्रुवः कार्यः पालाशेन जुहूर्भवेत् । लक्ष्यदेशे विलौ, स्नातामन्यैर्वा यज्ञियैर्द्रुमैः ॥ तदलाभे पलाशस्य पर्णाभ्यां हूयते हविः । पलाशपर्णाभावे तु पर्णैर्वा पिप्पलोद्भवैः ॥ पलाशस्य पर्णाभ्यामित्यत्र मध्यमपर्णेनेति वेदितव्यम् । 'मध्यमेन पर्णेन जुहोति' इति श्रुतेः । चमसं वा प्रणीतायाः कांस्यपात्रमथापि वा' इति ।

पात्रप्रमाणमाह । अत्रिः—'अङ्गुष्ठपरिणाहाढ्यं दण्डं कुम्भकभूषितम् । पुष्करं पुष्कराग्रे तु मध्यरेखोन्छ्रिताङ्कितम् ॥ सुवस्रुवोऽर्धकरौ कार्यौ दण्डं वृत्तं सुशोभनम् । अङ्गुष्ठपरिणाहाढ्यं स्रुतियन्त्रविनिर्मितम् ॥ द्व्यङ्गुलं मूलदेशे तु कुम्भपुष्करमूलकम् । गण्डिकां तद्विजानीयात्रिभागेन तु पुष्करम् ॥ वेदिः सप्ताङ्गुला कार्या पञ्चवृत्तं प्रकल्पयेत् । प्रणिखातं समं कार्यमग्रं कुर्यात्त्यङ्गुलम् ॥ गोकर्णाकृति शोभाढ्यं कनिष्ठाङ्गुलपञ्चकम् । घृतनिर्ष्क्रमा कार्यं यवत्रयसुरेखितम् ॥ एवं स्रुचं स्रुवं कृत्वा ताभ्यां होमाः सुखावहाः' इति । संग्रहेपि—'आयामं पञ्चधा कृत्वा द्विभागं पात्रमुच्यते । त्रिभागं दण्डमित्याहुरेतदायामलक्षणम् ॥ पात्रायामार्धतः पात्रविस्तारश्च तदर्धतः । ग्रीवाविस्तारकस्यार्धोद्बिलस्योच्छ्राय इष्यते ॥ विस्ताराद्द्विगुणं पात्रं ग्रीवाविस्तारमर्धतः' इति । अपिच 'स्रुवस्रुचोः प्रमाणं च लक्षणं सम्यगुच्यते । अरत्निमात्रमायामस्तयोर्मध्ये स्रुवस्य तु ॥ त्रिलमङ्गुलमानेन अन्तर्व्यङ्गुलमानतः । मूले द्व्यङ्गुलिमात्रे तु द्वे लेखे विलिखेत्ततः ॥ दर्व्या विशेषतश्चैव दण्डस्त्वष्टाङ्गुलो भवेत् । चतुरङ्गुलमानेन ग्रीवां कुर्यात्ततः परम् ॥ पञ्चाङ्गुलप्रमाणेन विलं कुर्यात्तु सर्वतः । विलाच्च पूर्वभागे तु पुच्छं सप्ताङ्गुलं भवेत् ॥ सर्वतो विलमाख्यातं कुर्यात्त्र्यङ्गुलमानतः ।

पाठा०—१ स्रुवस्रुचोऽर्धकराविख्याप सधि । करावौस्रुवस्रुवाविति स्यात् । २ सुशोभितम् । ३ एकग तद्विजानीयात् । ४ निष्क्रमण कार्यं । ५ विस्तारस्तस्यार्धतः ।

तथा चरुस्थालीप्रोक्षणपात्रे दर्वीस्रुवौ चमसाज्यपात्रे इध्माबर्हिषी चेति दर्विहोमेषु, प्रोक्षणपात्रमुद्धृत्य पवित्रेऽन्तर्धायाप आसिच्य तूष्णीं ताः पवित्राभ्यां त्रिरुत्पूय पात्राण्युत्तानानि कृत्वेध्मं विस्रस्य पात्राणि ताभिरद्भिर्युगपत्त्रिः प्रोक्षेदेतत्पात्रासादनम्' इति । अत्राह भगवान्—'तृणेष्वधोमुखान्येव यज्ञपात्राणि सादयेत् । अन्यैश्च साधनैः सार्धं प्राक्संस्थानि यथाक्रमम् ॥ चरुप्रोक्षणयोः पात्रे स्रुवं जुहूं तथैव च । प्रणीतापात्रमाज्यस्य पात्रेणेध्मं च बर्हिषा ॥ त्रिरद्भिः प्रोक्ष्य पात्राणि तृणैः प्रच्छाद्य यज्ञियैः । कृत्वा पवित्रे आसिच्य वारि प्रोक्षणभाजने ॥ उत्पुनीयात्पवित्राभ्यामापस्तूष्णीं त्रिरेव तु । अङ्गुष्ठानामिकाभ्यां तु पाण्योरुत्तानयोः पृथक् ॥ गृहीत्वा मूलतूलाभ्यामित्युत्पवनमुच्यते । कृत्वोत्तानानि पात्राणि इध्मं विस्रस्य बन्धनात् ॥ अद्भिराभिः सह प्रोक्षेत्त्रिरन्यैर्यज्ञसाधनैः' इति ।

अथोपयुक्तपात्रप्रकृतिवृक्षा उच्यन्ते । स्मृत्यर्थसारे—'जुहूः पालाश्युपभृदाश्वत्थी वैकङ्कती ध्रुवा । यद्वा सर्वाः स्रुचः कार्या एतेषामन्यवृक्षतः ॥ शमीमय्यः स्रुचः कार्याः सर्वा वा भूर्जवृक्षजाः । तदलाभे यथालाभमन्ययज्ञियवृक्षजाः ॥ खादिरस्तु स्रुवः कार्यः शम्या प्राशित्रमेक्षणे । खादिरो मुसलः कार्यः पालाशः स्यादुलूखलः । मुख्याभावे तु सदृशं द्रव्यं प्रतिनिधीयते' इति । संग्रहेतु—'मृन्मयानि च पात्राणि तैजसाश्ममयानि वा । सर्वेषामेव पात्राणां शङ्खः शुक्तिश्च शस्यते ॥ तयोश्च शङ्ख उत्कृष्टो गृह्णीयाद्यज्ञकर्मणि । दारवाणि च कार्याणि यथाशक्त्यनुरूपतः ॥ पूर्णपात्रादयो ग्राह्याः शस्ता यज्ञदुमोद्भवाः । प्रशस्ताः

पाठा०—१ स्रुवेण प्रोक्षणीपात्र प्रणीतापात्रमेतया । आज्यस्थाल्या सहेध्मं च बर्हिषा द्वन्द्वसादनम् । २ याज्ञिकैः । ३ मूलतूलाभ्या । ४ विस्रस्येध्मं च बन्धनात् ।

पूर्णपात्रार्थे दारुकांस्यमयौ मखे ॥ खादिरेण स्रुवः कार्यः पालाशेन जुहूर्भवेत् । तत्प्रदेशे विलौ स्यातामन्यैर्वा यज्ञियैर्द्रुमैः ॥ तदलाभे पलाशस्य पर्णाभ्यां हूयते हविः । पलाशपर्णाभावे तु पर्णैर्वा पिप्पलोद्भवैः ॥ पलाशस्य पर्णाभ्यामित्यत्र मध्यमपर्णेनेति वेदितव्यम् । 'मध्यमेन पर्णेन जुहोति' इति श्रुतेः । चमसं वा प्रणीतायाः कांस्यपात्रमथापि वा' इति ।

पात्रप्रमाणमाह । अत्रिः—'अङ्गुष्ठपरिणाहाढ्यं दण्डं कुम्भकभूषितम् । पुष्करं पुष्कराग्रे तु मध्यरेखोच्छ्रिताङ्कितम् ॥ स्रुक्स्रुवोऽर्धकरौ कार्यौ दण्डं वृत्तं सुशोभनम् । अङ्गुष्ठपरिणाहाढ्य स्रुतियन्त्रविनिर्मितम् ॥ द्व्यङ्गुलं मूलदेशे तु कुम्भपुष्करमूलकम् । गण्डिकां तद्विजानीयात्त्रिभागेन तु पुष्करम् ॥ वेदिः सप्ताङ्गुला कार्या पञ्चवृत्तं प्रकल्पयेत् । प्रणिखातं समं कार्यमग्रं कुर्यात्त्र्यङ्गुलम् ॥ गोकर्णाकृति शोभाढ्यं कनिष्ठाङ्गुलपञ्चकम् । घृतनिर्ष्कप्रमा कार्यं यवत्रयसुरेखितम् ॥ एवं स्रुचं स्रुवं कृत्वा ताभ्यां होमाः सुखावहाः' इति । संग्रहेपि—'आयामं पञ्चधा कृत्वा द्विभागं पात्रमुच्यते । त्रिभागं दण्डमित्याहुरेतदायामलक्षणम् ॥ पात्रायामार्धतः पात्रविस्तारश्च तदर्धतः । ग्रीवाविस्तारकस्यार्धाद्बिलस्योच्छ्राय इष्यते ॥ विस्ताराद्द्विगुणं पात्रं ग्रीवाविस्तारमर्धतः' इति । अपिच 'स्रुवस्रुचोः प्रमाणं च लक्षणं सम्यगुच्यते । अरत्निमात्रमायामस्तयोर्मध्ये स्रुवस्य तु ॥ बिलमङ्गुलमानेन अन्तर्द्व्यङ्गुलमानतः । मूले द्व्यङ्गुलिमात्रे तु द्वे लेखे विलिखेत्ततः ॥ दर्व्या विशेषतश्चैव दण्डस्त्वष्टाङ्गुलो भवेत् । चतुरङ्गुलमानेन ग्रीवां कुर्यात्ततः परम् ॥ पञ्चाङ्गुलप्रमाणेन बिलं कुर्यात्तु सर्वतः । बिलाच्च पूर्वभागे तु पुच्छं सप्ताङ्गुलं भवेत् ॥ सर्वतो बिलमाख्यातं कुर्यात्त्र्यङ्गुलमानतः ।

पाठा०—१ स्रुक्स्रुवोऽर्धकरायितार्थे सधि । करार्थौ स्रुक्स्रुवावितिस्यात् । २ सुशोभितम् । ३ एकग तद्विनानीयन्तु । ४ निष्क्रमण कार्यं । ५ विस्तारस्तस्यार्धात् ।

स्रुतियन्त्रं पुच्छभागे कारयेद्यवमानतः ॥ काकपक्षाकृतिं चाग्रं कुर्यादंसमुरस्कृतिम् । ग्रीवाविस्तारकं कुर्यात्सार्धं ह्यङ्गुलमानतः ॥ ग्रीवोपरि समन्ताच्च द्वदरेखास्तु कारयेत् । दण्डस्थौल्यं कुम्भयोश्च कुर्यादङ्गुष्ठमानतः' इति । इति पात्राकृतयः पात्रासादनं च ॥

अथेदानीं कर्मणि प्रयुज्यमानानां पात्राणामुच्छिष्टाद्युपहतौ का गतिरित्यपेक्षायामाचार्यादिनिरूपितरीत्या यावदुपयुक्ता शुद्धिरुच्यते । आहाश्वलायनाचार्यः—'शरीरादिष्वशुद्धेषु यद्वाऽसंस्पृश्यतादिभिः । शुद्धिर्भवति तापेन मृण्मयानां तथाग्निना ॥ अम्लेन शुद्धिस्ताम्रस्य कांस्यानां भसना भवेत् । अश्मसंस्पर्शनाच्छुद्धिरायसानां च क्षालनात् ॥ स्त्रीशूद्रभुक्तपात्राणि कांस्यादीन्यपि वर्जयेत् । सौवर्णराजतादीनां दाहात्प्रक्षालनाच्छुचिः' इति । विज्ञानेश्वरीयेऽपि—'सौवर्णराजतताम्रशङ्खशुक्तिदृषदामुलूखलमुसलचमसप्रोक्षणपात्रप्रभृतीनां दारुमयानां शूर्पाजिनादीनां च विलेपन उच्छिष्टस्पर्शे च वारिप्रक्षालनाच्छुद्धिः । स्थालीपात्रप्रभृतीनां सस्नेहदारुपात्राणां च विनालेपमुच्छिष्टस्पर्शे उष्णोदकेन प्रक्षालनाच्छुद्धिः । तथा स्रुक्स्रुवादीनां लेपे वारिणा प्रक्षाल्य यथाविधि पुनः संमार्जनाच्छुद्धिः । एतेषां काकादिकृष्णशकुनिमुखावमर्दे विलेपनाच्छुद्धिः । मार्जारव्यतिरिक्तश्वापदमुखावमर्दे परित्यागः । अलेपानां तैजसमण्यश्ममयानां सर्वेषामपि भसना मृदा वा संघृष्य जलैः प्रक्षालनाच्छुद्धिरि'ति । इति कर्मणि प्रयुज्यमानपात्राणां शुद्धिः ॥

अथ ब्रह्मवरणम् । तत्र गृह्यपरिशिष्टम्—'अथ ब्रह्मास्ति चेद्वियेत स प्राक्प्रणीताप्रणयनात्समस्तपाण्यङ्गुष्ठो भूत्वाग्रेणाग्निं

पाठा०—१ मुखाङ्कतीति स्यात् । २ दारवादिष्वशुद्धेषु । ३ यद्वा सस्पर्शनादिभि ।

परीत्य दक्षिणत आस्तीर्णेषु दर्भेषु—निरस्तः परावसुरिति तृणमङ्गुष्ठोपकनिष्ठिकाभ्यां निर्ऋत्यां निरस्याप उपस्पृशेत् 'इदमहमर्वावसोः सदने सीदामि' इत्युदङ्मुख उपविश्य—'बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्यते बृहस्पते यज्ञं गोपाय'—इति ब्रह्मा जपेदपां प्रणयने—'ब्रह्मन्नपः प्रणेष्यामि' इत्यतिसृष्टो 'ॐ भूर्भुवः स्वर्बृहस्पतिप्रसूतः' इति जपित्वा 'ॐ प्रणय' इत्यतिसृजेत्सर्वदा च यज्ञमना भवेत् । एके नैतदिच्छन्ति 'निरसनमुपवेशनं जपः प्रायश्चित्तहोमः संस्थाजपेनोपस्थानं चेति पञ्च कर्माणि ब्रह्मण' इति । भगवान्—'अथार्त्विज्ये वरणीये कुलीनं ब्रह्मणोत्तमम् । तत्पाणिं पाणिना गृह्य ब्रह्माणं वृणुयात्सुधीः । द्वितीयया विभक्त्या तन्नामोद्दिश्य वृणे इति । उक्तो वृतोऽस्मीति वदन्नग्रेणाग्निं परीत्य च । तस्मिन्नुदङ्मुखः स्थित्वा दक्षिणे चासने तृणम् । अङ्गुष्ठानामिकाभ्यां तु समादाय निरस्य च । निरस्त इत्यनेनैव तत्प्रत्यग्दक्षिणां दिशम् । अपः स्पृष्ट्वेदमहमित्युपविश्य तृणेषु सः । समस्तपाण्यङ्गुष्ठश्च दक्षिणे पर्यवस्थितः' इति । अत्र वामोरूपर्यवस्थितदक्षिणपाद इति व्याख्येयम् । अत्रोपवेशनानन्तरं समस्तपाण्यङ्गुष्ठत्वं ब्रह्मण इति भगवन्मते विशेषः ॥❀॥ तस्य कर्माण्युच्यन्ते संग्रहकारेण—'निरासश्चोपवेशश्च तथा ब्रह्मजपोऽपि च । प्रायश्चित्ताहुतीः संस्था ब्रह्मणः कर्मपञ्चकम्' इति । तथाच नारायणः—'निरसनोपवेशने ब्रह्मजपः प्रायश्चित्तानि संस्थाजप इति ब्रह्मणः पञ्च कर्माणि भवन्तीत्युक्तमि'ति । ततो यजमानो यथाचारं ब्रह्माणं गन्धपुष्पाद्यैरर्चयेत् । इति ब्रह्मवरणम् ।

अथ पूर्णपात्रप्रणयनम् । तत्र कारिका—'विस्रस्येध्मं च चमसं सपवित्रैमतः परम् । विस्रस्येध्मं चेति पूर्वेण संबन्धः ।

---

पाठा० —१ अनमन्त्रे गोपायेत्युत्तरं 'स यज्ञं पाहि स यज्ञपतिं पाहि समां पाहि' इत्यंशपाठस्य बहुत्र प्रचुरप्रचारो दृश्यते तथैव नानाकोशेष्वपि, परंच परिशिष्टादिषु तथानुक्तत्वान्निर्मूलोऽयं पाठ इति भाति । २ वरयेद्बुध. । ३ मथाग्रत. ।

पूरयित्वा जलैस्तत्र गन्धपुष्पाणि चावपेत् । ब्रह्मन्नपः प्रणेष्यामीत्याह ब्रह्मा यदा भवेत् । नीत्वा तन्नासिकादघ्नमुदगग्नेर्निधाय च । दर्भैः प्रच्छादयेत्पात्रं पूर्णपात्रं तदुच्यते' इति । अत्र गृह्यपरिशिष्टम्—'अथ चमसं प्रत्यगग्नेर्निधाय ते पवित्रेऽन्तर्धायाद्भिः पूरयित्वा गन्धादि प्रक्षिप्य दक्षिणोत्तराभ्यां पाणिभ्यां नासिकान्तमुद्धृत्योत्तरतोऽग्नेर्दर्भेषु निधाय दर्भैः प्रच्छादयेदेतत्प्रणीताप्रणयनमि'ति । भगवांस्तु—'प्रणीतापात्रमादाय पश्चादग्नेस्तृणेन तु । अन्तर्धाय पवित्रे ते संपूर्येत्पूतवारिणा । तृणच्छन्नं समुद्धृत्य धृतप्राणः शिरःसमम् । अग्नेरुत्तरतस्तृणेष्वेतेष्वेव निधापयेत्' इति । अत्रापां प्रणयने कारणं श्रूयते 'अपः प्रणयति । आपो वै रक्षोघ्नः । रक्षसामपहत्या' इति । इति पूर्णपात्रप्रणयनम् ।

अथ निर्वापादि । तत्र कारिका—'पवित्रान्तर्हिते शूर्पे व्रीहिमुष्टिचतुष्टयम् । निर्वपेदग्रवेत्यादिमन्त्रेणावर्तते च सः । निर्वपेदपरं त्वग्नीषोमाभ्यां त्वेति मन्त्रतः । पवित्रान्तर्हितान्व्रीहीन्प्रोक्षेन्निर्वापसंख्यया' पवित्राभ्यामन्तर्हितानुपरिनिहितपवित्रकानित्यर्थः । जयन्तोपि—'निर्वापस्य क्रमेणैव प्रोक्षणस्य क्रमो भवेत्' इति । पूर्वमन्त्रद्वयेनैव प्रोक्षामीति विशेषणम् । प्रत्यग्ग्रीवं स्तृणात्यूर्ध्वलोम कृष्णाजिनं ततः । तस्मिन्नुलूखलं कृत्वा तत्र व्रीहींस्तथा वपेत् । व्रीहीन्पत्न्यवहन्यात्तांस्त्रिः शुक्लीकृततण्डुलान् । त्रिः प्रक्षाल्य पचेदि'ति । इदमत्र गृह्यम्—'तस्मै तस्मै देवतायै चतुरश्चतुरो मुष्टीन्निर्वपति पवित्रे अन्तर्धायामुष्मै त्वा जुष्टं निर्वपामीत्यथैनान्प्रोक्षति यथानिरुप्तममुष्मै त्वा जुष्टं प्रोक्षामीत्यवहतांस्त्रिःफलीकृतान्नाना श्रपयेत्समोप्य वा यदि नाना श्रपयेद्विभज्य तण्डुलानभिमृशेदि-

पाठा०—१ स्तृणेषु च । २ धृतपाणि । ३ वर्तयेत्क्रमम् ।

दममुष्मा इदममुष्मा' इति । अस्यार्थः—प्रणीताप्रणयनोत्तरकालं शूर्पे पवित्रे अन्तर्धाय व्रीहीन्यवान्वा असंभवे अन्यान्वा हौम्यानेकैकस्यै देवतायै चतुरश्चतुरो मुष्टीन्निर्वपत्यमुष्मै त्वा जुष्टं निर्वपामीति । अमुष्मैशब्दस्थाने चतुर्थ्या विभक्त्या देवतां निर्दिशेत् । चतुश्चतुर इति वीप्सावचनमेकैकस्यै देवतायै चतुर्निर्वापमुष्टिप्राप्त्यर्थम् । पवित्रे व्याख्याते । अथैनान्प्रोक्षति यथानिरुप्तममुष्मै त्वा जुष्टं प्रोक्षामीति । अथशब्दः क्रमार्थः । सर्वनामेन देवतानां निरुप्तेषु प्रोक्षणं यथा स्यादित्येवमर्थम् । एतानिति बहुवचनं शिष्टानेव प्रोक्षेत्र विभज्येत्येवमर्थम् । यथानिरुप्तमिति तु तस्यै तस्यै देवतायै चत्वारि चत्वारि प्रोक्षणानि समन्त्रकेषु निर्वापेषु समन्त्रकाणि अमन्त्रकेष्वमन्त्रकाणि पवित्रे अन्तर्धाय कुर्यादित्येवमर्थम् । निर्वापप्रोक्षणे एकस्मिन्पात्रे भवतः । उत्तरत्र चत्वारीति विभागविधानात् । अवहतांस्त्रिःफलीकृतान्नाना श्रपयेदिति । कृष्णाजिने उलूखलं कृत्वा पत्न्यवहन्यात् । त्रिःफलीकृतानिति त्रिःशुक्लीकृतानित्यर्थः । पिण्डपितृयज्ञे सकृत्प्रक्षाल्येति सकृद्ग्रहणादत्र त्रिः प्रक्षालयेत् । ततो नानाश्रपयेत् समोप्य वा एकत्र वा श्रपयेत् । यदि नाना श्रपयेद्विभज्य तण्डुलानभिमृशेदिदममुष्मा इदममुष्मा इतीति । यदि पृथक् श्रपयेत्तथा सति तण्डुलान्विभज्याभिमृशेदिदममुष्मा इदममुष्मा इति । अमुष्मैशब्दः पूर्ववदिति । गृह्यपरिशिष्टे तु—'अपः प्रणीय शूर्पे व्रीहीन्निरुप्य प्रोक्ष्य प्राग्ग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्य तत्रोलूखलं निधाय तान्पत्न्यवहत्य तण्डुलांस्त्रिःफलीकृतांस्त्रिः प्रक्षाल्य श्रपयेदि'ति । अत्र भगवान्—'तस्मिन्काले तु निर्वापः कर्तव्यश्च यथाविधि। तस्मिन्नग्नावधिश्रित्य पचेत्काष्ठैर्हविः शनैः' इति ॥ॐ॥ अत्र प्रोक्षणादीनां लक्षणमाह संग्रहकारः—'उत्तानेन तु हस्तेन कर्तव्यं प्रोक्षणं भवेत् । अवाचीनेन हस्तेन कर्तव्यं स्यादवोक्षणम् । मुष्टीकरोति यत्तोयमभ्युक्षणमिति

विधा' इति ॥ ❀ ॥ अत्र पचननियममाह बौधायनः—'नाश्रृतं न विदग्धं वा न बहिर्गतकञ्चुकम्' इति । अत्र निर्वापकाले हविर्ग्रहणमग्नेः पश्चिमदेशे कुर्यात् । तथाहापस्तम्बः—'अपरेण गार्हपत्यं प्रागीषमुदगीषं वानडुद्युगशकटमवस्थितं भवती'ति । निर्वापार्थमिति शेषः॥❀॥ अवहनने स्थानविशेषमाह स एव—'उत्तरेण गार्हपत्यमुत्तरदेशे वा प्राचीनग्रीवमुत्तरलोमोपस्तृणाती'ति। अवहननार्थमिति शेषः । कृष्णाजिने अवहननकरणं श्रूयते 'यज्ञो वै देवेभ्यो निलीय कृष्णरूपं कृत्वा यत्कृष्णाजिने हविरध्यवहन्ति यज्ञादेव तद्यज्ञं प्रयुङ्क्ते' इति ॥ ❀ ॥ अथ व्रीह्यभावे प्रतिनिधिद्रव्यं निषिद्धद्रव्यंचोक्तं स्मृत्यर्थसारे—'व्रीहिर्यवो वा श्यामाको नीवारो वा हविर्भवेत् । प्रियङ्गुर्वेणवं धान्यं कन्दं मूलं फलं जलम् । सस्यं वा हविरेतेषु यथासंभवमाहरेत् । प्रतिनिध्यन्तरं सस्यं विज्ञेयं हविरत्यये । प्रधानदेवतोद्देशात्संत्यजेत्सत्यमात्मनः । अतोऽन्यदपि वा किंचित्सदृशं धान्यमात्रकम् । तद्ग्राह्यं सर्वथा माषं कुलित्थं कोद्रवं न तु' इति । इति निर्वापादि ।

अथाज्यसंस्कारः । तत्र कारिका—'त्रिःप्रक्षाल्य पचेदाज्यमासिच्य सपवित्रके । अपोह्योत्तरतोऽङ्गारान् तेष्वाधिश्रित्य तद्धृतम् ॥ अधिश्रितमवज्वल्य दर्भाग्रद्वयमस्यति । तेनैव ज्वलताज्यं च त्रिःपर्यग्निकरोत्यथ ॥ कर्षन्निवोदगुद्वास्य त्वङ्गारानतिसृज्य च । अङ्गुष्ठोपकनिष्ठाभ्यां पवित्रे ते असंहते । गृहीत्वोत्तानपाणिभ्यां त्रिः प्रागुत्पूय तद्धृतम् । सवितुष्ट्वेति मन्त्रेण सकृत्तूष्णीं द्विरिष्यते ॥ कृताज्योत्पवने प्रोक्ष्य पवित्रे अनले क्षिपेत् । अनलात्पश्चगास्तीर्णे बर्हिष्याज्यं निधाय च । प्रताप्य सकुशौ दर्वीस्रुचौ दर्वीं निधाय च । स्रुवस्य बिलमग्रैस्तु पृष्ठमभ्यात्ममग्रतः ॥ आरभ्य पृष्ठतो यावदुपरिष्टाद्बिलं भवेत् । कुशानां मूलतो दण्डमेकैकं त्रिर्मृजे-

तर्न। प्रोक्ष्य प्रताप्य नागाद्य वर्हिष्युत्तरतो घृतात् ॥ संमृज्य तैः कुशैर्दर्वीमासाद्योत्तरतः स्रुवात् । तान्कुशान्कृतसंमार्गान्प्रोक्ष्याग्नौ प्रहरेद्य' इति । इदमत्र गृह्यम्—'पवित्राभ्यामाज्यस्योत्पवनम्' इति । कार्यमिति शेषः ॥ ❀ ॥ अथ किंलक्षणे पवित्रे कथंयोत्पवनमित्येतद्वयं निर्णेतुमाह—'अप्रच्छिन्नाग्रावनन्तर्गर्भौ प्रादेशमात्रौ कुशौ नानान्तयोर्गृहीत्वाऽङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां—'सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः' इति प्रागुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीम्' इति । अस्यार्थः—अग्रशब्दः सूक्ष्मच्छिन्नाग्रयोर्निवृत्त्यर्थः । न विद्यते अन्तर्मध्ये गर्भो ययोस्तौ तथोक्तौ । प्रादेशमात्रौ प्रादेशप्रमाणौ एवंलक्षणयुक्तौ कुशौ पवित्रसंज्ञौ । नानेत्यसंसर्गार्थम् । पवित्रे अन्तयोरसंसृष्टे अङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां गृहीत्वा प्रागुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीम् । प्रागिति पाठः कार्यः । पुंलिङ्गपाठे तु कर्तुः प्राङ्मुखत्वं स्यात् तच्च परिभाषासिद्धम् । ननु कर्मणश्च प्राक्त्वं तत एव सिद्धम् । सत्यम् । तत्तु शाखान्तरदृष्टपुनराहारनिवृत्त्यर्थम् । तेन ज्ञायते शाखान्तरदृष्टानामविरोधिनां पात्रासादनादीनामिच्छतः क्रियेति । इत्थं हि शाखान्तरे दृष्टम्—परिस्तरणकाले उत्तरतोऽग्नेः कांश्चिद्दर्भानास्तीर्य, ब्रह्मयजमानयोरुत्तरतः दक्षिणतोऽप्यग्नेः कांश्चिद्दर्भानास्तीर्य ततोऽग्निं पर्युक्ष्य उदगग्रेर्दर्भेषु द्वन्द्वं न्यञ्चि पात्राण्यासादयेदुभाभ्यां पाणिभ्याम् ।

अयं पात्रासादनक्रमः—'प्रोक्षणपात्रमथ स्रुवयुक्तं पात्रमपां प्रणयेन विशिष्टम् । भाजनमाज्यहविर्ग्रहणार्थं स्विष्टमयो

पाठ०—१ प्रागुत्पुनातीति पाठे निरेकुमयं निर्णय । २ द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति ।

परिसादय दर्भान्' इत्याज्यहोमेषु । दर्वीमत्सु तु कर्मस्वयं क्रमः—'स्थालीं चरोः प्रोक्षणभाजनं च दर्वीस्रुवौ सादय दर्विहोमे । पात्रं प्रणीतार्थमथाज्यपात्रमिध्मं क्रमेण क्रमवित् कुशैश्च' इति । ततोऽप्रच्छिन्नाग्रावित्युक्तलक्षणे पवित्रे गृहीत्वा प्रोक्षणपात्रे निधायाप आसिच्य ताभ्यां त्रिरुत्पूयोत्तानानि पात्राणि कृत्वा विस्रस्येध्मं सर्वाणि पात्राणि त्रिः प्रोक्षेदिति । ततः प्रणीतापात्रं प्रत्यगग्रेर्निधाय तस्मिन्नेते पवित्रे अन्तर्धायाद्भिः पूरयित्वा गन्धादि प्रक्षिप्य पाणिभ्यां पात्रं नासिकान्तमुद्धृत्योत्तरतोऽग्निं दर्भेषु निधाय दर्भैः प्र-च्छादयेदिति । आचार्यस्य मते तु पूर्णपात्रं कार्यम् । अन्यस्य मते तु करणेऽभ्युदयोऽकरणे न प्रत्यवाय इत्याशयः । इत्थं चास्य तु शास्त्रे दृष्टं—पूर्णपात्रनिधानानन्तरं तत्रस्थे पवित्रे गृहीत्वाज्यस्थाल्यां निधायाज्यमासिच्योदगङ्गारानपोह्य तेष्वधिश्रित्याज्यमव-ज्वल्य दर्भाग्रे प्रच्छिद्य प्रक्षाल्याज्ये प्रत्यस्य पुनर्ज्वलता तेनैवोल्मुकेन त्रिःपरिहरेत् नात्रावज्वलनम्[2] । ततः शनैरुद-गुद्वास्याङ्गारानतिसृज्य तत्रस्थमेवाज्यमुत्पूय पवित्रे त्वद्भिः प्रोक्ष्याग्नौ प्रक्षिपेदिति । आचार्यस्योत्पवनं नित्यं अन्यस्यतु पाक्षिकं । पूर्व-वदुदाहृतं स्रुवस्रुवसंमार्जनमप्यन्यशास्त्रे दृष्टं तस्यापीच्छातः क्रिया ॥ ❀ ॥ अनयोः संमार्ग उच्यते—'दक्षिणेन हस्तेनोभौ गृहीत्वा सव्येन कांश्चिद्दर्भानादाय सहैवाग्नौ प्रताप्य जुहूं निधाय दक्षिणेन पाणिना स्रुवस्य बिलं दर्भाग्रैः प्रागादि प्रागपवर्गं त्रिःसंमृज्या-धस्ताद्दर्भाग्रैरेवाभ्यात्मं बिलपृष्ठं त्रिःसंमार्ष्टि । ततो दर्भाणां मूलैर्दण्डस्याधस्ताद्बिलपृष्ठादारभ्य यावदुपरिष्टाद्बिलं तावत्त्रिः संमार्ष्टि । अथाद्भिः प्रोक्ष्य स्रुवं निष्टप्याज्यस्थाल्या उत्तरतो निधायोदकं स्पृष्ट्वा तेरेव दर्भैर्जुहूं चैवमेव संमृज्य ततो दर्भानद्भिः

पाठा०—१ प्राह्णम् । २ नात्रावज्वलन कृतम् ।

संस्कारप्र.

अग्निमुखं.

प्रक्षाल्याभावनुप्रहरेत् । एवं संमार्गः । स्विष्टकृदन्ते चेध्मसंनहन्या अग्नौ प्रहरणं दृष्टम् । यदन्यदप्यच्छाखाविरुद्धं परशाखे दृष्टं तदपीच्छातः कार्यमिति ज्ञापयितुं प्रागुत्पुनातीति पुनराहारप्रतिषेधः किंतु उत्पुनातीति त्रिरित्येव वाच्यं लाघवार्थं । तथा सति 'सर्वत्रैवं कर्मावृत्तावि'त्यनेन सकृन्मन्त्रेण द्विस्तूष्णीमिति सिध्यति । एवं सिद्धे इदं वचनं गृह्ये कर्मावृत्तौ मन्त्रावृत्तिर्भवतीत्येवमर्थं । पूर्वयोगः किमर्थम् । आज्याधिकारार्थमिति चेत्तर्हि प्रागुत्पुनात्याज्यमित्यत्रैव वाच्यम् । अथ पवित्रसंज्ञार्थं तर्हि कुशौ पवित्रे इत्यत्रैव वाच्यम् । उच्यते । पूर्वेणामन्त्रकमुत्पवनं विधीयते । अनेन तु समन्त्रकम् । तत्र वैतानिके अमन्त्रकं अत्र गृह्यकर्मणि समन्त्रकमित्येवं विनिवेशः । गृह्यपरिशिष्टे तु—'अथ ते पवित्रे आज्यपात्रेऽन्तर्धायाज्यमासिच्याङ्गारानुदगपोह्य तेष्वाज्यमधिश्रित्योल्मुकेनावज्वल्य दर्भाग्रे प्रच्छिद्य प्रक्षाल्याज्ये प्रास्य ज्वलता तेनैवोल्मुकेनाज्यं त्रिःपरिहृत्योल्मुकं निरस्याप उपस्पृश्याज्यं कर्षन्निवोदगुद्वास्याङ्गारानतिसृज्याज्यमुत्पूय पवित्रे प्रक्षाल्याग्नौ प्रास्याप उपस्पृशेदेष आज्यसंस्कारोऽथ बर्हिरारभ्यतोऽग्रे प्रागग्रमास्तीर्य तत्राज्यमासाद्य सदर्भौ दर्वीस्रुचावादायाग्नौ प्रताप्य दर्वीं निधाय स्रुवं सव्येनादाय दक्षिणेन पाणिना दर्भाग्रैर्बिलं प्रागारभ्य प्रादक्षिण्येन प्रागपवर्गं त्रिः संमृज्य तैरेव बिलपृष्ठमभ्यात्मं त्रिः संमृज्याथ पृष्ठादारभ्य यावदुपरिबिलं दण्डं दर्भमूलैस्त्रिः संमृज्य स्रुवं प्रोक्ष्य प्रताप्योदगाज्याद्बर्हिष्यासाद्योदकस्पृष्टैस्तैरेव दर्भैरेवं दर्वीं च संस्कृत्य स्रुवादुदङ्निधाय दर्भानद्भिरभ्युक्ष्याग्नौ प्रहरेदेष स्रुक्स्रुवसंमार्गः' इति । भगवान्—'अथाज्यस्थालीमादाय तस्यामाज्यं निषिच्य च । उदगग्रेर्निरूढेषु त्वङ्गारेषु सभस्मसु । अधिश्रित्य विलाप्य-

पाठा०—1 पूर्वयोग सौत्र पवित्राभ्यामाज्यस्योत्पवनमिति ।

तदन्तर्ज्वल्य ज्वलत्तृणैः । आज्यं प्रत्यस्य दर्भाग्रे अङ्गुष्ठपर्वमात्रके' इति ॥ ❀ ॥ अत्रोक्तनिरूढशब्दस्यार्थः स्मृतिदीपिकायामुदीरितः—'निरूढः स्याद्विभक्तोऽग्निर्यः परिस्तरणाद्बहिः । अनिरूढः स वै वह्निर्यः परिस्तृतिमध्यगः' इति । यत्तु कैश्चिदुच्यते—'अग्नेरुत्तरतोऽङ्गारान्निरूह्याज्यस्य संस्क्रियाम् । कुर्यात्परिस्तृतेरर्वाङ् परिस्तरणाद्बहिः' इति। तदेतच्चिन्त्यम् । 'पुनर्ज्वलद्भिरेतांस्त्रिस्तृणैः परिहरेत्सह । ओदनादिर्हविर्मिश्रैः सन्ति चेदितरैरिति । अद्भिरेतानि संप्रोक्ष्य प्रहृत्याग्नावुदक्रपन्' इति ॥ ❀ ॥ अत्र पर्यग्निकरणतृणनिरसने विशेषमाह संग्रहकारः— 'पर्यग्निकरणायाग्निमनिरूढाद्यदाहरेत् । वहिर्निरस्य तच्छेपं निरूढाद्यदि योजयेत् । उद्वास्याज्यमथाङ्गारान्प्रत्यूह्याप उपस्पृशेत् ॥ ताभ्यामाज्यं त्रिरुत्पूय पवित्राभ्यां यथाविधि । सकृन्मन्त्रेण द्विस्तूष्णीमग्नौ ते संप्रहृत्य च ॥ सपरिस्तरणाद्ग्नेः पश्चात्संप्रोक्षिते स्थले । बर्हिःसंनहनीं रज्जुमुदगग्रां निधाय ताम् ॥ तस्यां बर्हिषि संस्तीर्णे प्रागग्रे निहिते भवेत् ॥ अथादाय स्रुवं दर्वीं दक्षिणेन करेण तौ । सव्येन दर्भांश्चादाय सहैवाग्नौ प्रतापयेत् ॥ संमृज्य त्रिर्बिलं सर्वैर्दण्डं मध्ये स्रुवस्य तु । मूलं मूलैश्च दर्भाणां तथा जुह्वां विधीयते ॥ सह दर्भैः स्रुवं जुह्वां प्रताप्य प्रोक्ष्य तान्कुशान् । प्रहृत्याप उपस्पृश्य हविस्तेनाभिघारयेत्' इति ॥ ❀ ॥ अत्र संमृष्टपात्रमसंमृष्टपात्रेण न संस्पर्शयेत् । तथाचापस्तम्बः—'न संमृष्टान्यसंमृष्टैः संस्पृशेत्' इति ॥ ❀ ॥ अथाज्यस्थाल्यामाज्यनिर्वपनमग्नेः पश्चिमतः कुर्यादित्याह स एव—'अपरेणाग्निं पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरुप्ये'ति ॥ ❀ ॥ अथाज्याभावे प्रतिनिधिरुक्तः सायणीये—'हव्यार्थे गोघृतं ग्राह्यं तदभावे तु

पाठा॰—१ हविर्मिस्तु त्रिचितरितरैः । २ श्राप स्पृशेत्पुन ।

माहिषम् । आजं वा तदभावे तु साक्षात्तैलं ग्रहीष्यते ॥ तदभावेऽतसीस्नेहः कौसुम्भः सर्षपोद्भवः । वृक्षस्नेहोऽथवा ग्राह्यः पूर्वाभावे परः परः ॥ तदभावे यवव्रीहिश्यामाकान्यतमोद्भवम् । पिष्टमालोड्य तोयेन घृतार्थे योजयेत्सुधीः ॥ पिष्टाभावे तु तत्तुल्यं द्रव्यं प्रतिनिधीयते' इति । भास्करोपि—'कन्दैः पुष्पैः फलैः क्षीरैः रूपैः सदृशमिष्यते । नात्रापि प्रतिधातव्यं निषिद्धं वस्तु कुत्रचित् ॥ श्रोत्रियाणामभोज्यं यद्द्रव्यं हि तदशेषतः । ग्राह्यं प्रतिनिधित्वेन होमकार्येषु न क्वचित् ॥ काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके हि सः । काम्येष्युपक्रमादूर्ध्वमन्ये प्रतिनिधिं विदुः ॥ नच प्रतिनिधिर्देशकालयोरस्त्यथापरः । द्रव्यं वैकल्पितं किंचिद्यत्र संकल्पितं भवेत् । तदभावे सति ग्राह्यं नतु वैकल्पिकान्तरम् ॥ उपात्ते तु प्रतिनिधौ मुख्यं वै लभ्यते यदि । तत्र मुख्यमनादृत्य गौणेनैव समाप्यते' इति ॥❀॥ अथ पृथक्कृताङ्गारेष्वाज्याधिश्रयणे कारणं श्रूयते अग्निहोत्रप्रकरणे—'रुद्रो वा एष यदग्निः । पत्नी स्थाली । यन्मध्येऽग्नेरधिश्रयेत् । रुद्राय पत्नीमपिदध्यात् । प्रमायुका स्यात् । उदीचोऽङ्गारान्निरूह्याधिश्रयति । पत्नियै गोपीथाय । व्यन्तान्करोति । यथा पत्न्यप्रमायुका भवति' इति । व्यन्तान्पृथग्भूतान् ॥ ❀ ॥ पर्यग्निकरणे फलविशेषः श्रूयते—पर्यग्निकरोति । रक्षसामपहत्यै । त्रिः पर्यग्निकरोति । त्र्यावृद्धि यज्ञः । अथो मेध्यत्वाय' इति ॥❀॥ उदगुद्वासने कारणं श्रूयते—'यत्प्राचीनमुद्वासयेत् । यजमानꣳशुचार्पयेत् । यद्दक्षिणा । पितृदेवत्यꣳस्यात् । यत्प्रत्यक्पत्नीꣳशुचार्पयेत् । उदीचीनमुद्वासयति । एषा वै देवमनुष्याणाꣳशान्ता दिक् । तामेवैनदनुद्वासयति शान्त्यै' इति ॥ ❀ ॥ अथाज्यस्य कर्षन्निवोदगुद्वासने कारणं श्रूयते—'वर्त्म करोति । यज्ञस्य संतत्यै' इति ॥❀॥ बर्हिरास्तरणे विशेषः श्रूयते—'बर्हिस्तृणाति । प्रजा वै बर्हिः । पृथिवी वेदिः । प्रजा एव

पृथिव्यां प्रतिष्ठापयति। अनतिदृश्न्स्तृणाति। प्रजयैवैनं पशुभिरनतिदृश्नं करोति' इति ॥ ❀ ॥ स्रुवबिलादेर्दर्भाग्रादिभिः संमार्जने फलविशेषः श्रूयते—'प्राचीमुभ्याकारम्। अग्रैरन्तरतः। एवमिव ह्यन्नमद्यते। अथो अग्राद्वा ओषधीनामूर्जं प्रजा उपजीवन्ति। ऊर्ज एवान्नाद्यस्यावरुध्यै। अवस्तात्प्रतीचीं दण्डमुत्तमतः। मूलेन मूलं प्रतिष्ठित्यै' इति ॥ ❀ ॥ अत्रापेक्षितहविरन्तरसंस्कारविधिस्तु आचार्येणौपासनप्रकरण उक्तः प्रदर्श्यते। तत्र गृह्यपरिशिष्टम्—'होम्ये पक्कमुल्मुकेनावज्वल्य प्रोक्ष्य तेनैव त्रिःपर्यग्निकृत्वोल्मुकं निरस्येत् पक्कमुदगङ्गारेभ्यो विश्रिल्य प्रोक्ष्योदगुद्वास्य तानङ्गारानतिसृजेदेष होम्यसंस्कारः' इति। इत्याज्यसंस्कारादि।

अथ चरुसंस्कारादि। तत्र कारिका—'अभिघार्य चरुं चोदगुद्वास्य च ततःपरम्[1]। अन्तरेणाग्निमाज्यं च नीत्वाथासाद्य बर्हिषि। आज्याद्दक्षिणतो देशे जयन्तवचनं यथा। केचित्प्रत्यभिघार्येति सूत्रमन्यदधीयते' इति। इदमत्र गृह्यम्—'शृतानि हवींष्यभिघार्योदगुद्वास्य बर्हिष्यासाद्य प्रत्यभिघार्य' इति। अस्यार्थः—उत्तरतोऽग्नेराज्यमुत्पूयाग्नेः पश्चाद्बर्हिरास्तीर्याज्यमासाद्य ततः शृतानि हवींष्यभिघार्योदगुद्वास्य बर्हिष्यासाद्य तत इध्ममभिघार्य अयं त इति मन्त्रेणाम्नावादध्यात्। अत्र बर्हिष्यासाद्य पुनरभिघार्येति केचित्पठन्ति इति। भगवांस्तु—'गृहीत्वाज्यं स्रुवेणैव पक्के हविषि सेचनम्। अभिघारणमित्याहुस्तथान्येषु हविःषु च। उदगुद्वासितं यस्मात्पुनरप्यभिघारयेत्। आज्यस्य दक्षिणे पार्श्वे बर्हिष्यासादयेत्पृथक्' इति। एवं पृथक्श्रपणपक्षे तत्रमुक्तम् ॥ ❀ ॥ सहश्रपणपक्षेतु कारिका—'सहश्रपणपक्षेतु पृथगुद्धरणाय वै। निदध्यात्पात्रमितरन्मध्ये चर्वाज्ययोस्ततः। उद्धृत्य च चरोरर्धमभिमृश्येदमग्नये' इति। अत्राग्नय इत्येतत्प्रधानदेवतानामुपलक्षणार्थम्। इदमत्र गृह्यम्—

पाठा०—१ चोदगुद्वास्य तत्परम्। २ सावेध्ममभिघार्येति।

'यद्यु वै समोप्य व्युद्धारं जुहुयात्' इति । अस्यार्थः—'यदि समोप्य श्रपयेत्तथा सति चरुं व्युद्धृत्य एवमभिमृश्य ततो जुहुयात् । व्युद्धारमिति व्युद्धृत्येत्यर्थः । व्युद्धरणं नाम पात्रान्तरे पृथक्करणम् । जुहुयादिति वचनं होमकाले व्युद्धरेदित्येवमर्थम् । गृह्यपरिशिष्टेपि—'यदि सह श्रपयेच्चरुं व्युद्धृत्येदममुष्मा इदममुष्मा इत्यभिमृशेत्' इति ॥ ❀ ॥ हविरादीनामस्पृश्यस्पर्शनोपहतौ सत्यामिह शुद्धिविभागमाह आचार्यः—'व्रीहितण्डुलधान्यानि सर्वाण्यामानि यैरिह । स्पृष्टान्यद्भिर्विशुध्यन्ति नवान्येवाम्बराणि च । तैश्चाण्डालादिभिः । पक्वान्नानि च धानाश्च लाजाश्च पृथुकानि च । अपूपादीनि शूद्राद्यैः स्पृष्टान्येतानि वर्जयेत् । आपत्स्वेतानि पक्वानि श्वकाकाद्यैरपि द्विजः । संस्पृष्टान्येकदेशे तु तन्मात्रं परिवर्जयेत् । तच्छेषमग्नौ निक्षिप्य किंचित्संप्रोक्ष्य वारिणा । विप्राज्ञया तु गृह्णीयाद्धान्यादीनां तु राशितः । अल्पं तु संत्यजेद्दुष्टं पक्वान्नाद्यं विचक्षणः । रसानां कथनाच्छुद्धिराज्यादीनां भवेदिह । चाण्डालाद्यधमैः स्पृष्टान्दधिक्षीरघृतादिकान् । वर्जयेन्मतिमान्विप्रः शूद्राद्यैरपि वा जलम् । सरित्सरोजलं शुद्धं सर्वैः स्पृष्टमिहाप्युत । वर्जयेच्च तडागोत्थं कौपं चाण्डालजातिभिः' इति । इति चरुसंस्कारादि ।

अथेध्माधानम् । तत्र कारिका—'अलंकृत्याभिघार्येध्ममाधायापन्त इत्यर्थे' इति । इदमत्र गृह्यम्—'इध्ममभिघार्य—अयं त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्धस्व चेद्ध वर्धय चास्मान्प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा' इति । अस्यार्थो गतः । भगवांस्तु—'अग्निं परिसमुह्याथ गन्धपुष्पैरलंकृतम् । आत्मानं चाप्यलंकृत्य इध्ममादाय पाणिना । इध्मसंनहनीं रज्जुमनूयाजे

पाठा०—१ योग्यताविभागम्, योगविभागम् ।

निधाय ताम् । आदायाज्यं स्रुवेणैव त्रिरिध्ममभिघारयेत् । अयन्त इति मन्त्रेण त्वग्राविध्मं निधाय तम्' इति । अनूयाजे निधाय तामित्यत्र अनूयाजाभावपक्षे तत्रैव दर्भेषु निदध्यादिति चोद्धव्यम् । अग्न्यलंकरणे मन्त्र उच्यते । ऋग्विधाने—'विश्वानित इति द्वाभ्यामृग्भ्यां यो वह्निमर्चति । स तरत्यापदः सर्वा यश आप्नोति चाक्षयम्' इति । इतीध्माधानम् ।

अथाघारहोमः । तत्र कारिका—'स्रुवेणाज्यं गृहीत्वाग्नेः प्रत्यगुत्तरदेशतः । आरभ्य दिशमाग्नेयीमाज्यधारामृजुं हरेत् । नैर्ऋतीं दिशमारभ्य त्वैशानीं पूर्ववद्धरेत् । उभयत्र चतुर्थ्यन्तं प्रजापतिपदं स्मरन् । स्वाहेत्याघारयेदेतावाघाराविति भाषितौ' इति । इदमत्र गृह्यम्—'तूष्णीमाघारावाघार्य' इति । अस्यार्थः—तूष्णींग्रहणं मन्त्रवर्जमन्ये धर्माः शास्त्रान्तरे दृष्टाः कथं प्रवर्तेरन्निति । उत्तरपश्चिमाया आरभ्य दक्षिणपूर्वा भत्यविच्छिन्नामाज्यधारां हरेत् । तथा दक्षिणपश्चिमाया आरभ्योत्तरपूर्वां प्रत्याघारयेत् । स्रुवेणोभौ जुहुयात् । कुतः । यत्राज्यहोमे साधनान्तरानुपदेशस्तत्र स्रुवेण होम इति साधितम् 'एवंभूतोऽव्यक्तहोम' इत्यस्मिन्सूत्रे व्याख्यातृभिः । यावन्मात्रं स्वशास्त्रानुक्तमपेक्षितं तावन्मात्रं ग्राह्यं ननु स्वशास्त्रे उक्तमपीति । अत्र भगवान्—'आघारयेत्तावाज्येन साधारौ द्वौ स्रुवेण तु । पश्चिमोत्तरमारभ्य घृतधारामृजुं तथा । आमन्यतस्त्वविच्छिन्नां नयेदापूर्वदक्षिणाम् । प्रत्यग्दक्षिणमारभ्य चैवं पूर्वोत्तरां नयेत्' इति ॥ ❀ ॥ अत्र ज्योतिष्मत्यग्नावेवाघारयेदित्याहापस्तम्बः—'आसीनमुत्तरं परिधिसंधिमन्ववहृत्य प्रजापतिं मनसा ध्यायन्दक्षिणप्राञ्चमृजु[१] संततं ज्योतिष्मत्याघारमाघारयन्सर्वाणीध्मकाष्ठानि संस्पर्शयति' इति । अत्र विशेषः श्रूयते—

१ अत्र प्रधानात्पश्चाद्यष्टव्या हविर्भागा अनूयाजाः ।

'आघारावाघारयति । तिरइव वै सुवर्गो लोकः । सुवर्गमेवास्मै लोकं प्ररोचयत्यृजुमाघारयत्यृजुरिव हि प्राणः संततमाघारयति प्राणानामन्नाद्यस्य संतत्या अथो रक्षसामपहत्यै' इति । इत्याघारहोमः ।

अथाज्यभागहोमः । कारिका—'जुहुयादग्नये स्वाहेत्युदगाज्यं स्रुवेण तु । तेनैव जुहुयादाज्यं सोमायेति च दक्षिणे' इति । इदमत्र गृह्यम्—'आज्यभागौ जुहुयादग्नये स्वाहा सोमाय स्वाहेत्युत्तरमाग्नेयं दक्षिणं सौम्यं विज्ञायते चक्षुषी वा एते यज्ञस्य यदाज्यभागौ तस्मात्पुरुषस्य प्रत्यङ्मुखस्यासीनस्य दक्षिणमक्ष्युत्तरं भवत्युत्तरं दक्षिणम्' इति । अस्यार्थः—आज्यं सौम्यं तत आज्यभागौ जुहुयादग्नये स्वाहा सोमाय स्वाहेति । आज्यभागावित्येतयोर्यागयोः संज्ञा । अग्नेरुत्तरपार्श्वे तु सौम्यं स्रुवेणोभौ जुहुयात् । विज्ञायत एतौ आज्यभागौ । यज्ञपुरुषस्य चक्षुषी इत्येवं श्रूयत इत्यर्थः । ततः किमित्यत आह—तस्मात् यज्ञपुरुषस्य हि प्रत्यङ्मुखस्यासीनस्य दक्षिणमक्ष्युत्तर भवति, उत्तर दक्षिणम् । तस्माद्दक्षिणसंस्थैव शक्या कर्तुं नोदक्संस्थेत्यर्थः । श्रुत्याकर्षोऽन्यत्र कचिदुदक्संस्थापि यथा स्यादिति । तेन बलिहरणे प्रधानानामुत्तरतः पुरुषेभ्यो बलिहरणं सिद्धमिति ॥ अत्र भगवान्—'अथाज्यभागौ जुहुयात्पार्श्वेऽग्नेरुत्तरेऽग्नये । स्वाहेति दक्षिणे सोमाय स्वाहेति यथाक्रमम्' इति ॥❀॥ अत्राज्यभागावग्नेः पूर्वार्धसमतया जुहुयात् । तथाचापस्तम्बगृह्यम्—'अथाज्यभागौ जुहोत्यग्नयेस्वाहेत्युत्तरार्धपूर्वार्धे सोमायस्वाहेति दक्षिणार्धपूर्वार्धे समं पूर्वेण' इति । इत्याज्यभागहोमः ।

---

पाठा०—१ तस्माद्दक्षिणं यज्ञ ।

अथावदानधर्मः । तत्र कारिका—'दर्व्यामुपस्तृणात्याज्यमाग्नेयचरुमध्यतः । अवद्य हविरङ्गुष्ठपर्वमात्रं तदोप्य च ॥ अस्मिन् पूर्वतस्तद्वदवधायास्यां तदावपेत् । पात्रस्थमभिघार्याथ दर्वीस्थं चाभिघारयेत्' इति । इदमत्र गृह्यम्—'मध्यात्पूर्वार्धाच्च हविषोऽवद्यति' इति । अस्यार्थः—हविषो मध्यात्पूर्वार्धाच्च अङ्गुष्ठपर्वमात्रं हविरवद्यतीति देशो नियम्यत इति ॥❀॥ अत्रापेक्षितावदानधर्मविशेषं तु विवाहप्रकरणोक्तं दर्शयिष्यामः—'अग्नञ्जलावुपस्तीर्य भ्राता भ्रातृस्थानो वा द्विर्लाजानावपति त्रिर्जामदग्न्यानां प्रत्यभिघार्य हविरवत्तं चैषोऽवदानधर्मः' इति । अत्र भगवान्—'जुहूं सव्ये समादायोपस्तीर्य द्विरवद्यति । मध्याच्चद्धविषोऽनघेः पूर्वार्धाचापि पाणिना । जुह्वा विलेऽथ निक्षिप्य हविः प्रत्यभिघारयेत् । अभिघार्य द्विरवत्तम्' इत्यवदानधर्मश्चतुरवत्तिनाम् ॥ पञ्चावत्तिनां तु कारिका—'पञ्चावत्ती तु पश्चार्धादप्यवद्यति वै ततः' इति । षड्गुरुशिष्योऽपि—'मध्यात्पूर्वार्धतः पश्चार्धात्पञ्चावत्तिनां तथा । सिद्धा हि जामदग्न्यानां प्राक्प्रत्यक्संस्थतापि च' इति । इदमत्र गृह्यम्—'मध्यात्पूर्वार्धात्पश्चार्धादिति पञ्चावत्तिनाम्' इति । अस्यार्थः—पञ्चावत्तिनां तु मध्यात्पूर्वार्धात्पश्चार्धादित्येवमवदानं भवति । पश्चार्धादित्येतावतैव सिद्धे मध्यात्पूर्वार्धादिति पुनर्वचनं प्रत्यक्संस्थता यथा स्यात् प्राक्संस्थता माभूदित्येवमर्थमिति ॥ ❀ ॥ पञ्चावत्तिनस्तु भगवान्पर्यजीगणत्—'जामदग्न्या वत्सविदा आर्ष्टिषेणास्तथैव च । भार्गवच्यावना और्वाः पञ्चावत्तिन ईरिताः ॥ एतेभ्योऽन्ये द्विजाः सर्वे ज्ञेयाश्चतुरवत्तिनः' इति ॥❀॥ अत्रावदानकाले नखस्पर्शमकृत्वा प्रथमावदानं तिरश्चीनाभिरङ्गुलि-

पाठा०—१ मानमवोप्य च । २ दद्य स्यात्तदा भवेत् । ३ मभिघार्यं स्याद्यदि । धार्यास्थं स्थितमप्यभिघारयेत् ।

भिर्द्वितीयावदानमनूचीनाभिरङ्गुलिभिरेवं सर्वत्रावद्येत् । तथाचापस्तम्बः—'मध्यादङ्गुष्ठपर्वमात्रमवदानं तिरीचीनमवद्यति पूर्वार्धाद्द्वितीयमनूचीनं चतुरवत्तिनः पश्चार्धात्तृतीयं पञ्चावत्तिनोऽसंभिदन्नसंहताभ्यामङ्गुलिभ्यामङ्गुष्ठेन च पुरोडाशस्यावद्यति' इति॥ ❀॥ अत्र होमद्रव्यभेदेनाहुतिप्रमाणभेद उक्तः सिद्धान्तशेखरे—'कर्षप्रमाणमाज्यं स्यान्मधु क्षीर च तत्समम् । तण्डुलानां शुक्तिमात्रं पायसं प्रसृतेः समम् ॥ कर्षमात्राणि भक्ष्याणि लाजा मुष्टिमिता मताः । अन्नं ग्रासमसं ग्राह्यं शाकं ग्रासार्धमात्रकम् ॥ मूलानां तु त्रिभागः स्यात्कन्दानामष्टमांशकः । इक्षुः पर्वप्रमाणः स्यादङ्गुलिद्वितयं लता ॥ प्रादेशमात्राः समिधो व्रीहीणामञ्जलेः समाः ॥ तिलसक्तुकणादीनां मृगीमुद्रा प्रमाणतः । पत्रपुष्पलतानां तु स्वमानाहुतिरिष्यते ॥ चन्द्रश्रीखण्डकस्तूरीकुङ्कुमागुरुकर्दमाः । हरिमन्थसमाः प्रोक्ता गुग्गुलुर्बदरीसमः ॥ आहुतीनामिदं मानं कथितं वेदवेदिभिः' इति । हरिमन्थश्चणकः ॥ ❀ ॥ मृगीमुद्रालक्षणमुक्तम्—'स्यात्त्रिमुद्रा मृगीमुद्रा होमे सर्वफलप्रदा' इति । इत्यवदानधर्मः ।

अथ प्रधानहोमः। तत्र कारिका—'जुहुयादग्नये स्वाहा दर्व्या मध्ये हविर्भुजः। प्रत्यक्करो वा देशोऽयमाज्यभागावपेक्ष्य च ॥ जुहोत्यपिदधद्दिव दर्व्याः पार्श्वेन याज्ञिकः' इति । इदमत्र गृह्यम्—'मध्ये हवींषि प्रत्यक्तरं वा प्राक्संस्थान्युदक्संस्थानि वा' इति । अस्यार्थः—अग्नेर्मध्ये हवींषि जुहोति प्रत्यक्तरं वा देशे हवींषि जुहोति । प्रत्यक्तरमिति द्वितीया सप्तम्यर्थे । तत्रापि

पाठा०—१ तत्रिभाग स्याद् । २ मष्टमाशक मष्टमांशत । ३ इक्षुपर्वप्रमाण स्यात् । ४ द्वितय तथा । ५ मञ्जरीसमा । ६ पुष्पफलाना तु । ७ प्रत्यक्करे वा देशोयम् । ८ मध्यप्रदेशे ।

देशे प्राक्संस्थानि वा जुहोत्युदक्संस्थानि वा । ननु प्राक्संस्थानीत्यस्मिन्नसत्यप्युदक्संस्थानि वेति वाशब्दात्प्राप्तया प्राक्संस्थया सह विकल्पे सति पक्षे प्राक्संस्थत्वमपि सिद्ध्यति किमर्थं प्राक्संस्थवचनम् । उच्यते—देशद्वयस्य संस्थाद्वयस्य चानन्तर्ययोगो माभूदित्येवमर्थम् । तेन देशद्वयेऽपि संस्थाद्वयस्य यथासंख्यता नास्तीति सिद्धमिति । अत्र भगवान्—'जुह्वाः पार्श्वेन हूयते । अवदायावदायैवं तैस्तैर्मन्त्रैर्जुहोत्यथ । स्थालीपाकस्य वाभाव आज्येनैव हुनेत्ततः' इति ॥ ❀ ॥ अत्र होमसाधनमुक्तं स्मृत्यर्थसारे—'द्रवत्स्रुवेण होतव्यं पाणिना कठिनं हविः' इति ॥ ❀ ॥ तत्र यज्ञपुरुषस्य जिह्वास्थानानि विज्ञाय होतव्यम् । अज्ञात्वा होमे दोषस्मरणात् । तदाह संग्रहकारः—'यत्र काष्ठं तत्र कर्णौ हुनेच्चेद्व्याधिकृन्नरः । धूमस्थाने शिरः प्रोक्तं मनोदुःखं भवेदिह ॥ यत्राल्पज्वलनं नेत्रं यजमानस्य नाशनम् । भस्मस्थाने तु केशः स्यात्स्थाननाशो धनक्षयः ॥ अङ्गारे नासिकां विद्यान्मनोदुःखं विदुर्बुधाः । यत्र प्रज्वलनं तत्र जिह्वा चैव प्रकीर्तिता । गजवाजिमणादे तु वह्निः शुभफलप्रदः' इति । अन्यच्च—'यत्र काष्ठमिदं कर्णौ यत्र धूमस्तु नासिका । काष्ठमल्पज्वलन्नेत्रं ज्वलनं मूर्ध्नि विन्यसेत् ॥ प्रज्वाला वह्निजिह्वायामेतद्धोमस्य लक्षणम् । अग्नौ कर्णाहुतिः कुर्याद्दुर्भिक्षव्याधिपीडनम् ॥ नासिकायां मनोदुःखं चक्षुषी ग्रामनाशनम् । मूर्ध्नि स्थानेऽशुभं कुर्याद्राजा राष्ट्रं विनश्यति ॥ तस्मात्सर्वप्रयत्नेन जिह्वायां होममाचरेत् ॥ जिह्वास्थानं तु न ज्ञात्वा होमं यः कुरुते द्विजः । स होमो निष्फलं याति यदि होमस्य दुर्गतिः' इति ॥ ❀ ॥ जिह्वानामान्याह स एव—'काली कराली च मनोजवा च

पाठा०—१ द्रव हवि स्रुवेणैव । २ काष्ठस्तत्र कर्णौ ।

संस्कारर०
अग्निमुखं०

सुलोहिनी या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुचिश्च देवी लेलायमाना इति सप्त जिह्वाः' इति। ग्रन्थान्तरे—'सुवर्णा कनका रक्ता कृष्णा चैव तु सुप्रभा । बहुरूपातिरक्ता च सप्त जिह्वाः प्रकीर्तिताः ॥ सुवर्णा वारुणी जिह्वा मध्यमा कनका स्मृता । रक्ता चैवोत्तरा जिह्वा कृष्णा याम्यदिशि स्थिता ॥ सुप्रभा पूर्वदिग्जिह्वा ह्यतिरक्ताग्निगोचरे । ऐशाने बहुरूपा च जिह्वास्थानान्यनुक्रमात् ॥ वसिष्ठो वामदेवश्च जाबालिः काश्यपस्तथा । कण्वो बृहस्पतिश्चैव रोमपादोऽङ्गिरास्तथा ॥ विवाहे वारुणी जिह्वा मध्यमा यज्ञकर्मसु । उत्तरा चोपनयने दक्षिणा पितृकर्मसु ॥ प्राचीना सर्वकामेषु आग्नेयी शान्तिकर्मसु । ऐशानी चोग्रकार्येषु श्वेतहोमस्य लक्षणम्' इति । स्मृत्यर्थसारे—'बहुशुष्केन्धने याग्नौ सुसमिद्धे विधूमके । व्यङ्गारे लेलिहाने च होतव्यं नान्यथा क्वचित् ॥ अग्निः प्रदक्षिणावर्तिः शर्मदश्च शुभावहः' इति । अपि च—'हिरण्यवर्णा जिह्वा च पश्चिमे दिशि तिष्ठति । वसिष्ठोऽस्या ऋषिः प्रोक्तो विवाहादिषु कर्मसु ॥ कनका मध्यमा चैव वामदेवस्य जातके । रक्तोत्तरा च जाबालेरौपनायनकर्मणि ॥ कृष्णा च दक्षिणा जिह्वा काश्यपी पितृकर्मणि । कण्वस्य सुप्रभा पूर्वा सर्वकर्मसु शस्यते ॥ अतिरक्ताग्निदिग्भागे गुरोः शान्तिककर्मणि । ऐशाने बहुरूपा स्याद्रोमपादोऽङ्गिरोऽथवा । एवं जिह्वाविधिं ज्ञात्वा जुहुयादक्षयं भवेत्' इति । आपस्तम्बोऽपि—'यदा वीतार्चिर्लेलायतीवाग्निरथाहुतीर्जुहोति' इति । अत्र खलु श्रूयतेऽग्निहोत्रप्रकरणे—अङ्गारा भवन्ति । तेभ्योऽङ्गारेभ्योऽर्चिरुदैति । प्रजापतिस्तूर्ध्वाग्निः।

पाठा०—१ सुलोहिता या च । २ विश्वरुची च देवी । ३ लीलायमाना इति । ४ पूर्वजिह्वास्यात् । ५ अङ्गारे लेलिहाने च ।

तस्मिन्यस्य तथाविधे जुहोति । प्रजापतेरेवास्याग्निहोत्रं२ हुतं भवति । यदाङ्गारा अभ्यूहते । ब्रह्म तर्ह्यग्निः । तस्मिन्यस्य तथाविधे जुहोति । ब्रह्मण्येवास्याग्निहोत्रं२ हुतं भवति' इति । इति प्रधानहोमः । तदेतत्सकलहोमसाधारणं पूर्वतन्त्रम् ।

अथेदानीं कर्मसमृद्धिसंपादकं स्विष्टकृदादिकमुपरितनतन्त्रमुपपाद्यते । तत्र कारिका—'उपस्तीर्याथ हविषो द्वयोरप्युत्तरार्धतः । पूर्वावदानतो भूयः सकृत्सकृदवद्यति ॥ ओप्य द्विरभिघार्यात्र पात्रस्थं नाभिघारयेत्' इति । अत्र स्विष्टकृदवदानेऽपि चतुरवत्तिनां तद्धर्मेण भवितव्यम् । तत्रायं क्रमः—'दर्व्यामुपस्तीर्य सर्वेभ्यः प्रधानचरुभ्यः सकृदवदाने चतुरवत्तिता न स्यादितिचेन्नैष दोषः । प्रधानदेवतानेकत्ववत्सु कर्मसु देवताभेदेन हविःपृथक्त्वेऽपि स्विष्टकृदर्थत्वाकारेणैकत्वात्सर्वेभ्यो हविर्भ्यः पृथक्पृथगवत्तमप्येकमेवेति न चतुरवत्त्यवदानधर्मभङ्गः। पञ्चावत्तिनां तु कारिका—'स्विष्टकृत्स्युत्तरार्धस्य पुरस्तादप्यवद्यति' इति । हविष उत्तरार्धात्सकृत्सकृदवद्यन्पुरस्तादर्धादप्यवद्यतीत्यर्थः । इतरत्तु समानम् । इदमत्र गृह्यम्—'उत्तरार्धात्सौविष्टकृतं नात्र हवींषि प्रत्यभिघारयति' इति । अस्यार्थः—सर्वेषां हविषामुत्तरार्धात्स्विष्टकृदर्थमवदानं प्रधानावदानाद्भूयः सकृत्सकृदवखण्डयति । पञ्चावत्तीत्येवं सकृत्सकृद्गृहीत्वा पुनरपि पूर्वावदानदेशस्य पुरस्तात्सकृत्सकृदवद्येत्तथा दृष्टत्वात् । ततो द्विरुपरिष्टादभिघारयति पञ्चावत्ती चतुरवत्ती चेति स्विष्टकृति हविःशेषं न प्रत्यभिघारयति । अत्रग्रहणमत्रैव नाभिघारयति न प्रधानहविःष्वित्येवमर्थं हविःशब्दः शेषो वर्तते । यद्यवत्ते वर्तेत तच्चतुरवत्तताहानिः स्यात् न चेष्यत इति । गृह्यपरिशिष्टेऽपि—'स्विष्टकृति द्विरुपरि शिष्टादभिघारयेत्पञ्चावत्ती ह्यवत्तात्पुर-

पाठा०—१ रवत्तिनां धर्मेण । २ हविष पृथक्त्वेपि । हविषां पृथक्त्वे । ३ स्विष्टकृदुत्तरार्धस्य ।

न्नाघारयेत्' इति । भगवानपि—'अवद्य सौविष्टकृतं हविर्भ्यः सकृदेव तु । अवदायोत्तरार्धात्तन्नाभिघार्यं हविः पुनः ॥ आज्यावदानैः शेषाणि स्ववदानानि पूरयेत्' इति । कारिका—'यदस्येत्यादिना हुत्वा प्रागुदक् हविर्भुजः' इति । इदमत्र गृह्यम्—'यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वान्सर्वं स्विष्टं सुहुतं करोतु मे ॥ अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्धयित्रे सर्वान्नः कामान्समर्धय स्वाहा' इति । अस्यार्थः—अनेन मन्त्रेण स्विष्टकृतं जुहुयादिति ॥ ॥ ❁ ॥ होमस्थानमुक्तं तत्रैव—'उत्तरपुरस्तात्सौविष्टकृतम्' इति । अस्यार्थः—अग्नेरुत्तरपूर्वदेशे सौविष्टकृतं हविर्जुहोतीति । अत्र भगवान्—'यदस्य कर्मण इति हुत्वा स्विष्टकृदाहुतिम्' इति । इति स्विष्टकृद्धोमः ।

अथ रज्जुप्रहरणम् । तत्र कारिका—'तामिध्मबन्धनीं रज्जुं विस्रस्य प्रास्य चानले' इति । गृह्यपरिशिष्टेऽपि—'इध्मबन्धनरज्जुं विस्रस्याग्नौ प्रास्येत्' इति । भगवानपि—'इध्मबन्धनयोक्त्रं च विस्रस्याग्नौ विहृत्य च' इति । इति रज्जुप्रहरणम् ।

अथ प्रायश्चित्तहोमः । तत्र कारिका—'अयाश्चेत्यादिभिर्मन्त्रैर्हुत्वाज्याहुतिसप्तकम्' इति । गृह्यपरिशिष्टेऽपि—'अयाश्चाग्नेऽस्यतो देवा इदं विष्णुरित्येताभिर्व्याहृतिभिश्च जुहुयादेताः सप्त सर्वप्रायश्चित्ताहुतयः । एतांश्च ब्रह्मा कर्तारं परीत्य प्रत्यगुदीच्यामन्वारभ्य जुहुयात्' इति । अत्र भगवान्—'आसीनो वा स्थितो वा सन्नग्नेरुत्तरपश्चिमे । अयाश्चेत्येकयर्चा तु अतो देवा अवन्तु नः । इति द्वाभ्यां व्याहृतिभिर्हुत्वा चतसृभिर्घृतम्' इति । ततो ब्रह्मा मन्त्रविपर्यासादिनियतनिमित्ते प्राप्ते कारिकोक्त—यद्वो देवा

पाठा—१ अयाश्चाग्ने अतो देवा । २ सप्त प्रायश्चित्ताहुतीः । ३ एतां ब्रह्मा च ।

इति मन्त्रेण यथाचारमापस्तम्बकल्पोक्तेनानाज्ञातमिति मन्त्रेण चाज्याहुतीर्जुहुयात् । तत्र कारिका—'व्युत्क्रमो देवतानां तु संकल्पादौ भवेद्यदि । द्रव्याणां व्युत्क्रमः स्याच्चेत्तथा निर्वपणादिषु ॥ मन्त्यात्पूर्वार्धतश्चेति व्युत्क्रमो वा भवेद्यदि । यद्वोदेवाऋचा त्रह्मा जुहुयाच्च स्रुवाहुतिम्' इति । आपस्तम्बस्तु—'अनाज्ञातमिति तिस्रोऽनाज्ञाते जुहुयात्' इति । इत्येतन्नित्यप्रायश्चित्तविषयम् ।

अथ नैमित्तिकप्रायश्चित्तम् । तत्र कारिका—'स्वयं ज्वलंश्चेदुद्दीप्यस्वेति द्वाभ्यां समिद्द्वयम् । आधेयमुपघाते तु पुनस्त्वेत्यनया समित् ॥ अर्वाक् शम्यापरासात्तु बहिरायतनाद्गतम् । प्रायश्चित्तसमाप्त्यन्तं समर्थं जीवितुं यदि ॥ इदं त इत्यृचा तस्य स्थानेऽग्निं प्रक्षिपेत्पुनः । आज्याहुतीश्च जुहुयाद्व्याहृत्याख्यैश्च पूर्ववत् ॥ अतिक्रान्तो यदा शम्यापरासमनलो भवेत् । चरुः पथिकृतः कार्यः पूर्णाहुतिरथापि वा ॥'—शम्यापरासः शम्याप्रमाणम् । 'शम्यापरासः शम्यया परिमितो देशः' इति सूत्रव्याख्याने षड्गुरुशिष्येणोक्तत्वात् । शम्या च षट्त्रिंशदङ्गुला । 'शम्या षट्त्रिंशदङ्गुला' इत्यापस्तम्बस्मरणात् । पूर्णाहुतिप्रकारं तु कारिकोक्तमुत्तरत्र दर्शयिष्यामः । 'आहुतिर्हूयमाना तु बहिः स्कन्देत चै यदि । देवाञ्जनमगन्यज्ञ इत्यनेनाभिमृश्य ताम् ॥ द्रप्सश्चेत्याहुतिं हुत्वा प्रक्षिपेदनले पुनः । देवाञ्जनेति सर्वत्र स्कन्नं समभिमृशेद्बुधः ॥ होतव्याज्याहुतिस्तत्र व्याहृत्याख्यसमुच्चयात् । प्राग्यागाद्व्युत्क्रमे ज्ञाते इदं कृत्वा यजेत्ततः ॥ अविज्ञातविपर्यासे विहितां देवतां स्मरन् । इष्टवांस्तत ऊर्ध्वं तु व्युत्क्रमावगमे सति ।

पाठा०—१ आपस्तम्बोक्तकल्पेन । २प्रायश्चित्तानि । ३स्वयं ज्वलेच्चेत् । ४ पथिकृत- कार्य । ५बहिः स्कन्ना भवेद्यदि । ६ स्कन्नं चाभिमृशेत् । ७ व्याहृत्याख्यः समुच्चयः ।

प्रायश्चित्तमिदं कृत्वा यागं नावर्तयेत्तदा ॥ यदा त्वविहितां कांचिद्देवतामिष्टवांस्तदा । प्रायश्चित्तमिदं कृत्वा यागमावर्तयेत्कृतम् ॥ पवित्रं यदि नश्येच्चेत्स्यात्पवित्रवते चरुः । यदा हविरपक्वं स्यात्तेनैव हविषा यजेत् ॥ चतुश्शरावमात्रं तु पचेद्व्रीहिभिरोदनः । भोजयेत्तेन चान्नेन चतुरो ब्राह्मणानथ ॥ बहुदग्धमदग्धं वा किंचिदेव यदा हविः । शिष्टेनेष्ट्वा पुनर्यागः स्यादारभ्यादितस्तदा ॥ कृत्स्नं दग्धं यदा तत्स्यात्पुनरुत्पादयेद्धविः । स एव यागः कर्तव्यः पुनर्यागस्तु नेष्यते ॥ मध्यात्पूर्वार्धतोऽवत्तं यदि दुष्टं हविर्भवेत् । तस्थैव हविषोऽवद्येन्मध्यात्पूर्वार्धतः पुनः ॥ इध्माधाने कृते दुष्टं प्रधानं हविरत्र चेत् । तत्स्थाने जुहुयादाज्यमदुष्टं च जुहोत्यथ ॥ एवं समाप्य यद्दुष्टं तदप्सु प्रक्षिपेत्पुनः । अन्वाधानादिको यागः पुनः कर्तव्य एव तु ॥ प्रागिध्माधानतो दुष्टे प्रधानहविषि त्वथ । तद्धविः पुनरुत्पाद्य पूर्ववत्तत्समापयेत् ॥ अङ्गानां चेद्धविर्दुष्टं तदप्सु प्रक्षिपेत्पुनः । स्विष्टकृद्धविषो दोषे आज्येनैव समापयेत् ॥ प्रच्युतैस्तु नखैः केशैः कीटैर्वा मेध्यसेविभिः । वसाशृङ्शुक्रमज्जास्थिमूत्रविट्छेददूषकैः ॥ श्लेष्माद्यैरपि बीभत्सैर्दुष्टानि स्युर्हवींषि चेत् । भिन्नानि चैव सिक्तानि दुष्टानि स्युः क्षिपेज्जले ॥ स्रुक्च भिद्येत चेदन्यामाहृत्य जुहुयाद्धविः ॥ वानस्पत्यानि भिन्नानि प्राग्दण्डान्यनले क्षिपेत् । अन्यच्चाशुचिसंसृष्टं मृन्मयं छिन्नमेव वा । भूमिर्भूमीति मन्त्रेण प्रक्षिपेदेव तज्जले ॥ तत्र श्रुतिः—'भूमिर्भूमिमगान्माता मातरमप्यगात् । भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम्' इति ॥

---

पाठा०—१ याग त्वावर्तयेत् । २ अमेध्यसेविभि । ३ अन्यत्राशुचि ।

अथ प्रायश्चित्तानन्तरं कृत्यमाह स एव—'प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै । कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चितः ॥ प्रायश्चित्तविशेषस्तु यत्र नोक्तो भवेद्विधिः । होतव्याज्याहुतिस्तत्र भूर्भुवःस्वरितीति च' इति ।

अत्र स्मृतिचन्द्रिकायां प्रजापतिः सर्वोत्कृष्टं प्रायश्चित्तमाह—'प्रमादात्कुर्वतां कर्म प्रच्यवत्यध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः' इति । अध्वरेषु यज्ञेषु । एतत्प्रायश्चित्तजपहोमं ब्रह्मैव कुर्यात्—'जुहोति जपतीति प्रायश्चित्ते ब्राह्मणम्' इति सूत्रात् ॥ ❀ ॥ प्रायश्चित्तविशेषकर्त्रे ब्रह्मणे दक्षिणाविशेषमाह कारिकाकारः—'यन्मुख्यं स्वगृहे द्रव्यं होमकर्त्रे ददाति हि' इति । ब्रह्माभावे यजमान एवैतान् जुहुयात् । तथा च कारिका—'यजमानस्तु जुहुयाद्ब्रह्माभावे स्रुवाहुतिम् । कर्मचिद्ब्राह्मणायास्मिन्पक्षे द्रव्यं ददाति च' इति । इति प्रायश्चित्तहोमः ।

अथ पूर्णाहुतिः । तत्र कारिका—'आज्यं द्वादशकृत्वस्तु गृहीत्वा पूरयेत्स्रुचम् । तया चाज्याहुतिः कार्या सा पूर्णाहुतिरिष्यते ॥ सुवपूर्णाहुतिर्वा स्यादित्येके याज्ञिका विदुः' इति । भगवांस्तु—'अयाश्चेत्यादिभिर्हुत्वा समुद्रादूर्मिमृक्ततः । संततामाज्यधारां तां पूर्णाहुतिमथाचरेत्' इति । अत्र समुद्रादूर्मिःसूक्तेन विज्योतिषेत्यृचा च होमं कुर्यादित्युक्तमृग्विधाने—'समुद्रादूर्मिःसूक्तेन संयतात्मा जितेन्द्रियः । विज्योतिषेति ज्वलयेदग्निं च्छेज्जातवेदसम् ॥ तमग्निंसूक्तसंपाती (?) भद्रेण द्रविणेन वा' इति ॥ ❀ ॥ अत्रेतिकर्तव्यतामाह संग्रहकारः—'एवं यथोचितं शक्त्या हुत्वा पूर्णाहुतिं चरेत् । घृतेनापूर्य स्रुग्गर्भमूर्ध्वत्रक-

पाठा०—१ प्रच्यवेताध्वरेषु यत् । २ प्रायश्चित्तकर्त्रे । ३ तमग्नि सोतसपाति ।

स्रुचि स्रुवम् ॥ निधायाधोमुखं न्यस्य स्रुवाग्रे कुसुमाक्षतम् । पश्चाद्वामपुरोदक्षकराभ्यां शङ्खमुद्रया ॥ गृहीत्वा स्रुक्स्रुवौ मन्त्री स्रुवाग्रन्यस्तलोचनः । ऋजुकायः प्रसन्नात्मा समपादः समुत्थितः ॥ स्थिरधीर्जुहुयादग्नौ यवसंमितधारया । पूर्णाहुतिरियं प्रोक्ता सर्वकर्मप्रपूरणी' इति । इतिपूर्णाहुतिहोमः ।

अथ तण्डुलकणादिप्रहरणमाह भगवान्—'तुषान्कणान्समुच्छिष्टान्संप्रोक्ष्याग्नौ प्रहृत्य च' इति ॥

अथ पूर्णपात्रनिनयनादि । तत्र कारिका—'निनयेत्पूर्णपात्रं तन्निहितं यथ बर्हिषि । आपो अस्मानयं मन्त्र इदमाप इतीतरः ॥ सुमित्र्या न इति त्वन्य एभिर्मार्जनमाचरेत् । एतच्चात्रं हुतानां स्यान्नोपवासादिरिष्यते ॥ देवतात्वत्रतत्रोक्ताः सेयःकालस्तथेष्यते । कार्यं पुंसवनादौ तु पत्न्या अपि च मार्जनम् ॥ केचिदन्ये नेति चाहुरुपस्थायोंचमेस्वरः । पर्युक्ष्य परिषिच्याग्निं हुतशिष्टं घृतं च यत् ॥ ब्रह्मणे तदभावे तु ब्राह्मणेभ्यः प्रदीयते' इति । इदमत्र गृह्यम्—'बर्हिषि पूर्णपात्रं निनयेदेषोऽवभृथः पाकयज्ञानामेतत्तत्रं हविरुच्छिष्टं दक्षिणा' इति । अस्यार्थः—यत्पूर्वं निहितं पूर्णपात्रं तदधुना बर्हिषि निनयेदित्यर्थः निषिञ्चेदित्यर्थः । यदिदं पूर्णपात्रनिनयनमेषोऽस्य कर्मणोऽवभृथो भवति । अवभृथवचनमवभृथधर्मप्राप्त्यर्थम् । तेन कालोऽभ्युक्षणं च भवति । कालस्तु सर्वप्रायश्चित्तेभ्य ऊर्ध्वं प्राक्संस्थाजपात् । अनेनैवाभ्युपायेन सर्वप्रायश्चित्तानि च संस्थाजपश्च कर्ता कार्याणीत्युक्तं भवति ॥ ❀ ॥ निरसनोपवेशने ब्रह्मजपः सर्वप्रायश्चित्तानि संस्थाजप इति ब्रह्मणः पञ्च भवन्तीत्युक्तं तत्रैवं क्रमः—पूर्वं कर्ता सर्वप्रायश्चि-

पाठा०—१ न्यस्येत्स्रुवाग्रे कुसुमाक्षता । २ यवप्रमितधारया । ३ पूर्णपात्र तु निहितं । ४ सवस्तत्वमिष्यते ।

तानि जुहोति । ततो ब्रह्मा तानि जुहोति । ततः कर्ता पूर्णपात्रं निनयति । ततः संस्थाजपेनोपतिष्ठते । ततो ब्रह्मोपतिष्ठते । ततः कर्ता पर्यूहनपर्युक्षणे इति । अभ्युक्षणं तु—आपो अस्मान्मातरः० इदमापः० सुमित्र्या नः० इत्येतैर्मन्त्रैरिति । एतत्तन्त्रं सर्वेषां पाकयज्ञानां भवतीति । पाकयज्ञग्रहणं स्थालीपाकप्रभृतीनां हुतानामेव तन्त्रं यथा स्यात् प्रहुतब्राह्मणिहुतानां माभूदित्येवमर्थम् । अङ्गसंहतिलक्षम् । महविधानमित्यर्थः । यद्यपि गर्वमुच्यते तथापि । न प्रधानदेवताः प्रसजन्ति । 'देवतागमे नित्यानामपायः' इति बाधदर्शनात् । उच्छिष्टहविर्दक्षिणां ददाति ब्रह्मणे यद्यस्ति ब्रह्मा । तदभावे ब्राह्मणेभ्यः कर्माङ्गत्वाद्दक्षिणादानमिति । गृह्यपरिशिष्टेऽपि—'बर्हिषि पूर्णपात्रं निनीय ताभिरद्भिरापो अस्मान्मातरः शुन्धयन्त्विदमापः प्रवहत इत्येताभ्यां सुमित्र्या न आपओषधयः सन्त्वित्यनेन चात्मानं शिरसि मार्जयेत् संस्कार्यानपि संस्कारकर्मस्वथाग्निमोचम इति संस्थाजपेनोपतिष्ठते ततो ब्रह्मा च । अथ कर्ताग्नेः परिसमूहनपर्युक्षणे कुर्यादेतदेव तन्त्रमन्येषु स्थालीपाकवत्सु कर्मस्विति । पूर्णपात्रविषये स्मृतिरूपेणाहाचार्यः—'गङ्गाद्याः सरितः सर्वाः पूर्णपात्रे तु संस्थिताः । ताभिरभ्युक्षितो यस्तु स पुनीतो भवेदघैः ॥ कर्मान्ते पूर्णपात्रं तदाकृष्यैवात्रनिं स्पृशन् । बर्हिषि स्थाप्य संतर्प्य स्रावयेद्वारुणीं दिशम् ॥ वामं तत्पश्चिमे न्यस्य करं दक्षेण गृह्य च । न्यञ्चं कुर्यात्ततः पात्रं पश्चिमाभिमुखं द्विजः ॥ ताः स्रुता विशमानास्तु समुद्रं प्रति पावनीः । आत्मानं प्रोक्षयेद्विद्वानद्भिस्ताभिः शुभाप्तये' इति । संतर्प्येति संतर्पणमुत्सेचनम् । अयमिह क्रमः—प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तामित्यादिपञ्चमन्त्रैः प्रागादिपञ्चदिशु यथालिङ्गमुत्सिञ्चेदिति । अत्र

पाठा०—१ त्रिहगर्भितमिदं वाक्यं क्वचिन्नास्ति । २ तन्त्रमिति ।

र्मादौ । नैकेकांचनेत्यपि पक्षे तत्रैताभ्यो देवताभ्यो जुहोति मन्त्रानादेशे । इतीयमेव व्याख्या साध्वी मन्त्रप्रकरणत्वात्, तेन जातकर्मादौ होमोऽस्ति । अन्येतु—पूर्वोक्तदोषपरिहारेण वर्णयन्ति तत्र परशास्त्रे होमश्चोद्यते, स्वशास्त्रे तु कर्ममात्रं तत्रैता देवता भवन्तीति । क । जातकर्मादौ । एकबर्हिरिध्माज्यस्विष्टकृतः स्युस्तुल्यकाला इति । एकं बर्हिरादिर्येषां पाकयज्ञादीनां ते तथोक्ताः । तुल्यकाला एककालाः एकस्मिन्काले आपद्यन्ते । के । पाकयज्ञाः समानकाले कार्यत्वेन प्राप्तास्तदा ते समानतन्त्राः कार्या इत्यर्थः । किमुदाहरणम् । यदा पर्वणि राकादौ पुत्रकामनोत्पद्यते तदा काम्यपार्वणयोरेककालत्वम् । यदा चाग्रयणाश्वयुजीकर्मणी आश्वयुज्यां क्रियेते तदा तयोरेककालत्वम् । बर्हिरादिग्रहणस्य तन्त्रोपलक्षणार्थतां स्पष्टयितुं यज्ञगाथामुदाहरति—तदेषेति । तत् तस्मिन्नर्थे एषा यज्ञगाथा गीयते पठ्यते—पाकयज्ञानिति । बहूनां पाकयज्ञानामेकस्मिन्काले समासाद्य प्राप्य एकाज्यानेकबर्हिषः एकस्विष्टकृतः कुर्यान्नानापि सति दैवते इति । न प्रतिदैवतं तन्त्रमावर्तयितव्यमित्यर्थ इति । गृह्यपरिशिष्टे तु—'अथाश्वलायनगृह्ये यानि कानिचिदन्यनोक्तानीहेच्छता आचार्येणानुमतापि ज्ञापितानि, यानि चोक्तप्रदर्शितक्रियाणि तानि सर्वाण्यवबोधाय यथावदभिधास्यामः—कर्ता स्नातो धौतानार्द्रवासा यज्ञोपवीत्याचान्तः प्राङ्मुख आसीनो दक्षिणाङ्गकारी समाहितो मन्त्रान्ते कर्म कुर्वीत । प्रत्यृचोक्तिष्वृगन्तेषु, अनादेश आज्यं द्रव्यं, स्रुवः करणम्, अवदानवत्सु दर्वी, पाणिः कठिनेषु, कर्मावृत्तौ मन्त्रोऽप्यावर्तते, कर्मणोऽन्त आचमनं चेति सामान्यम्' इति। अत्र श्रौतसूत्रम्—'सर्वत्र जपानुमन्त्रणाप्यायनोपस्थानान्युपांशु मन्त्राश्च

पाठा०—१ समासाद्यत्वे प्राप्यत्वे । २ सर्वावबोधाय । ३ करणेष्ववदानवत्सु ।

कर्मकरणाः' इति । अस्यार्थः—सर्वतःशब्दोऽत्रापि संबध्यते मध्यगतस्य विशेषग्रहणात् प्रयोजनवत्त्वाच्च । अस्मिञ्शास्त्रे यानि जपादीनि तान्युपांशु प्रयोक्तव्यानि । चशब्देनात्र सर्वत्रेत्युपांश्वित्याकृष्यते । मन्त्राः कर्मकरणाश्च सर्वत्रोपांशुप्रयोक्तव्याः । उपांशुलक्षणं लक्षणं 'करणवदशब्दममनःप्रयोग उपांशु' इति ॥ ❀ ॥ जपादीनां षण्णां लक्षणमुच्यते—'जपमुच्चारणं विधात्रक्तार्थमपि तद्भवेत् । अर्थतः कार्यलाभश्चेदर्थ एव कृती भवेत् ॥ मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत् । शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम् ॥ एतदेवाभिमन्त्रस्य लक्षणं चोक्षणादिकम् । अद्भिः संमर्शनाधिक्यात्तदेवाप्यायनं स्मृतम् ॥ उपस्थानं तदेव स्यात्प्रणतिस्थानसंयुतम् । याद्यं कर्म यदेतेषु मन्त्रकाले क्रियेत तत् ॥ कर्मणः करणं तस्य विहितार्थप्रकाशनम् । मन्त्रेण कृत्वा मन्त्रान्ते क्रियते कर्म येषु तु ॥ इदं कार्यमनेनेति न क्वचिद्दृश्यते विधिः । लिङ्गादेवेदमर्थत्वं येषां ते मन्त्रसंज्ञिताः—' इति । अनुमन्त्रणग्रहणेनाभिमन्त्रणमपि गृह्यते । अनुमन्त्रणाप्यायनोपस्थानानां कर्मकरणत्वाविशेषेऽपि यत्पृथग्ग्रहणं तत्र मन्त्रान्ते कर्मारम्भ इति कर्मकरणधर्मो यः स तेषु न भवतीत्येवमर्थम् । तेन मन्त्रोच्चारणसमकालमेव तेषु क्रिया भवती'ति । अत्र भगवान्—'यत्रोपदिश्यते कर्म कर्तुरङ्गं तु नोच्यते । दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥ यत्र दिङ्नियमो नोक्तो जपहोमादिकर्मसु । तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्री सौम्याऽपराजिता ॥ रौद्रमन्त्रजपे चैव ह्यासुरेष्वाभिचारिके । राक्षसादिजपे चैव कर्म कुर्वन्नपः स्पृशेत् ॥ आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नोच्यते । तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठता ॥ नित्यं नैमित्तिकं काम्यं कर्माहुस्त्रिविधं बुधाः ।

पाठा०—१ नप्युच्यते । २ राक्षसे तु जपे । ३ ऊर्ध्वबाहुर्वा ।

एतेषां कर्मणां होता तत्रं कल्पश्च वक्ष्यते ॥ अथो पितृभ्योऽभ्युदयश्राद्धं चैव परेऽहनि । हविष्यान्नं सकृद्भुक्त्वा ब्रह्मचारी स्वलंकृतः ॥ प्रकोष्ठे तन्तुभिर्मन्त्रैः संनह्येद्रुमये द्विजः । पुण्याहं वाचयेद्विप्रैरितरैर्वेदपारगैः ॥ मनःप्रसादात्सत्योक्त्या तपसा स्नानकर्मणा । आचम्य चात्मनः शुद्धिं कृत्वा कर्म समारभेत् ॥ अनादेशे स्वयं कर्ता सभ्य ऋत्विक्पुरोहितः । प्राकूलता साधनानां प्राक्संस्थत्वं च कर्मणाम् ॥ कर्तुः प्राङ्मुखताऽनुक्ते क्रियायां प्राक्समूहनम् । अङ्गद्वये सत्येकेन चाङ्गेन वचनोदिते । दक्षिणेनैव कर्तव्यं तथानुक्ताङ्गकर्मणि ॥ आसीनेनैव कर्तव्यं यत्र स्थानमचोदितम् । हविष्यं चोदितं तद्वदाज्यं तत्र हविर्भवेत् ॥ कर्मोपवीतिना कार्यं निवीतेनापि चोदिते । अविज्ञातस्वरा मन्त्राः प्रयोक्तव्याः प्रयोक्तृभिः ॥ एकश्रुत्यैव होमेषु विज्ञाताश्च विकल्पतः । यस्मिन्मन्त्रे न पठितः स्वाहाकारो भवेद्यदि । स्वाहान्तेन प्रयोक्तव्यो होमेषु प्रणवादिकः ॥ यत्र स्यात्प्रत्यृचंशब्दस्तत्रैवं होम इष्यते । ऋगन्ते तत्र होतव्यं स्वाहाकारं पठेत्ततः ॥ जानीयात्प्रत्यृचं मन्त्रं तदन्यानुपदेशतः' । एतद्गृह्येपि ज्ञापितम् । तथाहि—'आ नः प्रजां जनयतु प्रजापतिरिति चतसृभिः प्रत्यृचं हुत्वे'ति । अस्यार्थमाह नारायणः—प्रत्यृचग्रहणं कथम्, ऋगन्तेन होमः स्यात् न स्वाहाकारान्तेनेत्येवमर्थम् । स्वाहाकारं पठन् जुहुयादित्यर्थः । तेन यत्र प्रत्यृचग्रहणं नास्ति तत्र स्वाहाकारमुक्त्वा पश्चाद्धोमः कार्य इति । हरदत्तस्त्वाह—'आ नः प्रजामिति चतसृभिः प्रत्यृचं जुहोति । यत्र प्रत्यृचग्रहणं नास्ति तत्रापि प्रत्यृचहोमो भवति—'धाता ददातु दाशुषे' इत्यादौ । एकस्य कर्मणो बहुमन्त्रसमन्वाय्यमितिकृत्वा यथाहापस्तम्बः—'वचनादेककर्मे

---

पाठा०—१ होमतन्त्रं वक्ष्यते । २ विज्ञाताश्चाविकल्पत ।

मधुमन्तम्' इति । इह प्रत्यृचग्रहणमृगन्ते होमो यथा स्यात्स्वाहाकारान्ते माभूदिति । केचिदृगन्ते हुत्वा पश्चात्स्वाहाकारं कुर्यादिति वदन्तीति । 'ॐभूर्भुवःस्वरेति तिस्रो व्याहृतयो जपेत् । आमिश्र होमे तिस्रमिश्चतुर्थी स्यात्समासतः' इति ।

अथ पूर्णपात्रनिनयनं गृह्ये 'एषोऽत्रभृयः पाकयज्ञाना'मित्युक्तं तत्पाकयज्ञस्वरूपाद्याह गृह्यकारः—'उक्तानि वैतानिकानि गृह्याणि वक्ष्यामस्त्रयः पाकयज्ञा हुता अग्नौ हूयमाना अनग्नौ प्रहुता ब्राह्मणभोजने ब्रह्मणिहुता अथाप्यृच उदाहरन्ति यः समिधा य आहुती यो वेदेनेति समिधमेवापि श्रद्दधान आदधन्मन्येत यज इदमिति नमस्तस्मै य आहुत्या यो वेदेनेति विधयैनाप्यास्ति प्रीतिस्तदेतत्पश्यन्नृषिरुवाच—अगोरुधाय गविषे द्युक्षायदस्म्यं वचः । घृतात्स्वादीयो मधुनश्च वोचतेति—वच एव म इदं घृताच्च मधुनश्च स्वादीयोऽस्ति प्रीतिः स्वादीयोऽस्त्वित्येव तदाह—आ ते अग्न ऋचा हविर्हृदा तष्टं भरामसि । ते ते भवन्तूक्षण ऋषभासो वशा उतेत्येत एव म उक्षाणश्च ऋषभाश्च वशाश्च भवन्ति य इमं स्वाध्यायमधीयत इति यो नमसा स्वध्वर इति नमस्कारेण वै खल्वपि न वै देवा नमस्काम्मति यज्ञो वै नम इति हि ब्राह्मणं भवति' इति । अस्यार्थः—उक्तानीति । वैतानिकान्युक्तानि । अतःपरं गृह्याणि वक्ष्यामः । वितानोऽग्नीनां विस्तारस्तत्र भवानि वैतानिकानि त्रेताग्निसाध्यानि कर्माणीत्यर्थः । गृहनिमित्तोऽग्निर्गृह्यस्तत्र भवानि कर्माण्यपि लक्षणया गृह्याणीत्युच्यन्ते । गृहशब्दो भार्यायां शालायां च वर्तते, यथा 'सगृहो गृहमागतः' इत्यत्र । तत्र पूर्वो गृहशब्दो भार्यावचनः । उत्तरस्तु शालावचनः । येषां भार्यासंयोगादुत्पन्नाग्नाविमानि कर्माणि

पाठा०—१ अथ श्रौतसम्बद्धकरणगृह्यमुच्यते इति मूर्धलेखोन्यत्र । २ त्रेताग्निसाध्यानि । ३ इत्यादौ ।

सूत्रम्—'दक्षिणस्यां दिशि मासाः पितरो मार्जयन्ताम्। प्रतीच्यां दिशि गृहाः पशवो मार्जयन्ताम्। उदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्ताम्। ऊर्ध्वायां दिशि यज्ञः संवत्सरः प्रजापतिर्मार्जयन्ताम्' इति। भगवांस्तु—'आदाय पूर्णपात्रं तु बर्हिष्याधाय पाणिना। स्पृष्ट्वा दक्षिणहस्तेन तत्पूर्णमसिमन्त्रतः॥ प्राच्यांदिश्यादिभिर्मन्त्रैः कुर्याः प्रागादिषु क्रमात्। उदकं तु प्रतिदिशं प्रोक्ष्याधस्तान्निधाय तत्॥ आपोअस्मानित्यनया इदमाप इति सथ। सुमित्र्यान इत्येतेन मन्त्रान्ते मार्जनं ततः॥ दुर्मित्र्या इति मन्त्रेण प्रत्यग्दक्षिणदेशके। तं हन्मीत्येन मन्त्रेण कुशाग्रैः प्रक्षिपेदपः॥ वामपार्श्वे तथासीनां पत्नीं प्रत्यग्वविर्भुजः। आसिच्य पाणौ तत्तोयं माहं प्रजामनेन तु॥ तत्पाणिभ्यां गृहीत्वा तु पापमात्मकृतं स्मरन्। आत्मानं यजमानं च होता त्रिःप्रोक्ष्य तज्जलैः॥' अत्रोक्तविशेषः श्रौतस्याविरोधित्वात्सर्वैरनुष्ठेयः। अत्रान्यस्य होतुरभावाद्धोतृशब्देन ब्रह्मैवोच्यत इति।—ओंचम इत्युपतिष्ठेताग्निः प्रत्यगुदक्स्थितः॥ श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम्। आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन॥ अग्निमेतेन मन्त्रेण प्रार्थयेत द्विजोत्तमः। ततः पर्युक्ष्य पर्युक्ष्य दद्याद्विप्राय दक्षिणाम्॥ स्वेषुस्वेषूक्तकल्पेषु यथोक्ता सैव दक्षिणा। होमोपयोगि यद्द्रव्यं होत्रे दद्यात्सदक्षिणम्॥ यथोक्तदक्षिणालाभे हिरण्यं वा स्वशक्तितः। यद्यस्ति हुतशेषं तु देयं विप्राय तद्बुधः॥ प्रक्षाल्य यज्ञपात्राणि गृह्णीयाद्द्वन्द्वशः क्रमात्। यज्ञतन्त्रमिदं प्रोक्तमेकाग्नेर्यज्ञकर्मणि॥ प्रयोक्तॄणां प्रयोगार्थं शौनकेन यथाक्रमम्' इति।

पाठा०—१ प्रोक्ष्याधस्तात्। २ अत्रोक्तमन्त्रविशेष।

अत्र पूर्णपात्रपतनादौ विशेषमाहापस्तम्बः—'यदि प्रणीता स्कन्देयुरुपदस्येयुर्वापो हि ष्ठा मयोभुव इति तिसृभिः पुनर्गृहीत्वा ततं म आप इत्यनया स्रुवाहुतीर्जुहोति' इति ॥ ❀ ॥ पुनरुपस्थाने विशेषमाहर्ग्विधानकारः शौनकः—'हुत्वा वह्निमुपस्थाय प्राणार्थे हव्यवाहनम् । अग्ने त्वमिति सूक्तेन आयुष्यं वाञ्छितं लभेत्' इति ॥❀॥ अत्र हविःशेषं विप्रेभ्य एव दद्यादित्याश्वलायनाचार्यः स्मृतिरूपेणाह—'स्थालीपाकस्य शिष्टान्नं सार्ताग्निः पर्वणोरपि । दंपती तु न भुञ्जीत दद्याद्विप्रेभ्य एव तत्' इति ॥❀॥ दक्षिणादाने विशेष उच्यते हेमाद्रौ । तत्र महाभारतम्—'वेदोपनिषदे चैव सर्वकर्मसु दक्षिणा । सर्वक्रतुषु चोदिष्टा भूमिर्गावोऽथ काञ्चनम्' । तत्र श्रुतिस्तु—'परमा सुवर्णं दक्षिणा वै'ति ॥❀॥ रजतस्य दक्षिणात्वेन निषेध उच्यते वैजवापेन—'शिवनेत्रोद्भवं यस्मात्तस्मात्तत्पितृवल्लभम् । अमङ्गलं तद्यत्नेन देवकार्येषु वर्जितम्' इति । श्रुतिरपि—'यदश्रीयत तद्रजत२ँ हिरण्यमभवत्तस्माद्रजत२ँहिरण्यमदक्षिण्यमश्रुज२ँहि यो बर्हिषि ददाति पुराऽस्य संवत्सराद्गृहे रुदन्ति तस्माद्बर्हिषि न देयम्' इति । बर्हिपि दैविके कर्मणि । इति दक्षिणादाने विशेषः । इति पूर्णपात्रनिनयनादि ।

अथ सकलकर्मसाधारणपरिभाषोच्यते । तत्र कारिका—'आज्यैकद्रव्यके होमे स्याच्चेदाज्यपरिग्रहः । स्यात्परिस्तरणं तत्र कृताकृतमिति स्थितिः ॥ नोच्चारयति यत्राज्यपदं कर्मसु सूत्रकृत् । अनादिष्टाज्यहोमेषु तत्र नित्या परिस्तृतिः ॥ सर्वस्मिन्पाकयज्ञे स्त आज्यभागौ कृताकृतौ । सर्वेषु[1] पाकयज्ञेषु भवेद्ब्रह्मा कृताकृतः ॥ धन्वन्तरिमखे ब्रह्मा नित्यः शूलगवे तथा ॥ ऊचे होमं कश्चिन्नाम्ना

पाठा०—१ सर्वेषु पाकयज्ञेषु ।

कश्चिन्मन्त्रेण भूत्रकृत्। नोभयं यत्र तत्रेष्टं हवनं नामधेयतः ॥ नैकेकांचन पक्षोऽयं चौलादावाश्रितो यदा। तदाग्निरिन्द्र इत्याद्या होतव्या इति सूत्रकृत् ॥ अनेके पाकयज्ञाः स्युरेकस्मिन्काल एव चेत्। सैमानतन्त्रता कार्या न तत्रावृत्तिरिष्यते ॥ पात्रासादनमिध्मात आज्याधिश्रयणादि च। स्रुगादिमार्जनं चेध्मरज्जुप्रहरणं तथा॥ पूर्णपात्रं भवेन्नित्यमाज्यस्योत्पवनं तथा। द्रव्यानादेश आज्यं स्यादनुक्ते साधने स्रुवः॥ जपानुमन्त्रणे मन्त्र उपस्थानाभिमन्त्रणे। मन्त्रो यः कर्मकरणे गृह्यकर्मण्युपांशु पट् ॥ इदं कार्यमनेनेति न कचिद्दृश्यते विधिः। लिङ्गादेवेदमर्थत्वं येषां ते मैन्त्रसंज्ञकाः॥ मन्त्रान्ते कर्म कर्तव्यं सर्वत्र करणत्वतः। कर्मावृत्तौ तु मन्त्रस्याप्यावृत्तिर्गृह्यकर्मणि ॥ मन्त्रोक्तदेवतानां च तूष्णीमेवाथ निर्वपेत्। चतुरश्चतुरो मुष्टीन्प्रोक्षणं च तथा भवेत् ॥ सहैव श्रपयेत्तत्र नास्ति व्युद्धरणं तथा। आदिष्टमन्त्रहोमेषु सर्वत्रैवं प्रतीयताम्' इति। इदमत्र गृह्यम्—'कृताकृतमाज्यहोमेषूपस्तरणं तथाज्यभागौ पाकयज्ञेषु ब्रह्मा च धन्वन्तरियज्ञशूलगवर्जमग्नये स्वाहेति जुहुयादग्निरिन्द्रः प्रजापतिर्विश्वेदेवा ब्रह्मेत्यनादेश एकबर्हिरिध्माज्यस्विष्टकृतः स्युस्तुल्यकालास्तदेषाभियज्ञगाथा गीयते—पाकयज्ञान्समासाद्य सेकाज्यानेकबर्हिषः। एकस्विष्टकृतः कुर्यान्नानापि सति दैवते' इति। अस्यार्थः—कृताकृतमिति—कृतिरेव कृतं कृतं चाकृतं यस्य तत्तथोक्तम्। मत्वर्थीयोऽच् प्रत्ययः। आज्यं होमो हविरस्मिन्स आज्यहोमः। अन्य-

पाठा०—१ नैवेशानन। २ चाल्पवत्तु। ३ समानतन्त्राः कर्तव्या न तत्रावृत्तिरिष्यते। ४ मन्त्रमहिता। ५ समानकाला। ६ सार्वैकाज्यानेकबर्हिष। ७ आज्यमेव हविरस्मिन्।

था आज्यग्रहणस्य वैयर्थ्यं स्यात् । सर्वत्र ह्याघारादयः सन्त्येव । आज्यहोमेषु परिस्तरणं कार्यं वा नवेत्यर्थः । अयंच परिस्तरणविकल्पो यत्राज्यग्रहणमस्त्याहुतीर्जुहोतीति तत्रैव भवति न पुनरनादिष्टाज्यहोमेषु । यद्यनादिष्टाज्यहोमेष्वयं विकल्पः स्यात्तत्राज्यग्रहणमनर्थकं स्यात् । तथाज्यभागौ पाकयज्ञेष्विति । तथा कृताकृतावित्यर्थः । पाकयज्ञेषु सर्वेष्वाज्यभागौ कार्यौ वा नवेत्यर्थः । पाकयज्ञग्रहणमाज्याधिकारनिवृत्त्यर्थम् । ब्रह्मा च धन्वन्तरियज्ञशूलगववर्जमिति । तथेति वर्तते । पाकयज्ञेष्विति च । ब्रह्मा च सर्वेषु पाकयज्ञेषु कृताकृतो भवति धन्वन्तरिमखं शूलगवं च वर्जयित्वा । अथ तयोर्नित्यो भवति उत नैव भवति । नित्यो भवतीति ब्रूमः । कुतः । तयोर्ब्रह्मोपदेशात् ब्रह्माणमग्निं चान्तरा चेद्यां चरित्रवन्तं ब्रह्माणमुपवेश्येतिच । तर्हि तस्मादेव नित्योऽस्तु किमनेनेति शङ्का न कार्या । अग्निन्विकल्पे प्रतिषेधे असति उपदेशस्य पक्षे कृतार्थत्वात्तयोरपि ब्रह्मा चौलवत्कृताकृतः स्यात् । ब्रह्मास्ति चेत् प्रणीताप्रणयनात्पूर्वमनन्तपाण्यङ्गुष्ठो भूत्वाऽग्रेणाग्निं परीत्य दक्षिणतः कुशेषु 'निरस्तः परावसुः' इति निरस्य 'इदमहमर्वावसोः' इति मन्त्रेणोपविशेत् । ततो 'बृहस्पतिर्ब्रह्मा' इत्येवं मन्त्रजपं जपेत् । कर्मान्ते सर्वप्रायश्चित्तानि संस्थाजपं च कुर्यात् । सर्वदा च यज्ञमना भवेदुदङ्मुखश्च । अमुष्मै स्वाहेति जुहुयादिति । क्वचिन्नामधेयेन होम उक्तः—सावित्र्यै ब्रह्मण इत्यादि । क्वचिन्मन्त्रेण होम उक्तः—अग्ने नय सुपथा राये अस्मानिति चतसृभिरिति । यत्र तु नोभयथा तत्र नामधेयेन होमः स्यादित्येव सूत्रे 'प्राजापत्यस्य स्थालीपाकस्य हुत्वा कान्याश्नन्' इत्यादौ । अग्निरिन्द्रः प्रजापतिर्विश्वेदेवा ब्रह्मेत्यनादेश इति । यत्र होमस्थानादेशः कर्मणश्चानादेशस्तत्रैता देवता होतव्याः जातकर्मादौ । तर्हि रथारोहणेऽपि स्यात् । एवं तर्ह्यन्यथा व्याख्यास्यामः—तत्र होमश्चोद्यते न मन्त्रश्चौलक-

प्रवर्तन्ते तेषामयं गृहशब्दो भार्यावचनः। येषां तु दायविभागकालेऽग्निरुत्पद्यते तेषां शालावचनः। 'भार्यादिरग्निर्दायादिर्वा तस्मिन्गृह्याणि' इति गौतमः। उक्तानुकीर्तनं संबन्धकरणार्थम्। संबन्धकरणे प्रयोजनं कथम्। श्रौत्यः परिभाषाः प्राप्नुयुः, शास्त्रान्तरत्वात्। कथं शास्त्रान्तरत्वम्। सूत्रसमाप्तावाचार्यनमस्कारात्। शास्त्रान्तर एवाचार्यनमस्कार उपपद्यते। इदं प्रतिज्ञासूत्रम्—त्रयः पाकयज्ञा इति। पाकयज्ञास्त्रिविधा इत्यर्थः। कुतः। हुताः प्रहुताः ब्रह्मणिहुता इति एकैकस्मिन्बहुवचननिर्देशात्। यदिहि त्रिविधत्वं न स्यात् एकवचनेन निर्देशं कुर्यात्। तस्मात्त्रिविधत्वमिति। पाकयज्ञा अल्पयज्ञाः प्रशस्तयज्ञा वा। दृष्टश्चोभयत्र पाकशब्दः—'योऽस्मत्पाकतरः' इत्यत्राल्पत्वे पाकशब्दः। 'तं पाकेन मनसा पश्यमन्ति'। 'यो मा पाकेन मनसा चरन्तम्' इत्यत्र प्रशंसायाम्। तेनाज्यहोमेष्वपि पाकयज्ञत्वं सिद्धं भवति। यदिहि पाकशब्दः पक्तौ वर्तते तर्हि आज्यहोमेषु तत्त्वं न स्यात् इष्यते च। तस्मान्न तत्र वर्तते। प्रशस्तयज्ञा इत्युक्तम्। कथं प्रशस्तत्वम्। उच्यते। यस्मादेषु संस्कारा आम्नातास्तैश्च ब्राह्मण्यमवाप्यते। के पुनस्ते संस्काराः। गर्भाधानादयः। तस्मात्सर्वेषां पाकयज्ञत्वमिति यदुक्तं तत्सम्यक्। कथं त्रिविधत्वमित्यत आह—हुता अग्नौ हूयमानाः 'अथ हविष्यस्य जुहुया'दित्येवमादयो हुताः। अनग्नौ क्रियमाणाः 'अथ बलिहरण' मित्येवमादयः प्रहुताः। ब्राह्मणभोजनं यत्रास्ति 'ब्राह्मणान्भोजयित्वे'ति ते ब्रह्मणिहुताः। अग्नाविति वचनमनग्नौ हूयमानस्य सर्पबलेः प्रहुतत्वार्थम्। सोऽपि हि जुहोतिशब्दचोदितः। हुतादिसंज्ञाविधानं कृत्स्नोपदेशार्थं शब्दतश्चार्थतश्च

पाठा०—१ श्रौत्य परिभाषा। २ उच्यन्ते तैश्च। ३ प्रहणमनर्थकम्।

मृगशीर्षसंज्ञानत् । अथवा त्रैविध्योपदेशार्थम् । पाकयज्ञानामेतत्तन्त्रमिति वक्ष्यति । अत्र त्रैविध्योपदेशे सति तत् पाकयज्ञग्रहणमपार्थकम् । तत्समानजातीयानामेव हुतानां पाकयज्ञानां तन्त्रं यथा स्यादित्येवमर्थं त्रैविध्योपदेशः । प्रहुत-ब्राह्मणिहुतानां माभूत्तन्त्रमिति । तेन सर्पबल्यादावबदानधर्मो निवृत्तः । ब्राह्मणभोजने च निर्वापादि निवृत्तम् । अधि-कपादग्रहणमृचोऽधिकस्य ऋचस्य ग्रहणार्थं न तृचस्य । तृतीयसामर्थ्यविरोधात् । बहुवचनं तु 'अगोरुधाय' 'आते अग्न ऋचा' 'यः समिधा' इति ऋचामभिप्रेत्योपपन्नम् । ऋचामुदाहरणं कथम् । एतान्यपि कर्माणि नित्यानि श्रौतैस्तुल्यान्याहिताग्नेरपि स्युरित्येवमर्थम् । समिधेति—'समिधमेवापि श्रद्धधान आदध'दित्यारभ्य 'यज्ञो वै नम' इत्येवमन्तं ब्राह्मणं भवति । नयः समिधेत्यस्य तात्पर्यार्थकथनं ब्राह्मणम् 'समिधमेवापी'ति । समिधमेवापि श्रद्धधान आदधद्यज इदं दैवतमिति मन्येतैव । कुतः । नमस्तस्मै । अत्र नमःशब्देनान्नमुच्यते । निघण्टुषु नमःशब्दोऽन्ननामसु पठितः । समिदपि तस्यै देवतायै नमो भवति अन्नं भवति । प्रीतिहेतुर्भवतीत्यर्थः । श्रद्धधान इत्यनेन श्रद्धायुक्तस्यैव पाकयज्ञेष्वधिकार इति ज्ञाप्यते । य आहुतीत्यस्य विवरणं ब्राह्मणं 'य आ-हुत्या यो वेदेने'ति । तत्र 'सुपां सुलुक्पूर्व—' इत्यादिना तृतीयैकवचनस्य पूर्वसवर्णः । यो वेदेनेत्यस्य तात्पर्यकथनपरं ब्राह्मणं 'विद्ययैवे'ति । विद्ययापि प्रीतिरस्यास्त्येवेत्यर्थः । द्रव्यत्यागाभावेऽपि वेदस्याध्ययनमात्रेणापि प्रीतिरस्तीत्यर्थः । विद्यया प्रीतिर-स्तीत्येतद्द्रढयितुं तस्मिन्नर्थे मन्त्रान्तरं साक्षित्वेन श्रुतिर्दर्शयति 'तदेतदि'त्यादि । तदेतदर्थरूपं पश्यन्नृषिर्मन्त्रद्रष्टोवाच—अगोरुधाये-

पाठा०—१ ग्रहणमनर्थकम् ।

त्यादि । अस्मिन्मन्त्रे स्तोतारः प्रत्यक्षीकृताः । एवंभूतायेन्द्राय हे सखायः, वचो वोचत । घृतात्स्वादीयो मधुनश्चेति कृत्वेति । वच एवेत्यनेन तु तात्पर्यकथनपरेण ब्राह्मणेन देवताः प्रत्यक्षीकृताः स्तूयन्ते । हे इन्द्र, इदं मे मम वच एव घृताच्च मधुनश्च स्वादीयः । असिद्धत्वात्स्वादीयस्त्वस्य प्रार्थनेयमिति दर्शयति—'स्वादीयोऽस्ती'त्यादिना । स्वादीयोऽस्त्वित्येवासौ साक्षित्वेन ऋपिराहेत्यर्थः । अतोऽस्ति प्रीतिः । एवमध्ययनं रसात्स्वादुतरमित्युक्तम् । मांसादपि स्वादुतरमिति मन्त्रान्तरं दर्शयति—'आ ते अग्न' इत्यादि । अस्य मन्त्रस्य तात्पर्यकथनपरं ब्राह्मणं 'एत एव मे' इत्यादि । हे अग्ने, एत एव मे मत्संबन्धिनः, अतएव ते तव उक्षाणश्च ऋषभाश्च वशाश्च भवन्त्वित्यर्थः । भवन्तीति लोडर्थे लट् । के मत्संबन्धिन इतिचेत् 'य इमं स्वाध्यायमधीयत' इति । अस्य मन्त्रस्य तात्पर्यं—उक्षादिमांसेन तव यावती प्रीतिस्तावती विद्ययापि भवत्वित्यर्थः । उत्तरार्धस्य तात्पर्यकथनपरं ब्राह्मणं 'यो नमसा स्वध्वर इति नमस्कारेणे'त्यादि । नमस्कारेणापि योऽग्निमर्चयति सोऽपि स्वध्वरः शोभनयज्ञः । 'तस्येदर्वन्तो रंहयन्त' इत्यादिः पाठकयज्ञानामर्थवादः । नमस्कारेणापि खलु प्रीतिरस्ति । कुतः । न वै देवा नमस्कारमति । अतिरतिक्रमणे । देवा हि नमस्कारं नातिक्रामन्ति । तमप्याद्रियन्त इत्यर्थः । किमिति नातिक्रामन्ति । यज्ञो वै नमः । नमस्कारोऽपि यज्ञ इत्यर्थः । इति ह ब्राह्मणं भवति । इतिशब्दो निर्दिष्टपरामर्शी । समिधमेवेत्यादि एवमन्तं ब्राह्मणं भवतीत्यर्थ इति वा ॥❀॥ स्मृत्यर्थसारे—'श्रौते तु सर्वशाखोक्तं सर्वेषां यथोचितम् । स्मार्तमाधारणं तत्तु ग्राह्यं श्रौतेषु कर्मसु ॥ सामयाचारिका धर्मा जातिदेशसमुद्भवाः । ग्रामाचाराः परिग्राह्या ये न विध्यविरोधिनः ॥ युगधर्माः परिग्राह्याः सर्वैरेव यथोचितम्' इति । चतुर्विंशतिमते—'हतं ज्ञानं क्रियाहीनं हता

मृगतीर्थसंज्ञावत् । अथवा त्रैविध्योपदेशार्थम् । पाकयज्ञानामेतत्तन्त्रमिति वक्ष्यति । अत्र त्रैविध्योपदेशे सति तत् पाकयज्ञग्रहणमपार्थकम्[1] । तत्समानजातीयानामेव हुतानां पाकयज्ञानां तन्त्रं यथा स्यादित्येवमर्थं त्रैविध्योपदेशः । प्रहुत-ब्रह्मणिहुतानां माभूत्तन्त्रमिति । तेन सर्पबल्यादाववदानधर्मो निवृत्तः । ब्राह्मणभोजने च निर्वापादि निवृत्तम् । अवि-कपादग्रहणमृचोऽधिकस्य त्र्यृचस्य ग्रहणार्थं न तृचस्य । तृतीयसामर्थ्यविरोधात् । बहुवचनं तु 'अगोरुधाय' 'आते अग्न ऋचा' 'यः समिधा' इति त्र्यृचावभिप्रेत्योपपन्नम् । ऋचामुदाहरणं कथम् । एतान्यपि कर्माणि नित्यानि श्रौतैस्तुल्यान्याहिताग्नेरपि स्युरित्येवमर्थम् । समिधेति—'समिधमेवापि श्रद्धधान आदध'दित्यारभ्य 'यज्ञो वै नम' इत्येवमन्तं ब्राह्मणं भवति । त्रयः समिधेत्यस्य तात्पर्यार्थकथनं ब्राह्मणम् 'समिधमेवापी'ति । समिधमेवापि श्रद्धधान आदधद्यज इदं दैवतमिति मन्येतैव । कुतः । नमस्तस्मै । अत्र नमःशब्देनान्नमुच्यते । निघण्टुषु नमःशब्दोऽन्ननामसु पठितः । समिदपि तस्यै देवतायै नमो भवति अन्नं भवति । प्रीतिहेतुर्भवतीत्यर्थः । श्रद्धधान इत्यनेन श्रद्धायुक्तस्यैव पाकयज्ञेष्वधिकार इति ज्ञाप्यते । य आहुतीत्यस्य विवरणं ब्राह्मणं 'य आ-हुत्या यो वेदेने'ति । तत्र 'सुपां सुलुक्पूर्व—' इत्यादिना तृतीयैकवचनस्य पूर्वसवर्णः । यो वेदेनेत्यस्य तात्पर्यकथनपरं ब्राह्मणं 'विद्ययैवे'ति । विद्ययापि प्रीतिरस्यास्त्वेवेत्यर्थः । द्रव्यत्यागाभावेऽपि वेदस्याध्ययनमात्रेणापि प्रीतिरस्तीत्यर्थः । विद्यया प्रीतिर-स्तीत्येतद्द्रढयितुं तस्मिन्नर्थे मन्त्रान्तरं साक्षित्वेन श्रुतिर्दर्शयति 'तदेतदि'त्यादि । तदेतदर्थरूपं पश्यन्नृषिर्मन्त्रद्रष्टोवाच—अगोरुधाये-

पाठा०—१ग्रहणमनर्थकम् ।

त्यादि । अस्मिन्मन्त्रे स्तोतारः प्रत्यक्षीकृताः । एवंभूतायेन्द्राय हे सखायः, वचो वोचत । घृतात्स्वादीयो मधुनश्चेति कृतेति । वच एवेत्यनेन तु तात्पर्यकथनपरेण ब्राह्मणेन देवताः प्रत्यक्षीकृताः स्तूयन्ते । हे इन्द्र, इदं मे मम वच एव घृताच्च मधुनश्च स्वादीयः । असिद्धत्वात्स्वादीयस्त्वस्य प्रार्थनेयमिति दर्शयति—'स्वादीयोऽस्ती'त्यादिना । स्वादीयोऽस्त्वित्येवासौ साक्षित्वेन ऋषिराहेत्यर्थः । अतोऽस्ति प्रीतिः । एवमध्ययनं रसात्स्वादुतरमित्युक्तम् । मांसादपि स्वादुतरमिति मन्त्रान्तरं दर्शयति—'आ ते अग्न' इत्यादि । अस्य मन्त्रस्य तात्पर्यकथनपरं ब्राह्मणं 'एत एव मे' इत्यादि । हे अग्ने, एत एव मे मत्संबन्धिनः, अतएव ते तव उक्षाणश्च ऋषभाश्च वशाश्च भवन्त्वित्यर्थः । भवन्तीति लोडर्थे लट् । के मत्संबन्धिन इतिचेत् 'य इमं स्वाध्यायमधीयत' इति । अस्य मन्त्रस्य तात्पर्यं—उक्षादिमांसेन तव यावती प्रीतिस्तावती विद्ययापि भवत्वित्यर्थः । उत्तरार्धस्य तात्पर्यकथनपरं ब्राह्मणं 'यो नमसा स्वध्वर इति नमस्कारेणे'त्यादि । नमस्कारेणापि योऽग्निमर्चयति सोऽपि स्वध्वरः शोभनयज्ञः । 'तस्येदर्वन्तो रंहयन्त' इत्यादिः पाकयज्ञानामर्थवादः । नमस्कारेणापि खलु प्रीतिरस्ति । कुतः । न वै देवा नमस्कारमति । अतिरतिक्रमणे । देवा हि नमस्कारं नातिक्रामन्ति । तमप्याद्रियन्त इत्यर्थः । किमिति नातिक्रामन्ति । यज्ञो वै नमः । नमस्कारोऽपि यज्ञ इत्यर्थः । इति ह ब्राह्मणं भवति । इतिशब्दो निर्दिष्टपरामर्शी । समिधमेवेत्यादि एवमन्तं ब्राह्मणं भवतीत्यर्थ इति वा ॥❀॥ स्मृत्यर्थसारे—'श्रौते तु सर्वशाखोक्तं सर्वस्यैव यथोचितम् । स्मार्तसाधारणं तत्तु ग्राह्यं श्रौतेषु कर्मसु ॥ सामयाचारिका धर्मा आतिदेशसमुद्भवाः । ग्रामाचाराः परिग्राह्या ये न विध्यविरोधिनः ॥ युगधर्माः परिग्राह्याः सर्वत्रैव यथोचितम्' इति । चतुर्विंशतिमते—'हतं ज्ञानं क्रियाहीनं हता

चाज्ञानिनां क्रिया । अपश्यन्नन्धको दग्धः पश्यन्नपि च पङ्गुकः' इति ॥ मनुः—'विधिदृष्टं तु यत्कर्म करोत्यविधिना तु यः । फलं न किंचिदाप्नोति क्लेशमात्रं हि तस्य तु' इति । तस्मात्प्रयत्नतो ज्ञानमासाद्यैवानुष्ठेयम् ॥❀॥ अत्र मुख्यकालासंभवे गौणकालानुष्ठानं प्रायश्चित्तं चोक्तं स्मृत्यर्थसारे—'एवमागामिकार्यस्य मुख्यकालादधस्ततः । स्वकालादुत्तरो गौणः कालः पूर्वस्य कर्मणः ॥ सर्वत्र गौणकालेषु कर्म चोदितमाचरन् । प्रायश्चित्तं व्याहृतिभिर्हुत्वा कर्म समाचरेत्' इति । स्मृतिरत्नावल्याम्—'प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः' इति ॥ ❀ ॥ तत्र स्मरणं मन्त्रेण कर्तव्यम् । तथाह याज्ञवल्क्यः—'तद्विष्णोरिति मन्त्रेण स्मर्तव्यः सर्वकर्मसु । गायत्री वैष्णवी ह्येषा विष्णुसंस्मरणाय वै' इति ॥ ❀ ॥ 'कृतं समस्तं कर्म विष्णवर्पितं कुर्यादित्युक्तं बृहन्नारदीये—'विष्णवर्पितानि कर्माणि सफलानि भवन्ति हि । अनर्पितानि कर्माणि भस्मानि न्यस्तहव्यवत् ॥ नित्यं नैमित्तिकं काम्यं यच्चान्यन्मोक्षसाधनम् । विष्णोः समर्पितं सर्वं सात्विकं सफलं भवेत्' इति । इति परिभाषा ॥

अथेदानीमग्निमुखगतमन्त्राणामर्थः कथ्यते । तत्र तावदर्थज्ञानस्य फलमाह याज्ञवल्क्यः—'यश्च जानाति तत्त्वेन आर्षं छन्दश्च दैवतम् । विनियोगं ब्राह्मणं च मन्त्रस्यार्थं तथैव च ॥ एकैकस्य ऋषेः सोऽपि वन्द्यो ह्यतिथिवद्भवेत् । देवतानां च सायुज्यं गच्छत्येव न संशयः' इति ॥ ❀ ॥ व्यासस्तु अर्थपरिज्ञाने फलं तदपरिज्ञाने दोषं चाह—'मन्त्रार्थज्ञो जपन्

पाठा—१ समारभेत् । २ प्रच्यवेताध्वरेषु । गतोऽयं श्लोक- पूर्वमपि ।

जप्यं तथैवाध्ययनं द्विजः । स्वर्गलोकमवाप्नोति नरकं तु विपर्यये' इति ॥ ॥ अग्निप्रतिष्ठापने जुष्टो दमूना इति—हे अग्ने, जुष्टः सर्वैः सेवितः । दमूनाः दानमनाः दान्तमना वा । अतिथिः अतिथिवत्पूज्यः । विद्वान् ज्ञानवान् । एवंभूतस्त्वं नः अस्माकम् । दुरोणे—दुरोणे इति गृहनाम—गृहे । इमं यज्ञं उपयाहि उपगच्छ । विश्वा विश्वान्सर्वान् । अभियुजः अभियोक्तॄन् द्वेष्टॄनित्यर्थः । विहत्य । शत्रूयतां शत्रुत्वमिच्छतां तेषाम् । भोजनानि भोगयोग्यानि । आभर आहर देहि ॥ ॥ एह्यग्न इति । हे अग्ने, एहि आगच्छ । इह अस्मिन्यज्ञे होता देवानामाह्वाता सन् निषीद । अदब्धः राक्षसादिभिरहिंस्यः । पुर एता नोऽस्माकं पुरो गन्ता त्वं सु सुष्ठु भव । एवंविधं त्वा त्वां विश्वमिन्वे विश्वव्याप्ते रोदसी द्यावापृथिव्यौ अवतां रक्षताम् । महे महते सौमनसाय सुमनस्त्वाय । देवान् यज अस्माभिर्दत्तं[1] चरुपुरोडाशादिकं देवेभ्यो ददस्व ॥ ॥ अग्निमूर्तिध्याने—चत्वारि शृङ्गेति । अस्य अग्निमूर्तेरग्नेः चत्वारि शृङ्गा शृङ्गाणि चत्वारो वेदाः शृङ्गस्थानीयाः । त्रयोऽस्य पादाः त्रीणि सवनानि पादस्थानीयानि । द्वे शीर्षे प्रायणीयोदयनीये शिरःस्थानीये । सप्त हस्तासः सप्त छन्दांसि अस्य यज्ञेश्वरस्य हस्तस्थानीयानि । हस्तोऽनुष्ठानस्य मुख्यस्थानं तद्वच्छन्दांस्यपि देवताप्रीणनस्य मुख्यस्थानमिति मुख्यव्यवहारः । वृषभः वृषभरूपी यः त्रिधाबद्धः मन्त्र—ब्राह्मण—कल्पैस्त्रेधा बद्धः सन् रोरवीति भृशं शब्दायते सवनक्रमेण । एष महो देवः महान्देवः । मर्त्यान्[2] मनुष्यान् मर्त्यैर्यजमानैः निष्पादितान् । आविवेश आविशति ॥ ॥ प्रत्यवरोहणे—प्रत्यवरोहेति । हे जातवेदः, त्वं पुनः प्रत्यवरोह लौकिकाग्नौ पुनरवतर ।

पाठा०—1 दत्त पुरोडाशादिकं । 2 मर्त्यान् मर्त्यै. ।

प्रजानन् विद्वांस्त्वं नोऽस्माकं हव्यं देवेभ्यो वह प्रापय । प्रजां पुष्टिं रयिं अस्मासु धेहि । अथानन्तरं यजमानाय मह्यं शं सुखकरो भव । योः। 'यु मिश्रणामिश्रणयोः' इति धातुः अत्राऽमिश्रणे। दुःखस्यामिश्रको भव ॥ ॥ अभ्यर्चने—विश्वानि न इति । हे जातवेदः, नः अस्माकं । दुर्गहा दुःखेन ग्राह्याणि दुःखेन भोग्यानि । विश्वानि सर्वाणि । दुरिता दुरितानि । सिन्धुंन सिन्धुमिव । यथा नाविकः सिन्धुं तारयति तथा त्वमपि । दुरिता दुरितानि । अतिपर्षि अतिपारय । किंच । हे अग्ने, अत्रिवत् अत्रेरिव अस्माकं नमसा स्तोत्रेण गृणानः स्तूयमानः तनूनां शरीराणां अविता त्वं बोधि अस्मास्वनुग्रहात्मिकां बुद्धिं कुरु ॥ ॥ यस्त्वा हृदेति । यो मर्त्यः मरणधर्मा अहम् । अमर्त्यं त्वा त्वाम् । कीरिणा स्तुतियुक्तेन हृदा हृदयेन मन्यमानः स्तुवन् जोहवीमि आह्वयामि । हे जातवेदः, यशो अस्मासु धेहि । हे अग्ने, प्रजाभिः त्वद्दत्ताभिः अमृतत्वं संतत्यविच्छेदलक्षणं अविनाशित्वं अश्यां प्राप्नुयाम् । 'प्रजामनु प्रजायसे । तदु ते मर्त्यामृतम्' इति श्रुतेः ॥ ॥ यस्मै त्वमिति—हे जातवेदः, त्वं यस्मै सुकृते शुद्धकर्मणे यजमानाय लोकं स्योनं सुखकरं कृणवः अकरोः । हे अग्ने, स यजमानः । अश्विनं बह्वश्वोपेतं पुत्रिणं बहुपुत्रोपेतं वीरवन्तं वीरैर्वीर्येण चोपेतं गोमन्तं गोयुक्तं रयिं धनं नशते प्राप्नोति । स्वस्तीत्यविनाशिनाम । स यजमानः कदाचिदपि न नश्यति । इति पुराणार्थः ॥ ॥ निर्वापे—अग्नये त्वा जुष्टं निर्वपामीति । हे व्रीहे, अग्नये अग्न्यर्थं । जुष्टं अभिप्रेतं । त्वा त्वां । निर्वपामि शूर्पे निदधामि । प्रोक्षणमन्त्रे प्रोक्षामीति विशेषः ॥ ॥ उत्पवने—सवितुष्ट्वेति । सवितुरादित्यस्य प्रसवे अनुज्ञायां

पाठा०—१ विश्वानि दुरिता ।

सत्याम्। हे आज्य, त्वा त्वां उत्पुनामि अदृष्टरूपो वा केशकीटाद्यपनयनदृष्टरूपो वा संस्कार उत्पवनं तत्करोमि । अच्छिद्रेण पवित्रेण अच्छिद्राभ्यां पवित्राभ्याम् । वसोः प्रशस्तवासहेतोः सूर्यस्य मण्डलात्मनः रश्मिभिर्जगतां शुद्धिहेतुभिरुत्पुनामीत्यन्वयः॥ ॥ इध्माधाने—अयं त इध्म इति । हे जातवेदः, ते अयमिध्मः आत्मा आत्मभूतः स्वरूपद्योतकत्वेन । तेनेध्मेन इध्यस्व दीप्तो भव । वर्धस्व च प्रवलो भव । अस्मांश्च इद्ध दीपय । वर्धय च प्रबलान्कुरु । किंच प्रजया पशुभिः ब्रह्मवर्चसेन वृत्ताध्ययनसंपत्त्या अन्नाद्येन च समेधय समृद्धान्कुरु ॥ ॥ स्विष्टकृति—यदस्येति । अस्य प्रक्रान्तस्य कर्मणः संबन्धि यत् अत्यरीरिचं विहितादतिरिक्तं अकरवम् । यद्वा इहास्मिन्कर्मणि न्यूनं अकरं अकरवं तत्सर्वं विद्वान् स्विष्टकृत् दुरिष्टमपि सुष्टु इष्टं करोतीति एवंविशिष्टोऽग्निः मे ममसंबन्धि यत् स्विष्टं तत् सुहुतं साधुहुतं करोतु । स्विष्टकृते स्विष्टकृत्त्वगुणयुक्ताय सुहुतहुते सुहुतं हविर्जुहोति देवेभ्यो ददातीति सुहुतहुत् तस्मै । सर्वप्रायश्चित्ताहुतीनां समर्धयित्रे समृद्धिं कुर्वते । तथा कामानां समर्धयित्रे अग्नये । इदं स्विष्टकृदाख्यं हविः जुहोमि । हे अग्ने, नः सर्वान्कामान्समर्धय स्वाहा । स्वाहाशब्दो हविःप्रदानार्थः ॥ ❀ ॥ स्वाहाकारोत्पत्तिः घृतोत्पत्तिश्च श्रूयते—'प्रजापतिरग्निमसृजत । तं प्रजा अन्वसृज्यन्त। तमभाग उपास्त । सोऽस्य प्रजाभिरपाक्रामत् । तमरुरुत्समानोऽन्वैत् । तमवरुन्धन्नाशक्नोत् । स तपोऽतप्यत । सोऽग्निरुपारमतापि वै स्य प्रजापतिरिति । स रराटादुदमृष्ट । तद्घृतमभवत् । तस्मादस्य दक्षिणतः केशा उन्मृष्टाः । तां ज्येष्ठलक्ष्मीः प्राजापत्येत्याहुः । यद्रराटादुदमृष्ट । तस्माद्रराटे केशा न सन्ति । तदग्नौ प्रागृह्णात् । तद्व्यचिकित्सत् । जुहवानी३मा हौषा३ इति । तद्विचिकित्सायै जन्म । य एवं विद्वान्विचिकि-

त्स्वीति । त्वसींय एव चैतयते । ते वागभ्यवदज्जुहुधीति । सोऽब्रवीत् । कस्त्वमसीति । स्वैव ते वागित्यब्रवीत् । सोऽजुहोत्स्वाहेति । तत्स्वाहाकारस्य जन्म । य एवं२ स्वाहाकारस्य जन्म वेद करोति । स्वाहाकारेण वीर्यम् । यस्यैवं विदुषः स्वाहाकारेण जुह्वति । भोगायैवास्य हुतं भवति' इति ॥ ॥ नित्यप्रायश्चित्ते—अयाश्चेति । हे अग्ने, त्वं अयाश्चासि भक्तान्प्रत्येतासि । अनभिशस्तीश्च अनिन्दितश्चासि । हे अग्ने, अया असीति यत् तत् सत्यमित् सत्यमेव । अयासा छान्दसो दीर्घः । अयसा त्वं प्रतिगन्तासि । वयसा आज्यरूपेणान्नेन कृतः अस्माभिः संवर्धितः एवंभूतस्त्वं अयासन् । छान्दसः सलोपः । भक्तैर्गम्य एव सन् हव्यं अस्माभिर्दत्तमाज्यादिकं ऊहिषे वहस्व । तथा अया एव सन् नः अस्मभ्यं भेषजं शरीरादिपुष्टिहेतुं धेहि देहि ॥ ॥ अतो देवा इति । यतः कारणात् विष्णुस्त्रिविक्रमः सप्तधामभिः गायत्र्यादिसप्तच्छन्दोभिः साधनभूतैः पृथिव्याः पृथिवीप्रदेशे स्थित्वा तदानीमुपरिस्थितांल्लोकान् विचक्रमे विविधेन पदक्रमेण स्वीकृतवान् । 'विष्णुमुखा वै देवाश्छन्दोभिरिमांल्लोकाननपजय्यमभ्यजयन्' इति श्रुतिः । अतः कारणात् विष्णुमुखा वै देवाः कर्मवैगुण्यात् नः अस्मान् अवन्तु रक्षन्तु ॥ ॥ इदं विष्णुरिति । विष्णुस्त्रिविक्रमावतारः परमेश्वरः इमं त्रैलोक्यमुद्दिश्य विचक्रमे विक्रमणं कृतवान् । विक्रममाणश्च त्रेधा त्रिषु स्थानेषु पदं निदधे निहितवान् । अस्य विष्णोस्तत्र पांसुरे धूलियुक्ते पदस्थाने समूळ्हमिदं जगत् सम्यगन्तर्भूतं यथा पांसुरे प्रदेशे निहितं पदं स्पष्टीभवति तद्वत् ॥ ॥ भूर्भुवःस्वरिति । भूः अधिकरणे क्विप् । अत्र परमात्मैव स्थावरजङ्गमात्मकस्य जगतोऽपि कारणभूतः सन् भूशब्देनोच्यते ॥ ॥ भुवः—भावयति विश्वमवकाशप्रदानेन स्थितिप्रदानेनेति वा भुवः । अन्तर्भावितण्यर्थः । तत्रापि परात्मैव सर्वेषां भावरूपाणां पदार्थानामवकाश-

प्रदानेनोच्यते ॥ ॥ स्वः सुष्ठु वरणीयं सुखमस्मिन्प्राप्यत इति स्वः । अत्र सुखस्वरूप एव परमात्मोक्तः भूर्भुवः स्वः स्वाहेति । एवंभूताय सर्वात्मकाय प्रजापतये स्वाहा इदं हविः प्रदीयते ॥ ॥ यद्वो देवा इति । हे देवाः मरुतः, अहं प्रयुती प्रयुतं मिश्रणमस्यास्तीति प्रयुति मनः । 'सुपां सुलुगि'त्यादिना पूर्वसवर्णे ईकारस्तृतीयायाः । प्रयुतिना मनसा वाचा च वो युष्माकं देवहेळनं देवानां क्रोधनिमित्तं यत्किंचिदतिपातयानि अत्ययं कृतवान् । अरायः अदानशीलः अस्मान् असदीयं सर्वं अभिदुच्छुनायते नोदापयितुमिच्छति तच्छत्रुदर्शितं सर्वमतिक्रमणदोषमसत्तोऽन्यत्र निधेतन स्थापयत ॥ ॥ पूर्णपात्रे—पूर्णमसीति । हे पूर्णपात्राधिष्ठातृदेवते, त्वं पूर्णं पर्याप्तं सर्वसमृद्धिभिराप्यायितमसि । पूर्णं मे भूयाः ममापि त्वं सर्वसमृद्धिभिः पर्याप्तं भूयाः । सुपूर्णमसि सुपूर्णं मे भूया इत्यत्र सुष्ठु इयानेव विशेषः । त्वं सदसि सत्ताविशिष्टं यत्किंचित् तत् त्वमसि । ममापि त्वं सद्भूयाः । सर्वमसि सर्वात्मकमसि । त्वत्तोऽन्यन्न किंचिदस्ति । तस्मात्सर्वमिदं मम भूयाः ॥ ॥ अक्षितिरसि अनुपक्षीणमसि । तस्मान्मे मम विषये मा क्षेष्ठाः क्षयं मागाः ॥ ॥ प्राच्यां दिशीति । प्राच्यां दिशि व्यवस्थिता ये देवाः ऋत्विजश्च ते मार्जयन्ताम् । एतेन दक्षिणस्यामित्यादयो व्याख्याताः ॥ ॥ आपो अस्मानिति । मातरः जगतो मातृस्थानीयाः आपः अस्मान् शुन्धयन्तु प्रोक्षणेन शोधयन्तु । घृतप्वः घृतं गव्यं तेन पुनन्तीति घृतप्वः घृतेन प्रोक्षणोदकेन नः अस्मान् पुनन्तु । हि यस्मात्कारणात् देवीः देव्यः देवनशीला आपः विश्वं सर्वं रिप्रं पापं । रिपो रिप्रमिति पापनामनी भवतः । प्रवहन्ति अपनयन्तु । अनन्तरं आभ्यः अतएव शुचिः शुद्धः पूतश्च सन् उदेमि आभिमुख्येनोद्गच्छामि ॥ ॥ इदमाप इति । हे आपः, मयि यजमाने यत्किंच

दुरितं अज्ञानान्निष्पन्नं अथवा अहं शेपे साधून्शप्तवानस्मि । उत अपिच अनृतमुक्तवानसि इति यदस्ति तदिदं सर्वं मे मम अपराधजातं प्रवहत मत्तोऽन्यत्र प्रवाहेण नयत ॥ ॥ सुमित्र्या न इति । आपः ओषधयश्च नः सुमित्र्याः शोभनमित्र्याः इहामुत्र शुभावहाः सन्तु । किंच ता एवापः ओषधयश्च तस्मै दुर्मित्र्याः इहामुत्र दुःखकारिण्यः सन्तु योऽस्मान् द्वेष्टि यश्चास्माकमप्रियो भवति यं च वयं द्विष्मः अप्रियाः सः ॥ ॥ माहं प्रजामिति । हे आपः, अहं प्रजां इवेत्यध्याहारः । प्रजामिव युष्मान्परासिचं पृथक्सेचनं करोमि । या यूयं नः अस्माकं सयावरीः सयावर्यः सहगन्तृस्वभावाः स्थन भवथ ताः वः युष्मान् समुद्रे । अत्र समुद्रशब्देनाञ्जलिरुच्यते तत्र । निनयानि भापयामि । पाथ इत्यन्तरिक्षनाम । स्वं पाथः स्वकीयं स्थानं अन्तरिक्षं अपीथ अस्माभिर्मार्जने कृते स्वस्थानं गच्छथ ॥ ॥ अग्ने त्वं न इति । हे अग्ने, वरूथ्यः वरूथैः परिधिभिर्वृतः त्वं नः अस्माकं अन्तमः स्वधिकतमो भव । उत अपिच त्राता रक्षकः शिवः सुखकरश्च भव । वसुः वसनीयः सर्वेषां अग्रणीः वसुश्रवाः वसनीयकीर्तिः अग्निः एवंभूतस्त्वं अच्छ आगच्छ । नक्षि आभिमुख्येनास्मान्प्राप्नुहि । गत्वा च अस्माकं द्युमत्तमं दीप्तिमत्तमं रयिं धनं दाः देहि ॥ ॥ स नो बोधीति । हे अग्ने, स त्वं नः अस्मान् बोधि बुध्यस्व । स त्वं हवं अस्मदीयं आह्वानं श्रुधि शृणु । अघायतः अघमिच्छतः समस्मात् सर्वस्माज्जनात् नः अस्मान् उरुष्य रक्ष । हे शोचिष्ठ अतिशोचिष्मन्, दीदिवः स्वतेजोभिर्दीप्ताग्ने, तं त्वा त्वां सुम्नाय सुखाय । सुम्नमिति सुखनाम । तदर्थं सखिभ्यः समानख्यातिभ्यः पुत्रेभ्यः तदर्थं च नूनं ईमहे याचामहे ॥ ॥ ॐ चम इति । हे यज्ञपुरुषाग्ने, ॐन्च प्रणवश्च मे

पाठा॰—१ प्रजामिवोपकारिणी युष्मान् । २ अन्तिकतम । ३ अपिच अन्तिके गत्वा त्राता ।

स्वरश्च उदात्तादिस्वरश्च मे यन्मदीयं उप च उपस्थानं नमश्च नमस्कारश्च यदस्ति तदेव ते तव संबन्धि। एतदुक्तं भवति—प्रणवेन उदात्तादिस्वरेण च यद्वैगुण्यं तत्सर्वं तवोपस्थानेन नमस्कारेण च परिह्रियत इति। तत्र विषयविभागः। यत्ते न्यूनं तस्मै तत्साद्गुण्याय ते उपयत् उपस्थानं, यत्तु ते अतिरिक्तं तस्मै तत्साद्गुण्यार्थं ते नमः नमस्कारः। अतः कारणात्। तस्मै ते नम इति। इत्यग्निमुपगतमन्त्रार्थः।

अथाग्निमुखप्रयोगः। अथ यजमानः कृताभ्यङ्गः कृतनित्यक्रियः शुचिर्भूत्वा धौतवासाः प्राङ्मुखो दर्भेष्वासीनः[1] विधिवदाचम्य पवित्रे ममन्त्रे धारयेत्। पवित्रवन्त इत्यनयोर्ब्रह्मा बृहस्पतिर्जगती। पवित्रधारणे वि०। पवित्रवन्तः परि वाचमासते पितैषां प्रत्नो अभि रक्षति व्रतम्। महः समुद्रं वरुणस्तिरोदधे धीरा इच्छेकुर्धरुणेष्वारभम्॥ सहस्रधारेव ते समस्वरन्दिवो नाके मधुजिह्वा असश्चतः। अस्य स्पशो न निमिषन्ति भूर्णयः पदेपदे पाशिनः सन्ति सेतवः॥ आभ्यां मन्त्राभ्यां पवित्रे धृत्वा प्राणानायम्य देवान्गुरूंश्च प्रणम्य देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थममुककर्म करिष्य इति संकल्प्य तदङ्गहोमं कर्तुमुपलेपनादिकर्म करिष्य इत्युक्त्वा शुद्धदेशे किंचिदुच्छ्रितां चतुर्दिक्षु इषुप्रमाणां तदधिकपरिमाणां वा भूमिं गोमयेन प्रदक्षिणमुपलिप्य मङ्गलार्थं रङ्गवल्ल्यादिभिरलंकृत्य विधिवत्कृते स्थण्डिले। तन्मध्यदेशापेक्षया पश्चिमभागे यज्ञियशकलमूलेनोदगायतां प्रादेशमात्रामेकां रेखामालिख्य तस्या दक्षिणोत्तरयोरन्तयोः प्रागायते पूर्वरेखाया असंस्पृष्टे प्रादेशसंमिते द्वे रेखे लिखित्वा तयो रेखयोर्मध्ये दक्षिणत आरभ्य पर-

पाठा०—1 दर्भेष्वासीन।

स्परमसंस्पृष्टाः प्रागायताः प्रादेशसंमितास्तिस्रो रेखा लिखित्वा तत्र तच्छकलमुदग्रं निधाय स्थण्डिलमद्भिरभ्युक्ष्य शकलमाग्नेय्यां निरस्य पाणिं प्रक्षाल्य वाग्यमनं कुर्यात् । तत उक्तप्रकारेण कर्मविशेषमवगम्याऽग्निविशेषः प्रतिष्ठापनीयः । तत्रायं क्रमः— सौवर्णराजतताम्रधात्वादिलेपितनवशरावान्यतमपात्रे श्रोत्रियागारात्स्वगृहाद्यन्यतरस्थं प्रदीप्तबहुलाङ्गारमयं हविर्भुजं निक्षिप्य तथाविधपात्रान्तरेणापिधायानीतं—समस्तव्याहृतेः प्रजापतिः प्रजापतिर्बृहती अग्निप्रतिष्ठापने वि०। ॐ भूर्भुवः स्वः इत्यनेनात्माभिमुखं पाणिभ्यां पट्सु रेखासु प्रतिष्ठाप्य समन्त्रमावाहयेत् । तत्र मन्त्रौ—जुष्टो दमूना आत्रेयो वसुश्रुतोऽग्निस्त्रिष्टुप् । एह्यग्ने राहूगणो गोतमोऽग्निस्त्रिष्टुप् । अग्न्यावाहने वि० । जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुपयाहि विद्वान् । विश्वा अग्ने अभियुजो विहत्या शत्रूयतामाभरा भोजनानि ॥ एह्यग्न इह होता निषीदादब्धः सुपुरएता भवा नः । अवतां त्वा रोदसी विश्वमिन्वे यजामहे सौमनसाय देवान् ॥ आभ्यां मन्त्राभ्याम्—अस्मिन्नग्नौ यज्ञेश्वरमावाहयामीत्यावाह्य । अग्ने अच्छावदेत्यस्याग्निस्तापसोऽग्निस्त्रिष्टुप् । अग्नेः स्वाभिमुखीकरणे वि० । अग्ने अच्छा वदेह नः प्रत्यङ् नः सुमना भव । प्रनो यच्छ विशस्पते धनदा असि नस्त्वम् ॥ अनेन मन्त्रेण स्वाभिमुखं कृत्वा प्रोक्षितेन्धनानि निक्षिप्य वैणुधमन्या प्रबोध्य ततः प्रज्वलिताग्निमेवं ध्यायेत् । तत्र मन्त्राः—चत्वारि शृङ्गा वामदेवो जातवेदा अग्निस्त्रिष्टुप् अग्निमूर्तिध्याने विनियोगः । चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश ॥ स्मृतिश्च—सप्तहस्तश्चतुःशृङ्गः सप्तजिह्वो द्विशीर्षकः । त्रिपात्प्रसन्नवदनः सुखासीनः शुचिस्मितः ॥ स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां तथा ।

संस्कारस्य. अग्निमुखं.

पाठा०—१ वाग्यतो भवेत् ।

विभ्रद्दक्षिणहस्तैस्तु शक्तिमन्नं स्रुचं स्रुवम् ॥ तोमरं व्यजनं वामैर्घृतपात्रं च धारयन् ॥ मेषारूढं जटाबद्धं गौरवर्णं महौजसम् ॥ धूमध्वजं लोहिताक्षं सप्तार्चिः सर्वकामदम् । आत्माभिमुखमासीनमेवं ध्यायेद्धुताशनम्' इति ॥ ॥ एवं ध्यात्वान्वाधानं कुर्यात् । तत्रायं क्रमः—समिद्द्वयं त्रयं वादाय देशकालावुत्कीर्त्य अद्यकरिष्यमाणेऽस्मिन्कर्मणि देवतापरिग्रहार्थमन्वाधानं करिष्ये । अस्मिन्नन्वाहितेऽग्नावग्निं जातवेदसमिध्मेन प्रजापतिं प्रजापतिमाघारावाज्येन अग्नीषोमौ चक्षुषी आज्येन—यथोक्ताः प्रधानदेवता यथोक्तद्रव्येण—शेषेणाग्निं स्विष्टकृतमिध्मसंनहनेन रुद्रमग्निमयासं देवान्विष्णुमग्निं वायुं सूर्यं प्रजापतिं चैताः प्रायश्चित्तदेवता आज्येन विश्वान्दे-

---

पाठा०—१ मैवंरूपा हुताशनम् । २ अत्र अग्निं जातवेदसं, अग्निं स्विष्टकृतं इति, अग्ने त्यागकालेपि अग्नये जातवेदस इदं, अग्नये स्विष्टकृत इदं इति विशेषणविशेष्यक एव प्रयोगः कार्यः 'अग्नये स्विष्टकृते' इति मन्त्रलिङ्गात् । दृष्टश्च विशेषणानामन्ते निवेशः श्रौते कर्मणि तत्र तत्र । ३ अन्वाधानवाक्ये—एताः प्रायश्चित्तदेवता आज्येन विश्वान्देवान्संस्रावेणेत्यस्यान्तरा "ज्ञाताज्ञातदोषनिबर्हणार्थं त्रिवारमग्निं मरुतश्चाज्येन" इत्यन्तवाक्यपाठो यद्यपि बहुलं दृश्यते प्रयुज्यते च तथा सर्वत्र तथापि स प्रामादिक एवेति निश्चीयते, कुतः । ज्ञाताज्ञातदोषरूपनिमित्तस्य निश्चयानन्तरमेव नैमित्तिकप्रायश्चित्तमापतति नानिश्चिते दोषे । अथ चेन्नित्य एवायं ज्ञाताज्ञातदोषस्तर्हि अयाश्चेत्यादिभिर्नित्यप्रायश्चित्तैरेव स्यात्तन्निबर्हणम् । नचायं नित्यो दोषः । यतः उक्तप्रयोगवाक्य एव मन्त्रतन्त्रविपर्यासादिनिमित्ते सतीति सतिशब्दप्रयोगात् । तेनानियतनिमित्त इत्येवपाठः सुवचः । तत्सिद्धमापस्तम्बवचनप्राप्तस्य ज्ञाताज्ञातप्रायश्चित्तस्य, आश्वलायनगृह्यानुकारिकारिकोक्तयद्वो देवा इति व्युत्क्रमनिर्हारार्थकस्य चाऽनियतनिमित्तत्वम् । ज्ञाताज्ञातदोषपरिहारस्यावश्यकत्वे सर्वप्रायश्चित्तमेवाश्वलायनैर्विधेयं अनुक्तनिष्कृतौ तस्यैव ब्राह्मणे विधानात् । अथवा शिष्टपरिगृहीतत्वादेषामाद्यरेष्यत्युपघातार्थकप्रायश्चित्तदेवानामपि संकल्पपूर्वकं समावेशोऽस्तु मास्त्वन्वाधानवाक्ये विनिवेश इति निर्विचिकित्सः पन्थाः ॥

चान्संस्रावेण अङ्गदेवताः प्रधानदेवताः सर्वाः संनिहिताः सन्तु एवं साङ्गेन कर्मणा मद्यो यक्ष्य इति संकल्प्य ॐ भूर्भुवःस्वः स्वाहा इति हुत्वा प्रजापतय इदं नममेत्युद्दिश्य त्यजेत् । तत उक्तप्रकारेणाहृतेषु पुंदर्भेषु प्रादेशमात्रान् पट्त्रिंशद्दर्भान् रज्जुकरणार्थं गृहीत्वा तत्र द्वादशदर्भैः संविन्नयवर्तीं रज्जुं प्रादक्षिण्येन कृत्वा पुनरन्यां रज्जुमेवं कृत्वा उभयमप्रादक्षिण्येन समस्य । पुनरन्यां कृत्वा प्रादक्षिण्येन त्रिवृतं समस्यान्ते प्रदक्षिणं ग्रन्थिं कृत्वा तां त्रिवृतां रज्जुमुदगग्रां वितत्य तत्र प्रादेशमात्रान्मुष्टिपरिमितान्दर्भान्निधाय तया वर्हिर्द्विरावेष्ट्य रज्ज्वग्रेण रज्जुमूलं सकृदावेष्ट्य तदग्रशेषं पूर्वमावेष्टितरज्ज्वधस्तान्निधाय परिस्तरणाद्यर्थं दर्भैः सहायतनात्पश्चाद्भागे उपरि निदध्यात् । ततः पूर्ववद्रज्जुं कृत्वोदगग्रां वितत्य पालाशखादिरान्यतमयज्ञियवृक्षसंभवं प्रादेशप्रमाणं पञ्चदशसमिदात्मकेध्मं प्रागग्रं निधाय तया सकृदावेष्ट्य वर्ह्योपरि निधाय परिसमूहनादिकं कुर्यात् । तत्रायं क्रमः—अग्नेरायतनात्सकाशादष्टाङ्गुलिपरिमिते देशे ऐशानीं दिशमारभ्य प्रदक्षिणं समन्तात्सोदकेन पाणिना त्रिःपरिमृज्य पूर्वमुपरिनिहितान्दीर्घान्षोडशदर्भानादाय दशाङ्गुलिमिते देशे समसंख्यया प्राच्यामुदगग्रैर्दक्षिणस्यां प्रागग्रैः प्रतीच्यामुदगग्रैरुत्तरस्यां प्रागग्रैर्दर्भैः परिस्तृणीयात् । पूर्वपश्चात्परिस्तरणमूलयोरुपरि दक्षिणपरिस्तरणमुत्तरपरिस्तरणमुदगग्रयोरधस्ताद्भवति एवं परिस्तीर्य । ब्रह्मासनार्थमग्नेर्दक्षिणतोऽष्टाविंशतिदर्भान् पात्रासादनार्थं चोत्तरतः कांश्चिद्दर्भानग्रानास्तीर्य अग्नेरपराजितां दिशमारभ्य त्रिरम्भसा परिषिच्य पात्रासादनं कुर्यात् । तत्रायं क्रमः—अग्नेरुत्तरभागे पूर्वमास्तीर्णेषु दर्भेषु चरुस्थालीप्रोक्षणपात्रे दर्वीस्रुवौ प्रणीताज्यपात्रे

पाठा०—१ सात्रोपाङ्गेन कर्मणा । २ पूर्ववत्रिवृता रज्जुम् । ३ गार्ग्येषु द्विप्रादेशप्रमाणम् । ४ प्रणीतामाज्यपात्र इध्मं बर्हिश्च ।

इध्मानर्हिषी शूर्पकृष्णाजिने उलूखलमुसले चैत्येतानि पात्राणि द्वन्द्वश उदगपवर्गं प्राक्संस्थं न्यग्बिलमासादयेत् । आज्यहोमे तु प्रोक्षणपात्रं स्रुवं प्रणीतापात्रं आज्यपात्रं इध्मं बर्हिश्चेत्येतान्यासादयेत् । ततः प्रोक्षणपात्रमुत्तानीकृत्य¹ प्रादेशमात्रे स्थौल्येन च समे पवित्रे कृत्वा तत्पात्रस्योपरि निधाय शुद्धाभिरद्भिः पूरयित्वा हस्तयोरङ्गुष्ठोपकनिष्ठिकाभ्यामुदगग्रे पवित्रे गृहीत्वा त्रिरुत्पूय पात्राण्युत्तानानि कृत्वा इध्मं च विस्रस्य सर्वाणि पात्राण्युत्पूताभिरद्भिस्त्रिः प्रोक्षेत् । ततो यथोक्तलक्षणमैशानदिशि स्थितं ब्राह्मणं अस्मिन्कर्मणि ब्रह्माणं त्वां वृण इति तत्पाणिं पाणिना गृहीत्वा वृणुयात् । ततो ब्रह्मा वृतोऽस्मीत्युक्त्वा प्राङ्मुखो यज्ञोपवीत्याचम्य समस्तपाण्यङ्गुष्ठो भूलाग्रेणाग्निं परीत्य दक्षिणत उदङ्मुखः स्थित्वा आसनार्थदर्भेष्वेकं² दर्भमङ्गुष्ठानामिकाभ्यां गृहीत्वा 'निरस्तः परावसुः' इति नैर्ऋत्यां निरस्याप उपस्पृश्य 'इदमहमर्वावसोः सदने सीदामि' इत्युक्त्वोदङ्मुख एव वामोरोरुपरि दक्षिणपादं संस्थाप्योपविश्य गन्धाक्षतादिभिरभ्यर्चितः सन् 'ॐ बृहस्पतिर्ब्रह्मा ब्रह्मसदन आसिष्यते बृहस्पते यज्ञं गोपाय'³ इति जपित्वा सर्वदा यज्ञमना एव वर्तेत । ततो यजमानः प्रणीतापात्रमग्नेः प्रत्यङ्निधाय तत्र पवित्रे निधाय उत्पूताभिरद्भिः पूरयित्वा गन्धपुष्पाक्षतान्निक्षिप्य धृतप्राणो मुखसममुद्धृत्य 'ब्रह्मन्नपः प्रणेष्यामि' इत्युक्त्वा ततो ब्रह्मणा 'ॐ भूर्भुवःस्वर्बृहस्पतिप्रसूतः इति जपित्वा ॐ प्रणय' इत्युच्चारिते अग्नेरुत्तरतस्त्रिदर्भेषु निधाय पवित्रे गृहीत्वा अन्यैस्त्रिभिर्दर्भैराच्छादयेत् । ततः प्रत्यगग्नेः शूर्पं निधाय

पाठा०—१ अत्र गन्धाक्षतपुष्पप्रक्षेपाचार । २ दर्भेषु दक्षिणभागस्थितमेकम् । ३ गोपायेत्यस्याग्रे—'स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहि इति मन्त्रशेषं पठन्ति । दृश्यते च तथा प्रचुराचारस्तथापि तस्य परिशिष्टेष्वन्यनाप्यनुपलम्भात्प्रामादिको भाति सः ।

तत्र पवित्रे निधाय । नाममन्त्रकहोमे यथा प्रधानदेवतं प्रत्येकं व्रीहिमुष्टीन् अमुष्मै त्वा जुष्टं निर्वपामीति मन्त्रावृत्त्या निरुप्य व्रीहीणामुपरि ते पवित्रे निधाय अमुष्मै त्वा जुष्टं प्रोक्षामीति निर्वापसंख्यया उत्पूताद्भिरद्भिः प्रोक्षेत् । अमन्त्रकहोमे तु श्रवणाकर्माग्रयणाष्टकाश्राद्धादौ तूष्णीं चतुरश्चतुरो मुष्टीन्निरुप्य तथैव प्रोक्षेत् । ततः पात्राणामुत्तरभागे प्राग्ग्रीवमास्तीर्णे ऊर्ध्वलोम्नि कृष्णाजिने उलूखलं निधाय तत्र व्रीहीन्मुसलेन पत्न्यवहत्य त्रिःशुक्लीकृतान् तण्डुलान् त्रिःप्रक्षाल्य पृथक्पात्रे एकपात्रे वाऽनविदग्धमन्तर्बहिर्गतकञ्चुकं शनैःशनैः सुशृतं पचेत् । ततस्ते पवित्रे आज्यपात्रे निधाय तत्पात्रं पुरतः संस्थाप्याज्यमासिच्याग्नेरुत्तरतः स्थितानङ्गारान्भस्मना सहाग्नेरुदक्परिस्तरणाद्बहिर्निरुह्य आज्यपात्रं तेष्वधिश्रित्य ज्वलता दर्भोल्मुकेनावज्वल्य अङ्गुष्ठपर्वमात्रं प्रक्षालितदर्भाग्रद्वयमाज्ये प्रत्यस्य पुनर्ज्वलता तेनैव दर्भोल्मुकेन चर्वादिना सहाज्यं त्रिःपर्यग्निकृत्वा तदुल्मुकमपास्य अपः स्पृष्ट्वा स्थालीं भुवि कर्षन्निवोदगुद्वास्याङ्गारान्प्रत्यूह्याप: स्पृष्ट्वा तत्रस्थितमेवाज्यम् । सवितुष्ट्वा हिरण्यस्तूपः सविता पुरउष्णिक् आज्योत्पवनेवि० । सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः । इति मन्त्रेणैकश्रुत्योच्चारितेनैकवारं द्विस्तूष्णीमुत्तानपाणिद्वयाङ्गुष्ठोपकनिष्ठिकाभ्यामन्तयोरसंस्पृष्टे गृहीत्वा ताभ्यां पवित्राभ्यां प्रागुत्पूय ते पवित्रे प्रोक्ष्याग्नौ प्रहृत्य अग्नेः पश्चात्परिस्तरणाद्बहिरात्मनोऽग्रतो भुवं संप्रोक्ष्य तत्र बर्हिःसंनहनीं रज्जुमुदगग्रां वितत्य तत्र बर्हिः प्रागग्रमुदगपवर्गमविरलमास्तीर्य तत्राज्यपात्रं निधाय स्रुवादिसंमार्जनं कुर्यात् । तत्रायं क्रमः—दक्षिणेन हस्तेन स्रुक्स्रुवौ गृहीत्वा सव्येनाष्टौ दर्भानादाय सहैवाग्नौ प्रताप्य स्रुचं

पाठा०—१ आज्यस्थालीं तेषु । २ पर्यग्निकरण कृत्वा । ३ मन्तयोरसंस्पृष्टे ।

निधाय दक्षिणेन पाणिना स्रुवस्य बिलं दर्भाग्रैः प्रागादिप्रागपवर्गं त्रिःसंमृज्य अधस्ताद्दर्भाग्रैरेवाभ्यात्मं विलपृष्ठं त्रिःसंमृज्य ततो दर्भाणां मूलैर्दण्डस्याधस्ताद्बिलपृष्ठादारभ्य यावदुपरिष्टाद्बिलं तावत्त्रिः संमृज्याद्भिः प्रोक्ष्य स्रुवं निष्टप्याज्यस्थाल्या उत्तरतः स्रुचाऽस्पृष्टं निधायोदकं स्पृष्ट्वा तैरेव दर्भैर्जुहूं चैवमेव संमृज्य स्रुवादुत्तरतो निधाय दर्भानद्भिः प्रोक्ष्याग्नावनुप्रहरेत् । ततः शृतं चरुं स्रुवगृहीतेनाज्येनाभिघार्योदगुद्वास्य अग्न्याज्ययोर्मध्येन नीत्वाऽज्याद्दक्षिणतो बर्हिषि सान्तरमासाद्य पुनरप्यभिघार्य हविःपृथक्करणाय पात्रान्तरं चर्वाज्ययोर्मध्ये निधाय एकादशाङ्गुलिमिते देशे गन्धाक्षतपुष्पैरग्निं समन्त्रमभ्यर्चयेत् । तत्र मन्त्राः—विश्वानिन इति तिसृणां वसुश्रुतोऽग्निस्त्रिष्टुप् द्वयोरर्चनेऽन्त्याया उपस्थाने वि० । विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरितातिपर्षि । अग्ने अत्रिवन्नमसा गृणानो३ऽस्माकं बोध्यविता तनूनाम् ।। यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि । जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याम् ।। यस्मै त्वं सुकृते जातवेद उलोकमग्ने कृणवः स्योनम् । अश्विनं सपुत्रिणं वीरवन्तं गोमन्तं रयिं नशते स्वस्ति ।। तत आत्मानं चालंकृत्य हस्तं प्रक्षाल्य इध्मबन्धनरज्जुं तत्रैव निधाय पाणिनेध्ममादाय त्रिरिध्ममभिघार्य मूलमध्यमयोर्मध्यभागे गृहीत्वा ( इध्ममलंकृत्य स्वयमलंकृत्य ब्रह्माणमलंकृत्य) अयं ते वामदेवो जातवेदा अग्निस्त्रिष्टुप् इध्महोमे वि० । अयं त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्धस्व चेद्ध वर्धय चास्मान्प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा । एकश्रुत्योच्चार्येध्ममग्नावाधाय अग्नये जातवेदस इदं नममेत्युद्दिश्य त्यजेत् । अथ स्रुवेणाज्यं गृहीत्वा उत्तरपरिस्तरणसंधितो नीत्वाग्नेर्वा-

---

पाठा०—१ तत्र मन्त्रौ–विश्वानिन इति मन्त्रद्वयस्य वसुश्रुतोऽग्नि । २ आन्ध्रग्रन्थयोर्यं चिह्नगर्भितो भागः ।

यव्यकोणमारभ्याग्नेयीपर्यन्तं प्रजापतिपदं चतुर्थ्यन्तं मनसा स्मरन् स्वाहेत्युच्चार्य नैरन्तर्येणार्जवेनाज्यधारां ज्योतिष्मत्यग्नाविध्मदारूपरि प्लावयन्हुत्वा । पुनराज्यं गृहीत्वा दक्षिणपरिस्तरणसंधितो नीत्वा नैर्ऋतीमारभ्यैशानीपर्यन्तं तथैव हुत्वा उभयत्र प्रजापतय इदं न ममेत्युद्दिश्य त्यक्त्वा । स्रुवेणाज्यमादाय अग्नये स्वाहेत्यग्नेरुत्तरपार्श्वे पूर्वभागे हुत्वा । पुनराज्यं गृहीत्वा सोमाय स्वाहेति दक्षिणपार्श्वे तत्समदेशे हुत्वा । अनन्तरं नाममन्त्रकहोमे पूर्वनिहितपात्रे प्रधानदेवतासंख्यया चरुं पृथक्कृत्य इदममुष्मा इदममुष्मा इति यथादैवतं प्रत्येकमभिमृशेत् । समन्त्रकहोमे त्वविभज्यावदानधर्मेण जुहुयात् । तत्रायं क्रमः—स्रुवेण दर्व्यामुपस्तीर्य प्रथमप्रधानदेवताचरोर्मध्यादङ्गुष्ठपर्वमात्रं तिरीचीनाभिरङ्गुष्ठमध्यमानामिकाभिरुदगग्राभिर्नखसंस्पर्शमकृत्वावदाय दर्व्यामोप्य ततः पूर्वभागे प्रागग्राभिस्ताभिस्तथैवावदाय दर्व्यामोप्य पात्रस्थं हविरभिघार्य पश्चाद्दर्वीस्थितमभिघार्य अमुष्मै स्वाहा इति प्रधानदेवतानामोच्चार्य अग्नेर्मध्ये आज्यभागापेक्षया प्रत्यक्तरदेशे वा आच्छादयन्निव दर्व्याः पार्श्वेण जुहुयात् । एवं प्रधानहोमान् तत्तदुद्दिष्टहविषोऽवदायावदाय हुत्वा । दर्व्यामुपस्तीर्य सर्वेभ्यो हविर्भ्यः सकृत्सकृदुत्तरार्धादनूचीनाभिः पूर्वावदानतोऽधिकमवदाय दर्व्यां निधाय पात्रस्थमभिघार्य अवत्तं तु द्विरभिघार्य । यदस्येति हिरण्यगर्भोऽग्निः स्विष्टकृदतिधृतिः स्विष्टकृद्धोमे वि० । यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वान्सर्वं स्विष्टं सुहुतं करोतु मे ॥ अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्धयित्रे सर्वान्नः कामान्समर्धय स्वाहा । इत्येकश्रुत्योच्चार्याग्नेरैशानदेशे हुत्वा अग्नये स्विष्टकृत इदं न ममेति त्यजेत् । पञ्चावत्ती तु प्रधानहोमे पश्चान्मध्यात्पूर्वार्धाच्च त्रिवारमवद्यति स्विष्टकृत्युत्तरार्धात्पूर्वार्धाच्च द्विरवद्यति इतरश्च तु समानम् ।

अनन्तरमग्नेरुत्तरतः स्थितामिध्मबन्धनरज्जुं विस्रस्य प्रोक्ष्य रुद्राय स्वाहा रुद्रायेदं० इति हुत्वा अपः स्पृष्ट्वा स्रुवेणाज्यमादाय प्रायश्चित्ताहुतीः सप्त जुहुयात् । —तत्र मन्त्राः—अयाश्चेति विमदोऽयाळग्निः पङ्क्तिः प्रायश्चित्ताज्यहोमे वि० । अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि । अयासा वयसा कृतोऽयासन्हव्यमूहिषेऽया नो धेहि भेषजं स्वाहा इत्येकश्रुत्योच्चार्य जुहुयात् । अग्नये अयस इदं० । अतोदेवा मेधातिथिर्देवा गायत्री प्रायश्चि० । अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्त धामभिः स्वाहा । देवेभ्य इदं० । इदं विष्णुर्मेधातिथिर्विष्णुर्गायत्री प्राय० । इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूळ्हमस्य पांसुरे स्वाहा । विष्णव इदं० । आभ्यामृग्भ्यां हुत्वा । व्याहृतीनां व्यस्तानां विश्वामित्रजमदग्निभरद्वाजा ऋषयः अग्निवायुसूर्या देवताः गायत्र्युष्णिगनुष्टुभश्छन्दांसि । समस्तव्याहृतेः प्रजापतिः प्रजापतिर्बृहती प्राय० । भूः स्वाहा अग्नय इदं० । भुवः-स्वाहा वायव इदं० । स्वः स्वाहा सूर्यायेदं० । भूर्भुवः स्वः स्वाहा प्रजापतय इदं० । इत्याघारवतस्त्र एवं सप्ताज्याहुतीर्हुत्वा प्रत्येकमुद्देशत्यागौ कुर्यात् ॥ अनन्तरं ब्रह्मा कर्तारं परीत्य वायव्यदेशे स्थित्वा अयाश्चेत्यादि सप्ताहुतीर्जुहुयात् । ततो मन्त्रविपर्यासादिनियतनिमित्ते प्राप्ते । यद्वो देवा अभितपामरुतस्त्रिष्टुप् मन्त्रविपर्यासप्रायश्चित्ता० । यद्वो देवा अतिपातयानि वाचा च प्रयुती देवहेळनम् । अरायो अस्माँ अभिदुच्छुनायतेऽन्यत्रास्मन्मरुतस्तन्निधेतन स्वाहा । मरुद्भ्य इदं० । अनाज्ञातमिति मन्त्रद्वयस्य

---

पाठा०—१ रुद्राय पशुपतये स्वाहा पशुपतये रुद्रायेदं । २ अनयाया यद्वोदेवेत्यस्या मरुदाहुतेः अनाम्नातत्रिप्रयस्य च नित्यत्वानित्यत्वविचारःपौर्वापर्यक्रमविचारश्च प्रागन्वाधानप्रसंगे निर्णीतो द्रष्टव्यः ।

हिरण्यगर्भोऽग्निरनुष्टुप् ज्ञाताज्ञातदोषप्राय० । अनाज्ञातं यदा ज्ञातं यज्ञस्य क्रियते मिथु । अग्ने तदस्य कल्पय त्वꣳहि वेत्थ यथातथꣳस्वाहा अग्नय इदं० । पुरुषसंमितो यज्ञो यज्ञः पुरुषसंमितः । अग्ने तदस्य कल्पय त्वꣳहि वेत्थ यथातथꣳ स्वाहा । अग्नय इदं० । यत्पाकत्रेत्यस्य त्रितोऽग्निस्त्रिष्टुप् ज्ञाताज्ञातदोषप्राय० । यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्तासः । अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाꣳऋतुशो यजाति स्वाहा । अग्नय इदं० । इत्यादि जुहुयात् । यजमानस्तस्यै तस्यै देवताया उद्दिश्य त्यजेत् । ब्रह्मणोऽभावे यजमान एवैतान्प्रायश्चित्तजपहोमांश्च कुर्यादन्यस्मै वरं दद्यात् । स्कन्नभिन्नाद्यनियतनिमित्ते प्राप्ते पूर्वोक्तप्रकारेण तत्तत्प्रतिपदोक्तजपहोमांश्च कुर्यात् । ततः संकल्पविपर्यासदेवताविपर्यासमध्यपूर्वार्धविपर्यासद्रव्यविपर्यासनिर्वापणविपर्यासकर्मविपर्यासस्वराक्षरवर्णलोपदोषप्रायश्चित्तार्थं यद्वोदेवा इति मुहुर्मुहुर्जुहुयात् । ततो यजमानः सर्वकर्मप्रपूरणीं भद्रद्रव्यदां पूर्णाहुतिं जुहुयात् । तत्रायं क्रमः—स्रुवेणाज्यं गृहीत्वा स्रुचं समबिलां पूरयित्वा तत्र स्रुवमूर्ध्वबिलं निधाय पुनरधोबिलं निक्षिप्य स्रुवाग्रे कुसुमाक्षतान्निधाय सव्यपाणिना स्रुक्स्रुवमूले, दक्षिणपाणिना स्रुग्ग्रीवां शङ्खमुद्रया गृहीत्वा तिष्ठन् समपाद ऋजुकायः स्रुवाग्रन्यस्तलोचनः प्रसन्नात्मा मन् । समुद्रादूर्मिरित्येकादशर्चस्य सूक्तस्य वामदेव आपस्त्रिष्टुप् अन्त्या जगती पूर्णाहुतिहोमे वि० । समुद्रादूर्मिर्मधुमाँ उदारदुपाꣳशुना सममृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥ वयं नाम प्रब्रवामा घृतस्यास्मिन्यज्ञे धारयामा नमोभिः । उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गो वमीद्गौर एतत् ॥ चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश ॥ त्रिधा हितं पणिभि-

गुह्यमानं गवि देवासो घृतमन्वविन्दन् । इन्द्र एकं सूर्य एकं जजान वेनादेकं स्वधया निष्टतक्षुः ॥ एता अर्षन्ति हृद्यात्समुद्रा-च्छतव्रजा रिपुणा नावचक्षे । घृतस्य धारा अभिचाकशीमि हिरण्ययो वेतसो मध्य आसाम् ॥ १ ॥ सम्यक्स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः । एते अर्षन्त्यूर्मयो घृतस्य मृगा इव क्षिपणोरीषमाणाः ॥ सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः । घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः ॥ अभि प्रवन्त समनेव योषाः कल्याण्य१ः स्मयमानासो अग्निम् । घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ॥ कन्या इव वहतुमेतवा उ अञ्ज्यञ्जाना अभि चाकशीमि । यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभितत्पवन्ते ॥ अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त । इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते ॥ धामन्ते विश्वं भुवनमधिश्रितमन्तः समुद्रे हृद्य१न्तरायुषि । अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिम् ॥ २ ॥ स्वाहेत्यन्तं पठन् यवपरिमितधारां संततां स्रुगग्रेण मानशेषं हुत्वा अग्नय इदं नममेत्युद्दिश्य त्यजेत् । विज्योतिषेत्यस्य जारो वृशोऽग्निस्त्रिष्टुप् अवशिष्टाज्यहोमे वि० । विज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा । प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे स्वाहा । अनेन च तथैवावशिष्टं सर्वं हुत्वा अग्नय इदं नममेत्युद्दिश्य त्यजेत् । ततो विश्वेभ्यो देवेभ्यः स्वाहेति संस्रावं हुत्वा विश्वेभ्यो देवेभ्य इदं न ममेत्युद्दिश्य त्यक्त्वा तण्डुलकणान्समिद्दर्भशकलान्यद्भिः प्रोक्ष्याग्नौ प्रहृत्य अवभृथरूपं पापक्षयकरं पूर्णपात्रजलमार्जनं कुर्यात् । तत्रायं

पाठा०—१ जानो वृशोऽग्निरिति पाठ प्रामादिक । कुमारं कुमारो वृशो वा जार ऊर्भौवेति सर्वानुक्रमात् ।

क्रमः—पूर्वासादितपूर्णपात्रमास्तीर्णबर्हिषि दक्षिणपाणिना निधाय तत्र गङ्गादिनदीः स्मृत्वा दक्षिणपाणिना स्पृशन्—पूर्णमसि पूर्णं मे भूयाः सुपूर्णमसि सुपूर्णं मे भूयाः सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः । अक्षितिरसि मा मे क्षेष्ठाः । इति जपित्वा कुशाग्रैः प्रागादिपञ्चदिक्षु जलमासिंचेत् । तत्र मन्त्राः—प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम् । दक्षिणस्यां दिशि मासाः पितरो मार्जयन्ताम् । अपःस्पर्शः । प्रतीच्यां दिशि गृहाः पशवो मार्जयन्ताम् । उदीच्यां दिश्यापओषधयो वनस्पतयो मार्जयन्ताम् । ऊर्ध्वायां दिशि यज्ञः संवत्सरः प्रजापतिर्मार्जयन्ताम् । इत्येतानेकश्रुत्या पठन् प्रतिदिशं सिक्त्वा स्वशिरसि कुशाग्रैर्मार्जयेत् । तत्र मन्त्राः—आपो अस्मानित्यस्य देवश्रवा आपस्त्रिष्टुप् । आपो अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु । विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरा पूत एमि ॥ इदमापः सिन्धुद्वीप आपोऽनुष्टुप् । इदमापः प्रवहत यत्किंच दुरितं मयि । यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् । सुमित्र्या न आप ओषधयः सन्तु । एतैर्मन्त्रैर्मन्त्रान्ते मार्जनं कृत्वा । दुर्मित्र्यास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तं हन्मि । इति निर्ऋतिदेशे कुशाग्रैरपः सिंचेत् । ततो ब्रह्मा यजमानस्य वामपार्श्वस्थितपत्न्यञ्जलौ पूर्णपात्रस्थजलं—माहं प्रजां परासिचं या नः सयावरीः स्थन । समुद्रे वो निनयानि स्वं पाथो अपीथ । इत्येकश्रुत्योक्त्वा प्राङ्मुखं निषिच्य तदञ्जलिस्थजलैः पापनिरसनार्थं आत्मानं यजमानं पत्नीं च प्रोक्षेत् । पत्नी तु तज्जलं बर्हिषि निषिञ्चेत् । अथवा मार्जनानन्तरं यजमानस्य वामपाणिमुत्तानीकृत्य बर्हिषि निधाय दक्षिणपाणिना पूर्णपात्रं गृहीत्वा तत्र माहं प्रजामित्यनेन तज्जलं प्राङ्मुखं निषिच्य ता आपः समुद्रं गच्छन्तीति ध्यात्वा पाणिस्थजलैरेवात्मानं पत्नीं च प्रोक्षेत् । ततः कृताग्रेः प्रत्यगुदक्स्थितः

संस्कारप्र.
अग्निमुखं.
॥ ६७ ॥

संस्थाजपेनोपतिष्ठेत । तत्र मन्त्राः—अग्ने त्वं गौपायना लौपायना वा बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुर्ऋषयः अग्निर्देवता द्विपदाविराट् छन्दः अग्न्युपस्थाने विनियोगः । अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ॥ वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमं रयिं दाः ॥ स नो बोधि श्रुधी हवमुरुष्याणो अघायतः समस्मात् ॥ तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥ इति द्वाभ्याम् । ॐ च मे स्वरश्च मे यज्ञोप च ते नमश्च । यत्ते न्यूनं तस्मै त उप यच्चेतिरिक्तं तस्मै ते नमः । ॐ अग्नये नमः स्वस्ति । श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् । आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन । देहि मे हव्यवाहनोत्तम इत्युपस्थानं कुर्यात् । ततो ब्रह्मा एतैरेवोपतिष्ठेत । ततः कर्ता परिस्तरणं विसृज्याग्निं पर्युक्ष्य परिषिच्य गन्धाक्षतपुष्पैरलंकृत्य नैवेद्यताम्बूले निवेद्य ब्रह्मणे यथोक्तदक्षिणां दत्त्वा दक्षिणाभावे हुतशिष्टं घृतादिकं सहिरण्यं दक्षिणात्वेन दत्त्वा पात्राणि प्रक्षाल्य इध्मं उन्मृज्य यस्य स्मृत्येत्यादिना श्रीपरमेश्वरे समर्प्याचामेत् । धृतपवित्रकग्रन्थिं विस्रस्य शुद्धदेशे प्रक्षिपेत् । इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे सकलसाधारणाभिमुखप्रकरणम् ॥

अथ ग्रहयज्ञः ॥ मन्महे तन्महः पद्माकुचकुङ्कुमपङ्किलम् । यत्स्वरूपतया यज्ञाः श्रूयन्ते श्रुतिसीमनि ॥ अथेदानीं ग्रहयज्ञविधिरभिधीयते । स तावन्नित्य–१ नैमित्तिक–२ काम्य–३ भेदेन त्रेधा विभिद्यते । शुभवारविशेषजन्मनक्षत्रअयायनविषुवोपरागादिकालविशेषेषु नित्यः १ । तदुक्तं भगवता—'ग्रहशान्तिं प्रवक्ष्यामि शौनकोऽहं द्विजन्मनाम् । पुण्येऽहनि शुभे वारे जन्माद्यृक्षेषु च त्रिषु ॥ अयने विषुवे चैव सोमसूर्योपरागयोः । ग्रहाणामुग्रचेष्टानां नित्यं शान्तिं समाचरेत्'

पाठा०—१ पूर्वाह्ने च त्रिजन्मसु ।

इति । आचार्येणापि—'शरीरेष्वासते देवा ग्रहाः सूर्यादयो नव । तस्मात्तेषु प्रशान्तेषु देहशान्तिर्भवेन्नृणाम् ॥ भौमोऽग्नेः सोमजो भूमेर्व्योममूर्तिर्बृहस्पतिः । भार्गवोऽपां समीरस्य सौरिः सोमस्य चेतरः॥ रविरात्मा रयः (?) पट् तु सर्पाख्या राहुकेतवः । एते वसन्ति भूतेषु चरेषु स्थावरेषु च ॥ ग्रहादिमूर्तयस्त्वेते ग्रहाः सूर्यादयोऽखिलाः । इति यस्मात्त एवास्माद्विकुर्वन्ति शरीरिषु ॥ एतेऽष्टमादिस्थानस्थाः पीडयन्ति शरीरिणः । स्वान्स्वान्धातून्समाश्रित्य त्रिदोषांश्च तदा तदा ॥ पूजया जपहोमैश्च पूजिताः शान्तिमिच्छुभिः । शान्तास्तुष्टाः प्रदास्यन्ति ह्येतेषामभिवाञ्छिताम् ॥ गृहा गावो नृपा विप्रा नार्यः स्वस्वपतिप्रियाः । पूजिताः पूजयिष्यन्ति निर्दहन्त्यवमानिताः ॥ सर्वापद्भ्यो विमुक्त्यर्थं नित्यं पूज्या नवग्रहाः' इति । स्मृतिचन्द्रिकायामपि—'ग्रहाधीना नरेन्द्राणामुच्छ्रयाः पतनानि च । भावाभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः' इति ॥ ॥ गर्भाधानगृह्यकर्मप्रारम्भगृहप्रवेशप्रतिष्ठारोग्याभिषेकाभिचारप्रशस्ताखिलकर्मप्रारम्भेषु नैमित्तिकः२ । तदुक्तमुत्पलपरिमले—'कार्यारम्भेषु सर्वेषु प्रतिष्ठास्वध्वरेषु च । नववेश्मप्रवेशे च गर्भाधानादिकर्मसु ॥ आरोग्यस्नानसमये संक्रान्तौ रोगसंभवे । अभिचारे च यः कुर्याद्ग्रहपूजां विधानतः ॥ सोऽभीष्टफलमाप्नोति निर्विघ्नेन न संशयः' इति । अत्र कार्यारम्भेष्वित्यादौ सर्वत्र निमित्तसप्तमी ॥ ॥ सकलविपदपगमसंपदागमवृष्ट्यायुःपुष्ट्यादिफलकामनासु काम्यः ३ । तदुक्तमाचार्येण—'क्षीयन्ते विपदः क्षिप्रं वर्धन्ते संपदोऽखिलाः । तदारयेश्च नश्यन्ति सर्वकार्याः प्रदक्षिणाः ॥ भवन्त्यघानि नश्यन्ति ग्रहयज्ञकृतां नृणाम् । कामानां चायुराद्यानां लब्धये च

पाठा०—१ ग्रहादिमूर्तयस्त्वेते । २ प्रयच्छन्ति । ३ निद्धत्यर्थं । ४ तापात्रय प्रणश्यन्ति ।

विधानतः' इति । कुर्यादिति शेषः । याज्ञवल्क्योऽपि—'श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् । वृष्ट्यायुःपुष्टिकामो वा तथैवाभिचरन्नपि' इति । ब्रह्मयामलेऽपि—'दुष्टारिष्टे समायाते कर्तव्यं ग्रहशान्तिकम् । वृष्टिपुष्ट्यायुरारोग्यसमृद्ध्यर्थं च सर्वदा' इति । अत्र यद्यपि सर्वत्र फलश्रवणात्काम्यत्वमेव सिध्यति तथापि नित्यपदग्रहणान्निमित्तसप्तमीश्रवणाच्च 'नित्यनैमित्तिकत्वे च स्याताम्' इत्युक्तेरविरोधः । अकरणे प्रत्यवायश्रवणाज्जन्मत्रयादिषु ग्रहयज्ञस्य कथं नित्यनैमित्तिकत्वमिति चेत्, नित्यपदश्रवणाच्चेति ब्रूमः । नित्यत्वसाधके सति नित्यपदेन परिगणनात् । तदुक्तं कालविधाने—'नित्यं सदा यावदायुर्न कदाचिदति क्रमेत् । तदुक्तातिक्रमे दोषश्रुतेरत्यागचोदनात् ॥ फलश्रुतेर्वीप्सया च तन्नित्यमिति कीर्तितम्' इति ॥

ग्रहयज्ञे पक्षत्रयम् । स चैकाग्निरनेकाध्वरः १ एकाग्निरेकाध्वरः २ अनेकाग्निरेकाध्वरश्च ३ इति त्रेधा भवतीति वर्णयन्ति । तत्राद्यः पक्षस्तावदाचार्यवचनव्याकोपादनादरणीयः । तदुक्तम्—'कुण्डे वा स्थण्डिले वैकः कुर्यात्कुर्वन्पृथक्पृथक् । एकस्तु बहुकुण्डेषु कुर्याद्ग्रहमखे गुरुः ॥ बहुष्वहःसु वैकस्मिन्नह्नि वा तद्विधानवित् । एककुण्डे तु नवभिर्नैव होमः प्रशस्यते ॥ श्रौतादन्यत्र सर्वत्र प्रायस्तन्त्रेषु वा क्वचित् । क्वचित्तन्त्रेषु तद्दृष्ट्वा केचिद्ग्रहमखेष्वपि ॥ तथा कुर्वन्ति तत्रैव तत्र कुर्याद्बुधो गुरुः । यत्र यद्यथा प्रोक्तं तत्तत्कुर्याद्यथोदितम् ॥ नान्यथा स्वानुमानेन कुर्यात्प्राज्ञोऽपि मानवः । यत्रानुक्तं तु तत्रैव कुर्याद्वा स्वानुमानतः । विविच्य न्यायमालोच्य दृष्ट्वान्यत्र बलाबलम् । श्रौतं वाप्यथ पौराणं स्मार्तं वाग्नि विनिर्णये ॥ गीर्दृष्टा तत्र न चलेन्न्यायाद्वा स्वानुमानतः । यत्र गीर्न दृष्टा तत्र कुर्यान्न्यायानुमानतः ॥ नच यत्र च तत्रैव सा गीरिति मतिर्मम । तस्मान्न

चैककुण्डे स्युः पोतारो बहवो द्विजाः ॥ अनुक्तत्वाद्ग्रहमखे तथान्यत्राप्यनूदिते । एकस्त्वेके बहुदिनं हुनेत्कुण्डे गुरुर्द्विजः' इति । अतः प्रथमपक्षमुपेक्ष्य द्वितीयमेकाग्न्येकाध्वरपक्षमादावभिधास्यामः । प्रचुराचारपरिगृहीतत्वादेतस्य । नन्वेवंविधमाचारमेव न पश्यामः । एकस्मिन्नेवाग्नौ ग्रहसंख्यया होतुर्दर्शनादिति चेत् । सत्यम् । किंतु आचार्यप्रतिहस्ततया नव होतारो जुह्वति नत्वाचार्यतया । अतएवोपक्रमोपसंहाराद्यवगम्य ग्रहयज्ञः कार्यः । अनवगम्य यत्नेनापि करणे वैफल्यस्य श्रवणात् । तदाहाचार्यः—'रूपवर्णायुधस्थानमण्डलासनवाहनम् । समित्कुण्डोपहारांश्च पुष्परत्नाकृतीरपि ॥ गायत्रीं मूलमन्त्रांश्च तथा मन्त्रांश्च केवलान् । अधिप्रत्यधिदेवानां मन्त्रांश्चर्ष्यादिसंयुतान् ॥ तत्तन्मूर्तीश्च जानीयाद्धोष्यन्नर्चन्ग्रहान्बुधः । अज्ञात्वैव पुमानिष्ट्वा तत्फलं नैव विन्दति ॥ दुःखं प्राप्नोति सुमहद्यत्नादिष्ट्वाप्यवित्पुमान् ॥ एतान्पृथक्पृथक्सम्यग्जानीयाद्ग्रहयज्ञकृत् । प्रीणयेदखिलानेव पूजायैश्च नवग्रहान् ॥ आत्मनो विषमस्थं च ग्रहं प्रीणाति दुर्गतः । तदुक्तविधिना सम्यक् शक्त्या गुर्वनुमोदितः' इति । अत्र गायत्री ग्रहगायत्री । प्रणवव्याहृतिपूर्वकं चतुर्थ्यन्तं नमोन्तं ग्रहनाम ग्रहगायत्री । तथाचोक्तं वामनग्रन्थे—'प्रणवं त्वादितः कृत्वा भूर्भुवःस्वस्ततः परम् । चतुर्थ्या नामसंयुक्तं नमस्कारान्तयोजितम् ॥ एष मन्त्रः समाख्यातो ग्रहपूजाविधायकः । अनेनावाहनं कुर्यादनेनैव विसर्जयेत्' इति ।

अथ मण्टपादिलक्षणमुच्यते । हेमाद्रौ मत्स्यपुराणे—'गृहस्योत्तरपूर्वेण मण्टपं कारयेद्बुधः । रुद्राय नवभूमौ वा चतुर-

पाठा०—१ होतारो बहवो द्विजा । २ रुद्रायतनभूमौ ।

समुदक्प्लवम् ॥ दशहस्तानथाष्टौ वा हस्तान्कुर्याद्विधानतः । तस्य द्वाराणि चत्वारि कर्तव्यानि विचक्षणैः' इति । एतन्मण्डपकरणं काम्ये नित्यम् । नित्यनैमित्तिकयोस्त्वनित्यम् । 'नित्यं नैमित्तिकं हित्वा सर्वमन्यत्समण्डपम्' इति मत्स्येनाभिधानात् ॥

अथ कुण्डलक्षणम् । स्कन्दपुराणे—'नवग्रहमखे कुण्डं हस्तमात्रं समन्ततः । चतुरस्रमधोहस्तं योनिनक्रं समेखलम् ॥ चतुरङ्गुलविस्तारा मेखला तद्वदुच्छ्रिता । वितस्तिमात्रा योनिः स्यात्षट्सप्ताङ्गुलिविस्तृता । कूर्मपृष्ठोन्नता मध्ये पार्श्वयोश्चाङ्गुलोच्छ्रिता । गजोष्ठसदृशी तद्वदायता छिद्रसंयुता ॥ मेखलोपरि सर्वत्राप्यश्वत्थदलसंनिभा' इति । सा च योनिः पश्चिमतः कार्या । तथाच गर्गः—'पश्चिमे मध्यभागे तु योनिं कुर्याद्विधानतः' इति । अपिच—'मानहीनाधिकं कुण्डमनेकभयदं भवेत् । तस्य चोत्तरपूर्वे तु स्थण्डिलं हस्तमात्रकम् ॥ त्रिवप्रं चतुरस्रं च वितस्त्युच्छ्रायसंमितम् । द्व्यङ्गुलोच्छ्रितो वप्रः प्रथमः समुदाहृतः ॥ त्र्यङ्गुलोच्छ्रायसंयुक्तं वप्रद्वयमथोपरि । द्व्यङ्गुलस्तत्र विस्तारः सर्वेषां कथितो बुधैः' इति । इत्थमुक्तलक्षणं कुण्डं वेदिं च निर्माय ग्रहयज्ञः कर्तव्यः । 'कुण्डे वा स्थण्डिले वा' इत्याचार्यवचनाद्यदा स्थण्डिले क्रियते तदा वेदिरेव कार्या न मण्टपः । तथैव शिष्टाचारस्य दर्शनात् ।

अथ ग्रहप्रतिमादिप्रतिष्ठा । तत्र ग्रहानाह याज्ञवल्क्यः—'सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः । शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः' इति ॥ ❀ ॥ अथ ग्रहवर्णाः—आदित्याङ्गारकौ रक्तौ बुधजीवौ च पीतकौ । सोमशुक्रौ विदुः श्वेतौ कृष्णौ राहुशनैश्चरौ ॥ धूम्रः केतुगणश्चैषां वस्त्राण्याभरणानि च । ग्रहवर्णानि गृह्णीयाद्गन्धं पुष्पं तथैवच' इति ॥ ❀ ॥

धारकः ॥ [1]'चिह्नितं वरदेनास्य करमन्यं तु कारयेत् ॥ आपः स्त्रीरूपधारिण्यः श्वेता मकरवाहनाः । दधानाः पाशकलशौ मुक्ताभरणभूषिताः ॥ शुक्लवर्णा मही कार्या दिव्याभरणभूषिता । चतुर्भुजा सौम्यवपुश्चण्डांशुसदृशाम्बरा ॥ रत्नपात्रं सस्यपात्रं पात्रमोषधिसंयुतम् । पद्मं करे च कर्तव्यं भुवो—यादवनन्दन ॥ दिङ्नागानां चतुर्णां सा कार्या पृष्ठगता तथा । प्रदक्षिणं दक्षिणाधःकरादारभ्य नित्यशः ॥ विष्णुः कौमोदकीपद्मशङ्खचक्रधरः क्रमात् । चतुर्दन्तसमारूढो वज्री कुलिशसत्करः ॥ प्राचीपतिः प्रकर्तव्यो नानाभरणभूषितः । वामे शच्याः करे कार्या सम्यक्संतानमञ्जरी ॥ वरदा मण्डिता कार्या द्विभुजा च तथा शची । यज्ञोपवीती हंसस्थश्चतुर्वक्त्रश्चतुर्भुजः ॥ अक्षसूत्रं स्रुवं बिभ्रत्कुण्डिकां च प्रजापतिः । अक्षसूत्रधराः सर्वे कुण्डिकापुच्छसंयुताः । एकभोगास्त्रिभोगा वा सर्पाः कार्याश्च भीषणाः ॥ पद्मासनस्थो जटिलो ब्रह्मा कार्यश्चतुर्भुजः । अक्षमालां स्रुवं बिभ्रत्पुस्तकं च कमण्डलुम् । वासः कृष्णाजिनं तस्य पार्श्वे हंसस्तथैव च' इति । इत्यधिदेवताः ॥❀॥ अथ प्रत्यधिदेवतालक्षणानि । 'पञ्चवक्त्रो वृषारूढः प्रतिवक्त्रं त्रिलोचनः । कपालशूलखट्वाङ्गी चन्द्रमौलिः सदाशिवः ॥ अक्षसूत्रं च कमलं दर्पणं च कमण्डलुम् । उमा बिभर्ति हस्तेषु पूजिता त्रिदशैरपि ॥ कुमारः षण्मुखः कार्यः शिखण्डकविभूषणः । रक्ताम्बरधरः कार्यो मयूरवरवाहनः ॥ कुक्कुटश्च तथा घण्टा तस्य दक्षिणहस्तयोः । पताका वैजयन्त्याख्या शक्तिः कार्या च वामयोः ॥ (विष्णुब्रह्मेन्द्रलक्षणान्यधिदेवतामुक्तान्येव ज्ञेयानि) ईषत्पीनो यमः कार्यो दण्डहस्तो विजानता । रक्तदक्पाशभृत्कृष्णो महिषस्थो विभूषितः ॥ कालः करालवदनो नित्यशश्च विभीषणः।

---

पाठा०—१ वह्नित वरदेनास्य ।

अथ प्रतिमाद्रव्याण्याह याज्ञवल्क्यः—'ताम्रकात्स्फाटिकाद्रक्तचन्दनात्स्वर्णकादुभौ ।' रजतादायसात्सीसात्कांस्यात्कार्या ग्रहाः क्रमात् ॥ स्ववर्णैर्वा पटे लेख्या गन्धैर्मण्डलकेषु वा' इति । ब्रह्मयामले तु—'ताम्रेण कारयेद्भानुं रजतेन निशाकरम् । कुजज्ञ-जीवरूपाणि सुवर्णेन प्रकल्पयेत् ॥ रजतेन ततः शुक्रं कृष्णलोहेन सूर्यजम् । नागेन कारयेद्राहुं केतुं कांस्येन कारयेत् ॥ नागं सीसम् । स्वाङ्गुलेनोच्छ्रिताः सर्वे ग्रहाः कार्या विधानतः ॥ अथवा स्वर्णमात्रेण कारयेत्प्रतिमाः सुधीः । तदर्धेन तदर्धेन यथा-वित्तानुसारतः ॥ अथवा वर्णकैः कार्या ग्रहाः स्वर्णादिधातुभिः' इति ॥

अथ ग्रहमूर्तयः । मत्स्यपुराणे—'पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः । सप्ताश्वरथसंयुक्तो द्विभुजः स्यात्सदा रविः ॥ श्वेतः श्वेताम्बरधरो दशाश्वः श्वेतभूषणः । गदापाणिर्द्विबाहुश्च कर्तव्यो वरदः शशी ॥ रक्तमाल्याम्बरधरः शक्तिशूलगदाधरः । चतुर्भुजो मेषगतो वरदः स्याद्धरासुतः ॥ पीतमाल्याम्बरधरः कर्णिकारसमद्युतिः । खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः ॥ देवदैत्यगुरू तद्वत्पीतश्वेतौ चतुर्भुजौ । दण्डिनौ वरदौ कार्यौ साक्षसूत्रकमण्डलू ॥ इन्द्रनीलद्युतिः शूली वरदो गृध्रवाहनः । बाणबा-णासनधरः कर्तव्योऽर्कसुतस्तथा ॥ करालवदनः खड्गचर्मधारी वरप्रदः । नीलसिंहासनस्थश्च राहुरत्र प्रशस्यते ॥ धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः । गृध्रासनगता नित्यं केतवः स्युर्वरप्रदाः ॥ सर्वे किरीटिनः कार्या ग्रहा लोकहितावहाः' इति ॥ ❀ ॥

अथाधिदेवतालक्षणानि । विष्णुधर्मोत्तरे—'पिङ्गभ्रूश्मश्रुकेशाक्षः पिङ्गाक्षत्रितयोऽरुणः । छागस्थः साक्षसूत्रश्च सप्तार्चिः शक्ति-

पाठा०—१ सप्ताश्व सप्तरज्जुश्च । २ श्वेताश्व' श्वेतभूषणः । ३ मेषगम', मेषगामी ।

आचार्यं वरयेत्कर्ता विधिज्ञं नवयज्ञकम्' इति । तत्र यजमानो विधिज्ञमाचारवन्तमाचार्यमस्मिन्ग्रहमखे आचार्यं त्वां वृणे इति तत्पाणिं पाणिना संगृह्य वृणुयात् । अनधिकारिणा करणे दोषस्मरणात् । तदाह बृहस्पतिः—'आथर्वणं प्रतिष्ठां च ग्रहयज्ञं क्रतुं व्रतम् । असंस्कृतमनुः कुर्वन्शीघ्रमेति विपर्ययम्' इति । इत्याचार्यवरणम् ।

अथ वेद्यां ग्रहस्थापनम् । ब्रह्मयामले—'वितानं कारयेत्तत्र फलपुष्पाङ्कितं शुभम् । ग्रहवर्णपताकाढ्यैस्तोरणाद्यैर्विराजितम् ॥ गोमयेनोपलिप्याथ ततस्तण्डुलकैः शुभैः । तत्रोपरि लिखेद्धीमान्पद्ममष्टदलं शुभम् ॥ क्रमेण स्थापयेत्तत्र भास्करादीन्नव ग्रहान्' इति ॥ ❀ ॥ अत्र ग्रहस्थापनक्रमो हेमाद्रावभिहितः—'मध्ये तु भास्करं विद्याच्छशिनं पूर्वदक्षिणे । दक्षिणे लोहितं विद्याद्बुधं पूर्वोत्तरेण तु ॥ उत्तरेण गुरुं विद्यात्पूर्वेणैव तु भार्गवम् । पश्चिमे तु शनिं विद्याद्राहुं दक्षिणपश्चिमे ॥ पश्चिमोत्तरतः केतुः स्थाप्यते शुक्लतण्डुलैः' इति ॥ ❀ ॥ अथ स्थापनक्रम उक्तः । उत्पलपरिमले—'ग्रहस्य दक्षिणे पार्श्वे स्थापयेदधिदेवताम् । ग्रहस्योत्तरपार्श्वे तु न्यसेत्प्रत्यधिदेवताम् ॥ शनैश्चराद्वायुदेशे स्थापयेद्विघ्ननायकम् । आतूनइन्द्रक्षुमन्तमित्यृचा विधिनार्चयेत् ॥ तस्य याम्येऽर्चयेद्दुर्गां जातवेदसमन्त्रतः । तस्य दक्षिणतो वायुं क्राणाशिशुरित्यर्चयेत् ॥ आदित्प्रत्नस्येत्यनयर्चाम्बरं पूजयेदथ । एषोऽपा इत्यनया तस्य याम्येऽश्विनौ यजेत् ॥ एवं द्वात्रिंशद्देवताः स्थापनीयाः । तथाच मत्स्यपुराणे—'देवानां तत्र संस्थाप्या त्रिंशतिर्द्वादशाधिका ॥ आदित्याभिमुखाः सर्वे साधिप्रत्यधिदेवताः । स्थापनीया मुनिश्रेष्ठ नान्तरे न पराङ्मुखाः' नान्तरे न बहिर्योगिनः संनिहिता इति व्याख्येयम् । एवं सूर्यादिद्वात्रिंशद्देवतानां यथोक्तलक्षणाः प्रतिमाः यथास्थानमुक्तमन्त्रैरेव

पाशहस्तो दण्डहस्तः सर्पवृश्चिकरोमवान् ॥ उदीच्यवेषं साकारं द्विभुजं सौम्यदर्शनम् । दक्षिणे लेखनीं तस्य वामे पात्रं तु कारयेत्' इति प्रत्यधिदेवतालक्षणानि ॥ ❀ ॥ अथ कर्मसाद्गुण्यदेवताः । 'चतुर्भुजस्त्रिनेत्रश्च कर्तव्योऽत्र गजाननः । नागयज्ञोपवीतश्च शशाङ्ककृतशेखरः ॥ दन्तं दक्षकरे दद्याद्द्वितीये चाक्षसूत्रकम् । तृतीयं परशुं विद्याच्चतुर्थे मोदकं तथा ॥ शक्तिं बाणं तथा शूलं खड्गं चक्रं च दक्षिणे । चन्द्रबिम्बमथो वामे खेटमूर्ध्वे कपालकम् ॥ शुकं टङ्कं च बिभ्राणा सिंहारूढा चतुर्भुजा । एषा देवी समुद्दिष्टा दुर्गा दुर्गासुहारिणी ॥ क्षेत्रपालं ततो ध्यायेच्छ्यामवर्णं त्रिलोचनम् । ऊर्ध्वकेशं सुदंष्ट्रं च भ्रुकुटीकुटिलाननम् ॥ नूपुरालंकृताङ्घ्रिं च सर्पमेखलया युतम् । सर्पाङ्कमतिक्रुद्धं क्षुद्रघण्टामयं तथा ॥ करोटिकामयीं चापि मालां गुल्फावलम्बिनीम् । दधानमुरगानद्धपुंमुद्रं चन्द्ररेखया ॥ दक्षिणैः शूलवेतालखड्गदुन्दुभिसंयुतैः । वामैः कपालघण्टासिचर्मचापममायुतः । अष्टभिश्च करैर्भीमं दिग्वाससमतिद्युतिम् । धावद्धरिणपृष्ठस्थो ध्वजधारी समीरणः । वरदानकरो धूम्रवर्णः कार्यो विजानता ॥ नीलोत्पलाभं गगनं तद्वर्णाम्बरधारि च । चन्द्रार्कहस्तं कर्तव्यं द्विभुजं सौम्य पण्डवत् ॥ द्विभुजौ देवभिषजौ कर्तव्यौ देवसंयुतौ । तयोरोपधयः कार्या दिव्या दक्षिणहस्तयोः । वामयोः पुस्तकौ कार्यौ दर्शनीयौ तथा द्विजाः ॥ एकस्य दक्षिणे पार्श्वे वामे चान्यस्य यादव ॥ नारीयुगं प्रकर्तव्यं सुरूपं चारुदर्शनम् । रत्नभाण्डारके कार्ये चन्द्रशुक्लाम्बरे तथा' ॥ इति । क्रतुसंरक्षकदिक्पालानां मूर्तयः पूजाप्रसङ्गे वक्ष्यन्ते । इति ग्रहमूर्तयः ।

अथाचार्यवरणम् । उत्पलपरिमले—'पूर्वाह्ने विधिवत्स्नात्वा नित्यकर्म समाचरेत् । पुण्याहवाचनं कृत्वा क्रतुसंकल्पपूर्वकम् ॥

आचार्यं वरयेत्कर्ता विधिज्ञं नवयज्ञकम्' इति । तत्र यजमानो विधिज्ञमाचारवन्तमाचार्यमस्मिन्ग्रहमखे आचार्यं त्वां वृणे इति तत्पाणिं पाणिना संगृह्य वृणुयात् । अनधिकारिणा करणे दोषस्मरणात् । तदाह बृहस्पतिः—'आथर्वणं प्रतिष्ठां च ग्रहयज्ञं क्रतुं व्रतम् । असंस्कृतमनुः कुर्वन्शीघ्रमेति विपर्ययम्' इति । इत्याचार्यवरणम् ।

अथ वेद्यां ग्रहस्थापनम् । ग्रहयामले—'वितानं कारयेत्तत्र फलपुष्पाङ्कितं शुभम् । ग्रहवर्णपताकाढ्यैस्तोरणाद्यैर्विराजितम् ॥ गोमयेनोपलिप्याथ ततस्तण्डुलकैः शुभैः । तत्रोपरि लिखेद्धीमान्पद्ममष्टदलं शुभम् ॥ क्रमेण स्थापयेत्तत्र भास्करादीन्नव ग्रहान्' इति ॥ ❀ ॥ अत्र ग्रहस्थापनक्रमो हेमाद्रावभिहितः—'मध्ये तु भास्करं विद्याच्छशिनं पूर्वदक्षिणे । दक्षिणे लोहितं विद्याद्बुधं पूर्वोत्तरेण तु ॥ उत्तरेण गुरुं विद्यात्पूर्वेणैव तु भार्गवम् । पश्चिमे तु शनिं विद्याद्राहुं दक्षिणपश्चिमे ॥ पश्चिमोत्तरतः केतुः स्थाप्यते शुक्लतण्डुलैः' इति ॥ ❀ ॥ अथ स्थापनक्रम उक्तः । उत्पलपरिमले—'ग्रहस्य दक्षिणे पार्श्वे स्थापयेदधिदेवताम् । ग्रहस्योत्तरपार्श्वे तु न्यसेत्प्रत्यधिदेवताम् ॥ शनैश्वराद्वायुदेशे स्थापयेद्विघ्ननायकम् । आतूनइन्द्रक्षुमन्तमित्यृचा विधिनार्चयेत् ॥ तस्य याम्येऽर्चयेद्दुर्गां जातवेदसमन्त्रतः । तस्य दक्षिणतो वायुं क्राणाशिशुर्मन्त्रचार्चयेत् ॥ आदित्प्रत्नस्येत्यनयर्चाम्बरं पूजयेदथ । एषोउषा इत्यनया तस्य याम्येऽश्विनौ यजेत् ॥ एवं द्वात्रिंशद्देवताः स्थापनीयाः । तथाच मत्स्यपुराणे—'देवानां तत्र संस्थाप्या विंशतिर्द्वादशाधिका ॥ आदित्याभिमुखाः सर्वे साधिप्रत्यधिदेवताः । स्थापनीया मुनिश्रेष्ठ नान्तरे न पराङ्मुखाः' नान्तरे न ग्रहियोगिनः संनिहिता इति व्याख्येयम् । एवं सूर्यादिद्वात्रिंशद्देवतानां यथोक्तलक्षणाः प्रतिमाः यथास्थानमुक्तमन्त्रैरेव

स्थापयेत् ॥ ꣥ ॥ प्रागुक्तप्रतिमाभावे तत्तद्ग्रहवर्णैर्वर्णकैः पटे प्रागुक्तलक्षणा ग्रहमूर्तीरालिखेत् । अथवा यथास्थानं तैरेव वर्णकैर्मण्डले स्थापनीयाः । इत्थमेव यथाविधि प्रतिष्ठाप्य यथोक्तगन्धपुष्पादिभिर्वक्ष्यमाणगृह्यपरिशिष्टोक्तवत्प्रधानदेवता अर्चयेत् ॥ अथ मन्त्रविशेष उक्तो गृह्यपरिशिष्टे—'व्याहृतिभिरावाहनमृग्भिश्चानुपूर्व्येण' इति । अस्यार्थः—व्याहृतिभिः विहृताभिः समस्ताभिः आकृष्णेनेत्यनया ऋचा आदित्यस्यावाहनम् । एवं सोमादीनामपि । मत्स्यपुराणे—'सर्वरूपगुणैर्युक्तान्व्याहृत्यावाहयेत्तु तान्' इति ।

अथाङ्गदेवतापूजा । उत्पलपरिमले—'ततो विनायकं दुर्गां वायुमम्बरमश्विनौ । आतून इन्द्र इत्याद्यैर्मन्त्रैः प्रागीरितैर्यजेत् ॥ पुष्पाणि शतपत्राणि चन्दनं च विलेपनम् । एतेषां गुग्गुलो धूपो नैवेद्यं सघृतौदनम् ॥ तत्तन्मन्त्रैर्जपं कुर्यात्ततो होमं समाचरेत् ॥ ꣥ ॥ अथ दिक्पालपूजा—'पद्मप्राग्दलमारभ्य दलाग्रेषु क्रमान्न्यसेत् । इन्द्रादिलोकपालांश्च तत्तन्मन्त्रैः प्रपूजयेत् । सर्वेषां लोकपालानां चन्दनं च विलेपनम् । शतपत्राणि पुष्पाणि दद्याद्गुग्गुलधूपकम् ॥ दीपं गोघृतसंयुक्तं नैवेद्यं सघृतौदनम् ॥ तत्तन्मन्त्रैर्जपं कुर्यात्ततो होमं समाचरेत्' । इति ॥

अथैतेषां मूर्तयः । ब्रह्मयामले—'इन्द्रस्त्वैरावतारूढो वज्रपाणिः शचीसखः । स्वर्णवर्णः सहस्राक्षो नाकपस्त्वमरेश्वरः ॥ पद्मपूर्वदलस्याग्रे इन्द्रमिन्दय इत्यृचा ॥ अग्निः सुवर्णवर्णाङ्गः सप्तार्चिः सप्तहस्तकः । स्वाहासखो मेषवाहः शक्त्यब्जस्रुक्स्रुवादिधृक् ॥ अग्निं दूतमित्यनया ऋचाग्नेयदलाग्रके । इलाप्रियो दण्डधरो यमो महिषवाहनः ॥ रक्तवर्णो हि लोकानां स्वस्वकर्मफलप्रदः ।

पाठा०—गुग्गुलधूपो ।

याम्ये याज्यो दलाग्रे तु यमायेत्यनया ऋचा ॥ खङ्गचर्मधरो नीलो निर्ऋतिर्नरवाहनः । ऊर्ध्वकेशो विरूपाक्षः करालः कालिकाप्रियः । मोषुणस्त्विति मन्त्रेण नैर्ऋते तु दलाग्रके । नागपाशधरो रक्तभूषणः पद्मिनीप्रियः ॥ वरुणोऽम्बुपतिः स्वर्णवर्णो मकरवाहनः । याज्यः पश्चिमपत्राग्रे संनो अग्नऋचा तथा ॥ प्राणरूपो हि जगतो वायुः कृष्णमृगासनः । हेमदण्डधरः श्यामो वर्णतो मोहिनीप्रियः ॥ तव वायवृत इति याज्यो वायुर्मरुद्दिशि । अश्वारूढः कुन्तपाणिः कुबेरश्चित्रिणीप्रियः ॥ निधीश्वरः स्वर्णवर्णो धनदो रूपवान्प्रभुः । सोमोधेनुमनेनैव याज्यश्चोदग्दलाग्रके ॥ शुद्धस्फटिकसंकाशो गौरीशो वृषवाहनः । वरदाभयशूलाक्षः सूत्रभृत्परमेश्वरः ॥ कद्रुद्रायेति मन्त्रेण याज्यः प्रागुत्तरे दले' इति । शान्त्यर्थः—'कोटिहोमे लक्षहोमे सहस्रे चोत्तरोत्तरे । मण्डपं कारयित्वास्मिन्नेवं कुर्याद्ग्रहार्चनम्' इति । इति ग्रहाराधनम् ।

अथ कलशस्थापनम् । 'ग्रहाणां शंभुकोणे वा सौम्ये वा पद्ममालिखेत् । तन्मध्ये वारुणं कुम्भं पुण्यतोयप्रपूरितम् ॥ अव्रणं सुदृढं रम्यं धान्यस्योपरि विन्यसेत्' इति । मानवसंहितायाम्—'गोमयालेपिते देशे धात्वाद्यैः परिशोभिते । पङ्कजं कारयेत्तत्र चतुर्विंशद्दलान्वितम् ॥ तण्डुलैः कारयेद्वा रक्तपीतसिताक्षतैः । कर्णिकायां न्यसेद्व्रीहीन्स्थापयेत्तेषु कुम्भकम् ॥ आकलशेष्वित्यनया कलशस्थापनं शुभम् । इमं मे इति मन्त्रेण पूरयेत्तीर्थवारिणा ॥ कुम्भं च गन्धवस्त्राद्यैस्तत्तन्मन्त्रैः प्रपूरयेत् । अश्वस्थानाद्गजस्थानाद्वल्मीकाद्धृदगोकुलात् । मृदमानीय यत्नेन राजद्वाराच्चतुष्पथात् ॥ उद्धृतासीति मन्त्रेण तस्मिन्कुम्भं विनिक्षिपेत् । न्यग्रोधपिप्पलप्लक्षजम्बूचूततरूद्भवाः । स्वति भीम इत्यृचा त्वचस्तस्मिन्विनिक्षिपेत् ॥ गन्धद्वारामित्यनया गन्धं चैव विनिक्षिपेत् । यवो यत्रेप्वि-

त्वनया तेषां शाखा विनिक्षिपेत् ॥ विधिना पञ्चगव्यानि तत्तन्मन्त्रैर्विनिक्षिपेत् । या ओपधीरित्यनयौषधान्यपि शतानि च । अभावे दशमूलानि सुवर्णं वा विनिक्षिपेत् ॥ सर्वे समुद्रा गङ्गा च इमं मे गङ्ग इत्यृचा । आपोहिष्ठादिभिर्मन्त्रैरभिमन्त्र्य च वारुणैः' इति । 'नहि ते क्षत्र'मित्यादयो वारुणाः । इति कलशस्थापनम् ।

अथ होमद्रव्याणि । अत्र भगवान्—'यत्तत्रमाज्यभागान्तमुक्तमुल्लेखनादिकम् । अविस्मरेण तत्कृत्वा सर्वेषां होममाचरेत् ॥ गुडौदनं पायसान्नं संयावं क्षीरपाष्टिकम् । दध्योदनं घृतान्नं च कृसरं मांसचित्रकम् ॥ इत्येतानि हवींषि स्युः समित्संख्यासमाहुतीः । संयावो नाम यवागूः । क्षीरपाष्टिकं क्षीरमिश्रषष्टिकान्नम् । अर्कः पलाशः खदिरोऽप्यपामार्गोऽथ पिप्पलः । उदुम्बरः शमी दूर्वा कुशाश्च समिधः स्मृताः ॥ एषामभावे शुद्धान्नं पालाशी वा समिद्भवेत् ॥ ❀ ॥ आहुतिसंख्यामाहाश्वलायनाचार्यः—'अष्टोत्तरशतं होममष्टाविंशतिमेव वा । कुण्डे वा स्थण्डिले वैकः कुर्यात्कुर्वन्पृथक्पृथक्' इति । तथाच स्कन्दपुराणे—अष्टोत्तरं तु साहस्रं शतमष्टाधिकं तथा । अष्टाविंशतिमष्टौ वा एकैकस्य तु होमयेत्' इति । इयमत्रोद्दिष्टसंख्या प्रधानदेवतानाम् । अधिदेवतादीनां तु वक्ष्यमाणगृह्यपरिशिष्टोक्तैवानुसंधेया । अत्र भगवान्—'जुहुयात्समिदन्नाज्यैरामिर्ऋग्भिर्यथाक्रमम्' इति ।

देवता मन्त्रक्रमांश्च स एवाह—'तथाकृष्णेन रजसा अग्निं दूतं वृणीमहे । त्र्यम्बकमित्येताभिः सूर्यवह्नीश्वरान्पृथक् ॥ आप्यायस्व समेतु ते अप्सुमे सोमो अब्रवीत् । गौरीर्मिमायेत्येताभिः सोमाम्बुमाः पृथक्पृथक् ॥ अग्निर्मूर्धा दिवः ककुत्स्योना पृथिवि भवेत्यया । क्षेत्रस्य पतिनेत्याभिर्भौमभूमिगुहान्क्रमात् ॥ उद्बुध्यस्वमिदं विष्णुः सहस्रशीर्षा पुरुषः । बुधं विष्णुं पुनर्विष्णुं जुहुया-

तिसृभिः क्रमात् ॥ बृहस्पते अतियदर्य इन्द्रमरुत्व इहेति च । ब्रह्मजज्ञानमित्यृग्भिर्गुरुश्चक्रचतुर्मुखान् ॥ शुक्रं ते अन्यधजतमि-न्द्राणीमासुनारिषु । इन्द्रं वो विश्वतस्परि शुक्रेन्द्राणीशतक्रतून् ॥ शमग्निरग्निभिरिति प्रजापते न त्वदिति । यमाय सोममित्यृग्भिः शनिप्रजापतियमान् ॥ कयानश्चित्र आभुवदायं गौःपृश्निरक्रमीत् । परं मृत्यो अनुपरे राहुसर्पयमान्क्रमात् ॥ केतुं कृण्वन्नकेतवे ब्रह्मजज्ञानमित्यृचा । सचित्रचित्रमित्याभिः केतुं ब्रह्माणमेव च ॥ चित्रगुप्तं च तिसृभिरेषां होमो विधीयते' इति ।

अत्र हेमाद्रौ स्कन्दपुराणे—नैवेद्यशेषैरेव होम इत्युक्तम्—'नैवेद्यशेषं हुत्वा च होमं मन्त्रैरनन्तरम् । अथ व्याहृतिभिर्हुत्वा एकैकस्य यथाक्रमम्' इति । अस्यार्थः—पचनाभावेन पृथक् सह वा पक्त्वा प्रागुक्तगुडादिद्रव्यैर्मिश्रीकृत्य तेभ्यः किंचित्किंचिदा-हृत्य सूर्यादिभ्यो निवेद्य तान्यवशिष्टान्यन्नानि तत्तन्मन्त्रैर्जुहुयादिति । एतच्छाखान्तरविषयम् । बह्वृचानां तु स्वगृह्यपरिशिष्टे प्रधा-नहोमानन्तरं नैवेद्यसमर्पणस्योक्तत्वात्तथैवानुष्ठानं युक्तमिति ज्ञेयम् ।

अथ प्रधानहोमानन्तरं कर्तव्यमाह भगवान्—'अथ स्रुवेण जुहुयात्सूर्यपावकरुद्रकान् । सूर्योनोपञ्चकं सूक्तमुदुत्यं जातवेद-सम् ॥ नमो मित्रस्य वरुणस्य चित्रं देवानामित्यपि । उद्वेति सुभगः पञ्च आभिर्ऋग्भिर्घृताहुतीः ॥ त्वमग्ने प्रथमं सूक्तं यथावच्च दशर्चकम् । त्वमग्ने द्युभिः षोडशभिर्घृतेन जुहुयात्ततः ॥ अथ रुद्राय जुहुयात्कद्रुद्राय षडाहुतीः । इमारुद्राय च तथा सूक्तेन च ततः परम् ॥ आ ते पितर्मरुत्तामिति सूक्तेन च घृताहुतीः' इति । आश्वलायनाचार्यः—'पूर्णाहुतिं च वसन्ते होमे ग्रहमखे गुरुः' इति । वसन्ते होमान्ते । पूर्णाहुतिहोमप्रकारस्त्वग्निमुखप्रकरणे कथितः ॥ ❀ ॥ अथ बलिदानविधिरुक्तो हेमाद्रौ—

'होमावसाने कृततूर्यनादो गुरुर्गृहीत्वा बलिपुष्पधूपम्। आवाहयेल्लोकपतीन्क्रमेण मन्त्रैरमीभिर्यजमानयुक्तः' ॥ अग्नेरष्टदिक्षु यजमानसहित आचार्य इन्द्रादिलोकपालानावाह्य नाममन्त्रैः संपूज्य वक्ष्यमाणमन्त्रैर्बलीन्दद्यादित्यर्थः।

गृह्यपरिशिष्टे तु—'अथ ग्रहयज्ञाश्चैत्ययज्ञाश्चितमुपयाचितमुच्यते तद्भवाः शान्तिपुष्टिदा देवताश्चैत्याः। शान्तिं च खलु पुष्टिं च सर्वे ग्रहानुपयाचन्ते अतश्चैत्याः। आदित्य इन्दुरङ्गारकः सौम्यो गुरुर्भार्गवः शनैश्चरो राहुः केतुरिति नवग्रहाः। तेऽपि हि स्वगत्या जगदभिगृह्णन्ति तानयनादिषु पुण्यकालेषु यजेत शान्तये सद्योऽद्भुतेषु चाभ्युदयिकं करिष्यमाणो ग्रहयज्ञं कुर्यादथाभ्युदयिकं हि शान्तिकर्म यदि तदानुकूल्यकामः स्यात्कामं प्रागभ्युदयात्सप्ताहान्यन्तरित्य कुर्यात्तं दशावराहुतिं स्वयमेकः कुर्यादूर्ध्वमापञ्चाशतश्चत्वार ऋत्विजः स्युः शतावराहुतावष्टौ नवम आचार्यः स स्वयमेव वा यदि स्वयमाचार्यः स्यात्तद्भागं कल्पविदे दद्यात्तान्विधिवद्वरयित्वार्हयेदाचार्य आदित्याय जुहुयादितरेभ्य इतरे पूर्वोत्तरं तत्रमाचार्यः कुर्यात्तदितरे तमन्वालभेरन्[1]' इति। अस्यार्थः—चैत्यानां देवतानां होमाद्यात्मकाद्यज्ञाच्चिरप्रार्थितमिष्टप्राप्त्यनिष्टपरिहाररूपं फलमुपयाचितम्। एतदेव विवृणोति—तद्भवा इत्यादिना। तद्भवास्तस्मिन्यज्ञे भवाः प्रार्थनया प्राप्ता देवताश्चैत्याः। ताः कीदृशीरित्यपेक्षायामुक्तं—शान्तिपुष्टिदा इति। यत एवंरूपास्ततस्तदुपयाचनमुचितमित्याह—शान्तिं च खल्विति। अतस्ते ग्रहाश्चैत्या इत्युच्यन्ते। एतेषां नामानि दर्शयति—आदित्य इत्यादिना। यतस्ते ग्रहाः स्वगतिविशेषेण जगदभिगृह्णन्ति ततस्तानयनादिषु पुण्यकालेषु यजेत्। अद्भुतेपूत्पातादिषु तच्छान्तये सद्य एव यजेत्। विवाहोपनयादिष्वाभ्युदयिकेषु कर्मस्वादौ ग्रहयज्ञं कुर्यात्। अनाभ्युदयिकेषु शान्तिकर्मसु ग्रहानुकूल्य-

पाठा०—१ तदितरे तमन्वलभेरन्।

कामो ग्रहयज्ञं कुर्यादित्याह—अथाभ्युदयिकं हीति । आभ्युदयिककर्मसु कालविशेषं दर्शयति—कामं प्रागभ्युदयादिति । अभ्युदयात्प्राक्सप्तदिनान्यन्तरित्य व्यवधीकृत्य ग्रहमखं कुर्यात् । आहुतिसंख्यापेक्षया होतृसंख्यां दर्शयति—दशावराहुतिमित्यादिना । दशाहुतिपक्षे यजमान एक एव होमं कुर्यात् । पञ्चशताहुतिपक्षे चत्वार ऋत्विजः कुर्युः । शताहुतिपक्षे अष्टावृत्विजः कुर्युर्नवम आचार्य इत्यर्थः । यजमानस्यैवाचार्यत्वपक्षे यजमानः स्वांशमन्यस्मै ग्रहयज्ञकल्पविदे दद्यादित्याह—यदि स्वयमिति । ऋत्विग्वरणं तदर्चनं च कर्तव्यमित्याह—तान्विधिवदिति । अनेकर्त्विक्पक्षे कः कस्मै जुहुयादित्यपेक्षयामाह—आचार्य आदित्यायेति । आचार्यस्य विशेषान्तरमाह—पूर्वोत्तरमिति । पूर्वोत्तरतन्त्रकरणकाले इतरे आचार्यमन्वालभेरन्नित्याह—तदेतरे इति ।

अथ संभाराः—'अथास्य संभारा हस्तमात्रावरं चतुरस्रं कुण्डं स्थण्डिलं वा संस्कृत्य तत ऐशान्यां कुण्डवदायतां चतुरस्रां चतुस्त्र्यङ्गुलोच्छ्रितां त्रिभूमिकां ग्रहवेदिं कुर्यात्तस्यां च शुक्लैर्व्रीहितण्डुलैः सकर्णिकमष्टदलमम्बुजमुल्लिख्य कर्णिकाया दलेषु च यथास्थानं ग्रहपीठानि स्थापयेदुदीच्यां धान्यपीठे तैजसं मृन्मयं वा नवमव्रणं लिप्तालंकृतं शुभमभिषेककुम्भं निधाय शंन आपो धन्वन्या इति तृचेनाद्भिः पूरयित्वा पञ्चगव्यानि पञ्चामृतानि नवपर्वतधातून्सप्तपवित्रमृदो नवरत्नानि निक्षिप्य दूर्वापल्लवैर्मुखमवच्छाद्य वस्त्रयुग्मेन वेष्टयित्वा समुद्रादीनि पुण्यतीर्थान्यावाह्य कुम्भमभिमृश्य तत्र गङ्गादिनदीः स्मृत्वाब्लिङ्गा वारुणीः पावमानीश्च जपेत्' ॥

पाठा०—१ निधाय प्रसुव आप इत्यृचा शुद्धाद्भिः पूरयित्वा ।

'होमावसाने कृततूर्यनादो गुरुर्गृहीत्वा बलिपुष्पधूपम्। आवाहयेल्लोकपतीन्क्रमेण मन्त्रैरमीभिर्यजमानयुक्तः' ॥ अग्नेरष्टदिक्षु यजमानसहित आचार्य इन्द्रादिलोकपालानावाह्य नाममन्त्रैः संपूज्य वक्ष्यमाणमन्त्रैर्बलीन्दद्यादित्यर्थः ।

गृह्यपरिशिष्टे तु—'अथ ग्रहयज्ञाश्चैत्ययज्ञाश्चितमुपयाचितमुच्यते तद्भवाः शान्तिपुष्टिदा देवताश्चैत्याः । शान्तिं च खलु पुष्टिं च सर्वे ग्रहानुपयाचन्ते अतश्चैत्याः । आदित्य इन्दुरङ्गारकः सौम्यो गुरुर्भार्गवः शनैश्चरो राहुः केतुरिति नवग्रहाः । तेऽपि हि स्वगत्या जगदभिगृह्णन्ति तानयनादिषु पुण्यकालेषु यजेत शान्तये सद्योऽद्भुतेषु चाभ्युदयिकं करिष्यमाणो ग्रहयज्ञं कुर्यादथाभ्युदयिकं हि शान्तिकर्म यदि तदानुकूल्यकामः स्यात्कामं प्रागभ्युदयात्सप्ताहान्यन्तरित्य कुर्याच्च दशावराहुतिं स्वयमेकः कुर्यादूर्ध्वमापञ्चाशतश्चत्वार ऋत्विजः स्युः शतावराहुतावष्टौ नवम आचार्यः स स्वयमेव वा यदि स्वयमाचार्यः स्यात्तद्भागं कल्पविदे दद्यात्तान्विधिवद्वरयित्वाहर्येदाचार्य आदित्याय जुहुयादितरेभ्य इतरे पूर्वोत्तरं तन्त्रमाचार्यः कुर्याच्चेदितरे तमन्वालभेरन्' इति। अस्यार्थः—चैत्यानां देवतानां होमाद्यात्मकाद्यज्ञाच्चिरप्रार्थितमिष्टप्राप्त्यनिष्टपरिहाररूपं फलमुपयाचितम्। एतदेव विवृणोति—तद्भवा इत्यादिना। तद्भवास्तस्मिन्यज्ञे भवाः प्रार्थनया प्राप्ता देवताश्चैत्याः। ताः कीदृशीरित्यपेक्षायामुक्तं—शान्तिपुष्टिदा इति। यत एवंरूपास्ततस्तदुपयाचनमुचितमित्याह—शान्तिं च खल्विति। अतस्ते ग्रहाश्चैत्या इत्युच्यन्ते। एतेषां नामानि दर्शयति—आदित्य इत्यादिना। यतस्ते ग्रहाः स्वगतिविशेषेण जगदभिगृह्णन्ति ततस्तानयनादिषु पुण्यकालेषु यजेत्। अद्भुतेषूत्पातादिषु तच्छान्तये सद्य एव यजेत्। विवाहोपनयादिष्वाभ्युदयिकेषु कर्मस्वादौ ग्रहयज्ञं कुर्यात्। अनाभ्युदयिकेषु शान्तिकर्मसु ग्रहानुकूल्य-

पाठा०—१ तदितरे तमन्वलभेरन्।

कामो ग्रहयज्ञं कुर्यादित्याह—अथाभ्युदयिकं हीति । आभ्युदयिककर्मसु कालविशेषं दर्शयति—कामं प्रागभ्युदयादिति । अभ्युदयात्प्राक्सप्तदिनान्यन्तरित्य व्यवधीकृत्य ग्रहमखं कुर्यात् । आहुतिसंख्यापेक्षया होतृसंख्यां दर्शयति—दशावराहुतिमित्यादिना । दशाहुतिपक्षे यजमान एक एव होमं कुर्यात् । पञ्चशताहुतिपक्षे चत्वार ऋत्विजः कुर्युः । शताहुतिपक्षे अष्टावृत्विजः कुर्युर्नवम आचार्य इत्यर्थः । यजमानस्यैवाचार्यत्वपक्षे यजमानः स्वांशमन्यस्मै ग्रहयज्ञकल्पविदे दद्यादित्याह—यदि स्वयमिति । ऋत्विग्वरणं तद्दर्शनं च कर्तव्यमित्याह—तान्विधिवदिति । अनेकर्त्विक्पक्षे कः कस्मै जुहुयादित्यपेक्षयामाह—आचार्य आदित्यायेति । आचार्यस्य विशेषान्तरमाह—पूर्वोत्तरमिति । पूर्वोत्तरतन्त्रकरणकाले इतरे आचार्यमन्वालभेरन्नित्याह—तदेतरे इति ।

अथ संभाराः—'अथास्य संभारा हस्तमात्रावरं चतुरस्रं कुण्डं स्थण्डिलं वा संस्कृत्य तत ऐशान्यां कुण्डवदायतां चतुरस्रां चतुस्त्र्यङ्गुलोच्छ्रितां त्रिभूमिकां ग्रहवेदिं कुर्यात्तस्यां च शुक्लैर्व्रीहितण्डुलैः सकर्णिकमष्टदलमम्बुजमुल्लिख्य कर्णिकायां दलेषु च यथास्थानं ग्रहपीठानि स्थापयेदुदीच्यां धान्यपीठे तैजसं मृन्मयं वा नवमव्रणं लिप्तालंकृतं शुभमभिषेककुम्भं निधाय शं न आपो धन्वन्या इति तृचेनाद्भिः पूरयित्वा पञ्चगव्यानि पञ्चामृतानि नवपर्वतधातून्नवपवित्रमृदो नवरत्नानि निक्षिप्य दूर्वापल्लवैर्मुखमवच्छाद्य वस्त्रयुग्मेन वेष्टयित्वा समुद्रादीनि पुण्यतीर्थान्यावाह्य कुम्भमभिमृश्य तत्र गङ्गादिनदीः स्मृत्वाब्लिङ्गा वारुणीः पावमानीर्जपेत्' ॥

---

स्थ०—1 निधाय प्रसुव आप इत्यृचा शुद्धाद्भिः पूरयित्वा ।

अर्चनाङ्गानि—'अथार्चनाङ्गानि ताम्रं स्फटिको रक्तचन्दनं सुवर्णं तदेव रजतं लोहं सीसं कांस्यमिति नव प्रतिमाद्रव्याणि—सुवर्णमेकमेव वा सर्वेषाम् । रक्तचन्दनो मलयजो देवदारुः कुङ्कुमं मनःशिला शङ्खपिष्टं तिलपिष्टं केतकीरजः कस्तूरीति नवानुलेपनानि—मलयज एक एव वा । रक्तपद्मं कुमुदं रक्तकरवीरं पाटलं चम्पकं कुन्दं इन्दीवरं कृष्णधत्तूरं तदेव चित्रवर्णमिति नव पुष्पाणि—मल्लिकैव वा । पुष्पवर्णाक्षतवस्त्रयुग्मानि च । कुन्दुरुर्मयूरशिखा दशाङ्गः सर्जरसो विल्वफलं श्रीवासः कृष्णागरुर्जटामांसी मधूकमिति नवधूपाः—गुग्गुलुरेक एव वा । सर्पिषा दीपास्तिलतैलेन वा । हविष्यान्नं पायसान्नं गुडान्नं क्षीरौदनं दध्योदनं घृतौदनं कृसरं मांसान्नं चित्रान्नमिति नवोपहाराः—निवृदन्नमेकमेव वा । माणिक्यं मौक्तिकं प्रवालो मरकतं पुष्परागो वज्रो नीलो गोमेदकं वैडूर्यमिति नव रत्नानि—माणिक्यमेकमेव वा । अर्कः पलाशः खदिरोऽपामार्गोऽश्वत्थोदुम्बरः शमी दूर्वाः कुशा इति नव समिधः—सर्वेषां पलाश एक एव वा' ।

अथार्चनविधिः—'अथार्चनमाचार्यः प्राङ्मुख उपविश्य समाहितः पुण्याहादीनि वाचयित्वा कर्म संकल्प्य ग्रहवेदीपद्मपीठेषु यथास्थानमुखीर्ग्रहप्रतिमाः स्थापयित्वा दक्षिणवामयोरधिदेवताप्रत्यधिदेवते तदभिमुख्यौ स्थापयेदभावे पुष्पाक्षतादिष्वावाहयेदग्निरापः पृथिवी विष्णुरिन्द्र इन्द्राणी प्रजापतिः सर्पा ब्रह्मा च क्रमेण ग्रहाणामधिदेवताः । रुद्रो गौरी स्कन्दः पुरुषो ब्रह्मा पुरन्दरो यमः कालश्चित्रगुप्तश्च ग्रहप्रत्यधिदेवताः । गणपतिर्दुर्गा क्षेत्रपतिर्वायुराकाशमश्विनौ च क्रतुसाद्गुण्यदेवताः इमाः पश्चात्प्रत्याङ्गिवेश्य ।

पाठा०—१ रक्तकरवीरमेकमेव वा । २ मापान्न चित्रान्न ।

प्राच्यादिदिक्ष्विन्द्रादींल्लोकपालान्क्रतुसंरक्षकानावाहयेत् । पुष्पाञ्जलिप्रयोगेणावाहनमन्त्रैरावाह्य नमोन्तैर्नाममिः क्रमेण धूपदीपान्तानुपचारानर्पयेत्' ।

अथ ग्रहावाहनमन्त्राः—'भगवन्नादित्य ग्रहाधिपते काश्यपगोत्र कलिङ्गदेशेश्वर जपापुष्पोपमाङ्गद्युते द्विभुज पद्मामयहस्त सिन्दूरवर्णाम्बरमाल्यानुलेपन ज्वलन्माणिक्यखचितसर्वाङ्गाभरण भास्कर तेजोनिधे त्रिलोकप्रकाशक त्रिदेवतामयमूर्ते नमस्ते संनद्धारुणध्वजपताकोपशोभितेन सप्ताश्वरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छाग्निरुद्राभ्यां सह पद्मकर्णिकायां ताम्रप्रतिमां प्राङ्मुखीं वर्तुलपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि ॥ ॥ भगवन्सोम द्विजाधिपते सुधामयशरीरात्रेयगोत्र यामुनदेशेश्वर गोक्षीरधवलाङ्गकान्ते द्विभुज गदावरदानाङ्कितकर शुक्लाम्बरमाल्यानुलेपन मुक्तमौक्तिकाभरणरमणीयसर्वाङ्ग समस्तलोकाप्यायक देवतात्रयमूर्ते नमस्ते संनद्धधवलध्वजपताकोपशोभितेन दशश्वेताश्वरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छाद्भिरुमया च सह पद्माग्नेयदलमध्ये स्फाटिकप्रतिमां प्रत्यङ्मुखीं चतुरस्रपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि ॥ ॥ भगवन्नङ्गारकाग्न्याकृते भारद्वाजगोत्रावन्तिदेशेश्वर ज्वालापुञ्जोपमाङ्गद्युते चतुर्भुज शक्तिशूलगदाखड्गधारिन् रक्ताम्बरमाल्यानुलेपन प्रवालाभरणभूषितसर्वाङ्ग दुरालोकदीप्ते नमस्ते संनद्धरक्तध्वजपताकोपशोभितेन रक्तमेषरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ भूमिस्कन्दाभ्यां सह पद्मदक्षिणदलमध्ये रक्तचन्दनप्रतिमां दक्षिणामुखीं त्रिकोणपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि ॥ ॥ भगवन्सौम्य सौम्याकृते सर्वज्ञानमयात्रिगोत्र मगधदेशेश्वर कुङ्कुमवर्णाङ्गद्युते चतुर्भुज खड्गखेटकगदावरदानाङ्कित पीताम्बरमाल्यानुलेपन मरकताभरणालंकृतसर्वाङ्ग निपुणमते नमस्ते

संनद्धपीतध्वजपताकोपशोभितेन चतुःसिंहरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ विष्णुपुरुषाभ्यां सह पद्मेशानदलमध्ये सुवर्णप्रतिमामुदङ्मुखीं बाणाकारपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि ॥ ॥ भगवन्बृहस्पते समस्तदेवताचार्याङ्गिरसगोत्र सिन्धुदेशेश्वर तप्तसुवर्णसदृशाङ्गदीप्ते चतुर्भुज दण्डकमण्डल्वक्षसूत्रवरदानाङ्कित पीताम्बरमाल्यानुलेपन पुष्परागमयाभरणरमणीय समस्तविद्याधिपते नमस्ते संनद्धपीतध्वजपताकोपशोभितेन पीताश्वरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छेन्द्रब्रह्मभ्यां सह पद्मोत्तरदलमध्ये सुवर्णप्रतिमामुदङ्मुखीं दीर्घचतुरस्रपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि ॥ ॥ भगवन्भार्गव समस्तदैत्यगुरो भार्गवगोत्र भोजकटदेशेश्वर रजतोज्ज्वलाङ्गकान्ते चतुर्भुज दण्डकमण्डल्वक्षसूत्रवरदानाङ्कित शुक्लाम्बरमाल्यानुलेपन वज्राभरणभूषितसर्वाङ्ग समस्तनीतिशास्त्रनिपुणमते नमस्ते संनद्धधवलध्वजपताकोपशोभितेन शुक्लाश्वरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छेन्द्राणीन्द्राभ्यां सह पद्मप्राग्दलमध्ये रजतप्रतिमां प्राङ्मुखीं पञ्चकोणपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि ॥ भगवन्शनैश्चर भास्करतनय काश्यपगोत्र सुराष्ट्रदेशेश्वर कज्जलनीलाङ्गकान्ते चतुर्भुज चापतूणीरकृपाणाभयाङ्कित नीलाम्बरमाल्यानुलेपन नीलरत्नभूषितसर्वाङ्ग समस्तभुवनभीषणामर्षणमूर्ते नमस्ते संनद्धनीलध्वजपताकोपशोभितेन नीलगृध्ररथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ प्रजापतियमाभ्यां सह पद्मपश्चिमदलमध्ये कालायसप्रतिमां प्रत्यङ्मुखीं चापाकारपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि ॥ ॥ भगवन्राहो रविसोममर्दन सिंहिकानन्दन पैठीनसगोत्र बर्बरदेशेश्वर कालमेघद्युते व्याघ्रवदन चतुर्भुज खड्गचर्मशूलगदावरदानाङ्कित कृष्णाम्बरमाल्यानुलेपन गोमेदकाभरणभूषितसर्वाङ्ग शौर्यनिधे नमस्ते संनद्धकृष्णध्वजपताकोपशोभितेन कृष्णमेषरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ

सर्पकालाभ्यां सह पश्चिमनैर्ऋतदलमध्ये सीसप्रतिमां दक्षिणामुखीं शूर्पाकारपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि ॥ ॥ भगवन्केतो कामरूप जैमिनिगोत्र मध्यदेशेश्वर धूम्रवर्णध्वजाकृते द्विभुज गदावरदानाङ्कित चित्राम्बरमाल्यानुलेपन वैडूर्यमयाभरणभूषितसर्वाङ्ग चित्रशक्ते नमस्ते संनद्धचित्रध्वजपताकोपशोभितेन चित्रकपोतरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ ब्रह्मचित्रगुप्ताभ्यां सह पश्चिमवायव्यदलमध्ये कांस्यप्रतिमां दक्षिणामुखीं ध्वजाकारपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि' इति ।

अथहोमः—'अथाग्निमुपसमाधाय सहर्त्विग्भिः समिच्चर्वाज्यानि प्रत्येकसैकावराभिः सहस्रवाराभिराहुतिभिर्निमित्तशक्त्यपेक्षया जुहुयात्प्रधानदशांशेन पार्श्वदेवतयोस्तदर्धेनेतरेषां स्वाहान्तैर्नाममिर्होमस्तल्लिङ्गमन्त्रैर्वा सकृदवदानेन चरुहोमः पाणिनाऽन्ते प्रभूतांस्तिलांश्च व्याहृतिभिर्हुत्वा प्राक्स्विष्टकृतो ग्रहाणां घण्टादिकशब्दैरुपहारानुपहृत्य सुपुष्पाणि रत्नानि निवेदयेदभावे सुवर्णपुष्पाणि वा तान्नमस्कृत्य प्रसीदन्तु भवन्त इति प्रसाद्य होमं समापयेत् । स यदि मन्त्रैरिष्टस्तर्हि ते मन्त्रा भवन्ति—आ कृष्णेन रजसा वर्तमान आप्यायस्व समेतु तेऽग्निर्मूर्धा दिवः ककुत् उद्बुध्यध्वं समनसः सखायः बृहस्पते अति यदर्यो अर्हात् शुक्रं ते अन्यद्यजतं ते अन्यत् शमग्निरग्निभिः करत् कया नश्चित्र आभुवदूती केतुं कृण्वन्नकेतव इति ग्रहाणां—अग्निं दूतं वृणीमहे अप्सु मे सोमो अब्रवीत् स्योना पृथिवि भव इदं विष्णुर्विचक्रमे इन्द्र श्रेष्ठानि द्रविणानि धेहि इन्द्राणीमासु नारिषु प्रजापते न त्वदेतानि आयं गौः पृश्निरक्रमीत् ब्रह्मजज्ञानं प्रथमं पुरस्तादित्यधिदेवतानां—त्र्यम्बकं यजामहे गौरीर्मिमाय सलिलानि कुमारं माता युवतिः समुब्धं सहस्रशीर्षा पुरुषः ब्रह्मणा ते ब्रह्मयुजा युनज्मि इन्द्रं वो विश्वतस्परि यमाय सोमं सुनुत परं मृत्यो अनु परेहि पन्थां

सविन मित्रं चितयन्तमग्ने इति प्रत्यधिदेवतानाम्—आतून इन्द्र क्षुमन्तं जातवेदसे सुनवाम सोममराती क्षेत्रस्य पतिना वयं क्राणा शिशुर्महीनां आदित्प्रत्नस्य रेतसः अश्विना वर्तिरस्मदा इति कर्मसाद्गुण्यदेवतानाम्—इन्द्रं वो विश्वतस्परि अग्निमीळे पुरोहितं यमाय सोमं सुनुत मोषुणः परापरा उदुत्तमं सुमुग्धि नः तव वायवृतस्पते त्वं नः सोम विश्वतो वयोधाः कद्रुद्राय प्रचेतसे इति लोकपालानाम्' ।

अथाभिषेकः—'अथ यजमानस्याभिषेको ग्रहवेदेः प्रागुदीच्यां शुचौ देशे संमृष्टालंकृते प्राक्प्रवणे चतुष्पादं दीर्घचतुरस्रं गोचरच्छदं भद्रपीठं निधाय तत्रोदगग्रान्समूलान्हरितदर्भानास्तीर्य प्राङ्मुखं सामात्यं कर्तारमुपवेश्य आचार्यः सहर्त्विग्भिरभिषेककुम्भमादाय प्रत्यङ्मुखस्तिष्ठन् औदुम्बर्यार्द्रया शाखया सपलाशया सहिरण्यपवित्रया सकुशदूर्वापल्लवयान्तर्धाय कुम्भोदकपृषद्भिरभिषिञ्चेदल्लिङ्गाभिर्वारुणीभिः पावमानीभिरन्याभिश्च शान्तिपवित्रलिङ्गाभिर्ग्रहाभिषेकमन्त्रैः सुरास्त्वामित्यादिभिः श्रीसूक्तेनेमा आपः शिवतमा इत्येतेन तृचेन देवस्य त्वेति च यजुषा भूर्भुवःस्वरिति च व्याहृतिभिः ॥ ॥ एवमभिषिक्तस्तेभ्यो ग्रहोक्तां दक्षिणा दद्यात्—गौः शङ्खो रक्तोऽनड्वान् हिरण्यं पीतवासः श्वेताश्वः कृष्णागौः कालायसं हस्ती छागोचेति ह्येनान्पुनर्हिरण्येन संमितान्कुर्यादभावे मनीषा हिरण्यमेव वा तुष्टिकरं दद्याद्द्विगुणमाचार्याय त्रिवृतान्नेन ब्राह्मणान्भोजयित्वा शान्तिःपुष्टिस्तुष्टिश्चास्त्विति वाचयेत् संबन्धिज्ञातिबान्धवांश्च तोषयेदेष ग्रहयज्ञः सर्वारिष्टनाशनः सर्वपुष्टिकरः सर्वाभीष्टप्रदस्तस्मादेवं विभववान्विशेषतः कुर्यादविभवः शान्तिपुष्टिकामो यथोपपत्ति कुर्यात्' इति ।

बल्याद्युत्सर्गः। भगवान्—'ततस्तत्रांभिषिक्तस्य रक्षार्थं बलिमुत्क्षिपेत्। दिग्विदिक्षु विचित्रान्नैर्दीपैर्नीराजयेत्ततः॥ शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः। ततो मण्डपमागत्य ध्यायेदग्निं ग्रहान्सुरान्॥ प्रत्येकं प्रतिमन्त्रैश्च दद्यात्पुष्पाञ्जलिं ततः' इति।

अथावाहितग्रहाणामुद्वासनविधिः। वामनग्रन्थे—'प्रणवं त्वादितः कृत्वा भूर्भुवःस्वस्ततः परम्। चतुर्थ्यन्तनामसंयुक्तं नमस्कारान्तयोजितम्॥ एष मन्त्रः समाख्यातो ग्रहपूजाविधायकः। अनेनावाहनं कुर्यादनेनैव विसर्जयेत्॥ आचार्यप्रभृतिभ्यश्च ग्रहार्चनफलं ततः। समिदाज्यचरूणां च तिलहोमफलं ततः॥ ब्रह्मणे कुम्भपूजाया अर्चनस्य फलं च यत्। लोकपालगणेशाद्यास्तत्र या अङ्गदेवताः॥ तासां जपफलं तद्वद्गृहीयाज्जलपूर्वकम्॥ तत्रस्थेभ्यो यथाशक्ति दातव्या दक्षिणा ततः॥ आचार्यार्थं जापकेभ्यो ब्रह्मणे चाथ तुष्टये। आज्यं निरीक्ष्य दत्त्वा च ब्राह्मणान्भोजयेत्ततः' इति॥ ॥ मत्स्यपुराणे—'द्वादशाहसमस्तद्वन्नवग्रहमखः स्मृतः। तस्मान्न दक्षिणाहीनः कर्तव्यो भूतिमिच्छता॥ संपूर्णया दक्षिणया यस्मादेकोऽपि तुष्यति' इति॥ आचार्यः—'एतद्विधानं कृत्वा तु कृताचार्यं प्रपूजयेत्। यथावच्छक्तितो विप्रानृत्विजश्चेतरानपि॥ एकमेवाहुतेर्विप्रं होमे त्वन्नेन भोजयेत्। अत्याढ्यो मध्यमश्चापि विप्रमेकं शताहुतेः॥ सहस्रस्याहुतेश्चैकं जघन्योऽपि प्रभोजयेत्। अन्यथा दहति क्षिप्रं तद्राष्ट्रं नात्र संशयः॥ अनन्नः प्रदहेद्राष्ट्रममन्त्रश्च द्विजं गुरुम्। होमः कारयितारं च सुकृतोऽपि त्वदक्षिणः॥ तस्माद्दातुमशक्तो यो दक्षिणां चान्नमेव च। जपैः प्रणामैः स्तोत्रैश्च तर्पणैस्तोषयेद्ग्रहान्॥ जपाद्यैरर्चिताः क्षिप्रं तुष्यन्त्यपि च देवताः। ग्रहाश्च विषमस्था ये तांस्तस्माचोषयेद्गुरुः' इति॥

१ बलिदाने परिशिष्टेऽस्युक्रमप्यभिषेकात्तरमस्मादेव शौनकप्रामाण्याद्भवति।

अत्र स्थालीपाकविधानेन होमविधिरुच्यते । उत्पलपरिमले—'पूर्वाह्णे विधिवत्स्नात्वा नित्यकर्म समाचरेत् । पुण्याहवाचनं कृत्वा ऋतुसंकल्पपूर्वकम् ॥ आचार्यं वरयेत्कर्ता विधिनं च सयत्नकम्' इति ॥ ॥ अत्राग्निप्रणयनकाल उक्तो हेमाद्रौ—'पुण्येऽह्नि विप्रकथिते कृत्वा ब्राह्मणवाचनम् । अग्निप्रणयनं कृत्वा तेषामावाहयेत्सुरान् ॥ चतुरश्चतुरो मुष्टीन्निर्वपेद्व्रीहितण्डुलान् । यत्र या देवता प्रोक्ता तदुद्देशेन कारयेत् ॥ निर्वापप्रोक्षणे कृत्वा तमग्नौ श्रपयेच्चरुम् । ततोऽवदानधर्मेण स्रुचैव जुहुयाच्चरुम् ॥ घृताक्तार्कसमिद्भिश्च स्रुवेणाज्यं च होमयेत् । आकृष्णेनेति मन्त्रेण तिलान्व्याहृतिभिर्हुनेत् ॥ चरुणा च समिद्भिश्च सर्पिषा च तिलैः क्रमात् । तत्तन्मन्त्रैश्च होतव्याः क्रमात्तदधिदेवताः' इति । शेषं पूर्ववत् ॥ इत्येकाग्न्येकाध्वरपक्षः ।

अथेदानीमनेकाग्न्यनेकाध्वरपक्षो निरूप्यते । तत्र प्रतिग्रहमाचार्यः स्थण्डिलं नवधा च भिद्यते । पूजादिवेदिः पुनरेकैव । तदुक्तं भगवता—'मनोरमे शुचौ देशे होमशालामलंकृताम् । कृत्वा तु संवृतां प्राज्ञो ग्रहस्थानं प्रकल्पयेत् ॥ तन्मध्ये भास्करस्थानं भवेत्पूर्वोत्तरे बुधः । पूर्वस्मिन्भार्गवस्थानं सोमो दक्षिणपूर्वके ॥ दक्षिणस्यां कुजस्थानं राहोर्दक्षिणपश्चिमे ॥ पश्चिमे तु शनिस्थानं केतोरुत्तरपश्चिमे ॥ उत्तरस्मिन्गुरोः स्थानमेष्वेव स्थण्डिलं भवेत् । भास्करस्य तु वृत्तं स्याच्चन्द्रस्य चतुरस्रकम् । कुजस्य तु त्रिकोणं स्याद्बाणाकारं बुधस्य तु । गुरोर्दीर्घचतुष्कोणं पञ्चकोणं सितस्य तु । चापाकारं शनेः राहोः शूर्पं केतोर्ध्वजाकृति' इति ॥ येषामपि पूजामण्डलान्येवमेव यथास्थानं कर्तव्यानीत्याह—'तत्पुरस्तात्तु वेदिः स्यात्सुराणां स्थापनाय च । प्रादेशां तु चतुर्दिक्षु पञ्चाङ्गुलसमुन्नताम् ॥ तस्यामावाहयेद्देवानाज्ञा व्याहृतिभिः क्रमात्' इति । अग्निप्रतिष्ठापनविधानमाह स एव—'नवधा

विभजेदग्निं श्रौतकर्मविधानतः । ऋत्विजश्च यथायोगं कुण्डेषु ब्राह्मणाः पृथक् ॥ ततः स्रुवेण जुहुयात्सूर्यपावकरुद्रकान् । ऋत्विजो जुहुयुः सर्वे स्रुवेणैव पृथक्पृथक् ॥ अष्टौ तु कलशान्गृह्य समारोपणमग्निषु । प्रधानाग्नौ विधायैतन्नित्यहोमं समाचरेत् ॥ अस्यार्थः—मध्यकुण्डे विधिवदग्निं प्रतिष्ठाप्य श्रौतविहितविहरणविधिना प्रधानायतनाग्निं विभज्याष्टकुण्डेषु प्रणीय नवाप्याचार्याः आज्यभागान्तं कृत्वा प्रागुक्तार्कादिसमिद्भिर्गुडान्नादिहविर्भिराज्येन च यथाक्रमं हुत्वा व्याहृतिभिस्तिलान्हुत्वा पूर्वोक्तवद्धोमशेषं समाप्य पूर्णाहुतिं हुत्वा होमपरिसमाप्तावष्टसमिद्भिः समारोप्य प्रधानाग्नौ निधायाभिषेकं कुर्यादिति । आचार्यस्तु—'स्थाने स्थाने पृथक्कुण्डान्स्थान्स्थान्कुर्याद्गुरुर्नव । ग्रहाणां प्रागुदग्वेदिं सर्वलक्षणलक्षिताम् ॥ दक्षिणे नव कुम्भांश्च पूरयेन्नवके स्थितान् । गन्धार्घैरर्चयित्वा तु हुत्वा चैवाभिषेचयेत्' इति ॥❀॥ दक्षिणादाने विशेषमाह याज्ञवल्क्यः—'धेनुः शङ्खस्तथाऽनड्वान्हेम वासो हयः क्रमात् । कृष्णा गौरायसं छाग एता वै दक्षिणाः स्मृताः' ॥ ॥ अथैषां मन्त्राः—'कपिले सर्वदेवानां पूजनीयासि रोहिणि । सर्वदेवमयी तस्मादतः शान्तिं प्रयच्छ मे ॥ १ ॥ त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे । पाञ्चजन्य प्रदास्यामि अतः शान्तिं० ॥ २ ॥ धर्म त्वं वृषरूपेण जगदानन्दकारक । अष्टमूर्तेरधिष्ठानमतः शान्तिं० ॥ ३ ॥ हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं० ॥ ४ ॥ पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभम् । प्रदानात्तस्य मे विष्णुरतः शान्तिं० ॥ ५ ॥ विष्णुस्त्वमश्वरूपेण यस्मादमृतसंभवः । चन्द्रार्कवाहनो नित्यमतः शान्तिं प्रयच्छ० ॥ ६ ॥ येन त्वं पृथिवी सर्वा धेनो वै

पाठा०—१ गन्धार्घैरर्चयित्वा तु ।

कृष्णसंनिभे । सर्वपापहरा नित्यमतः शान्ति० ॥ ७ ॥ यस्मादायस कर्माणि तदधीनानि सर्वदा । लाङ्गलाद्यायुधादीनि तस्माच्छान्ति०॥८॥ यस्मात्त्वं छाग यज्ञानामङ्गत्वेन व्यवस्थितः । यानं विभावसोर्नित्यमतः शान्ति०॥९॥ इति अनेकाध्वरपक्षः॥

अथ भूचक्रग्रहयज्ञविधिरभिधीयते । तत्राश्वलायनाचार्यः—'वेद्यां लक्षणयुक्तायां ग्रहचक्रं सुशोभनम् । रजोभिः पञ्चवर्णैस्तु कृत्वाथाभ्यर्चयेद्ग्रहान् । रक्तं द्वादशपत्राब्जं वृत्तत्रयसमन्वितम् । राशिद्वादशकोपेतं वीथ्या चापि समावृतम् । बाह्यशोभोपशोभाढ्यं ग्रहचक्रमिति स्मृतम्' इति ।।ॐ।। राशिस्वरूपाण्याह कपिष्ठलः—'मत्स्यौ घटी नृमिथुनं सगदं सवीणं चापी नरोऽश्वजघनो मकरो मृगास्यः । तौली ससस्यदहना प्लवगा च कन्या शेषाः स्वनामसदृशाः स्वचराश्च सर्वे ॥ तन्मध्येऽर्कात्मकं शान्तं शिवमाराध्य पूजयेत् । स्वे स्वे राशौ ग्रहांश्चैव सूर्यादीन्क्रमशोऽर्चयेत् ॥ केवलेनाग्निमूलमन्त्रैश्च नानामन्त्रैश्च भक्तितः । घृतैश्चतुर्गृहीतैस्तु तत्तन्मानिनिया जुहुयात् ॥ पूर्णाहुतिं च यजन्ते होमे ग्रहमखे गुरुः । मन्त्रैः प्रत्यधिदेवानां स्व(श्व)चक्रे तान्समर्चयेत् ॥ तानेव तु भुवश्चक्रे तथा तदधिदेवताः । स्व(श्व)चक्रे च भुवश्चक्रे सपर्या मानसी भवेत् ॥ स्मृत्वा भूचक्रवच्चक्रं तत्र तत्र विचक्षणः । आवाहनादिकान्सर्वान्स्मृत्वा तास्ताश्च देवताः ॥ सपर्या निखिलाः कृत्वा तयोः संप्रीणयेद्गुरुः । ध्यात्वा पूर्वं भुवश्चक्रे ग्रहप्रत्यधिदेवताः ॥ तत्तन्मन्त्रैः समर्चेत मनसा स्थिरधीर्नरः । स्व(श्व)चक्रान्ताः समावाह्य भुवश्चक्रे यथाविधि ॥ पूजयेन्मनसा तस्मिन्ग्रहाणामधिदेवताः । ततस्तस्माद्भुवश्चक्रे विधिना शास्त्रमार्गतः ॥ प्रत्यक्षं गन्धपुष्पाद्यैरर्चयेच्च जुहेद्गुरुः ॥ नवके चाम्बुजे वेद्यां कृते वित् पूजयेद्ग्रहान् । चतुरस्रेषु कुण्डेषु जुहेद्विद्वान्पृथक्पृथक् ॥ अष्टोत्तरशतं होममष्टाविंशतिमेव वा । कुण्डे वा स्थण्डिले वापि कुर्या-

संस्कारग.

ग्रहयज्ञः

त्कुर्वन्पृथक्पृथक् ॥ पूर्णाहुतिं च होमान्ते कुर्याद्ग्रहमखे गुरुः । तान्त्रिके च विमिश्रे च भुवश्चक्रेऽधिवासयेत् ॥ किंचिदिष्ट्वा भुवश्चक्रात्स्वचक्रे स्थापयेद्गुरुः । तेषां हि वमतिस्तस्मिन्नित्याहुः शास्त्रकोविदाः ॥ विघ्नं वैघ्नेन मन्त्रेण दुर्गां दौर्गेण साधकः । पूजयेद्ग्रहयज्ञेऽस्मिन्मातरश्चादितो बुधः ॥ किंचिद्विघ्नं च दुर्गां च गुहं शास्तारमेव च । कुम्भेष्वग्न्यादिकोणस्थेष्वर्चयन्ति ग्रहार्चने ॥ ब्राह्म्यादीनां च मातॄणां प्रागादिदशदिक्स्वपि । विहिताश्चाष्टकुम्भाः स्युर्ग्रहयज्ञे पुरा बहिः ॥ एतद्विधानं कृत्वादौ राजा पूज्यं गुरुं द्विजम् । यथावच्छक्तितो विप्रान्तुलिजश्चेतरानपि ॥ अभिषिंचेत्ततः पश्चादेतैरेवोक्तवर्त्मना । एतेन विधिना राजा राज्ये विप्रानुमोदितः ॥ आपदो निस्तरेत्क्षिप्रं दैवविप्रप्रसादतः । वापत्रयं च यत्नेन स्वयं च प्रयतः सदा ॥ जपैर्हुतैस्तर्पणैश्च ध्यानैर्दानैः समाहितः । मर्त्यापदो विजयते पापानि त्रिविधान्यपि ॥ ग्रहान्शान्त्यासिलान्राजा यजेदेव प्रयत्नतः । दिव्यान्भोगान्वरिष्ठांश्च दुर्लभानपि चाप्नुयात्' इति । इति भूचक्रग्रहयज्ञः ।

अथ शिवग्रहयज्ञः । अथेदानीमाचार्यस्मृतिप्रतिपादितशिवग्रहयज्ञविधिरभिधीयते—'अथत्राष्टदले पद्मे साम्बं त्र्यम्बकमेव वा । समावाह्य ग्रहान्सर्वान् तद्देहस्थान्समर्चयेत् ॥ शिवस्य हृदये सूर्यं ललाटे सोममेव च । बाहुमूले बुधं वामे कुजमेव च दक्षिणे ॥ दक्षिणेऽङ्केऽर्चयेन्मन्दं वामाङ्के पूजयेद्गुरुम् । मूर्ध्नि शुक्रं पदे सव्ये राहुं केतुं च दक्षिणे ॥ पाण्योर्विघ्नं च दुर्गां च पार्श्वयोः शास्तृषण्मुखौ । जठरे मातृकाः सर्वाः शिवस्य परमात्मनः ॥ सप्तविंशतिनक्षत्रान्हाररूपान्समर्चयेत् । तिथींस्तन्मुकुटस्थाने राशीनुदरबन्धने ॥ कटिस्थाने ऋतूंस्तस्य मणिबन्धेऽयनद्वयम् । चातुर्मास्यानि केयूरे चाहोरात्रं च नूपुरे ॥ संवत्सरान-

रानंते करणान्यागने विभोः । योगान्यस्त्रनणस्थाने शिवानेन प्रपूजयेत् ॥ एवं वेद्यां समभ्यर्च्य कलशे च विचक्षणः । तत्तन्मन्त्रैर्हुनेद्द्रव्यैः पृथगावाह्य चानले ॥ आद्यन्तयोर्घृतेनैव शिवमन्त्रैर्हुनेच्छतम् । ग्रहाणां मूलमन्त्रैश्च हुनेत्पूर्वोक्तवत्पृथक् ॥ हुत्वा दत्त्वा बलीं शान्त्यै सिक्त्वाशीर्भिर्बुधाम्बुभिः' इति शिवग्रहयज्ञः ॥ ॥ अथ प्रकारान्तरेण शिवग्रहयज्ञमाह स एव—'ग्रहान्शिवाक(कु)-चाग्रस्थान्भुवश्चक्रे समुद्वहेत् । शिवमावाह्य चादौ तु भुवश्चक्रे पुरोक्तवत् ॥ आवाहयेत्तुवश्चक्रे मण्डलस्थशिवे ग्रहान् । आ कृष्णेनेति चारभ्य सूर्यादीनामृचा बुधः। समिदाज्यं च चर्वाद्यं मूलमन्त्रेण वा हुनेत् । जपेदन्ते समिच्चर्वोर्मन्त्रांस्तदधिदैविकान् ॥ ग्रहाणा कृतहोमान्ते यथा प्रत्यधिदैवकान् । महारोगादिशान्त्यर्थमपमृत्योर्जयाय वा ॥ आवाह्य त्र्यम्बके सर्वान्ग्रहानिमः समर्चयेत् । चेतोभिलाषितावाप्त्यै परचक्रादिमुक्तये ॥ लोकानुरञ्जनार्थाय शिवे साम्बेऽर्चयेद्ग्रहान् । एवं प्रकुर्वतः पुंसो ग्रहशान्तिर्यथातथम् । क्षीयन्ते विपदः क्षिप्रं वर्धन्ते संपदोऽखिलाः । नयस्तापाश्च नश्यन्ति सर्वकार्याः प्रदक्षिणाः । भवन्त्यघानि नश्यन्ति ग्रहयज्ञकृतां नृणाम् । राजा चिरं विजित्यारीन्प्रीतात्मा श्रियमश्नुते ॥ राष्ट्रं च वृद्धिमाप्नोति प्रजाश्च निरुपद्रवाः । एवं राजा प्रजापालो नानोपायविचक्षणः ॥ अष्टाङ्गसंयुतो रक्षेत्स्वप्रकृतिरात्मवान् । यज्ञो दानं तपो रक्षा राज्ञां च ब्राह्मणार्चना ॥ एतानि नित्यकृत्यानि जपहोमादयोऽपि च' इति ॥

ग्रहयज्ञनिष्कर्षः—एवमुक्तनानाविधग्रहयज्ञेषु आश्वलायनाचार्यस्मृत्युक्तशिवग्रहयज्ञमेव कुर्यात् । इतरेषु तु प्रयाससाध्यत्वात्तत्रावश्याभावाद्वैगुण्यसंभवात् । शिवग्रहयज्ञे तु तादृशप्रयासाभावात्फलभूयस्त्वाद्वैगुण्यशङ्काभावाच्च । तथाहि गृह्यपरिशिष्टपरि-

मलाद्युक्तगृहयज्ञप्रकारेषु तत्तत्प्रतिमातत्तत्प्रकृतिद्रव्यपरिमाणतत्तद्वस्त्रगन्धपुष्पधूपदीपनैवेद्यदक्षिणादिसंपादने प्रयासभूयस्त्वान्न्यूनाधिकभावेन वैगुण्यसंभवात्सर्वेषामनुष्ठातुमशक्यत्वाद्यस्य कस्यचिच्छक्यत्वेऽपि फलाधिक्याभावात् । शिवग्रहयज्ञेतु प्रतिमादिसंपादनप्रयासाभावात्सांवशिवाययव एव ग्रहाधिदेवतानामन्येषां नक्षत्रादीनां चावाहनादिपूजाविधानान्नक्षत्रादिप्रीणनाच्च । अतएव फलाधिक्याद्वैगुण्यशङ्काया अभावात्सर्वेषामनुष्ठातुं शक्यत्वाच्च । 'नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्' इति भगवद्वचनाच्च विवेकिभिः शिवग्रहयज्ञ एव कर्तव्यः इति ।

अत्रेदं विचार्यते—किमस्मिन् शिवग्रहयज्ञे प्रतिपदोक्तदेवतानामेव पूजादिकं कर्तव्यं आहोस्विदधिदेवतादीनामपीति । प्रतिपदोक्तानामेव कार्यं नाधिदेवतादीनां तत्प्रापकाभावादिति प्राप्ते ब्रूमः—अधिदेवतादीनामपि पूजादिकं कर्तव्यमिति । तदकरणे प्रत्यवायस्मरणात् । तथाच स एवाचार्यः परिभाषायामाह—'रूपवर्णायुधस्थानमण्डलासनवाहनान् । समित्कुण्डोपहारांश्च पुष्पस्वाकृतीरपि ॥ गायत्रीमूर्तिमन्त्रान्वा नाममन्त्रांश्च केवलान् । साधिप्रत्यधिदेवानां मन्त्रांश्चर्ष्यादिसंयुतान् । तत्तन्मूर्तीश्च जानीयाद्धोप्यमर्च्यन्प्रबुधः । अज्ञात्वैतान्पुमानिष्ट्वा तत्फलं नैव विन्दते । दुःखं चाप्नोति सुमहद्यत्नादिष्ट्वाप्यवित्पुमान्' इति । अत्र कुण्डग्रहणं स्थण्डिलस्याप्युपलक्षणार्थम् । 'कुण्डे वा स्थण्डिले वापि होमं कुर्यात्पृथक्पृथक्' इत्याचार्येणोक्तत्वात् । अत्रापेक्षितहोमद्रव्यसिद्धाग्निसंस्कारस्तूल्मर्जनप्रकरणोक्तवत्कर्तव्यः । न्यायस्य तुल्यत्वात् ॥ तथाच तत्र कारिका—'गृहपकसमीपेऽग्नेर्निधायाज्यमधिश्रयेत् । संस्कार्यं गकुरघात्वं शान्तिकर्मणि चाश्रयेत्' इति ॥ भगवांस्तु—'पुरस्तन्त्रं विधायाज्यसंस्कारान्तं यथाविधि ।

यथादर्शे गृहे पक्वं गृहीत्वान्नभाजने ॥ ततस्तमावधिश्रित्य तत्पात्रमभिघार्य च । उत्तरत्रावतीर्याग्नेः पुनरप्यभिघार्य च । प्रत्यगग्रेर्निधायाग्यभाजनस्य समीपतः' इति ।

अथ नित्यग्रहयज्ञप्रयोगः । अथैतेषु ग्रहयज्ञप्रकारेषु प्रचुराचारपरिग्राह्यतया एकाग्न्येकाध्वरपक्षमनुसृत्य प्रयोगः प्रदर्श्यते । यजमानः स्नातः कृतनित्यक्रियः शुभे मुहूर्ते सोत्तरच्छदं भद्रपीठासन उपविश्याचम्य प्राणानायम्य संकल्पं कुर्यात् । तत्रायं क्रमः—देशकालौ संकीर्त्य पूर्वोक्तजन्मनक्षत्रादिनित्यकालेषु ग्रहानुकूल्यसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं ग्रहयज्ञं करिष्य इति संकल्पं कुर्यात् । गर्भाधानादिनैमित्तिकेषु अमुककर्मकर्तुमादावादित्यादिग्रहानुकूल्यसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं ग्रहयज्ञं करिष्य इति । काम्ये तु पूर्वमाभल्यापनोक्तप्रकारेणान्यतमकामनासिद्धिद्वारा श्रीप० ग्रहयज्ञं करिष्य इत्युच्चारयेत् । एवं यथाधिकारं संकल्प्य संभारान्संभरेत् । तत्रायं क्रमः—नित्यनैमित्तिकयोः प्रतिपदोक्तप्रतिमाश्वेतवस्त्रमलयजगन्धजातीपुष्पमाणिक्याभरणगुग्गुलुधूपदीपोपहारसमिद्दक्षिणादीनि तदभावे सर्वेषां सुवर्णादि माणिक्याभरणगुग्गुलुधूपघृतौदननैवेद्यादीन्यनुकूलद्रव्याणि वा संभरेत् । काम्ये तु प्रतिनियमात्प्रतिपदोक्तद्रव्याण्येव संभरेत् । एवं यथाधिकारं संभारान्संभृत्य होष्यमाणाहुतिसंख्यापेक्षया आचार्यादीन्वृणुयात् । तत्रायं क्रमः—सर्वेषां ग्रहाणां प्रत्येकं दशाहुतिपक्षे आचार्यमेकं वृणुयात् । तदूर्ध्वं पञ्चदशाहुतिपक्षे चत्वार ऋत्विजः । तदूर्ध्वं शताहुतिपर्यन्तं जटां नवसमानार्थं वृणुयात् । तदूर्ध्वं चेद्यथायोगं वृणुयात् । तत्र विधिज्ञं सदाचाराढ्यमाचारवन्तमाचार्यमस्मिन्ग्रहमखे समाचार्यस्त्वं भवेति तत्पाणिना पाणिं स्पृश्य वृणुयात् । अन्यान्ब्राह्मणानार्त्विज्यं कुर्विति प्रत्येकं वृणुयात् । तथा करिष्यामीति

ते चोरस्त्वाचामेयुः। ततो यजमानस्तान्विधिवद्यथाशक्त्यभ्यर्चयेत्। तत आचार्यः कर्मसंकल्पपूर्वकं गृहादुत्तरभाग ऐशाने वा कृत्वा चतुर्दिक्षु हस्तमात्रावरां चतुस्त्र्यङ्गुलप्रमाणत्रिभूमिकां ग्रहवेदिं प्रकल्प्य तस्यां शुक्लैर्व्रीहितण्डुलैः सकर्णिकमष्टदलमम्बुजमुल्लिख्य कर्णिकायां दलेषु च प्रागुक्तवर्तुलादिग्रहपीठानि तत्तद्वर्णकाक्षतैः कुर्यात्। तत्रायं क्रमः—मध्ये रक्ताक्षतैर्वर्तुलपीठम्। आग्नेयदले शुक्लाक्षतैश्चतुरस्रपीठम्। दक्षिणदले रक्ताक्षतैस्त्रिकोणपीठम्। ऐशानदले हरिताक्षतैर्बाणाकारपीठम्। उत्तरदले हरिताक्षतैर्दीर्घचतुरस्रपीठम्। पूर्वदले शुक्लाक्षतैः पञ्चकोणपीठम्। पश्चिमदले कृष्णाक्षतैश्चापाकारपीठम्। नैर्ऋतदले कृष्णाक्षतैः शूर्पाकारपीठम्। वायव्यदले मिश्राक्षतैर्ध्वजाकारपीठं च कृत्वा। कलशस्थापनं कुर्यात्। तत्रायं क्रमः—आकलशेष्वित्यस्य गाधिपुत्रो विश्वामित्रः पवमानः सोमो गायत्री। आकलशेषु धावति श्येनो वर्म विगाहते। अभिद्रोणा कनिक्रदत् ॥ अनेनोदीच्यां रङ्गवल्लिकयानुरञ्जितपद्मोपरि कृतधान्यपीठे नवमव्रणं तैजसं मृण्मयं वानुलिप्तालंकृतं शुभमभिषेककुम्भं निधाय। इमं मे गङ्ग इत्यस्य सिन्धुक्षित्प्रियमेधो नदीस्तुतिर्जगती। इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या। असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥ अनेन पुण्यजलैः पूरयित्वा नवसूत्रेण वस्त्रयुग्मेन चावेष्ट्य। हयगजवल्मीकह्रदगोष्ठराजद्वारचतुष्पथस्थानमृदो नगपर्वतधातून्सप्तपवित्रमृदः। उद्धृतासि वराहेण कृष्णेन शतबाहुना। मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम् ॥ इति मन्त्रेण कुम्भे निक्षिप्य। रुवतिभीम इत्यस्य वैश्वामित्रो रेणुः पवमानः सोमो जगती। रुवति भीमो वृषभस्तविष्यया शृङ्गे शिशानो हरिणी विचक्षणः। आ योनिं सोमः सुकृतं निषीदति गव्ययी त्वग्भवति निर्णिगव्ययी ॥ अनेन न्यग्रोधाश्वत्थप्लक्षजम्बूचूतवृक्ष-

त्वचो निक्षिप्य । प्रवो यज्ञेष्वित्यस्य वसिष्ठो विश्वेदेवास्त्रिष्टुप् । प्रवो यज्ञेषु देवयन्तों अर्चन्द्यावा नमोभिः पृथिवी इषध्यै । येषां ब्र-
ह्माण्यसमानि विप्रा विष्वग्वियन्ति वनिनो न शाखाः ॥ अनेन तेषां पल्लवान्निक्षिप्य । आप्यायस्व गोतमः सोमो गायत्री । आ
प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य संगथे ॥ अनेन गोक्षीरम् । दधिक्राव्णो वामदेवो दधिक्रावानुष्टुप् । दधि-
क्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत् ॥ अनेन दधि ॥ घृतंमिमिक्षे० । घृतं मिमिक्षे
घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम । अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् । अनेन घृतम् । गन्धद्वारेत्यस्य
आनन्दकर्दमः श्रीरनुष्टुप् । गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ अनेन गोम-
यम् । गायत्र्या विश्वामित्रः सविता गायत्री । तत्सवितु० । अनेन गोमूत्रं निक्षिप्य । सहि रत्नानीत्यस्य श्यावाश्वः सविता गायत्री ।
स हि रत्नानि दाशुषे सुवाति सविता भगः । तं भागं चित्रमीमहे ॥ अनेन नवरत्नानि निक्षिप्य । या ओषधीरित्यस्याथर्वणो भिष-
गोषधयोऽनुष्टुप् । या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा । मनै नु बभ्रूणामहं शतं धामानि सप्त च ॥ अनेन शतौषधीस्तदभावे
दशमूलानि तदभावे सुवर्णं वा निक्षिप्य । गन्धद्वारां० । अनेन गन्धं निक्षिप्य । सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।
आयान्तु यजमानस्य दुरितक्षयकारकाः । गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धो कावेरि जलेऽस्मिन्संनिधिं कुरु ।
इत्येतैर्मन्त्रैः । आपो हिष्ठेति नवर्चस्य सूक्तस्याम्बरीषः सिन्धुद्वीप आपो गायत्री पञ्चमी वर्धमाना सप्तमी प्रतिष्ठा अन्त्ये द्वे अनु-
ष्टुभौ । आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव

मातरः ॥ तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु नः ॥ ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् । अपो याचामि भेषजम् ॥ अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निं च विश्वशंभुवम् ॥ आपः पृणीत भेषजं वरूथं तन्वे३ मम । ज्योक्च सूर्यं दृशे ॥ इदमापः प्रवहत यत्किंच दुरितं मयि । यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥ आपो अद्यान्वचारिषं रसेन समगस्महि । पयस्वानग्न आगहि तं मा संसृज वर्चसा ॥ अनेन सूक्तेन । नहि ते क्षत्रमित्येकत्रिंशदृचस्याजीगर्तिः शुनःशेपो वरुणः आद्या दशत्रिष्टुभः शिष्टा गायत्र्यः । न हि ते क्षत्रं न सहो न मन्युं वयश्चनामी पतयन्त आपुः । नेमा आपो अनिमिषं चरन्तीर्न ये वातस्य प्रमिनन्त्यभ्वम् ॥ अबुध्ने राजा वरुणो वनस्योर्ध्वं स्तूपं ददते पूतदक्षः । नीचीनाः स्थुरुपरि बुध्न एषामस्मे अन्तर्निहिताः केतवः स्युः ॥ उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ । अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ॥ शतं ते राजन्भिषजः सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु । बाधस्व दूरे निर्ऋतिं पराचैः कृतं चिदेनः प्रमुमुग्ध्यस्मत् ॥ अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुहचिद्दिवेयुः । अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥ १ ॥ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः ॥ तदिन्नक्तं तद्दिवा मह्यमाहुस्तदयं केतो हृद आविचष्टे । शुनःशेपो यमह्वद्गृभीतः सो अस्मान्राजा वरुणो मुमोक्तु ॥ शुनःशेपो ह्यह्वद्गृभीतस्त्रिष्वादित्यं द्रुपदेषु बद्धः । अवैनं राजा वरुणः सस-

पाठा०—१ ओप्रकोश एवविंशःसूक्तमिदमूर्ध्वमित्तमस्ति ।

ज्यावि॒द्वाँ अद॑ब्धो विमु॑मोक्तु॒ पाशा॑न् ॥ अव॑ ते॒ हेळो॑ वरुण॒ नमो॑भि॒रव॑ य॒ज्ञेभि॑रीमहे ह॒विर्भि॑ः । क्षय॑न्न॒स्मभ्य॑मसुरप्रचेता॒ राज॒न्नेनां॑सि
शिश्रथः कृ॒तानि॑ ॥ उदु॑त्त॒मं व॑रुण॒ पाश॑म॒स्मदवा॑ध॒मं विम॑ध्य॒मं श्र॑थाय । अथा॑ व॒यमा॑दित्य व्र॒ते तवाना॑गसो॒ अदि॑तये स्याम ॥२॥
यच्चि॒द्धि ते॒ विशो॑ यथा॒ प्रदे॑व वरुण व्र॒तम् । मि॒नी॒मसि॒ द्यवि॑द्यवि ॥ मा नो॑ व॒धाय॑ ह॒त्नवे॑ जिही॒ळा॒नस्य॑ रीरधः । मा हृ॑णा॒नस्य॑
म॒न्यवे॑ ॥ वि मृ॑ळी॒काय॑ ते॒ मनो॑ र॒थीरश्वं॒ न संदि॑तम् । गी॒र्भिर्व॑रुण सीमहि ॥ परा॒ हि मे॒ विम॑न्यवः॒ पत॑न्ति॒ वस्य॑इष्टये । वयो॒ न
व॑स॒तीरुप॑ ॥ क॒दा क्ष॑त्र॒श्रियं॒ नर॒मा वरु॑णं करामहे । मृ॒ळी॒काया॑रु॒चक्ष॑सम् ॥ ३ ॥ तदित्स॑मा॒नमा॑शाते॒ वेन॑न्ता॒ न प्रयु॑च्छतः ।
धृ॒तव्र॑ताय दा॒शुषे॑ ॥ वेदा॒ यो वी॒नां प॒दम॒न्तरि॑क्षेण॒ पत॑ताम् । वेद॑ ना॒वः स॑मु॒द्रियः॑ ॥ वेद॑ मा॒सो धृ॒तव्र॑तो॒ द्वाद॑श प्र॒जाव॑तः ।
वेदा॒ य उ॑प॒जाय॑ते ॥ वेद॒ वात॑स्य वर्त॒निमु॒रोर्ऋ॒ष्वस्य॑ बृह॒तः । वेदा॒ ये अ॒ध्यास॑ते ॥ निष॑साद धृ॒तव्र॑तो॒ वरु॑णः प॒स्त्या॒३॑स्वा । साम्रा॑-
ज्याय सु॒क्रतु॑ः ॥ ४ ॥ अतो॒ विश्वा॒न्यद्भु॑ता चिकि॒त्वाँ अ॒भि प॑श्यति । कृ॒तानि॒ या च॒ कर्त्वा॑ ॥ स नो॑ वि॒श्वाहा॑ सु॒क्रतु॑रादि॒त्यः
सु॒पथा॑ करत् । प्र ण॒ आयूं॑षि तारिषत् ॥ बिभ्र॑द्द्रा॒पिं हि॑र॒ण्ययं॒ वरु॑णो वस्त नि॒र्णिज॑म् । परि॒ स्पशो॒ नि षे॑दिरे ॥ न यं दिप्स॑न्ति दि॒-
प्सवो॒ न द्रुह्वा॑णो॒ जना॑नाम् । न दे॒वम॒भिमा॑तयः ॥ उ॒त यो मानु॑षे॒ष्वा यश॑श्च॒क्रे अ॒साम्या । अ॒स्माक॑मु॒दरे॒ष्वा ॥ ५ ॥ परा॑ मे
यन्ति धी॒तयो॒ गावो॒ न गव्यू॑ती॒रनु॑ । इ॒च्छन्ती॑रुरु॒चक्ष॑सम् ॥ सं नु वो॑चावहै॒ पुन॒र्यतो॑ मे॒ मध्वाभृ॑तम् । होते॑व॒ क्षद॑से प्रि॒यम् ॥
दर्शं॒ नु वि॒श्वद॑र्शतं॒ दर्शं॒ रथ॒मधि॒ क्षमि॑ । ए॒ता जु॑षत मे॒ गिरः॑ ॥ इ॒मं मे॑ वरुण श्रुधी॒ हव॑म॒द्या च॑ मृळय । त्वाम॑व॒स्युरा च॑के ॥ त्वं
विश्व॑स्य मेधिर दि॒वश्च॒ ग्मश्च॑ राजसि । स याम॑नि॒ प्रति॑ श्रुधि । उदु॑त्त॒मं मु॑मुग्धि नो॒ वि पाशं॑ मध्य॒मं चृ॑त । अवा॑ध॒मानि॑ जी॒वसे॑ ॥६॥

स्वादिष्ठयेति दशर्चस्य मधुच्छन्दाः पवमानः सोमो गायत्री। (प० ९) अनेन सूक्तेन च तं कुम्भमभिमन्त्रयेत्। अथवा कलशाभिमन्त्रणेऽन्यं मन्त्रविदं नियोजयेत्।

ग्रहावाहनादि। ततः कर्म संकल्प्य विधिवत्स्वस्तिवाचनं कृत्वा ग्रहवेदीस्थपद्मपीठेषु यथास्थानं यथामुखीर्ग्रहप्रतिमाः स्थापयित्वा दक्षिणवामपार्श्वयोरधिदेवताप्रत्यधिदेवते तदभिमुख्यौ स्थापयेत्। तदभावे पुष्पाक्षतादिष्वावाहयेत् ॥ तत्रायमावाहनप्रकारः—व्यस्तसमस्तव्याहृतीनामत्रिभृगुभरद्वाजप्रजापतय ऋषयः अग्निवायुसूर्यप्रजापतयो देवताः गायत्र्युष्णिगनुष्टुब्बृहत्यश्छन्दांसि सूर्याद्यावाहनेवि०। ॐ भूरादित्यमावाहयामि। ॐ भुवआदित्यमा०। ॐ स्वरादित्यमा० ॐ भूर्भुवःस्वरादित्यमा०। आकृष्णेनहिरण्यस्तूपः सविता त्रिष्टुप् सूर्यावाहने विनियोगः ॥ ॐ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ॥ हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ इमं मन्त्रमुच्चार्य—भगवन्नादित्य ग्रहाधिपते काश्यपगोत्र कलिङ्गदेशेश्वर जपापुष्पोपमाङ्गद्युते द्विभुज पद्माभयहस्त सिन्दूरवर्णाम्बरमाल्यानुलेपन ज्वलन्माणिक्यखचितसर्वाङ्गाभरण भास्कर तेजोनिधे त्रिलोकप्रकाशक त्रिदेवतामयमूर्ते नमस्ते सन्नद्धारुणध्वजपताकोपशोभितेन सप्ताश्वरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छाऽग्निरुद्राभ्यां सह पद्मकर्णिकायां ताम्रप्रतिमां प्राङ्मुखीं वर्तुलपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि ॥ तद्दक्षिणपार्श्वे। ॐ भूरादित्याधिदेवतामग्निमावाहयामि। ॐ भुवआदित्याधिदेवता०। ॐ स्वरादित्याधिदेवता० ॥ ॐ भूर्भुवःस्वरादित्याधिदेवता० ॥ अग्निं दूतं मेधातिथिर-

---

१ व्याहृत्युच्चारणमेवमेवाग्रे प्रतिग्रहं प्रत्यधिदेवताप्रत्यधिदेवतयोश्च ज्ञेयम्।

विरूपाक्षो गायत्री अग्न्यावाहने विनि० ॥ ॐ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥ इमं मन्त्रमुच्चार्य—पिङ्गश्मश्रुकेशं पिङ्गाक्षित्रियमरुणवर्णं छागस्थं साक्षसूत्रं सप्तार्चिषं शक्तिधरवरदहस्तद्वयमादित्याधिदेवतामग्निमावाहयामि ॥ तद्वामपार्श्वे । ॐ भूरादित्यप्रत्यधिदेवतां रुद्रमावाहयामि ॥ ॐ भुवआदित्यप्र० । ॐ स्वरादित्यप्र० । ॐ भूर्भुवःस्वरादित्यप्र० ॥ त्र्यम्बकं वसिष्ठस्त्र्यम्बकोऽनुष्टुप् रुद्रावाहनेविनियोगः ॥ ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥ इमं मन्त्रमुच्चार्य—त्रिलोचनोपेतं पञ्चवक्त्रं वृषारूढं कपालशूलखट्वाङ्गधारिणं चन्द्रमौलिं सदाशिवमादित्यप्रत्यधिदेवतां रुद्रमावा० ॥ तद्दक्षिणपूर्वदले पूर्ववद्व्याहृत्युच्चारणानन्तरम् आप्यायस्वगोतमः सोमो गायत्री सोमावाहने० ॥ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ॥ भवा वाजस्य संगथे ॥ इमं मन्त्रमुच्चार्य—भगवन्सोम द्विजाधिपते सुधामयशरीरात्रेय गोत्र यामुनदेशेश्वर गोक्षीरधवलाङ्गकान्ते द्विभुज गदावरदानाङ्कितकर शुक्लाम्बरमाल्यानुलेपनसर्वाङ्गमुक्तमौक्तिकाभरणरमणीय समस्तलोकाप्यायक देवतास्थापमूर्ते नमस्ते भगवद्धवल गजपताकोपशोभितेन दशश्वेताश्वरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छाद्विरुमया च सह पद्मायेयदलमध्ये स्फाटिकप्रतिमां प्रत्यक्षुखीं चतुरस्रपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि ॥ तद्दक्षिणपार्श्वे ॥ व्याहृत्युच्चारणानन्तरम् अप्सुमे सिंधुद्वीप आपो गायत्री अपावा० ॥ अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निं च विश्वशंभुवम् ॥ इमं मन्त्रमुच्चार्य—स्त्रीरूपधारिणीः श्वेतवर्णा मकरवाहनाः पाशकलशधारिणीर्मुक्ताभरणभूषिताः सोमाधिदेवता अप आवा० ॥ तद्वामपार्श्वे व्याहृत्युच्चारणानन्तरम् । गौरीर्मिमाय दीर्घतमा उमा जगती उमावा० ॥ गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ॥ अष्टापदी

सर्वज्ञानमयात्रिगोत्र मगधदेशेश्वर कुङ्कुमवर्णाङ्गद्युते चतुर्भुज खड्गखेटकगदावरदानाङ्कित पीताम्बरमाल्यानुलेपन मरकताभरणालंकृतसर्वाङ्ग विप्रद्रुमते नमस्ते सन्नद्धपीतध्वजपताकोपशोभितेन चतुःसिंहरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ विष्णुपुरुषाभ्यां सह पद्मेशानदलमध्ये सुवर्णप्रतिमामुदङ्मुखीं बाणाकारपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि । तद्दक्षिणपार्श्वे । व्याहृत्युच्चारणानन्तरम् । इदं विष्णुर्मेधातिथिर्विष्णुर्गायत्री विष्णवा० । इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे ॥ इमं मन्त्रमुच्चार्य—कौमोदकीपद्मशङ्खचक्रोपेतं चतुर्भुजं सौम्याधिदेवं विष्णुमा० । तद्वामपार्श्वे । व्याहृत्युच्चारणानन्तरम् । सहस्रशीर्षा नारायणः पुरुषो नुष्टुप् पुरुषावाह० । सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ इमं मन्त्रमुच्चार्य—कौमोदकीपद्मशङ्खचक्रोपेतं चतुर्भुजं सौम्यप्रत्यधिदेवतां पुरुषमावाहयामि ॥ ४ ॥ तत उत्तरदले । व्याहृत्युच्चारणानन्तरम् । बृहस्पते गृत्समदो बृहस्पतिस्त्रिष्टुप् बृहस्पत्यावाहने० । बृहस्पते अतियदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु ॥ यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् । इमं मन्त्रमुच्चार्य—भगवन्बृहस्पते समस्तदेवताचार्याङ्गिरसगोत्र सिन्धुदेशेश्वर तप्तसुवर्णसदृशाङ्गदीप्ते चतुर्भुज दण्डकमण्डल्वक्षसूत्रवरदानाङ्कित पीताम्बरमाल्यानुलेपन पुष्परागमयाभरणरमणीय समस्तविद्याधिपते नमस्ते सन्नद्धपीतध्वजपताकोपशोभितेन पीताश्वरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छेन्द्रब्रह्मभ्यां सह पद्मोत्तरदलमध्ये सुवर्णप्रतिमामुदङ्मुखीं दीर्घचतुरस्रपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि ॥ तद्दक्षिणपार्श्वे । व्याहृत्युच्चारणानन्तरम् । इन्द्र श्रेष्ठानि गृत्समद इन्द्रस्त्रिष्टुप् । इन्द्रावाहने० ॥ इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे । पोषं रयीणामरिष्टिं तनूनां स्वाद्मानं वाचः सुदिनत्वमह्नाम् । इमं मन्त्रमुच्चार्य—चतुर्दन्तगजारूढं

वज्राङ्कुशधर शचीपतिं नानाभरणभूपितं बृहस्पत्यधिदेवतामिन्द्रमावाहयामि । तद्वामपार्श्वे । व्याहृत्युच्चारणानन्तरम् । ब्रह्मणाते वि-श्वामित्रो ब्रह्मात्रिष्टुप् ब्रह्मावाहनेविनि० । ब्रह्मणा ते ब्रह्मयुजा युनज्मि हरी सखाया सधमाद आशू । स्थिरं रथं सुखमिन्द्राधितिष्ठन्प्रजानन्विद्वाँ उपयाहि सोमम् ॥ इमं मन्त्रमुच्चार्य—पद्मासनस्थं जटिलं चतुर्मुखमक्षमालास्रुवपुस्तककमण्डलुधारिणं कृष्णाजिनवाससं पार्श्वस्थितहंसं बृहस्पतिप्रत्यधिदेवतां ब्रह्माणमावा० ॥ ५ ॥ ततः प्राग्दले ॥ व्याहृत्युच्चारणानन्तरम् । शुक्रंते भरद्वाजः शुक्रस्त्रिष्टुप् शुक्रावाहने० ॥ शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि । विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥ इमं मन्त्रमुच्चार्य—भगवन्भार्गव समस्तदैत्यगुरो भार्गवगोत्र भोजकटदेशेश्वर रजतोज्ज्वलाङ्गकान्ते चतुर्भुज दण्डकमण्डलक्ष-सूत्रवरदानाङ्कितशुक्लाम्बरमाल्यानुलेपन वज्राभरणभूपितसर्वाङ्ग समस्तनीतिशास्त्रनिपुणमते नमस्ते सन्नद्धशुक्लध्वजपताकोपशोभितेन शुक्लाश्वरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छेन्द्राणीन्द्राभ्यां सह पद्मप्राग्दलमध्ये रजतप्रतिमां प्राङ्मुखीं पञ्चकोणपीठेऽधितिष्ठ पूजार्थं त्वामावा० । तद्दक्षिणपार्श्वे । व्याहृत्युच्चारणानन्तरम् । इन्द्राणींवृषाकपिरिन्द्राणीपङ्क्तिः इन्द्राण्यावा० ॥ इन्द्राणीमासु नारिषु सुभगामहमश्रवम् । नह्यस्या अपरं चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ॥ इमं मन्त्रमुच्चार्य—संतानमञ्जरीवरदानधरां द्विभुजां शुक्राधिदेवतामिन्द्राणीमावा० । तद्वामपार्श्वे । व्याहृत्युच्चारणानन्तरम् । इन्द्रं वो मधुच्छन्दा इन्द्रो गायत्री इन्द्रावा० । इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः । इमं मन्त्रमुच्चार्य—चतुर्दन्तगजारूढं वज्राङ्कुशधर शचीपतिं नानाभरणभूपितं भार्गवप्रत्यधिदेवतामिन्द्रमावा० ॥ ६ ॥ ततः पश्चिमदले । व्याहृत्युच्चारणानन्तरम् । शमग्निरिरिंबिठिः शनैश्चर उष्णिक् ।

शनैश्वरावाहने० ॥ शमग्निरग्निभिः करच्छं नस्तपतु सूर्यः । शं वातो वात्वरपा अपस्रिधः ॥ इमं मन्त्रमुच्चार्य—भगवन् शनैश्वर भास्करतनय काश्यपगोत्र सुराष्ट्रदेशेश्वर कज्जलनीलाङ्गकान्ते चतुर्भुज चापतूणीरकृपाणाभयाङ्कित नीलाम्बरमाल्यानुलेपन नीलरत्नभूषितसर्वाङ्ग समस्तभुवनभीषणामर्पणमूर्ते नमस्ते सन्नद्धनीलध्वजपताकोपशोभितेन नीलगृध्ररथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ प्रजापतियमाभ्यां सह पश्चिमदलमध्ये कालायसप्रतिमां प्रत्यङ्मुखीं चापाकारपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि । तद्दक्षिणपार्श्वे । व्याहृत्युच्चारणानन्तरम् । प्रजापते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् प्रजापत्यावा० ॥ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ इमं मन्त्रमुच्चार्य—यज्ञोपवीतिनं हंसस्थमेकचक्रमक्षमालास्रुक्स्रुवपुस्तककमण्डलुसहितं चतुर्भुजं शनैश्वराधिदेवतां प्रजापतिमावा० । तद्वामपार्श्वे । व्याहृत्युच्चारणानन्तरम् । यमायसोमं यमोयमोऽनुष्टुप् यमावा० । यमाय सोमं सुनुत यमाय जुहुता हविः । यमं ह यज्ञो गच्छत्यग्निदूतो अरं कृतः ॥ इमं मन्त्रमुच्चार्य—ईषत्पीनदण्डहस्तं रक्तदृशं पाशधरं कृष्णवर्णं महिषारूढं सर्वाभरणभूषितं शनैश्वरप्रत्यधिदेवतां यममा० ॥ ७ ॥ ततः प्रत्यग्दक्षिणदले । व्याहृत्युच्चारणानन्तरम् । कयाने वामदेवो राहुर्गायत्री । राहावा० । कया नश्चित्र आभुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥ इमं मन्त्रमुच्चार्य—भगवन् राहो रविसोममर्दन सिंहिकानन्दन पैठीनसगोत्र बर्बरदेशेश्वर कालमेघद्युते व्याघ्रवदन चतुर्भुज खड्गचर्मशूलगदावरदानाङ्कित कृष्णाम्बरमाल्यानुलेपन गोमेदकाभरणभूषितसर्वाङ्ग शौर्यनिधे नमस्ते सन्नद्धकृष्णध्वजपताकोपशोभितेन कृष्णमेषरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ सर्पकालाभ्यां सह पश्चिमनैर्ऋतदलमध्ये सीसप्रतिमां दक्षि-

गामुखीं शूर्पाकारपीठेऽधितिष्ठ पूजार्थं त्वामावा० । तद्दक्षिणपार्श्वे । व्याहृत्युच्चारणानन्तरम् । आयं गौः सार्पराज्ञी सर्पो गायत्री सर्पावा० । आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः ॥ इमं मन्त्रमुच्चार्य—अक्षसूत्रधरान्कुण्डिकाकारपुच्छयुक्तान् त्रिभोगान्भीषणात्राह्वधिदेवान्सर्पानावा० । तद्वामपार्श्वे । व्याहृत्युच्चारणानन्तरम् । परंमृत्यो संकुसुको मृत्युस्त्रिष्टुप् कालावाहने० ॥ परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ॥ इमं मन्त्रमुच्चार्य—करालवदनं नित्यभीषणं पाशदण्डधरं सर्पवृश्चिकरोमाणं राहुमत्यधिदेवतां कालमावा० ॥ ८ ॥ ततः प्रत्युगुत्तरदले । व्याहृत्युच्चारणानन्तरम् । केतुं कृण्वन्मधुच्छन्दाः केतुर्गायत्री । केत्वावाहने० । केतुं कृण्वन्न केतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥ इमं मन्त्रमुच्चार्य—भगवन्केतो कामरूप जैमिनिगोत्र मध्यदेशेश्वर धूम्रवर्णध्वजाकृते द्विभुज गदावरदानाङ्कित चित्राम्बरमाल्यानुलेपन वैडूर्यमयाभरणभूषितसर्वाङ्ग चित्रशक्ते नमस्ते सन्नद्धचित्रध्वजपताकोपशोभितेन चित्रकपोतरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ ब्रह्मचित्रगुप्ताभ्यां सह पश्चिमवायव्यदलमध्ये कांस्यप्रतिमां दक्षिणामुखीं ध्वजाकारपीठेऽधितिष्ठ पूजार्थं त्वामावाहयामि । तद्दक्षिणपार्श्वे । व्याहृत्युच्चारणानन्तरम् । ब्रह्मजज्ञानं नकुलो ब्रह्मा त्रिष्टुप् ब्रह्मावा० ॥ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः । स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ इमं मन्त्रमुच्चार्य—पद्मासनस्थं जटिलं चतुर्मुखमक्षमालास्रुवपुस्तककमण्डलुधरं कृष्णाजिनवाससं पार्श्वस्थितहंसं केत्वधिदेवतां ब्रह्माणमावा० । तद्वामपार्श्वे । व्याहृत्युच्चारणानन्तरम् । सचित्रचित्रं भरद्वाजश्चित्रगुप्तस्त्रिष्टुप् चित्रगुप्तावाहने० ॥ सचित्र चित्रं चितयन्तमस्मे चित्रक्षत्र चित्रतमं वयोधाम् ।

चन्द्रं रयिं पुरुवीरं बृहन्तं चन्द्र चन्द्राभिर्गृणते युवस्व ॥ इमं मन्त्रमुच्चार्य—उदीच्यवेषधरं सौम्यदर्शनं लेखनीपत्रोपेतद्विभुजं केतु-प्रत्यधिदेवतां चित्रगुप्तमावाहयामि ॥ ९ ॥ अथ कर्मसाद्गुण्यदेवतावाहनं तण्डुलपीठेषु कुर्यात् । शनेर्वायुप्रदेशे । व्याहृत्युच्चारणानन्तरम् । आतून इत्यस्य काण्वः कुसीदो विनायको गायत्री विनायकावाहने० ॥ आतू नं इन्द्र क्षुमन्तं चित्रं ग्राभं संगृभाय ॥ महाहस्ती दक्षिणेन ॥ इमं मन्त्रमुच्चार्य—त्रिनेत्रं गजाननं नागयज्ञोपवीतिनं चन्द्रधरं दन्ताक्षमालापरशुमोदकोपेतचतुर्भुजं विना० । तद्दक्षिणतः । व्याहृत्युच्चारणानन्तरम् । जातवेदसे कश्यपो दुर्गात्रिष्टुप् दुर्गावाहने० ॥ जातवेदसे सुनवाम सोममरातीयतो निर्दहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ इमं मन्त्रमुच्चार्य—शक्तिबाणशूलखड्गचक्रचन्द्रबिम्ब-खेटकपालधनुर्कटकोपेतदशभुजां सिंहारूढां दुर्दान्तदैत्यासुहारिणीं दुर्गामा० । तद्दक्षिणतः । व्याहृत्युच्चारणानन्तरम् । क्षेत्रस्यपतिना वामदेवः क्षेत्राधिपतिरनुष्टुप् । क्षेत्रपालावा० ॥ क्षेत्रस्य पतिना वयं हितेनेव जयामसि । गामश्वं पोषयित्न्वा स नो मृळातीदृशे ॥ इमं मन्त्रमुच्चार्य—श्यामवर्णं त्रिलोचनमूर्ध्वकेशं सुदंष्ट्रभ्रुकुटीकुटिलाननं नूपुरालंकृताङ्घ्रिं सर्पमेखलयायुतं सर्पाङ्गदमतिक्रुद्धं क्षुद्रघण्टावद्धं गुल्फावलम्बिनृकरोटीमालाधारिणमुरगकौपीनं चन्द्रमौलिं दक्षिणहस्तैः शूलवेतालखड्गदुन्दुभीन्दधानं वामहस्तैः कपालघण्टाचर्मचापान्दधानं दिग्वाससममितद्युतिं क्षेत्रपालमावा० । तद्दक्षिणतः ॥ व्याहृत्युच्चारणानन्तरम् । काणाशिशुरित्यस्यात्रितो वायुरुष्णिक् वाय्वावाहने० । क्राणा शिशुर्महीनां हिन्वन्नृतस्य दीधितिम् । विश्वा परि प्रिया भुवदध द्विता । इमं मन्त्रमुच्चार्य—धावद्धरिणपृष्ठगतं ध्वजवरदानधारिणं धूम्रवर्णं वायुमावा० ॥ तद्दक्षिणतः । व्याहृत्युच्चारणानन्तरम् । आदित्यप्रत्नस्य वत्स आकाशो गा-

यत्री । आकाशमावाहने० ॥ आदित्प्रलस्य रेतसो ज्योतिष्पश्यन्ति वासरम् । परो यदिध्यते दिवा ॥ इमं मन्त्रमुच्चार्य—नीलोत्पलाभं नीलाम्बरधारि चन्द्रार्कोपेतद्विभुजं पण्डमाकाशमा० । तद्दक्षिणतः । व्याहृत्युच्चारणानन्तरम् । अश्विनावर्तीराहूगणो गोतमोऽश्विनावुष्णिक् अश्व्यावा० ॥ अश्विना वर्तिरस्मदा गोमद्दस्रा हिरण्यवत् । अर्वाग्रथं समनसा नियच्छतं ॥ इमं मन्त्रमुच्चार्य—प्रत्येकमौषधपुस्तकोपेत दक्षिणवामहस्तावन्योन्यसंयुक्तदेहावेकस्यदक्षिणपार्श्वेऽपरस्य वामपार्श्वे रत्नभाण्डकरशुक्लाम्बरधारिनारीयुग्मोपेतौ देवभिषजावश्विनावावाहयामि ॥६॥ अथ क्रतुसंरक्षकदेवतावाहनं पूर्ववत्तण्डुलपीठेषु कुर्यात् । प्राग्दलाग्रे । व्याहृत्युच्चारणानन्तरम् । इन्द्रं वो मधुच्छन्दा इन्द्रो गायत्री इन्द्रावा० ॥ इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः ॥ इमं मन्त्रमुच्चार्य—स्वर्णवर्णं सहस्राक्षमैरावतवाहनं वज्रपाणिं शचीप्रियमिन्द्रमावा० । आग्नेयदलाग्रे । व्याहृत्युच्चारणानन्तरम् । अग्निमीळेवैश्वामित्रोमधुच्छन्दा अग्निर्गायत्री अग्न्यावाहने० । अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमं ॥ इमं मन्त्रमुच्चार्य—रक्तवर्णं सप्तार्चिषं सप्तहस्तं शक्त्यन्नस्रुक्स्रुवतोमरव्यजनघृतपात्राणि दधानं स्वाहाप्रियं मेषवाहनमग्निमावा० । याम्यदलाग्रे । व्याहृत्युच्चारणानन्तरम् । यमायसोमं यमोयमोऽनुष्टुप् यमावाहने० । यमाय सोमं सुनुत यमाय जुहुता हविः ॥ यमं ह यज्ञो गच्छत्यग्निदूतो अरं कृतः ॥ इमं मन्त्रमुच्चार्य—रक्तवर्णं दण्डधरं महिषवाहनमिलाप्रियं यममावा० । नैर्ऋतदलाग्रे । व्याहृत्युच्चारणानन्तरम् । मोषुणः काण्वो निर्ऋतिर्गायत्री । निर्ऋत्यावा० ॥ मोषुणः परापरा निर्ऋतिर्दुर्हणावधीत् । पदीष्ट तृष्णया सह ॥ इमं मन्त्रमुच्चार्य—नीलवर्णं खड्गचर्मधरमूर्ध्वकेशं नरवाहनं कालिकाप्रियं निर्ऋतिमा० । पश्चिमदलाग्रे । व्याहृत्युच्चारणानन्तरम् । उदुत्तमं शुनःशेपो वरुणो गायत्री वरुणावाहने०

उदुत्तमं मुमुग्धि नो विपाशं मध्यमं चृत । अवाधमानि जीवसे ॥ इमं मन्त्रमुच्चार्य—रक्तभूषणं नागपाशधरं मकरवाहनं पद्मिनी-प्रियं वरुणमावाहयामि । वायव्यदलाग्रे । व्याहृत्युच्चारणानन्तरम् । तववायो व्यश्वो वायुर्गायत्री वाय्वावाहने० ॥ तव वायवृतस्पते त्वष्टुर्जामातरद्भुत । अवांस्या वृणीमहे ॥ इमं मन्त्रमुच्चार्य—श्यामवर्णं हेमदण्डधरं कृष्णमृगवाहनं जगत्प्राणरूपं मोहिनी-प्रियं वायुमा० । उत्तरदलाग्रे । व्याहृत्युच्चारणानन्तरम् । सोमोधेनुं गौतमः सोमस्त्रिष्टुप् । सोमावा० । सोमो धेनुं सोमो अर्वन्त-माशुं सोमो वीरं कर्मण्यं ददाति । सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॥ इमं मन्त्रमुच्चार्य स्वर्णवर्णं निधीश्वरं कुन्तपाणिमश्ववाहनं चित्रिणीप्रियं कुबेरमा० । ऐशानदलाग्रे । व्याहृत्युच्चारणानन्तरम् । कद्रुद्रायेत्यस्यकण्वोरुद्रोगायत्री ईशानावा० । कद्रुद्राय प्रचेतसे मीळ्हुष्टमाय तव्यसे । वोचेम शंतमं हृदे ॥ इमं मन्त्रमुच्चार्य शुद्धस्फटिकवर्णं वरदाभयशूलाक्षसूत्रधरं वृषवाहनं गौरीप्रियमीशानमावाहयामि ॥ ८ ॥ एवमेकचत्वारिंशद्देवता आवाह्य । तत्त्वायाम्याजीगर्तिः शुनःशेपः सकृत्रिमो वैश्वामित्रो वरुणस्त्रिष्टुप् । वरुणावाहनेवि० । तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः । इति । ततः कलशेचवरुणमावाह्य नमोन्तैश्चतुर्थ्यन्तैः स्वस्वनामभिः क्रमेण पूर्वोक्तद्रव्यैः पुष्पसमर्पणपर्यन्तं ग्रहदेवतापूजां कृत्वा कर्मसाद्गुण्यदेवताः क्रतुसंरक्षकदेवताः वरुणं च मलयजगन्धशतपुष्पैस्तथैव पूजयेत् ।

अथ होमः । अनन्तरमाचार्यः प्रत्यगग्रेरासीनः प्राणानायम्य पूर्ववत्संकल्प्याग्निमुखप्रकरणोक्तप्रकारेण प्रागुक्तलक्षणे कुण्डे स्थण्डिले वोपलेपनाद्यग्निप्रतिष्ठापनान्तं कर्म कृत्वा ऋत्विग्भिरन्वारब्धः समिद्द्वयं त्रयं वा पाणिनादाय देशकालौ निर्दिश्य अद्य

यक्ष्यमाणग्रहहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये । अस्मिन्नन्वाहितेऽग्नावित्यादिचक्षुषीआज्येनेत्यन्तमुक्त्वा—प्रधानदेवतामादित्यमधिदेवतामग्निं प्रत्यधिदेवतां रुद्रमर्कसमिच्चर्वाज्यैः । प्रधानदेवं सोममधिदेवता अपः प्रत्यधिदेवतां गौरीं पलाशसमिच्चर्वाज्यैः । प्रधानदेवतामङ्गारकमधिदेवतां पृथिवीं प्रत्यधिदेवतां स्कन्दं खादिरसमिच्चर्वाज्यैः । प्रधानदेवतां बुधमधिदेवतां विष्णुं प्रत्यधिदेवतां पुरुषं अपामार्गसमिच्चर्वाज्यैः । प्रधानदेवतां बृहस्पतिमधिदेवतामिन्द्रं प्रत्यधिदेवतां ब्रह्माणं अश्वत्थसमिच्चर्वाज्यैः । प्रधानदेवतां शुक्रमधिदेवतामिन्द्राणीं प्रत्यधिदेवतामिन्द्रं उदुम्बरसमिच्चर्वाज्यैः । प्रधानदेवतांशनैश्चरमधिदेवतां प्रजापतिं प्रत्यधिदेवतांयमं शमीसमिच्चर्वाज्यैः । प्रधानदेवतांराहुमधिदेवताःसर्पान्प्रत्यधिदेवतांकालं दूर्वाचर्वाज्यैः । प्रधानदेवतांकेतुमधिदेवतांब्रह्माणं प्रत्यधिदेवतां चित्रगुप्तं कुशचर्वाज्यैः विवक्षितसंख्याकैः । पार्श्वदेवताः प्रधानदशांशेन । क्रतुसाद्गुण्यदेवताः विनायकं दुर्गां क्षेत्रपालं वायुमाकाशमश्विनौ । क्रतुसंरक्षकदेवता इन्द्रमग्निं यमं निर्ऋतिं वरुणं वायुं कुबेरमीशानं प्रधानविंशांशेन । अग्निवायुसूर्यप्रजापतीन् तिलव्रीहिभिर्विवक्षितसंख्यया सूर्यमाज्येन त्रयोदशवारं अग्निं चतुस्त्रिंशद्वारं रुद्रं द्वात्रिंशद्वारं शेषेणाग्निंस्विष्टकृतमित्यादिसद्यो यक्ष्य इत्यन्तमुक्त्वा ॐभूर्भुवःस्वःस्वाहेत्यग्नावाधाय प्रजापतयेनममेत्युद्दिश्य त्यजेत् । ततो बर्हिःसंनहनाद्याज्ये दर्भाग्रद्वयनिधानान्तं कृत्वा लौकिकसिद्धान्नतिलव्रीहिभिः सहाज्यं त्रिःपर्यग्निकृत्वाज्योद्वासनं कृत्वा बर्हिषि निधाय स्रुचसंमार्जनं कृत्वा अन्नं पात्रान्तरे पृथक्कृत्याग्नावधिश्रित्य स्रुवेणाभिघार्योदगुद्वास्याज्यादक्षिणतो बर्हिषि निधाय प्रत्यभिघार्याग्म्यलंकरणाद्याज्यभागान्तं कृत्वा क्रमेणादित्यादीशानान्तेभ्य एकचत्वारिंशद्देवेभ्यस्तत्तन्मन्त्रैः समिच्चर्वाज्यैः प्रागुक्तसंख्याका आहुतीर्जुहुयात् । तत्रायं क्रमः—समिधं मूलतो

अङ्गुष्ठं विहाय तन्मध्यमानामिकाभ्यां गृहीत्वा जुहुयात् । चरुं ग्राससमं पाणिनैव । आज्यं स्रुवेणैव तदभावेऽश्वत्थपर्णेन वा । ततो व्यस्तसमस्तव्याहृतिभिः प्रभूततिलव्रीहीन्पाणिना हुत्वा सूर्यपावकरुद्रानाज्येन जुहुयात् । तत्र मन्त्राः—सूर्यो न इति पञ्चर्चस्य सूक्तस्य सौर्यश्चक्षुः सूर्यो गायत्री । उदुत्यमितिमन्त्रस्य काण्वः प्रस्कण्वः सूर्यो गायत्री । नमोमित्रस्येति मन्त्रस्य सौर्योऽभितपाः सूर्यो जगती । चित्रंदेवानामिति मन्त्रस्याङ्गिरसः कुत्सः सूर्यस्त्रिष्टुप् । उद्वेतिसुभगइति पञ्चर्चस्य मैत्रावरुणिर्वसिष्ठः सूर्यस्त्रिष्टुप् । त्वमग्ने प्रथम इत्यष्टादशर्चस्य सूक्तस्याङ्गिरसो हिरण्यस्तूपोऽग्निर्जगती अन्त्याष्टमीषोडश्यस्त्रिष्टुभः । त्वमग्नेद्युभिरितिषोडशर्चस्य सूक्तस्य गृत्समदोऽग्निर्जगती । कद्रुद्रायेतिषडर्चस्य घौरः कण्वो रुद्रोगायत्री तृतीयामैत्रावरुणी । इमारुद्रायतवस इत्येकादशर्चस्य सूक्तस्य कुत्सो रुद्रो जगती अन्त्येत्रिष्टुभौ । आतेपितर्मरुतामिति पञ्चदशर्चस्य सूक्तस्य गृत्समदो रुद्रस्त्रिष्टुप् । सर्वत्रग्रहमखाङ्गाज्यहोमे विनियोगः । सूर्यो नो दिवस्पातु वातो अन्तरिक्षात् । अग्निर्नः पार्थिवेभ्यः स्वाहा ॥ १ ॥ जोषा सवितर्यस्य ते हरः शतं सवाँ अर्हति । पाहि नो दिद्युतः पतन्त्याः स्वाहा ॥ २ ॥ चक्षुर्नो देवः सविता चक्षुर्न उत पर्वतः । चक्षुर्धाता दधातु नः स्वाहा ॥ ३ ॥ चक्षुर्नो धेहि चक्षुषे चक्षुर्विख्यै तनूभ्यः । सं चेदं वि च पश्येम स्वाहा ॥ ४ ॥ सुसंदृशं त्वा वयं प्रति पश्येम सूर्य । विपश्येम नृचक्षसः स्वाहा ॥ ५ ॥ उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यं स्वाहा ॥ ६ ॥ नमो मित्रस्य

१ बहुन उद्वेतीतिसार्धचतसृणामितिदृश्यते सर्वानुक्रमेप्येतावासा अर्धचतसृणामेव सौर्यकथन ग्रहणमस्ति तथासत्येकोनाशीतिमंत्रपूर्तये मन्त्रान्तकुरित्येतत्सूक्तातिमन्त्रगधेनहोमापत्ति स्यादितिदृश्या 'उद्वेतिसुभग पञ्चर्चोभिर्हुत्वा घृताहुती' इति कौस्तुभधृतपारिजातवाक्येन पञ्चानामित्येव युक्त ॥

वरुणस्य चक्षसे महो देवाय तदृतं सपर्यत । दूरे दृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शंसत स्वाहा ॥ ७ ॥ चित्रं देवाना-
मुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च स्वाहा ॥ ८ ॥ उद्वेति सुभगो
विश्वचक्षाः साधारणः सूर्यो मानुषाणाम् । चक्षुर्मित्रस्य वरुणस्य देवश्चर्मेव यः समविव्यक्तमांसि स्वाहा ॥ ९ ॥ उद्वेति प्रसवीता
जनानां महान्केतुरर्णवः सूर्यस्य । समानं चक्रं पर्याविवृत्सन्यदेतशो वहति धूर्षु युक्तः स्वाहा ॥ १० ॥ विभ्राजमान उषसामु-
पस्थाद्रेभैरुदेत्यनुमद्यमानः । एष मे देवः सविता चच्छन्द यः समानं न प्रमिनाति धाम स्वाहा ॥ ११ ॥ दिवो रुक्म उरुचक्षा उदेति
दूरे अर्थस्तरणिर्भ्राजमानः । नूनं जनाः सूर्येण प्रसूता अयन्नर्थानि कृणवन्नपांसि स्वाहा ॥ १२ ॥ यत्रा चक्रुरमृता गातुमस्मै
श्येनो नदीयन्नन्वेति पाथः । प्रति वां सूर उदिते विधेम नमोभिर्मित्रावरुणोत हव्यैः स्वाहा ॥ १३ ॥ त्वमग्ने प्रथमो अङ्गिरा
ऋषिर्देवो देवानामभवः शिवः सखा । तव व्रते कवयो विद्मनापसो जायन्त मरुतो भ्राजदृष्टयः स्वाहा ॥ १४ ॥ त्वमग्ने प्रथमो
अङ्गिरस्तमः कविर्देवानां परिभूषसि व्रतम् । विभुर्विश्वस्मै भुवनाय मेधिरो द्विमाता शयुः कतिधा चिदायवे स्वाहा ॥ १५ ॥
त्वमग्ने प्रथमो मातरिश्वन आविर्भव सुक्रतूया विवस्वते । अरेजेतां रोदसी होतृवूर्येऽसघ्नोर्भारमयजो महो वसो स्वाहा ॥ १६ ॥
त्वमग्ने मनवे द्यामवाशयः पुरूरवसे सुकृते सुकृत्तरः । श्वात्रेण यत्पित्रोर्मुच्यसे पर्या त्वा पूर्वमनयन्नापरं पुनः स्वाहा ॥ १७ ॥ त्वमग्ने
वृषभः पुष्टिवर्धन उद्यतस्रुचे भवसि श्रवाय्यः । य आहुतिं परि वेदा वषट्कृतिमेकायुरग्रे विश आ विवाससि स्वाहा ॥ १८ ॥
त्वमग्ने वृजिनवर्तनिं नरं सक्मन्पिपर्षि विदथे विचर्षणे । यः शूरसाता परितक्म्ये धने दभ्रेभिश्चित्समृता हंसि भूयसः स्वाहा

॥ १९ ॥ त्वं तम॑ग्ने अमृत॒त्व उ॑त्त॒मे मर्तं॑ दधासि॒ श्रव॑से दि॒वेदि॑वे । यस्ता॑तृषा॒ण उ॒भया॑य॒ जन्म॑ने॒ मयः॑ कृ॒णोषि॒ प्रय॒ आ च॑
सू॒रये॒ स्वाहा॑ ॥ २० ॥ त्वं नो॑ अग्ने स॒नये॒ धना॑नां य॒शसं॑ का॒रुं कृ॑णुहि॒ स्तवा॑नः । ऋ॒ध्याम॒ कर्मा॒पसा॒ नवे॑न दे॒वैर्द्या॑वा पृथिवी॒
प्राव॑तं नः॒ स्वाहा॑ ॥ २१ ॥ त्वं नो॑ अग्ने पि॒त्रोरु॒पस्थ॒ आ दे॒वो दे॒वेष्व॑नवद्य॒ जागृ॑विः । त॒नू॒कृद्बो॑धि॒ प्रम॑तिश्च का॒रवे॒ त्वं क॑ल्याण॒
वसु॒ विश्व॒मोपि॑षे॒ स्वाहा॑ ॥ २२ ॥ त्वम॑ग्ने॒ प्रम॑ति॒स्त्वं पि॒तासि॑ न॒स्त्वं व॑य॒स्कृत्तव॑ जा॒मयो॑ व॒यम् । सं त्वा॒ रायः॑ श॒तिनः॒ सं स॑-
ह॒स्रिणः॑ सु॒वीरं॑ यन्ति व्रत॒पाम॑दाभ्य॒ स्वाहा॑ ॥ २३ ॥ त्वाम॑ग्ने प्रथ॒मम॒ायुम॒ायवे॑ दे॒वा अ॑कृण्व॒न्नहु॑षस्य वि॒श्पति॑म् । इळा॑मकृण्व॒-
न्मनु॑षस्य॒ शास॑नीं पि॒तुर्यत्पु॒त्रो मम॑कस्य॒ जाय॑ते॒ स्वाहा॑ ॥ २४ ॥ त्वं नो॑ अग्ने॒ तव॑ देव पा॒युभि॑र्म॒घोनो॑ रक्ष त॒न्व॑श्च वन्द्य ।
त्रा॒ता तो॒कस्य॒ तन॑ये॒ गवा॑म॒स्यनि॑मेषं॒ रक्ष॑माण॒स्तव॑ व्र॒ते स्वाहा॑ ॥२५॥ त्वम॑ग्ने॒ यज्य॑वे पा॒युरन्त॑रो निष॒ङ्गाय॑ चतुर॒क्ष इ॑ध्यसे । यो रा॒तह॑व्यो
वृ॒काय॒ धाय॑से की॒रेश्चि॒न्मन्त्रं॒ मन॑सा व॒नोषि॒ तं स्वाहा ॥ २६ ॥ त्वम॑ग्न उरु॒शंसा॑य वा॒घते॑ स्पा॒र्हं यद्रेक्णः॑ पर॒मं व॒नोषि॒ तत् ।
आ॒ध्रस्य॑ चि॒त्प्रम॑तिरुच्यसे पि॒ता प्र पाकं॒ शास्सि॒ प्र दिशो॑ वि॒दुष्ट॑रः॒ स्वाहा॑ ॥ २७ ॥ त्वम॑ग्ने॒ प्रय॑त दक्षिणं॒ नरं॒ वर्मे॑व स्यू॒तं परि॑ पासि
वि॒श्वतः॑ । स्वा॒दु॒क्षद्मा॒ यो व॑स॒तौ स्यो॑न॒कृज्जी॑वया॒जं यज॑ते॒ सोप॒मा दि॒वः स्वाहा॑ ॥ २८ ॥ इ॒माम॑ग्ने श॒रणिं॑ मीमृषो न इ॒मम॑ध्वा॑नं॒
यमगा॑म दू॒रात् । आ॒पिः पि॒ता प्रम॑तिः सो॒म्याना॒ं भृमि॑रस्यृषि॒कृन्मर्त्या॑ना॒ं स्वाहा॑ ॥ २९ ॥ म॒नु॒ष्वद॑ग्ने अङ्गिर॒स्वद॑ङ्गिरो ययाति॒-
वत्सद॑ने पूर्व॒वच्छु॑चे । अच्छ॑ या॒ह्या व॑हा॒ दैव्यं॒ जन॒मा सा॑दय ब॒र्हिषि॒ यक्षि॑ च प्रि॒यं स्वाहा॑ ॥ ३० ॥ ए॒तेना॑ग्ने॒ ब्रह्म॑णा वावृधस्व॒
शक्ती॑ वा॒ यत्ते॑ चकृ॒मा वि॒दा वा॑ । उ॒त प्रणे॑ष्य॒भि वस्यो॑ अ॒स्मान्त्सं नः॑ सृज सुम॒त्या वाज॑वत्या॒ स्वाहा॑ ॥ ३१ ॥ त्वम॑ग्ने द्यु॒भिस्त्व॑-

मासुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः स्वाहा ॥ ३२ ॥ तवाग्ने होत्रं तव
पोत्रमृत्वियं तव नेष्ट्रं त्वमग्निदृतायतः । तव प्रशास्त्रं त्वमध्वरीयसि ब्रह्मा चासि गृहपतिश्च नो दमे स्वाहा ॥ ३३ ॥ त्वमग्न इन्द्रो
वृषभः सतामसि त्वं विष्णुरुरुगायो नमस्यः । त्वं ब्रह्मा रयिविद्ब्रह्मणस्पते त्वं विधर्तः सचसे पुरंध्यां स्वाहा ॥३४॥ त्वमग्ने राजा
वरुणो धृतव्रतस्त्वं मित्रो भवसि दस्म ईड्यः । त्वमर्यमा सत्पतिर्यस्य संभुजं त्वमंशो विदथे देवभाजयुः स्वाहा ॥ ३५ ॥ त्वमग्ने
त्वष्टा विधते सुवीर्यं तव ग्नावो मित्रमहः सजात्यम् । त्वमाशुहेमा ररिषे स्वश्व्यं त्वं नरां शर्धो असि पुरूवसुः स्वाहा ॥ ३६ ॥
त्वमग्ने रुद्रो असुरो महो दिवस्त्वं शर्धो मारुतं पृक्ष ईशिषे । त्वं वातैररुणैर्यासि शंगयस्त्वं पूषा विधतः पासि नु त्मना स्वाहा ॥३७॥
त्वमग्ने द्रविणोदा अरंकृते त्वं देवः सविता रत्नधा असि । त्वं भगो नृपते वस्व ईशिषे त्वं पायुर्दमे यस्ते विधत्स्वाहा ॥ ३८ ॥
त्वामग्ने दम आ विश्पतिं विशस्त्वां राजानं सुविदत्रमृञ्जते । त्वं विश्वानि स्वनीक पत्यसे त्वं सहस्राणि शता दश प्रति स्वाहा ॥३९॥
त्वामग्ने पितरमिष्टिभिर्नरस्त्वां भ्रात्राय शम्या तनूरुचम् । त्वं पुत्रो भवसि यस्ते विधत्त्वं सखा सुशेवः पास्याधृषः स्वाहा ॥ ४० ॥
त्वमग्न ऋभुराके नमस्य१ स्त्वं वाजस्य क्षुमतो राय ईशिषे । त्वं विभास्यनु दक्षि दावने त्वं विशिक्षुरसि यज्ञमातनिः स्वाहा ॥४१॥
त्वमग्ने अदितिर्देव दाशुषे त्वं होत्रा भारती वर्धसे गिरा । त्वमिळा शतहिमासि दक्षसे त्वं वृत्रहा वसुपते सरस्वति स्वाहा ॥ ४२ ॥
त्वमग्ने सुभृत उत्तमं वयस्तव स्पार्हे वर्ण आ संदृशि श्रियः । त्वं वाजः प्रतरणो बृहन्नसि त्वं रयिर्बहुलो विश्वतस्पृथुः स्वाहा ॥४३॥
त्वामग्न आदित्यास आस्य१ं त्वां जिह्वां शुचयश्चक्रिरे कवे । त्वां रातिषाचो अध्वरेषु सश्चिरे त्वे देवा हविरदन्त्याहुतं स्वाहा॥४४॥

त्वे अग्ने विश्वे अमृतासो अद्रुह आसा देवा हविरदन्त्याहुतम् । त्वया मर्तासः स्वदन्त आसुतिं त्वं गर्भो वीरुधां जज्ञिषे शुचिः
स्वाहा ॥ ४५ ॥ त्वं तान्त्सं च प्रति चासि मज्मनाग्ने सुजात प्र च देव रिच्यसे । पृक्षो यदत्र महिना वि ते भुवदनु द्यावापृथिवी रो-
दसी उभे स्वाहा ॥ ४६ ॥ ये स्तोतृभ्यो गोअग्रामश्वपेशसमग्ने रातिमुपसृजन्ति सूरयः । अस्मान् च तांश्च प्र हि नेषि वस्य आ बृह-
द्वदेम विदथे सुवीराः स्वाहा ॥ ४७ ॥ कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे । वोचेम शंतमं हृदे स्वाहा ॥ ४८ ॥
यथा नो अदितिः करत्पश्वे नृभ्यो यथा गवे । यथा तोकाय रुद्रियं स्वाहा ॥ ४९ ॥ यथा नो मित्रो वरुणो
यथा रुद्रश्चिकेतति । यथा विश्वे सजोषसः स्वाहा ॥ ५० ॥ गाथपतिं मेधपतिं रुद्रं जलाषभेषजम् । तच्छंयोः
सुम्नमीमहे स्वाहा ॥ ५१ ॥ यः शुक्र इव सूर्यो हिरण्यमिव रोचते । श्रेष्ठो देवानां वसुः स्वाहा ॥ ५२ ॥ शं नः करत्यर्वते सुगं
मेषाय मेष्ये । नृभ्यो नारिभ्यो गवे स्वाहा ॥ ५३ ॥ इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र भरामहे मतीः । यथा शमसद्द्वि-
पदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरं स्वाहा ॥ ५४ ॥ मृळा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते ।
यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु स्वाहा ॥५५॥ अश्याम ते सुमतिं देव यज्यया क्षयद्वीरस्य तव रुद्र
मीढ्वः । सुम्नायन्निद्विशो अस्माकमाचरारिष्टवीरा जुहवाम ते हविः स्वाहा ॥ ५६ ॥ त्वेषं वयं रुद्रं यज्ञसाधं वंकुं कविमवसे
निह्वयामहे । आरे अस्मद्दैव्यं हेळो अस्यतु सुमतिमिद्वयमस्या वृणीमहे स्वाहा ॥५७॥ दिवो वराहमरुषं कपर्दिनं त्वेषं रूपं नमसा
निह्वयामहे । हस्ते बिभ्रद्भेषजा वार्याणि शर्म वर्म च्छर्दिरस्मभ्यं यंसत् स्वाहा ॥ ५८ ॥ इदं पित्रे मरुतामुच्यते वचः स्वादोः

अपभर्तारपसो देव्यस्वामी नुमा वृषभ चक्षमीथाः स्वाहा ॥ ७१ ॥ प्रबभ्रवे वृषभाय श्वितीचे महो महीं सुष्टुतिमीरयामि । नमस्या कल्मलीकिनं नमोभिर्गृणीमसि त्वेषं रुद्रस्य नाम स्वाहा ॥ ७२ ॥ स्थिरेभिरङ्गैः पुरुरूप उग्रो बभ्रुः शुक्रेभिः पिपिशे हिरण्यैः । ईशानादस्य भुवनस्य भूरेर्नवा उयोषद्रुद्रादसुर्यं स्वाहा ॥ ७३ ॥ अर्हन्बिभर्षि सायकानि धन्वार्हन्निष्कं यजतं विश्वरूपम् । अर्हन्निदं दयसे विश्वमभ्वं नवा ओजीयो रुद्र त्वदस्ति स्वाहा ॥ ७४ ॥ स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् । मृळा जरित्रे रुद्र स्तवानोन्यं ते अस्मन्निवपन्तु सेनाः स्वाहा ॥ ७५ ॥ कुमारश्चित्पितरं वन्दमानं प्रति नानाम रुद्रोपयन्तम् । भूरेर्दातारं सत्पतिं गृणीषे स्तुतस्त्वं भेषजा रास्यस्मे स्वाहा ॥ ७६ ॥ या वो भेषजा मरुतः शुचीनि या शंतमा वृषणो या मयोभु । यानि मनुरवृणीता पिता नस्ता शं च योश्च रुद्रस्य वश्मि स्वाहा ॥७७॥ परि णो हेती रुद्रस्य वृज्याः परि त्वेषस्य दुर्मतिर्मही गात् । अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृळ स्वाहा ॥७८ ॥ एवा बभ्रो वृषभ चेकितान यथा देव न हृणीषे न हंसि । हवनश्रुन्नो रुद्रेह बोधि बृहद्वदेम विदथे सुवीराः स्वाहा ॥७९॥ एतैरेकोनाशीतिमन्त्रैः प्रतिमन्त्रं स्वाहान्तैराज्यं हुत्वा ग्रहवेद्यामाराधितैकचत्वारिंशद्देवताभ्यो चरुणा च गन्धादिग्रन्देनधूपदीपनैवेद्यताम्बूलादीन्पुष्पाञ्जल्यन्तानुपचारान्समर्प्य प्रसीदन्तु भवन्त इति तान्संप्रार्थ्य ऋत्विग्भिरन्वारब्धश्चरुतिलव्रीहिशेषेण स्विष्टकृतं हुत्वा इध्मसंनहनीमग्नौ प्रास्य प्रायश्चित्तादिहोमशेषं समाप्य यजमानेनान्वारब्धः सन्नाचार्यः पूर्णाहुतिमग्निपुरोक्तप्रकारेण हुत्वा विश्वेभ्यो देवेभ्यः संस्रावं हुत्वा पूर्णपात्रनिनयनोपस्थानपरिस्तरणविसर्जनपरिसमूहनपर्युक्षणाद्यर्चनपात्रोत्सर्जनानि कुर्यात् ।

अथाभिषेकः—अथ मण्डपस्यैशाने रङ्गवल्ल्या स्वस्तिकं परिकल्प्य चतुष्पाददीर्घचतुरस्रं सोत्तरच्छदं पीठं निधाय तत्रोदगग्रान्समूलान्हरितदर्भानास्तीर्य तत्र सामात्यं यजमानमुपवेश्य आचार्य ऋत्विग्भिः सह मङ्गलवाद्यैरभिषेककुम्भमादाय प्रत्यङ्मुखस्तिष्ठन्नौदुम्बर्यार्द्रया शाखया सपलाशया सहिरण्यपवित्रया सकुशदूर्वापल्लवया हस्तमन्तर्धाय कुम्भोदकपूयद्भिरब्लिङ्गाभिर्वारुणीभिः पावमानीभिरन्याभिश्च शान्तिपवित्रलिङ्गाभिर्ग्रहाभिषेकमन्त्रैः सुरास्त्वेत्यादिभिरिमा आपः शिवतमा इति तृचेन देवस्यत्वेति च यजुषा भूर्भुवःस्वरितिच व्याहृतिभिरभिषिञ्चेत्। तत्र मन्त्राः—आपो हि ष्ठेति नवर्चस्याम्बरीषः सिन्धुद्वीप आपो गायत्री पञ्चमी वर्धमाना सप्तमी प्रतिष्ठा अन्त्ये द्वे अनुष्टुभौ। आपो हिष्ठा० ९॥ प्रसम्राजमित्यष्टर्चस्य सूक्तस्य भौमोत्रिर्वरुणस्त्रिष्टुप्। प्रसम्राजे बृहदर्चा गभीरं ब्रह्म प्रियं वरुणाय श्रुताय। वि यो जघान शमितेव चर्मोपस्तिरे पृथिवीं सूर्याय॥ वनेषु व्य१ न्तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु। हृत्सु क्रतुं वरुणो अप्स्व१ग्निं दिवि सूर्यमदधात्सोममद्रौ॥ नीचीनवारं वरुणः कबन्धं प्रससर्ज रोदसी अन्तरिक्षम्। तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम॥ उनत्ति भूमिं पृथिवीमुत द्यां यदा दुग्धं वरुणो वष्ट्यादित्। समभ्रेण वसत पर्वतासस्तविषीयन्तः श्रथयन्त वीराः॥ इमामूष्वासुरस्य श्रुतस्य महीं मायां वरुणस्य प्रवोचम्। मानेनेव तस्थिवाँ अन्तरिक्षे वियो ममे पृथिवीं सूर्येण॥ १॥ इमामूनु कवितमस्य मायां महीं देवस्य नकिरादधर्ष। एकं यदुद्ना न पृणन्त्येनीरासिञ्चन्तीरवनयः समुद्रम्। अर्यम्यं वरुण मित्र्यं वा सखायं वा सदमिद्भ्रातरं वा। वेशं वा नित्यं वरुणारणं वा यत्सीमागश्चकृमा शिश्रथस्तत्॥ कितवासो यद्रिरिपुर्नदीवि यद्वाघा सत्यमुत यन्न विद्म। सर्वा ताविष्य शिथिरेव देवाधा ते स्याम वरुण प्रियासः

॥ २ ॥ स्वादिष्ठयेति दशर्चस्य सूक्तस्य मधुच्छन्दाः पावमानः सोमो गायत्री । स्वादिष्ठयामदिष्ठया० १० ॥ शं न इन्द्राग्नीति पञ्चदशर्चस्य सूक्तस्य वसिष्ठो विश्वेदेवास्त्रिष्टुप् । शं न इन्द्राग्नी० १५ ॥ पवित्रं ते विततमिति पञ्चर्चस्याङ्गिरसः पवित्रः पवमानः सोमो जगती । पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः । अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत्समाशत । तपोष्पवित्रं विततं दिवस्पदे शोचन्तो अस्य तन्तवो व्यस्थिरन् । अवन्त्यस्य पवीतारमाशवो दिवस्पृष्ठमधितिष्ठन्ति चेतसा ॥ अरूरुचदुषसः पृश्निरग्रिय उक्षा बिभर्ति भुवनानि वाजयुः । मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमादधुः ॥ गन्धर्व इत्था पदमस्य रक्षति पाति देवानां जनिमान्यद्भुतः । गृभ्णाति रिपुं निधया निधापतिः सुकृत्तमा मधुनो भक्षमाशत । हविर्हविष्मो महि सद्म दैव्यं नभो वसानः परि यास्यध्वरम् । राजा पवित्ररथो वाजमारुहः सहस्रभृष्टिर्जयसि श्रवो बृहत् ॥१॥ अथ ग्रहमन्त्रान्सुरास्त्वेत्यादिदेवमन्त्रांश्च पठेत् । ग्रहाणामादिरादित्यो लोकरक्षणकारकः । विषमस्थानसंभूतां पीडां हरतु ते रविः ॥ रोहिणीशः सुधामूर्तिः सुधागात्रः सुधाशनः । विषमस्थानसंभूतां पीडां हरतु ते विधुः ॥ भूमिपुत्रो महातेजा जगतां भयकृत्सदा । वृष्टिकृद्वृष्टिहर्ता च पीडां हरतु ते कुजः ॥ उत्पातरूपो जगतां चन्द्रपुत्रो महाद्युतिः । सूर्यप्रियकरो विद्वान्पीडां हरतु ते बुधः ॥ देवमन्त्री विशालाक्षः सदा लोकहिते रतः । अनेकशिष्यसंपूर्णः पीडां हरतु ते गुरुः ॥ दैत्यमन्त्री गुरुस्तेषां प्राणदश्च महामतिः । प्रभुस्ताराग्रहाणां च पीडां हरतु ते भृगुः ॥ सूर्यपुत्रो दीर्घदेहो विशालाक्षः शिवप्रियः । मन्दचारः प्रसन्नात्मा पीडां हरतु ते शनिः ॥ महाशिरा महावक्त्रो दीर्घदंष्ट्रो महाबलः । अतनुश्चोर्ध्वकेशश्च पीडां हरतु ते तमः ॥ अनेकरूपवर्णैश्च

शतशोऽथ सहस्रशः । उत्पातरूपो जगतः पीडां हरतु ते शिखी ॥ अथ देवमन्त्राः—सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः । वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते । आखण्डलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जा वपुः शान्तिः कान्तिस्तुष्टिश्च मातरः । एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ॥ आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः । ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ॥ देवदानवगन्धर्वा यक्षराक्षसपन्नगाः । ऋषयो मनवो गावो देवमातर एवच ॥ देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः । अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च । औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ सरितः सागराः शैलास्तीर्थानि जलदा नदाः । एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥ एतैरुक्तमन्त्रैः प्रतिमन्त्रमभिषिच्य श्रीसूक्तेनेमा आपः शिवतमा इत्यृक्त्रयेण देवस्यत्वेति च यजुषा भूर्भुवः स्वरिति व्याहृतिभिश्चाभिषिञ्चेत् । एवमभिषिक्तो यजमानोऽहतवस्त्रयुगं गन्धमाल्याभरणं च बिभृयात् ॥

बलिप्रदानम्—तत आचार्यो दिक्षुविदिक्षु इन्द्रादिभ्यः सर्वभूतेभ्यश्च यथाक्रममावाहनाद्युपचारार्पणपूर्वकं बलीन्हरेत् । तत्रायं क्रमः—ऐह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधरामरेश । संपूज्यमानोऽप्सरसां गणेन रक्षाध्वरं मे भगवन्नमस्ते । इति संप्रार्थ्य इन्द्राय

---

पाठा०—१ बलिविषय एह्येहीत्यादिर्विक्षिप्तो भाग आन्ध्रमुद्रितग्रन्थ एवोपलब्धो नान्यकोशेषु । तथाच तत्र बलिदानोत्तरमेवाभिषेकादिक्रमो दृश्यते तथाप्येवमभिषिक्तो यजमान इत्युक्त्याच्छिद्यत क्रम एवानोरीकृतः ।

स्वाहेति बलिं दत्त्वा इन्द्रायेदं नममेत्युद्दिश्य त्यजेदेवं सर्वत्र ॥ एह्येहि यज्ञेश्वर हव्यवाह मुनिप्रवीरैरभितोऽभिजुष्ट । तेजोवता लोकगणेन सार्धं ममाध्वरं पाहि कवे नमस्ते । इति संप्रार्थ्य अग्नये स्वाहेति बलिं त्यजेत् ॥ एह्येहि वैवस्वत धर्मराज सर्वामरैरर्चित धर्ममूर्ते । शुभाशुभानन्दशुचामधीश लोकेश्वरस्त्वं भगवन्नमस्ते । इति संप्रार्थ्य यमाय स्वाहेति बलिं दत्त्वा त्यजेत् ॥ एह्येहि रक्षोगणनायक त्वं विशालवेतालपिशाचसंघैः । ममाध्वरं पाहि शुभानि देहि लोकेश्वरस्त्वं भगवन्नमस्ते । निर्ऋतये स्वाहा इति बलिं दत्त्वा त्यजेत् ॥ एह्येहि पाथोनिधिवाहिनीनां गणेन पर्जन्य सहाप्सरोभिः । विद्याधरेन्द्रामरगीयमान पाहि त्वमस्मान्भगवन्नमस्ते । इति संप्रार्थ्य वरुणाय स्वाहेति बलिं दत्त्वा त्यजेत् ॥ एह्येहि यज्ञं मम रक्षणाय मृगाधिरूढः सह सिद्धसंघैः । प्राणाधिपः काल कवेः सहाय गृहाण पूजां भगवन्नमस्ते । इति संप्रार्थ्य वायवे स्वाहेति बलिं दत्त्वा त्यजेत् ॥ एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्धम् । सर्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते । इति संप्रार्थ्य सोमाय स्वाहेति बलिं दत्त्वा त्यजेत् ॥ एह्येहि विश्वेश्वर सत्रिशूलकपालखट्वाङ्गगणेन सार्धम् । लोकेश भूतेश्वर यज्ञरक्षिन् गृहाण पूजां भगवन्नमस्ते ॥ इति संप्रार्थ्य ईशानाय स्वाहेति बलिं दत्त्वा त्यजेत् ॥ एह्येहि पातालधरामरेन्द्र नागाङ्गनाकिंनरगीयमान ॥ यक्षोरगेन्द्रादिगणेन सार्धमनन्त रक्षाध्वरमस्मदीयम् । इति संप्रार्थ्य अधोभागस्थितायानन्ताय पश्चाद्भागे दद्यात् ॥ एह्येहि विश्वाधिपते सुरेन्द्र लोकेश सार्धं पितृदेवताभिः । सर्वस्य धातास्यमितप्रभाव रक्षाध्वरं नः सततं शिवाय । इति संप्रार्थ्य ऊर्ध्वभागस्थिताय ब्रह्मणे इन्द्रस्य पूर्वभागे दद्यात् । त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च । ममैतान्यध्वरे रक्षां प्रकुर्वन्तु मुदा सदा । सर्वेभ्यो भूतेभ्य इति ब्रह्मणः

पूर्वभागे दद्यात् । एवमेकादश बलीन्दद्यात् । ततः सुवासिनीभिर्नीराजितविग्रहो यजमानो ग्रहदेवताभ्यश्चतुर्थ्यन्तनामभिर्गन्धपुष्पादिसमर्प्य आचार्येण व्याहृत्युच्चारणपूर्वकं ग्रहोद्वासनं कारयित्वा आचार्यप्रभृतिभ्यो ब्राह्मणेभ्यो जपहोमफलं गृहीत्वा शक्तौ तेभ्यः प्रतिपदोक्तदक्षिणां दद्यात् । तदभावे यथाशक्ति सुवर्णं दत्त्वा आचार्याय द्विगुणं दत्त्वाज्यावेक्षणं तद्दानं च कुर्यात् । तत एकस्या आहुतेरेकं शतस्यैकं सहस्रस्यैकमिति वा शक्तितारतम्येन ब्राह्मणान्भोजयित्वा तेभ्यः शान्तिः पुष्टिस्तुष्टिश्चास्त्वित्याद्याशिषो गृहीत्वा तान्संप्रार्थ्य प्रणिपत्य न्यूनातिरिक्ताच्छिद्रत्वार्थं यथाशक्ति नाममन्त्रजपं कृत्वा ग्रहयज्ञफलं विष्णवे समर्प्य स्वयं हृष्टमना बन्धुभिः सह भुञ्जीत ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे ग्रहयज्ञप्रकरणम् ॥

अथ वास्तुहोमविधिः । [1]'विलमण्डलमेतेषां यथावदभिधीयते । दीक्षायागप्रतिष्ठासु चतुःषष्टिपदं स्मृतम् ॥ एकाशीतिपदं प्रोक्तं ग्रहवास्तोस्तु मण्डलम् । प्रागग्राश्चोदगग्राश्च दश रेखाः समालिखेत् । एकाशीति पदानि स्युः समुद्भूतानि तत्र तु ॥ ब्रह्माणं पूजयेदादौ मध्ये नवपदे ततः । दिक्षट्पदे च पूर्वादि यजेदर्यमणं ततः । विवस्वन्तं ततो मित्रं महीधरमतः परम् । आग्नेयकोष्ठद्वितये सावित्रं परिपूजयेत् । सवितारं यजेत्तस्योभयपार्श्वद्विकोष्ठके । शक्रं शक्रजयं तद्वन्नैर्ऋताचरचतुष्टये । रुद्रं रुद्रजयं तद्वत्प्रभञ्जनचतुष्टये । आपापवत्सकौ तद्वदीशानस्थचतुष्टये । ईशानादिचतुर्दिक्षु चाष्टावष्टौ पदेपदे । ईशानाख्यश्च पर्जन्यो जयन्तश्चकभास्करौ । सत्यो वृषान्तरिक्षौ च दिशि प्राच्यां व्यवस्थिताः । अग्निः पूषा च वितथो यमश्च ग्रहरक्षकः । गन्धर्वो भृङ्गराजश्च मृगो

पाठा०—१ अथ वास्तुहोमोनान्यकौशारसगृहीतोक्ति ।

रक्षोदिगाश्रिताः । निर्ऋतिर्दौवारिकश्च सुग्रीववरुणौ ततः । पुष्पदन्तसुरौ शेषरोगौ प्रत्यग्दिगाश्रिताः । वायुर्नागश्च मुख्यश्च सोमो भल्लाट एव च । अर्गलाख्यो दित्यदिती कुबेरस्य दिगाश्रिताः । बहिः प्रागाद्यष्टदिक्षु पूजयेदष्ट देवताः । शर्वं गुहं चार्यमणं जृम्भकं पिलिपिञ्छकम् । चरकीं च विदारीं च पूतनामर्चयेत्क्रमात् । शर्वस्थाने वदन्त्यन्ये पूतनां पापराक्षसीम् । चतुर्भुजं जटामौलिं कमण्डल्वक्षधारिणम् । हेमाभमब्जजं यष्ट्वा गन्धाद्यैरुपचारकैः । दध्याज्यगुडमिश्रेण शुद्धान्नेन बलिं हरेत् । अर्यमा श्वेतवर्णस्तु विवस्वान्रक्तवर्णकः । शातकुम्भनिभो मित्रः कृष्णवर्णो महीधरः । सावित्रो मधुवर्णः स्यात्सविता नीलवर्णकः । अरुणाभस्तथा शुक्रः शुक्रः कृष्णजयः स्मृतः । प्रवालाभस्तथा शुक्रः पीतो रुद्रजयः स्मृतः । श्वेतवर्णस्तथापस्तु जपाभस्त्वापवत्सकः । नीलवर्णस्तथेशानः पर्जन्यो जलवर्णकः । जयन्तः कृष्णवर्णस्तु शक्रः स्याच्छ्यामवर्णकः । भास्करः श्वेतवर्णः स्यान्नभामस्त्वन्तरिक्षकः । अग्निरग्निनिभः प्रोक्तः पूषा रक्ताब्जसंनिभः । वितथश्चेन्द्रचापाभो यमः कृष्णाञ्जनप्रभः । यमरक्षस्तथा रक्तो गन्धर्वः पद्मरागभृत् । भृङ्गराजस्तु भृङ्गाभो धूम्रवर्णो मृगस्तथा । निर्ऋतिः पावकाभस्तु सितो दौवारिकः स्मृतः । सुग्रीवः शितिकण्ठाभो वरुणः श्वेतवर्णयुक् । जपाभः पुष्पदन्तस्तु कृष्णवर्णः सुरः स्मृतः । उत्पलाभस्तथा सोमो रोगो हारिद्रसंनिभः । वायुः स्याद्धूम्रवर्णस्तु नागः शङ्खनिभः स्मृतः । मुख्यो मुक्तानिभः प्रोक्तः सोमः कनकवर्णयुक् । भल्लाटः श्वेतवर्णः स्यादर्गलश्चोत्पलद्युतिः । कपिलाभा दितिः प्रोक्ता ह्यदितिः कुमुदद्युतिः । शर्वो जलदसंकाशः प्रवालाभो गुहः स्मृतः । अर्यमा हेमवर्णस्तु जृम्भको हेमवर्णकः । सिताभः पिलिपिञ्छः स्याच्चरकी शङ्खवर्णयुक् । विदारी पावकाभा स्यात्पूतना हेमसंनिभा । सर्वेष्यानगता चेत्या नी-

लाभा पापराक्षसी । चतुर्भुजयुता ह्येते खड्गखेटकधारिणः । कृताञ्जलिपुटाः सर्वे देवाः स्वस्वपदे स्थिताः । दिक्ष्वग्न्यादिचतुर्णां तु पायसो बलिरुच्यते । सवित्राद्यष्ट देवानां कृसरं बलिरुच्यते । दक्षिणाद्यष्टदेवानां गुडान्नं बलिरुच्यते । प्रत्यक्तु निर्ऋतादीनां घृतान्नं बलिरुच्यते । उदग्वाय्वादि देवानां दध्यन्नं बलिरुच्यते । बहिः शर्वादिदेवानां मुद्गान्नं बलिरुच्यते । तत्तन्नामचतुर्थ्यन्तैः स्वाहान्तैः प्रणवादिकैः । उच्चार्य गन्धपुष्पाद्यैः संपूज्योक्तं बलिं क्षिपेत् ॥ ॥ अथ वास्तुमूर्तिलक्षणम् । दण्डपाशधरं देवं द्विभुजं वास्तुपूरुषम् । मण्डले मध्यगं श्वेतं दधानं नररूपताम् । मण्डलेशानभागे तु गङ्गामावाहयेन्नरः । तत्कथां कथयिष्यामि राजन्नेकाग्रमानसः । स्थापयेच्चतुरः कुम्भान्प्रत्येकं वस्त्रवेष्टितान् । व्रीहिराशिषु संस्थाप्य पूरयेत्तीर्थवारिभिः । प्रसुवआप इत्यृग्भिर्जपेन्नद्या प्रपूरितम् । एकैकस्य चतसृषु सदूर्वासु शिलास्वथ । नवरत्नं हिरण्यं वा सहौषधि विनिक्षिपेत् । आकलशेष्विति नया कुशकूर्चं विनिक्षिपेत् । अन्यान्याप्यानि सूक्तानि जपेत्कलशवारिषु । आवाहनाद्युपचारान्कारयेच्च यथाविधि । कुम्भालाभे कथं कुर्वन्नेककुम्भे समर्चयेत् । वास्तुमण्डलवारुण्ये सर्वतोभद्रमुद्धरेत् । कुण्डं त्रिमेखलं कार्यं मण्डलेशानभागतः । हस्तप्रमाणविस्तारं खातेन च करोन्मितम् । अथवा स्थण्डिलं कुर्यादुल्लेखं तु स्वशाखया । तत्र होमः प्रकर्तव्यः समिद्भिः क्षीरजातिभिः । पालाशैः खादिरैर्वापि कुशैर्दूर्वाभिरेव वा । निम्बैर्वा निम्बबीजैर्वा यथासंभवमाहृतैः । निरूप्य वास्तोष्पतये तूष्णीं प्रोक्षेत तण्डुलान् । तस्यैवोपासने वह्नावधिश्रित्य चरुं पचेत् । होमकाले चरोरन्नमवदाय यथाविधि । वास्तोष्पत इत्येताभिर्ऋग्भिश्चतसृभिः क्रमात् । अष्टोत्तरशतं हुत्वा यज्ञियैर्वा द्विजः शुचिः । व्याहृतीभिश्च हुत्वाग्नौ घृतेन च ततः परम् । संजीविन्या ततो हुत्वा

पयसा हविषा तथा । गायत्र्या च तथान्येन शतमष्टोत्तरं पुनः । देवतानां पृथक्कुर्याद्धोममष्टोत्तरं शतम् । अष्टाधिकां विंशतिं वा प्रतिदेवं समाचरेत् । हुत्वा स्विष्टकृतं होमं ततः कुर्याद्यथाविधि । होमोऽत्र प्रत्यृचमिति प्रकारः कश्चिदत्र च । समावर्तनचन्मन्त्रं वचनानन्तरं हविः । अग्नौ प्रक्षिप्य तदनु स्वाहाशब्दमुदीरयेत् । निर्ऋतेर्वायुदिग्भागे बलिं दद्यात्तथाऽनले । गेहं तु प्रोक्षयेत्पश्चादमृतं कलशोदकम् । कृतोपरिष्टात्तन्त्रं तु तद्गृहे पक्वमोदनम् । विधाय वास्तुपूजां च गृहं सूत्रेण सर्वतः । पावमानेन सूक्तेन राक्षोघ्नेन च वेष्टयेत् । माङ्गल्यतूर्यघोषेण कुर्याद्ब्राह्मणवाचनम् । ब्राह्मणान्भोजयित्वा तैः पुण्याहमथ वाचयेत् । तेभ्यश्च दक्षिणां दद्याद्धोतृभ्यश्च विशेषतः । ततः संप्रविशेद्देहं गृही तु समलंकृतम् । शोभितं दधिदूर्वाभिः पूर्णकुम्भैः समन्वितम् । दीपैरङ्कुरपा(प)त्रैश्च द्वारस्थैः सुमनोहरैः । विनायकं तु संपूज्य फलपुष्पगुडौदनैः ॥ धात्रीफलानां लवणैः सपूर्णं सकांस्यपात्रं सिततण्डुलैश्च । कुर्यात्प्रवेशं सह भार्ययाशु लक्ष्मीं सरन्गेहमनिन्दितायाम् ॥ प्रविश्य बन्धून्संपूज्य सुखासीनो भवेत्तदा । एवं प्रवेशनं कुर्वन्सुखी भवति सर्वदा ॥ शिवं वास्तु शिवं वास्तु भवतु प्रार्थिताः पुरा । शिवं वास्तु शिवं वास्तु प्रतिब्रूयुस्तु ते द्विजाः ॥ इत्येवं नूतनागारप्रवेशे चोदितो विधिः । ध्वस्तस्याथ पुनः क्षतगृहस्यापि प्रयुज्यताम् ॥ अकवाटमनाच्छन्नमदत्तबलिभोजनम् । गृहं न प्रविशेदेव विपदामाकरं हि तत् ॥

अथ वास्तुहोमप्रयोगः । एवंगुणविशेषणविशिष्टायां तिथावस्य यजमानस्य सकुटुम्बस्य क्षेमस्थैर्यायुरारोग्यैश्वर्याभिवृद्ध्यर्थं छेदनभेदनघर्षणताडनादिसर्वारिष्टदोषपरिहारार्थं वास्त्वङ्गत्रिपञ्चाशद्देवताप्रीत्यर्थमेकाग्निवदध्वरप्रकारेण वास्तुहोमं करिष्ये' ।

तदङ्गमन्वाधानं करिष्ये । अस्मिन्नन्वाहितेष्वाचित्यादि चक्षुषी आज्येनेत्यन्तमुक्त्वा—वास्तोष्पतिं प्रधानदेवतां वास्तोष्पत इत्यादि चतसृभिर्ऋग्भिः पलाशखादिरौदुम्बरदूर्वाभिः प्रत्येकमष्टाविंशतिसंख्यया समिच्चर्वाज्यैः अग्निं वायुं सूर्यं प्रजापतिं चाष्टाष्टसंख्यया व्याहृतिभिराज्येन संजीविन्या यथासंभवं पायसेन सवितारं गायत्र्या अष्टाविंशतिसंख्यया समिच्चर्वाज्यैः इन्द्रादीनष्टौ लोकपालानेकैकसंख्यया समिच्चर्वाज्यैः यथासंभवं तिलव्रीहिभिः शेषेण स्विष्टकृतमित्यादि । दध्याज्यगुडमिश्रान्नेन ब्रह्मणेस्वाहा ब्रह्मण इदं नमम । वास्तोष्पत इति चतुर्ऋचस्य वसिष्ठऋषिः वास्तोष्पतिर्देवता त्रिष्टुप् छन्दः अन्त्या जगती । वास्तोष्पते प्रति० ४ वास्तोष्पत इदं नममेत्युद्दिश्य त्यजेत् । स्विष्टकृदादिहोमशेषं समापयेत् ॥ इति वास्तुहोमविधिः ॥

अथ गर्भाधानप्रकरणम् । गर्भीकृतमुपनिषदा दुर्भरमुपयामि शरणमखिलेशम् । गर्भीकृतभुवनं यं गर्भे धत्तेन्द्ररिपुगृहस्थूणा ॥ अथेदानीमुद्देशक्रमप्राप्तो गर्भलम्भनविधिरभिधीयते । तत्र तावद्‌ब्रह्म—'उपनिषदि गर्भलम्भनं पुंसवनमनवलोभनं च' इति । अस्यार्थः—उपनिषधारण्यके रहस्यब्राह्मणे 'स्वकर्मवशादात्मशरीरमुपादत्ते' इत्यादिप्रसङ्गेन यदाम्नातं गर्भलम्भनकर्मत्रयं तत्कर्तव्यमित्यर्थः । गर्भो लभ्यते येन कर्मणा निषिक्तं वीर्यममोघं भवति तद्गर्भलम्भनम् । पुमान् लब्धो जायते येन तत्पुंसवनम् । पुमांश्च सन् येन नावलुप्यते न स्रवति तदनवलोभनम् । वर्णविकारो द्रष्टव्यः पृषोदरादित्वात् । एतानि कस्यांचिदुपनिषद्याम्नातानि । न केवलमेतानि किंतर्हि गर्भाधानादय आत्मज्ञानपर्यन्ता आम्नाता अस्मच्छाखायां न विद्यन्त इत्यतस्तत्कर्म कर्तव्यमित्युपदिश्यते । तथा उत्सन्नत्वाद्यदि वा नाधीयात्तत एवं कुर्यादित्याह । नाधीयादिति परस्मैपदम् । एतद्गर्भा-

धानमाचार्येणानुक्तमिति कृत्वा न कार्यमित्येके । अन्ये पुनः शौनकाद्युक्तमार्गेण कार्यमित्याहुः । तदुक्तं भगवता—'गर्भलम्भः पुंसवनं गर्भस्यानवलोभनम् । इति कर्मत्रयमिदं यज्ञोपनिषदीरितम् ॥ तमधीतवतः कर्मत्रयं तत्रैव सुग्रहम् । अनधीतवतस्त्वेष प्रयोगोऽत्र निबध्यते ॥ निषिक्तो यत्प्रयोगेण गर्भः संधार्यते स्त्रिया । तद्गर्भलम्भनं नाम कर्म प्रोक्तं मनीषिभिः ॥ पुमान्प्रसूयते येन तत्पुंसवनमीरितम् । न लुप्येत्र सर्वेषेन तत्कर्मानवलोभनम् ॥ अन्ये द्वे कर्मणी प्राहुस्तयोः कल्पोऽत्र कथ्यते' इति । आचार्यस्तु—'अनर्तुमत्यां भार्यायां न कार्यं गर्भलम्भनम् । ऋतुमत्यां तु तस्यां वै तत्कार्यं ब्रह्मचारिणा ॥ ब्रह्मचार्यत्र स्वदारनिरतः । प्राग्रजोदर्शनात्पत्नीं नेयाद्गत्वा पतत्यधः । व्यर्थीकारेण शुक्रस्य ब्रह्महत्यामवाप्नुयात्' इति ॥ रजो नाम स्त्रीषु देवेन्द्रेण विभज्य स्थापितो ब्रह्महत्यायास्तृतीयो भागः ॥ तथाच श्रूयते यजुःसंहितायाम्—'कामंमुन्यस्य सस्त्रीषु सादमुपासीददुस्यै ब्रह्महत्यायै तृतीयं प्रतिगृह्णीतेति ता अब्रुवन्वरं वृणामहा ऋत्वियात्प्रजां विन्दामहै काममा विजनितोः संभवामेति तस्मादृत्वियास्त्रियः प्रजां विन्दन्ते काममा विजनितोः संभवन्ति वारे वृत्तस्ह्यासीत्तृतीयं ब्रह्महत्यायै प्रत्यगृह्णंस्ता मलवद्वाससा अभवन् तस्मान्मलवद्वाससा न संवदेत' इति ॥ अस्यानुवाकस्यार्थः पुराणे स्पष्टीकृतः स्मृतिमञ्जर्याम्—'देवतानां पुरोधास्तु त्वष्टानाम द्विजोत्तमः । भगिनी पूर्वदेवानां तस्य भार्या तयोः सुतः ॥ विश्वरूप इति ख्यातः शिरोभिर्जायते त्रिभिः । एकास्ये सोमपानं च सुरापानं च मध्यमे । वामपार्श्वेऽन्नमश्नंश्च स्वेच्छया चरते दिवि । देवताभ्यो हविर्भागान् पिधाय च ददात्यसौ । अपिधायासुरेभ्यस्तु मातुलप्रेमसंयुतः ॥ उत्पाता दिव्यजायन्त एतत्कृत्यस्य कर्मणा । तस्मात्सुरपतिर्भीतः स्वराज्यच्युतिशङ्कया ॥ अच्छिनत्तस्य शी-

र्पाणि वज्रमादाय सत्वरः । यत्सोमपानवदनमभवत्स कपिञ्जलः । अभवद्यत्सुरापानं कलविङ्कः सशीर्षकम् ॥ यदन्नादनमास्यं तु क्रमादासीत्स तित्तिरिः । ततस्तां ब्रह्महत्यां च वासवोऽञ्जलिनाग्रहीत् । ब्रह्महत्यासमोपेतः प्रच्छन्नोऽब्दं चचार सः । स्वास्यैर्भूतानि चाक्रोशन्देवेन्द्रो ब्रह्महन्निति । स धरित्रीमुपास्यैतां पृथिवीमब्रवीद्द्रुपा । ब्रह्महत्यातृतीयांशं त्वं गृहाणेति मत्कृतम् । सा तत्पराभवो मा भूदितीन्द्रं प्रत्युवाच ह । सोऽब्रवीद्वत्सरादर्वाग्गर्तः पूर्णो भविष्यति । इन्द्राद्वरं प्रतिग्राह्य हर्षयन्त्यभवद्धरात् । तस्मात्संवत्सरादर्वाक्खातं च परिपूर्यते । सेन्द्रस्य ब्रह्महत्यायास्तृतीयं भागमग्रहीत् । तत्पापमिरिणं भूमावभवत्स्वकृतं यतः । इरिणं न स्पृशेत्तस्माद्ब्रह्महत्यासवर्णकम् । ततस्तरूनुपास्यैतान्सोऽब्रवीद्यन्मया कृतम् । भवन्तः प्रतिगृह्णन्तु ब्रह्महत्यातृतीयकम् ॥ यामवं तरवोऽप्यूचुरस्माकं छेदनात्परम् । प्रभवन्त्वङ्कुराश्चेति वरो देयस्त्वयाधुना ॥ इन्द्रस्तथा करोमीति वृक्षाणामददाद्वरम् । तस्माद्वृक्षाश्च भूयांस उत्तिष्ठन्ति लुनात्परम् ॥ ब्रह्महत्यातृतीयांशं प्रत्यगृह्णन्महीरुहः । सोऽभवद्वृक्षनिर्यासो ब्रह्महत्यासवर्णकः । तस्माल्लोहितनिर्यासं न स्पृशेन्न च खादयेत् । स भूयः स्त्रीसभां गत्वा ह्युपासीददथाब्रवीत् । ब्रह्महत्यातृतीयांशं संप्रगृह्णीत मत्कृतम् ॥ ता अब्रुवन्वरं शक्रं प्रियायावत्प्रजोद्भवेत् । घृणीमहे कामभोगमाप्रसूतेर्यथेप्सितम् ॥ ब्रह्महत्यातृतीयांशं प्रत्यगृह्णंस्त्रियोऽपि च । तस्मात्स्त्रियः प्रजालाभमृतौ सुरतसंगमात् ॥ आप्रसूतेः प्रियैः सार्धं संभोगांश्च लभन्ति हि । ततश्च मलवद्वासा अभवन्योपितस्तदा । नाभिमूले स्थितं पुष्पं चतुर्दलसमन्वितम् । तस्मिन्सर्वाश्च दधते गर्भसंभवकारणम् ॥ अधोमुखं स्थितं

स्त्रीणां तद्बाल्ये मुकुलीकृतम् । बाल्यात्परवयःप्राप्ते मुकुलं विकसद्भवेत् ॥ उत्फुल्लकुसुमं स्त्रीणां स्वभावेन स्रवेद्रजः । तदाप्रभृति सर्वासां मासि मासि ऋतुर्भवेत्' इति । इति रजःप्राप्तिविचारः ॥

अथ प्रथमार्तवफलकालनिर्णयः । तत्र तिथिफलं श्रीधरीये गुरुः—'प्रथमायां पतिं हन्ति द्वितीयायां सुखं भवेत् । तृतीयायां श्रियै स्याच्च चतुर्थ्यां वृषली भवेत्॥पञ्चम्यां पुत्रलाभश्च षष्ठ्यां चारित्रविक्रिया । सप्तम्यां पुत्रवृद्धिः स्यादष्टम्यां सुखनाशनम्॥नवम्यां रुदती नित्यं दशम्यां धर्मशालिनी । एकादश्यां पतिस्निग्धा द्वादश्यां क्रन्दती भवेत् ॥ त्रयोदश्यां मानधना तत्परा बहुदोषकृत् । पर्वण्यननुगृहीता स्याद्धन्या देवतिथेरंशात्' इति । स्मृतिरत्ने—'शुभं चैव तु पूर्वाह्णे मध्याह्ने मध्यमं फलम् । अपराह्णे तु वैधव्यं पूर्वरात्रे शुभं भवेत् ॥ मध्यरात्रौ तु मध्यं स्यात्पररात्रौ शुभान्यथ । तिथीनां फलमेवं हि' ॥❀॥ अथ वारफलम्—'वाराणां फलमुच्यते ॥ भानुवारे भवेद्व्याधिरिन्दुवारे पतिव्रता । बहुरोगा बहुक्लेशा पतिहीना कुजे दिने ॥ बहुपुत्रवती सौम्ये सर्वसंपद्गुरोर्दिने । सौभाग्यसुखसंपत्तिः शुक्रवारे पतिव्रता ॥ कृच्छ्रबुद्धिर्महाव्याधिः स्वयमर्थस्य चोरिणी । मन्दवारे विनाशः स्यात्प्रथमर्तौ रजस्वला' इति ॥ नारदीये—'रुग्णा पतिव्रता दुःखी पुत्रिणी भोगभागिनी । पतिप्रिया क्लेशवती सूर्यवारादिषु क्रमात्'इति॥❀॥अथ नक्षत्रफलम् । वसिष्ठः—'बहुसुतधनसंपच्छीलसौभाग्ययुक्ता विगतनिखिलदोषा दास्रभे पुष्पिणी या । सुरगुरुपतिभक्ता मानिनी बन्धुमान्या बहुधनवसनाद्यैर्भूषणैर्भूषिता स्यात् ॥ परपुरुषरता स्याद्दुर्भगा याम्यधिष्ण्ये विविधचपलभाषा भूषणासक्तवार्ता । नियतमनृतवाक्या सज्जन-

पाठा०—१ क्रन्दिनी भवेत् । २ क्लेशभागी ।

द्वेषयुक्ता स्वपतिहितविहीना छद्मपापा खला स्यात् ॥ वैश्वानरर्क्षे बहुपुत्रमित्रधनान्विता सत्यवती गुणाढ्या । विस्तीर्णकामा प्रियवादिनी सामानामहोद्धप्रवरा कलाढ्या' इति ॥ नारदस्त्वेवमाह—'अनर्थी पुंश्चली वन्ध्या गर्भपातनतत्परा । प्रेष्या मृतप्रजा वापि गर्हिमे प्रथमार्तवा' इति ॥ पितामहर्क्षे सुगुणानुवृत्ता पतिप्रिया धर्मवती धनाढ्या । बन्धुप्रिया मानरता सुरूपा प्रवृत्तचित्ता प्रविकीर्णकामा ॥ सदा मृगे भाग्यवती सुवृत्ता कलानुरक्ता विपुलार्थयुक्ता । पतिप्रिया मानवती बहुज्ञा प्रजावती बन्धुजनैः सुमान्या ॥ महेशभे पुष्पवती विशीला नृपानुरक्ता परकार्ययुक्ता । पत्युज्झिता पुष्पवती गतस्त्रा परप्रिया दुःखवती विपुत्रा ॥ मायाविनी कापटिका विशीलाऽदित्याख्यधिष्ण्ये कुचरित्रयुक्ता । वन्ध्या पुनर्भूः परसद्मरक्ता नृपापरा पुष्पवती कलाढ्या ॥ नारदः—'पतिभक्ता पुत्रवती पतिसंतानमोहिनी । कुलाचारानुरक्ताढ्याऽदितिभे प्रथमार्तवा' इति ॥ सुगन्धपुष्पाम्बरभूषणेषु रता सदा गीतनिबद्धचित्ता । पुष्ये तगम्यागमने रतार्ता प्रजावती दुष्प्रतिभान्विता सा ॥ खला पुनर्भूर्बहुदोषयुक्ता भौजंगमे पुष्पवती विशीला । मायापटुर्लोम्पटिकार्थहीना स्वच्छन्दगा व्याधिवशा कलाढ्या ॥ पतिप्रिया पुष्पवती मघायां प्रजावती सा कुलटा तथापि । सिंहीव योषिद्वरवृन्दमध्ये प्रभातखद्योतवदम्बरेऽपि ॥ भाग्ये भाग्यवती बहुव्ययपरा पानप्रसक्ता कृता सच्छिष्या कुलटा कलासु निपुणा भीरुश्च भयनवा । दुःपुत्रा कुलनाशिनी खलरता भग्नोद्यमा पांसुला दुःखी पापरता विधर्मनिरता बन्धुप्रिया संततम् ॥ कुलद्वयानन्दकरी विभक्ता कार्ये कलाढ्या विनिगूढचित्ता । विकीर्णकामानुचरा विशुद्धा श्लक्ष्णार्थ-

पाठा०—१ सुगुण सुगुणा । २ कलासु रक्ता । ३ परार्थरक्ता । ४ नृपारता । ५ संतानसेविनी । ६ सदा कलागीत ।

मर्क्षे विगतारिवैरा ॥ संभोगलीना परकार्यकर्त्री वस्त्रर्चिता सत्यगुणानुरक्ता । गतव्ययस्वा विगतारिपक्षा हस्तेऽङ्गना पुष्पवती हलोला ॥ त्वाष्ट्रे प्रियाढ्यः सुरतप्रिया साद्गुणैकगृह्यात्महिते नियुक्ता । निवृत्तवैरामयपीडिताङ्गी संगीतविद्या निपुणा कलासु ॥ दृढव्रता सत्यरता सुवृत्ता निवृत्तरागा पररन्ध्रगोप्त्री । गजानुगामिन्यनिलाह्वयर्क्षे प्रमोदिनी मङ्गलकार्यवृन्दे ॥ द्विदैवभे पुष्पवती प्रमत्ता करोति वैरं परवैरिसंघम् । विवादशीला विपुलप्रतापा संभोगमाप्नोति शुनीव शश्वत् ॥ मैत्रे विमित्रा सगदाङ्गहीना विवादशीला विपुलप्रतापा । प्रवृत्तरागा प्रविकीर्णकामा स्वगर्भसंस्कारपरा विरक्ता ॥ नारदस्तु—'स्वामिपक्षार्चिता स्वस्य गुणैः सम्यग्विभूषिता । सुधुना सुभगा कान्ता मैत्रभे प्रथमार्तवा' इति ॥ पौरन्दरे पुष्पवती समर्पा विनिन्दितातिव्यसना सुगूढा । परंतपा प्रव्रजनोद्यतात्मा पैरप्रजाप्रसूयवती सपापा ॥ मूले प्रकामाधिकहीनसक्ता व्यसुर्वुशुक्षोद्धतदोपचित्ता । निरन्तरं दूषितकर्मवृत्ता प्रज्ञावती गोगजगामिनी च ॥ पानीयभे पुष्पवती विवादशीला खला कर्मणि दुष्टचित्ता । परानुरक्ता वनशैलसक्ता प्रच्छन्नपापाद्भुतकर्मरक्ता ॥ वैश्वे सती पुष्पवती सुरक्ता महागुणैरुन्नतिमातनोति । चित्तानुरक्ता स्वपतेरुदारा युक्ता विवैरा विनिवृत्तदोषा ॥ बहुसुतधनधान्या प्रोल्लसद्भूषणाढ्या प्रवरगुणसमूहैर्भर्तुरानन्ददा स्यात् । युवतिजनयुता सा विष्णुधिष्ण्ये विचित्रप्रवरनटनगीतातोद्यवाद्याभिज्ञा ॥ अतिवसुधनभोगा मानिनी सच्चरित्रा विगतभयकुवृत्ता संनताङ्गी गुणाढ्या । पतिहितनिरता स्याद्बन्धुवर्गैः सुपूज्या परहितवरकर्मण्युत्सुका वासवर्क्षे ॥ निखिलरतकलाढ्या नृत्यगीताद्यभिज्ञा विविधगुणगणाढ्या मानिनी भाग्ययुक्ता ।

पाठा०—१ गजाभियामिन्य । २ परव्रजाप्रसूयवती सुपापा ।

विविधरिपुवरौघैः संनियुक्ता शतर्क्षे पतिकुलजनमान्या पुष्पवत्यङ्गना स्यात् ॥ नारदीये—'बहुपुत्रा धनवती स्वधर्मनिरता सती। कुलानुमोदिनी मान्या वारुणे प्रथमार्तवा' इति ॥ शुभगुणगणहीना कर्कशा भाग्यहीना त्वनृतपुरुषभाषा दुर्जना तर्जयन्ती। विभवगुणविहीना दुर्भगा चाजपादे जनकसदनवासा नष्टकामा सुरूपा ॥ गुणसुतसुखसंपद्भूषणैर्भूषिताङ्गी त्वभिभवति सपत्नान्सज्जनान्मानयन्ती। मृदुमधुरसुवाचा गीतनृत्यैर्युता स्यात्प्रवरबहुकलाढ्या चोत्तराभाद्रपादे ॥ पौष्णे विशाला बहुदुःखशोकविवादशीला पितृवेश्मसंस्था। पराभिशस्ता पतिपुत्रदूरा नीचे रता कापटिका च कन्या ॥ नारदीये—'दृढव्रता धर्मवती पुत्रसौख्यार्थसंयुता। विख्यातगुणसंपन्ना पौष्णभे प्रथमार्तवा' इति ॥

परिघादियोगफलमाह स एव—'परिघस्य तु पूर्वार्धे व्यतीपाते च वैधृतौ। संध्यामूपप्लवे विद्यामशुभं प्रथमार्तवम्' इति ॥ ग्रन्थान्तरे—'अमायां संक्रमे विष्ट्यां व्यतीपाते च वैधृतौ। परिघस्य तु पूर्वार्धे षट्सु गण्डातिगण्डयोः ॥ व्याघाते नव शूले तु नाड्यः पञ्चर्तुदर्शने। वैधव्यमर्थहानिं च सुतनाशं महद्भयम् ॥ वैधव्यं शत्रुवृद्धिं च दारिद्र्यं क्षीणजीवनम्। तेजोहानिं समायाति सदा पुष्पवती क्रमात्' इति ॥ वृद्धवसिष्ठः—'एकार्गले वाप्यथ वैधृतौ स्यादुत्पातसंध्यासु रजोऽप्यनिष्टम्' इति। एकार्गललक्षणं विष्टिलक्षणं च विवाहे वक्ष्यते ॥ ❀ ॥ अथ राशिफलम्—'मेषे सव्यभिचारा स्याद्वृषभे वैरभोगिनी[1]। मिथुने धनभोगाढ्या कर्कटे व्यभिचारिणी ॥ पुत्राढ्या सिंहराशौ तु कन्यायां श्रीमती तथा। विचक्षणा तुलायां च वृश्चिके तु पतिव्रता ॥

पाठा०—१ परभोगिनी।

दुश्चारिणी धनुःपूर्वे अपरे च पतिप्रिया । मकरे मानहीना च कुम्भे निर्धनवन्ध्यता ॥ मीने विचक्षणा लग्ने ग्रहसंस्था विवाहवत्' । सा च वक्ष्यमाणविवाहप्रकरणे द्रष्टव्या ॥ वैधव्यमष्टमस्थेऽर्के चन्द्रे क्षीणरुचिर्भवेत् । अङ्गारके भर्तृहीना बुधे स्यादनपत्यता ॥ दौर्भाग्यमिन्द्रसचिवे सापत्न्यं भार्गवेण तु । प्रव्रज्या सूर्यपुत्रे तु राहौ तु कलहः सदा ॥ अशुभं केतुरन्ध्रे तु आमित्रे शुभदाः शुभाः' इति ॥ नृसिंहोऽपि—'लग्नस्य सप्तमस्थाने सूर्यो वैधव्यकारकः । पुत्रहानिकरस्तारो बुधः सत्पुत्रदो भवेत् ॥ बृहस्पतिर्धनायुष्यं शुक्रः सापत्न्यमेव च । शनैश्चरे तु वन्ध्या स्याद्राहौ तु मरणं ध्रुवम् ॥ आदित्यभौममन्दानां चारवर्गोदयक्षणैः । मरणं गर्भनाशश्च कुलटात्वं यथाक्रमम् ॥ सौम्यभार्गवजीवानां चारवर्गोदयेक्षणैः । सत्पुत्रसुखमारोग्यं दीर्घमायुः क्रमाद्भवेत् ॥ चन्द्रे सद्गुणसंयुक्ते देवरातमताच्छुभम्' इति ॥ मनुः—'भास्करस्योदये मृत्युश्चन्द्रे स्त्रीमातृका भवेत् । गर्भस्रावः कुजे चैव बुधे पुत्रवती भवेत् ॥ आयुः श्रीः प्रीतिरारोग्यमुदये गुरुशुक्रयोः । मन्दोदये विरोधः स्यात्क्लेशः स्यात्तामसोदये' इति ॥ भृगुः—'शुभग्रहर्क्षे शुभदृष्टियुक्ते शुभांशके जीवसितेन्दुवारे । शुभे मुहूर्ते ऋतुसंभवश्चेत्सा रत्नगर्भेव विराजते स्त्री' इति ॥

रजोदर्शनकाले परिहितवस्त्रफलमाह गर्गः—'सुभगा श्वेतवस्त्राढ्या दृढवस्त्रा पतिव्रता । क्षौमवस्त्रान्विता प्राज्ञा नववस्त्रा सुखान्विता ॥ दुर्भगा जीर्णवस्त्रा स्याद्रोगिणी रक्तवाससा । नीलाम्बरधरा नारी पुंश्चली विधवा भवेत् ॥ मलिनाम्बरधृङ् नारी दरिद्रा स्याद्रजस्वला । वस्त्रेषु विषमैः रक्तबिन्दुभिः पुत्रमाप्नुयात् । समैश्च कन्यकां चैव फलं स्यात्प्रथमार्तवे' इति ॥ ॥ देवरातः—'संमार्जनीकाष्ठतृणाग्निशूर्पान्हस्ते दधाना कुलटा तदा स्यात् । तल्पोपभोगे तपसि स्थिता चेद्दृष्टं रजो भाग्यवती तदा स्यात्' इति ॥ नृसिंहोऽपि—

'शुष्काक्षततुषैः शूर्पमार्जन्याद्यशुभैर्युते। देशे शुभं रजो दृष्टं यथा स्यात्प्रथमार्तवे ॥ शुक्लौ तल्पे च याने च तपनीये च धार्मिके। शुभोपकरणैर्युक्ते शुभदेशे शुभैर्युते ॥ शुभं स्यादनुकूलर्क्षे राशौ सत्कर्मसंयुते' इति ॥ वृद्धवसिष्ठः—'नक्षत्रवारतिथियोगदिनार्धकालषड्वर्गजं कथितमिष्टमनिष्टमेतत्। ज्ञात्वास्य दोषमथ भूरिगुणांश्च पश्चाद्द्वाङ्गनोक्तमुचितं शुभकर्म कार्यम्' इति ॥ कश्यपसंहितायामपि—'निन्दिते दिनवारर्क्षे नाचरेत्तत्र मङ्गलम्। तस्मात्सम्यग्विचार्यैव ततो मङ्गलमाचरेत्' इति ॥ ❀ ॥ ऋतुमत्या मङ्गलाचारस्तु स्मृतिचन्द्रिकायामुक्तः—'प्रथमर्तौ तु पुष्पिण्याः पतिपुत्रयुताः स्त्रियः। अक्षतैरासनं कुर्युस्तस्मिंस्तामुपवेशयेत् ॥ हरिद्रागन्धपुष्पादीन्दद्यात्ताम्बूलकं स्रजम्। आशिषो वाचयेयुस्ताः पतिपुत्रवती भव ॥ दीपैर्नीराजनं कुर्यात्सदीपे वासयेद्गृहे। ताः सर्वाः पूजयेत्पश्चाद्गन्धपुष्पाक्षतादिभिः ॥ भक्षणापूपमुद्गादि दद्यात्ताभ्यः स्वशक्तितः' इति। स्मृतिरत्नेऽपि—'उद्वाहिताङ्गनायास्तु आर्तवे प्रथमे तदा। अक्षतैरासने क्लृप्ते सदीपे वासयेत्ततः ॥ अपूपं लवणं मुद्गं गुडमिश्रं तथा हविः। दद्याद्ब्राह्मणपत्नीभ्यस्ताभ्यो दद्याच्च भोजनम्' इति ॥

अथ सामान्यतो रजस्वलानियमा निरूप्यन्ते। दक्षः—'आर्तवाभिप्लुता नारी नैव वेश्मनि संविशेत्। न संसर्गं व्रजेत्सद्भिः स्नात्वा पापात्प्रमुच्यते ॥ अञ्जनाभ्यञ्जने स्नानं प्रवासं दन्तधावनम्। न कुर्यात्सार्तवा नारी ग्रहाणामीक्षणं तथा ॥ नखानां कृन्तनं रज्जुतालपत्रादिबन्धनम्। दग्धे शरावे भुञ्जीत 'पेयं चाञ्जलिना पिबेत्' इति ॥ अत्रिः—'वर्जयेन्मधुमांसे च

---

पाठा०—१ तोयं चाञ्जलिना।

पात्रे खर्वे च भोजनम् । गन्धं माल्यं दिवास्वापं ताम्बूलं चास्यशोधनम् ॥ दग्धे शरावे भुञ्जीत पेयं चाञ्जलिना पिबेत् । पात्रेण वाप्यखर्वेण खर्वं दग्धं विदुर्बुधाः ॥ दग्धं नीचं पर्णादि । पाणिपात्रजलस्पर्शपादशौचादिवर्जयेत् । नखस्यां च प्रजादोषमन्यथा श्रुतिचोदनात् ॥ श्रुतिस्तु—'तस्मान्मलवद्वाससा न संवदेत न सहासीत नास्या अन्नमद्यात्' इत्यादिः 'अञ्जलिना वा पिबेद्खर्वेण वा पात्रेण प्रजायै गोपीथाय' इत्यन्ता । अस्याः श्रुतेरर्थः स्मृतिमञ्जर्यां स्पष्टीकृतः—'तस्मादुदक्यया सार्धमेकगेहे न संवसेत् । प्रतिग्रहं च संवादमस्या अन्नं च वर्जयेत् ॥ रजस्वला पतिं गच्छेच्चण्डालो जायते सुतः । आर्तवाभिप्लुताऽस्नाताजातस्त्वप्सु मरिष्यति । तैलेनाभ्यञ्जनं कुर्यात्कुष्ठरोगी प्रजायते । आर्तवे निखनेद्भूमिमल्पायुर्जायते खलः ॥ नेत्रयोरञ्जनं कुर्यात्काणो वान्धश्च जायते । पुष्पिणी दन्तधावी स्याज्जायते श्यावदन्तकः ॥ नखानां कृन्तनं कुर्यात्कुनखी जायते सुतः । ऋतौ रज्ज्वादिकच्छेदं कुर्यात्क्लीबः प्रजायते ॥ तन्तुना सजते रज्जुमुद्बन्धनमृतो भवेत् । पर्णपात्रेऽन्नमश्नीयादुन्मादी जायते सुतः ॥ खर्वे शरावे भुञ्जीयाद्वामनो वा प्रजायते । उदक्या पललं क्षौद्रं गन्धं पुष्पं घृतं त्यजेत् ॥ खर्वपात्रे न भुञ्जीयात्तोयमञ्जलिना पिबेत् । प्रवासं सार्तवा नारी ग्रहाणामीक्षणं त्यजेत् ॥ दिवानिद्रां च ताम्बूलं तालवृन्तादिवन्धनम् । शौचादिशोधनं जह्यात्प्रजादोषकरं स्मृतम् ॥ कांस्यपात्रेऽन्नमश्नीयात्कठिनं क्षीरवर्तितम् । चर्मकाष्ठमये वापि पादुके चाधिरोहयेत् ॥ एकभुक्तप्रकारेण तिस्रो रात्रीर्व्रतं चरेत्' इति ॥ वसिष्ठस्मृतौ तु—'त्रिरात्रेण रजस्वलाशुद्धिर्भवति सा नाञ्ज्यान्नाभ्यञ्ज्यान्नाप्सु स्नायादधः शयीत न दिवा स्वप्या-

पाठा०—१ कास्यभोजनम् ।

नाग्निं स्पृशेन्न रज्जुं सृजेन्न दन्तान्धावयेन्न मांसमश्नीयान्न ग्रहान्निरीक्षेत नासत्किंचिदाचरेन्न खर्वेण पिबेदञ्जलिना पिबेल्लोहेन वायसेन वेति विज्ञायते' इति । इति रजस्वलानियमाः ॥

अथान्योन्यस्पृष्टिविषयो निरूप्यते । स्मृतिमञ्जर्याम्—'उदक्ये द्वे सगोत्रे वा सवर्णे नैकभर्तृके । तयोः स्नानं मिथः स्पर्शे पञ्चगव्यं ततः पिबेत् ॥ सवर्णयोनिर्संबन्धे सगोत्रे च रजस्वले । मिथः स्पृशेदमत्या तु स्नानमात्रेण शुद्ध्यति ॥ मत्यैकरात्रं नाश्नीयात्पञ्चगव्यं पिबेत्ततः ॥ उदक्ययोर्यदान्योन्यमसंबन्धसवर्णयोः । स्पृशेदमत्या स्नात्वा च तस्मिन्नाद्याच्छुचिर्भवेत् ॥ मत्या तु नाद्यादाशुद्धेर्भुक्त्वा चेत्प्रतिवासरम् । उपोषणं तदा केचिदाहुस्तद्दिनसंख्यया ॥ उपवासे त्वशक्तौ चेत्तत्समं दानमाचरेत् । संभाषेतां स्पृशेतां वा ब्राह्मण्यौ च रजस्वले । आस्नानकालं नाश्नीतामुभे मत्या मिथः क्वचित् ॥ स्नात्वोपवासं कुर्यातां पञ्चगव्येन शुद्ध्यतः । एवमभ्यासतश्चाब्दं प्रायश्चित्तं समाचरेत् ॥ मत्या रजस्वलान्योन्यं वृषली ब्राह्मणी स्पृशेत् । ब्राह्मण्या कृच्छ्रमेकं तु शूद्री पादेन शुद्ध्यति' इति ॥ कश्यपः—'रजस्वला सूतिका वा चण्डालं यदि संस्पृशेत् । आस्नानकालान्नाश्नीयादतिकृच्छ्रं समाचरेत् । चण्डालं सार्तवा नारी संस्पृशेद्भोजनान्तरे । वाग्यता बहिरासीना स्नानकालादुपोषणम् ॥ प्राजापत्यं चरेत्पश्चात्पञ्चगव्यं ततः पिबेत् । विप्रान्द्वादशसंख्याकान्भोजयित्वा विशुद्ध्यति ॥ पुष्पिणीं संस्पृशेन्मोहादशुद्धं वा नरं स्त्रियः । स्नानादर्वाङ् भुञ्जीत भुक्त्वा कृच्छ्रं समाचरेत् ॥ स्पृष्ट्वोदक्या पञ्चनखान्द्विशफैकशफान्पशून् । अण्डजानि च सर्वाणि नाद्यादास्नानवासरात् ॥ पाराशरप्रायश्चित्तकाण्डे तु—'रजस्वला यदा स्पृष्टा शुनीजम्बुकरासभैः । पञ्च-

पाठा०—१ एवमभ्यासतश्चाब्द । २ अञ्जनानि च सर्वाणि नाञ्ज्यादास्नानवासरात् ।

रात्रं निराहारा पञ्चगव्येन शुध्यति ॥ ऊर्ध्वं तु द्विगुणं नाभेर्वक्त्रे तु त्रिगुणं तु तत् । चतुर्गुणं स्मृतं मूर्ध्नि दंशेप्येतावती भवेत्' इति ॥ ❀ ॥ अत्र नैमित्तिकस्नाने प्राप्ते विधानमुच्यते । स्मृत्यर्थसारे—'स्नाने नैमित्तिके प्राप्ते रजोदृष्टौ पात्रान्तरिततोयेन स्नात्वाद्भिः सिक्तपात्रमार्जोपाङ्गवस्त्रपीडनमन्यवस्त्रधारणं च कृत्वा व्रतं चरेत्' । इति रजस्वलाधर्माः ॥

अथेदानीमार्तवशुद्धिकालो निर्णीयते । तत्र कात्यायनः—'रजस्वला यदा नारी त्रिरात्रमशुचिर्भवेत् । प्रथमेऽहनि चण्डाली द्वितीये रजकी स्मृता ॥ तृतीयेऽहनि शूद्री स्याच्चतुर्थेऽहनि शुध्यति । भर्तुः शुद्धा चतुर्थेऽह्नि स्नाता नारी रजस्वला ॥ दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति' इति ॥ तथा वसिष्ठोऽपि—'चण्डाली पतितासमाथ रजकी शूद्रा दिनादिक्रमाच्छुद्धा पुष्पवती च पञ्चमदिने हव्येषु कव्येषु च' इति ॥ ❀ ॥ रजसश्चतुर्धा भेदमाह बृहस्पतिः—'रागजं रोगजं चैव द्रव्यजं कालजं तथा । यद्रागरोगद्रव्योत्थं तद्रक्तं प्राह भार्गवः ॥ कालजं तु रजःसंज्ञं तस्मात्तत्रैव सा शुचिः । अर्वाक्प्रसूतेरुत्पन्नं मेदोद्भवाङ्गनासु यत् । तद्रागजमिति प्रोक्तं पयोच्छेदसमुद्भवम् ॥ पित्तादिदोषवैषम्यादसकृत्संप्रवर्तते । रोगजं तत्समुद्दिष्टमथ द्रव्यजमुच्यते' ॥ ❀ ॥ रोगजे रजस्यशुचित्वं नास्तीत्युक्तं संग्रहे—'रोगेण यद्रजः स्त्रीणामन्वहं हि प्रवर्तते । नाशुचिस्तु ततस्तेन तस्या वैकारिकं मलम् ॥ द्रव्यजं धातुवैषम्यहेतु द्रव्येण भोगजम् । आरभ्य चार्तवदिनाच्चैकविंशतिवासरे । मासादूर्ध्वं रजो यत्स्यात्तत्कालजमुदाहृतम् ॥ रजस्वला यदा नारी पुनरेव रजस्वला । सा विंशतिदिनादूर्ध्वं त्रिरात्रमशुचिर्भवेत्'

पाठा०—१ ऊर्ध्वं तद्विगुण । २ अकालजं रज.सप्तम् ।

इति ॥ अत्रिः—'रजस्वला यदि स्नाता पुनरेव रजस्वला । अष्टादशदिनादर्वागशुचित्वं न विद्यते ॥ एकोनविंशतेरर्वागेकाहं स्याच्ततो द्व्यहम् । विंशात्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत्' इति ॥ कश्यपस्तु—'रजस्वला सती नारी पुनरेव रजस्वला । अष्टादशाहात्प्राग्वापि शुद्धया स्यात्त्रिरात्रकम् ॥ त्रयोदशदिनादूर्ध्वं रजोदोषवती यदा । अष्टादशाहात्प्राग्वापि त्रिरात्रमिति निश्चयः ॥ एकादशाहे त्वेकाहं द्विरात्रं द्वादशेऽहनि । ऊर्ध्वं त्रिरात्रं विज्ञेयमिति कुण्डिलचोदितम्' इति ॥ संग्रहेऽपि—'त्रयोदशाहादूर्ध्वं तु युवती पुष्पिणी भवेत् । वयोगुणविशेषेण त्रिरात्राच्छुद्धिरिष्यते ॥ ऋतुस्नाता तु या प्रौढा पुनरेव रजस्वला । स्नानात्सप्तदशाहे तु शौचेनैव शुचिर्भवेत् ॥ अष्टादशाहे त्वेकाहं द्व्यहमेकोनविंशतौ । विंशप्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत्' इति ॥

रोगजरजःशुद्धिमाह ऋष्यशृङ्गः—'रोगजे वर्तमानेऽपि काले निर्याति कालजम् । तस्मात्काले प्रदत्ता स्यादन्यथा संकरो भवेत्' इति ॥ प्रजापतिः—'ततो दिवा वा रात्रौ तु मलवद्वसना भवेत् । तद्दिनादि त्रिरात्रं स्याच्छर्वर्या नाडिकावशात् ॥ तृतीयभागं संप्राप्ते मलं स्यान्निशि चेदथ । प्रभातादित्रिरात्रेण शुद्धिं तस्या विनिर्दिशेत्' इति ॥ कात्यायनोऽपि—'रात्रौ तृतीयभागात्प्राग्यदि नारी रजस्वला । पूर्वेण स्नानतः शुध्येदूर्ध्वं चेदुत्तरेण तु' इति ॥ विद्यामाधवीये—'रात्रावेव समुत्पन्ने मृते रजसि सूतके । पूर्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविः' इति । अत्र वृद्धाचारतो व्यवस्था द्रष्टव्या । [ चतुर्विंशतिमते—'पूर्वांशयोस्तु रात्रौ चेज्जननं मरणं रजः । इष्टं पूर्वदिनं तत्र तृतीये तूत्तरेऽहनि ॥ किंचिद्देवोदिते सूर्ये जननं मरणं च वा । रजो वा दृश्यते स्त्रीणां

पाठा०—१ चिद्वितोऽर्घ भागे भान्वुदितेऽपि ।

यस्याहस्तस्य शर्वरी ॥ अपरे चार्धरात्रात्प्राक्सूतौ रजसि सूतके । पूर्वमेव दिनं ग्राह्यमूर्ध्वं चेदुत्तरेऽहनि' इति । एतेषां तिसृणामपि पक्षाणां देशपरत्वेन व्यवस्था ज्ञेया ।] ॥❀॥ रजःप्रासिकालाज्ञाने प्रजापतिराह—'अविज्ञाते मले सा च मलवद्वसना यदि । कृतं गेहेष्वदुष्टं स्याच्छुद्धिलस्त्रास्त्रिरात्रतः' इति ॥ ❀ ॥ रजःप्राप्तिकालसंदेहे स एवाह—'निःसंदिग्धे परिज्ञाते आर्तवे शुद्धिकारणम् । संदेहमात्रे स्नानं स्यादित्युवाच प्रजापतिः' इति ॥ ❀ ॥ अथ शुद्धिप्रकारोऽभिधीयते । स्मृतिसंग्रहे—'रजस्वला चतुर्थेऽह्नि प्रक्षाल्याङ्गोद्भवं मलम् । दन्तानां धावनं कृत्वा संगवे स्नानमाचरेत् ॥ परिधानांशुकं सम्यगपरेण जलेन तु । घर्षणं क्षालनं कुर्याद्यथा मलविवर्जितम्' इति ॥ स्मृतिमञ्जर्याम्—'पुष्पिणी कांस्यपात्रेऽद्यात्तापयेत्परिलेखयेत् । एकत्रिंशतिवारेण भस्मना मार्जयेच्छुचिः ॥ उदक्या शयनस्थानं भुक्तिदेशं च गोमयैः । उपलिप्य गवाक्रान्त्या शुद्धिर्भवति नान्यथा ॥ उदक्यासीनपीठस्य घर्षणाच्छुद्धिरिष्यते । कटादीनां क्षालनं च तृणानां त्याग एव तु । इत्यादिशुद्धिभेदेन यथार्हं शोधयेद्बुधः' इति ॥ ❀ ॥ आतुरायां स्मृत्यर्थसारे—'रजस्वला पष्टिमृत्तिकाभिः शौचं कृत्वा स्नानादिस्त्री पादपादन्यूनमृत्तिकाभिः विधवा द्विगुणमृत्तिकाभिः शौचं विधाय मलं प्रक्षाल्य दन्तधावनपूर्वकं संगवे स्नायात् । रजस्वलां ज्वरितामन्या स्पृष्ट्वा चतुर्थेऽहनि सचैलमवगाह्याचम्य दशकृत्वो द्वादशकृत्वो वा स्नात्वा तामुपस्पृशेत् । ततः सा रजस्वला शुद्धा शक्त्या दानं कृत्वा पुण्याहेन विशेषतः शुध्येत् ॥ संग्रहे तु—'आतुरा चेदृतुमती तस्याः स्नानं कथं भवेत् । स्पृष्ट्वा तु तां परा स्नायाद्दशकृत्वो ह्यनातुरा ॥ वासोभिर्दशभिश्चैव परिधाप्य यथाक्रमम् । ब्राह्मणान्भोजयित्वाथ पुण्याहेन विशुध्यति ॥ आतुराणां तु सर्वेषामेवं शुद्धिर्विधीयते' इति ॥ वासोभि-

दशभिः परिधाप्येत्यत्र णिचः प्रयोगात्सूतक्याः स्नानक्रमेण दशवासोभिः परिधापनं कर्तव्यमित्यर्थः । इत्यातुरास्नानम् ॥ ❀ ॥

अथ ऋतुस्नानानन्तरं कर्तव्यमाह विवस्वान्—'ऋतुस्नाता भवेन्नारी धृत्वा शुक्लाम्बरं शुभम् । आचम्यालंकृता भूत्वा पुष्पाद्यैः सूर्यमर्चयेत् ॥ वृद्धवसिष्ठः—'स्नात्वा तु शुक्लवासांसि परिधाय प्रयत्नतः । गन्धपुष्पैरलंकृत्य समाचम्य सुवाग्यता ॥ चन्दनाक्षतपुष्पैश्च आदित्यं पूजयेद्यथा । ऐन्द्रं वरं प्रभो मह्यमिदानीं दातुमर्हसि ॥ इत्युक्त्वा चेन्द्रभावेन प्रार्थयेत पतिं वधूः ॥ ऋतुस्नाता सती नारी यं स्नेहान्नरमीक्षते[1] । तादृशं जनयेत्पुत्रं तस्मात्पश्येन्निजं पतिम्' इति ॥ इति ऋतुस्नानानन्तरकृत्यविधिः ॥

अथ प्रथमरजोदर्शनकाले तिथिवारनक्षत्रादौ दुष्टे शान्तिकर्म कार्यम् । तदुक्तं शौनकेन—'सार्तवानां तु नारीणां शौचं वक्ष्यामि शौनकः । तिथिवारर्क्षयोगेभ्यो लग्नात्सग्रहसप्तमात् ॥ ग्रहेभ्यो दुःस्थितेभ्यश्च तत्तद्दोषक्षयाय च । अत्र पुत्रादि[2]लाभाय दंपत्योरभिवृद्धये ॥ पञ्चमेऽह्नि चतुर्थे वा ग्रहातिथ्यपुरःसरम् । तस्मिन्नहनि कर्तव्यमृतुहोमं विधानतः ॥ आचार्यं वरयेत्प्राज्ञं भुवनेश्वर्यनुष्ठिनम्[3] । होमार्थं च जपार्थं च वरयेदृत्विजो बहून् । यजमानो द्विजैः सार्धं शान्तिहोमं समाचरेत् ॥ गृहादीशानदिग्भागे देवतापूजनाय च । द्रोणप्रमाणधान्येन व्रीहिराशित्रयं भवेत् ॥ कुम्भत्रयं न्यसेत्तत्र[4] तन्तुवस्त्रादिवेष्टितम् । पूरयेत्तीर्थसलिलैः प्रतिकुम्भं पृथक्पृथक् ॥ सूक्तेनाथ नवर्चेन प्रसुवआप इत्यथ । ऋचा याः प्रवतस्तद्वद्रायन्त्या च ततः क्रमात् ॥ मध्यकुम्भे क्षिपेद्धान्यमौषधानि च हेम च । ततश्च पञ्चरत्नानि गन्धपुष्पाक्षतादिकान् ॥ औषधानि च वक्ष्यन्ते मुनिभिः शान्ति-

पाठा०—१ यत्स्नेहादभिमीक्षते । २ अर्थपुत्रादि । ३ भुवनेश्वर्यनुष्ठितम् । ४ न्यसेद्राशौ ।

कारणात् ॥ औदुम्बरः कुशो दूर्वा राजीवं पञ्चविल्वकाः । विष्णुक्रान्ताथ तुलसी वर्हिषं शङ्खपुष्पिका ॥ शतावर्यश्वगन्धा च नि-
र्गुण्डी सर्षपद्वयम् । अपामार्गः पलाशश्च पनसो जीरकस्तथा ॥ प्रियङ्गवश्च गोधूमा व्रीहयोऽश्वत्थ एव च । क्षीरं च दधि स-
र्पिश्च पद्मपत्रं तथोत्पलम् ॥ कुरण्टकत्रयं गुञ्जा वचा भद्रकमुस्तके । द्वात्रिंशदौषधानीह यथासंभवमाहरेत् ॥ गजाश्वरथ्यावल्मीक-
सङ्गमाद्ध्रदगोकुलात् । राजद्वारप्रदेशाच्च मृदमानीय निक्षिपेत् ॥ कुम्भस्थापनमित्यादि तत्तन्मन्त्रेण कारयेत् । मृत्तिकाश्चौषधादीनि
मन्त्रेण प्रक्षिपेत्क्रमात् ॥ कुम्भोपरि न्यसेत्पात्रं कांस्यं वा ताम्रमेव वा । मृण्मयं नवपात्रं वा स्वस्व विचारानुसारतः ॥ पात्रोपरि
न्यसेद्वस्त्रं प्रतिमां भुवनेश्वरीम् । तन्मूल्यं वा न्यसेत्तत्र इन्द्राणीं च पुरन्दरम् ॥ आचार्यः पूजयेद्देवीमङ्गाद्यावरणानि च । अन्यो वा
पूजनं कुर्याद्गायत्र्या मन्त्रसारया ॥ इन्द्राणीं पूजयेद्देवीमिन्द्राणीमासु नारिषु । क्रमेण पूजयेदिन्द्रमिन्द्रत्वा वृषभं वयम् ॥ अनेन
विधिनाचार्यः पूजयेद्देवतात्रयम् । आवाहनादिसकलैरुपचारैः पृथक्पृथक् ॥ तत्तन्मन्त्रं स्पृशन्कुम्भं मन्त्रेण भुवनेश्वरीम् । जपेदा-
चार्य आहोभान्श्रीसूक्तं च जपेत्ततः ॥ स्पृशन्वै दक्षिणं कुम्भमृत्विगेको जपेदथ । चत्वारि रुद्रसूक्तानि चतुर्मन्त्रोत्तराणि च ॥ सं-
स्पृशन्नपरं कुम्भं श्रीरुद्रं रुद्रसंख्यया । शं न इन्द्राग्नीसूक्तं च तत्र चैवं स्पृशञ्जपेत् ॥ कुम्भस्य पश्चिमे देशे शान्तिहोमं समाचरेत् ।
अन्वाधानं ततः कुर्याद्धोमतन्त्रं समाचरेत् ॥ पूर्णपात्रनिधानान्तं कुलाचार्यो द्विजैः सह । दूर्वाभिस्तिलगोधूमैः पायसेन घृतेन
च ॥ पायसं श्रपयेत्तत्र सावित्रं च हविश्च तत् । कुलाज्यभागपर्यन्तं हविरुद्वासनादिकम् ॥ तिस्रमिश्चैव दूर्वाभिरेकैकामाहुतिं च-
रेत् ॥ अभिमन्त्र्य प्रयुक्ताभिर्गायत्र्या जुहुयात्क्रमात् ॥ अष्टोत्तरसहस्रं तु शतमष्टोत्तरं तु वा । तिलमिश्रैश्च गोधूमैर्द्रव्येणाज्याहु-

पाठा०—१ तन्मध्यम स्थान ।

तीर्हुनेत् ॥ जुहुयात्पायसेनैवमाज्येन च हुनेत्क्रमात् । हविश्चतुष्टयेनैव प्रत्येकं समसंख्यया ॥ गायत्र्यैव तु होतव्यं हविरत्र चतुष्टयम् । ततः स्विष्टकृतं हुत्वा रज्जुग्रहणं तथा ॥ अयाश्चेत्यादिभिर्हुत्वा समुद्रादूर्मिसूक्ततः । संततामाज्यधारां तां पूर्णाहुतिमथाचरेत् ॥ परिषेचनपर्यन्तं होमशेषं समापयेत् । सहौषधिस्थितैस्तत्र प्रतिकुम्भस्थितोदकैः ॥ ऋतुमत्याः स्त्रियाः शान्त्यै दंपतिभ्यां सुखाय च । अथाभिषेकमन्त्राश्च प्रोच्यन्ते शौनकादिभिः । आपोहिष्ठेति नवभिः सूक्तेन च ततः परम् । इन्द्रोअङ्गतृचेनैव पावमान्यैः क्रमेण तु ॥ उभयं शृणवच्चनः स्वस्तिदाविश एकया । त्रियम्बकेन मन्त्रेण जातवेदस एकया ॥ समुद्रज्येष्ठा इत्यादिचतुर्भिश्च प्रसिद्धकैः । त्रायन्तामिति मन्त्रैश्च त्रिभिश्चैभिर्यथाक्रमम् ॥ इमा आपस्तृचेनैव देवस्य त्वेति मन्त्रतः । मन्त्रेणाथ तमीशानं स्वभये रुद्र इत्यथ ॥ तमुष्टुहीति मन्त्रेण भुवनस्य पितरं तथा । याते रुद्रेति मन्त्रेण शिवसंकल्पमन्त्रतः ॥ इन्द्रत्वावृषभं पञ्चमन्त्रैश्चैवाभिषेचयेत् । साच वस्त्रान्तरं धृत्वा पुनश्चोपवसेत्सती ॥ उपवासोऽत्र समीपावस्थानम् । विप्रानभ्यर्च्य विधिवद्गन्धपुष्पाक्षतादिभिः ॥ धेनुं पयस्विनीं दद्यादाचार्यायच भूषणैः । सदक्षिणमनड्वाहं प्रदद्याद्रुद्रजापिने ॥ ऋत्विग्भ्यश्चाथ सर्वेभ्यो दद्याद्वै दक्षिणां ततः ॥ महाशान्ति प्रजप्याथ विप्राशीर्वचनं ततः । ब्राह्मणान्भोजयेत्पश्चाद्भुञ्जीयात्स्वजनैः सह ॥ एवं यः कुरुते शान्तिं शौनकोक्तविधानतः । तदनिष्टं तु सकलं मद्य एव विनश्यति' इति ॥ इति शौनकीये भुवनेश्वरीशान्तिः ॥ ❀ ॥ अत्र ग्रहणकाले ऋतुदर्शनं चेत्प्रतिपदोक्ता शान्तिः कर्तव्या । सा च नामकरणप्रकरणे वक्ष्यते ॥ ❀ ॥ अथ दौसहाया ऋतुदर्शनातिक्रमे शान्तिविशेष उच्यते । मार्कण्डेयपुराणे—'अथ प्रवृत्ता सा ज्ञेया दौसहा ऋतुहारिणी । कुर्वीत तीर्थदेवौकश्चैत्यपर्वतसानुषु ॥ नदीसंगम-

स्थानेषु स्थापनं तत्प्रशान्तये । मन्त्रविन्द्रूततत्त्वज्ञः पर्वण्युपसि च द्विजः ॥ चिकित्साज्ञश्च तच्छास्त्रसंप्रयुक्तैर्वरौषधैः ।' इति ॥ ❀ ॥ अथ रजस्वलाशान्तिः । रजोदर्शनकाले प्रभूतदोषपरिहाराय शौनकोक्तशान्तिंकृत्वा प्रशस्ततिथ्यादिषु ऋतुदर्शनपर्यन्तं गमनं वर्जयेदित्याह ज्योतिर्वसिष्ठः—'प्रभूतदोषे यदि दृश्यते तत्पुनस्ततः शान्तिककर्म कार्यम् । विसर्जयेदेव तदैकशय्यां यावद्रजोदर्शनमिष्टऋक्षे' इति ॥ ज्योतिःकश्यपोऽपि—'तिथिवासरधिष्ण्येषु पुष्पं दुष्टेषु दृश्यते । गमनं वर्जयेत्तत्र पुनः शस्तेषु दर्शनात्' इति ॥ इति शान्तिविधिसंक्षेपः ।

अथ गर्भाधाने दिवसनिर्णयमाह । बृहस्पतिः—'निशाषोडशकं नारी संज्ञितर्तुमती तु सा । तावद्योग्या प्रजास्थाने विनाद्याद्यचतुष्टयम्' इति । यद्यपि ऋतावेव गमनं विहितं तथापि कामयमानामनृतावपि गच्छेदित्याहाचार्यः—'पत्नीमप्यनृतौ नेयादियाद्वाभ्यर्थितस्तया' इति ॥ ॥ अत्र तिथ्यादिनिर्णय उच्यते श्रीधरीये—'षष्ठ्यष्टमीपञ्चदशीचतुर्थीचतुर्दशीमप्युभयत्र हित्वा । शेषाः शुभाः स्युस्तिथयो निषेके वाराः शशाङ्कार्यसितेन्दुजानाम्' इति । एतास्तिथीरुभयपक्षयोर्हित्वा शेषास्तिथयो निषेके शुभावहाः स्युः। तथाच वसिष्ठः—'अष्टमीं नवमीं चैव चतुर्थीं च चतुर्दशीम्। पर्वाणि वर्जयेच्छिष्टा निषेके तिथयः शुभाः' इति तिथिनिर्णयः ॥ ॥ अथ वाराः—तत्र चन्द्रबुधगुरुशुक्रवाराः शुभाः । शेषाः पापवारा वर्ज्या इत्यर्थः । तदुक्तं कालनिर्णये—'रिक्तापर्वाष्टमीषष्ठ्यो दिवाजन्मत्रयं तथा । पापग्रहाणां वाराश्च त्याज्याश्चैवमृतौ गतिः' इति ॥ ॥ अथ नक्षत्रनिर्णयः—'विष्णुप्रजेशरविमित्रसमीरपौष्णमूलोत्तरावरुणभानि निषेककार्ये । पूज्यानि पुष्यवसुशीतकराश्विचित्रादित्यश्च मध्यमफला विफलाः स्यु-

रन्याः ॥ विष्णुः श्रवणः । प्रजेशो रोहिणी । रविर्हस्तः । मित्रोऽनूराधा । समीरः स्वाती । पौष्णो रेवती । उत्तरात्रयं । वरुणः शतभिषक् । एतान्येकादश नक्षत्राणि निषेककर्मणि पूज्यानि ॥ वसुर्धनिष्ठा । शीतकरो मृगशिरः । अदितिः पुनर्वसुः । पुष्यः अश्विनी चित्रा । एतानि मध्यमफलानि । अन्यानि भरणी कृत्तिका आर्द्रा आश्लेषा मघा फल्गुनी विशाखा ज्येष्ठा पूर्वाषाढापूर्वाभाद्रपदेति दश नक्षत्राणि विफलानि वर्ज्यानि । अत्र जन्मत्रयमपि वर्ज्यम् । तदाह बृहस्पतिः—'श्राद्धं यात्रां चिकित्सां च मैथुनाभ्यञ्जने तथा । चौलोपनयनादीनि वर्जयेत्त्रिषु जन्मसु' इति ॥ ॥ अथ राशिनिर्णयः—'वृषभमिथुनकर्कसिंहकन्यातुलधरचापझषाः शुभा भवन्ति । यदि शुभलग्नशालिनोऽनुकूला निधनविशुद्धियुता निषेककार्ये' ॥ अयमर्थः—वृषभादिमीनान्ता अष्टौ राशयः सूर्यचन्द्रबुधबृहस्पतिशुक्राणां क्षेत्राणि । अतश्चैते शुभा भवन्ति । निसर्गपापयोः कुजशन्योश्चत्वारो निषिद्धाः स्वभावतोऽनिष्टत्वात् । तदुक्तम्—'अतो नेदं कुजार्किभम्' इति । एतेषु राशिषु शुभग्रहयुक्ता निरीक्षिताश्च अष्टमशुद्धियुक्ताश्च राशयो निषेके शुभाः प्रजाप्रदा इत्यर्थः ॥

तत्र स्नानविधिविशेषमाह वृद्धवसिष्ठः—'इष्टे वाह्नि नवोदकुम्भसलिलैः सन्मन्त्रितैरौषधैः स्नानं पापनुदं सपञ्चकिसलैः कार्यं समन्त्रीजकैः' इति । मन्त्रोऽत्र सुदर्शनमन्त्रः ॥ तत्रेतिकर्तव्यतामाह श्रीपतिः—'वेदागमोक्तसमये रुचिरे प्रदेशे वाजीकृतेन जितरोपभयेन पुंसा । मन्त्रौषधप्रवरतीर्थजलोक्षलेषु कान्ताजनेष्वथ निषेकविधिर्विधेयः' इति ॥ रहस्ये तु—'विशदविमलदीपे पुष्प-

---

पाठा०—१ पञ्चविटपैः कार्यं ।

मालाप्रकीर्णे प्रसृतसुरभिधूपे धाम्नि कामी सुवेषाम् । सहसहचरवर्गे वामपार्श्वे निवेश्य स्त्रियमुपहितभूषां भावयेन्नर्मगोष्ठीम्' इति । आह मनुः—'यदि हि स्त्री न रोचेत पुमांसं न प्रमोहयेत् । अप्रमोहात्पुनः पुंसः प्रजनो न प्रवीयते ॥ स्त्रियां तु रोचमानायां सर्वं तद्रोचते कुलम् । तस्यां त्वरोचमानायां सर्वमेव न रोचते' इति ॥ ॥ अत्र विशेषमाह परशुरामंप्रति पुष्करो विष्णुधर्मोत्तरे—'चतुर्थेऽहनि कुर्वीत स्नाता स्नानं यथाविधि । अभिषेकोदितामिश्च मृद्भिरद्भिश्च सारसैः ॥ ओषधीश्च ततः कुम्भे निक्षिप्य स्नापयेत्तथा । बिल्वगन्धांश्च रत्नानि पञ्चगव्यं तथैव च ॥ कुम्भे निक्षिप्य कुम्भं च गन्धमाल्यानुलेपनैः । पूजयित्वा ततो देयं तत्स्यात्तत्सुनवर्पनम् । मन्त्रं ग्रहाभिषेकोक्तं पठेद्विप्रस्तु मन्त्रवित् ॥ वस्त्रं च धृत्वा सुस्नाता स्नापके च विनिर्गते । पश्येत देवप्रतिमां वासुदेवस्वरूपिणीम् ॥ अथवा स्वं च भर्तारं नान्यं कंचन सत्वरा । तत्काले वदनं यस्य पश्यत्यथ तथाविधम् । सा प्रसूते सुतं राम शुभं वाप्यथवाऽशुभम् ॥ पूजनं वासुदेवस्य सा कृत्वात्मन एव च । मण्डनं तु यथान्यायं शुक्लवस्त्रोत्तरच्छदा ॥ स्नातानुलिप्ता भर्तारं पुष्पैर्धूपैर्हितमेव च । मायाद्रात्रौ तदा नारी गन्धपुष्पादिवासिते' इति ॥ ॥ स्कान्दे कपिलसंहितायाम्—'स्नायात्सवासा यत्नेन भस्मगोमयमृज्जलैः । स्नानीयचूर्णेन तत उद्वर्त्य शुभवेष्टिता ॥ हरिद्राचन्दनोन्मिश्रं जलं पीत्वा दिवाकरम् । दृष्ट्वा शुक्लाम्बरधरा पत्युर्मुखमवेक्षयेत् । तद्दिने नियताहारा कट्वम्ललवणानि च । वर्जयेन्मधुराहारा पतिसङ्गं च वर्जयेत् ॥ शास्त्रोक्तदिवसे शुद्धा कामं रात्रौ पतिव्रता । पतिमेव हरिं मत्वा स्वयमेव रमेति च ॥ षोडशर्तुनिशास्वेवं तस्मिन्युग्मासु संविशेत् । द्वादशाष्टचतुर्थस्थे चन्द्रे वैनाशिकर्क्षगे ॥ वैधृतौ च व्यतीपाते मघायां मूलभे तथा । गण्डातिगण्डपरिघशूलयोगेषु वर्जयेत् ॥ एवं नियममाश्रित्य निषेकात्पुरुषो-

भुवि। लभते संततिं योग्यामिहामुत्र च शर्मणे' इति ॥ ॥ कारिका—'जयन्तोक्तेन मार्गेण गर्भाधानमिहोच्यते। चतुर्थदिवसादूर्ध्वं मघामूलादि वर्जयेत् ॥ अलंकृते गृहे धूपगन्धमाल्यादिभिः शुभैः। ऋतुस्नातां शुभैर्गन्धमाल्यादिभिरलंकृताम्। अलंकृतः स्वयं तद्वदारोप्य शयनं ततः। पेपयिलाश्वगन्धाया मूलं शुक्लाम्बरे क्षिपेत् ॥ऋचोदीर्ष्वेति इत्यस्या दक्षिणे नासिकाबिले। निष्पीड्य पिष्टं तन्मूलं वस्त्रसंशोधितं ततः ॥ एवं कृतोपगमने कृते स्याद्गर्भलम्भनम्' इति ॥ अत्र गृह्यपरिशिष्टं तु—'अथ ऋतुमत्याः प्राजापत्यमृतौ प्रथमेऽनुकूलेऽहनि सुस्नातयान्वारब्धः प्राजापत्यस्य स्थालीपाकस्य हुत्वा आज्याहुतीर्जुहुयात् विष्णुर्योनिमिति तिस्रो नेजमेषेति तिस्रः प्रजापते न त्वदित्येकाऽथ तां मूर्ध्न्येवनः शोशुचदघमित्यभिमृश्य याः फलिनीरिति जपित्वा वधेन दस्युमिति पञ्चिः अग्निस्तुविश्रवस्तममिति द्वाभ्यामग्निमुपस्थाय सूर्यो नो दिवस्पात्विति सूक्तेनादित्यमुपतिष्ठेत। अथ गर्भलम्भनमृतावनुकूलायां निशि स्वलंकृते सुगन्धैर्वासिते वेश्मनि तथाभूते पर्यङ्कशयने सुस्नातामलंकृतां शुक्लवसनां स्रग्विणीं भार्यां स्वयं तथाभूतो निवेश्य दूर्वाः पिष्ट्वाऽश्वगन्धां वा सूक्ष्मेण वाससा संगृह्य उदीर्ष्वेति द्वाभ्यां स्वाहाकारान्ताभ्यामुभयोर्नासिकाविलयोर्निषिच्य संवेश्य—गन्धर्वस्य विश्वावसोर्मुखमसीत्युपस्थमभिमृश्य विष्णुर्योनिं कल्पयत्विति द्वाभ्यां विहृत्य यो गर्भमोषधीनां अहं गर्भमदधामोषधीष्विति जपित्वोपगच्छेत्—प्राणे ते रेतो दधाम्यसावित्यनुप्राण्यात्—यथा भूमिरग्निगर्भा यथा द्यौरिन्द्रेण गर्भिणी। वायुर्यथा दिशां गर्भ एवं ते गर्भं दधाम्यसाविति स्त्रीहृदयमभिमृशेदेके उपगमने मन्त्रविधिमिच्छन्ति न ह्यनेन किंचित्संस्क्रियत इत्योषधिनिषेकं कृत्वोपगच्छेदिति' इति ॥ अथ स्मृतिरूपेणाहाचार्यः—'स्नातायाः मुक्तायाश्च ऋतुमत्याः समेऽहनि। प्रातरभ्युदयं कृत्वा

पुण्याहं चापि वाचयेत् ॥ ततस्तद्दीरितां पुण्यां स्वसमन्यैरपि द्विजैः । अधीयीतोपनिषदमपराह्णे समापयेत् ॥ विप्रैः सहैव भुक्त्वा तु स्वभिरागमनमेव च । ततोऽस्तमयवेलायां कृतकृत्यो भवेन्नरः ॥ मुद्रितं संवृतं गन्धं पुष्पाक्षतसमन्वितम् । धूपितं ज्वलितं दीपैर्गृहं पत्न्या सहाविशेत् ॥ अलंकृते गृहे तस्मिन्वितानोपरिमण्डितम् । शयनं सुसुखस्पर्शं सर्वोपस्करणान्वितम् ॥ आचम्यारोपयित्वा तां पत्नीं गन्धस्रगलंकृताम् । स्वयं चालंकृतस्तत्र शयनं समुपाविशेत् ॥ आनयित्वाश्वगन्धाया मूलमालोड्य सूक्ष्मवत् । वार्यभेण तु सू-त्रेण तु मूलेन नासयेत् ॥ कपिलीपयसा मिश्रं कांस्यपात्रगतं शुभम् । दक्षिणस्यां नासिकायां सिंचेन्मन्त्रेण तत्पतिः ॥ सा मन्त्रमू-र्दार्भेति सितान्मिचुदरं गते । तां पूषन्निति मन्त्रेण तामुपेयाद्यथाविधि ॥ एवं कृत्वा सकृद्वर्तो रागे नित्यं समाव्रजेत् । असकृच्च भवेदस्या गर्भाधानं कृतं स्त्रियाः' इति ॥ अत्र भगवान्शौनकः—'षोडशस्वृतुसंज्ञेषु दिनेष्वाद्यं चतुर्दिनम् । आर्तवाशौचसंपृक्तं रजोपिता परेषु तु ॥ दिनेषु द्वादशस्वेतेष्वेकस्मिन्पतिभार्ययोः । उभयोरपि जन्मर्क्षेऽनुगुणे तारके ध्रुवम् ॥ स्नापयित्वाथ गन्धाद्यै-र्भूषयित्वा च शोभने । मुहूर्ते त्वश्वगन्धाया मूलं संपीड्य तत्पुनः ॥ कृत्वा नवाम्बराच्छन्नं परिगृह्याग्रपाणिना । उदीर्ष्वातः पतिवती-त्यायामृचमुदीर्य तु । जायाया दक्षिणे नासारन्ध्रे सिञ्चेच तद्रसम् ॥ उदरस्थे रसे तस्मिन्नाचान्तसलिलां सतीम् । उपगच्छेद्व्रधूमेनं विधिनोपगमे कृते । गर्भः स्थिरः स्यादित्येनं गर्भलम्भनमूचिरे' इति ॥ ऋग्विधाने तु—'विष्णुर्योनिं जपेत्सूक्तं योनिं स्पृष्ट्वा त्रि-भिर्नती । गर्भाधानं ततः कुर्यात्सत्पुत्रो वै प्रजायते' इति । त्रिभिर्ऋग्भिः ॥ मनुः—'उच्चमाम्बरगन्धाद्यैः शुचिर्भूत्वा समाहितः । विष्णुर्योनिं सूक्तं च जपित्वाधानमाचरेत्' इति ॥ ❀ ॥ अथ भोजने वर्ज्यान्युक्तानि स्कन्दपुराणे कपिलसंहितायाम्—

'वीजापहारिणी चान्या स्त्रीपुंसोरतिभीषणा। मध्याह्नभोजनैः स्नानैस्तस्याश्चोपशमो भवेत्' इति। वीजापहारिणीति काचन दुःसहपुत्री॥ ॥ एतदकरणे प्रायश्चित्तमाहाचार्यः—'गर्भाधानस्याकरणात्तस्यां जातस्तु दुष्यति। अकृत्वा गां द्विजे दत्त्वा कुर्यात्पुंसवनं पतिः' इति॥

अथेदानीमस्मिन्कर्मणि विनियुक्तमन्त्रार्थः कथ्यते। विष्णुर्योनिमिति—विष्णुर्व्यापको देवः योनिं गर्भधारणस्थानं कल्पयतु करोतु। त्वष्टा तनूकर्ता एतत्संज्ञको देवश्च रूपाणि निरूपकाणि स्त्रीत्वपुंस्त्वाभिव्यञ्जकानि चिह्नानि पिंशतु अवयवीकरोतु। पिश अवयवे। मुचादित्वान्नुम्। एवं प्रक्लृप्तायां योन्यां प्रजापतिः रेतः आसिञ्चतु निषिञ्चतु विसृजत्वित्यर्थः। धाता धारको देवः हे जाये, ते तव गर्भं गर्भरूपेण परिणतं तद्रेतो दधातु तत्रैव धारयतु। गर्भपाताऽप्रसवा माभूवन्नित्यर्थः॥ गर्भं धेहीति—हे सिनीवालि एतत्संज्ञे देवि, गर्भं धेहि निषिक्तं गर्भं धारय। हे सरस्वति, त्वं च निषिक्तं गर्भं धारय। हे जाये, पुष्करस्रजा पुष्करमालिनौ स्वर्णकमलाभरणावश्विनौ देवौ तव गर्भं आधत्तां प्रक्षिपताम्। कुरुतामित्यर्थः॥ हिरण्ययी इति—हिरण्ययी हिरण्मय्यौ अरणी यं गर्भमुद्दिश्य अश्विना अश्विनौ देवौ निर्मन्थतः निर्मथितवन्तौ। हे जाये, ते तुभ्यं त्वदर्थं तं गर्भं हवामहे आह्वयामहे। दशमे मासि सूतवे प्रसोतुम्। 'पद्दन्' इत्यादिना मासशब्दस्य मास्भावः। सूतेः 'तुमर्थे सेसन्' इति तवेन्प्रत्ययः। नेजमेषेति मन्त्रत्रयं सीमन्ते व्याख्यास्यते। प्रजापते नत्वदित्ययं मन्त्रश्चौले व्याख्यास्यते॥ अपन इति—हे अग्ने, नोऽस्माकमघं पापं अपशोशुचत् अस्मत्तो निर्गत्यास्मदीयं शत्रुं शोचयतु। यद्वा अस्मदीयं पापं शोशुचत् शोकग्रस्तं सद्विनश्यतु। अपिच अस्माकं रयिं

धनं आसमन्तात् शुशुग्धि प्रकाशय । उक्तार्थमपि वाक्यभादरातिशयद्योतनाय पुनः पठ्यते । अवश्यमस्माकमघं विनश्यत्विति । शोशुचत् शुच शोके अस्माद्यङ्लुगन्ताल्लेट्याडागमः । अदादिवच्चेति वचनाच्छपो लुक् । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । अघं शोशुचच्च रयिं शुशुग्धिचेति चार्थप्रतीतेः 'चादिलोपे विभाषा' इति निघातप्रतिषेधः । शुशुग्धि । शुच दीप्तौ लोटि 'बहुलं छन्दसी'ति शपः श्लुः । 'हुझल्भ्यो हेर्धिः' 'चोः कुः' इति कुत्वम् ॥ सुक्षेत्रियेति—सुक्षेत्रिया शोभनक्षेत्रेच्छया सुगातुया शोभनमार्गेच्छया वसूया च धनेच्छया निमित्तभूतया च यजामहे अग्निं हविर्भिः पूजयामः ॥ यद्वा सुक्षेत्रिया देवयजनलक्षणशोभनदेशसंबन्धिना हविषा अग्निं यजामहे । नोऽस्माकमघं अपशोशुचत् विनश्यतु । सुक्षेत्रिया शोभनं क्षेत्रं सुक्षेत्रं तद्विषया इच्छा सुक्षेत्रिया 'सुप आत्मनः क्यच्' 'न छन्दस्यपुत्रस्य' इति तदीर्घयोर्निषेधः । व्यत्ययेनेत्वम् । क्यजन्तात् 'अप्रत्ययात्' इति भावेऽकारप्रत्ययः ततष्टाप् । 'सुपां सुलुक्' इति तृतीयाया लुक् । एवमुत्तरत्रापि । यद्वा शोभनं क्षेत्रमस्यास्तीति सुक्षेत्रिया 'इयाडियाजीकाराणामुपसंख्यान'मिति तृतीयाया इयाजादेशः ॥ प्रयद्भन्दिष्ठ इति—यद्यथा एषां स्तोतॄणां मध्ये अयं कुत्सः प्रभन्दिष्ठः प्रकर्षेण स्तोतृतमः एवमस्माकामः अस्माकीनाः सूरयः स्तोतारश्च प्रकर्षेण स्तोतृतमा भवन्ति । अन्यत्समानम् । भन्दिष्ठः भन्दतिः स्तुतिर्मा । भदि कल्याणे सुखे चेति धातुः । असात्तृजन्तात् 'तुश्छन्दसि' इति इष्ठन् 'तुरिष्ठेमेयस्सु' इति तृलोपः । अस्माकासः अस्माकं संबन्धिन आस्माकाः । 'तस्मिन्नणि च युष्माकास्माकौ' इत्यस्माकादेशः । छान्दसो नञ्प्रत्ययस्य लोपः । संज्ञापूर्वकस्य विधेरनित्य-

पाठा०—१ पर्वतीत्रेति पाठिकादिशयं ।

ताद्भ्रूयमानः । 'आज्जसेरसुक्' स्थानिवदादेशोऽपि मकारात्परस्याकारस्योदात्तत्वम् । यद्वा षष्ठीबहुवचनेऽस्माकंशब्दस्य मध्योदात्तस्य दृष्टत्वात् मध्यवचार्येणातिदिश्यते ॥ प्र यत्ते अग्न इति—हे अग्ने, यद्यस्मात्ते तव सूरयः स्तोतारः प्रजायन्ते पुत्रपौत्रादिरूपेण बहुविधा भवन्ति ततो वयं च ते तव स्तोतारः सन्तः प्रजायेमहि पुत्रपौत्रादिभिरुपेता भवेम । जायेमहीति प्रार्थनायां लिङ् । श्यनि 'ज्ञाजनोर्जा' इति जादेशः । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे श्यनो नित्त्वादाद्युदात्तत्वम् ॥ प्र यदग्ने इति—सहस्वतः सहनवतः शत्रूनभिभवतोऽग्नेर्भानवो दीप्तयः विश्वतः सर्वतः सर्वस्मादपि प्रदेशात्प्रयन्ति प्रकर्षेणोद्गच्छन्ति । यद्यस्मादेवं तस्मात्तेनाग्नितेजसा अस्मदीयं अघं नश्यतु । 'इणो यण्' इति यणादेशः ॥ त्वं हीति—हे अग्ने, त्वं हि त्वं खलु विश्वतोमुख सर्वतोज्वाल, तव मुखस्थानीयानां ज्वालानां न कुत्रापि प्रतिहतिरस्ति । अतो हे विश्वतोमुखाग्ने, विश्वतः सर्वतः सर्वस्मादपि उपद्रवजातात्परिभूरसि अस्माकं परिग्रहीतासि परिग्रहीता भव । रक्षको भवेत्यर्थः । अन्यत्समानम् ॥ द्विषो न इति—हे विश्वतोमुख सर्वतोमुखाग्ने, नावेव नावा नदीमिव द्विषः शत्रूनोऽस्मानतिपारय अतिक्रमय्य शत्रुरहितं देशं प्रापय । नावेव 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । पारय । पारतीर कर्मसमाप्तौ ॥ स नः सिन्धुमिति—पूर्वोक्त एवार्थः । पुनरपि दार्ढ्याय प्रार्थ्यते । हे अग्ने, स त्वं नोऽस्मान्नावया नावा सिन्धुमिव स्वस्तये क्षेमार्थं अतिपर्षि शत्रूनतिक्रमय्य पारय । शत्रुरहितं प्रदेशं अस्मान्प्रापयेत्यर्थः । त्वत्प्रसादान्नोऽस्माकं अघं पापं च अपशुशुचत् असत्तोपक्रम्य असन्छनुः शोकयुक्तो भवतु । नावया 'आङ्याजयारामुपसंख्यानम्' इति तृतीयाया अयारादेशः । 'उपोत्तमं रिति' इत्यकारस्योदात्तत्वम् । पर्षि । पॄ पालनपूरणयोः लोटि 'बहुलं छन्दसि' इति शपः

स्तुभानः । 'सिन्बहुलं लेटि' इति बहुलवचनात्सिप् गुणः 'द्व्यचोऽतस्तिङः' इति दीर्घत्वम् ॥ याः फलिनीरिति—याः फलिनीः फलवत्यः या अफलाः फलवर्जिताः या अपुष्पाः पुष्परहिताश्च याः पुष्पिणीः पुष्पवत्यः बृहस्पतिर्मन्त्राभिमानीदेवः तेन प्रसूता अनुज्ञाताः ता नः अस्मानंहसो मुञ्चन्तु ॥ वधेन दस्युमिति—हे अग्ने, वधेन आयुधेन दस्युमुपक्षपयितारं अहिचातयस्व प्रणाशय । हीति पूरणः । वयः कृण्वानः तन्वे शरीराय स्वायै स्वकीयाय अथवा स्वायै तन्वे यजमानादिरूपाय पुत्राय वयोऽन्नं कुर्वाणः यद्यस्माल्सहसस्पुत्राग्ने, देवान्पिपर्षि तर्पयसि । हे नृतम नेतृतमाग्ने, स त्वं वाजे संग्रामे अस्मान्पाहि रक्ष ॥ वयं त इति—हे अग्ने, ते त्वां वयमुक्थैः शस्त्रैः विधेम परिचरेम । वयं हव्यैर्हविर्भिर्निधेम । हे पावक शोधक, हे भद्रशोचे कल्याणदीप्ते, अग्ने अस्मभ्यं विश्वारं विश्वैर्वरणीयं रयिं धनं समिन्व प्रापय । अग्ने अस्मासु विश्वानि द्रविणानि धेहि स्थापय ॥ अस्माकमग्न इति—हे अग्ने, अस्माकं अध्वरं जुषस्व सेवस्व । हे सहसःसूनो बलस्य पुत्र, त्रिषधस्थ त्रिषु क्षित्यादिस्थानेषु स्थितं हव्यं हविर्जुषस्व । यद्वा अध्वरं हविरिति योज्यम् । अहिंसितं हविरित्यर्थः । वयं यजमानाः देवेषु मध्ये सुकृतः शोभनापूर्वकर्तारः स्याम भवेम । त्रिवरूथेन वाचिकादिभेदेन त्रिधा वरणीयेन शर्मणा सुखेन, त्रिच्छदिष्केण गृहेण वा नः पाहि रक्ष ॥ अत्र त्वं विश्वानिन इति मन्त्रद्वयमग्निप्रकरणे व्याख्यातम् ॥ अग्निस्तुविश्रवस्तममिति—अग्निस्तुविश्रवस्तमं अतिशयेन बहन्नं तुविब्रह्माणं बहुस्तोत्रं उत्तमं उत्कृष्टं अतूर्तं शत्रुभिरहिंसितं श्रावयत्पतिं श्रावयति विश्रुतान्करोति पतीन्पालयितॄन् पितॄन् इति स्वकर्मणा पितॄणां प्रख्यापक इति श्रावयत्पतिः तथाविधं पुत्रं दाशुषे हवींषि दत्तवते यजमानाय ददाति ददातु ॥ अग्निर्ददातीति—यः पुनः शुधा शुद्धेन नृभिः परिजनैः

प्रसह्य शत्रूनभिभवति सत्पतिं सतां पातारं तथाविधं पुत्रं अग्निर्ददाति अस्मभ्यं ददातु। किंच अग्निः रघुष्यदं रघुर्लघुः स्यदो जवो यस्य तं जेतारं शत्रूणां अपराजितं शत्रुभिः अत्यं अतति सततं गच्छतीत्यत्योऽश्वः तं ददातु॥ सूर्यो न इत्ययं मन्त्र औपासनप्रकरणे व्याख्यास्यते॥ जोषा सवितरिति—हे सवितः सर्वस्य प्रेरक सूर्य, जोष असत्स्तुत्यादिकं सेवस्व। यस्य ते तव हरः रसहरणशीलं तेजः शतं सर्वान्यिज्ञयज्ञान् प्रति अर्हति योग्यं भवति। यद्वा प्रकाशनादिद्वारा पूजयति। स त्वं नोऽस्मान् पतन्त्याः शत्रुभिरस्मासु क्षिप्यमाणाया दिद्युतः। वज्रनामैतत्। द्योतमानायाः शक्तेरायुधात् पाहि रक्ष॥ चक्षुर्न इति—सविता प्रेरकः देवः नः अस्माकं चक्षुः प्रकाशकमिन्द्रियं इन्द्रियानुग्राहकं तेजो वा दधातु। उत अपिच पर्वतः इन्द्रसहचरः पर्वताख्योऽपि देवः नः अस्माकं चक्षुर्दधातु। धाता सर्वस्य विधाता आदित्यानामन्यतमश्च नः अस्माकं चक्षुर्विदधातु॥ चक्षुर्नो धेहीति—नोऽस्माकं चक्षुषे रूपोपलब्धिकारणायेन्द्रियाय चक्षुः प्रकाशकं तदनुग्राहकं तेजः हे सूर्य, धेहि विधेहि कुरु। यद्वा न इति व्यत्ययेन बहुवचनम्। चक्षुषे चक्षुःसंज्ञाय नः मह्यं चक्षुरिन्द्रियं वा तेजो वा हे सूर्य, धेहि प्रयच्छ। तनुभ्यः अस्माकं शरीरेभ्यस्तनयेभ्यो वा विख्यै विख्यानाय प्रकाशनाय चक्षुः त्वदीयं प्रकाशं विधेहि। यत एवं तस्मात्कारणात् त्वदीयेन तेजसा वयं च इदं सर्वं जगत् संपश्येम सम्यग्द्रष्टारो भवेम। विपश्येम च विविधं च सविशेषं द्रष्टारो भवेम॥ सुसंदृशमिति—हे सूर्य, सुसंदृशं सुष्ठु संद्रष्टारं त्वा त्वां वयं प्रतिपश्येम प्रत्येकं द्रष्टारो भूयास्म। तथा नृचक्षसः नृभिर्मनुष्यैः अस्माभिर्द्रष्टव्यान् पदार्थान् विपश्येम विद्रष्टारो भवेम। यद्वा नृचक्षसः नृणां शत्रुमनुष्याणां हिंसकाः सन्तो वयं विशिष्टज्ञाना भवेम॥ अथाग्निर्नृणां विवाहः स्तूयते।

उदीर्ष्वात इति—हे विश्वावसो, अतःस्थानात् कन्यासमीपात् उदीर्ष्व उत्तिष्ठ । हि यस्मात् एषा कन्या पतिवती मया पत्या तद्वती संजाता अत उदीर्ष्वेति वा अतःशब्दो योज्यः । विश्वावसुं एतन्नामानं गन्धर्वं त्वां नमसा नमस्कारेण गीर्भिः स्तुतिभिश्च ईळे स्तौमि । यदि एनां विहाय कां स्वीकरोमीति यदि ब्रूषे तर्हि अन्यां पितृषदं व्यक्तामिच्छ । पितृषदं पितृकुले स्थितां व्यक्तां अनूढेति परिस्फुटां विगताञ्जनां वा स्तनोद्गमादिराहित्येन अप्रौढामित्यर्थः । स तादृशः पदार्थो जनुषा जन्मना ते तव भागः कल्पितः तस्य तं भागं विद्धि जानीहि लभस्वेत्यर्थः ॥ उदीर्ष्वातो विश्वावसो इति—अतोऽस्माच्छयनात् हे विश्वावसो कन्या-स्वामिन् गन्धर्व, उदीर्ष्व उद्गच्छ । ईर गतौ आदादिकः अनुदात्तेत् तस्य लोटि रूपम् । विश्वावसुर्नाम गन्धर्वः कन्यानामधि-पतिः यतः लभामि तेन कन्यामिति हि मन्त्रः तादृशदेव, त्वां नमसा नमस्कारेण ईळामहे स्तुमः । स त्वमन्यां प्रफर्व्यं प्रथमव-यसं वृहन्नितम्बां कन्यामिच्छ मे जायां पत्या मया सह पुनः संसृज । ( जायां मां पत्या सह पुनः संसृज ) ॥ गन्धर्वस्य विश्वावसोर्मुखमसीति—तां पूषन्निति—हे पूषन्, यस्यां मनुष्याः बीजं वपन्ति शुक्रमुत्सृजन्ति तां मे शिवतमां अनुकूलतमां कृत्वा एरयस्व प्रेरयस्व । भार्यां मे प्रोत्साहयेत्यर्थः । भार्यायां हि बीजं वपन्ति अन्यत्र निषेधात् भार्या विशेष्यते । या नः 'अस्मदो द्वयोश्च' इत्येकस्मिन्बहुवचनम् । मह्यं ऊरू विश्रयाते पञ्चमो लकारः । विश्रयाते विश्लिष्टौ कुर्यात् तदा हि योनिर्विवृता भवति । यस्यां चैवंभूतायां उशन्तः कामयमाना भूत्वा शेपं प्रहराम प्रक्षिपेम । पूर्ववद्बहुवचनम् ॥ यो गर्भमोषधीनामिति—यो गर्भं यः पर्जन्यः ओषध्यादीनां गर्भं कृणोति । अर्वतामित्यत्र पुंस्त्वं न विवक्षितम् । पुरुषशब्दः स्त्रीलिङ्गोऽपि । तस्यां अश्व्यां

च पुरुष्यां च धेनुके दद्युरिति ॥ अहं गर्भमिति—अहं होता ओषधीषु शाल्यादिषु फलार्थं गर्भमदधां धारयामि । विश्वेषु सर्वेषु अन्येष्वपि भुवनेषु भूतजातेषु अन्तर्मध्ये अहमेव गर्भं धारयामि। तथा पृथिव्यां प्रजाः सर्वान्मनुष्यानहं अजनयं जनयामि । जनिभ्यो जायाभ्यः अपरीषु अन्यास्वपि स्त्रीषु पुत्रानहमजनयं जनयामि । मत्साध्येन यागेन सर्वस्योत्पत्तेरहं सर्वजननहेतुर्भवामीत्यर्थः ॥ प्राणेते रेत इति—अतः कारणात् प्राणे रेतो दधामि ॥ यथा पृथिवीति—यथा पार्थिवेषु अरण्यादिषु अभ्यवस्थानात्पृथिव्यग्निगर्भोच्यते । यथा द्युलोके इन्द्रः प्रधानभूतस्तस्य गर्भत्वेन निरूप्यते । यथा वायुर्दिग्भ्यो भवति तेनासावपि दिग्गर्भः यथासामेते गर्भा एवं अहं ते गर्भं दधामीति । इति मन्त्रार्थः ।

अथ गर्भाधानप्रयोगः । पतिः पूर्वोक्ततिथ्यादिषु दंपत्योरनुकूले नक्षत्रे गर्भाधानं कुर्यात् । तत्रायं क्रमः—यजमानः प्रातरभ्यङ्गस्नानं कृत्वा पत्नीमपि नवोदकुम्भसलिलैः सप्तमृत्तिकापञ्चपल्लवपञ्चत्वक्सहितैः स्नापयित्वा तया सह मङ्गलवस्त्राभरणादिकं धृत्वा आचम्य स्वस्तिवाचनाभ्युदयिके कृत्वौपासनाग्निं प्रतिष्ठाप्य गर्भाधानार्थं प्राजापत्यहोमं करिष्ये । तत्र देवतापरिग्रहार्थमित्यादिचक्षुषी आज्येनेत्यन्तमुक्त्वा प्रजापतिं चरुणा विष्णुं षड्वारं प्रजापतिं चाज्येन शेषेण स्विष्टकृतमित्यादि सद्यो यक्ष्य इत्यन्तमुक्त्वा समिद्वयमग्नावाधाय परिसमूहनादिपूर्णपात्रनिधानान्तं कृत्वा प्रजापतये त्वा जुष्टं निर्वपामीत्याद्याज्यभागान्तं कृत्वा पत्न्यान्वारब्धः प्रजापतयेस्वाहेति चरुणा हुत्वा त्यजत्वाच । विष्णुर्योनिमिति तिसृणां सष्टाविष्णुरनुष्टुप् । विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आसिंचतु प्रजापतिर्धाता गर्भं दधातु ते स्वाहा ॥ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति । गर्भं ते अश्विनौ

देवावाधत्ता पुष्करस्रजास्वाहा ॥ हिरण्ययी अरणीयं निर्मन्थतो अश्विना । तं ते गर्भं हवामहे दशमे मासि सूतवे स्वाहा ॥ नेजमेषेति तिसृणां त्वष्टा विष्णुरनुष्टुप् ॥ नेजमेष परापत सुपुत्रः पुनरापत । अस्यै मे पुत्रकामायै गर्भमाधेहि यः पुमान्स्वाहा । यथेयं पृथिवी मह्युत्ताना गर्भमादधे । एवं तं गर्भमाधेहि दशमे मासि सूतवेस्वाहा ॥ विष्णोः श्रेष्ठेन रूपेणास्यां नार्यां गवीन्याम् । पुमांसं पुत्रानाधेहि दशमे मासि सूतवेस्वाहा ॥ सर्वत्र विष्णव इदं नममेति त्यागः । प्रजापते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् । प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणां स्वाहा । प्रजापतयइदं० । इति सप्ताज्याहुतीर्हुत्वा तत्तद्देवताया इदं नममेति प्रत्येकमुद्देशत्यागौ कृत्वा । अपन इत्यष्टर्चस्य सूक्तस्य कुत्सोऽग्निर्गायत्री । अप नः शोशुचदघमग्ने शुशुग्ध्या रयिम् । अप नः शोशुचदघम् ॥ सुक्षेत्रिया सुगातुया वसूया च यजामहे । अपनः० ॥ प्रयद्भन्दिष्ठ एषां प्रास्माकासश्च सूरयः । अपनः० ॥ प्रयत्ते अग्ने सूरयो जायेमहि प्र ते वयम् । अपनः० ॥ प्रयदग्नेः सहस्वतो विश्वतो यन्ति भानवः । अपनः० ॥ त्वं हि विश्वतोमुख विश्वतः परिभूरसि । अपनः० ॥ द्विषो नो विश्वतोमुखाति नावेव पारय । अपनः० ॥ स नः सिन्धुमिव नावयाति पर्षा स्वस्तये ॥ अपनः० ॥ १ ॥ अनेन पत्न्या मूर्धानमभिमृश्य । याः फलिनीरित्यस्याथर्वणो भिषगोषधयोनुष्टुप् । याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥ इमं मन्त्रं जपित्वा फलप्रदानं कुर्यात् । वधेन दस्युमिति पञ्चर्चस्य सूक्तस्य वसुश्रुतोऽग्निस्त्रिष्टुप् । वधेन दस्युं प्र हि चातयस्व वयः कृण्वानस्तन्वे३ स्वायै । पिपर्षि यत्सहसस्पुत्र देवान्त्सो अग्ने पाहि नृतम वाजे अस्मान् ॥ वयं ते अग्न उक्थैर्विधेम वयं हव्यैः पावक भद्रशोचे । अस्मे रयिं

त्रिधर्तारं मार्मिन्द्रास्मे विश्वानि द्रविणानि धेहि ॥ अस्माकमग्ने अध्वरं जुषस्व सहसःसूनो त्रिषधस्थ हव्यम् । वयं देवेषु सुकृतः स्याम शर्मणा नस्त्रिवरूथेन पाहि ॥ विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरितातिपर्षि । अग्ने अत्रिवन्नमसा गृणानो३ऽस्माकं बोध्यविता तनूनाम् ॥ यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि । जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याम् ॥ यस्मै त्वं सुकृते जातवेद उलोकमग्ने कृणवः स्योनम् । अश्विनं सपुत्रिणं वीरवन्तं गोमन्तं रयिं नशते स्वस्ति ॥१॥ अग्निस्तुविश्रवस्तममिति द्वयोर्वसूयवोऽग्निरनुष्टुप् । अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम् । अतूर्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे ॥ अग्निर्ददाति सत्पतिं सासाह यो युधा नृभिः । अग्निरत्यं रघुष्यदं जेतारमपराजितम् ॥ एताभिरग्निमुपस्थाय स्विष्टकृदादिहोमशेषं समाप्य । सूर्यो नो दिवस्पात्विति पञ्चर्चस्य सूक्तस्य चक्षुः सूर्यो गायत्री । अनेन पत्न्यासह सूर्योपस्थानं कृत्वा ब्राह्मणान्भोजयित्वा तेभ्यः स्वस्त्ययनपूर्वकमाशिषं गृहीत्वा भुञ्जीत ॥ ततः सायंकालीननित्यकर्मानन्तरमुभौ शुक्लाम्बराणि धृत्वानुलेपनमाल्याभरणादिभिः शरीरे अलंकृत्य स्वलंकृतसुधूपितगन्धमाल्यामलदीपयुक्तमभयं गृहं प्रविशेताम् । ततो यजमानः अभग्नं जन्तुवर्जितं सुखस्पर्शं वितानोपरिमण्डितं पर्यङ्कमारुह्य प्रागुक्ते शोभने मुहूर्ते स्त्रियमारोप्य अश्वगन्धाकल्कं दूर्वाकल्कं वा सूक्ष्मवस्त्रे निक्षिप्य । उदीर्ष्वेतिद्वयोः सूर्यासावित्री सूर्यासावित्री त्रिष्टुबन्त्यानुष्टुप् । उदीर्ष्वातः पतिवती ह्येषा विश्वावसुं नमसा गीर्भिरीळे । अन्यामिच्छ पितृषदं व्यक्तां स ते भागो जनुषा तस्य विद्धि ॥ उदीर्ष्वातो विश्वावसो नमसेळामहे त्वा । अन्यामिच्छ प्रफर्व्यं१ सं जायां पत्या सृज स्वाहा ॥ आभ्यां स्वाहान्ताभ्यां वायव्यभागे उपविष्टाया दक्षिणसव्यनासाबिलयोर्यथाक्रममे-

र्कैकामृचं पठन् तद्रसं सिक्त्वा तद्रसे उदरंगतेसति तामाचान्तामुपेयात् ॥ तत्रायं क्रमः—मध्यरात्रान्ते गन्धर्वस्य विश्वावसो-र्मुखमसि इति मन्त्रेणोपस्थमभिमृश्य विष्णुर्योनिमिति ऋक्त्रयं नेजमेषेति ऋक्त्रयं च पठन् लिङ्गमण्डद्वयं च स्पर्शयित्वा । तां पूषन्नित्यस्य सूर्यासावित्री सूर्यासावित्रीत्रिष्टुप् । यो गर्भमित्यस्य वसिष्ठः पर्जन्यो गायत्री । अहं गर्भं प्रजावान्प्राजापत्यो भर्ग इन्द्रो वा त्रिष्टुप् । तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या३ वपन्ति । या न ऊरू उशती विश्रयाति यस्यामुशन्तः प्रहराम शेपम् ॥ यो गर्भमोषधीनां प्रजां कृणोत्यर्वताम् । पर्जन्यः पुरुषीणाम् ॥ अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः । अहं प्रजा अजनयन्पृथिव्यामहं जनिभ्यो अपरीषु पुत्रान् ॥ इति मन्त्रान्जपित्वा सकृदुपगच्छेत् । ततः प्राणे ते रेतो दधाम्यसावि-त्यनुप्राण्य—यथा भूमिरग्निगर्भा यथा द्यौरिन्द्रेण गर्भिणी । वायुर्यथा दिशां गर्भ एवं ते गर्भं दधाम्यसाविति स्त्रीहृदयमभिमृश्या-चामेत् । मन्त्रे असौपदस्थाने स्वनामोच्चरेत् । ततः प्रातर्नित्यकर्म निर्वर्त्य कर्मान्ते कर्तव्यं स्वस्तिवाचनं पूर्ववत्कुर्यात् ॥ इति नृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे गर्भाधानम् ॥

अथ पुंसवनप्रकरणम् । प्रणमामि परमसिंहं पद्माप्रणयैकभाजनं वरदम् । जननाय भवति जगतां यन्नाभीपद्म पुंस-वनम् ॥ लक्ष्मीनृसिंह भगवन्भवति स्थिरभक्तिभाग्भवति । यः स तु पुरुषविशेषो मायानवलोभनाय संभवति ॥ अथेदानीं पुंसवनानवलोभनयोर्विधिरभिधीयते । तत्र तिथ्यादिनिर्णय उच्यते श्रीधरीये—‘कुर्यात्पुंसवनं प्रसिद्धविषये गर्भे तृतीयेऽथ वा मासे स्त्रीनतनौ तुषारकिरणे पुष्येऽथवा वैष्णवे । हित्वा कर्कटकं नृयुग्ममचलामन्येष्वरिक्ते तिथौ शुद्धे नैधनधाम्नि शुक्रशशा-

भृद्गिन्मन्त्रिणां वासरे' इति । अर्थः—प्रसिद्धविषये सुस्थापिते गर्भे तृतीये मासि पुंसवनं कुर्यात् । अथवेति मासालाभे विधिरुच्यते—अथवा तृतीयमासालाभे चतुर्थे षष्ठेऽष्टमे वा कुर्यादिति विशेषः ॥ तदाह बृहस्पतिः—'गर्भस्य स्थापने कालस्तृतीये मासि चोदितः । गृष्टेरन्यत्र गृष्टेस्तु षष्ठे मास्यथ वाष्टमे' इति । गृष्टिः सकृत्प्रसूता । तथोक्तम्—'गृष्टिः सकृत्प्रसूता स्यात्' इति । वराहः—'तृतीये मासि कर्तव्यं गृष्टेरन्यत्र शोभनम् । गृष्टेश्चतुर्थमासे तु षष्ठे मास्यथवाष्टमे' इति । नृसिंहस्त्वाह—'तृतीये मासि कर्तव्यं प्रथमे गर्भसंभवे । अङ्कुरस्य तु सद्भावाद्बहूनां संमतं त्विदम् ॥ प्रतिगर्भं तु तत्कुर्यादिति जैमिनिभाषितम् ॥ प्रथमं पुंसवः कार्यः सार्धं सीमन्तकर्मणा । सीमन्तोन्नयनस्योक्तमासवारर्क्षराशिषु ॥ पुंसवं कारयेद्विद्वान्सहैवैकदिनेऽथवा' इति । बृहस्पतिरप्याह—'सीमन्तस्य समुद्दिष्टः कालो नक्षत्रपूर्वकः । प्रतिगर्भं पृथक्कार्यं सर्वं पुंसवने शुभम्' इति । कुर्यात्पुंसवनमित्यस्य प्रयोजनं गर्भशुद्धिः । तथाह मनुः—'गर्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः । अतैरध्ययनेनैव द्विजोऽयमुपयुज्यते' इति ॥ ॥ किंच—कुर्यात्पुंसवनमिति वर्णविशेषराहित्येनोक्तत्वाच्छूद्राणामपि पुंसवनस्य कर्तव्यता गम्यते । तदाह बृहस्पतिः—'वर्धिष्णूनां चतुर्णामपि कर्तव्यतां गतम् । अमन्त्रकं तु कर्तव्यं पुंकर्म च शुभार्थिनाम्' इति । इह मासि कुर्यादिति मासप्राधान्येनास्य विहितत्वात्सुरगुरुशुक्रमौढ्येऽपि पुंसवनस्य कर्तव्यता गम्यते । बृहस्पतिः—'मासिप्रयुक्तकार्येषु मूढत्वं गुरुशुक्रयोः । न दोषकृत्तदा मासलक्षणो बलवानिति' । स्फीततनौ तुषारकिरण इत्यनेन बलवति चन्द्रे कर्तव्यमित्यभिसंहितम् । तत्र लल्लः—'प्रतिपत्पूर्वदशाहे मध्यबलः शीतगुः सिते पक्षे । संपूर्णबलः पूर्णः कृष्णे पक्षे च पञ्चमी यावत्' इति ।

अथ नक्षत्रविचारः—'पुष्येऽथवा वैष्णवे' इति । अत्र वराहः—'हस्तो मूलं श्रवणः पुनर्वसुः मृगशिरस्तथा पुष्यः । पुंसंज्ञकेषु कार्येष्वेतान्येव हि शुभानि धिष्ण्यानि' इति । नृसिंहः—'अपि पुंसवनं कार्यं दंपत्योरनुकूलभे । जन्मादि वर्जयेदाद्यार्थशर्कं विपदादिषु' इति ॥ ॥ अथ राशयः—'हित्वा कर्कटकं नृयुग्ममबलामन्येषु' इति । नृयुग्मं मिथुनम् । अबला कन्या । एतांस्त्रीन्राशीन्वर्जयित्वा अन्येषु नवराशिषु पुंसवनं कार्यम् । तथाच बृहस्पतिः—'कुलीरं मिथुनं कन्यां हित्वा शेषाः शुभावहाः' इति । कन्याराशेर्विशेषमाह बृहस्पतिः—'अनुक्ते चापि राशौ तु शुभं स्याच्छुभवीक्षिते । कन्यायां न प्रशंसन्ति शुभदृष्टे युतेऽपि वा' इति ॥ ॥ अथ तिथयः—'अरिक्ते तिथौ' इति । चतुर्थीनवमीचतुर्दश्यो रिक्तास्तद्व्यतिरिक्ते तिथावित्यर्थः । तदाह नृसिंहः—'रिक्तां च पर्व नवमीं त्यक्त्वा पुंसवने शुभाः' इति ॥ ॥ अथाष्टमशुद्धिः—'शुद्धे नैधनधाम्नि' इति । नैधनेऽष्टमस्थाने शुद्धे सर्वग्रहरहिते सतीत्यर्थः । तथाच वसिष्ठः—'अष्टमस्था ग्रहाः सर्वे नेष्टाः स्युस्ते शुभावहाः । एवं सम्यक्परीक्ष्यैव कुर्यात्पुंसवनक्रियाम्' इति ॥ ॥अथ वारनिधिः—'शुक्रशशभृद्विन्मन्त्रिणां वासरे' इति । शुक्रसोमबुधबृहस्पतीनां वारेष्वंशेषु च पुंसवनं कार्यम् । तदाह बृहस्पतिः—'गुरुशुक्रबुधेन्दूनां द्रेक्काणदिवसांशकाः । तेषामुदयहोराश्च पुंसवेऽतिशुभावहाः' इति । विधिरत्नेपि—'तिष्ये वैष्णवभे विशुद्धनिधने शुक्रेन्दुदृष्टे युते लग्ने तद्दिवसे यमेन्दुभवनस्त्रीभ्योऽन्यलग्नं शुभम् । पूर्वाह्ने सुरपूजिते व्ययगते दृष्टे चतुर्थे विधायेतत्पुंसवनं परत्र विधिना मासे तृतीये ततः' इति । तथाच माधवीये—'कुर्यात्पुंसवनं रमारमणभे पुष्येऽपि वा सद्ग्रहे लग्नस्थे

निधने ग्रहेण रहिते मासे तृतीये बुधः । शस्तौ दष्युदयौ सितामृतरुचोरत्र क्रमात्कीर्तिता वीणा कर्कटकन्यका न शुभदा पुंराशयोऽन्ये शुभाः’ इति । वीणा मिथुनराशिः ।

कारिका—‘तृतीये गर्भसंस्कारो मासि पुंसवनं भवेत् । आद्यो गर्भो न विज्ञातस्तृतीये मासि वै यदि ॥ चतुर्थे मासि कर्तव्य आद्यगर्भे स्मृतो विधिः । स्यादाभ्युदयिकं पूर्वं गर्भिण्या एकभोजनम् ॥ अथापरेद्युस्तिष्यर्क्षे पत्नीं कृत्वा समीपतः । आत्मनो दक्षिणे पार्श्वे प्रत्यगानडुहाजिने ॥ गर्भिण्युपविशेत्स्नाता जयन्तवचनं यथा । पूर्णपात्रनिधानान्तमन्वाधानादि पूर्ववत् ॥ निर्वापप्रोक्षणे तूष्णीं प्रजापतय इत्यथ । कृताज्यभागपर्यन्तमवघातादि पूर्ववत् ॥ समानरूपवत्साया गोर्दधि प्रसृतौ क्षिपेत् । पूर्वेद्युः संभृतं यद्दधि तदेव प्रसृतिपरिमितं पत्न्याः प्रसृतौ क्षिपेदित्यर्थः । प्रसृतिर्नाम परस्परसंसृष्टाकुञ्चिताङ्गुलिपाणिः । ‘पाणिर्निकुब्जः प्रसृति’रित्यभिधानात् । तादृश्या गोरभावश्चेदन्यस्या गोर्दधि क्षिपेत् ॥ माषद्वयं यवं च त्रिः पृच्छेत्किंपिबसीति ताम् । त्रिः पुंसवनमित्युक्त्वा प्राश्यैवं प्रसृतित्रयम् ॥ अण्डरूपेण माषौ स्तः शिश्नरूपेण वै यवः । परिमण्डलगेहस्य छायायामुपवेश्य ताम् ॥ सिंचेद्दूर्वारसं तस्या दक्षिणे नासिकाबिले । प्रजावज्जीवपुत्राभ्यां सूक्ताभ्यां वा तदिष्यते ॥ अन्ये त्वाहुरिदं कर्म सर्वं स्यात्परिमण्डले । एकदेशं चरोर्हुत्वा प्रजापतय इत्यथ ॥ यत्ते सुषीम इत्यस्या हृदेशे पाणिना स्पृशेत् । भवेत्स्विष्टकृदाद्यस्याः पतिर्वा देवरोऽपि वा ॥ कर्ता स्याद्देवरस्तद्वचस्याः पत्युरसंभवे । आवर्तेत इदं कर्म प्रतिगर्भमिति स्थितिः’ इति । इदमत्र गृह्यम्—‘तृतीये गर्भमासे तिष्येणोपोषितायाः सरूपवत्साया गोर्दधनि द्वौ द्वौ तु माषौ यवं च दधि प्रसृतेन प्राशयेत्किंपिबसि किंपिबसीति पृष्ट्वा पुंसवनं पुंसवनमिति त्रिः प्रतिजानीयादेवं

त्रीन्प्रस्नानथास्य मण्डलागारच्छायायां दक्षिणस्यां नासिकायामजीतामोषधीं नस्तः करोति प्रजानजीवपुत्राभ्यां हैके प्राजापत्यस्य स्थालीपाकस्य हुत्वा हृदयदेशमस्या आलभेत । यत्ते सुशीमे हृदये हितमन्तः प्रजापतौ । मन्येऽहं मां तद्विद्वांसं माहं पौत्रमघं नियामिति' इति । अस्यार्थः—तृतीये इति । गर्भसहितो मासो गर्भमासः । तिष्येणेति 'नक्षत्रे च लुपि' इत्यधिकरणे तृतीया । तिष्येणेति प्राशनकर्मणा सम्बध्यते तस्य प्रधानत्वात् । नोपवासेन तस्य गौणत्वात् । तेन पुनर्वसुनोपोपितायाः पश्चात्तिष्येणेदं कर्म करोति । तत्र प्राजापत्यस्य स्थालीपाकस्याज्यभागान्तं कृत्वा वक्ष्यमाणं कर्म कुर्यात् । समानं रूपं यस्य स सरूपः सरूपो वत्सो यस्याः सा तथोक्ता । गोग्रहणं सरूपवत्स्याया अभावेऽसरूपवत्सा ग्राह्या नाऽसरूपवत्सां त्यजेदित्येवमर्थम् । द्वौद्वाविति वीप्सावचनं कथम् । प्रतिप्रश्नं द्वौद्वौ माषौ यथा स्यातामिति । यदि वीप्सा न क्रियेत तर्हि स्थालीस्थदधन्येव माषयोर्यवस्य च प्रक्षेपः स्यात् तस्य सप्तमीनिर्दिष्टत्वात् । तस्मादावृत्त्यर्थं वीप्साद्विर्वचनम् । पुनर्दधिग्रहणं दध्नः प्राशनार्थम् । अन्यथा पूर्वस्य सप्तमीनिर्दिष्टत्वाद्दध्नः प्राशनं न स्यात् । प्रसृते दधि प्रक्षिप्य तस्मिन्दधनि माषयवानां प्रक्षेपणार्थं पूर्वं दधिग्रहणम् । अण्डरूपेण माषौ दद्याच्छिश्नरूपेण यवं तथारूपत्वात् । किं पिबसीति प्रश्नः । पुंसवनमिति प्रतिवचनम् । तत्र प्रतिप्रश्ने त्रिर्ग्रहणमाचार्येण कृतं अतस्तस्यैव त्रिस्त्वप्राप्तौ उभयोस्तुल्यत्वज्ञापनार्थमुभयत्र वीप्साद्विर्वचनम् । तेन प्रश्नोऽपि त्रिरोच्य इति सिद्धम् । अनेन विधिना त्रीन्प्रसृतान्प्राशयेत् । एकस्मिन्प्रसृते प्राप्ते त्रयः प्रसृतास्तुल्यधर्माणो विधीयन्ते । कर्मान्तरत्वात्कालान्तरप्राप्तावानन्तर्यार्थोऽथशब्दः । इदं तनवलोभनं द्रुतः । 'माहं पौत्रमघं निया'मिति मन्त्रलिङ्गात् । पुत्रसंबन्धि अशोभनं माहं नियामित्यर्थः । अस्य अस्याः मण्डलागारं कृत्वा

तस्य छायायामुपवेश्यास्या दक्षिणस्यां नासिकायां अजीतां दूर्वां नस्तःकरोति। दक्षिणग्रहणमितरेन्द्रियाणामनङ्गज्ञापनार्थम् । अजीतेति गुणनाम । अजीर्णेत्यर्थः । मार्चौपधिः पूर्वेत्युपदिशन्ति । नस्तःकरणवचनं नासिकायां रससेचनार्थम् । प्रजावता दृष्टो मन्त्रः प्रजावान् । जीवपुत्रेण दृष्टो मन्त्रो जीवपुत्रः । यथा मूर्धेति । आ ते गर्भ इति सूक्तं प्रजावान् । अग्निरेतु इति सूक्तं जीवपुत्रः । आभ्यां सूक्ताभ्यामेके नस्तःकरणमिच्छन्ति । अन्ये तूष्णीम् । हशब्दोऽभिमतत्वज्ञापनार्थः । प्राजापत्यस्य स्थालीपाकस्यैकदेशं हुत्वा हृदयदेशं हृदयसमीपमस्या आलभेत स्पृशेत् यत्ते इति मन्त्रेण । ततः स्विष्टकृदादिसमापयेत् । इदं कर्म प्रतिगर्भमावर्तेत गर्भसंस्कारत्वात् । प्रथमगर्भे तृतीयमासि यदि गर्भो न विज्ञातस्तर्हि चतुर्थे कुर्यात् । 'विज्ञाते गर्भे तिष्ये पुंसवनं तृतीये मास्यन्यत्र गृह्ये'रिति स्मरणात् । शुष्टिः प्रथमगर्भो । पञ्चमे मास्यङ्गनिष्पत्तिर्भवति । स्वयमेव चास्य कर्ता—'माहं पौत्र'मिति लिङ्गात् । तदभावे देवर इति ॥ अत्र स्मृतिरूपेणाप्याहाचार्यः—'पुंनक्षत्रेण कार्यं स्याद्गर्भाधानं विपश्चिता । तथा पुंसवसीमन्तवलयश्च विधानतः ॥ वर्जयेत्सर्वकर्माणि विपत्प्रत्यरनैधने । चन्द्रेऽष्टमे प्रयत्नेन वधनाशव्यये तथा ॥ श्रवणेन तु मासेपि तृतीये वा चतुर्थके । मासि तिष्येण मतिमान्कुर्यात्पुंसवनक्रियाम् ॥ अनभीष्टो यदि भवेत्तिष्यस्तु श्रवणोपि वा । सवित्रादिग्रहैः सम्यग्बलयुक्ते मुहूर्तके ॥ एते ऋक्षेश्च सीमन्तो वलिश्चापि विधीयते । प्राजापत्यमरुत्पौष्णधिष्ण्ये वापि त्वसंभवे ॥ अर्चिते मण्डलागारे[1] कार्या पुंसवनक्रिया । अन्तरागमनं पत्याः शस्तं पूर्वेद्युपोषणम् ॥ माषौ यवं च पुंलिङ्गं कृत्वा स्पृत्वाऽभिमन्त्र्य च । प्राश्नीयात्सा पति-

पाठ०—१ आरतिमण्डलागारे ।

श्रापि तस्या नस्यं च संचरेत्' इति । अत्र भगवाञ्शौनकः—'व्यक्ते गर्भे तृतीये तु मासे पुंसवनं भवेत् । गर्भोऽव्यक्तस्तृतीये चेच्चतुर्थे मासि वा भवेत् । तत्कुर्यात्तिष्यनक्षत्रे श्रवणे वाथवा श्रियाः ॥ जन्मर्क्षानुगुणे ज्योतिःशास्त्रज्ञैर्विहिते शुभे । नक्षत्रे विदधीतेदं तिथिवारगुणान्विते । गर्भस्य वैद्यशास्त्रोक्तपोषणाद्युपरोधतः ॥ पूर्वस्मिन्दिवसे पत्नी हविःपाकाशना भवेत् । शुद्धिश्राद्धं पितुः कुर्याद्ब्रह्मचारी भवेत्तदा ॥ समानरूपवत्साया गोःक्षीरप्रभवं दधि । त्रीन्यवान्माषयुग्मं च संपाद्यैतानि निक्षिपेत् ॥ कंचिद्गृहैकदेशं च रमणीयावकाशकम् । वृत्ताकारं तु सच्छायासंपन्नं परिकल्पयेत् ॥ वधूमपि कृतस्नानां धृतधौताम्बरद्वयाम् । भूषितां गन्धमाल्याद्यैः कृतपुण्याहवाचनाम् ॥ कृतकौतुकबन्धां तां कारयित्वाथ शोभने । मुहूर्ते ज्वलितं कृत्वा वह्निमौपासनं ततः ॥ तत्रान्वाधानमारभ्य प्रणीतासादनावधि । पुरस्तात्तन्त्रमाचार्यः प्राजापत्यं चरुं ततः ॥ निरुप्य श्रपयित्वाज्यसंस्कारविधिपूर्वकम् । अनुयाजविधानान्तं तन्त्रं कृत्वा ततो वधूम् ॥ आचान्ततोयां नीत्वाग्निमात्मानमपि चान्तरा । आत्मनो दक्षिणे पार्श्वे प्राङ्मुखीमुपवेशयेत् ॥ ततः करेण संस्पृष्टो वध्वेध्माधानपूर्वकम् । पुरस्तात्तन्त्रशेषं तु समाप्य च यथाविधि ॥ ततः प्रक्षालितं पाणिं भार्यायाः प्रसृतीकृतम् । दध्ना प्रसृतिमात्रेण पूरयित्वाथ तस्य तु ॥ दध्नश्चोपरि निक्षिप्य पुंलिङ्गानुकृतिं यवम् । अण्डानुकारिणौ माषौ क्षिप्त्वा च यवपार्श्वयोः ॥ ततः किं पिबसीतीति त्रिर्वदन्पृच्छेद्वधूं वरः । त्रिःपुंसवनमित्युक्त्वा वधूः सयवमाषकम् ॥ पीत्वा च दधि निःशेषमाचामेदुदकं ततः । अनेनैव प्रकारेण पुनर्द्विर्दधि पाययेत् ॥ ततः प्राशनतस्तोयमाचामेदवधानतः । एवं पुंसवनं प्रोक्तमथ अनवलोभनम् ॥ तत्कुर्यान्मण्डलागारच्छाये पूर्वकृते तथा । दूर्वापुञ्जं रूपवत्पुत्रे रूपवत्पुत्रेण कन्यया ॥ पेष-

पिष्ट्वा तु तत्र पिण्डीकृत्य च पाणिना । आदाय तत्पुनः शुद्धवस्त्रच्छन्नं प्रगृह्य च ॥ आ ते गर्भो योनिमिति चाद्यं सूक्तं खिलोद्भवम् । अथाग्निरेतु प्रथम इत्याद्यं च यथाक्रमम् ॥ खिलसूक्तद्वयमिदं जपित्वा त्ववधानतः । प्रत्यग्देशे स्त्रियास्तिष्ठन्दक्षिणे नासिकानिले । तथा दूर्वारसं सिंचेद्यथोदरगतो भवेत् ॥ उदरस्थे रसे तस्मिन्नाचान्तोदकया तया । स्पृष्टोऽवदाय जुहुयात्प्राजापत्यं चरुं ततः ॥ प्रजापतय इत्येतत्स्वाहान्तं समुदीरयेत् । ततः पाणितलेनास्या हृदयं संस्पृशेत्पतिः ॥ यत्ते सुशीमे हृदये हितमित्यादिमन्त्रतः । ततः स्विष्टकृदाद्यूर्ध्वतन्त्रं परिसमापयेत् ॥ प्रतिगर्भमिदं कर्म कार्यं पुत्रीयताखिलम्' इति ॥ अस्य प्रयोजनमाहाचार्यः—'प्राशनस्यास्य करणाद्गर्भस्थः संस्कृतो भवेत् । स्मरत्यनेन जन्मानि प्रागतीतानि मानवः[1] ॥ द्विजोऽहमिति स ज्ञात्वा तोषमायाति कर्मभुक् । अन्यथा सप्तमान्मासात्प्रागात्मानं न वेत्ति सः[2] ॥ चण्डालीजठरस्थोऽपि सप्तवध्रिः स सप्तमे । संस्मरत्यनेकजन्मानि कर्माणि प्राक्तनानि च ॥ असंपूर्णोऽप्यसावङ्गैर्ब्राह्मणीजठरे स्थितः । पुंसवे मन्त्रसामर्थ्याद्वेत्ति प्राग्जन्मसंततीः ॥ तस्मात्पुंसवसंस्कारः प्रतिगर्भं प्रवर्तते' इति ॥

अथेदानीमस्मिन्कर्मणि विनियुक्तप्रजावज्जीवपुत्राख्ययोः सूक्तयोरर्थः कथ्यते ॥ आ ते गर्भ इति—हे पत्नि, तव योनिं गर्भाशयस्थानं पुमान्गर्भः बाण इषुधिमिव ऐतु आगच्छतु । तवोदरे गर्भः दशमास्यो दशमासार्हः ते पुत्रो वीरो भूत्वा आजायतां गम्यस्प्रादुर्भूतो भवतु ॥ करोमि त इति—अहं ते प्राजापत्यं रेतःसेकं करोमि । स गर्भः ते योनिं ऐतु आगच्छतु ।

पाठा०—1 प्रागतीतानि जन्मानि । 2 वेत्ति प्राग्जन्मनः स्मृतिम् ।

स च अनग्नः अन्यूनाङ्गः पूर्णः पूर्णकालः अश्लोणोऽबधिरः अपङ्गुर्वा अपिशाचधीतः पिशाचैरनाधूतश्च आजायताम् ॥ पुमांस्त इति—हे नारि, ते पुमान्पुत्रो जायतां वक्ष्यमाणापेक्षया प्रथमो गर्भस्तावत्पुमान्भवतु । तं च पुमानेवानुजायतां द्वितीयादयोऽपि गर्भाः पुमांस एव भवन्तु । ऋषभाः वृषभवत्सेचनसमर्थाः विष्ण्वादयः तानि तादृशानि भद्राणि बीजानि नौ आवयोर्जनयन्तु ॥ यानि भद्राणीति—ऋषभाः नोऽस्माकं यानि भद्राणि बीजानि जनयन्ति तैर्बीजैस्त्वं पुत्रान्विन्दस्व लभस्व । सा त्वं प्रसूः प्रसवशीला धेनुका भव । यथा धेनुर्वत्सेन सह नित्यं पीयते एवं पुत्रेण नित्यं पीयमाना भव ॥ कामः समृध्यतामिति—कामः कामानां पूरयिता मयं ममेदं कर्म समृध्यतां समृद्धमस्तु । अपराजितमेव अमोघमेव मे भवतु । हे वायो देव, पुमांसं पुत्रं जनयेयमिति यं कामं कामये तं कामं मे समर्धय समृद्धं कुरु॥ अग्निरेतु प्रथम इति—देवतानां प्रथमः पुरोगोऽग्निः ऐत्वागच्छतु । आगतः सः अस्यै अस्याः प्रजां मृत्युपाशान्मुञ्चतु । अयं स वरुणो राजा अनुमन्यतां तदग्निना क्रियमाणमनुमन्यताम् । इयं स्त्री यथा पौत्रं पुत्रनिमित्तमघं व्यसनमुद्दिश्य न रोदात् रोदनं न कुर्यात् ॥ इमामग्निस्त्रायतामिति—गार्हपत्यः गृहपतिसंबन्धी वैवाहिकोऽग्निः इमां वधूं त्रायताम् । अस्यै अस्याः प्रजां दीर्घमायुः नयतु । किंच जीवतां पुत्राणां माता अशून्योपस्था अशून्योत्सङ्गास्तु । तदेव विवृणोति–माता पौत्रं पुत्रसंबन्धिनमानन्दमभिप्रबुध्यतां तद्विषयज्ञानवती भवतु ॥ मा ते गृहे इति—हे जाये, ते त्वदीये गृहे निशि घोष आर्तप्रलापः मोत्थात् मोद्भवतु । रुदत्यः स्त्रियः त्वत्तोऽन्यत्र संविशन्तु । त्वं विकेशी विकीर्णकेशासती उरो माचविघ्नाः उरस्ताडनं माकृथाः । जीवपत्नी त्वं पतिलोके पत्युर्मम गृहे विराज दीप्यस्व । सुमनस्यमाना सुमनायमाना भूत्वा

प्रजां पश्यन्ती त्वं पुत्रवियोगपतिवियोगनिमित्तं दुःखं मागाः ॥ अप्रजस्तां पौत्रमितिति—न विद्यते प्रजा यस्याः सा अप्रजाः तस्या भावोऽप्रजस्ता तां पौत्रमृत्युं पुत्रसंबन्धिमरणं पाप्मानं पापं उतवा अथवा अघं व्यसनं वा एवंविधं पाशं शीर्ष्णः स्रजमिव तत्र उन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि ॥ देवकृतं ब्राह्मणमिति—देवकृतं देवेन निर्दोषं कृतं ब्राह्मणं ब्रह्मणःसंबन्धि कल्पमाने समर्थं संपद्यमानमावयोर्वीर्यं तेन योनिषदः योनौ सीदन्तीति योनिषदस्तत्र योनिस्थान्पिशाचान् क्रव्यादो मांसाशनान्मृत्यून्गर्भस्य नाश-यितॄन् हन्मि । अधरान्गर्भाद्दिश्वेन पातयामि । तत्र पुत्रास्तु दीर्घमायुः प्रजीवन्तु ॥ अथ हृदयस्पर्शनमन्त्रः—यत्ते सुशीम इति—हे सुशीमे सुमर्यादे, तत्र हृदये तत्समीपवर्तिनि कुक्षौ अन्तर्हृदये हृदयमध्ये प्रजापतौ । तृतीयार्थे सप्तमी । प्रजायाः पालयित्रा मया यद्वीर्यं हितं निहितं तद्विद्वांसं ज्ञानवन्तं मामहमेव मन्ये । कथम् । पौत्रं पुत्रनिमित्तमघं व्यसनमहं मा नियां मा यासिषम् । इति मन्त्रार्थः ॥

अथ प्रयोगः । गर्भमासप्रभृति तृतीये मासि गर्भाभिव्यक्तौ तदनभिव्यक्तौ तु चतुर्थे षष्ठेऽष्टमे वा मासि सीमन्तदिने वा कर्तव्यं पुंसवनमनवलोभनं च । तत्करिष्यमाणः पतिः पूर्वेद्युः पुंसवनार्थं समानरूपवत्सायाः गोस्तदभावे अन्यस्या वा गोः क्षीर दध्यर्थं तण्डुलाकार माषद्वयं यवद्वयं च संपाद्य वृत्ताकारमविरलच्छायावकाशं गृहैकदेशं कृत्वा विधिवदाभ्युदयिकं कृत्वा भार्यां गर्भाभिवृद्धिविरोधिना हविषा विहितैकभक्तां कृत्वा ब्रह्मचारीसन्नपरेद्युः पुष्यादावनुकूले प्रागुक्ते नक्षत्रे मङ्गलस्नातां परिहिताहत-

पाठा०—१ मर्यादयन्त ।

परिधानां प्रावृतप्रावरणीयां भूषणोपभूषितां भार्यां पूर्वकृते गृहे स्वस्य दक्षिणत उपवेश्य ब्राह्मणैः सह स्वस्तिवाचनं कृत्वा देशकालकथनपूर्वकं मम पत्न्याः गर्भस्य पुंरूपताज्ञानोदयसिद्धितदभिवृद्धिप्रतिरोधिपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुंसवनमनवलोभनं च करिष्ये इति संकल्प्य विधिवत्कौतुकसूत्रमाबध्य ततः प्रागुक्ते शोभने मुहूर्ते विधिवदौपासनाग्निं प्रतिष्ठाप्य क्रियमाणे पुंसवनानवलोभनहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये । अस्मिन्नन्वाहितेऽग्नावित्यादिचक्षुषीआज्येनेत्यन्तमुक्त्वा प्रजापतिं चरुणा शेषेण स्विष्टकृतमित्याद्युक्त्वान्वाधाय परिस्तरणादिप्रणीताप्रणयनावधि पुरस्तनं तन्त्रं कृत्वा प्रजापतये त्वा जुष्टं निर्वपामीति चतुरो व्रीहिमुष्टीन्निरुप्य तथैव प्रोक्ष्य बर्हिषि हविरासादनं कृत्वा स्वस्य दक्षिणतः प्राग्ग्रीवमुत्तरलोमानडुहं चर्मास्तीर्य आत्मानमग्निं चान्तरा पत्नीमाचान्तसलिलामानीय तस्मिंश्चर्मण्युपवेश्य तयान्वारब्धः समिध्माधानाद्याज्यभागान्तं कृत्वा पत्न्या प्रक्षालिते प्रसृतीकृते पाणौ प्रसृतिमितं तदधि निक्षिप्य तत्र लिङ्गमिव यवं निधाय तत्पार्श्वयोरण्डद्वयमिव माषद्वयं निधाय किं पिबसीति त्रिवारं पतिः पत्नीं पृच्छेत् । पृष्टा च पत्नी पुंसवनमिति त्रिरुक्त्वा सयवमाषं तदधि निःशेषं पीत्वाचम्य पुनरेवं द्विःप्राश्याचामेत् । एतत्पुंसवनम् ॥ ॥ अनवलोभनं तु—दूर्वापुञ्जं कन्यया दृषदुपलेन पेषयित्वा तत्पाणिना पिण्डीकृत्य शुद्धवसनाञ्चले संगृह्य प्रजावदाख्यं सूक्तं जीवपुत्राख्यं च पठित्वा प्राक्शुख्याः स्त्रियाः पश्चिमतस्तिष्ठन् तदाननमुन्नमय्य दक्षिणनासाबिले स्वाङ्गुष्ठाग्रेण दूर्वारसमासिंचेत् । तत्र मन्त्राः—'आ ते गर्भो योनिमेतु पुमान्बाण इवेषुधिम् । आ वीरो जायतां पुत्रस्ते दशमास्यः ॥ करोमि ते प्राजापत्यमा गर्भो योनिमैतु

पाठा०—१ पुमांसमिति ।

ते । अनूनः पूर्णो जायतामश्लोणो पिशाचधीतः ॥ पुमांस्ते पुत्रो नारि तं पुमाननु जायताम् । तानि भद्राणि बीजान्यृषभा जनयन्तु नौ ॥ यानि भद्राणि बीजान्यृषभा जनयन्ति नः । तैस्त्वं पुत्रान्विन्दस्व सा प्रसूर्धेनुका भव ॥ कामः समृध्यतां मह्यमपराजितमेव मे । यं कामं कामये देव तन्मे वायो समर्धय ॥ अग्निरैतु प्रथमो देवतानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदात् ॥ इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः । अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिप्रबुध्यतामियम् ॥ मा ते गृहे निशि घोष उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु । मा त्वं विकेश्युर आवधिष्ठा जीवपत्नी पतिलोके विराज पश्यन्ती प्रजां सुमनस्यमाना ॥ अप्रजस्तां पौत्रमृत्युं पाप्मानमुत वाघम् । शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाशम् । देवकृतं ब्राह्मणं कल्पमानं तेन हन्मि योनिषदः पिशाचान् । क्रव्यादो मृत्यूनधरान्पातयामि दीर्घमायुस्तव जीवन्तु पुत्राः ॥' एतैर्दशभिर्मन्त्रैर्नस्तःकरणे कृते तत आचान्तजलया जायया स्पृष्टस्तं प्राजापत्यं चरुं प्रागुक्तावदानधर्मेणादाय प्रजापतये स्वाहेति हुत्वा प्रजापतय इदं नममेत्युद्दिश्य त्यजेत् ॥ यत्ते सुसीमे हृदये हितमन्तः प्रजापतौ । मन्येऽहं मां तद्विद्वांसं माहं पौत्रमघं नियाम्' इति पत्न्या हृदयदेशं पाणिना स्पृष्ट्वा स्विष्टकृदादिहोमशेषं समाप्य कर्मान्ते कर्तव्यं स्वस्तिवाचनं पूर्ववत्कुर्यात् ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे पुंसवनानवलोभनप्रकरणम् ॥

अथ सीमन्तप्रकरणम् । रक्षोवक्षःसमुत्पाटपटवः पान्तु वो हरेः । रमारुचिरसीमन्तरचनाचतुरा नखाः ॥ जये-

---

पाठा०—१ मश्रोणो पिशाचधीत । २ समृध्यता मह्यं ।

दानीं सीमन्तोन्नयनविधिरभिधीयते । तत्र कारणमाहाचार्यः—'पत्न्याः प्रथमजं गर्भमत्तुकामाः सुदुर्भगाः । आयान्ति काश्चिद्राक्षस्यो रुधिराशनतत्पराः ॥ तासां निरसनार्थाय श्रियमावाहयेत्पतिः । सीमन्तकरणां लक्ष्मीं तां स आवहमन्त्रतः ॥ श्रियाश्रितशरीरत्वाच्चां त्यजन्तीह मोहिताः । अलक्ष्म्यो दुर्भगाः क्रूरा राक्षस्यः पिशिताशनाः ॥ गृह्यः संप्रगृह्णन्ते पीड्यन्ते च विशेषतः । कासांचित्तादृशी वृत्तिर्ब्रह्मणा विहिता पुरा ॥ तस्मात्प्रथमगर्भस्य सीमन्ताख्यो विधीयते' इति ॥ कारिका—'चतुर्थे गर्भमासे तु सीमन्तोन्नयनं भवेत् । पूर्वस्यासंभवे षष्ठे मासे यद्वाष्टमे भवेत्' इति । इदमत्र गृह्यम्—'चतुर्थे गर्भमासे सीमन्तोन्नयनं षष्ठेऽष्टमे वा' इति । अस्यार्थः—सीमन्तो यस्मिन्कर्मणि उन्नीयते तत्सीमन्तोन्नयनं। तच्च चतुर्थे मासि कार्यम् । इदं कर्म प्रतिगर्भं नावर्तते । स्त्रीसंस्कारत्वात् । ननु गर्भसंस्कारः 'एवं तं गर्भमाधेहि' इति मन्त्रलिङ्गात् । सत्यम् । तथापि नाव-र्तते । आधानसंस्कारस्य प्राधान्यात् । कुतः प्राधान्यमिति चेत् । सीमन्तोन्नयनमिति समाख्याबलात्, आधारस्य च संस्कृतत्वात् । सकृत्संस्कृता यं यं गर्भं प्रसूते स सर्वः संस्कृतो भवेदेव । तेनावृत्तिर्न भवतीति सिद्धम् । तदुक्तं हारीतेन—'सकृत्सुकृतसंस्काराः सीमन्तेन द्विजस्त्रियः । यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत्' इति । तस्मात्प्रथमगर्भ एवैतत्कर्म भवति ॥ तथाचाप-स्तम्बः—'सीमन्तोन्नयनं प्रथमे गर्भे चतुर्थे मासि' इति । चतुर्थमासादिषु पूर्वपूर्वासंभवे उत्तरोत्तरे मासि कर्तव्यम् ॥ तदुक्तं भगवता—'चतुर्थे गर्भमासे स्यात्सीमन्तोन्नयनक्रिया । षष्ठेऽष्टमे वा कुर्वीत सूत्रान्तरविधानतः ॥ अभावे पूर्वपूर्वस्य विद्वी-

पाठा०—१ तामावहेति मन्त्रः ।

त्तोत्तरोत्तरे' इति ॥ आह वैजवापः—'सीमन्तोन्नयनं चतुर्थे पञ्चमे षष्ठेऽष्टमे वापि' इति बोधायनीये कथितत्वात्तदीयानां मुख्यम् । तथाच तत्रत्यवचनम्—'स चेत्प्रथमगर्भः स्याच्चतुर्थे मास्युपागते । पञ्चमे वाथ षष्ठे वा कुर्यान्नान्दीमुखादिकम्' इति । ज्योतिर्वसिष्ठस्तु—'चतुर्थे सप्तमे मासि षष्ठे वाप्यथवाष्टमे' इति ॥❀॥ अस्य गृह्यविरोधे सत्युच्यते श्रीधरीयस्मृतिभास्करयोः—'यस्मिन्काले विरोधोऽस्ति ज्यौतिषोक्तागमोक्तयोः । ज्यौतिषोक्तं विहायैव श्रुतिचोदितमाचरेत् ॥ प्रयोगशास्त्रविहितः कालो यत्र न लभ्यते । विधत्ते ज्यौतिषं तेन विहितं तु विरोधि न' इति ॥ कार्ष्णाजिनिस्त्वाप्रसवात्सीमन्तकालमाह—'गर्भलम्भनमारभ्य यावन्न प्रसवस्तदा । सीमन्तोन्नयनं कुर्याच्छह्वस्य वचनं यथा' इति । मासश्चात्र सौरसावनयोरन्यतरो गृह्यते ॥ ❀ ॥ सौरस्त्वायदुक्तः कालविधाने—'चतुर्थपष्ठाष्टममासभाजि सौरेण गर्भे प्रथमे विधेयम् । सीमन्तकर्म द्विजभामिनीनां मासेऽष्टमे विष्णुबलिं च कुर्यात्' इति । अर्णवेऽपि—'सौरमासि चतुर्थे तु शुभकर्माणि साधयेत् । ग्रहाणां नायकः सूर्यस्तस्मात्सौरो विशिष्यते' इति । बार्हस्पत्येऽपि—'सौरेण वै चतुर्थे स्यान्मासि षष्ठेऽष्टमेऽपि वा । मासप्रोक्ताः क्रिया याः स्युस्ताः सर्वाः सौरमानतः' इति ॥ ❀ ॥ सावनस्तु वसिष्ठेनाभिहितः—'चतुर्थे सावने मासि षष्ठे वाप्यथवाष्टमे' इति ॥❀॥ सौरादिमासलक्षणमुक्तं श्रीधरीये—'दर्शावधिं मासमुशन्ति चान्द्रं सौरं तथा भास्कर[1]राशिभोगात् । त्रिंशद्दिनं सावनमाहुरार्या नाक्षत्रमिन्दोर्भगणक्रमेण' इति ।

पाठा०—1 राशियोगात् ।

अथ सीमन्तकर्मणः पक्षनक्षत्रतिथ्यादयोऽभिधीयन्ते। तत्र कारिका—'पुंनक्षत्रे सिते पक्षे लन्वाधानादि पूर्ववत् ॥ पुंनक्षत्राणि चैतानि तिष्यो हस्तः पुनर्वसुः। अभिजित्प्रोष्ठपाचैव अनूराधा तथाश्विनी ॥ ऋक्षस्य मध्यमे पादद्वये कर्म तदिष्यते' इति। इदमत्र शृथम्—'आपूर्यमाणपक्षे यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्' इति। अस्यार्थः—शुक्लपक्षे यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्तदेदं कर्म कार्यम्। पुंसा पुंनामधेयेन नक्षत्रेणेत्यर्थः। तिष्यो हस्तः श्रवण इत्यादिना चन्द्रमा युक्तः स्यादिति वचनं प्रकर्षेण युक्ते चन्द्रमसि यथा स्यात्। एतदुक्तं भवति—षष्टिघटिकासु मध्ये मध्यमात्रिंशद्घटिकासु कुर्यादिति ॥ स्मृतिरूपेणाहाचार्यः—'ऋक्षस्य मध्यमारूढे तदुक्तस्य निशाकरे। मध्यात्पञ्चदशस्थे तु सीमन्तः सुप्रशस्यते' इति ॥ अत्र भगवान्—'शुक्लपक्षे च पुंलिङ्गनक्षत्रस्थे निशाकरे। तिष्यः पुनर्वसुर्हस्तो ह्यनूराधा श्रविष्ठयुक् ॥ एवमादिषु दंपत्योर्जन्मर्क्षानुगुणे शुभे। नक्षत्रे विदधीतैतन्मुहूर्ते च सुशोभने' इति। मुहूर्ते विवाहप्रकरणे वक्ष्यमाणलक्षण इत्यर्थः। अत्रादिशब्देन प्रोष्ठपदादयो गृह्यन्ते। तथाच कालविधाने दशनक्षत्राण्युक्तानि बृहस्पतिना—'रोहिण्यैन्दवमादित्यपुष्यहस्तोत्तरात्रयम्। पौष्णाभं वैष्णवं चैव सीमन्ते दश संमताः' इति।—'सीमन्ते तिष्यहस्तादितिहरिशशभृत्पौष्णविध्युत्तराख्याः पक्षच्छिद्रां च रिक्तां पितृतिथिमपहायापराः स्युः प्रशस्ताः। सिंहाली वर्जयित्वा शुभफलबहुला राशयोऽप्यंशकाश्च श्रेष्ठाः स्युः श्वेतरोचिर्भृगुबुधधिषणानां विशुद्धेऽष्टमेऽह्नि' इति। अदितिः पुनर्वसुः। हरिः श्रवणः। शशभृन्मृगशिरः। पौष्णो रेवती। विधिः रोहिणी। उत्तरास्तिस्रः प्रसिद्धाः। नारदः—'हस्ते मूले हरेर्भे चादित्ये मृगशिरस्यपि। पुष्ये प्रजापतौ चैवाजैकपादृक्षसंयुते ॥ पुंनामानि तथैतानि पुंक-

मंत्र प्रयोजयेत्' इति । अनेन मूलनक्षत्रस्य विधिरुक्तः ॥ अत्र वराहमिहिराचार्यैः—'हस्तो मूलं श्रवणं पुनर्वसुर्मृगशिरस्तथा पुष्यः । पुंसंज्ञितेषु कार्येष्वेतानि शुभानि धिष्ण्यानि' इति ॥ स्मृतिभास्करस्तु—'हस्तादित्यश्रवणमभिजित्तिष्यमैत्राश्विनीकं पुंनामैतन्नवकमथ च प्रोष्ठपादद्वयं च । मूलं सौम्यं शतभिषगिति त्रीणि नोपुंसकानीत्यन्यास्तारास्त्विह निगदिता योषितो ज्योतिषज्ञैः' इति ॥ अथ तिथयः—'पक्षच्छिद्रां च रिक्तां पितृतिथिमपहायापराः स्युः प्रशस्ताः' इति । षष्ठ्यष्टमीद्वादश्यः पक्षच्छिद्राः । चतुर्थीनवमीचतुर्दश्यो रिक्ताः । पितृतिथिरमावास्या । एतास्तिथीर्वर्जयित्वा अन्यास्तिथयः सीमन्ते ग्राह्याः ॥ कालनिर्णये तु चतुर्थीचतुर्दश्योः कचिद्ग्राह्यत्वमुक्तम्—'शुभसंस्थे निशानाथे चतुर्थीं च चतुर्दशीम् । पूर्णमासीं प्रशंसन्ति केचित्सीमन्तकर्मणि' इति । चतुर्दशी शुक्ला ग्राह्या । तथाच बृहस्पतिः—'पूर्वपक्षः शुभः प्रोक्तः कृष्णे चान्त्यत्रिकं विना । पक्षच्छिद्रा च रिक्ता च विना पञ्चदशी शुभा ॥ चतुर्दशी चतुर्थी च कदाचित्तु शुभप्रदे' इति । नृसिंहः—'वर्ज्या रिक्ताष्टमी षष्ठी सीमन्तोन्नयने सदा । रात्रिचन्द्राष्टवैनाशत्रिजन्मविपदादयः' इति । अत्र नारदः—'विप्रक्षत्रिययोः कुर्याद्दिवा सीमन्तकर्म तु । वैश्यस्य चैव शूद्रस्य दिवा निश्यपि केचन' इति ॥ अथ राशयः श्रीधरीये—'सिंहाली वर्जयित्वा शुभफलबहुला राशयोऽप्यंशकाश्च' इति । सिंहवृश्चिकौ वर्जयित्वा शुभग्रहैः फलैश्च बहुला वीक्षिता युक्ता वा अन्ये दश राशयः अंशकाश्च सीमन्ते शुभदाः । अत्र विशेषमाह नृसिंहः—'केन्द्रत्रिकोणपुत्रस्थाः शुभाः सर्वे शुभावहाः । त्रिषडायगताः पापाः शुभाः सीमन्तकर्मणि' इति ॥ अथ वाराः—'श्रेष्ठाः स्युः श्वेतरोचिर्भृगुबुधधिषणानाम्' इति । चन्द्रभृगुबुधगुरूणां वाराः सीमन्तेऽतिशुभप्रदाः

स्युः । [ नृसिंहः—'सौम्यानां वारवर्गाः स्युः सीमन्ते च शुभप्रदाः' इति ] ॥ ॥ अथाष्टमशुद्धिः—'विशुद्धेऽष्टमेद्धि' इति । अष्टमोऽत्र लग्नादष्टमः । तस्य सर्वग्रहराहित्यं विशुद्धिः । लग्नादष्टमे राशौ सर्वे ग्रहा निषिद्धा इति । अत्र विशेषमाह नृसिंहः—'लग्नादष्टमराशीशः केन्द्रगः शुक्रवीक्षितः । यद्यष्टमगतस्योक्तं दोषमाशु व्यपोहति' इति ।

एवमुक्तगुणयुक्ते लग्ने कर्तव्यस्य सीमन्तकर्मणो विधानमाह भगवान्—'पतिः पूर्वदिने वृद्धिश्राद्धं कृत्वा परेऽहनि । वधूमलंकृतां विप्रैः कृतपुण्याहवाचनाम् ॥ कृतकौतुकबन्धां च वन्दिताभीष्टदेवताम् । वृद्धनारीसमुद्दिष्टमङ्गलाचारसंयुताम् ॥ कारयित्वा स्त्रियं पश्चान्मुहूर्ते शोभनेऽनलम् । औपासनं समिध्यासिन्नन्वाधानपुरःसरम् ॥ आज्यसंस्कारपर्यन्तं तन्त्रं कृत्वा पुरस्तनम्' इति । अत्रौपासनाग्निं समिध्याज्यसंस्कारान्तं तन्त्रं कुर्यादिति तात्पर्यम् ॥ अत्र कारिका—'प्राग्ग्रीवमूर्ध्वलोम स्यात्प्रत्यगानडुहाजिनम् । प्रोक्षणीं स्रुवमासाद्य चमसं चाज्यभाजनम् ॥ इध्माबर्हिरिदं प्रोक्तमाज्यहोमेष्वनुक्रमात् । आज्यासादनपर्यन्तं पवित्रकरणाद्यथा ॥ चर्मण्यथोपविष्टा या समन्वारभते पतिम् । स्यादाज्यभागपर्यन्तमिध्माधानादि पूर्ववत् ॥ अष्टावाज्याहुतीर्हुत्वा मन्त्रैर्धाता ददात्विति' इति । इदमत्र गृह्यम्—'अथाग्निमुपसमाधाय पश्चादस्यानडुहं चर्मास्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन्नुपविष्टायां समन्वारब्धायां धाता ददातु दाशुष इति द्वाभ्यां राकामहमिति द्वाभ्यां नेजमेषेति तिसृभिः प्रजापते न त्वदेतान्यन्य इति च' इति । अस्यार्थः—जुहुयादिति शेषः । अथशब्दोऽन्यस्मिन्नपि काले भवतीदं कर्मेति ज्ञापनार्थः । तस्मिन्षष्ठाष्टमयोर्मासयोः । शास्त्रान्तरे चायं कालो विहितः । अग्निमुपसमाधायेत्यादि गृहप्रवेशनीये व्याख्यातमाज्यभागान्तं कर्म कृत्वा—धाता ददातु

दाशुष इत्यादिभिरष्टाभिर्मन्त्रैरष्टावाज्याहुतीर्जुहुयादित्यर्थः ॥ तथोक्तं भगवता—'ततोऽग्नेः पश्चिमे देशे स्वस्य दक्षिणपार्श्वतः। गृहप्रवेशहोमोक्तमार्गेणानडुहाजिनम् ॥ प्राचीगतगलोद्देशमुपरिस्थितलोमकम्। आस्तीर्य तस्मिन्नासीनां धौतवासोयुगां तथा ॥ आचान्तसलिलां नारीमुपवेश्य ततस्तया। स्पृष्टः करेण परिधिनिधानान्तं पुरस्तनम्। तन्त्रशेषं विधायाज्यभागहोमावसानकम्। कुर्यादथ स्रुवेणाज्यहोमानष्टौ क्रमादिमान् ॥ धाता ददात्वित्येताभ्यामृग्भ्यां प्रागाहुतिद्वयम्। हुत्वा राकामहमिति द्वाभ्यां च जुहुयात्क्रमात् ॥ राकाक्रृचोन्तमुक्त्वाथ पदमुक्थ्यमिति स्मृतम्। तदन्त्यर्कं च तद्धोमं कुर्याद्वृद्धोपदेशतः ॥ नेजमेषपरेत्यादि खिलिकेन तृचेन तु। तथा प्रजापतेन त्वदेतानीत्याद्यया ऋचा ॥ हुत्वोत्थाय स्त्रियाः प्रत्यक्प्रदेशे प्राङ्मुखः स्थितः' इति। तत्र कारिका—'फलनत्तवकौ प्राद्यौ त्रिशुक्ला शलली तथा। त्रीणि स्युः कुशपिञ्जूलान्येभिरेकीकृतैरथ ॥ त्रिर्व्यूहेदथ सीमन्तमामूर्ध्यां भूर्भुवः-स्वरोम्। चतुर्वा व्यूहनं कार्यं सूत्रकारवचो यथा ॥ आवर्तते स्वयं मन्त्रः सर्वत्रैव प्रती(दी)पताम्' इति। इदमत्र गृह्यम्—'अथास्यै युग्मेन शलाटुग्लप्सेन त्र्येण्या च शलल्या त्रिभिश्च कुशपिञ्जूलैरूर्ध्वं सीमन्तं व्यूहति भूर्भुवःस्वरोमिति त्रिश्चतुर्वा' इति। अस्यार्थः—अस्यै अस्याः युग्मेन समेन शलाटुग्लप्सेन तरुणफलसंघातेन। शलाटुरित्यपक्वानां फलानां समाख्या। ग्लप्स इति स्तनक उच्यते। औदुम्बरस्तबकेन शाखान्तरे दृष्टत्वात्। तदभावेऽन्येन। त्रीणि एतानि यस्याः सेयं त्र्येणी शलली। एतः शुक्ल इत्यर्थः। 'वर्णादनुदात्तात्तोपधात्तो नः' इति ङीप् तकारस्य नत्वं च। ततः 'रषाभ्यां नो णः' इति णत्वम्। त्रिभिश्च कुशपिञ्जूलैः कुशतरुणैः एतैरेकीकृतैर्ललाटकेशयोः संधिमारभ्योर्ध्वं सीमन्तं व्यूहति मन्त्रेण आमूर्धप्रदेशात्केशान्पृथक्करोतीत्यर्थः। एवं त्रिर्व्यूहतीति

मन्त्रावृत्तिरुक्ता । चतुर्थो व्याहृति मन्त्रेण । तथाह भगवान्—'औदुम्बरं च स्तवकं युग्मापक्वफलान्वितम् । भिन्नैः शुक्लैस्त्रिभिर्युक्तां शलल्लीं त्रिकुशाङ्कुरान् ॥ एकीकृत्य गृहीत्वाथ समस्तानेव पाणिना । तस्य पुञ्जस्य मूलेन नार्याः केशललाटयोः । संधिप्रदेशमारभ्य भ्रूमध्योर्ध्वप्रदेशकम् ॥ केशानूर्ध्वं पृथक्कुर्यादामूलं परभागतः । त्रिश्चतुर्वा भूर्भुवः स्वरोमित्येतमुदीरयन् ॥ प्रतिप्रयोगं मन्त्रं च मानधान उदीरयेत्' इति ॥ संग्रहे—'त्र्येण्या शलल्या गर्भेण उदुम्बरयवाङ्कुरैः । विभज्य तस्याः केशेषु मध्ये सीमन्तमुन्नयेत्' इति । कारिका—'संप्रेष्य सोमं राजानमिति प्रैषेण गाथिनौ । सोमो न इति गायेतां तौ स्थानेऽसौपदस्य तु ॥ समीपे या नदी तस्या नाम गङ्गे सरस्वति । ततः स्विष्टकृदादि स्यादीयते वृषभस्ततः ॥ ब्रह्मणे तदभावे तु ब्राह्मणेभ्यः प्रदीयते । यद्यच्चोपदिशेद्वृद्धा ब्राह्मणी मथवा प्रिया ॥ पत्नी कुर्यादिहापि स्यान्नान्दीश्राद्धं पुरैव तु । नावर्तत इदं कर्म प्रतिगर्भमिति स्थितिः' इति । इदमत्र गृह्यम्—'वीणागाथिनौ संशास्ति सोमं राजानं संगायेतामिति—सोमो नो राजावतु मानुषीः प्रजा निविष्टचक्राऽसाविति यां नदीमुपवसिता भवन्ति ब्राह्मण्यश्च वृद्धा जीवपत्न्यो जीवप्रजा यद्यदुपदिशेयुस्तत्तत्कुर्युर्वृषभो दक्षिणा' इति । अस्यार्थः—'वीणा च गाथा च वीणागाथे ते ययोस्तौ तथोक्तौ । व्रीह्यादित्वादिनिप्रत्ययः । तौ संशास्ति संप्रेष्यति । किमिति । सोमं राजानं संगायेतामिति । तौ च प्रेषितौ एतां गाथां गायत इत्याह । असावित्यस्य स्थाने यस्या नद्याः समीपे वसन्ति तस्या नाम आमन्त्रणविभक्त्या ब्रूयातां निविष्टचक्रा गङ्गे इति । एवंगुणयुक्ता ब्राह्मण्यो यद्यद्ब्रूयुस्तत्तत्कार्यम् । प्रैषं दत्त्वा स्विष्टकृदादिहोमशेषं समापयेत् । वृषभो गौरासे-

पाठा०—१ सोमो नो राजाऽवतु मानुषीः प्रजा निविष्टचक्रा तुङ्गभद्रा, कावेरी, कृष्णा, वेणी इति चक्रा इत्यस्यानन्तरं नद्या नाम ज्ञेयम् ।

चनसमर्थस्तं दक्षिणां दद्यात् । अस्मिन्कर्मणि स्वयमेव कर्ता । कुतः । 'अस्यै मे पुत्रकामायै' इति मन्त्रलिङ्गात् । कस्मै तर्हि दक्षिणा । ब्रह्मणे यद्यस्ति सः । तदभावे संनिहितेभ्यो ब्राह्मणेभ्यः । कर्माङ्गत्वाद्दक्षिणानाम् । अत्र भगवान्—'सोमं राजानमित्यादि प्रैषेण प्रेषितौ द्विजौ । ऋचं सोमो न इत्याद्यां गायेतां सह वीणया ॥ ततः सोमो न इत्यादे ऋचोऽन्ते नित्यसंयुतात् । निविष्टचक्रा इत्यस्मात्पदात्तु समनन्तरम् ॥ तौ दंपती महानद्या यस्या विषयवासिनौ । तन्नाम संबुद्ध्यन्तं च वदेतां गायकौ द्विजौ ॥ निविष्टचक्राकावेरीत्येवमादि निदर्शनम् ॥ यदि तत्समनाधीतं त्रिर्जपेत्तामृचं तदा । प्रेपस्यानन्तरं कुर्यादुपरिष्टात्तनं विधिम् ॥ ब्राह्मण्यो जीवपत्न्यश्च जीवपुत्रा वयोधिकाः । यद्यद्वदेयुस्तत्तच्च कुर्याद्दद्यात्तथा वृषम् ॥ विदुषे द्विजमुख्याय ब्राह्मणान्भोजयेत्ततः' इति ॥ सायणीये जातूकर्ण्यः—'सीमन्तोन्नयनं कुर्यान्न कुर्यात्पुंसवं यदि । पुंसवं प्राग्विनिर्वर्त्य ततः सीमन्तमुन्नयेत्' इति । कालदीपभाष्ये—'सीमन्तकाले संप्राप्ते त्वकृते पुंसवे यदि । स्वकाले बलवत्यत्र सीमन्तेऽस्यापि संभवः' इति । स्मृतिभास्करे—'मृतो देशान्तरगतो भर्ता चेत्संस्कृतेः पुरा । देवरो वा गुरुर्वापि वंश्यो वापि समाचरेत्' इति ॥ ॐ ॥ अकृतसीमन्तायाः प्रसवे विशेषमाह सत्यव्रतः—'स्त्री यद्यकृतसीमन्ता प्रसूयेत कथंचन । गृहीतपुत्रा विधिवत्पुनः संस्कारमर्हति' इति । गार्ग्योऽपि—'यदि सीमन्ततः पूर्वं प्रसूता चेत्तु भामिनी । तदानीं पेटके गर्भं स्थाप्य संस्कारमाचरेत्' इति ॥ ॐ ॥ अत्र निवृत्ते सीमन्ते तद्दिने तद्गृहे भोक्तुः प्रायश्चित्तमुच्यते पाराशरप्रायश्चित्तकाण्डे—'ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा । जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं

चरेत्' इति । अत्र नर्मोदनाख्यं कर्माधानाद्यङ्गभूतं ज्ञेयं सोममाहचर्यात् । ऋग्विधाने तु—'अराइवे जपेन्मन्त्रं शतवारं न संशयः । सीमन्ते च यदा भुङ्क्ते मुच्यते किल्बिषात्तदा' इति ॥

अथेदानीमस्मिन्कर्मणि विनियुक्तमन्त्राणामर्थः ॥ धाता ददात्विति—धाता विधाता प्राचीं प्राक्कालभवां जीवातुं जीवनाय पर्याप्तं अक्षितां क्षयरहितां रयिं धनं दाशुषे हविःप्रदात्रे मह्यं ददातु । वयं देवस्य द्योतनात्मकस्य वाजिनीवतः हविर्लक्षणमन्नं वाजं तद्वती प्रज्ञा वाजिनी तद्वतो धातुः सुमतिं भक्तेष्वनुग्रहात्मिकां बुद्धिं धीमहि अभिध्यायेम ॥ धाता प्रजानामिति—उत अपिच अयमेव धाता सर्वासां प्रजानां रायो धनस्य ईशे ईष्टे । धातैव इदं विश्वं भुवनं जजान । अन्तर्भावितण्यर्थो जनिः । जनयामास । धातैव कृष्टीः प्रजाः अनिमिषा अनिमिषेण चक्षुषा अभिचष्टे अभिपश्यति तस्मै धात्रइत् धात्रएव इदं घृतवत् हव्यं हे मदीया ऋत्विजः, जुहोत जुहुत ॥ राकामहमिति—पौर्णमास्यधिष्ठात्री देवता राका। अहं सुहवां स्वाह्वानां राकां सुष्टुती सुस्तुत्या शोभनया स्तुत्या हुवे आह्वयामि । मा नः अस्माकं स्तुतिं शृणोतु सुभगा सौभाग्ययुक्ता । सा च त्मना हृदयेन बोधतु बुध्यताम् । तदनन्तरं अपः । अप इति कर्मनाम । तत् सीमन्तोन्नयनलक्षणं कर्म अच्छिद्यमानया सूच्या सूचीस्थानीयया बुद्ध्या सीव्यतु छिद्रापिधानेन सुष्ठु करोतु । तदनन्तरं शतदायं बहूनां दातारं उक्थ्यं उक्थवन्तं वीरं समर्थं पुत्रं ददातु ॥ यास्ते राके इति । हे राके, यास्त्वदीयाः सुमतयः अनुग्रहात्मिका बुद्धयः सुपेशसः सुरूपाः सन्ति । याभिः दाशुषे हविःप्रदात्रे यजमानाय वसूनि धनानि ददासि ताभिर्मतिभिः हे सुभगे, सुमनाः सहस्रपोषं बहुविधं पोषं रराण ददत् त्वं अद्य नोऽस्मानुपागहि उपागच्छ ॥

नेजमेषेति—स्कन्दग्रहेष्वन्यतम हे नेजमेष, त्वं हि गर्भस्य दूषकः । अतःकारणात्त्वं परापत परागच्छ। यद्यवश्यं त्वया आगन्तव्यं तर्हि सुपुत्रः सन् पुनरापत शोभनं पुत्रं गृहीत्वा पुनरागच्छ । आगत्य च मे पुत्रकामायै पुत्रकामाय अस्यै अस्यां भार्यायां यः पुमान्गर्भस्तिष्ठति तं गर्भं आधेह्याधत्स्व ॥ यथेयमिति—मही महती इयं पृथिवी उत्ताना सती यथा गर्भं आदधे यथा क्षितिः द्युलोके निषिक्तं वृष्टिलक्षणं रेतो गृहीत्वा सस्यलक्षणं गर्भं दधाति तथा त्वं तं गर्भं दशमे मासि सूतवे प्रसोतुं प्रसवाय गर्भं आधेहि धारय ॥ विष्णोः श्रेष्ठेनेति—विष्णोः श्रेष्ठेन रूपेण युक्तं पुमांसं पुत्रान् पुत्रं अस्यां नार्यां गवीन्यां । गवीनीति स्त्रीणां वीर्यस्थानाभिधानम् । तस्यां दशमे मासि सूतवे प्रसोतुमाधेहि ॥ प्रजापते इति मन्त्रश्चौले व्याख्यायते ॥ इति मन्त्रार्थः ॥

अथ सीमन्तोन्नयनप्रयोगः । गर्भमासापेक्षया प्रागुक्ते चतुर्थादौ मासे शुक्लपक्षे प्रागभिहिते तिथौ दिवा चन्द्रमसाधिष्ठितस्य पुष्यादेः पुंनक्षत्रस्य मध्यमपादद्वये पत्न्याः सीमन्तकर्म करिष्यन्पतिः पूर्वेद्युरानडुहमजिनमपक्वफलयुग्मयुतावुदुम्बरस्तबकौ तदभावेऽन्यस्तबकौ वा त्रिशुक्लवर्णां शलली त्रीणि कुशपिञ्जूलानि च संपाद्य प्रागुक्तवद्ग्रहयज्ञमाभ्युदयिकं च कृत्वा आचार्यः परेद्युः प्रातरुत्थाय मङ्गलस्नातां परिहिताहतवासोयुगलामलंकृतां पत्नीमासन उपवेश्य पुण्याहवाचनानन्तरं देशकालावनूद्य मम पत्न्या गर्भाभिवृद्धिपरिपन्थिपिशितरुधिरप्रियालक्ष्मीभूतराक्षसीगणदूरनिरसनक्षमसकलसौभाग्यमूलभूतमहालक्ष्मीसमावेशनद्वारा श्रीपरमेश्वरप्रीत्यर्थं स्त्रीसंस्काररलक्षणं सीमन्तोन्नयनाख्यं कर्म करिष्य इति संकल्प्य वधूं कृतकौतुकबन्धामर्चिताभीष्टदेवतां विधाय शोभने मुहूर्ते औपासनाग्निं प्रतिष्ठाप्य समिद्द्वयमादाय पुनर्देशकालौ निर्दिश्य अद्य करिष्यमाणे सीमन्तोन्नयनहोमे देवतापरिग्रहार्थमित्या-

दिचक्षुषीआज्येनेत्यन्त्यमुक्त्वा धातारं धातारं राकां राकां विष्णुं विष्णुं विष्णुं प्रजापतिं चैताः प्रधानदेवता आज्येन शेषेण स्विष्ट-कृतमित्यादिपूर्ववदुक्त्वा समिद्द्वयमग्नावाधाय परिसमूहनादिपरिषेचनान्तं कृत्वा प्रत्यगग्नेः स्वस्य दक्षिणतः प्राग्ग्रीवमुत्तरलोमकमान-डुहमजिनमास्तीर्य प्रागुक्तवदुदगग्नेः प्रोक्षणपात्रस्रुवौ प्रणीताज्यपात्रे इध्माबर्हिषी क्रमादासाद्य पवित्रकरणाद्याज्यसंस्कारान्ते तस्मि-न्नजिने त्वामाचान्तसलिलां पत्नीं प्राङ्मुखीमुपवेश्य तया पाणिना स्पृष्टःसन्निध्माधानाद्याज्यभागान्तं कृत्वा । धाता ददातु दाशुष इति मन्त्रद्वयस्य हिरण्यगर्भो धाता आद्यानुष्टुप् द्वितीयात्रिष्टुप् । धाता ददातु दाशुषे प्राचीं जीवातुमक्षिताम् । वयं देवस्य धीमहि सुमतिं वाजिनीवतःस्वाहा । धात्र इदं० । धाता प्रजानामुत राय ईशे धातेदं विश्वं भुवनं जजान । धाता कृष्टीरनिमिषाभिचष्टे धात्र इद्धव्यं घृतवज्जुहोतस्वाहा । धात्र इदं० । राकामहमिति मन्त्रद्वयस्य गृत्समदो राकाजगती । राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यं स्वाहा । राकाया इदं० । यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणास्वाहा । राकाया इदं० । नेजमेषेति तिसृणां त्वष्टाविष्णुरनुष्टुप् । नेजमेष परापत० यथेयं पृथिवी० विष्णोः श्रेष्ठेन० । विष्णव इदं । प्रजापते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् । प्रजापते न त्वदेता० प्रजापतय इदं० । एतैरष्टभिर्मन्त्रैरष्टावाज्याहुतीर्हुत्वा पत्न्याः पश्चिमतः प्राङ्मुखस्तिष्ठन्नपक्वफलयुग्मान्वितमौदु-म्बरस्तबकद्वयं त्रिशुक्लां शलली कुशाङ्कुरत्रयं च पाणिनैकीकृत्य गृहीत्वा तन्मूलेन पत्न्याः केशललाटयोः संधिमारभ्य मूर्धप्रदेशा-द्यथा सीमन्तरेखा भवति तथा भूर्भुवःस्वरोमिति मन्त्रं प्रत्युन्नयनमुच्चारयन् त्रिश्चतुर्वा केशान्पृथक्कृत्य यथाचारं सगोधूमामुद्गम्न-

रफलमालां तत्कण्ठे निधाय वीणागाथिनौ द्विजौ सोमं राजानं संगायेतामिति प्रेषयेत् । तौ च वीणागाथिनौ सोमो नो राजावतु मानुषीः प्रजा निविष्टचक्रा कावेरीति संनिहितनदीनाम संबुध्यन्तमुच्चारयन्तौ वीणां गापयेताम् । सामगानापरिज्ञाने इमं मन्त्रं त्रिःपठेताम् । ततो भर्ता स्विष्टकृदादिहोमशेषं समाप्य ब्रह्मणे दक्षिणां वृषभं ब्रह्मणोऽभावे ब्राह्मणाय विदुषे दत्त्वा पतिपुत्रवतीभिर्वृद्धब्राह्मणीभिरुपदिष्टमाचारं च कारयित्वा कर्मान्ते कर्तव्यं स्वस्तिवाचनं पूर्ववत्कुर्यात् ॥ इति नृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे सीमन्तोन्नयनम् ॥

अथ विष्णुबलिप्रकरणम् । नमामि बलितस्तुष्टं हरिं प्रह्लाददैवतम् । प्रत्यर्थिप्राणनिर्याणप्रयोगपरमौषधम् ॥ अथेदानीं विष्णुबलिरभिधीयते । तस्य तावत्कालप्रमाणमाहाश्वलायनाचार्यः—'तथा विष्णुबलिश्चापि सप्तमेऽस्तु पुष्टये । प्रतिगर्भं बलिः कार्यः सीमन्तश्च प्रशस्यते ॥ अकृते च भवेद्दोषः कृते पुष्टिं समृच्छति । गर्भबाधानिवृत्त्यर्थं सुखसूत्यर्थमेव च ॥ महादोषापनुत्त्यर्थं बलिः कार्यो यथाविधि' इति ॥ तत्र तिथ्यादिविधिरुच्यते । श्रीधरीये—'रोहिण्यां वा वैष्णवे पूर्वपक्षे द्वादश्यां वा सप्तमे वा तिथौ च । मध्ये चाह्नः पूर्वभागे न रात्रौ विष्णोः पूजां कारयेद्गर्भपुष्ट्यै' इति ॥ अत्र मासविधिस्तु—'मासेऽष्टमे विष्णुबलिं च कुर्यात्' इति पूर्वमेवाभिहितः । तथाच वसिष्ठः—'मास(से)ष्टमे च गर्भस्य कुर्याद्विष्णोर्बलिक्रियाम् । श्रवणे चैव रोहिण्यां पुष्ये चैव प्रशस्यते ॥ द्वितीया सप्तमी चैव द्वादशी च शुभा तिथिः । शुभग्रहोदयाः श्रेष्ठास्तेषां च दिवसा अपि ॥ पापाख्यायारिगाः श्रेष्ठा नेष्टाः सर्वेऽष्टमस्थिताः' इति ॥ वृद्धगार्ग्यश्चाह—'गर्भपुष्ट्यै विष्णुमासे विष्णुपूजां विधानतः ।

शुक्लाम्बरधरः कुर्याद्विपतोऽथ यमान्वितः ॥ नान्यथा गर्भवृद्धिः स्यादित्युवाच चतुर्मुखः । पीताम्बरं कृष्णवर्णं शङ्खचक्रगदाधरम् । वैकुण्ठवासिनं विष्णुं मृत्कुम्भे विन्यसेत्ततः ॥ विष्णोश्च रूपं कनकेन कृत्वा तल्लिङ्गमन्त्रेण सुवर्णपुष्पैः । वस्त्राक्षतैर्गुग्गुलधूपदीपैर्नैवेद्यताम्बूलफलैश्च सम्यक् ॥ एवं पूजां प्रकुर्वीत गर्भाणां रक्षणाय च । ब्राह्मणाय प्रदद्यात्तु प्रतिमां वस्त्रसंयुताम्' इति ॥ आश्वलायनाचार्यः—'वर्जयेत्सर्वकर्माणि विपत्प्रत्यरनैधने । चन्द्राष्टमे च यत्नेन वधनाशव्यये तथा ॥ अनभीष्टो भवेत्तिष्यश्चेत्तदा श्रवणेन वा । मार्गशीर्षेर्ऽक्षतादित्यैर्वैश्वदेवेन वा द्विजः ॥ एतेर्ऋक्षैश्च सीमन्तो बलिश्चापि विधीयते । प्राजापत्यमरुत्पौष्णाधिष्ण्यैर्वापि त्वसंभवे' ॥ व्ययो द्वादशचन्द्रः । आचार्यः—'बलिः प्रवक्ष्यते सम्यग्गिताय क्रियावताम् । तौ तु सन्मङ्गलस्नातौ दम्पती अहताम्बरौ ॥ भवेतां पूर्वदिवसे नान्दीश्राद्धादयस्तथा । प्राङ्गणेऽग्निं समाधाय सुमुहूर्ते गृहेऽथवा ॥ घृतैर्हुत्वाज्यभागान्तं स्थण्डिले चार्चयेद्धरिम् । पञ्चम्यां स्वस्तिकव्यं वा समभ्यर्च्य निवेद्य च ॥ अग्नेर्दक्षिणतः कुर्यात्स्थण्डिले यजनं हरेः ॥ विनास्थण्डिलयोगेन केचिज्जुह्वति च द्विजाः । आज्याक्तेनैव चरुणा वक्ष्यमाणैर्हुनेत्पतिः ॥ अतो देवा इति चरुं तस्मिन्नभावधिश्रितम् । पञ्चभिर्विष्णोर्नुकाद्यैश्च दशभिः क्रमान्निर्हुनेत् ॥ संवामित्यष्टभिर्ऋग्भिश्चतुर्दशभिरेव च । परद्धत्यथ सूक्तेन पौरुषेण विचक्षणः ॥ हुनेदादावथान्ते वा विष्णुर्योनिमिति त्रिभिः । चतुःषष्टिभिरप्येन हुनेदेवं बलौ हरेः ॥ अग्नेः प्रागुत्तरे भागे लिप्त्वा गां गोमयेन तु । सितेन रजसा कुर्याच्चतुरस्रं चतुःपदम् ॥ तथा चतुःषष्टिपदं कृत्वा स्पष्टं यथाविधि । चतुरङ्गुलमानेन प्रतिप्रति ततो बलिम् ॥ निर्ऋत्यादिषु तेष्वन्नैस्तन्मन्त्रैर्विकिरेद्बलिम् । पिण्डमेकं च तन्मध्ये दद्यादर्घ्यं च विष्णवे ॥ नमो नारायणायेति ताराद्यं मन्त्रमुच्चरेत् । दंपती प्राशयेतां च

पृथविपण्डद्वयं शुभम् ॥ स्वयं कर्ताचरेत्कर्म पत्न्या स्पृष्ट इति द्विजः । ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥ दक्षिणां गुरवे दत्त्वा भुञ्जीताथ द्विजैः सह । बलिरेवं प्रकर्तव्यः प्रतिगर्भं द्विजातिना' इति ॥—'वैष्णवो ह्यष्टमो मासो विष्णुर्गर्भस्य देवता । बलिं च तूष्णीं वा कुर्याद्गर्भस्य परिपुष्टये' इति ॥

अथ विष्णुबलिप्रयोगः । गर्भाष्टमे मासि पूर्वेद्युर्दंपती स्नात्वा धृताहतवाससावलंकृतौ भवेताम् । ततः पतिः प्रागुक्तग्रहयज्ञमाभ्युदयिकं च कृत्वा परेद्युः पुण्याहवाचनानन्तरं गर्भिण्या मम धर्मपत्न्याः गर्भस्य निर्बाधपरिपोषणपूर्वकसुखप्रसूतिसिद्ध्यर्थं गर्भाधिदेवताश्रीविष्णुप्रीतिकामोऽहं विष्णुबलिनाम कर्म करिष्य इतिसंकल्प्य प्रागुक्तलक्षणे मुहूर्ते गृहाङ्गणे गृहे वा प्रागुक्तविधिना स्थण्डिले औपासनाग्निं प्रतिष्ठाप्य । पुनर्देशकालौ निर्दिश्य अद्य करिष्यमाणे विष्णुबलिहोमे देवतापरिग्रहार्थमित्यादिचक्षुषी आज्येनेत्यन्तमुक्त्वा विष्णुं प्रधानदेवतां चतुःषष्टिवारं चरुद्रव्येण शेषेण स्विष्टकृतमित्यादि प्राग्वदुक्त्वान्वाधाय परिसमूहनाद्याज्ये दर्भाग्रद्वयक्षेपणान्तं कृत्वा सिद्धान्नमग्निसमीपे निधाय तेन सहाज्यं त्रिःपर्यग्निकृत्वा अग्नेर्दक्षिणभागे स्थण्डिलं गोमयेनोपलिप्य तत्र स्वस्तिकं वा पद्मं वा रजसा विलिख्य तत्र मनोहरं सुशुद्धं पुण्यजलैरापूरितं सूत्रवेष्टितं नवं मृत्कलशं संस्थाप्य तदुपरि नवं वस्त्रमास्तीर्य सौवर्णीं धृतपीताम्बरशङ्खचक्रगदापद्मां विष्णुप्रतिमां कलशोपरि संस्थाप्य अतोदेवा इति तृचा सुवर्णपुष्पगुग्गुलधूपदीपफलयुक्तनैवेद्ययुतषोडशोपचारैः संपूज्य पुनर्यथासनमासित्वा पत्न्या पाणिना स्पृष्टःसन् अवदानधर्मेण चरुमवदाय स्रुचा चतुःषष्टिमन्त्रैश्चतुःषष्टिमाहुतीर्जुहुयात् । तत्र मन्त्राः—अतो देवा इति षळृचस्य मेधातिथिर्विष्णुर्गायत्री । अतो देवा० ऋ० ६ । विष्णोर्नुकमिति सप्तदशर्चस्य

सूक्तस्यान्त्यो दीर्घतमा विष्णुस्त्रिष्टुप् द्वितीयातृतीये जगत्यौ । विष्णोर्नु कं वीर्याणि० १७ । संवामित्यष्टर्चस्य सूक्तस्य भरद्वाजो विष्णुस्त्रिष्टुप् । संवां कर्मणा० ८ । परोमात्रयेति चतुर्दशर्चस्य वसिष्ठो विष्णुस्त्रिष्टुप् । परो मात्रया तन्वा० १४ । सहस्रशीर्षेति षोडशर्चस्य सूक्तस्य नारायणः पुरुषोऽनुष्टुबन्त्या त्रिष्टुप् । सहस्रशीर्षा पुरुषः० १६ । विष्णुर्योनिमिति तिसृणां त्वष्टा विष्णुरनुष्टुप् । विष्णुर्योनिं कल्पयतु० ३ । अत्र सर्वत्र विष्णव इदं नममेत्युद्देशत्यागः । अनन्तरमग्नेरीशान्यां सर्वतोद्वात्रिंशदङ्गुलपरिमितं स्थण्डिलं गोमयेनोपलिप्य सितेन रजसा चतुरस्रमारचय्य तन्मध्ये प्रागुदगायतरेखाद्वयलेखनेन चतुरस्रमण्डलचतुष्टयं संपाद्य तस्योपरि रेखाद्वयस्य पार्श्वयोः प्रत्येकं रेखात्रयसंख्यया प्रागायताः षडुदगायताश्च षड्रेखाः परस्परं चतुरङ्गुलान्तरालमालिख्य तत्र निष्पन्नेषु चतुःषष्टिपदेषु नैर्ऋतपदादिक्रमेण प्रथमं वाह्यावृत्तौ ततोऽनन्तराख्याख्यावृत्तिषु प्रागुक्तचतुःषष्टिमन्त्रैः स्वाहान्तैश्चतुःषष्टिपदेषु प्रादक्षिण्येन बलिं दत्त्वा सर्वत्र विष्णव इदं नममेत्युद्दिश्य त्यक्त्वा तन्मण्डलमध्ये ॐनमोनारायणायेति बलिं दत्त्वोद्दिश्य त्यक्त्वा तेनैव च मन्त्रेणार्घ्यं दत्त्वा बलिशेषात्किंचिदादाय पिण्डद्वयं कृत्वा दंपती पृथगश्नीयाताम् । ततः पतिः पत्न्या स्पृष्टःसन् स्विष्टकृदादिहोमशेषं समाप्य सवस्त्रप्रतिमां दक्षिणां च गुरवे दत्त्वा कर्मान्ते स्वस्तिवाचनं पूर्ववत्कृत्वा ब्राह्मणान्भोजयित्वा स्वयमपि भुञ्जीत ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे विष्णुबलिप्रकरणम् ॥

अथ गर्भिणीधर्माः । लक्ष्मीनृसिंह भवतः कीर्तिस्त्रैलोक्यगर्भिणी नूनम् । नोचेदिदं कथं स्यात्पाण्डित्वं गर्भधारणायालम् ॥ अथेदानीं प्रसङ्गाद्गर्भिणीधर्मा उच्यन्ते । तत्र पाद्मे दितिमाह कश्यपः—'नावस्करेषूपविशेन्मुसलोलूखलादिषु ।

जलं च नावगाहेत शून्यागारं च वर्जयेत् ॥ वल्मीकं नाधितिष्ठेत नचोद्विग्नमना भवेत्। विलिखेन्न नखैर्भूमिं नाङ्गारेण न भस्मना॥ न तुषाङ्गारभस्मास्थिकपालेषु समाविशेत् । वर्जयेत्कलहं लोकैर्गात्रभङ्गं तथैव च ॥ न मुक्तकेशी तिष्ठेत नाशुचिः स्यात्कदाचन । न शयीतोत्तरशिरा नचैवाधःशिराः क्वचित् ॥ न वस्त्रहीना नोद्विग्ना नचार्द्राम्बरधारिणी । नामङ्गल्यं वदेद्वाक्यं नच हास्याधिका भवेत् ॥ कुर्याच्छ्वशुरयोर्नित्यं पूजां माङ्गल्यतत्परा । तिष्ठेत्प्रसन्नवदना भर्तुः प्रियहिते रता ॥ संध्यायां नैव भोक्तव्यं गर्भिण्या हि प्रयत्नतः । न स्थातव्यं न गन्तव्यं वृक्षमूलेषु सर्वदा ॥ न शयाना सदा तिष्ठेत्पक्षाच्छायां विवर्जयेत् । सर्वौषधीभिः कोष्णेन वारिणा स्नानमाचरेत् ॥ कृतरक्षा सुभूषा च वास्तुपूजनतत्परा । दानशीला तृतीयायां पार्वत्यां भक्तिमाचरेत् ॥ गर्भिणी कुञ्जराश्वादिवाहं हर्म्याधिरोहणम् । व्यायामं शीघ्रगमनं शकटारोहणं त्यजेत् ॥ शोकं रक्तविमोकं च साध्वसं कुक्कुटासनम् । व्यवसायं दिवास्वापं रात्रौ जागरणं त्यजेत् ॥ पतिव्रता भवेन्नारी विशेषेण तु गर्भिणी । अतिक्षारं तु नाश्नीयादत्यम्लमतिभोजनम् । अत्युष्णमतिशीतं च गुर्वाहार परित्यजेत् ॥ यस्तु तस्या भवेत्पुत्रः स्थिरायुर्वृद्धसंमतः । अन्यथा गर्भपतनं सावाप्नोति न संशयः’ इति ॥ ॥ कपिलसंहितायां तु—‘माताथ गर्भगुप्त्यर्थं सात्विकाहारसंयुता । सदाचारा धर्मशीला सन्नतैर्देवतार्चनैः ॥ नातिप्रातस्तु भुञ्जीत नातिमध्यंदिने तथा । संध्याकाले तु नाश्नीयान्नाकच्छा वर्तयेत्सदा ॥ नोच्छिष्टा नैव मलिना न प्रावृतमुखासती ।

पाठा०—१ नाधिरोहेत । २ नखैर्न विलिखेद्भूमिं । ३ न चार्द्रावरणाशिनी ।

नारोहेत्पर्वतं चाथं श्मशानं नैवधेत्सती ॥ नोत्तरेत्तु नदीं नावा न वृक्षानारुहेत्कदा । न मुक्तकेशी नाभ्यक्ता भवेद्गर्भवती सती । नोच्छिष्टा नन संध्यासु तथैव विषमस्थले ॥ नाधः शयीत विप्रेभ्यो दद्याद्वस्त्वनुसारतः ॥ स्रेष्ठवस्तुसुगन्धानि ताम्बूलं चाष्टमङ्गलम् । तृतीयमासे कूष्माण्डफलं दद्यान्मनोहरम् ॥ दद्यात्सुवासिनीभ्योऽपि लभेताभ्यः सदाशिषः । गर्भसंरक्षणार्थाय न कुर्यान्नखकृन्तनम् ॥ हरिद्रां कर्णपत्रं च गुडो जीरक एव च । लाजाश्च लवणं पुष्पं फलमित्यष्टमङ्गलम् ॥ सूक्ष्मवस्त्रेण संवेष्ट्य गन्धपुष्पाक्षतादिभिः । अभ्यर्च्यैकं विधानेन दद्याद् द्विजवराय वा ॥ सुवासिनीभ्यो वैतेषां यथालाभं प्रदीयते । शक्त्या फलं फले यद्वा बहूनि सुखसिद्धये ॥ मासे तृतीये सम्यर्च्य दद्याद्दाडिममुत्तमम् । चतुर्थे मातुलिङ्गं च नारिकेलं च पञ्चमे । षष्ठे तु पनसं चूतं सप्तमे मासि चाष्टमे ॥ लिकुचं नवमे मासि कदलीफलगुच्छकम् । सर्वदा सर्वमासेषु प्रशस्तं कदलीफलम् ॥ एवं दानेन नारीणां संततिप्रतिबन्धकाः । नश्यन्ति संततिं शुद्धां यास्यन्ति शुभकर्मभिः' इति ॥ ॥ मार्कण्डेयपुराणेऽपि—'गर्भः स्त्रीणां तथा न्यस्तः कलिलः स्यात्सुदारुणः । तस्य रक्षा सदा कार्या नित्यं शौचनिषेवणात् ॥ प्रसिद्धमन्त्रलिखनाच्छस्तमाल्यानुधारणात् । विशुद्धगेहवसनादनायासाच्च वै द्विज ॥ परिवर्तयनं तां तु विरूपविकृतां द्विज । तां तु वृक्षादिपरिखाप्राकाराम्भोधिसंश्रयां ॥ गर्भिण्यां परिवृत्तिं तौ कुरुतः पादपाद्रिषु । अतो न वृक्षं नैवाद्रिं प्राकारं च पयोनिधिम् । परिखां वा समाक्रामेदबला गर्भधारिणी ॥ गर्भहन्तुः सुतो विप्रो मोहिनी चापि कन्यका । प्रविश्य गर्भं हन्त्येको भुक्तं मेहयते परा ॥ जायन्ते मेहनादस्याः सर्पमण्डूककच्छपाः । सरीसृपाणि चान्यानि पुरीषमथ

पाठा०—१ वृक्षमारोहयेत्कदा ।

वा पुनः ॥ वृक्षच्छायाश्रिता रात्रावथवापि चतुष्पथे । श्मशानकटभूमिष्ठामुत्तरीयविवर्जिताम् ॥ निद्राहीनां निशीथोत्थां प्रविशेतामिमां स्त्रियम्' इति ॥ ❀ ॥ अत्र गर्भिण्या यात्राप्राप्तौ मासनियममाह बृहस्पतिः—'चतुर्थे मासि षष्ठे वाप्यष्टमे गर्भिणी यदा । यात्रा नित्यं विवर्ज्या स्यात्पाषाणे तु विशेषतः' इति । इति गर्भिणीधर्माः ॥ ❀ ॥ अथ गर्भिणीपतिधर्माः—गर्भिण्या यदभिलषितं तत्पतिना दातव्यम् । अन्यथा दोषश्रवणात् । तदाह याज्ञवल्क्यः—'दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् । वैरूप्यं निधनं चापि तस्मात्कार्यं स्त्रियाः प्रियम्' इति । संग्रहेऽपि—'गर्भिणीवाञ्छितद्रव्यं तस्यै दद्याद्यथोचितम् । सूते चिरायुषं पुत्रमन्यथा दोषमर्हति' इति । आचार्यस्तु—'वपनं मैथुनं तीर्थं वर्जयेद्गर्भिणीपतिः । श्राद्धं च सप्तमान्मासादूर्ध्वं चान्यत्र वेदवत्' इति । श्राद्धं श्राद्धभोजनमित्यर्थः । अन्यत्तु शवानुगमनादि । तदुक्तं कालविधानव्याख्यायाम्—'क्षौरं शवानुगमनं नखकर्तनं च युद्धं च वास्तुकरणं त्वतिदूरयानम् । उद्वाहमम्बुधिजलस्नपनोपयोगमायुःक्षयं भवति गर्भिणिकापतीनाम् ॥ क्षौरं च सागरस्नानं न कुर्याद्गर्भिणीपतिः । कृतवान्यदि चेत्तस्याः प्रजा भवति न ध्रुवम्' इति ॥ इति गर्भिणीपतिधर्माः ॥

सूतिकागृहनिर्माणविधिः । अवलम्बेऽम्बुजाक्षस्य पदाम्बुजयुगं परम् । यस्य रक्षःसभाशाला संभवे सूतिकागृहम् ॥ अथेदानीं प्रसङ्गात्सूतिकागृहनिर्माणविधिरभिधीयते । स्मृतिभास्करे गर्गः—'वारेऽनुकूले राशौ तु रिष्फदोषादिवर्जिते । स्यानुकूलदिशि प्रोक्तं सूतिकाभवनं बुधैः' ॥ रत्नकोशेऽपि—'आसन्नप्रसवे मासि कुर्याच्चैव विशेषतः । तद्वत्प्रसवकाले स्यादिति शास्त्र-

पाठ०—१ नित्य विवर्ज्यैवानामाषाढे (पाषाणे) तु विशेषत०। २ मरणं चापि।

विनिश्चयः' इति । सूतिकागृहनिर्माणविधिमाह वसिष्ठः—'ऐन्द्रे तु विश्रमस्थानमाग्नेय्यां पचनालयम् । याम्यायां शयनस्थानं नैर्ऋत्यां सूतिकागृहम् ॥ वारुण्यां भोजनगृहं वायव्यां पशुमन्दिरम् । कौबेर्यां तु धनस्थानमैशान्यां देवतालयम्' इति । सूतिकागृहप्रवेशकालमाह ज्योतिर्वसिष्ठः—'अथातः संप्रवक्ष्यामि सूतिकागृहवेशनम् । [ मासे तु नवमे प्राप्ते पूर्वपक्षे शुभे दिने । असूतिसंभवे काले सद्य एव प्रवेशयेत् । रोहिण्यैन्दवपौष्णेषु स्वातीवारुणयोरपि । पुनर्वसु पुष्यहस्तधनिष्ठास्युत्तरासु च ॥ मैत्रे त्वाष्ट्रे तथाश्विन्यां सूतिकायाः प्रवेशनम् । ] मत्यर्थनाशौ मृत्युश्च वृद्धिपुष्ट्यायुरीप्सितम् ॥ मृत्युश्च मरणं पित्रोर्मरणं च ततस्त्रिषु । मेषादिक्रमशो विद्यात्सूतिकागारवेशने ॥ ग्रहानुकूले राशौ तु रिष्फषष्ठाष्टवर्जिते । सर्वे चाथ शुभाः केन्द्रे पापाश्च त्रिषडायगाः ॥ शुभांशे शुभदृष्टे तु सूतिकावेशनं शुभम्' इति ॥ ❀ ॥ सूतिकागृहप्रवेशविध्यादि पद्मपुराणे—विष्णुधर्मोत्तरखण्डे परशुरामं प्रत्याह पुष्करः—'प्रविशेत्सूतिकासद्म कृतरक्षं समंततः । सुभूमौ निर्मितं रम्यं वास्तुविद्याविशारदैः ॥ प्राग्द्वारमुत्तरद्वारमथवा सुदृढं शुभम् । देवानां ब्राह्मणानां च गवां कृत्वा च पूजनम् ॥ विप्रपुण्याहशब्देन शङ्खवाद्यरवेण च । प्रसूता बहवस्तत्र तथा क्लेशसहाश्च याः ॥ हृद्या विश्वसनीयाश्च प्रविशेयुः स्त्रियश्च तत् । ताश्चानुलेपनैर्हृद्यैस्तत्रैवमुपचारयेत् ॥ आहारैश्च विहारैश्च प्रसवाय सुखं द्विजाः । एरण्डमूलचूर्णेन मधुतेन तथैव ताम् । सुखप्रसवनार्थाय पश्चात्काये विनिक्षिपेत्' इति ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे सूतिकागृहनिर्माणविधिः ॥

पाठा०—१ चिह्नान्तर्गतोऽयं भागो खात्ररोघे न दृश्यते ।

अथ गर्भोत्पत्तिप्रवर्धनप्रसवप्रकरणम् । लक्ष्मीवक्षोजचञ्चद्घुसृणमसृणितं यस्य वक्षो मनोज्ञं दंष्ट्रास्वच्छांशुजालैः किसलयकुसुमभ्रान्तिकृत्संचकास्ति । उच्यन्ते कूटसिंहं सकलसुरवरैः सेव्यमानं दयालुं तं नत्वा गर्भवृद्धिप्रसवसरणयः सर्वसौभाग्यभूमिम् ॥ अथ प्रसङ्गाद्गर्भोत्पत्तिप्रवर्धनप्रसवप्रकार उच्यते याज्ञवल्क्येन । तत्र तावद्रजसात्मनः शरीरग्रहणप्रकारमाह—'[ निःसरन्ति यथा लोहपिण्डोत्पन्नाः स्फुलिङ्गकाः । सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि ॥ तत्रात्मा हि स्वयं किंचित्कार्यं किंचित्स्वभावतः । करोति किंचिदभ्यासधर्माधर्मोभयात्मकम् ॥ निमित्तमक्षरः कर्तु यो हि ब्रह्मा गुणी वशी । अजः शरीरग्रहणात्स जात इति कीर्त्यते । ]—सर्गादौ च यथाकाशं वायुं ज्योतिर्जलं महीम् । सृजत्येकोत्तरगुणां तथादत्ते भवन्नपि' ॥ सर्गादाविति—सृष्टिसमये स परमात्मा यथाकाशादीन्—शब्दैकगुणं गगनं, शब्दस्पर्शगुणं वायुं, शब्दस्पर्शरूपगुणं तेजः, शब्दस्पर्शरूपरसवदुदकं, शब्दस्पर्शरूपरसगन्धगुणां जगतीं इत्युत्तरगुणान्सृजति । आत्मा जीवतामापन्नो भवन्नुत्पद्यमानोपि स्वशरीरारम्भकत्वेन तानुपादत्ते गृह्णाति ॥ कथं शरीरारम्भकत्वं पृथिव्यादीनामतआह—'आहुत्याप्यायते सूर्यः सूर्याद्वृष्टिरथौषधीः । तदन्नरसरूपेण शुक्रत्वमपि गच्छति' ॥ आहुत्या इति—यजमानैः प्रक्षिप्तयाहुत्या पुरोडाशादिरसेनाप्याय्यते सूर्यः । सूर्याच्च कालवशेन परिपकादाज्यादिहवीरसाद्वृष्टिर्भवति । ततो व्रीह्याद्यौषधिरूपमन्नं च । तच्चान्नं सेवितं सद्रुधिरादिक्रमेण शुक्रशोणितभावमापद्यते ॥ ततः किमित्यतआह—'स्त्रीपुंसयोश्च संयोगे विशुद्धे शुक्रशोणिते । पञ्चधातून्स्वयं षष्ठ आदत्ते युगपत्प्रभुः' ॥

---

पाठा०—1 रानद्भुत ।

स्त्रीपुंसयोरिति—ऋतुवेलायां स्त्रीपुंससंयोगे शुक्रं च शोणितं च शुक्रशोणितं तस्मिन्परस्परसंयुक्ते विशुद्धवातपित्तश्लेष्माद्यष्टग्रन्थिषु मूत्रपुरीषग्रन्थिरेतोन्योन्यबीजानीति स्मृत्यन्तरोक्तदोषरहितेषु स्थित्वा पञ्चधातून्पृथिव्यादिपञ्चमहाभूतानि शरीरारम्भकतयायं षष्ठधिष्ठातुरात्मा प्रभुः शरीरारम्भकरणदृष्टकर्मयोगितया समर्थो युगपदादत्ते भोगायतनत्वेन स्वीकरोति । तथाच शारीरके—'स्त्रीपुंसयोर्मैथुनसंसृष्टं शुक्रं तत्क्षणमेव भूतानां सह गुणैश्च सत्वरजस्तमोभिः सह वायुना प्रेर्यमाणं गर्भाशये तिष्ठती'ति ॥—'इन्द्रियाणि मनः प्राणो ज्ञानमायुः सुखं धृतिः । धारणा प्रेरणा दुःखमिच्छाहंकार एवच ॥ प्रयत्न आकृतिर्वर्णः स्वरद्वेषौ भवाभवौ । तस्येतदात्मकं सर्वमनादेरादिमिच्छतः' ॥ इन्द्रियाणीति—इन्द्रियाणि ज्ञानकर्मेन्द्रियाणि वक्ष्यमाणानि मनश्चोभयसाधारणं प्राणोऽपानो व्यान उदानः समान इत्येवं पञ्चवृत्तिभेदः शारीरो वायुः कालविशेषानवच्छिन्नजीवनं आयुः सुखं निर्वृतिः धृतिश्चित्तधैर्यं धारणा प्रज्ञा मेधा प्रेरणं ज्ञानकर्मेन्द्रियाणामधिष्ठातृत्वं दुःखमुद्वेगः अहंकारोऽहंकृतिः प्रयत्नः कृतिः आकृतिराकारः वर्णो गौरादिः स्वरः षड्जगान्धारादिः द्वेषो वैरं भवः पुत्रपश्वादिभवः अभवस्तद्विपर्ययः तस्यानादेरात्मनो नित्यस्यादिमिच्छतः शरीरं जिघृक्षमाणस्य सर्वमेतदिन्द्रियादिकमात्मजनितं प्राग्भवीयकर्मजन्यमित्यर्थः ॥ संयुक्तशोणितशुक्रस्य कायरूपपरिणतौ क्रममाह—'प्रथमे मासि संक्लेदभूतो धातुविमूर्च्छितः । मास्यर्बुदं च द्वितीये तु तृतीयेऽङ्गानि वै ततः' ॥ प्रथमे मासीति—प्रथमे मासि संक्लेदभूतो द्रवरूपतां प्राप्य एवावतिष्ठते न कठिनतया परिणमते । द्वितीयमास्यर्बुदं ईषत्कठिनमांसपिण्डरूपो भवति । अयमभिप्रायः—कोष्ठपवनजठरदहनाभ्यामित्यत्र कारणमाह वाहटे—'ऊर्ध्वमामिमयो गर्भ मध्ये तु जलसंस्थितिः । वायुना तेन मार्गेण तेन गर्भो न

पच्यते' इति । प्रतिदिनमुच्छोष्यमाणशुक्ररजःसंपर्कोयादितद्रवीभूतमेवं जातं त्रिंशद्दिनैः काठिन्यमापद्यत इति । तथाच श्रुतिः—'द्वितीये शीतोष्णानिलैरभितप्यमानो भूतसंघातो घनो जायते' इति । तृतीये तु मासे अङ्गैरिन्द्रियैश्च संयुतो भवति ।।—'आकाशाल्लाघवं सौक्ष्म्यं शब्दं श्रोत्रं बलादिकम् । वायोश्च स्पर्शनं चेष्टां व्यूहनं रौक्ष्यमेवच ।। पित्तात्तु दर्शनं पक्तिमौष्ण्यं रूपं प्रकाशनम् । रसात्तु रसनं शैत्यं स्नेहक्लेदं समार्दवम् ।। भूतैर्गन्धं तथा घ्राणं गौरवं मूर्तिमेव च । आत्मा गृह्णात्यजः सर्वं तृतीये स्पन्दते ततः'।। आकाशादिति—आत्मा गृह्णातीति सर्वत्र संबध्यते । गगनाल्लाघवं लघिमानं क्रियोपयोगिनं सूक्ष्मेक्षिकां शब्दं श्रवणेन्द्रियं बलं दार्ढ्यं आदिग्रहणात्सुषिरत्वं विविक्ततां च । 'आकाशाच्छब्दं श्रोत्रं विविक्ततां सर्वान्समूहांश्चे'ति गर्भोपनिषदि दर्शनात् । पवनात्स्पर्शेन्द्रियं चेष्टां गमनागमनादिकाम् । व्यूहनमङ्गानां विविधं प्रसारणं रौक्ष्यं कर्कशत्वं शब्दं स्पर्शं च पित्तात्तेजसोदर्शनं चक्षुरिन्द्रियं पक्तिं भुक्तस्याहारस्य पचनं औष्ण्यं स्पर्शनमङ्गानां रूपं श्यामत्वादि प्रकाशतां भ्राजिष्णुतां संतापमर्पणादि च । 'शौर्यामर्षतैक्ष्ण्यपक्त्यौष्ण्यभ्राजिष्णुतासंतापवर्णरूपेन्द्रियाणि तैजसानी'ति गर्भोपनिषदि दर्शनात् । एवं रसादुदकाद्रसनेन्द्रियं शैत्यमङ्गानां स्नेहं स्निग्धत्वं मृदुत्वं संहतिं क्लेदं आर्द्रतां भूमेर्गन्धं घ्राणेन्द्रियं गरिमाणं मूर्तिंच सर्वमेतत्परमार्थतो जन्मरहितोऽप्यात्मा तृतीये मासि गृह्णाति । ततश्चतुर्थे मासि स्पन्दते चलति । तथाशारीरके—'तस्माचतुर्थे मासि चलनादावभिप्रायं करोति ।। किंच—'दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् । वैरूप्यं मरणं चापि तस्मात्कार्यं स्त्रियाः प्रियम्' ।।दोहदस्येति—गर्भस्यैकं हृदयं गर्भिण्याश्चापरमिति द्विहृदया गर्भिणी तया यदभिलषितं तद्दोहदं तस्याप्रदानेन गर्भो विरूपतारूपं मरणरूपं वा दोषं प्राप्नोति । तस्माद्दोषपरिहारार्थं गर्भपुष्ट्यर्थं च

गर्भिण्या स्त्रिया यदभिलषितं तत्संपादनीयम् । तथाच श्रूयते—'द्विहृदयां नारीं दौहृदिनीमाचक्षते तदभिलषितं दद्याद्वीर्यवन्तं चिरायुषं पुत्रं जनयती'ति । तथा व्यायामादिकमपि गर्भग्रहणप्रभृति तया परिहरणीयम्—'ततःप्रभृति व्यायामव्यवसायनिर्हरणदिवास्वप्नरात्रिजागरणशोकभययानारोहणवेगधारणकुक्कुटासनशोणितमोक्षणानि परिहरेत्' इति तत्रैवाभिधानम् । गर्भग्रहणं च श्रमादिभिर्लिङ्गैरवगन्तव्यम्—'सद्योगृहीतगर्भायाः श्रमो ग्लानिः पिपासा सक्थिस्पन्दनं शुक्रशोणितयोरनुबन्धः स्फुरणं च योन्याः' इत्यादि तत्रैवोक्तम् ॥ किंच—'स्थैर्यं चतुर्थे त्वङ्गानां पञ्चमे शोणितोद्भवः । षष्ठे बलस्य वर्णस्य नखरोमास्थिसंभवः' ॥ स्थैर्यमिति—तृतीये मासि प्रादुर्भूतसाङ्गसंघस्य चतुर्थे मासि स्थैर्यं स्थेमा भवति । पञ्चमे लोहितस्योद्भव उत्पत्तिः । षष्ठे बलवर्णकररुहरोम्णां संभवः ॥—'अतश्चेतन्ययुक्तश्च नाडीस्नायुशिरायुतः । सप्तमे चाष्टमे चैव त्वङ्मांसस्मृतिमानपि' ॥ अत इति—असौ पूर्वोक्तगर्भः सप्तमे मासि मनसा चेतनया युक्तो नाडीभिर्वायुवाहिनीभिः स्नायुभिरस्थिबन्धनैः शिराभिर्वातपित्तश्लेष्मवाहिनीभिर्नाडीभिश्च संयुक्तः । तथा अष्टमे मासि त्वचा मांसेन स्मृत्या च युक्तो भवति ॥ किंच—'पुनर्धात्रीं पुनर्गर्भमोजस्तस्य प्रधावति । अष्टमे मास्यतो गर्भो जातः प्राणैर्वियुज्यते' ॥ पुनरिति—तस्याष्टममासिकस्य गर्भस्य ओजः कश्चन विशेषो धात्रीं च पुनः पुनः शीघ्रं गच्छति । अतोऽष्टमे मासि जातो गर्भः प्राणैर्वियुज्यते । अनेनौजःस्थितिरेव जीवनहेतुरिति दर्शयति । ओजःस्वरूपं च स्मृत्यन्तरे दर्शितम् 'हृदि तिष्ठति यच्छुद्धमीषद्रक्तं सपीतकम् । ओजः शरीरे संख्यातं तन्नाशान्नाशमृच्छति' इति ॥ किंच—नवमे दशमे वापि प्रबलैः सूतिमारुतैः । निःसार्यते बाण इव यन्त्रच्छिद्रेण सज्वरः' ॥ नवमे इति—एवं करचरणचक्षुरादिपरिपूर्णाङ्गेन्द्रियो नवमे दशमे वा, अपिशब्दात्सप्तमे-

ऽष्टमे वा जीवत्यायासादिदोषवशात्प्रबलसूतिहेतुप्रभञ्जनप्रेरितस्नाय्वस्थिचर्मादिविनिर्मितवपुः यन्त्रस्य छिद्रेण सूक्ष्मसुषिरेण सज्वरो दुःसहदुःखाभिभूयमानो निःसार्यत इति ॥ ❀ ॥ आसन्नप्रसवस्य गर्भस्य स्थितिः मार्कण्डेयपुराणे—'क्रामन्ति भुक्तपीतानि स्त्रीणां गर्भोदरे तथा । तेनाप्यायितदेहस्तु जन्तुर्वृद्धिमुपैति वै ॥ स्मृतिस्तत्र प्रयात्यत्र बाह्यसंस्कारभूमिजम् । ततो निर्वेदमायाति पीड्यमानस्ततस्ततः ॥ पुनर्नैवं चरिष्यामि निर्मुक्तो मातृकोदरात् । सदा तथा यतिष्यामि गर्भं नाप्स्याम्यहं यथा ॥ इति चिन्तयते स्मृत्वा आत्मदुःखशतानि च । यानि पूर्वानुभूतानि दैवभूतात्मजानि वै ॥ ततः कालवशाज्जन्तुः परिवर्तत्यधोमुखः । नवमे दशमे वापि आयुः संजायते ततः ॥ निष्क्रम्यते च विलपन्यथा दुःखनिपीडितः । निष्क्रान्तश्चोदरान्मूर्च्छामसह्यां प्रतिपद्यते ॥ प्राप्नोति चेतनां चासौ वायुस्पर्शसमन्वितः । ततस्तं वैष्णवी माया समाक्रामति मोहिनी ॥ तया विमोहितश्चासौ ज्ञानभ्रंशमवाप्यते । भ्रष्टज्ञानो बालभावं ततो जन्तुः प्रपद्यते' इति ॥ ॥ एतद्गर्भस्थितिप्रकारो विष्णुधर्मोत्तरे—'जरायुर्वेष्टिते देहे मूर्ध्नि बद्धाञ्जलिः सदा । मध्ये क्लीबस्तु वामे स्त्री दक्षिणे पुरुषस्तथा ॥ तिष्ठत्युदरभागे तु पृष्ठस्याभिमुखस्तथा' इति ॥ ❀ ॥ प्रसवनिबन्धे कर्तव्यमुक्तमृग्विधाने—'प्रमन्दिनेत्यमूयन्त्यां जपेद्गर्भविमोचनीम् । इन्द्रं च मनसा ध्यायेन्नारी गर्भं प्रमुञ्चति' इति । अन्यच्च—'विजिहीर्ष्व वनस्पते तदिदं च्यावनं स्मृतम् । यश्च्यावयितुकामः स्याच्च्यावयेत्तदिदं जपन् ॥ स्त्रियं गर्भप्रमूढां वा पाययेदनुमन्त्रितम् । उदकं पाययेत्तेन गर्भस्तु च्यवते सुखम्' इति ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे गर्भोत्पत्तिप्रवर्धनप्रसवप्रकरणम् ॥

अथ जातकर्मप्रकरणम् । नमस्तस्मै नृसिंहाय यस्य जन्ममहोत्सवः । सद्यः स्वर्गवधूवर्गकारावन्धविमोचनः ॥ अथेदानीं जातकर्मविधिरभिधीयते । तत्र वसिष्ठः—'जातमात्रे कुमारे तु मुखमस्यावलोकयेत् । पिता ऋणाद्विमुच्येत पुत्रस्य मुखदर्शनात्' ॥ तथा कालिकाविधानेऽप्युक्तम्—'मुखावलोकेन सुतस्य जीवतः पिता विमुच्येत यदा तदृणतः' इति । तथाचैतरेयब्राह्मणम्—'ऋणमस्मिन्संनयत्यमृतत्वं च गच्छति । पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्' इति । संवर्तः—'जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते' इति । तच्च शीतलोदकेन कर्तव्यम् । तथाच जावालिः—'कुर्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेव च' इति । एतद्रात्रावपि कार्यम् । तदाह वसिष्ठः—'पुत्रजन्मनि यज्ञे च तथा संक्रमणे रवेः । राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि' इति । तथाच हेमाद्रौ व्यासः—'रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः । नैमित्तिकं तु कुर्वीत स्नानं दानं च रात्रिषु ॥ पुत्रजन्मनि यात्रायां शर्वर्यां दानमक्षयम्' इति । एतच्च तत्काले सूतकान्तरनिमित्ताशौचान्तरसंनिपाते सत्यपि कर्तव्यम् । तदाह प्रजापतिः—'सूतके तु समुत्पन्ने पुत्रजन्म यदा भवेत् । कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यति' इति । ज्योतिर्वसिष्ठस्तु—'श्रुत्वा जातं पिता पुत्रं सचैलं स्नानमाचरेत् । उत्तराभिमुखो भूत्वा नद्यां वै देवखातके' इति । रात्रौ तटाकादिगमनाशक्तौ विशेषमाह शाङ्ख्यायनः—'दिवा यदाहृतं तोयं कृत्वा स्वर्णयुतं तु तत् । रात्रौ स्नाने तु संस्नायेत् स्यादग्नेः सन्निधौ' इति ॥ ॥ जातकर्मकालमाह मनुः—'प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते' इति । वर्धनं छेदनम् । मार्कण्डेयोऽपि—'प्राङ्नाभिवर्धनात्कार्यं जातकर्मक्रिया द्विजैः । स्नाता सचैलं स्रग्वी सितगन्धादिभूषितः' इति । गर्गस्तु—'जात-

मात्रकुमारस्य जातकर्म विधीयते । स्तन्यप्राशनतः पूर्वं नाभिकर्तनतोऽपि च ॥ एष्वतीतेषु कालेषु शुभयोगे शुभोदये । जातकर्मक्रियां कुर्यात्पुत्रायुःपरिवृद्धये' इति । अत्र जैमिनिः—'यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम् । छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते' ॥ जाबालिः—'जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि । दैवादतीतकालं चेदतीते सूतके भवेत् ॥ अच्छिन्ननाभ्यां कर्तव्यं श्राद्धं वै पुत्रजन्मनि । आशौचोपरमे कार्यमथवा नियतात्मभिः' इति ॥ ❀ ॥ अत्राभ्युदयिकं श्राद्धं हेम्ना कर्तव्यमित्युक्तं व्यासेन—'अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि । हेम्ना श्राद्धं प्रकुर्वीत यस्य भार्या रजस्वला ॥ जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि । यस्माच्चान्द्राय(णे)णाच्छुद्धिस्तेषां भवति नान्यथा' इति । आचार्यः—'जाते कुमारे तं दृष्ट्वा स्नात्वानीय गुरून्पिता । नान्दीश्राद्धावसाने तु जातकर्म समाचरेत्' इति । गुरून्ब्राह्मणान् ॥ तत्र कारिका—'जाते सुते पिता कुर्यान्नान्दीश्राद्धं विधानतः । जातकर्म ततः कुर्यादन्यैरालम्भनात्पुरा ॥ एकस्मिन्भाजने सर्पिर्मधु चैव समानयेत् । अवघृष्य हिरण्येन संसृज्येरँस्त्वा यथा ॥ हिरण्येन कुमारं तं प्राशयेन्मधुसर्पिषी । प्रते ददामिमन्त्रेण मातुरुत्सङ्गसंस्थितम्' इति । इदमत्र गृह्यम्—'कुमारं जातं पुरान्यैरालम्भात्सर्पिर्मधुनी हिरण्यनिकाषं हिरण्येन प्राशयेत्—प्रते ददामि मधुनो घृतस्य वेदं सवित्रा प्रसूतं मघोनाम् । आयुष्मान्गुप्तो देवताभिः शतं जीव शरदो लोके अस्मिन्' इति । अस्यार्थः—इदं जातकर्म । कुमारग्रहणं कुमारीनिवृत्त्यर्थम् । ननु कुमार्या अपि भवत्येव जातकर्म । कुतः । वक्ष्यते आवृतैव कुमार्या इति । उच्यते—प्रवासादागतस्य विहितं कर्माऽवृता भवति न जातकर्म अनन्तरत्वात् । एवमेके । अन्ये पुनरावृतैव कुमार्या इत्येतदुभयार्थमिति वदन्ति । एतेन कुमार्या अपि जातकर्म भवति ।

मनुनाप्युक्तम्—'अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः' इति। तर्हि कुमारग्रहणं कथम्। अधिकारार्थम्। 'अष्टमे वर्षे ब्राह्मणमुपनये' दित्युपनयनं कुमारस्यैव यथा स्यान्न कुमार्या इति। ननु ब्राह्मणमिति पुंलिङ्गनिर्देशादेव स्त्रिया न भविष्यति। न जातिनिर्देशे लिङ्गमविवक्षितम्। यथा ब्राह्मणो न हन्तव्य इति ब्राह्मण्यपि न हन्यते एवमत्रापि स्त्रियाः प्रसज्येत तन्निवृत्त्यर्थं कुमारग्रहणमिति। जातग्रहणमप्यधिकारार्थम्। 'गोदानं षोडशे वर्षे' इति जन्मतः प्रभृति षोडशे वर्षे यथा स्यादुपनयनप्रभृति माभूदिति। पुरा पूर्वमित्यर्थः। अन्यग्रहणमनधिकृतालम्भनात्प्राक्कर्म कर्तव्यमित्येवमर्थम्। सर्पिर्मधुनी हिरण्येन निकापयति ते हिरण्यसंसृष्टे हिरण्येन प्राशयेत् मातुरुपस्थ आसीनं प्रते ददामीति मन्त्रेण इति॥ अधिकृतालम्भनात्प्राक्कर्तव्यमित्याहाचार्यः—'कैवर्तादिस्त्रियो मुक्त्वा पितुरन्यैस्तु तच्छिशुः। न स्प्रष्टव्यः पुरा तावज्जातकृत्यादिति स्थितिः' इति। अत्र भगवान्—'जातं कुमारं जननादन्यसंस्पर्शनात्पुरा। स्नापयित्वाङ्कमारोप्य प्राङ्मुखं चोपवेश्य तम्॥ मानतो विषमे कृत्वा संसृज्य मधुसर्पिषी।—सर्पिर्मधुनी मानतो विषमतया मिश्रीकृत्य प्राशयेदिति व्याख्येयम्। तत्साम्ये विषभावप्रसङ्गात्॥ सिक्त्वा शिलायां तत्रैव सुवर्णं बहुशः कषन्। मधुसर्पिःसुवर्णानि मिश्रीकृत्वाथ धौलिकीम्॥ प्रतेददामि मधुनो घृतस्येत्यादिकामृचम्। उक्त्वा ततः सुवर्णेन तेनैव प्राशयेच्छिशुम्' इति। कारिका—'हिरण्यं दक्षिणे कर्णे निधायैतामृचं जपेत्। मेधां त इति सव्ये च निधायैतामृचं जपेत्' इति। इदमत्र गृह्यम्—'कर्णयोरुपरि निधाय मेधाजननं जपति—मेधां ते देवः सविता मेधां देवी सरस्वती। मेधां ते अश्विनौ देवावाधत्तां पुष्करस्रजौ' इति। अस्यार्थः—अस्य कर्णयोर्हिरण्यं निधाय मेधाजननं जपति मेधां त इति। उपग्रहणं तस्य मुखसमीपे आत्मनो

मुखं निधाय जपार्थम् । मेधाजननमित्यस्य मन्त्रस्य व्याख्या चैवम् । सकृन्मन्त्रः पर्यायेणोपनिधानमित्येके । अन्ये मन्त्रावृत्तिमिच्छन्ति इति । अत्र भगवान्—'ततः प्रक्षाल्य तत्स्वर्णं शिशोः कर्णे तु दक्षिणे । पूर्वं निधाय सव्येऽपि निधाय समनन्तरम् ॥ आत्मनो मुखमभ्यस्य नीत्वा मुखसमीपतः । मेधायुर्जन्महेतुत्वान्मेधाजननसंज्ञितम् ॥ मेधां ते देव इत्याद्यं खिलमन्त्रं सकृज्जपेत्' इति । कारिका—'मन्त्रत्रयेणास्य युगपदंसावभिमृशेदथ । प्रथमाश्माभवेतीन्द्रश्रेष्ठानीत्यपरा तथा ॥ तृतीयाऽस्मे प्रयन्धीति कुमार्याः स्यादमन्त्रकम्' इति । इदमत्र गृह्यम्—'अंसावभिमृशत्यश्मा भव परशुर्भव हिरण्यमस्तृतं भव । वेदो वै पुत्रनामासि स जीव शरदः शतमितीन्द्रश्रेष्ठानि द्रविणानि धेह्यस्मे प्रयन्धि मघवन्नृजीषिन्निति च' इति । अस्यार्थः—'स्तनयाहोर्मध्यप्रदेशोंऽसः । अत्र बहवो विप्रतिपन्नाः । तत्रैके सकृन्मन्त्रेणांसाभिमर्शनमिच्छन्ति द्वार्याभिमर्शनवत् । ननु युक्तस्तत्र सकृन्मन्त्रः द्विवचनयुक्तत्वान्मन्त्रस्य । इह त्वेकवचनयुक्तः अत आवृत्त्या भाव्यम् । नैतदेवम् । नात्रांसावुच्येते किंतर्हि कुमारः स चैकस्तस्मान्नावृत्तिरिति । अन्ये मन्त्रविभागमिच्छन्ति । अश्माभवेत्यनेन दक्षिणमंसमभिमृशेत् । इन्द्रश्रेष्ठानि अस्मे प्रयन्धीत्येताभ्यां सव्यमिति । कथं पुनर्मन्त्रविभागो ज्ञातः । मध्ये इतिकरणात् । नहि कश्चिन्मन्त्रमध्ये इतिकरणं पठन्ति । अपरे त्वाहुः—सकृदेव त्रयो मन्त्रा वक्तव्याः नच मन्त्रविभागः पृथगभिमर्शश्च । द्वार्याभिमर्शने त्वशक्यत्वात्पृथगभिमर्शः । इह तु शक्यते 'युगपदंसौ स्प्रष्टुम् । यत्पुनरुक्तमितिकरणादिति, तत्र ब्रूमः—अन्यत्रापि मन्त्रमध्ये इतिकारः पठ्यते, यथा 'आसीद सदनं स्वमासीद सदनं स्वमिति माहिंसीर्देव प्रेरित' इति । अयमेव नः पक्षोऽभिप्रेतः । यस्य त्रयाणामन्यतमः पक्षोऽभिप्रेतस्तस्यापि कुर्वतो न दोषः

सर्वेषां गमकत्वादिति भाष्यकारः । तत्रैके मन्त्रविभागः श्रेयानित्याहुः इतिकारात् । नन्वन्यत्रापि विद्यत इत्युक्तं तत्रापि विभाग एव । किमुत्पतमीति बर्हिषि निधाय माहिंसीरित्यभिमन्त्रयेत् । कुत एतत् । आनन्तर्ययोगात् । नन्विडायां दृश्यते 'हविर्जुषन्तामिति तामिन्नुपहूत' इति । अनर्थज्ञो भगवान् । इतिकारो मन्त्रस्य मध्ये वृथा न पठ्यत इति वयं ब्रूमः । इडायां तु मन्त्रैकदेशे इतिकारः युष्मत्पथे त्वमिमन्त्रणे इतिकारो वृथैवेति, तदमत् । भगवता भाष्यकारेण यः पक्षः परिगृहीतः स एव सम्यक् । अन्यत्रापि मन्त्रमध्ये इतिकारदर्शनात् । 'नमो यत्र निषीदसीत्यमुं माहिंसीरमुं माहिंसीरिति चे'ति । तेन त्रीन्मन्त्रानधीत्य युगपदेवोभावंसौ संस्पृशेदिति सिद्धम् । भगवानपि—'मन्त्रमश्माभवेत्याद्यमुक्त्वांसौ युगपच्छिशोः । स्पृष्ट्वा तथेन्द्रश्रेष्ठानि द्रविणान्यादिकामृचम् ॥ अस्मे प्रयन्धीत्याद्यां च जपित्वांसौ पुनः स्पृशेत् । इदं कर्म कुमार्याश्च सर्वं कार्यममन्त्रकम्' इति ॥ अत्र मधुसर्पिःसुवर्णपात्रादेः प्रयोजनमाहाचार्यः—'गर्भाम्बुपानदोषाणामपनुत्त्यै शिशुं पिता । प्राशयेन्मधुना सार्धं साज्यं हेमरसं शुभम् ॥ स्वर्णेन कर्णयोर्युग्मे स्पर्शनादेव तच्छिशोः । मन्त्रश्रवणयोग्यत्वं स्याच्च दुर्वासतः शुचिः ॥ मन्त्रालम्भनमात्रेण शुचिः स्यान्मलनाशनः(तः) । रक्षायुषोर्विवृद्ध्यर्थमाजिघ्रति पिता सुतम् ॥ तावन्नाम सरेत्तस्य स्तनं माताथ पाययेत् । प्राग्जातकर्मणो यस्मात्स्तनपानं न शस्यते' इति । इदमपि कर्म होमपूर्वकं कुर्यात् । तथा चाभिमुखप्रकरणे वृत्तिकृता नारायणेनोक्तत्वात् । अत्र गृह्यम्—'अग्निरिन्द्रः प्रजापतिर्विश्वेदेवा ब्रह्मेत्यनादेशे' इति । यत्र होमस्यानादेशः कर्मणश्चानादेशस्तत्रैता देवता होतव्याः जातकर्मादौ । तर्हि तथा रोहणेपि स्यात् । एवंतर्ह्यन्यथा व्याख्यास्यामः—यत्र होमश्चोद्यते न मन्त्रश्चोद्यते चौल-

कर्मादौ नैके कांचनेति पक्षे तत्रैताभ्यो देवताभ्यो जुहोति यत्रानादेश इतीयमेव व्याख्या साध्वी। मन्त्रप्रकरणत्वात्। तेन जातकर्मादौ न होमोऽस्ति। अन्ये तु पूर्वोक्तदोषपरिहारेण वर्णयन्ति। यत्र परशास्त्रे होमश्चोद्यते स्वशास्त्रे तु कर्ममात्रं तत्रैता देवता भवन्तीति। क। जातकर्मादाविति॥ अत्र गृह्यपरिशिष्टम्—'अथ जातकर्म कुमारे जाते पुरान्यैरालम्भादग्निरिन्द्रः प्रजापति-र्विश्वेदेवा ब्रह्मेत्यनादेशदेवताभ्यो हुत्वा प्राक्स्विष्टकृतः सर्पिर्मधुप्राशनादि कारयेत्' इति॥ अत्र स्मृतिरूपेणाहाचार्यः—'अना-देशाहुतीर्हुत्वा जातकर्म प्रशस्यते। कौषीतकानां चान्येषां विना वा तत्प्रवर्तते' इति। भगवानपि—'केचित्सहोमकमिदं कर्मे-च्छन्ति मनीषिणः। तत्राकृत्वा पुरस्तन्त्रमनादेशाहुतीस्ततः॥ हुत्वाग्निरिन्द्र इत्यादेर्दैवतापञ्चकस्य च। पश्चात्कर्मेदमाचर्य ततः स्विष्टकृदादिकम्॥ उपरिष्टात्तनं तन्त्रं कुर्वीरंश्च यथाक्रमम्' इति॥ ❀॥ अत्राग्निनिर्णय उच्यते। तत्र संग्रहकारः—'जात-कर्मादिसिद्ध्यर्थं यो व्याहृतिभिराहृतः। सोऽग्निः पौरुष इत्युक्तः शालाग्निर्लौकिकस्तथा' इति। अत्र परिस्तरणं नित्यम्। 'अना-दिष्टाज्यहोमेषु तत्र नित्या परिस्तृतिः' इति परिभाषावचनात्॥ ❀॥ अथ पुत्रजननकाले दानविशेष उच्यते। वराहपुराणे—'यावत्कालं सुते जाते न नाडी छिद्यते नृप। चन्द्रसूर्योपरागेण तमाहुः समयं समम्' इति॥ हारीतेनाप्युक्तम्—'जाते कुमारे पितॄणामामोदात्पुण्यं तदहस्तस्मात्तिलपूर्णानि पात्राणि सहिरण्यानि ब्राह्मणमाहूय पितृभ्यः स्वधाकुर्यात्प्रजापतये चे'ति॥ हेमाद्रौ शङ्खः—'पिता पितामहश्चैव तथैव प्रपितामहः। भूयस्तत्रैव जायन्ते तदहर्वेदयन्ति च॥ तस्मात्स दिवसः पुण्यः पितॄणां प्रीति-वर्धनः' इति॥ ब्रह्मपुराणे—देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम्। आयान्ति तस्मात्तदहः पुण्यं पूज्यं च सर्वदा॥ तत्र

दद्यात्सुवर्णं च भूमिं गां तुरगं रथम् । छत्रं छागं च माल्यं च शयनं चासनं गृहम्' ॥ तत्र प्रतिग्रहीतारं प्रत्याह व्यासः—'जाते कुमारे तदहः कामं कुर्यात्प्रतिग्रहम् । हिरण्यधान्यगोवस्त्रतिलाश्च मधुसर्पिषाम्' इति ॥ वृद्धयाज्ञवल्क्यः—'कुमारजन्मदिवसे विप्रैः कार्यः प्रतिग्रहः । हिरण्यभूगवाश्वादिधान्यशय्यासनादिषु ॥ तत्र सर्वं प्रतिग्राह्यं पक्वान्नं तु विवर्जयेत् । यो भक्षयति तन्मोहाद्द्विजश्चान्द्रायणं चरेत् ॥ सूतकेऽपि सकुल्यान्ने न दोषो मनुरब्रवीत्' इति ॥ एतदावश्यकमित्याहाश्वलायनाचार्यः—'पत्न्यां मृते वा पतिते संन्यस्ते वा विदेशगे । तद्गोत्रजेन श्रेष्ठेन कार्याः पुंसवनादयः ॥ दीक्षान्ते दीक्षितो भर्ता जातकर्मादिकं चरेत् । पुंसवनादीनि कर्माणि त्रीणि श्रेष्ठेन कारयेत् ॥ अकृतेऽन्यकृते कर्मण्यापत्सु स्वास्थ्यमागतः । शनैर्ब्राह्मणवाक्यैश्च पुत्रकर्मोत्तरं चरेत् ॥ रोगादितस्तु तत्काले स्पृशन्नन्येन कारयेत् । यावत्स्वास्थ्यं भवेत्तावन्नाचरेज्जातकक्रियाम्' इति । श्रीधरीये वसिष्ठः—'दत्त्वा गोभूहिरण्यादि ततो लग्नं निरीक्षयेत् । लग्नमेव प्रशंसन्ति ज्योतिःशास्त्रविदो जनाः ॥ अरिक्तपाणिर्दैवज्ञाच्छृणुयात्पुत्रजन्मनि' इति । शृणुयात् जन्मकालीनजातकफलमित्यर्थः ॥

जातकफलानि । लग्नस्य पञ्चाङ्गप्रधानत्वात्तावत्पञ्चाङ्गफलमुच्यते । तत्र जन्मतिथिफलम्—'कृताग्निहोत्रमासीनं च्यवनं मुनिपुंगवम् । विनयेनोपसंगम्य कश्यपः परिपृच्छति ॥ कस्यां तिथौ नरो जातः कथं विन्द्याच्छुभाशुभम् । वारनक्षत्रयोगे च तथैव करणेऽपि च' ॥ च्यवनः—'साधु साधु महातेजो गुणवन्परिपृच्छसि । तत्सर्वं कथयिष्यामि पञ्चाङ्गफलजातकम् ॥ यत्सुरैरपि

पाठा०—१ यवनः ।

न ज्ञातं मुनिभिश्च विशेषतः । तव स्नेहेन हे वत्स कथयामि शृणुष्व हि ॥ जातो नरः प्रतिपदि त्रिदिनं च त्रिमासकम् । तेजते च महातेजाः स वर्षाशीतिमायुषः ॥ चपलोऽप्यतिनिष्ठूरोऽर्ध्यग्रिवाक्प्राणजानुकः । जलप्रमाणनिपुणो बहुभाषणतत्परः १ द्वितीयायां नरो जातः सदा सत्यव्रतो भवेत् । जनानन्दकरस्त्यागी स्वकर्मनिरतः सदा २ तृतीयायां नरो जातस्त्रीलोलश्च कृती चलः । व्रतोपवासनिरतो मूर्खो वादी जटान्वितः ३ चतुर्थ्यां तु नरो जातो लुब्धः पिशुनवाग्भवेत् । चण्डः साहसिकः क्रूरश्चलचित्तः शठान्वितः ४ पञ्चम्यां तु नरो जातो दीर्घायुश्च तथा भवेत् । महामतिः स्थिरः शूरः सत्यवादी जितेन्द्रियः ५ षष्ठ्यां चैव महातेजा व्रणाङ्कितशिरस्तनुः । स्त्रीलोलुपोऽतिसुभगो विद्याकीर्तिपरो भवेत् ६ सप्तम्यां तु नरो जातो दाक्षिण्यगुणवान्भवेत् । गुरुदेवपरश्चैव सदाचारो दृढव्रतः ७ अष्टम्यां तु नरो जातः स्वदारनिरतो भवेत् । बहुभाषोऽतिचपलश्चलचित्तोऽतिनिष्ठुरः ८ नवम्यां तु नरो जातः स्त्रीहिनः शाश्वतो भवेत् । शुचिरत्यन्तसुभगश्चलचित्तो महामतिः ९ जातो नरो दशम्यां तु लोकव्यापारकोविदः । कल्पशास्त्रेषु कुशलः सत्यवादी दृढव्रतः १० एकादश्यां नरो जातो दुराचारोऽतिदुःसहः । सुभगो रतिलुब्धश्च वस्त्रभोजनतत्परः ११ द्वादश्यां तु नरो जातो ज्ञानवान्स्त्रीजितः सुधीः । व्रतोपवासनिरतो ध्वशत्रुर्मतिमान्भवेत् १२ त्रयोदश्यां नरो जातः सिद्धिदः सर्वकर्मसु । बुद्धिमान्व्याधिनिर्मुक्तः सदा बन्धुरतो भवेत् १३ चतुर्दश्यां नरो जातः स्तुतोऽत्यन्तसुदुःसहः । परदाररतः क्रूरश्चलचित्तः सदा भवेत् १४ पूर्णिमायां नरो जातः पूर्णाङ्गः सुन्दरो भवेत् । सदा हृष्टमनाः शान्तः सुभगोऽति-

पाठा०—१ सर्वंशाशीतिरायुषः । २ ह्रतिप्रणतिजानुनि ।

गुणान्वितः १५ अमायां तु नरो जात इन्द्रियार्थरतः सुखी । चपलो बलहीनश्च बहुभीतिसमाकुलः १६' ॥ इति तिथिफलानि ॥ ❀ ॥ अथ जन्मवारफलानि—'अल्पकुञ्चितमूर्तिश्च मूर्खः पट्टमतिस्तथा । क्षात्रवृत्तिः सुरूपश्च मधुपिङ्गलकालिमा ॥ स्थिरः प्रचण्डः शूरश्च रक्तः श्यामतनुः शुचिः । पित्ताधिकोऽतिचतुरो जायते सूर्यवासरे १ सौम्यः कान्तोऽतिमधुरो गदाङ्गोऽतिकृशस्तनौ । सूक्ष्मकुञ्चितकेशश्च प्रज्ञावान्गुणवान्भवेत् ॥ अकालपलितो जातः स्थिरालस्यः सुबुद्धिमान् । हर्षाधिकः प्रियवचा वृद्धस्त्रीरतिवल्लभः । सोमवारे नरो जातः सर्वदा क्षयवृद्धिमान् २ ह्रस्वकायोऽतिगौरश्च पृथुवक्षाः सुबुद्धिमान् । शूरः पट्टमतिश्चैव क्रोधनः स्फुटवाक्क्षमी । क्षात्रवृत्तिसमायुक्तो जायते भौमवासरे ३ श्यामवर्णः सुगौरश्च कान्तिमान्स्फुटवाक्सुधीः । त्रिदोषात्मकभूयिष्ठो जायते सौम्यवासरे ४ निपुणो विश्रुतिः शूली पादौ चैव तथा करौ । कृशावनतिचापल्यो जायते गुरुवासरे ५ शुक्लाम्बरधरः शान्तः कृष्णकुञ्चितमूर्धजः । प्रच्छन्नकार्यः सुमतिर्जातः शुक्रस्य वासरे ६ दीनः कृशतनुः स्तब्धो दीर्घालस्यो दुरासदः । वातात्मको नीचवुद्धिर्मूर्खः स्थूलनखस्त्वचः ॥ रजोदुर्बलहेतुश्च मलिनश्चाचलश्चलः । रौद्रः क्रोधपरो नित्यं जातश्च शनिवासरे ७ ॥ इति वारफलानि ॥ ❀ ॥ अथ जन्मनक्षत्रफलानि—'अथातः संप्रवक्ष्यामि नक्षत्राणां फलं शृणु । साधु काश्यप तत्त्वेन यथोवाच प्रजापतिः ॥ अश्विन्यृक्षे च जातस्तु आतुरो निपुरो भवेत् । विधिज्ञः कारणज्ञश्च कलहे विजयी सुधीः १ भरण्यृक्षे तु संजातो नरो देहव्रणाङ्कितः । सुखहीनो दरिद्रश्च मातृतातौ परित्यजेत् २ कृत्तिकायां नरो जातः स्त्रीबन्धुरहितस्ततः । सुताढ्यः सुभगश्चैव सुखसौभाग्यवर्धनः ३ रोहिण्यां तु नरो जातो देवब्राह्मणतत्परः । छन्दोलंकारतत्त्वज्ञः स्वामिभक्तो दृढव्रतः ४ सत्यवान्शुचिर्धे-

मंत्रस्त्यागभोगसमन्वितः । तेजस्वी चपलो योगी जातः स्यान्मृगशीर्षके ५ मृदुः स्थिरमतिः शूरस्त्यागोपार्जितवित्तवान् । रोगी शोकभयः कोपी आर्द्रायां जनने भवेत् ६ प्रजावान्गुणवान्संपत्संधिविग्रहकारकः । अतीव स्फुटवाग्गुप्तः पुनर्वस्वां नरो भवेत् ७ धनवान्समुदाराढ्यो दृढचित्तः सुलोचनः । स्त्रीषु वल्लभरूपाढ्यो भवेत्पुष्ये तु जन्मनि ८ क्रूरः साहसिकः क्रुद्धो मर्त्याङ्गो वानरस्थलः । तथा कौटिल्यकर्मा च आश्लेषायां नरो भवेत् ९ गम्भीरोऽतिरतः सौख्ये गम्भीरोदारसत्ववान् । प्राज्ञः शुचिस्तथा त्यागी जनने वै मघासु च १० कन्दर्पनत्स्त्रीषु रतः सुभगः सुदृढः स्थिरः । दृग्गोचरे महाभीरुः फल्गुन्यां जनने नरः ११ धनवान्शास्त्रतत्त्वज्ञः क्लीबो मानी सुलोचनः । स्थिरः शास्त्रे धने लुब्धो जनने चोत्तरासु च १२ स्थिरकायोऽनृतवचाः सुशीलश्च सदा नरः । गन्धर्ववन्महावीरो हस्तर्क्षे जनने नरः १३ नीचोऽतिभीरुः क्षुधवांश्चित्ते बहुसमाकुलः । दुर्बलो रतिवैकल्यो जनने चित्रसक्षके १४ नीतिज्ञो वाक्यनिरतो हास्यशास्त्रविशारदः । शान्तचित्तः प्रसन्नश्च स्वात्यां वै जनने नरः १५ मलिनश्च नरैर्युक्तः परदाररतः शठः । विग्रही बन्धुरहितो विशाखायां तु जन्मनि १६ युवतीरतिसक्तश्च प्रगल्भोऽतिसुवर्णवान् । अलसो दीनचित्तश्च जनने चानुराधके १७ व्यायामी रणशूरश्च नित्यं ब्राह्मणतत्परः । विख्यातोऽतिगुणाढ्यश्च ज्येष्ठे ज्येष्ठत्वमाप्नुयात् १८ मृदुवागतिशूरश्च चंलचित्तो गुणप्रियः । हिंस्रो विश्वासहन्ता च मूलर्क्षे जननान्नरः १९ चौरश्चचिर्दृष्टादम्भः क्रोधनो द्रव्यवान्गुणी । असत्यवादी दक्षश्च पूर्वापाढे प्रजन्मनः २० ब्रह्मांशी कूटभेदश्च व्यायामी च नरप्रियः । सुखितोऽतिचलश्चैव उत्तरापाढजन्मनः २१ संगीतनृत्यकुशलः सत्यवादी स्थिराशयः । शास्त्रपुण्यकथाश्रावी श्रवणे जन-

नान्नरः २२ दुर्जयः शोकरहितो बह्वाशी च महाशठः । वृद्धातुरो मदा त्राता धनिष्ठाजनने नरः २३ प्रजावान्क्रोधनो वीरः प्रचण्डोऽतिप्रगल्भवान् । स्वदेहपालनरतो जनने शततारके २४ गुरुदैवतभक्तश्च सदाचारो महामतिः । विवादरहितो मानी पूर्वाभाद्रपदे नरः २५ क्षयवृद्धिधनो गेहे नीतिमान्बहुभिर्वृतः । पित्तातुरः सदालस्य उत्तराभाद्रसंभवः २६ निष्ठुरोऽतिदुराचारो रूपवान्क्रोधवाक्स्वरः । स्वतन्त्रः सर्वकार्येषु पौष्णभे जननान्नरः २७' ॥ इति नक्षत्रफलानि ॥ ❀ ॥ अथ जन्मयोगफलानि—'अथातः संप्रवक्ष्यामि योगानां चैव जातकम् । शृणु कश्यप तत्त्वेन नराणां च शुभाशुभम् ॥ कान्तो बन्धुजनस्त्रीषु गृहदाररतः खलः । स्वतन्त्रः सर्वकार्येषु विष्कम्भे जनने नरः १ मार्गवृत्तिः प्रियावाचः सुभगोऽतिगुणान्वितः । प्रगल्भो मनसा तुष्टः सुस्थिरः प्रीतिजन्मवान् २ नीतिज्ञः स्वस्थचित्तश्च बुधरक्षणतत्परः । आयुष्मके नरो जात आयुष्मान् जायते ध्रुवम् ३ वाक्यश्रुतो धनी मानी निपुणः प्रियवाक्सुधीः । गन्धप्रियोऽतिसुभगः सौभाग्ये जननान्नरः ४ मतिमांश्च गुणाढ्यश्च शौचाचारयुतः सुखी । शोभने च नरो जातः सर्वकार्येषु निर्मलः ५ परापवादी शूरश्च सत्यहीनः सदालसः । परदाररतः कामी अतिगण्डप्रजन्मनः ६ सुशीलो गुणवान्भोगी बन्धुपुत्रकलत्रवान् । धर्मख्यातिरतो योगी सुकर्मणि नरो भवेत् ७ सुभगो वाक्पतिः श्रीमान्सौम्यः कामी च पण्डितः । परायत्तो धनार्थी च धृतियोगे प्रजायते ८ शूलयोगे भवेत्कोपी तेजस्वी कलहप्रियः । चतुरश्चैव धनवान्बलवान्प्रभुसेवकः ९ वाचालको महासत्त्वो दाम्भिको मदगर्वितः । गोप्ता वाचालको गण्डे नरो जातः समाहितः १० महामतिः स्थिरः शूरः सत्यवादी जितेन्द्रियः । वृद्धियोगे नरो जातो वृद्धिकामी सदा भवेत् ११ ध्रुवकार्यः सदा कर्ता

अधुनैश्च विवर्जितः । ध्रुवयोगे नरो जातो ध्रुववाक्यो महामतिः १२ मूर्खो मलिनचित्तश्च मर्मोद्घाटनकौतुकः । निष्ठुरोऽतिमहायोगी व्याघाते च प्रजन्मनः १३ कुलटः सौख्यसंपन्नो दृढवाक्यो महामतिः । भूषणोन्मानसो धृष्टो हर्षणे जननाम्बरः १४ सुशुद्धः सत्त्वसंपन्नो बुद्धिमेधागुणान्वितः । तेजस्वी च स्थिरमतिर्वज्रयोगे प्रजन्मनः १५ भोक्तारो धनवन्तश्च जयिनः सत्यवाक्स्थिराः । सुसिद्धाः सर्वकार्येषु सिद्धयोगे प्रजन्मनः १६ अस्थिरः सत्वरहितो मित्रवञ्चनतत्परः । असत्यवादी मूर्खश्च जनने व्यतिपातके १७ वचसामधिपः शूरो मित्रवांश्च सुबुद्धिमान् । आढ्यः सत्ययुतस्त्यागी नरो जातो वरीयके १८ दीनवृत्तिर्दुराचारो लुब्धः साहसिकश्चलः । मलिनो मदयुक्तश्च परिघे च प्रजन्मनः १९ गौरः शुभाङ्गो नियतः शान्तचित्तः प्रगल्भवाक् । दारपुत्रधनैर्युक्तः शिवयोगे प्रजन्मनः २० प्रसन्नो मतिमान्वीरः सर्वव्यापारकोविदः । सुचरित्रो नीतिवादी सिद्धयोगे प्रजन्मनः २१ विविधव्ययशीलश्च स्वामिभक्तो महामतिः । नृप्रियो भिन्नदारश्च सुसाध्यः साध्यजन्मनि २२ सुभगो धार्मिकः शूरः शान्तात्मा च सुनिर्मलः । प्रणतप्रियकारी च शुभयोगे प्रजन्मनः २३ सत्यवाक्सुमतिः कान्तः ख्यातिमान्नीतिपारगः । कलाशास्त्रेषु कुशलः शुक्लयोगे प्रजन्मनः २४ प्रियवाक्यो महासत्वो ब्रह्मज्ञो ब्राह्मणप्रियः । प्रगल्भो निर्मलमतिर्ब्रह्मयोगे प्रजन्मनः २५ द्रव्यवान्सुमहात्यागी राजसैश्च गुणैर्युतः । भोगैश्वर्ययुतः कामी ऐन्द्रयोगे प्रजन्मनः २६ लुब्धः पिशुनचित्तश्च बहुभाषणतत्परः । अध्रुवश्चलचित्तश्च वैधृतौ च प्रजन्मनः २७'॥ इति योगफलानि ॥ ❀ ॥ अथ जन्मकरणफलानि—'मत्तस्तीव्रमदो जारः सुरवान्स्थानवर्जितः । करणे च बवे जातः सैनापत्यबलेश्वरः १ सुधीरः सुभगः स्रग्वी बलशीलरतः सुखी । बालवे यो नरो जातो

वालकर्मरतः सदा २ प्राग्जन्मक्रोधधीरश्च कौतुकानन्दवर्धनः । पापकर्मरतः शोकी कौलवे जननान्नरः ३ सात्विकः सत्यसंपन्नः स्थिरश्चण्डः प्रतापवान् । तपसा मानसे तुष्टो जायते तैतिले नरः ४ चित्रविन्मतिमान्दक्षो दुर्बलो बहुभाषणः । चपलोग्रतरो जन्तुर्जातो वै गरजे नरः ५ नानापुण्यविशेषज्ञो वणिकर्मोपजीवकः । वणिजाख्ये नरो जातो वणिग्वृत्तिः सदा भवेत् ६ शूरः साहसिकश्चण्डः पापकर्मरतश्चलः । प्रच्छन्नः सर्वकार्येषु विष्टाख्ये च प्रजन्मनः ७ सदा योगरतः शान्तः सदाचारो महामतिः । शकुनाख्ये नरो जातः सर्वदेवरतः सुखी ८ त्रिकालज्ञानकुशलः क्षीणात्मा क्षणदुःखकृत् । सर्वशास्त्रसमारूढो बहुभाषी बलान्वितः ९ प्राज्ञो वाग्मी च दीर्घायुश्चतुष्पादे च जायते । सर्वकालेषु विख्यातो धीमान्कोपरतः सदा । छन्नपापः खलश्च करणे नागसंज्ञिते १० मलिनो मदयुक्तश्च पिशुनश्चातिनिष्ठुरः ॥ विग्रही बन्धुरहितः किंस्तुघ्ने च प्रजन्मनः ११' इति करणफलानि ॥ इति जन्मतिथिवारर्क्षयोगकरणफलानि ॥

अथ जन्मराशिफलानि—'कृशाङ्गः शीघ्रगः कामी क्रुद्धः शूरोऽङ्गनाप्रियः । चेष्टाभिज्ञः सुखी कान्तो मेषे जातो भवेन्नरः १ क्षमी क्लेशसहः शूरः श्लेष्मलः सुभगः सुधीः । प्रियकन्यस्तथोत्साही जातश्चन्द्रे वृषे स्थिते २ सुव्रतः सुभगो दक्षो गीतनृत्यरतः सुधीः । शास्त्रज्ञो मृदुभाषी स्याच्चन्द्रे मिथुनराशिगे ३ दैवज्ञः प्रचुराचारस्तेजोज्ञानरतः सुधीः । स्त्रीनिर्जितो व्ययी कामी कर्कटे जायते नरः ४ पिङ्गलाक्षो विशालाक्षः क्रोधी शूरो रणप्रियः । आत्मजश्च रतिद्वेषी गर्वितः सिंहजो नरः ५ सत्यवांस्तु कलाभ्यासी धर्मिष्ठः शास्त्रपारगः । अल्पकन्यस्तथा वाग्मी कन्यायां परदेशगः ६ कृशाङ्गश्च धनी वाग्मी कृपणः क्रयविक्रयी ।

भक्तो देवद्विजातीनां मेधावी स्त्रीजितो घटे ७ वृत्तजङ्घः सुवेषश्च राजपूज्यः प्रयत्नवान् । क्रूरात्मा छन्नपापश्च विक्रमी वृश्चिकोदये ८ स्थूलदन्ताधरग्रीवः कुब्जाङ्गः कुनखी सुधीः । काव्यकर्ता धनुर्जातः प्रगल्भो धार्मिकः शुचिः ९ विस्तीर्णहृत्कटीकामः शीतालुः सुभगोऽलसः । घूर्णी सत्वाधिको मानी निजदाररतो मृगे १० दीर्घग्रीवो निरालस्यो दीर्घाङ्गो रागसंयुतः । परदाररतः पापी ग्रहष्टश्च घटोद्भवः ११ तुङ्गनासो बृहच्छीर्षश्चातुर्बुद्धिः स्त्रियाः प्रियः । पण्डितो धनभोगी स्वाज्ञनाश्रयरतो झषे १२' इति जन्मराशिफलानि ॥ ❀ ॥ अथ जन्मलग्नफलानि—'मेषलग्नोदये जातश्चण्डो मानी सुदुःसहः । क्रोधी स्वजनहन्ता च विक्रमी परवत्सलः १ वृषलग्नोदये जातो धर्मिष्ठो गुरुवत्सलः । गुणी कान्तो धनी लुब्धः शूरः सर्वजनप्रियः २ मिथुनोदयसंजातो ज्ञानी सज्जनवत्सलः । योगी भोगी तथा त्यागी दीर्घसूत्रो विमर्शकः ३ कर्कलग्नोदये जातो धर्मिष्ठो गुरुवत्सलः । मृष्टान्नपानसंभोगी भाग्यवान्स्वजनप्रियः ४ सिंहलग्नोदये जातो भोगी तत्त्वविमर्शकः । स्वल्पोदरोऽल्पपुत्रश्च सत्वाढ्यो रणविक्रमः ५ कन्यालग्नोदये जातो नानाशास्त्रविशारदः । सौभाग्यगुणसंयुक्तः सुन्दरो रतिवत्सलः ६ तुलालग्नोदये जातः सुधीः सत्कर्मजीविकः । विद्वान्सर्वकलाभिज्ञो द्रव्याढ्यो बलवर्जितः ७ अलिलग्नोदये जातः शौर्यवान्दुष्टमानसः । विज्ञानज्ञानवेत्ता च सुद्वेषी विग्रही सुधीः ८ धनुर्लग्नोदये जातो मतिमान्धनवान्सुधीः । कलाविद्याप्रधानो हि प्राज्ञो नृत्येषु कोविदः ९ मृगलग्नोदये जातो नीचकर्मा बहुप्रजः । लुब्धोऽलसः शठो दीनः स्वकार्येषु कृतोद्यमः १० कुम्भलग्नोदये जातश्चलवित्तः सुहृत्प्रियः । परदाररतो

---

पाठा०—१ गुरुभक्तप्रियवद ।

नित्यं मृदुकार्यो महामतिः ११ मीनलग्नोदये जातः प्रचुरो रत्नकाञ्चनैः । अल्पकामोऽतिदक्षश्च दीर्घकालविचिन्तकः १२' इति जन्मलग्नफलानि ॥ ❀ ॥ अथ जन्मनवांशफलानि—'दीनः पापी विरोधी च दुष्टश्चौरगुणान्वितः । पिशुनो व्यसनासक्तश्चौरश्च प्रथमांशके १ धीरो भक्तः सदा हृष्टस्त्यागवान्गुणवान्खलः । रतिप्रियः स्त्रीषु रतो जायते वृषभांशके २ नानाशास्त्रकलाभिज्ञः प्रवक्ता गुणवत्सलः । धर्मिष्ठः सत्यवाग्धीरस्तृतीयांशे नरो भवेत् ३ प्रच्छन्नकार्यः सुमतिर्नीतिमान्गुणसंयुतः । गृहदाररतो नित्यं कर्कांशे जायते नरः ४ भोगसौभाग्यसंपन्नः ख्यातिमान्सुन्दरः सुधीः । चिरायुः पुत्रवांश्चैव सिंहांशे जायते नरः ५ बहुमायः कुरूपश्च स्त्रीजितो विकलेन्द्रियः । प्रमादी पिशुनो लुब्धः कन्यांशे जायते नरः ६ शूरः कान्तो महोत्साही मतिमान्सत्यसंयुतः । प्रवक्ता दृढवैरश्च तुलांशे जायते नरः ७ क्रूरः क्रुद्धः क्लेशसहः फलकामी बहुप्रजः । दरिद्रो मत्सरग्रस्तो वृश्चिकांशे प्रजायते ८ क्षत्रवृत्तिः सुचारित्रः साहसी चण्डविक्रमः । धर्मकर्मरतः श्रीमांश्चापांशे जायते नरः ९ रोगवानटनो दक्षो भोग्युदारगुणान्वितः । अपकारयुतो नित्यं मकरांशे प्रजायते १० निःस्वः पापरतः क्रोधी कलाशास्त्रविचक्षणः । शठचित्तो गुणाढ्यश्च कुम्भांशे जायते नरः ११ प्रवालमौक्तिकादीनां मणीनां चार्जनप्रियः । मानी सर्वजनैः पूज्यो मीनांशे जायते नरः १२ इत्यंशफलानि ॥ इति जन्मराशिजन्मलग्नजन्मनवांशफलानि ॥

अथ तिथिगण्डान्त उच्यते । नवनीतारिष्टे—'पूर्णातिथीनां तिसृणां तथान्ते' इति । पञ्चमीदशमीपञ्चदश्यः पूर्णाः तासामन्तिमे द्वे घटिके गण्डान्तः । तथाच वसिष्ठः—'पञ्चम्यां पञ्चदश्यां च दशम्यामन्तिमे घटी । द्वे द्वे च घटिकान्त्यादौ

गण्डान्तमिति कथ्यते' ॥ ❀ ॥ अथ पित्रोरेकनक्षत्रदोषः—'यद्येकताराप्रभवास्तु कन्याः पुत्राश्च ते स्युः पितुरन्तकाराः' इति—पित्रोरेकनक्षत्रजाताः कन्याः पुत्राश्च पित्रोर्मरणकरा भवन्ति ॥ तथाह देवकीर्तिः—'यद्येकस्मिन्धिष्ण्ये जायन्ते दुहितरोऽथवा पुत्राः । पितुरन्तकरा ह्येते यद्यपरे प्रीतिरतुला स्यात्' इति ॥ भृगुस्त्वाह—'पितृजन्मनि ये जातास्ते हन्युश्च तथा पितॄन् । मातृजन्मनि या जाता मातॄणां घातिकाः स्त्रियः' इति ॥ वसिष्ठस्तु—'पित्रोस्तु जन्मकर्मर्क्षजातस्तु पितृमातृहृत् । जन्मर्क्षान्ते च तल्लग्ने जाताः गर्भो मृतिप्रदाः ॥ पितुः शुभग्रहैर्दृष्टो मासे वार्षेऽथवा पुनः' इति ॥ होरासारेतु—'पितृजन्माष्टमे जातस्तदीये लग्नकेऽपि वा । तत्रैव पितृकार्याणि पितृश्रेष्ठो भवेत्सुतः' इति ॥ ग्रहकाङ्क्षितग्रहयुक्तनक्षत्रे जातस्यारिष्टफलमाह वसिष्ठः—'ग्रहकाङ्क्षितनक्षत्रे दत्तपुत्रो भवेच्छिशुः । ग्रहयुक्ते च नक्षत्रे जननाद्रोगपीडितः' इति । इत्येकनक्षत्रजननदोषः ॥ ❀ ॥ अथ ज्येष्ठानक्षत्रजननफलम् । ब्रह्मयामले—'ज्येष्ठादौ जननीमाता द्वितीये जननीपिता । तृतीये जननीभ्राता स्वयं माता चतुर्थके ॥ आत्मानं पञ्चमे हन्ति षष्ठे गोत्रक्षयो भवेत् । सप्तमे चोभयकुलं ज्येष्ठभ्रातरमष्टमे । नवमे श्वशुरं हन्ति सर्वं हन्ति दशांशकम्' इति । इति ज्येष्ठाफलम् ॥ ❀ ॥ अथ मूलनक्षत्रजननफलम् । नवनीतारिष्टव्याख्याने वसिष्ठः—'मूलर्क्षे जायमानस्य परित्यागो विधीयते । अष्टवर्षमतिक्रम्य पिता पुत्रं निरीक्षयेत् । पूर्वं दर्शनमात्रेण पितुर्मरणमादिशेत्' इति ॥ मनुरपि—'अभुक्तमूलजातस्य परित्यागो विधीयते । अदर्शनाद्वापि पितुः सतु तिष्ठेत्समाष्टकम् ॥ मूलस्य प्रथमे पादे पितुर्नाशो विधीयते । द्वितीयांशे तथा मातुस्तृतीये धनहानिकृत् ॥ कुलशोकापहश्चान्त्ये धनवान्पुण्यवान्भवेत् । निरामयो राजपूज्यः प्रवक्ता च सुखी भवेत् ॥

कुमारीमप्यदृष्टं वर्षाण्यष्टौ तथादिशेत् । व्यत्ययेन फलं ज्ञेयमाश्लेषासु च मूलवत् ॥ अभुक्तमूलसंभवं परित्यजेत्तु बालकं समाष्टकं पिताथवा न तन्मुखं विलोकयेत् । तदाद्यपादके पिता विपद्यते जनन्ययो धनक्षयी तृतीयजश्चतुर्थजः शुभावहः ॥ प्रतीपमन्त्यपादतः फलं तदेव सार्पमे तदुत्थदोषशान्तये विधेयमत्र शान्तिकम्' इति । प्रतीपं प्रतिलोमम् ॥ ❀ ॥ अभुक्तमूलस्य लक्षणं केचिदन्यथाहुः—'ज्येष्ठान्ते घटिकैका चेन्मूलादौ घटिकाद्वयम् । अभुक्तमूलमित्याहुस्तत्र जातं शिशुं त्यजेत्' इति ॥ नवनीतारिष्टे—'चतुर्घटी मूलमघाश्विनादौ गण्डान्तमन्ते च फणीन्द्रपौष्णे' इति ॥ देवरातः—'रेवत्याश्विनयोर्मध्ये मध्ये च सार्पपैत्रयोः । तथेन्द्रमूलयोर्मध्ये गण्डान्तो हि विधीयते ॥ गण्डान्तस्य प्रमाणं हि घटिकानां चतुष्टयम् । आद्यनाड्यां तु जातस्य पिता मरणमाप्नुयात् ॥ द्वितीयायां तथा माता तृतीयायामथान्वयः । चतुर्थ्यां जायमानस्तु हन्ति भ्रातॄन्न संशयः ॥ ज्येष्ठारेवतिसार्पान्तमूलमत्राश्विनादिषु । नाड्यश्चतस्रो गण्डान्तो यो जातः स कुलान्तकः' ॥ इति मूलनक्षत्रविषयम् ॥

अथ चन्द्रलग्नयुक्तनक्षत्रदोष उच्यते—'पित्रोर्मृतिर्हस्तयमत्रिपादे पितुश्च पूर्वे जलपुष्ययोश्च । त्वाष्ट्राद्ययोः स्यात्पितृमातृनाशश्चन्द्रोदये मातृपथोऽर्यमाद्ये' ।—हस्तभरण्योस्तृतीयपादे चन्द्रलग्ने जातः शुभग्रहदृष्टिरहिते सति मातापितरौ हन्ति । पुष्यपूर्वाषाढयोः प्रथमपादे चन्द्रोदये शुभग्रहदृष्टिरहिते सति जातस्तु पितरं हन्यात् । चित्रायां प्रथमपादद्वये चन्द्रलग्ने शुभग्रहदृष्टिरहिते सति मातापितरौ हन्ति । पूर्वाफल्गुनीनक्षत्रस्य प्रथमपादे चन्द्रलग्ने शुभग्रहदृष्टिरहिते सति जातो मातरं हन्ति ॥ अगस्त्योऽपि—'त्वाष्ट्रे च तिष्ये च तथैव तोये कन्याकुलीरोदयचापलग्ने । शुभग्रहः पश्यति चेन्न हन्यात्पितॄंश्च मातॄंश्च सुतं च मातुलम्' इति । भृगुः—

'तदाद्यपादयोर्यम्यो मातरं च जिघांसति' । 'चन्द्रोदये पुष्यजलर्क्षजातो निहन्ति तातं जननीं सपुत्राम् । पुष्ये जलर्क्षे पितृमातृपुत्रतन्मातुलान्हन्ति पदक्रमेण' इति।—पुष्ये कर्कलग्ने पूर्वाषाढे धनुर्लग्ने जातः पितरं हन्ति । कन्या तु मातरम् । अथवा पुष्यपूर्वाषाढयोर्जातस्तु चतुर्षु पादेषु चन्द्रोदयकाले जातः क्रमात्पितृमातृस्वमातुलान् शुभग्रहदृष्टिरहिते सति हन्ति ॥ अरिष्टाष्टकेऽप्युक्तम्—'पूर्वाषाढभपुष्ययोः पदवशाचातस्य मातुः क्रमात्पुत्रस्यापि च मातुलस्य च मृतिः पीडाकरं जातयोः' इति ॥ रत्नकोशे—'नक्षत्रेष्विन्दुयुक्तेषु जातानां यत्फलं स्मृतम् । तत्तदेव समादेश्यं तेषु लग्नगतेष्वपि' इति ॥ बृहस्पतिरपि—'स्वजन्मकाले चन्द्रः स्यान्नक्षत्राल्लग्नभादपि । गुरुर्नेधे विपन्नाशेऽप्यपवादविनाशिकम् ॥ तयोरष्टमभे जीवः प्रत्यरे वा प्रयाति चेत् । दोषापवादान्संयम्य दोषानेव समर्थयेत् ॥ यस्य लग्नर्क्षजन्मर्क्षौ गुरोः सप्तमपञ्चमौ । तृतीये चास्य दोषाणामपवादविनाशनः ॥ यस्य लग्नस्य जन्मर्क्षे रविर्विपदि वा स्थितः । प्रत्यरे वा वधे वापि दोषाणामपवादवान्' इति ॥ भरद्वाजश्चाह—'नरस्य जन्मनक्षत्रं तदा चन्द्रर्क्षमेव च । तयोर्बलयुजोः स्यातां जातस्य तु शुभाशुभौ' इति ॥ इति चन्द्रलग्नयुक्तनक्षत्रदोषः ॥ ❀ ॥ अथ राशिदोष उच्यते—'भवन्ति पुंसः समराशिजाताः समानशीला विषमे विरुद्धाः' इति ।—अत्र समानशब्देन राशीशैक्यमुपलक्ष्यते । विषमशब्देन शत्रुराशयः षष्ठाष्टमराशयश्च । तेषु जाताः यथासंख्यं एकशीला विरुद्धशीलाश्च भवन्ति ॥ तथाह देवकीर्तिः—'यदि कन्याः पुत्रा वा समर्क्षजाता भवन्ति समशीलाः । विषमे भवन्ति विषमा नरस्य सर्वेषु कार्येषु' इति । इति राशिदोषः ॥ ❀ ॥ अथ विष्ट्यादिषोडशदोषाः । वसिष्ठः—'विष्ट्यां दारिद्र्यमाचष्टे कुलिकेऽङ्गस्य वैकृतम् । यमघण्टे फलं रुक् स्याद्रिक्तायां

पण्डनामिधान् ॥ व्यतीपातेऽङ्गहीनः स्यात्परिघे मृतिमादिशेत् । वैधृतौ पितृहानिः स्यान्नष्टेन्दावन्धतां व्रजेत् ॥ शूले समूलनाशः स्यात्कुलनाशोऽन्यभे भवेत् । विपरीतप्रसूतौ तु नाभिनालप्रवेष्टने ॥ राष्ट्रस्य नृपतेश्चैव स्वस्यापि च विनाशकः । अधिकाङ्गे च हीने च संध्ययोरुभयोरपि ॥ पर्वण्यपि प्रसूतौ च सर्वानिष्टभयप्रदः । वद्धत्सदन्तजातश्च पादजातस्तथैव च ॥ तस्माच्छान्तिं प्रकुर्वीत ग्रहाणां श्रुत्येतमाम् । दैवज्ञं पूजयेत्तत्र शान्त्या शान्तिर्भविष्यति' इति ॥ ❀ ॥ विष्ट्यादिलक्षणं संग्रहे—'कृष्णे तृतीया दशमी च रात्रौ तत्सप्तमी भूतदिवा च विष्टिः । एकादशीनक्तमतश्चतुर्थी शुक्लाष्टमी पूर्णदिवा च विष्टिः' ॥—कृष्णपक्षे तृतीया-दशम्योः रात्रौ विष्टिर्भवति । सप्तमीचतुर्दश्योर्दिवा विष्टिः । शुक्लपक्षे चतुर्थ्येकादश्योः रात्रौ विष्टिः । अष्टमीपौर्णमास्योर्दिवा-विष्टिः ॥ इति ॥ ❀ ॥ अथ कुलिकलक्षणम्—'अहःप्रमाणं वसुधा विभज्य तद्वारपस्य प्रथमोऽन्त्यभागः । शेषाः षडंशाः क्रमशोऽपि नेयाः शनेस्तु भागं कुलिकं वदन्ति ॥ शन्यंशः कुलिको ज्ञेयो गुर्वंशो यमघण्टकः । अर्धप्रहरः सौम्यांशो ह्यर्कांशः कालसंज्ञकः' ॥—वारस्याहःप्रमाणमष्टधा विभज्य तत्र प्रथमान्त्यभागौ वाराधिपस्यांशौ । शेषाः क्रमेण तत्तद्ग्रहांशा भवन्ति । यः शन्यंशः स कुलिको भवति । यो बृहस्पत्यंशः स यमघण्टो भवति । यः सौम्यांशः सोऽर्धप्रहरसंज्ञकः । य आदित्यांशः स कालसंज्ञकः । रिक्तेति चतुर्थीनवमीचतुर्दश्यो रिक्ताः ॥ ❀ ॥ अन्धनक्षत्रलक्षणमुक्तं श्रीपतिना—'अन्धभं तदनु मन्दलोचनं मध्यलोचनमतः सुलोचनम् । रोहिणीप्रभृतिभिश्चतुर्विधं साभिजिच्च गणयेत्पुनःपुनः' इति ।—रोहिणीपुष्योत्तराविशाखापूर्वा-षाढाशततारकरेवती एतानि सप्तनक्षत्राण्यन्धानि । व्यतीपातादयः प्रसिद्धाः ॥ ❀ ॥ अथ लग्नगण्डान्त उच्यते । नवनीता-

रिष्टे—'पूर्णातिथीनां तिसृणां तथान्ते मीनेऽलिकर्क्योर्नवमो नवांशः । मेषे च कण्ठीरवधन्विनोश्च गण्डान्त आद्यो नवमस्तथांशः' ॥—तिथिगण्डान्तः पूर्वमेवोक्तः । मीनवृश्चिककर्कटेषु चरमो नवांशः । मेषसिंहधनुषामाद्यो नवांशश्च गण्डान्तः ॥ तथोक्तं वसिष्ठेन—'मीनालिकर्कटान्त्याश्च मेषधन्विमृगाधिपे । नवांश आदिमश्चैव राशिगण्डान्त ईरितः ॥ ❀ ॥ अथैषां गण्डान्तानां फलम्—'तिथ्यृक्षगण्डे पितृमातृनाशो लग्ने तु संधौ तनयस्य नाशः । सर्वेषु नो जीवति हन्ति वंशं जीवन्पुनः स्याद्बहुवारणाश्वः' ॥—तिथिगण्डे नक्षत्रगण्डे च जातो मातापित्रोर्मृतिकृत् । राशिगण्डे जातः आत्मघातको भवति वंशं च हन्ति । जीवतिचेद्बहुवारणाश्वो भवति । इति गण्डान्तफलम् ॥ ❀ ॥ अथ विषघटिकासु जातस्य दोषमाह वसिष्ठः—'विषांशकगते चन्द्रे जातो यमपुरं व्रजेत् । आदित्यांशे पितुर्मृत्युश्चन्द्रांशे मातुरेव च ॥ भौमांशे मातुलस्यैव सौरांशे भ्रातुरेव च । अन्यांशे विषसंस्पृष्टे जातस्य मरणं भवेत् ॥ ❀ ॥ सर्वेषु गण्डान्तेषु शुभग्रहदृष्टिवर्जितेषु अरिष्टं भवतीत्युक्तं नवनीतारिष्टे—'तिथ्यृक्षराश्यंशदिवानिशान्ते जातस्य रिष्टं शुभदृष्टिहीने' ।—तिथ्यन्ते नक्षत्रान्ते राश्यन्ते अंशान्ते निशान्ते दिनान्ते शुभदृष्टिहीने सति जातस्य रिष्टं भवति ॥ नृसिंहस्त्वाह—'स्ववर्गे मित्रभे स्वोच्चे शुभयुक्ते शुभेक्षिते । गण्डान्तदोषमुद्भूतं सद्य एव व्यपोहति' इति ॥ इति विषघटीदोषः पश्चाङ्गफलं च ॥

अथ जननलग्नफलं ग्रहवशाद्भवति । तदुक्तं नवनीतारिष्टे—'ताताम्बिकासोदरमातुलाश्च मातामहस्तातपिता च सूनुः । सूर्यादिखेटाः क्रमशः प्रदिष्टास्त्रिकोणगास्तेऽपि च तान्निहन्युः' इति ।—सूर्यादयः शन्यन्ता ग्रहाः क्रमात्पितृमातृमातुलमातामह-

पितामहपुत्रसंज्ञिता भवेयुः। ते सर्वे लग्नात्पञ्चमनवमगतास्तत्तत्संज्ञानुरूपान्हन्युः ॥ अत्र वसिष्ठः—'लग्नात्पञ्चमसंस्था गुरुरविसितचन्द्रमोसिताः क्रमशः। मातृजनकं च जनकं पितृजनकं मातरं सुतं हन्युः' ॥ भृगुश्चाह—'अर्कः सौरिः कुजश्चन्द्रः पञ्चमस्थाः प्रसूतिषु। पितरं मातरं भ्रातृनात्मानं च जिघांसति ॥ सौरोऽह्नि रात्रौ पितरः पितृव्यस्तत्पापयोगात्तु पितृव्यनाशः।'—दिवाजातस्य सौरिः पितृव्यः। रात्रिजातस्य रविः पितृव्यः॥ तदाह देवकीर्तिः—'दिवसे मातापितरौ शुक्ररविशशिशनी निशायां च। मातृभगिनी पितृव्यो विपर्ययात्कीर्तिता यवनैः'।—तस्मात्पितृव्यसंज्ञको ग्रहः पापयुक्तश्चेत्पितृव्यनाशको भवति। एवं सर्वत्र योजनीयम्। अत्र जननलग्नं चन्द्रलग्नं च सम्यक्परीक्षणीयम् ॥ तथाच भरद्वाजः—'चन्द्रलग्नं शरीरं स्याल्लग्नं स्यात्प्राणसंज्ञितम्। ते उभे संपरीक्ष्यैव कर्तव्यं श्रेय इच्छता' इति ॥

अथ तावत्त्रिसप्ततिर्जन्मलग्नयोगा उच्यन्ते—'सोमार्कभूसूनुयमा व्ययस्था मातापितृभ्रातृसुतान्निहन्युः'।—लग्नाद्द्वादशस्थिता रविशशिकुजशनैश्चराः क्रमात् पितृमातृभ्रातृसुतान्निहन्युः ॥ वसिष्ठस्तु—'द्वादशे मन्दसूर्यौ च क्षीणचन्द्रश्च सप्तमे। पितुर्मरणदाः सद्यः शुभदृष्टे त्रियब्दके'। भृगुस्तु—'उदयाद्दशमे मन्दो नाशयेदचिरात्सुतम्। पितरं भास्करो हन्यान्मातरं हिमदीधितिः' ॥ १ ॥ 'सप्ताष्टमस्थैरशुभैर्जनन्या सार्धं सुतो नश्यति पापदृष्टे'।—लग्नात्सप्तमाष्टमस्थैः पापग्रहैर्दृष्टे लग्ने जातो जनन्या सह म्रियते। शुभग्रहदृष्टे सति तयोर्व्याधिर्भवति ॥ तथाच देवकीर्तिः—'लग्नात्सप्ताष्टमगैः पापैर्दृष्टे यदा तदा लग्ने। मरणं स्याच्छिशुमात्रोः शुभदृष्टिश्चेद्भवेद्व्याधिः' ॥ २ ॥ 'व्ययस्थितेऽर्के रुधिरे चतुर्थे चन्द्रे कुशे नश्यति सा सगर्भा'।—द्वादश-

स्थितेऽर्के क्षीणचन्द्रे भौमे चतुर्थे सति सा सगर्भा म्रियते ॥ ३ ॥ 'लग्ने कुजेऽर्के सरगे निषेके शस्त्रेण मात्रा सह गर्भमृत्युः' ।—जन्मलग्नगते भौमे सप्तमगते सूर्ये जातो मात्रा सह शस्त्रेण म्रियते ॥ ४ ॥ 'धनव्ययस्थैरशुभैश्च तद्वत्क्रूरेक्षितैः सौम्यदृशा विहीनैः' ।—द्वितीयद्वादशगताः पापाः शुभैरदृष्टाः पापैर्दृष्टाश्चेच्छस्त्रेण सहसुतां जननीं हन्युः ॥ ५ ॥ 'ग्रस्तौ रवीन्दू तनुगौ सपापौ कुजोऽष्टमे मातृसुतात्ययाय' ।—क्रूरग्रहसहिते ग्रहणयुते चन्द्रे वा आदित्ये वा लग्नगते सति अष्टमगते कुजे च जनन्याः शिशोश्च शस्त्रेण मृतिः स्यात् ॥ ६ ॥ 'जीवेत्सवित्री म्रियते च सूनुः क्रूरेषु षड्द्वादशगेषु मृत्याम्' ।—क्रूरेषु षड्द्वादशगेषु सत्सु माता जीवेत् सूनुर्नश्येत् ॥ ७ ॥ 'राहुर्बलिष्ठो नवपञ्चमस्थः क्रूरेण दृष्टः पितृहेति केचित्' ।—ग्रहणकालप्रभृति षण्मासपर्यन्तं बलिष्ठो राहुः जननकाले लग्नात्पञ्चमनवमस्थः क्रूरेण दृष्टश्चेत्पितरं हन्ति । सोऽपि चतुर्थगतश्चेत् पुत्रं हन्यात् । केतुरप्येवमेव करोति ॥ तथाच वसिष्ठः—'राहुश्चतुर्थगः भर्तुं पितरं नवमस्थितः । हन्यात्केतुश्च तद्वत्स्यात्पापदृष्टो दिनत्रये' ॥ ८ ॥ 'चन्द्रे नभःस्थे हिबुके च पापे शुक्रे सरे स्यात्स्वकुलस्य हन्ता' ।—लग्नाद्दशमस्थे चन्द्रे पापे च चतुर्थगते शुक्रे सप्तमगते जातः स्वकुलस्य हन्ता भवति ॥९॥ 'सप्ताष्टलग्नव्ययगे शशाङ्के क्रूरेण युक्ते शुभदृष्टिहीने । सौम्यैर्विहीनेषु च कण्टकेषु कृतान्तदंष्ट्रान्तरगः प्रसूतः' ।—सप्तमाष्टमलग्नद्वादशगेष्वन्यतमयुक्ते चन्द्रे क्रूरग्रहयुक्ते शुभदृष्टिहीने सति केन्द्रेषु शुभग्रहरहितेषु तदा जातः सद्यो म्रियते ॥ १० ॥ 'पूर्वापरार्धे यदि पापसौम्याश्चक्रस्य चेन्नश्यति कीटलग्ने' ।—लग्नोदितभागतुल्यचतुर्थराश्यादिमभागास्तृतीयद्वितीयलग्नद्वादशैकादशराशयः लग्नानुदितभागतुल्यदशमराश्यन्तिमभागाश्च चक्रस्य पूर्वार्धम् । लग्नोदितभागतुल्यदशमराश्यादिगतभागाश्च नवमाष्ट-

सप्तमषष्ठपञ्चमराशयश्च लग्नादुदितभागतुल्यचतुर्थराश्यपरभागाश्च चक्रस्यापरार्धम् । तत्र चक्रस्य पूर्वार्धे सर्वे पापाः अपरार्धे शुभाश्च यदि तदा वृश्चिके जातो म्रियते ॥ ११ ॥ 'ससन्ध्यवेला यदि चन्द्रहोरा पापाश्च राश्यन्तगता विपत्त्यै' ।—ससन्ध्यवेला तु अर्धास्तमयादारभ्य नक्षत्रदर्शनावसाना पश्चिमसन्ध्या । नक्षत्रादर्शनसमयादारभ्य सूर्योदयावसाना प्रातःसन्ध्या । इति निगदितसायंप्रातःसंध्यावेलायां चन्द्रहोरा इति । मेषाद्योजराशिष्वपरार्धं वृषभादियुग्मराशिषु पूर्वार्धं चन्द्रस्य होरा इति । तदानीं पापग्रहाश्च राश्यन्तनवमभागगता यदि तदा जातः सद्यो म्रियते ॥ १२ ॥ 'केन्द्रेषु सर्वेषु च चन्द्रपापैर्युक्तेषु जातो यमलोकमेति । द्यूनाष्टलग्नाम्भसि पापमध्ये चन्द्रे मृतिर्दुर्बलसौम्यदृष्टे' ।—सप्ताष्टलग्नचतुर्थेष्वन्यतमस्थाने पापद्वयमध्यगते चन्द्रे दुर्बलैः शुभग्रहैः पापैर्वा दृष्टे सति जातः सद्यो म्रियते ॥ १३ ॥ 'क्षीणेन्दुलग्ने मृतिकण्टकस्थैः पापैर्विनाशाय शुभैरदृष्टे'।—शुभग्रहैरदृष्टे क्षीणचन्द्रोदययुक्ते लग्ने सति अष्टमकेन्द्रगतैः पापग्रहैर्मृत्युर्भवति ॥ १४ ॥ 'पापौ विलग्नास्तयोः पृथक्स्थावेकस्य चन्द्रे मृतिरुग्रदृष्ट्या' ।—सप्तमलग्नयोरन्यतरयुक्ते चन्द्रे प्रत्येकमवस्थितौ पापौ यदि स्यातां तदा चन्द्रः पापवीक्षितश्चेज्जातं हन्ति ॥ १५ ॥ 'रिष्फे कृशेन्दौ मृतिलग्नसंस्थाः पापा विनाशाय शुभैरकेन्द्रैः' ।—द्वादशगते क्षीणे चन्द्रे केन्द्रवर्जितस्थानगतैः शुभैरष्टमोदयलग्नगताः पापाः विनाशाय भवन्ति ॥ १६ ॥ 'लग्नाष्टधर्मान्त्ययुताः शशाङ्कभौमार्कमन्दा गुरुणा न दृष्टाः' ।—जन्मलग्नाष्टमनवमद्वादशस्थिताः क्रमेण चन्द्रकुजभानुमन्दा गुरुदृष्टिहीनाश्चेत्सुतं हन्युः ॥ १७ ॥ 'पापास्त्रिकोणाष्टमगा असौम्याश्चन्द्रे तनौ भास्वति वा क्षयाय' ।—चन्द्रे सूर्ये वा लग्नगते सति शुभग्रहवीक्षणरहिताः पञ्चमाष्टमनवमस्थिताः पापाः मरणाय भवन्ति ॥ देवकीर्तिः—'लग्ने चन्द्रेऽर्के वा पापाश्रा-

ष्टत्रिकोणकेन्द्रेषु। सौम्यैरदृष्टमिश्राः सद्योमरणाय कीर्तिता यवनैः' इति ॥१८॥ 'पापोऽष्टगः केन्द्रगतो न जीवो नाशाय लग्ने तपने शनौ वा' ।—लग्नादष्टमगते पापग्रहे जीववर्जिते शन्युदये सूर्योदये वा जातो म्रियते ॥ १९ ॥ 'गुरौ विकेन्द्रे निधने च पापे चन्द्रे कुजे वा मरणाय केन्द्रे' ।—केन्द्ररहिते गुरौ चन्द्रे कुजे वा केन्द्रगते सति अष्टमगतः पापो जातं हन्यात् ॥ २० ॥ 'केन्द्र-त्रिकोणेष्वशुभैः शुभैश्च षष्ठाष्टरिष्फे मृतिरर्कलग्ने' ।—केन्द्रत्रिकोणसंज्ञेषु षड्राशिषु स्थितैः पापैः षष्ठाष्टमद्वादशगतैः शुभैश्च सूर्यो-दयलग्नजातो म्रियते ॥ २१ ॥ 'द्रेक्काणजामित्रगतेऽतिपापो लग्ने शशाङ्कश्च निहन्ति सद्यः' ।—जननकाले द्रेक्काणराशेः सप्तमराशि-स्थिते पापग्रहे तथा लग्ने स्थितः शशाङ्कः सद्यो जातं हन्ति ॥ २२ ॥ 'ग्रहाः समीपुर्बहवोऽष्टमे च मासं तु जीवेद्दिनमप्तकं वा' ।—लग्नादष्टमस्थाने बहवो ग्रहास्तिष्ठन्ति चेत्तदा जातो मासं सप्तरात्रं वा जीवेत् ॥ २३ ॥ 'भौमो विलग्ने भृगुजश्च केन्द्रे म्रियेत होरां पुनरागते तु' ।—लग्ने भौमः केन्द्रे शुक्रश्च यदा तिष्ठतस्तदा जातस्य भौमे पुनर्जन्मराशिगते सति मृतिः स्यात् ॥ २४ ॥ 'लग्नत्रिकोणे गुरुरस्य केन्द्रे तिष्ठन्विलग्नेशकुजः क्षयाय' ।—मेषे वा वृश्चिके वा लग्नगते तस्मात्पञ्चमे गुरुस्तिष्ठति तस्माद्गुरुस्थितराशेः केन्द्रस्थितो लग्नाधिपतिर्भौमो जातं हन्ति ॥ २५ ॥ 'त्रिकोणलग्नास्तमृतिव्ययस्थाः क्षीणेन्दुयुक्ता मरणाय पापाः' ।—पञ्चमनवमलग्नसप्तमा-ष्टमद्वादशस्थिताः क्षीणचन्द्रयुताः पापग्रहाः शुभैर्न दृष्टा न युता वा जातं हन्युः ॥ तथाच कपिष्ठलः—'सुतमदननवा-न्त्यलग्नरन्ध्रेष्वशुभयुतो मरणाय शीतरश्मिः। भृगुसुतशशिपुत्रदेवपूज्यैर्यदि बलिभिर्न युतोऽवलोकितो वा ॥ पापेक्षितो हन्ति तु षोडशाहाल्लग्ने शनिः पापयुतस्तु मासात्' ।—लग्नस्थितो मन्दः पापेक्षितः सन् षोडशाहाज्जातं हन्ति। पापयुतश्चेन्मासाद्धन्ति।

पापेक्षणयोगरहितो वर्षेण हन्ति ॥ तथाच देवकीर्तिः—'मारयति षोडशाहाच्छनैश्वरः पापवीक्षितो लग्ने । संयुक्तो मासेन तु वर्षा-जातं तु मारयति' इति ॥ २६ ॥ 'विलग्नद्रेक्काणनवांशनाथा निघ्नन्त्यरिस्थाः स्थितराशिसंख्यैः । लग्नाधिपोऽब्दैश्च दृकाणनाथो मासै-र्नवांशाधिपतिर्दिनैश्च' ।—जन्मलग्नाधिपतिः षष्ठगतश्चेत्तन्मध्यमगतराशिसंख्याकैर्वर्षैर्जातं हन्ति । द्रेकाणेशोऽपि षष्ठगतश्चेत्तदा तद्रा-शिसंख्याकैर्मासैर्जातं हन्ति । अंशेशो जननकाले षष्ठगतश्चेत्तदा तद्राशिसंख्याकैर्दिनैर्जातं हन्ति ॥ २७ ॥ 'केतूदयोल्काशनिपात-घाताः पश्चान्मुहूर्ते फणिरुद्रसंज्ञे' ।—अर्कोदयाद्द्वितीयमुहूर्तः सर्पसंज्ञः, प्रथमो रुद्रसंज्ञः तयोरन्यतरस्मिन्मुहूर्ते व्योम्नि पूर्वं धूमकेतुः पश्चादुल्काऽशनिपातश्चण्डवायुर्वा दृष्टाश्चेत्तदा जातो नश्येत् ॥ २८ ॥ 'मीनर्क्षजस्येन्दुरवी तृतीये व्याघ्युद्गमो जीवति स त्रिरात्रम् । तृतीयतारे रविरेकरात्रं चन्द्रेऽर्कयुक्ते दशमस्थिते वा' ।—मीनलग्नजातस्य तृतीयस्थाने चन्द्रादित्यौ स्थितौ चेत्तदा व्याघ्युद्गमो भवति । अथवा मीनलग्नजातस्य जन्मतारायास्तृतीये रविः स्थितश्चेत् तथा चन्द्रेऽप्यर्कयुक्ते लग्नाद्दशमस्थिते वा सति एकरात्रं जीवति ॥ २९ ॥ 'सव्यापसव्ये चतुरस्रगेषु पापेषु रोगी दशरात्रजीवी' ।—सव्यसंज्ञके मेषादिषट्के स्थितेषु पापेषु लग्नाच्चतुर्थस्थानगतेषु सत्सु तथा अपसव्यसंज्ञके तुलादिषट्के स्थितेषु पापेषु लग्नादष्टमस्थानगतेषु सत्सु जातस्य रोगो भवति । स च दशरात्रजीवी ॥ ३० ॥ तथाह देवकीर्तिः—'चतुरस्रगताः पापा वामदक्षिणतो यदा । तदासौ व्याधिमाप्नोति दशरात्रं तु जीवति' इति ॥ ३१ ॥ 'सव्ये त्रिकोणे तपनः शशाङ्को वामे तदा द्वादशमासजीवी' ।—यदा सव्ये मेषादिषट्के स्थितो रविर्लग्नात्पञ्चमनवमस्थानयोरन्यतरस्थाने तिष्ठति तथा वामे तुलादिराशिषट्के चन्द्रस्तिष्ठति तदा जातो द्वादशरात्रजीवी स्यात् ॥ ३२ ॥ 'चन्द्रे त्रिकोणे चतुरस्रगेऽर्के दुर्व्याधिना

जीवति स त्रिरात्रम्' ॥—यदा लग्नात्पञ्चमनवमगश्चन्द्रश्चतुर्थाष्टमगतो रविस्तदा जातो दुर्व्याधिना युक्तस्त्रिरात्रं जीवति ॥ ३३ ॥ 'चन्द्रे चतुर्थे तपने च षष्ठे सव्याधिरष्टादशवासरान्तः' ।—लग्नाच्चतुर्थगते चन्द्रे षष्ठगते सूर्ये जातो व्याधिसहितोऽष्टादशवासरजीवी भवति ॥३४॥ 'होराष्टमस्थे कुजमन्ददृष्टे सूर्ये सरोगस्तु विपद्यते च' ।—भौमशनिनिरीक्षिते लग्नादष्टमगते सूर्ये जातो व्याधिसहितो म्रियते ॥३५॥ 'क्रूरास्त्रयः शुक्रगृहाष्टमस्था निघ्नन्ति मासाद्ध्रुवमेव जातम्' ।—लग्नादष्टमगता रविभौमसौराः शुक्रक्षेत्रयोस्तुलावृषभयोः स्थिताश्चेज्जातं मासेन निघ्नन्ति ॥ ३६ ॥ 'यस्मिन्गृहे त्वभ्युदितस्तु केतुस्तस्मिन्प्रसूतो म्रियते द्विमासात्' ।—यस्मिन्राशौ केतुस्तिष्ठति तस्मिन्जातो द्वादशमासान्म्रियते ॥३७॥ 'भानुर्नभस्थः कुजमन्दराशौ निहन्ति सद्यो बहुपापदृष्टः' ।—लग्नाद्दशमस्थितः सूर्यः कुजमन्दराशिषु मेषवृश्चिकमकरकुम्भेषु स्थितो बहुपापदृष्टश्चेत्सदा जातो म्रियते ॥३८॥ 'क्रूरेक्षितः क्षीणशशी तनुस्थो हन्त्येव मुक्त्वा क्रियगोकुलीरान्' ।—मेषवृषभकर्कटव्यतिरिक्तराशिस्थो लग्नगतः क्षीणचन्द्रः क्रूरदृष्टश्चेज्जातं हन्ति ॥ ३९॥ 'षष्ठाष्टगा वक्रितपापदृष्टा हन्युः शुभा मासि शुभैरदृष्टाः' ।—वक्रितपापदृष्टाः शुभैर्ग्रहैरदृष्टाः लग्नात्षष्ठाष्टमन्यतमगताः शुभा जातं मासेन घ्नन्ति ॥ ४० ॥ 'होरापतिः पापजितः स्मरस्थो मासेन तं मारयति प्रसूतम्' ।—लग्नात्सप्तमगतः शुभग्रहो लग्नाधिपतिः पापेन जितः सन् जातं मासेन मारयति ॥४१॥ युद्धलक्षणमुक्तं पराशरेण—'दिवसकरेणास्तमयः समागमः शीतरश्मिसहितानाम् । भौमादीनां युद्धं निगद्यतेऽन्योन्ययुक्तानाम्' इति ॥ देवकीर्तिस्तु—'वर्षान्मारयति शशी षष्ठाष्टमसंस्थितो विलग्नर्क्षात् । सद्यः क्रूरैर्दृष्टः सौम्यैर्दृष्टोऽष्टमासैर्वा । अशुभैः शुभैश्च दृष्टो वर्षचतुष्केण निर्दिशेदन्तम्' इति ॥४२॥ 'वक्री कुजर्क्षे शनिरारदृष्टः षष्ठाष्टकेन्द्रे मृतिकाद्द्विवर्षात्' ।—लग्नात्षष्ठाष्टमकेन्द्रेषु

स्थितो वक्रगतः शनिर्मेषवृश्चिकयोरन्यतरस्मिन्स्थितो बलिना कुजेन दृष्टो जातं द्विवर्षाद्धन्ति ॥ ४३ ॥ गुरुः कुजर्क्षेऽष्टमगस्त्रिवर्षाद्भृगुजदृष्टः शशिपापदृष्टः' ।—लग्नादष्टमस्थो गुरुर्मेषवृश्चिकयोरन्यतमस्थः शुक्रदृष्टिरहितश्चन्द्रेण पापैश्च दृष्टश्चेज्जातं त्रिवर्षाद्धन्ति ॥ ४४ ॥ 'लग्नेश्वरादष्टगतः क्षयेन्दुर्दृष्टस्त्रिवर्षादशुभैर्विसौम्यैः' ।—लग्नाधिपाधिष्ठितराशेरष्टमगतः शुभैरदृष्टः अशुभदृष्टियुक्तः क्षीणचन्द्रो जातं वर्षत्रयेण हन्ति ॥ ४५ ॥ 'भौमार्किदृष्टः सहितोऽपि केन्द्रे नष्टः शशी हन्ति चतुर्भिरब्दैः' ।—केन्द्रस्थितो नष्टचन्द्रो भौमशनिभ्यां दृष्टो युक्तो वा जातं चतुर्भिरब्दैर्हन्ति ॥ ४६ ॥ 'सौम्ये कुलीरेऽष्टरिपुव्ययस्थे वर्षैश्चतुर्भिर्मृतिरिन्दुदृष्टे' ।—कर्कटकस्थिते चन्द्रेण निरीक्षिते बुधे लग्नात्षष्ठाष्टमद्वादशगते जातोऽब्दचतुष्केण म्रियते ॥ ४७ ॥ 'अदृश्यदृश्यांशगसौम्यपापैर्लग्ने च राहुर्यदि पञ्चवर्षैः' ।—अदृश्यदृश्यांशगाः 'नृथाष्टिविश्वरुद्राष्टतिथ्यंशा' इति चन्द्रादीनां दृश्यादृश्यभागा उक्ताः तत्र स्वीयादृश्यभागगतेषु शुभग्रहेषु पापग्रहेषु च स्वीयादृश्यभागव्यतिरिक्तदृश्यभागगतेषु तदा राहुर्लग्नगतश्चेज्जातः पञ्चवर्षैर्म्रियते ॥ ४८ ॥ 'एकर्क्षगैश्चन्द्रकुजार्कजीवैस्तथैव सूर्यक्षितिजेन्दुमन्दैः' ।—एकराशिगतैश्चन्द्रकुजार्कजीवैः पञ्चभिर्वर्षैर्म्रियते ॥ ४९ ॥ 'अर्केन्दुराशौ भृगुजः षडब्दैर्हन्त्यः षडष्टान्त्यगतश्च सौम्यैः' ।—लग्नात्षष्ठाष्टद्वादशगतः शुक्रः अर्केन्दुराशिभूते सिंहे कर्कटे वा स्थितः शुभग्रहैर्वीक्षितश्चेज्जातं षड्वर्षैर्हन्ति ॥ ५० ॥ 'लग्ने दृगाणा निगलाहिपक्षिपाशान्विताः स्वामिभिरप्यदृष्टाः । क्रूराश्रिता मार्गकराः प्रसूतौ संवत्सरैः सप्तभिरेव मत्युम्' ।—अत्र निगलेति मकरस्य प्रथमो द्रेष्काणः कर्कटे द्वितीयतृतीयौ वृश्चिके प्रथमद्वितीयौ मीनस्यान्त्यद्रेष्काणश्च सर्पाः सिंहकुम्भयोः प्रथमौ मिथुनतुलयोर्मध्यमौ च पक्षिद्रेष्काणौ । मेषस्य प्रथमो द्रेष्काणः पाशसंज्ञकः । जननलग्नाद्रे-

काणाः निगल-सर्प-पक्षि-पाशभूताः सराश्यधिपग्रहैरदृष्टाः पापग्रहयुक्ताश्चेत्तदा जातस्य सप्तवर्षैर्मृतिर्भवति ॥ ५१ ॥ 'सपापलग्ने विबले स्मरस्थे चन्द्रे मृतिः सप्तसु गुर्वदृष्टे' ।—रविकुजशनैश्चरयुक्ते लग्नेसति क्षीणचन्द्रे जीवदृष्टिरहिते सप्तमस्थे सति च जातः सप्तवर्षैर्म्रियते ॥ ५२ ॥ 'वृषं विहाय स्थिरलग्नसंस्थे राहौ सराब्दैर्मृतिरुग्रदृष्टे' ।—वृषव्यतिरिक्तस्थिरराशौ लग्नभूते पापदृष्टे राह्वधिष्ठिते च तदा जातः सप्ताब्दैर्म्रियते ॥ ५३ ॥ 'उग्रैः सुखस्थैरथवा मृतिस्थैः क्षीणेन्दुलग्ने मृतिरष्टवर्षैः' ।—क्षीणेन्दौ लग्नगते चतुर्थगतैरष्टमगतैर्वा पापैर्जातोऽष्टवर्षैर्म्रियते ॥५४॥ 'भौमे विलग्ने यदि वा शशाङ्के सूर्ये स्मरस्थे मृतिरष्टवर्षैः' ।—भौमे चन्द्रे वा लग्नगते सूर्ये सप्तमगते सति तदा जातस्याष्टवर्षान्मृत्युर्भवति ॥ ५५ ॥ 'द्यूने रवावंशपतिः सराहुश्चन्द्रेऽष्टवर्षाद्‍शुभेक्षिते च' ।—लग्नात्सप्तमगते सूर्ये चन्द्रे पापदृष्टे सति नवांशाधिपो राहुसहितश्चेज्जातमष्टवर्षैर्हन्ति ॥ ५६ ॥ 'जन्माधिपोऽर्कः सशनिर्मृतिस्थः शुक्रेक्षितो राशिमिताब्दमृत्युः' ।—जन्मलग्ने सिंहे सति तदधिपः सूर्यः शनिसहितः शुक्रदृष्टोऽष्टमगतश्चेज्जातमष्टवर्षैर्हन्ति ॥ ५७ ॥ 'चन्द्रांशके लग्नपतिस्तु पापश्चन्द्राव्यये क्रूरदृशा नवाब्दात्' ।—लग्नाधिपः पापश्चन्द्रलग्नाद्द्वादशस्थानगतश्चेज्जातं नवाब्दैर्हन्ति ॥ ५८ ॥ 'पापेक्षिते केन्द्रगते भुजङ्गे मृतिर्दशाब्दादुत षोडशाब्दात्' ।—लग्नकेन्द्रे पापेक्षितो राहुर्यदा तिष्ठति तदा जातं दशाब्दात्षोडशाब्दाद्वा हन्ति ॥ ५९ ॥ 'राहुः स्मरस्थो रविचन्द्रदृष्टः शुभैरदृष्टोऽन्तकृदर्कवर्षात्' ।—लग्नात्सप्तमगतश्चन्द्ररविभ्यां दृष्टः शुभग्रहैरदृष्टो राहुर्द्वादशाब्दाज्जातं हन्ति ॥ ६० ॥ 'दद्यात्क्रमादात्मसहोत्थबन्धुपुत्रात्तधर्मायगदेवमन्त्री । मूर्च्छाः स्ववेदाः प्रकृतिः शतं च खाब्धिश्च षष्टिः खगुणा इतीत्थम्' ।—लग्नात्तृतीयचतुर्थपञ्चमसप्तमनवमैकादशस्थानगते जीवे सति क्रमेणैकविंशतिचत्वारिंशदेकविंशतिः शतं

चत्वारिंशत्षष्टित्रिंशद्वर्षाणि जीवेत् ॥ देवकीर्तिः—'एवं सर्वप्रयत्नेन जायमानस्य देहिनः । होराशास्त्रेषु केन्द्राणि चिन्तनीयानि तद्यथा ॥ चिन्तयेज्जायमानस्य स्थानं रात्रिषु नित्यशः । बृहस्पतिर्नृणां जीवस्तथा नित्यं बृहस्पतिः' इति ॥ ६१ ॥ 'एकांशकस्थौ यमभूमिजौ चेन्मात्रा परित्यज्यत एव जातः' ।—प्रसवकाले शनिकुजावेकांशस्थौ यदि तदा जातो मात्रा परित्यज्यते । अथवा यदा लग्नाद्दशमैकादशस्थौ शनिकुजौ तदा मात्रा परित्यज्यते ॥ तदाह देवकीर्तिः—'क्रियते पापैर्दृष्टे शशिनि विलग्ने कुजेऽस्तगे त्यक्तः । लग्नात्स्वलाभगतयोर्वसुधासुतमन्दयोरेव' इति ॥ ६२ ॥ 'सोमः स्मरे वक्रयमौ त्रिकोणे त्यक्तोऽम्बया जीवति जीवदृष्टे' ।—लग्नात्सप्तमस्थे चन्द्रे त्रिकोणगतयोः कुजशनैश्चरयोः जातो मात्रा परित्यज्यते । तत्र गुरुः पश्यति चेद्दीर्घजीवी स्यात् ॥६३॥—'जीवार्कचन्द्रा निचये यदि स्युः सुतो विलग्नात्स परेण जातः । लग्ने शनौ लग्नशशाङ्कशुक्राः शुभैरदृष्टाश्च तदान्यजातः' ।—जन्मकाले लग्नादुपचयसंज्ञकेषु त्रिषड्दशमैकादशस्थानेषु गुरुरविचन्द्रास्तिष्ठन्ति तदा परेण जातः' । लग्ने शनौ स्थिते लग्नशशाङ्कशुक्रान् शुभग्रहा यदा न पश्यति तदापि परेण जात इति वदन्ति ॥६४॥ 'कुजः शनिर्वा व्ययगोऽक्षिहन्ति वामं कुजो दक्षिणमक्षि मारिः' ।—प्रसवकाले लग्नाद्द्वादशगतः शनिः दक्षिणं नयनं हन्ति । तत्रस्थः कुजो वामं नयनं हन्ति ॥ ६५ ॥ 'व्यये रवीन्दू युगपत्पृथग्वा नेत्रे हरेतामपसव्यमन्ये । षड्छिद्रगाश्चापि हरन्ति पापाः सव्यं रिपौ दक्षिणमष्टमे च' ।—लग्नाद्द्वादशस्थितौ रवीन्दू युगपच्चेदुभे नेत्रे हरेताम् । लग्नाष्टमगाः पापा दक्षिणमक्षि घ्नन्ति । त एव षष्ठगताश्चेद्वामं घ्नन्ति ॥ ६६ ॥ 'वक्रो धने चेन्निधनेऽर्क इन्दुः षष्ठे व्यये मन्दगतिस्तदान्धः' ।—लग्नाद्द्वितीयस्थः कुजः अष्टमस्थो रविः षष्ठस्थश्चन्द्रः द्वादशस्थः शनिः यदा तदा

जातोऽन्धः स्यात् ॥ ६७ ॥ 'षष्ठाष्टमे दृष्टिहरः सपापश्चन्द्रोऽपि तद्वत्कफवातपित्तैः' ।—लग्नात्षष्ठेऽष्टमे वा पापयुक्तश्चन्द्रः कफवातपित्तयोगैर्दृष्टिं हन्ति ॥ ६८ ॥ 'लग्नाष्टमे सौरियुतोऽपि चन्द्रो दृष्टिं हरेच्छ्लेष्मविकाररोगैः' ।—जननलग्नादष्टमे सौरियुतश्चन्द्रः श्लेष्मविकारयोगैर्दृष्टिं हरेत् ॥ ६९ ॥ 'युक्ता ग्रहा दक्षिणवामभागे चिह्नं विदध्युर्व्रणमत्र पापाः' ।—जननलग्ने दृश्यादृश्यराशिषु षट्सु पापा मिलिताश्चेद्दक्षिणवामभागे व्रणं विदध्युः ॥७०॥ 'त्रिलाभलग्नेषु शशी सपापः कर्णापहः पापदृशा तु सद्यः' ।—लग्नात्तृतीयैकादशेषु सपापः शशी पापदृष्टश्चेत्कर्णं हन्ति ॥७१॥ 'क्रूरेक्षितौ पञ्चमधर्मसंस्थौ पापौ विधत्तः श्रवणोपघातम्' ।—पञ्चमनवमराशौ पापौ क्रूरेक्षितौ चेत् श्रवणोपघातं कुरुतः ॥ ७२ ॥ 'सव्यं सुतर्क्षे नवमेऽपसव्यं शुभं शुभर्क्षे शुभदर्शनेन' ।—लग्नात्पञ्चमस्थः पापः क्रूरदृष्टश्चेत्सव्यं कर्णं हरेत् । नवमस्थः पापः क्रूरग्रहदृष्टश्चेद्दक्षिणं कर्णं हरेत् ॥ वृषकर्कटादिषु शुभराशिषु स्थितयोस्तयोरेव पापग्रहयोः शुभदर्शने सति कर्णबाधा नास्ति ॥ ७३ ॥ इति लग्नयोगास्त्रिसप्ततिः ॥

अथाष्टादश चन्द्रयोगा उच्यन्ते—''क्रूरान्तरेऽर्कः शुभदैरदृष्टो हन्याच्छशी वा जननीं सगर्भाम्' ।—क्रूरग्रहमध्यगतः शुभैश्च दृष्टश्चन्द्रः सगर्भां जननीं हन्यात् । शेषास्त्वर्कयोगे वक्ष्यन्ते ॥१॥ 'यत्र स्थितस्तत्र यमारदृष्टश्चन्द्रः स्त्रियं हन्ति शुभैरदृष्टः' ।—यस्मिन्राशौ शनिभौमाभ्यां दृष्टः शुभैरदृष्टश्चन्द्रस्तिष्ठति सतु पुनस्तद्राशिं यदा प्राप्नोति तदा जननीं हन्यात् ॥ २ ॥ देवकीर्तिः—'यत्रस्थस्तत्रस्थो रुधिराङ्गशनैश्चरेक्षितश्चन्द्रः । जननीमृत्युं कुर्यान्नतु सौम्यनिरीक्षितः सद्यः' इति ॥ ३ ॥ 'नवाष्टसप्तान्यतमे शशाङ्कात्सर्वेऽपि पापाः सुतमातृमृत्युः' ।—चन्द्रयुक्तराशेर्नवाष्टसप्तमान्यतमस्थानगताः सर्वे पापग्रहाः सुतजनन्योर्मृ-

त्युकरा भवन्ति ॥ ४ ॥ 'चन्द्रात्स्मरे मातृवधाय पापाः सौमाद्रविर्वा दशमे सपापः' ।—चन्द्रयुक्तराशेः सप्तमगताः पापाः मातरं हन्युः । सौमादिति । सोमयुक्तराशेर्दशमं गतः पापयुक्तो रविर्मातुर्मरणाय भवति ॥ ५ ॥ 'इन्दोस्त्रिकोणे रविजो निशायां शुक्रात्कुजो वाह्नि पापदृष्टः । मातुर्विघाताय कुजार्किमध्ये लग्ने शशी मातृहरोऽष्टमेऽर्के' ।—चन्द्रयुक्तराशेः पञ्चमनवमयोरन्यतरस्मिन् शनिस्तिष्ठति तदा रात्रौ प्रसूतिश्चेन्मातुर्मरणाय भवति । अथवा यदि कुजशनैश्चरयोर्मध्यगतो भूत्वा चन्द्रो लग्ने तिष्ठति तदाष्टमस्थो रविश्चेज्जननीमृत्युं कुर्यात् । शेषस्तु शुक्रयोगे वक्ष्यते ॥ ६ ॥ 'जन्माष्टषड्द्वादशसप्तमस्थैः क्रूरैस्तु माता म्रियते सपुत्रा' ।—जन्माष्टषड्द्वादशसप्तमस्थैः क्रूरैः माता पुत्रेण सह म्रियते ॥ ७ ॥ 'जन्माष्टमद्यूनगतेषु तेषु जीवेत्सुतस्तज्जननी विनश्येत्' ।—प्रसूतिकाले जन्माष्टमसप्तमगतेषु पापेषु जातः सुतो जीवेत्। माता म्रियते ॥८॥ 'रिपुस्मराष्टव्ययजन्मभस्थाः पापाः पुनर्मातुलमृत्युदाः स्युः' ।—प्रसूतिकाले सप्तमषष्ठाष्टमद्वादशजन्मगताः पापग्रहा मातुलमृत्युदा भवन्ति ॥ ९ ॥ 'यत्र स्थितस्तत्र पुनः समेतश्चन्द्रो विपत्त्यै रविभौममध्ये' ।—रविभौममध्यगतो भूत्वा चन्द्रो यत्र राशौ स्थितस्तमेव राशिं चन्द्रे पुनः प्राप्ते सति स म्रियते ॥ १० ॥ 'नरर्क्षलग्नेऽर्ककुजार्किदृष्टश्चन्द्रः पुनस्तत्रगतो निहन्ति' ।—नरराशिर्नरर्क्षं मिथुनकन्यातुलाकुम्भेष्वन्यतमेऽर्के कुजार्किदृष्टे चन्द्रे स्थिते सति तदा जातः पुनस्तद्राशिं चन्द्रो यदा प्राप्नोति तदा म्रियते ॥ ११ ॥ क्रूरैर्युतो राहुरवेक्षते चेत्क्षीणेन्दुमल्पैर्दिवसैः स नश्येत्' ।—क्रूरग्रहयुक्तो राहुर्यदा क्षीणचन्द्रं पश्येत्तदा जातोऽल्पैर्दिवसैर्नश्येत् ॥ १२ ॥ 'जामित्रगौ भौमरवी शशाङ्काद्रोगाद्यः सप्तदिनं च जीवेत्' ।—शशाङ्कयुक्तराशेः सप्तमराशिस्थाने भौमादित्यौ स्थितौ चेज्जातस्य रोगः स्यात् । स

सप्तदिनं जीवेत् ॥ १३ ॥ 'रवौ स्थिते चन्द्रमसस्त्रिकोणे व्याधिं गतो विंशतिवासरान्तात्' ।—चन्द्रयुक्तराशेः पञ्चमनवमयोरन्यतरस्मिन्स्थिते रवौ जातो विंशतिवासरान्तः जीवति ॥ १४ ॥ 'एकर्क्षगैश्चन्द्रकुजार्कजीवैस्तथैव जीवक्षितिजेन्दुमन्दैः' ।—एकराशिगतैश्चन्द्रकुजार्कजीवैर्वा तथैव जीवक्षितिजेन्दुमन्दैर्वा पञ्चभिर्वर्षैर्म्रियते ॥ १५ ॥ तथाच देवकीर्तिः—'रविचन्द्रभौमगुरुभिः कुजगुरुसौरीन्दुभिस्तथैकस्थैः । रविशशिभौमशशाङ्कैर्मरणं खलु पञ्चभिर्वर्षैः' इति ॥ १६ ॥ 'मेषादिभेषु क्रमशोऽष्टनन्दद्वाविंशतिश्चाकृतिभूतचन्द्राः । वेदास्त्रयोविंशधृतिर्नखाश्च मूर्च्छा दिशो मृत्युकराश्च भागाः । तद्भागसंस्थः प्रतिराशिचन्द्रस्तत्संख्यवर्षैर्मरणाय सूनोः' ।—प्रसवकाले मेषस्याष्टमे भागे वृषभस्य नवमे भागे मिथुनस्य द्वाविंशे भागे कर्कटस्य द्वाविंशे भागे सिंहस्य पञ्चमे भागे कन्यायाः प्रथमे भागे तुलायाश्चतुर्थभागे वृश्चिकस्य त्रयोविंशे भागे धनुषश्चाष्टादशे भागे मकरस्य विंशेभागे कुम्भस्यैकविंशे भागे मीनस्य दशमे भागे च स्थितः क्रूरयुक्तेक्षितश्चन्द्रस्तत्तद्भागसमसंख्यैरब्दैर्जातं हन्ति ॥ १७ ॥ 'कुजार्किदृष्टः ससुतर्क्षसंस्थः सौम्यैरदृष्टश्च शशी नवाब्दात्' ।—बुधक्षेत्रभूते मिथुने कन्यायां स्थितः कुजरविभ्यां दृष्टः शुभग्रहैरदृष्टश्चन्द्रो नवाब्दान्मारयति ॥ १८ ॥ इति चन्द्रयोगा अष्टादश ॥

अथ चन्द्रेण भुक्तकालारिष्ट उच्यते—'बलिग्रहस्थानगते शशाङ्के जन्मागते वा तनुमागते वा । समग्रवीर्ये बहुपापदृष्टे वर्षोत्परं मृत्युरनुक्तकाले' ॥—पूर्वोक्तेषु सुतारिष्टयोगेषु कर्णारिष्टनयनारिष्टयोगेषु च यो ग्रहो बलवान् यस्मिन्राशौ तिष्ठति पुनस्तस्मिन्राशौ समग्रवीर्यश्चन्द्रः पापग्रहदृष्टः सन् यदा प्राप्नोति तदा मरणमिति वक्तव्यम् । अथवा तादृशश्चन्द्रो लग्नराशिं यदा

प्राप्नोति तदा मरणमिति वक्तव्यम् । अथवा तादृशश्चन्द्रः कर्कटराशिं यदा प्राप्नोति तदा मरणमिति । सर्वत्र वत्सरात्परमिति वेदितव्यम् ॥ ❀ ॥ अथ लग्नचन्द्रयोगा उच्यन्ते । 'लग्नाच्छशाङ्काद्बहवस्तृतीये पापा यदि स्युः सहजप्रणाशः' ।—जन्मलग्नाच्चन्द्रलग्नाद्वा तृतीयराशौ बहवः पापग्रहाः स्थिता यदि तदा भ्रातॄणां मरणं भवति ॥ १ ॥ तथाह वसिष्ठः—'भ्रातृस्थाने यदि क्रूरा भ्रातृन्घ्नन्ति न संशयः । क्रूरेक्षिताः क्षणाद्घ्नन्तुः शुभदृष्टेऽष्टवत्सरात् ॥ लग्नचन्द्रौ निरीक्षन्ते क्रूराः शुभविवर्जिताः । पितुर्मरणदाः प्रोक्ता न केन्द्रे देवपूजिते' इति ॥ नृसिंहस्तु—'लग्नादष्टमगं चन्द्रं लग्नं चन्द्रात्तथाष्टमम् । क्रूरग्रहा निरीक्षन्ते जातस्य मृतिसूचकाः' इति । 'चन्द्रोदयेशौ मृतिषट्व्ययस्थौ मृडावधो राशिसमैस्तु वर्षैः' ।—चन्द्रलग्नाधिपतिर्जन्मलग्नाधिपतिश्च लग्नादष्टमे षष्ठे द्वादशे वा स्थितौ भानास्तंगतौ यदा तदा जातस्य तत्तत्स्थानराशिसमसंख्यैर्वर्षैर्वधो भवति ॥ २ ॥ 'इन्दुं विलग्नं च गुरुर्न पश्येद्वार्कयुक्तं शशिनं च जीवः । परेण जातं प्रवदन्ति सन्तश्चन्द्रेण पापे दिननाथयुक्ते' ।—जन्मलग्नं चन्द्रलग्नं न यदा गुरुर्न पश्येत्तदा जारजातमाहुः । अथवा रवियुक्तं चन्द्रं गुरुर्न पश्येत्तदापि जातं जारजातमाहुः । अथवा रविसहिते चन्द्रे पापग्रहयुक्ते सति तदापि परजातं वदन्ति ॥ ३ ॥ 'होरेशजन्मेशनवांशनाथाः सूर्योपगाः कैश्चन मृत्युरब्दैः' ।—जन्मलग्ननाथश्चन्द्रलग्ननाथो नवांशनाथश्च सूर्येण सहिता यदि तदा जातं कतिपयैरब्दैर्मारयन्ति ॥ ४ ॥ 'लग्नाद्विधोर्वा नवबुद्धिराशिं गते शनौ क्रूरयुतेऽपि तद्वत्' ।—मातापित्ररिष्टयोगेषु जन्मलग्नाच्चन्द्रलग्नाद्वा पञ्चमे नवमे वा क्रूरयुक्ते शनैश्चरे च स्थिते सति जातस्य मृतिर्भवति ॥ ५ ॥ इति लग्नचन्द्रयोगाः ॥ ❀ ॥ अथादित्ययोगा उच्यन्ते—'क्रूरान्तरेऽर्कः शुभदैरदृष्टो हन्याच्छशी वा

जननीं सगर्भाम्' ।—जननलग्नकाले यत्र कुत्र वा रविः पापमध्यगतः शुभैरदृष्टश्चेत्सगर्भां जननीं हन्यात् ॥ १ ॥ 'सूर्याष्टमे भौमयमौ तु युक्तौ सौम्यैरदृष्टौ पितुरत्ययाय' ।—सूर्ययुक्तराशेरष्टमस्थाने शुभग्रहदृष्टिरहितौ भौमशनैश्चरौ स्थितौ चेत्तदा जातः पितरं हन्ति ॥ २ ॥ 'भौमार्किदृष्टोऽह्नि मध्यगो वा ताभ्यां युतो वा सविता पितृघ्नः' ।—अह्निजातस्य भौमशनैश्चरेक्षितो वा तयोर्मध्यगतो वा ताभ्यां युतो वा रविः पितृघ्नो भवति ॥ ३ ॥ 'क्रूरेण युक्तश्चरराशिसंस्थस्तातं रविर्हन्ति विषाम्बुशस्त्रैः' ।—प्रसवकाले मेषादिचरराशिगतः क्रूरग्रहयुक्तो रविर्विषशस्त्रजलैस्तातं हन्ति ॥ ४ ॥ 'सूर्यश्चरर्क्षेऽह्नि भौमदृष्टो विदेशयातं पितरं व्यनक्ति' ।—दिवाजातस्य भौमदृष्टश्चरराशिगतः सूर्यः पितरं देशान्तरगतं व्यनक्ति ॥ ५ ॥ देवकीर्तिस्तु—'स्थिरराशौ प्रजातो यः पिता तस्य गृहे स्थितः । चरराशौ प्रजातस्य पिता दूरदिशि स्थितः ॥ उभयत्र प्रजातस्य ग्रामान्ते तु पिता स्थितः । रविराशि प्रकृत्यैव फलमेवमुदाहृतम्' इति ॥—'यत्र स्थितस्तत्र यमारदृष्टः प्राग्जन्मनस्तातविनाशकोऽर्कः' ।—सूर्यो यत्र तिष्ठति तत्र राशौ मन्दभौमाभ्यां दृष्टो युक्तो वा रविश्चेज्जन्मतः प्राक्पितृशोको भवति ॥ ६ ॥ 'मुक्तः शुभैर्भौमयमान्वितोऽर्कः स्याच्चेत्पिता तस्य पिता च नष्टः' ।—शुभग्रहैर्मुक्तो भौमशनिभ्यां युक्तो रविः पितरं पितामहं च हन्ति ॥ ७ ॥ 'पापर्क्षगौ सूर्यविधू त्रिकोणे पापौ पितुर्बन्धनरोगदौ तौ ।—पापर्क्षगाविति । कृष्णपक्षे कर्कराशिः पापयुक्ते बुधे कन्यामिथुने मन्दकुजयोः क्षेत्राणि च पापर्क्षाणि तेषु गतौ सूर्यविधू भवतः सूर्यात्पञ्चमनवमगतौ पापग्रहौ पितुर्बन्धनरोगदौ स्याताम् ॥ ८ ॥ इत्यष्टादित्ययोगाः ॥❀॥ अथ सौम्ययोगा उच्यन्ते—'सौम्यैरदृष्टो रविचन्द्रयुक्तो बुधो हिनस्त्येव हि रुद्रवर्षैः' ।—जननकाले यत्रतत्रस्थितो बुधः र-

विना चन्द्रमसा च युक्तः सौम्यैः शुभग्रहैरदृष्टो रविचन्द्राभ्यां युक्तो बुधो जातमेकादशाब्दैर्हन्ति ॥ इति बुधयोगः ॥ ॥ अथ शुक्रयोगा उच्यन्ते—'अत्रैव चन्द्रं प्रविहाय शुक्रे पापान्तरस्थे म्रियते सगर्भा' ।—अत्रैव चन्द्रं प्रविहायेति चन्द्रयोगे व्याख्यातम् । जननकाले यत्र कुत्र वा शुक्रः पापग्रहयोर्मध्यगतः शुभैरदृष्टश्चेत्सगर्भां हन्यात् ॥ १ ॥ 'शुक्राद्रविः पञ्चमगः समन्दो मन्देक्षितो वा मरणाय मातुः' ।—शुक्रात्पञ्चमस्थानस्थो रविः मन्देन निरीक्षितो युक्तो वा मातरं हन्ति ॥ २ ॥ 'शुक्रात्कुजो वाहनि पापदृष्ट' इति । यदा शुक्रात्पञ्चमनवमयोरन्यतरस्मिन्पापयुक्तः कुजस्तिष्ठति तदा दिवाप्रसूतिश्चेन्मातरं हन्यादिति शेषः ॥ ३ ॥ तदाह देवकीर्तिः—'चन्द्रात्त्रिकोणराशौ रविजो मातुर्वधं दिशति रात्रौ । शुक्रात्तथैव दिवसे भौमः पापेन संदृष्टः' इति ॥ इति शुक्रयोगास्त्रयः ॥ ❀ ॥ अथ शनियोगा उच्यन्ते—'भूसूनुदृष्टो निशि चेचरस्थो मन्दो विदेशं गत एव तातः । शनैश्चरस्थो निशि रक्तयुक्तो वक्ति व्यतीतं पितरं विदेशे' ।—रात्रौ जातस्य चरराशिगतः शनिः भौमदृष्टश्चेत्पिता देशान्तरस्थो भवति । अत्रैव योगे भौमसहितश्चेज्जातस्य पितरं देशान्तरे मृतं सूचयति ॥ इति शनियोगौ ॥

अथ सर्वग्रहानुक्तारिष्टकाला उच्यन्ते—'सूर्यादिकानामयनान्मुहूर्तोद्दिनाद्धिमासार्धतदर्धवर्षात्' ।—मातापित्ररिष्टयोगेष्वरिष्टकारको ग्रहः सूर्यश्चेत्षण्मासान्मरणं लक्ष्यते । चन्द्रश्चेन्नाडीभ्याम् । भौमश्चेद्दिवसाद्बुधश्चेद्द्विमासाद्गुरुश्चेन्मासाच्छुक्रश्चेत्पक्षाच्छनिश्चेद्वर्षान्मरणं लक्ष्यत इति ॥ तदाह देवकीर्तिः—'अयनक्षणदिवसर्तुमासपक्षतदर्धशरदो दिनेशाद्यात्' इति ॥ तथाह कपिलः—'अयनक्षणरामर्तवो मासोऽर्धं च समाश्च भास्करात्' इति ॥ 'लग्नाद्ग्रहाधिष्ठितराशिसंख्यानिभैः स्वकालैरपि वा दिने-

स्यात्'—मातापित्राद्यरिष्टयोगेष्वरिष्टकारको ग्रहो लग्नाद्यावति राशौ तिष्ठति तद्राशिसंख्यागुणितैरयनादिकालैर्व्यक्तिकरो भवति। 'यावत्समोऽरिष्टकरो विलग्नात्तावत्समामासदिनैर्मृतिर्वा'—मातापित्रिरिष्टयोगेष्वरिष्टकरो यत्र तिष्ठति तत्संख्याकैर्वर्षैर्मासैर्दिनैर्वा मृतिः स्यात्। इति सर्वग्रहानुक्तारिष्टकालाः ॥ ॥

अथ स्त्रीजातकफलं होरासारे—'स्त्रीपुंसयोः समानं योगादिदशाफलं च पूर्वोक्तम्। यद्यदयोग्यं स्त्रीणां तत्तत्सर्वं वदेत्स्वनाथेषु॥ वैधव्यं निधनगृहे पतिसौभाग्यं सुखं च जामित्रे। सौन्दर्यं लग्नगृहे विचिन्तयेत्पुत्रसंपदं नवमे॥ एषु स्थानेषु युताः सौम्याः शुभदा बलान्विता ज्ञेयाः। क्रूरास्तु नेष्टफलदा भवनेशविलक्षिताः सदा चिन्त्यम्॥ पुरुषर्क्षे पुरुषांशे लग्नेन्द्वोः पापयुक्तयोर्जाता। पुरुषाकृतिशीलयुता भर्तुरयोग्याऽसमंजसा कन्या॥ समराशौ समभागे लग्नेन्द्वोः स्त्री गुणान्विता कन्या। सौम्ययुते दृष्टे वा सुभगा साध्वी सुविख्याता॥ लग्नेन्द्वोर्यो बलवान् तस्य त्रिंशांशकैः फलं वाच्यम्। त्रिंशांशेशो बलवान् तत्प्रोक्तानि फलानि सम्यगायान्ति॥ भौमर्क्षे भौमांशे कन्या मृतिसूचिका गुणैर्हीना। मन्दांशस्थाः प्रेष्या दुःशीला बहुविधानारी॥ पुत्रवती जीवांशे बहुच्ययार्था पतिव्रता कन्या। सौम्यांशे बहुमाया प्रलिनाचाराल्पसूतिः स्यात्॥ कन्याजनने कन्या शुक्रांशे जारभोगसंतुष्टा। सितभवने भौमांशे दुष्टा कलहप्रिया पतिद्वेष्या॥ मन्दांशे च पुनर्भूर्मृतप्रजा रोगसंयुता नित्यम्। रूपान्विता गुणाढ्या जीवांशे भर्तृपुत्रसंतुष्टा॥ सौम्यांशे कुचरित्रा काव्यकलागेयवाद्यसंतुष्टा। शुक्रांशे भोगवती विदग्धदयिता जगत्प्रियाख्याता॥ पापयुते बलहीने त्रिंशांशेनैव पुष्टबलमेति। बुधभवने भौमांशे कन्या जारप्रियाल्पपुत्रा स्यात्॥ मन्दांशे

क्लीनसमा मृतप्रजा मान्ययुक्ता स्यात् । साध्वी पतिप्रिया वा जीवांशे क्षेत्रतुङ्गजीवे च ॥ सौम्यांशे तु कलाढ्या पशुधनभोगान्विता तु शुक्रांशे । शनिभवने भौमांशे स्वच्छन्दा कामिनी विनष्टसुता । मन्दांशे पतिहीना कृच्छ्रान्नेनोपजीवनं लभते ॥ अल्पसुता क्षीणायुर्जीवांशे शिल्पिनी बुधस्यांशे । वन्ध्या मृतप्रजा वा शुक्रांशे स्त्री सुमुमुक्षुकामा वा ॥ वाचाटा रविभवने कुजभागे जारिणी विदेशरता । कुशला कृशा दरिद्रा मन्दांशे जारवल्लभा ज्ञेया ॥ पुरुषायति जीवांशे सौम्यांशे कामचारिणी कुलटा । कुपितप्रियाल्पसुता शुक्रांशे नित्यनिरोगिणी भवति ॥ जीवर्क्षे भौमांशे कन्यापरिचारिणी सुविख्याता । सौरांशे सुदरिद्रा कन्याजननी स्वतन्त्रनिरता स्यात् ॥ जीवांशे तु धनाढ्या सौम्यांशे लोकपूजिता ललना । पुत्रवती शुक्रांशे सद्गुणयुक्ता पतिव्रता साध्वी ॥ मन्दर्क्षे भौमांशे दासी कुलटा मृतप्रजा कन्या । मन्दर्क्षे मन्दांशे नीचा चारित्रदुर्भगा वनिता ॥ भर्तृप्रिया च सुभगा जीवांशेऽनेकनामविख्याता ॥ भग्नव्रता च कुलटा बहुमाया सोमजस्यांशे । शुक्रांशे प्रसुशीला वन्ध्या चारित्रलोचना वनिता । त्रिंशांशकफलमेवं वक्तव्यं दैवविद्भिरबलायाः ॥ चन्द्रार्कस्फुटयोगात्त्रिंशांशफलं विनिर्दिशेत्तस्याम् । लग्नेन्द्वोर्योगवशात्त्रिंशांशफलं विनिर्दिशेदथवा ॥ शुद्धेऽस्ते दुर्बले यस्याः पापग्रहनिरीक्षिते । सौम्यग्रहदृशा हीने भर्ता कापुरुषो भवेत् ॥ बुधे मन्दयुतेऽस्ते च पतिः क्लीनसमो भवेत् । वन्ध्या वा दुर्भगा वापि सा च नित्यं प्रवासिनी ॥ सप्तमे चरराशौ च तदीशे चरभांशके । भर्ता प्रवासशीलः स्यात्स्थिरभे स्वगृहे भवेत् ॥ अस्तगेऽर्के पापदृष्टे तथोत्सृष्टा भवेत्स्वयम् । सप्तमस्थे कुजे तद्बाल्ये सा विधवा भवेत् ॥ भर्ता क्रोधपरो वापि ह्यन्योन्यप्रतिमाप्नुयात् ॥ मन्दे सप्तमराशिस्थे तथा शत्रुनिरीक्षिते । कन्यैव विधवा भूत्वा रा-

जानमधिगच्छति ॥ द्यूने शुभाशुभैर्युक्ते पुनर्भूः सा भविष्यति । अस्तगावारमन्दौ चेत्पापर्क्षे विधवा भवेत् । मासि वर्षेऽथवा राहौ भ्रान्ता गौरिव गच्छति । बलहीनेऽस्तगे पापे सौम्यखेटानिरीक्षिते ॥ भर्त्रा वियुज्यते नारी नीचारिस्थे च वैरिणि । अन्योन्यांशौ सितारौ चेज्जारासक्ता भवेद्वधूः । तद्वच्च सप्तमे चन्द्रे दुश्चारी पतिनासह । मन्दारार्कविलग्नस्थौ शशिशुक्रौ यदा तदा । वन्ध्या भवति सा नारी पञ्चमे पापदृग्युते ॥ अस्तराश्यंशगे भौमे सूर्यजेस्तांशगेऽपि वा । सौरे कुजे क्रमाद्दृष्टे व्याधियोनिश्च दुर्भगा ॥ अस्तर्क्षे शुभदृष्टे च शुभस्यांशे शुभेक्षिते । चारुश्रोणी प्रिया भर्तुर्वल्लभा च भवेद्वधूः ॥ चन्द्रेऽस्ते स्वांशगे स्वर्क्षे मृदुस्वरवशः पतिः । भौमेऽस्ते स्वांशकक्षेत्रे स्त्रीलोलो निर्धनः पतिः ॥ सौम्येस्ते स्वांशकक्षेत्रे भर्ता विद्वान्भवेत्सुखी । जीवेऽस्ते स्वांशकक्षेत्रे गुणवान्विजितेन्द्रियः ॥ शुक्रेस्ते स्वांशकक्षेत्रे कान्तोऽस्या भाग्यवान्सुखी । मन्देस्ते स्वांशकक्षेत्रे वृद्धो मूर्खो भवेत्पतिः ॥ एवं सप्तमराशिस्थैर्ग्रहैर्नृणां वदेत्फलम् । अस्तराशेः फलं प्रोक्तं लग्नराशेः फलं तथा । फलं भवति दंपत्योर्बहुयोगफलाद्वदेत् ॥ सौम्यक्षेत्रोदये चन्द्रे सार्धं शुक्रेण सा वधूः । सुखी पितापतिद्वेष्ट्री नित्यमस्थिरचारिणी । चन्द्रज्ञौ यदि लग्नस्थौ कलाढ्या ब्रह्मवादिनी । शुक्रज्ञौ यदिलग्नस्थौ सौम्यस्थाने कुलान्वता । चान्द्रिचन्द्रसितालग्ने राहुसौम्यगुणैर्युता । जीवो लग्नेऽतिसंपन्ना पुत्रवित्तसुखप्रदा । क्षेत्रोच्चसंस्थिता लग्ने अशुभास्ते शुभप्रदाः । क्रूरेऽष्टमे च विधवा पापक्षेत्रे विशेषतः । निधनेशांसकपतेर्दशायां निश्चयं भवेत् । सौम्येऽष्टमस्थे कन्याया भर्तुः प्रागेव सा मृतिं । पापसौम्ययुते तस्मिन्समकाले तयोर्मृतिः । बलाबलं तयोर्ज्ञेयं पुरुषेण विजानता ॥ भाग्यस्थाने स्थिते सौम्ये सपापेऽस्तेऽष्टमेपि वा । भर्तृपुत्रसुतैः सार्धं दीर्घं कालं च जीवति ॥ धनुःकर्किमे लग्ने भर्तृपुत्रादिदुःखदा ।

सिंहालिवृषकन्यासु चन्द्रेतिष्ठति पञ्चमे । अल्पापत्यं विजानीयात्पुरुषेषु तथा वदेत् ॥ लग्नस्थाष्टमभागस्थैः पापैर्दुःखफलान्विता । सौम्यग्रहैरसंमिश्रं सर्वथा क्लेशमाप्नुयात् ॥ क्रूरग्रहे सुतगते बहुप्रसवमादिशेत् । कन्याप्रदानकालेषु प्रोक्तमार्गं विचिन्तयेत् ॥ इति होरासारशास्त्रे स्त्रीलक्षणजातकाध्यायः ॥

अथ लग्नारिष्टभङ्गा उच्यन्ते । सिद्धसेनीये—'संभूतलग्नारिष्टाः स्युर्भङ्गास्तेषां भवेद्यथा । योगानथ समासात्तान्वक्ष्ये प्राधान्यतस्ततः' इति ॥ नवनीतारिष्टे—'लग्ने स्फुटांशुः प्रबलः समस्तं निहन्त्यरिष्टं सुरराजमन्त्री' ।—जननलग्ने स्फुटांशुर्गुरुस्तिष्ठति चेत्समस्तारिष्टं हन्ति ॥ 'लग्नं शुभर्क्षं प्रबलैश्च सौम्यैर्दृष्टं समृद्धैर्विबलैश्च पापैः' ।—जननलग्नकाले यत्र कुत्रस्थिता अशुभग्रहाः दुर्बलाश्चेत्समृद्धैः शुभग्रहैश्चेद्दृष्टं शुभक्षेत्रं लग्नं समस्तारिष्टं हन्ति ॥ 'निघ्नन्त्यरिष्टं शुभवर्गसंस्थाः पापाश्च तत्स्थैश्च शुभैस्तु दृष्टाः' ।—जननकाले शुभवर्गसंस्थाः पापाः शुभवर्गसंस्थैः शुभैर्दृष्टाश्चेदरिष्टं निघ्नन्ति ॥ 'सौम्येक्षितः षट्त्रिभवेषु राहुः कर्कीवृषच्छागविलग्नगो वा । अगस्त्यसप्तर्षिवरोदयो वा योगास्त्रयोऽरिष्टहराः प्रदिष्टाः' ।—लग्नात्त्रिषष्ठैकादशस्थो राहुः सौम्येक्षितश्चेदरिष्टं हन्ति ॥ 'स्वस्थानगाः सर्वनभश्चरेन्द्रा निघ्नन्त्यरिष्टं सकलं क्षणेन' ।—जननकाले सर्वे ग्रहाः स्वस्थानगताश्चेत्सकलारिष्टं शीघ्रेण निघ्नन्ति ॥ 'न कोपि मृत्यावुदये च पापः केन्द्रे गुरुश्चाष्टशतायुरत्र' ।—लग्ने चाष्टमे च कोपि पापग्रहो नतिष्ठति चेत्केन्द्रे गुरुस्तिष्ठति चेज्जातस्याष्टशतायुर्भवति ॥ केन्द्रत्रिकोणाष्टमगा न पापाः शुक्रे गुरौ केन्द्रगते शतायुः' ।—लग्नचतुर्थपञ्चमसप्तमाष्टमनवमदशमेषु पापा न तिष्ठन्ति चेद्गुरुशुक्रौ केन्द्रगतौ चेच्छतायुर्भवति ॥ 'लग्ने भृगुः केन्द्रगतश्च जीवः छिद्रे न पापः परमायुरत्र' ।—लग्ने शुक्रः केन्द्रे गुरुः अष्टमे

पापा न तिष्ठन्ति चेत्तदा जातस्य परमायुर्भवति ॥ 'शुद्धेऽष्टमे कर्कटलग्नसंस्थौ शशाङ्कजीवौ गुरुभार्गवौ वा। पापेन केन्द्रे न हतस्त्रिकोणे जातो नरः स्यादजरोपमायुः' ।—कर्कटे चन्द्रगुरू वा गुरुशुक्रौ वा तिष्ठतः अष्टमे शुद्धे सति केन्द्रत्रिकोणेषु पापग्रहरहितेषु सत्सु तदा जातो नरः परमायुर्भवति ॥ 'कुलीरगौ पूर्णशशाङ्कजीवौ लग्ने चतुर्थे दशमे भवेताम् । धर्मस्थितौ शुक्रबुधौ च शेषाः लाभत्रिषष्ठेष्वमितं तदायुः' ।—कर्कटकराशिस्थौ पूर्णचन्द्रबृहस्पती लग्ने चतुर्थे दशमे वा स्थितौ चेन्नवमे शुक्रबुधौ वा स्थितौ चेत्त्रिषष्ठैकादशेषु पापग्रहास्तिष्ठन्ति चेत्तदा जातस्यामितायुर्भवति ॥ इति लग्नारिष्टभङ्गाः ॥

अथ चन्द्रारिष्टभङ्गाः—'केन्द्रे शतायुर्भृगुजे गुरौ वा रिष्टं च चन्द्रग्रहणं विनश्येत्' ।—लग्नादिकेन्द्रे गुरौ वा शुक्रे वा तिष्ठति सति जातः शतायुर्भवति । चन्द्रकृतारिष्टं च निहतं भवति ॥ 'एको बली जन्मपतिर्निहन्ति दृष्टः शुभैश्चन्द्रकृतं च रिष्टम्' ।—बली जन्मपतिरेकः शुभैर्दृष्टश्चेदरिष्टं हन्ति ॥ 'सर्वग्रहैर्दृष्टतनुर्हिमांशुरापूर्यमाणो विनिहन्त्यरिष्टम् । स्वात्युच्चभागे सुहृदंशके वा रिष्टं शशीहन्ति च शुक्रदृष्टः ॥' संपूर्णचन्द्रः सर्वग्रहदृष्टश्चेदरिष्टं हन्ति । अथवा स्वस्य परमोच्चे वृषभस्य तृतीये भागे मित्रांशे वा स्थितश्चन्द्रः शुक्रेण दृष्टश्चेदरिष्टं हन्ति ॥ 'षट्सप्तरन्ध्रे शशिनस्तु सौम्यः पापैरमिश्रश्च निहन्त्यरिष्टं । युक्तस्तु सौम्यैर्विनिहन्त्यरिष्टं चन्द्रःशुभत्र्यंशगतस्तथैव ॥' चन्द्रात्षष्ठे वा सप्तमे वा अष्टमे वा स्थितः शुभग्रहः पापैरयुक्तस्तैरदृष्टश्च चेदरिष्टं हन्ति । अथवा, यत्रकुत्र वा राशौ स्थितश्चन्द्रः शुभग्रहैर्युक्तश्चेदरिष्टं हन्ति । अथवा शुभग्रहद्रेष्काणस्थितश्चन्द्रः अरिष्टं हन्ति ॥ 'चन्द्रः शुभद्वादशभागगो वा राशीशदृष्टः शुभराशिगो वा । क्रूरर्क्षगो वा भवनेशदृष्टो नान्यैक्षितो हन्ति समस्तरिष्टम्' ।—शुभद्वादशांशे स्थितश्चन्द्रः अन्यैरदृष्टश्चेदरिष्टं हन्ति ।

तथा शुभराशौ स्थितश्चन्द्रः तद्राश्यधिपतिना दृष्टः अन्यैरदृष्टश्चेदरिष्टं हन्ति । तथा क्रूरराशौ स्थितोऽपि तद्राश्यधिपतिना दृष्टः अन्यैरदृष्टश्चेदरिष्टं हन्ति ॥ 'जन्माधिपो मित्रशुभेक्षितो वा सर्वेक्षितो जन्मपतिस्तनौ वा । होरेश्वरस्योपचये शशी वारिष्टं पृथक्चन्द्रकृतं निहन्ति' ।—जन्मलग्नाधिपतिः मित्रशुभेक्षितश्चन्द्रकृतारिष्टं हन्ति । सोपि सर्वेक्षितः लग्ने स्थितश्चेच्चन्द्रकृतारिष्टं हन्ति । लग्नाधिपस्योपचये स्थितः शशी सकृतारिष्टं हन्ति ॥ 'चन्द्राद्व्यये शुक्रबुधौ च लाभे पापा गुरुर्व्योम्नि च रिष्टनाशः । कृष्णे दिवा चेन्निशि शुक्लपक्षे रक्षेच्छशी तं रिपुरन्ध्रगोपि' ।—चन्द्राद्व्ययस्थाने शुक्रबुधौ तिष्ठतश्चेदरिष्टनाशो भवति । तथा चन्द्रादेकादशे पापास्तिष्ठन्ति चेत्तदारिष्टनाशो भवति । चन्द्राद्दशमस्थाने गुरुस्तिष्ठति चेत्तदारिष्टनाशो भवति । कृष्णपक्षे दिवाजातस्य लग्नात्षष्ठाष्टमस्थोपि चन्द्रः सकृतारिष्टं हन्ति । तथा शुक्लपक्षे रात्रावपि ॥ 'स्वोच्चे स्ववर्गे सुहृदां च वर्गे सौम्येक्षितोऽसद्भिरयुक्तदृष्टः । दृश्योऽप्यदृश्यः सुहृदां रिपूणां पूर्णः शशी हन्ति च सर्वरिष्टम्' ।—स्वोच्चे वा स्ववर्गे वा मित्रवर्गे वा स्थितः शुभग्रहैरीक्षितः अशुभग्रहैरयुक्तः अदृष्टश्च मित्रग्रहैर्दृष्टः रिपुग्रहैरदृष्टः पूर्णशशी सर्वारिष्टं हन्ति॥ 'संपूर्ण इन्दुर्गुरुशुक्रयुक्तः परैरदृष्टः स्वगृहे स्ववर्गे । स पञ्चमस्थोपि सुखाय मातुः पितुश्च तद्वत्खलु भास्करोपि' ॥—स्वराशौ वा स्वोच्चे वा स्थितः पूर्णचन्द्रः क्रूरग्रहैर्दृष्टः गुरुणा वा शुक्रेण वा युक्तश्चेत्पञ्चमस्थोपि सकृतारिष्टं हन्ति । तथा भास्करोऽपि पितुः सुखाय भवति ॥ 'दिवा सितार्कौ निशि चन्द्रमन्दौ युग्मोजसंस्थौ जननीं च तातम् । संरक्षतो व्यत्ययतस्तदन्यौ पितृव्यमातृष्वसृरक्षकौ तौ' ॥—दिवाजातस्य शुक्रार्कौ मातृपितृग्रहौ चन्द्रमन्दौ मातृष्वसृपितृव्यसंज्ञकौ भवतः । तथात्र रात्रिजातस्य चन्द्रमन्दौ मातृपितृग्रहौ सितार्कौ मातृष्वसृपितृव्यसंज्ञकौ । तौ युग्मजस्थौ

चेन्मातृपितृमातृष्वसृपितृव्याणां अरिष्टं निघ्नतः ॥ 'क्रूरेक्षितो वा परिविष्टखेटः शीर्षोदयस्थाः सकलग्रहा वा । जयी शुभः सौम्यनिरीक्षितो वा योगत्रयं हन्त्यखिलं च रिष्टम्' ॥—क्रूरेक्षितोऽपि जन्मपतिः परितो ग्रहैरावेष्टितश्चेन्नारिष्टं भवेत् । शीर्षोदयस्था इति सर्वग्रहाः शीर्षोदयसंज्ञकेषु मिथुनसिंहकन्यातुलावृश्चिककुम्भेषु स्थिताश्चेदरिष्टं घ्नन्ति । जयी शुभ इति । युद्धे जयी जन्मपतिः सौम्यनिरीक्षितश्चेत्तदरिष्टं हन्ति ॥ इति चन्द्रारिष्टभङ्गाः ॥

अथ अनफादियोगा उच्यन्ते—'शुभप्रदा ये त्वनफादियोगा निघ्नन्त्यरिष्टं बहवो यदि स्युः' ।—जन्मकाले शुभप्रदाः अनफादियोगा बहवस्तिष्ठन्ति चेदरिष्टं निघ्नन्ति ॥ ❀ ॥ अनफादियोगलक्षणमुक्तं कपिष्ठलेन—'हित्वार्कं सुनफानफादुरुधुराः स्वान्त्योभयस्थैर्ग्रहैः शीतांशोः कथितोऽन्यथा तु बहुभिः केमद्रुमो नेष्यते' ।—यदा चन्द्राद्द्वितीये कुजादिपञ्चग्रहेष्वन्यतमस्तिष्ठति चेत्तदा सुनफाख्यो योगो भवति । चन्द्राद्द्वादशेऽपि कुजादिपञ्चग्रहेष्वन्यतमस्तिष्ठति चेदनफाख्यो योगो भवति । चन्द्राद्द्वितीये द्वादशे च तेष्वन्यतमस्तिष्ठति चेद्दुरुधुराख्यो योगो भवति । अन्यथा तु केमद्रुमो भवति स नेष्टः ॥ लघुजातकेऽपि—'रविवर्जं द्वादशगैरनफा चन्द्राद्द्वितीयगैः सुनफा । उभयस्थितैर्दुरुधुरा केमद्रुमसंज्ञितोऽन्यथा भवति' इति । श्रुतकीर्तिस्तु—'चन्द्रचतुर्थैः सुनफा दशमस्थैः कीर्तिताऽनफा विहगैः । उभयस्थितैर्दुरुधुरा केमद्रुमसंज्ञितोऽन्यस्तु' ॥ इति अनफादियोगाः ॥ ❀ ॥

अथ चन्द्रादियोगा उच्यन्ते—'सौम्ये सराःरिनिधनेष्वधियोग इन्दोस्तस्मिंश्च भूपसचिवक्षितिपालजन्म । संपन्नसौख्यविभवा हतशत्रवश्च दीर्घायुषो विगतरोगभयाश्च जाताः' ॥—चन्द्रात्सप्तमषष्ठाष्टमेष्वन्यतमे बुधबृहस्पतिशुक्रेष्वन्यतमस्तिष्ठति चेत्तदा अधि-

योगो भवति । तस्मिञ्जातस्य फलं यथाक्रमं—चमूपः सचिवः क्षितिपालो भवति । अवशिष्टांशेन तद्गुणा उक्ताः ॥ १ ॥ 'लग्नादतीव वसुमान्वसुमान्शशाङ्कात्सौम्यग्रहैरुपचयोपगतैः समस्तैः' ।—जननलग्नादुपचयसंज्ञितेषु त्रिषडृशैकादशेषु बुधजीवसितास्तिष्ठन्ति चेत्तदातीव वसुमान्भवति । चन्द्रादुपचयेष्वेते तिष्ठन्ति चेद्वसुमान्भवति । एते योगाश्चन्द्रे प्रबले फलन्ति ननु दुर्बले ॥ तथाच होरासारे—'चन्द्रः क्षीणबलः सादनफादिफलं न सम्यगाधाति' इति । इति चन्द्रादियोगाः ॥ ❀ ॥ अथ वास्यादियोगा उच्यन्ते कल्याणवर्मणा—'सूर्याद्व्ययगैर्वाशी द्वितीयगैश्चन्द्रवर्जितैर्वेशी । उभयस्थितैर्ग्रहेन्द्रैरुभयचरीनामको योगः' इति । अस्यार्थः—सूर्याद्द्वादशस्थाने भौमादिपञ्चग्रहेष्वन्यतमस्तिष्ठति चेत्तदा वाशीयोगो भवति । तस्माद्द्वितीयेष्वन्यतमस्तिष्ठति चेत्तदा वेशीयोगो भवति । तस्माद्द्वितीयद्वादशयोर्ग्रहास्तिष्ठन्ति चेत्तदा उभयचरीयोगो भवति । इति वास्यादियोगाः ॥

अथ लग्नाधियोगा उच्यन्ते वृद्धयवनेन—'लग्नात्षष्ठमदाष्टमे यदि शुभाः पापैर्न युक्तेक्षिता मन्त्री दण्डपतिः क्षितेरधिपतिः स्त्रीणां बहूनां पतिः । दीर्घायुर्गदवर्जितो जितभयो लग्नाधियोगे स्थिते सच्छीलो यवनाधिराजकथितो जातः पुमान्सौख्यभाक्' इति । अस्यार्थः—लग्नात्षष्ठसप्तमाष्टमस्थानेषु शुभाः पापैर्न युक्तेक्षितास्तिष्ठन्ति चेत्तदा लग्नाधियोगो भवति । तत्र जातः क्रमान्मन्त्री दण्डपतिः क्षितेरधिपतिः स्त्रीणां बहूनां पतिर्भवति । अवशिष्टांशेन तद्गुणा उक्ताः । इति लग्नाधियोगाः ॥ ❀ ॥ अथ रुचकादिपञ्चयोगाः । होरासारे—'स्वोच्चस्वक्षेत्रगतैर्बलिभिः केन्द्रागतैः कुजाद्यैश्च । रुचको भद्रो हंसो मालव्यः शश इमे महायोगाः' इति । अस्यार्थः—स्वोच्चस्वक्षेत्रगता बलिष्ठा भौमबुधबृहस्पतिशुक्रशनैश्चराः केन्द्रस्थानेषु तिष्ठन्ति चेत्तदा क्रमाद्रुचकभद्र-

हंसमालव्यशशाङ्कसंज्ञका योगा भवन्ति ॥ इति रुचकादियोगाः ॥ ❀ ॥ अथ गजकेसरियोगः—'किं कुर्वन्ति ग्रहाः सर्वे लग्नकेन्द्रे बृहस्पतौ । गजयूथसहस्राणि निहन्त्येकोऽपि केसरी' ॥ ❀ ॥ अथ राजयोगादीनाह कपिष्ठलः—'स्वोच्चस्वत्रिकोणगैर्बलिष्ठैस्त्र्याद्यैर्भूपतिवंशजा नरेन्द्राः । पञ्चादिभिरन्यवंशजाता हीनैः सहिता न भूपालाः' इति । अस्यार्थः—स्वोच्चस्वक्षेत्रस्वत्रिकोणेषु बलिष्ठा ग्रहास्त्र्याद्यास्तिष्ठन्ति चेत्तदा राजवंशजातस्तु राजा भवति । पञ्चाद्यास्तिष्ठन्ति चेदन्यवंशजातो राजा भवति । ते ग्रहा नीचादिग्रहैः सहिताश्चेद्राजा न भवति । एते योगा भाववशाद्द्रष्टव्याः ॥ तदाह श्रीपतिः—'भावप्रवृत्तौ हि फलप्रवृत्तिः पूर्णं फलं भावसमांशकेषु । ह्रासः क्रमाद्भावविरामकाले फलस्य नाशः कथितो मुनीन्द्रैः' इति । एतज्जन्मादिषु द्रष्टव्यम् ॥ तथा च स एव—'जन्मप्रयाणव्रतबन्धचौलराजाभिषेकादिकरग्रहेषु । एवं हि भावाः परिकल्पनीयास्तैरेव योगोत्थफलानि तस्मात्' इति ॥ इति रिष्टभङ्गयोगाः समाप्ताः ॥

अथ ग्रहाणां बलाबलं विचिन्त्य फलं कल्पनीयमित्युच्यते । नवनीतारिष्टे—'येन ग्रहेण प्रबलेन योगाद्दृष्ट्या च मातापितृमृत्युरुक्तः । तत्स्थानयाते पितृमातृखेटे स्वस्थानगे वा मृतिरुग्रदृष्ट्या' । इत्युक्त्वा तेषां ग्रहाणां बलज्ञापनार्थं बलाध्यायो वक्ष्यते ॥ ❀ ॥ अथ तावद्राश्यादिबलमुच्यते शिवगुप्तेन—'प्रोक्तो राशिर्बलवांस्तस्माच्च बलान्विता भवेद्धोरा । होरायां द्रेकाणो द्रेकाणादंशको बलवान् ॥ अंशाद्द्वादशभागस्तस्मात्त्रिंशस्ततःपरं भागः । तस्माद्भागाल्लिप्ता लिप्तातो भेद इष्टोऽत्र' इति ॥ नवनीतारिष्टे—'लग्नं च लग्नस्थनवांशकं च चन्द्रं च चन्द्रस्थनवांशकं च । जीवाख्यराशिस्थितिगं च लग्नं बलाद्विचिन्त्यं परमं

बलिष्ठम्' इति ॥ ❀ ॥ अथ कालविशेषेण राशिबलमाह संग्रहकारः—'सिंहाद्या दिवसबलाः कुम्भधराद्या निशासु बलवन्तः । उत्तममध्यमविबलाः केन्द्रपणापोक्लिमोपगताः' इति । अस्यार्थः—सिंहाद्याः षड्राशयो दिवसबलाः । कुम्भाद्याः षड्राशयो रात्रिबलाः । केन्द्रगता उत्तमबलाः । पणफरगता मध्यमबलाः । आपोक्लिमगता विबलाः ॥ ❀ ॥ पणफरापोक्लिमलक्षणमुक्तम्—'केन्द्रादनन्तरो राशिरुक्तः पणफरो बुधैः । तदनन्तरराशिस्तु आपोक्लिम उदाहृतः' इति ॥ वराहमिहिरस्तु—'गोजाश्विकर्किमिथुनाः समृगा निशाख्याः पृष्ठोदया विमिथुनाः कथितास्त एव । शीर्षोदया दिनबलाश्च भवन्ति शेषा लग्नं समेत्युभयतः पृथुरोमयुग्मम्' इति । अस्यार्थः—वृषभमेषधनुःकर्कटमिथुनमकराः षड्राशयो रात्रिबलाः । मिथुनरहितास्त एव पञ्चराशयः पृष्ठोदयसंज्ञा भवन्ति । शेषा मिथुनकन्यातुलावृश्चिककुम्भमीना दिवाबला भवन्ति । मीनवर्जिताः षड्राशयः शीर्षोदयसंज्ञा भवन्ति । पृथुरोमयुग्मसंज्ञो मीनस्तु उभयतः पृष्ठतः शीर्षतश्च समेत्युदेतीति ॥ ❀ ॥ अथ ग्रहाणां नैसर्गिकबलम्—'मन्दारसौम्यवाक्पतिसितचन्द्रार्का यथोत्तरं बलिनः । नैसर्गिकबलमेतद्बलसाम्येऽप्यधिकचिन्तार्थम्' इति । शिवगुरुस्तु—'सौरेर्बलवाञ्जीवस्तस्माच्च महीसुतः समुद्दिष्टः । क्षितिसूनोर्भृगुतनयस्तस्मादपि शीतगोः पुत्रः ॥ चन्द्रो बुधाद्बलीयांश्चन्द्राच्च बलान्वितः सहस्रांशुः । तस्मादप्यधिकबलो लग्नोऽयं पूर्वमायाति ॥ एको द्वौ बहवो वा समागता ये तु चारयोगेन । संचिन्त्य बलं तेषां फलं वदेत्सर्वकार्येषु' इति । इति नैसर्गिकबलम् ॥ ❀ ॥ अथ स्थानबलमुच्यते शिवगुरुणा—'मित्रक्षेत्रे स्वोच्चे स्वस्मिन्भवने स्वके त्रिकोणे वा । स्वद्रेक्काणे स्वांशे स्वदिने च बलान्विताः सर्वे' इति ॥ ❀ ॥ मित्रक्षेत्रलक्षणमुच्यते च्यवनेन—

'जीवो जीवबुधौ सितेन्दुतनयौ व्यर्का विभौमाः क्रमाद्वीन्द्वर्का विकुजेन्द्विनाश्च सुहृदः केषांचिदेवं मतम्' इति । अस्यार्थः—अर्कस्य जीवो मित्रम् । चन्द्रस्य जीवबुधौ मित्रे । भौमस्य शुक्रबुधौ मित्रे । बुधस्य सूर्यव्यतिरिक्ता ग्रहा मित्राणि । गुरोर्भौमव्यतिरिक्ताः । शुक्रस्य सूर्येन्दुव्यतिरिक्ताः । शनेः कुजेन्दुसूर्यव्यतिरिक्ता ग्रहाः मित्राणि । सर्वत्रावशिष्टाग्रहाः शत्रवः इति मन्तव्यम् ॥ तथाच बृहस्पतिः—'गुरुर्गुरुज्ञौ शुक्रज्ञौ व्यर्कौ व्याराश्च वीन्द्विनाः । व्यर्केन्द्ववनिजाः सर्वे सुहृदो रिपवः परे' इति । एतन्नैसर्गिकबलमित्रत्वम् ॥ ❀ ॥ तात्कालिकमित्रग्रहा उच्यन्ते जातकोदये—'मूलत्रिकोणधीधर्मस्वान्त्यबन्धुतदुच्चगाः । नैसर्गिकाश्च चारेण सुहृदो यवनोदिताः' इति । अस्यार्थः—आदित्यस्य मूलत्रिकोणं सिंहराशिः । तदपेक्षया पञ्चमनवमद्वितीयद्वादशचतुर्थतदुच्चरूपधनुर्मेषकन्याकर्कटवृश्चिकेषु तत्कालस्थितो ग्रहः आदित्यस्य मित्रं भवति । स तु बृहस्पतिश्चेदधिमित्रं भवति । एतेषु षट्सु स्थानेषु बृहस्पतिव्यतिरिक्तशत्रुग्रहास्तिष्ठन्ति चेत्समा भवन्ति । नैसर्गिकशत्रवो यथोक्तस्थानेष्वनवस्थिताश्चेदधिशत्रवो भवन्ति । एवं चन्द्रादीनामपि योजनीयम् ॥ अत्र तारतम्यफलमाह श्रीपतिः—'स्वोच्चे रूपं चरणरहितं स्वत्रिकोणे स्वभेऽर्धं नागांशानां त्रयमधिसुहृद्देहगे मित्रभेऽब्धिः । अंशोऽष्टानां समगृहगते भूपभागोऽरिगेहे दन्तांशःस्यादधिरिपुगृहे नीचभे शून्यमेव' इति ॥ अस्यार्थः—आदित्यादिग्रहाणां मेषादिस्वोच्चराशिषु तदंशेषु संपूर्णफलम् । स्वस्वमूलत्रिकोणेषु सिंहवृषभादिषु पादोनं फलम् । स्वस्वभेषु स्वक्षेत्रेषु सिंहकर्कटादिषु अर्धं फलम् । अधिमित्रक्षेत्रे पूर्णफलमष्टमांशत्रयम् । मित्रभे मित्रक्षेत्रे अब्धिः रूपचतुर्थांशो भवति । समगृहगते तु अष्टमांशो भवति । अरिगृहे षोडशांशको भवति । अधिशत्रुगृहे द्वात्रिंशत्तमांशो भवति । नी-

चभे फलमेव नास्तीति ॥ ❀ ॥ उच्चलक्षणमुच्यते वराहमिहिरेण—'अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः । दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः' इति । अस्यार्थः—सूर्यस्य मेष उच्चम् । तस्मिन्दशमभागोऽत्युच्चम् । शुक्रस्य मीन उच्चम् । तस्मिन्सप्तविंशतितमो भागोऽत्युच्चम् । शनेस्तुलोच्चम् । तस्मिन्विंशतितमो भागोऽत्युच्चम् । सूर्यादिग्रहाणां मेषाद्युच्चराश्यपेक्षया सप्तमराशयो नीचाः । तत्राप्यत्युच्चांशसंख्यांशाश्चातिनीचा इति ॥ ❀ ॥ स्वस्मिन्भवन इति । तत्र वराहमिहिरः—'क्षितिजसितसौम्यचन्द्ररविसौम्यसितावनिजाः । सुरगुरुमन्दसौरिगुरवश्च गृहांशकपाः' इति । अस्यार्थः—मेषादिराशीनामेते ग्रहाः क्रमादधिपतयो भवन्ति । तदंशकानामपि चैते भवन्ति ॥ ❀ ॥ स्वके त्रिकोणे इति । तत्र वराहमिहिरः—'सिंहो वृषः प्रथमषष्ठहयाङ्गतौलिकुम्भास्त्रिकोणभवनानि भवन्ति सूर्यात्' इति । अत्र विशेषः—आदित्यादिग्रहाणां सिंहादिराशयो यथासंभवमुच्चमूलत्रिकोणस्वक्षेत्ररूपा भवन्ति । तत्र तत्तद्भागसंख्योच्यते सारावल्याम्—'विंशतिभागाः सिंहे त्रिकोणमपरे स्वगेहमर्कस्य । उच्चं भागत्रितयं वृष इन्दोः स्यात्त्रिकोणमपरेंऽशाः ॥ द्वादशभागा मेषे त्रिकोणमपरे स्वभं तु भौमस्य । उच्चफलं कन्यायां बुधस्य तुङ्गांशकैः सदा चिन्त्यम् ॥ परतस्त्रिकोणजातं पञ्चभिरंशैः स्वराशिजं परतः' इति । अस्यार्थः—बुधस्य उच्चांशाः प्रथमतः पञ्चदश । अनन्तरं त्रिकोणांशाः पञ्च । ततः स्वक्षेत्रांशा दशेति ॥ तथाचोक्तम्—'ज्ञस्योच्चं तिथिभिस्त्रिकोणमिषुभिः दिग्भिर्लवैः स्वात्स्वभम्' इति । 'दशभिर्भागैः सूरेस्त्रिकोणमपरे स्वभं नवं चापे। शुक्रस्य तु त्रिकोणं तिथयो जूके परे स्वराशिश्च' इति ।—शुक्रस्य तुलायां त्रिकोणभागाः पञ्चदश स्वक्षेत्रभागाः पञ्चदशेति ॥ 'कुम्भे त्रिकोणनिजभे रविजस्य

रवेर्यथा सिंहे' इति । एवं तत्तदंशान्विचार्य फलं कल्पनीयम् ॥ स्वद्रेकाण इति । मेषादिराशेस्त्रिधा विभक्तस्य त्रयो भागा द्रेकाणसंज्ञाः । तत्र लग्नाधिपतिः प्रथमांशस्याधीशो भवति ॥ तथाचोक्तं वराहमिहिरेण—'द्रेकाणाः स्युः स्वभवनसुतत्रित्रिकोणाधिपानाम्' इति । स्वांश इति—अंशाधिपतयः पूर्वमेवोक्तास्तत्र गणनाक्रमः—'अजमृगतौलिचन्द्रभवनादिनवांशविधिः' इति । स्वदिन इति—आदित्यादिग्रहाणामादित्यादिवाराः स्वस्ववाराः प्रसिद्धाः ॥ ❀ ॥ अथेक्षणबलम्—'उच्चस्थो रविमुक्तस्तेजस्वी रश्मिमानतिशयेन । यः पश्यति ग्रहेन्द्रं तस्येक्षणमन्यथा न स्यात्' इति । ईक्षणलक्षणं विवाहप्रकरणेऽस्माभिर्वक्ष्यते ॥ ❀ ॥ अथोजयुग्मराशिस्थग्रहफलम्—'ओजःस्थिताः पुमांसः शुक्लेऽह्नि सूरिभिः समाख्याताः । युग्मभवनेषु कृष्णे पक्षे निशि योषितो बलिनः' इति । अस्यार्थः—मेषादिषडोजराशिस्थाः पुंग्रहाः शुक्लपक्षे अहनि बलिनः । वृषभादिषड् युग्मराशिस्थाः स्त्रीग्रहाः कृष्णपक्षे रात्रौ बलिन इति ॥ ❀ ॥ पुमादिग्रहलक्षणमुक्तं सारावल्याम्—'पुंग्रहाः सूर्यभौमार्याः स्त्रीग्रहौ शशिभार्गवौ । नपुंसकौ शनिबुधौ शिरोमात्रो विधुंतुदः' इति ॥ ❀ ॥ अथ कालबलम्—'बलिनो रविगुरुसौरा दिवसे चन्द्रात्मजो निशि दिवा च । रात्रौ शेषाः प्रबलाः सौम्याः शुक्लेऽधमाः कृष्णे' इति । अस्यार्थः—आदित्यबृहस्पतिशनैश्चरा दिवसे बलिनः । बुधो दिवा रात्रौ च बलवान् । शेषाश्चन्द्रभौमशुक्रा रात्रौ बलवन्तः । सौम्याः पुण्यग्रहाः अक्षीणचन्द्रबुधगुरुशुक्राः शुक्लपक्षे बलवन्तः । अधमाः पापग्रहाः आदित्यक्षीणचन्द्रभौमशनैश्चरराहवः कृष्णपक्षे बलवन्त इति ॥

अथायनचेष्टादिसर्वबलान्युच्यन्ते शिवगुप्तेन—'उदगयने मृगराशौ पूर्वाह्णे दिवसमध्यभागे च । बलवान्सहस्ररश्मिर्विशे-

पतो मेषगर्भेन' । आदित्यबलमेतत् ॥ 'उदगयनेऽह्नि निशायां दक्षिणमयनमाश्रितः शिशिररश्मिः । वृषभस्थितश्च बलवान्कर्कटकस्थोऽपि विज्ञेयः ॥ प्रतिपत्पूर्वदशाहं मध्यबलः शीतगुः सिते पक्षे । संपूर्णबलः पूर्णः कृष्णस्य तु पञ्चमीं यावत् ॥ शेषेष्वहःसु वीर्यात्प्रच्यवते हीनमण्डलत्वेन । सौम्यैरदृश्यमानः पापैरभिवीक्षितश्चैव ॥ अबलः प्रवेशकाले मध्यबलो मध्यमाश्रितो ज्ञेयः । राश्यन्ते बलयुक्तः पूर्णः स्थानेषु सर्वेषु ॥ उत्तरपथप्रयातः प्रदक्षिणं वामतो ग्रहेन्द्राणाम् । सौम्ययुतो दृष्टो वा स्निग्धश्च बलान्वितश्चन्द्रः' । चन्द्रस्य बलमेतत् ॥ 'निर्जितशत्रुर्नक्तंतेजस्वी मकरकुम्भमीनेषु । याम्यायने च बलवान्रात्रौ च धरासुतः प्रोक्तः' । कुजस्य बलमेतत् ॥ 'रविमुक्तः स्वक्षेत्रे शशिवेश्मन्युत्तरायणे सौम्यः । रात्रौ दिवा च बलवानृक्षाणां मध्यगश्चापि ॥ आदावतिबलयुक्तो हीनबलो मध्यमाश्रितश्चैव । भवनावसानवर्ती मध्यबलश्चन्द्रजो ज्ञेयः' । बुधस्य बलमेतत् ॥ 'जीवः स्वक्षेत्रगतो वृश्चिकराशौ तु कर्कटस्थश्च । रात्रावह्न्युदगयने विजयी च समागमे बलवान् ॥ राशिमुखे मध्यबलः संपूर्णबलश्च मध्यमं यातः । राश्यन्ते बलहीनः सुरनाथपुरोहितः प्रोक्तः' ॥ जीवस्य बलमेतत् ॥ 'त्रिकपद्ममण्डलगतस्त्रिकोणगः स्वगृहसंनिविष्टश्च । मीनस्थोऽन्तरमार्गस्थोऽर्कविमुक्तश्च भृगुसूनुः' ॥ अस्यार्थः—त्रिपद्ममण्डलगत इति । भरण्यादीनि चत्वारि नक्षत्राणि आर्द्रादीनि चत्वारि नक्षत्राणि मघादीनि पञ्चनक्षत्राणि ज्येष्ठादीनि पञ्चनक्षत्राणि धनिष्ठादीनि षण्नक्षत्राणि । एवं षण्मण्डलकल्पना । एषु त्रिपद्ममण्डलेषु गतः शुक्रो बलवानित्यर्थः । त्रिकोणगतः मूलत्रिकोणभूततुलाराशिस्थः ॥ तथाचोक्तं बृहज्जातके—'सिंहो वृषः प्रथमषष्ठहयाङ्गतौलिकुम्भास्त्रिकोणभवनानि भवन्ति सूर्यात्' इति ।—स्वगृहसंनिविष्टः स्वक्षेत्रगतः मीनस्थो मीनराशिगतः अन्तरमार्गस्थः मध्यमवीथि-

चारी अर्कविमुक्तोऽनस्तंगतः ॥ शुक्रस्य बलमेतत् ॥ 'कृष्णे निशि वक्रगतः सगृहतुलादक्षिणायनगतश्च । उदितश्च मन्दगामी जितशत्रुश्चापि विज्ञेयः ॥ सौरिर्बली गृहाद्दौ मध्ये प्रबलोऽबलोऽन्त्यभागे च । सर्वस्थानेषु रवेर्भवनस्य बलान्वितोऽभिहितः' । मन्दबलमेतत् ॥ ❀ ॥ अथ केन्द्रबलं संग्रहे—'उदये बुधगुरुमनुजा बलिनो मध्ये चतुष्पदार्ककुजाः । हिबुकेऽम्बुगामिशशिनो भृगुश्च शेषास्तथास्तमये' । अस्यार्थः—उदयस्थितौ बुधगुरू मनुजराशयश्च ते तु मिथुनकन्यातुलाद्यार्धघटाः ते सर्वे उदयलग्ने बलवन्तः । मध्ये दशमस्थाने चतुष्पादराशयः ते तु मेषवृषभसिंहधन्विपरार्धमकरपूर्वार्धे आदित्यभौमाश्च बलवन्तः । हिबुके चतुर्थस्थाने अम्बुगामिराशयः ते तु कर्कटमीनमकरपरार्धाः ते च शशिभृगू च बलवन्तः । शेषास्तथास्तमये शेषाः शनिराहू सरीसृपराशिश्च सतु वृश्चिकः ते सर्वे अस्तमये सप्तमे बलवन्तः । एवं बलमुक्तम् । शिवगुप्तस्तु—'मेषवृषसिंहकुम्भे लग्नगते भास्करो बलवान् । तेष्वेव कर्मदेशे विज्ञेयोऽन्यत्र बलहीनः' । एवमादित्यस्य केन्द्रबलमुक्तम् । 'प्रालेयांशुर्मिथुने कन्यायां चैव लग्नगो बलवान् । धन्विहयार्धे प्रथमे जामित्रगतश्च विज्ञेयः ॥ वृषराशिसंनिविष्टश्चापार्धे पश्चिमे च कर्मस्थः । कर्कटकमकरयोरपि विजयी च समागमे बलवान्' । एवं चन्द्रस्य केन्द्रबलम् ॥ 'प्रावपन्नः क्षितिसूनुर्बलान्वितः कुम्भराशिना सार्धं । कर्कटवृश्चिकयोरधिपतिः स्थानमाश्रितोऽभिहितः ॥ मृगपूर्वार्धकमिथुने कर्मणि पश्चाद्द्वयस्य पाताले । निरुपहते स्वतिवीर्यो बलान्वितः स्वत्रिकोणे च' ॥ प्रावपन्नो लग्नं प्राप्तः अधिपतिः सप्तमस्थानम् । एवं भौमस्य केन्द्रबलम् ॥ 'लग्ने जीवांशगतः कर्मणि सूर्यारयोर्बलवान् । शुक्रेन्द्वोः पाताले जूके सौरेर्नवांशके ऽस्तु' । जूकः सप्तमः । एवं बुधस्य केन्द्रबलम् ॥ 'मृगसिंहकर्किवृश्चिकमत्स्यतुलाचापभृत्सु पूर्वस्थः ।

सिंहवृषाजधनुर्धरवृश्चिकमीनेषु पर्यन्ते ॥ कर्किणि पातालगते बलाढ्यो जीवोऽबलोऽन्यत्र । एवं जीवस्य केन्द्रबलम् ॥ 'सिंहाज-
कुम्भकौर्पिषु लग्नस्थो भार्गवः स्वराशौ च । चापधराधरभागे वृश्चिकराशौ च बलीस्थः ॥ हयपश्चार्धमृगाधिपवृश्चिकमीनेषु कर्म-
देशस्थः । बलान्वितो जितारिर्मृगपश्चार्धे च हिबुकस्थः' ।—कौर्पिर्वृश्चिकः । चापधराधरभागो धनुषः पूर्वभागः । बलीस्थः सप्तम-
स्थः । एवं शुक्रस्य केन्द्रबलम् ॥ 'कुम्भतुलाधरयुक्तः प्राच्यादिषु सूर्यजो बलवान् । मेषूरणे च सिंहे पृष्ठोदयसंज्ञितेऽस्तमुपयाते' ।
प्राच्यां लग्ने ॥ ❁ ॥ पृष्ठोदयराशयश्च—'गोजाश्विकर्किमिथुनाः समृगा निशाख्याः पृष्ठोदया विमिथुनाः कथितास्त एव'
इति । एवं मन्दस्य केन्द्रबलम् ॥ एवं केन्द्राणां बलाबलं वदति संग्रहकारः—'मेषूरणहिबुकाभ्यां बलवत्पूर्वं ततोऽपरं विब-
लम् । होराबुधगुरुपतिभिर्दृष्टा तैरेव युक्ता वा' ॥ मेषूरणं दशमम् । हिबुकं चतुर्थम् । उदयादिदशमचतुर्थौ युगपद्बलिनौ चेद्-
राश्योर्युगपद्बलाबलकल्पना लग्नकल्पना च ॥ एवं ग्रहाणां सर्वबलानि विमृश्य फलं योजनीयमित्याह नवनीतारिष्टकारः—
'दिक्स्थानकालादिपृथग्बलानि रिष्टेशतद्भङ्गकयोर्विमृश्य । यस्याधिकं तत्फलमेव योज्यं समानतायामपि रिष्टमेव' इति । अस्या-
र्थः—एवं ग्रहाणां दिक्स्थानकालादिबलानि पृथग्विचार्यारिष्टकारकग्रहस्यारिष्टभङ्गकग्रहस्य च बलं पूर्वोक्तप्रकारेण सम्यग्विचार्य
यस्य बलाधिक्यमस्ति तत्फलमेव योज्यम् । उभयोर्बलसमानतायां सत्यामप्यरिष्टमेव भवति । तस्मादजननकालेऽरिष्टकारकग्रहान्वि-
चार्य तेषां शान्त्यर्थं जपहोमादीन्कुर्यात् ॥ तदुक्तं नवनीतारिष्टे—'विप्रप्रसादाद्द्विजदेवताभ्यो गोभूहिरण्याम्बरधान्यदानम् ।

तीर्थाभिषेको ग्रहयज्ञस्त्वियैश्चादिरक्षा च निहन्त्यरिष्टम्' इति । एवं प्राप्ते तत्तदरिष्टप्रतिपदोक्तशान्तिः कर्तव्या । तत्प्रकारस्तु नामकरणप्रकरणे वक्ष्यते ॥

अथ जातकर्ममन्त्राणामर्थः ।—प्रते ददामीति—हे कुमार, ते तुभ्यं मघोनां हविर्लक्षणधनवतां मध्ये सवित्रा प्रसूतं मधुनो घृतस्य वेदं स्तोकं प्रददामि । देवताभिर्गुप्तो रक्षितस्त्वमायुष्मान्भूत्वाऽस्मिँल्लोके शतं शरदो जीव ॥ मेधां ते इति—हे कुमार, ते तुभ्यं देवो द्योतनात्मकः सविता मेधामादधातु । तथा सरस्वती देवी मेधामादधातु । तथा पुष्करस्रजौ पुष्करमालिनौ अश्विनौ देवौ ते मेधामाधत्ताम् । दधातेः परस्मैपदाल्लोटि प्रथमपुरुषद्विवचनम् ॥ अश्मा भवेति—हे कुमार, अश्मा अश्मेव दृढो भव । परशुरिव दुरासदो भव । अस्तृतं अविस्तृतं हिरण्यं भव । हे कुमार, त्वं पुत्रनामा वेदो धनमसि । वै प्रसिद्धार्थः । स त्वं शतं शरदो जीव ॥ इन्द्रश्रेष्ठानीति—हे इन्द्र, श्रेष्ठानि प्रशस्तानि द्रविणानि सुवर्णानि अस्मे अस्मभ्यं धेहि देहि । दक्षस्य ऐहिकामुष्मिककर्मसु यो दक्षस्तस्य चित्तिं चैतन्यं सामर्थ्यं तथा सुभगत्वं सौभाग्यं तथा रयीणां पोषं तथा तनूनां आवयोर्दम्पत्योः पुत्रस्य च शरीराणां अरिष्टमहिंसां तथा वाचः स्वाद्मानं स्वादुतां तथा अह्नां सुदिनत्वं च धेहि ॥ अस्मे प्रयन्धीति—हे मघवन् धनवन्निन्द्र, ऋजीषिन् अभिषुतात्सोमादवशिष्टं यदृजीषं तद्वन् हे इन्द्र, त्वं विश्ववारस्य सर्वेषां वरणीयस्य भूरेः प्रभूतस्य रायः धनस्य । सर्वत्र कर्मणि षष्ठी । एवंविधं धनं अस्मे अस्मभ्यं प्रयन्धि प्रयच्छ । किंच अस्मे अस्माकं जीवसे जीवितुं शतं शरदो धाः धेहि । शिप्रिन् शिप्रं अनुनासिकं हिरण्मयी वा रज्जुः तद्वन् हे इन्द्र, शश्वतः बहून् वीरान्पुत्रान् अस्मे अस्मभ्यं धेहि देहि । इति मन्त्रार्थः ॥

अथ जातकर्मप्रयोगः । पुत्रे जातमात्रे पिता तस्य मुखमवलोक्य नद्यादावुदङ्मुखः सचैलं स्नानं कृत्वा रात्रौ चेद्दिवाहृतशीतोदकं स्वर्णयुतं कृत्वा जनलसंनिधौ स्नायात् । तदशक्तावुष्णोदकेन वा स्नायात् । एवं यथाधिकारं स्नात्वा आचम्य सितचन्दनमालाभिरलंकृतः प्राङ्नाभिच्छेदनादकृतस्तन्यपानमन्यैरस्पृष्टं प्रक्षालितमलं कुमारं मातुरुत्सङ्गे प्राङ्मुखमुपवेश्य ब्राह्मणैः सह पुण्याहवाचनं कृत्वा देशकालौ निर्दिश्य मम कुमारस्य गर्भाम्बुपानजनितसकलदोषनिबर्हणायुर्मेधाभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं जातकर्म करिष्ये इति संकल्प्य प्रागुक्तनान्दाभ्युदयिकं हिरण्येन विधाय व्याहृत्या लौकिकाग्निं विधिवत्प्रतिष्ठाप्य देशकालौ संकीर्त्य अस्मिन् जातकर्महोमे देवतापरिग्रहार्थमन्वाधानं करिष्य इत्यादिचक्षुषी आज्येनेत्यन्तमुक्त्वा अग्निं इन्द्रं प्रजापतिं विश्वान्देवान् ब्रह्माणमाज्येन शेषेण स्विष्टकृतमित्यादि सद्यो यक्ष्य इत्यन्तमुक्त्वान्वाधाय परिसमूहनाद्याज्यभागान्तं कृत्वा प्रधानदेवताश्चतुर्थ्यन्तनाममन्त्रेण हुत्वोद्देशत्यागी कुर्यात् । ततो मधुसर्पिषी मानतो विषमतया मिश्रीकृत्य तच्छिलातले क्षिप्त्वा तत्र सुवर्णं संस्पृष्टफलं यथा भवति तथा संघृष्य एकस्मिन्भाजने निधाय तेनैव हिरण्येन—प्रते ददामि मधुनो घृतस्य वेदं सवित्रा प्रसूतं मघोनाम्। आयुष्मान्गुप्तो देवताभिः शतं जीव शरदो लोके अस्मिन् ॥ इति मन्त्रेण कुमारं पाययित्वा तद्धिरण्यं प्रक्षाल्य कुमारस्य दक्षिणकर्णे निधाय तन्मुखसमीपे मधुरमाधाय—मेधां ते देवः सविता मेधां देवी सरस्वती । मेधां ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ इत्येतां मेधाजननाभिधानामृचं जपित्वा पुनस्तदेव हिरण्यं सव्ये कर्णे निधायैतामृचमेव जपित्वा शिशोरमानभिमृशति—अश्मा भव परशुर्भव हिरण्यमस्तृतं भव । वेदो वै पुत्रनामासि स जीव शरदः शतम् ॥ इति मन्त्रेण । इन्द्रश्रेष्ठानि गृत्समद इन्द्रस्त्रिष्टुप् । इन्द्र श्रेष्ठानि द्रविणानि धेहि

सते' इति ॥ मार्कण्डेयः—'रक्षणीया तथा षष्ठी निशा तत्र विशेषतः । रात्रौ जागरणं कार्यं जन्मदानां तथा बलिः ॥ पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः । रात्रौ जागरणं कुर्युर्दशम्यां चैव सूतके' इति ॥ नारदः—'जननात्सप्तमे चाह्नि मृत्युरायाति चान्तकः । तद्दिने चैव रक्षेयं कर्तव्यायुर्विवृद्धये ॥ सायाह्ने पूज्य विघ्नेशमपूपैश्च पृथग्विधैः' इति ॥ ❀ ॥ अथ पञ्चायुधाभरणधारणमुक्तं श्रीधरीये—'जातस्य पञ्चमदिने शुभदे मुहूर्ते पञ्चायुधाभरणधारणमिष्टमाहुः । नाभिप्रदेशपरिलम्बि सुवर्णसूत्रं प्रोक्तं शिशोर्ग्रहनिवारणकैश्च युक्तम्' ॥ अस्यार्थः—जातस्य जन्मनक्षत्रात्पञ्चमनक्षत्रे पञ्चमदिने वा पञ्चायुधाभरणधारणं पञ्चायुधसमन्वितमाभरणं शङ्खचक्रगदाशार्ङ्गनन्दकानां पञ्चायुधानां प्रसिद्धेः पञ्चायुधमिति कथितम् । अत्र शिशोरिति सामान्येन कथनात्कुमारस्य कुमार्याश्च पञ्चायुधाभरणं धार्यमिति । तथोक्तं बृहस्पतिना—'जन्मतः पञ्चतारायां याते चन्द्रे शिशुं पिता । भूषयेद्भूषणैः सर्वैः पञ्चायुधसमन्वितैः ॥ विशेषात्कन्यकायाश्च कर्तव्यं मङ्गलेन च । पुंसः सायुधमाकल्पमायुःश्रीकान्तिदं शिशोः' इति ॥ ❀ ॥ अत्र व्यतिरेकेण सूतिकागृहस्थापनीयान्युक्तानि । मार्कण्डेयपुराणे—'अल्पम्बुहीने च तथा विधूमे सूतिकागृहे । अदीपशस्त्रमुसले भूतिसर्षपवर्जिते ॥ अनुप्रविश्य सा जातमपहृत्यात्मसंभवम् । क्षणप्रसविनी बालं तत्रैवोत्सृजते द्विज ॥ सा जातहारिणी नाम सुघोरा पिशिताशना । तस्मात्संरक्षणं कार्यं यत्नतः सूतिकागृहे' ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे जननतिथ्यादिकृत्यनिर्णयः ॥

अथ प्रसङ्गात्सूतिकानां नियमा उच्यन्ते । चन्द्रिकायां जाबालिः—'संध्यां पञ्चमहायज्ञान्नैत्यिकं स्मृतिकर्म च । तन्मध्ये

हापयेत्तेषां दशाहान्ते पुनःक्रिया ॥ पञ्चमहायज्ञसाहचर्यान्नैत्यिकशब्देनात्र नित्यश्राद्धमुच्यते । स्मृतिकर्म स्मृत्युक्तं कर्म देवतार्चनादिकं तन्मध्ये आशौचमध्ये हापयेत्त्यजेत् । तेषां संध्यादीनां दशाहान्ते आशौचावसाने पुनःक्रिया पूर्ववदनुष्ठानम् । संध्यां त्यजेदित्येतन्मन्त्रोच्चारणविशिष्टसंध्याभिप्रायेणोक्तं नतु संध्यामात्राभिप्रायेण । तदाह पुलस्त्यः—'संध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् । न त्यजेत्सूतके वापि त्यजन्गच्छेदधो द्विजः ॥ सूतके मृतके चैव संध्याकर्म समाचरेत् । मनसोच्चारयेन्मन्त्रान्प्राणायामादृते द्विजः' इति । अस्यार्थः—प्राणायाममन्त्रव्यतिरिक्तमन्त्रान्मनसोच्चारयेत् । प्राणायाममन्त्रांस्तु मनसापि नोच्चारयेत् । अमन्त्रकमेव प्राणायामं कुर्यादिति यावत् । 'मनसोच्चारयेन्मन्त्रान्' इत्येतदञ्जलिप्रक्षेपमन्त्रव्यतिरिक्तविषयम् ॥ यदाह पैठीनसिः—'सूतके सावित्र्याञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्यं ध्यायन्नमस्कुर्यादिति । संध्याविधावुक्तसावित्रीमन्त्रस्येह पुनर्वचनं मनसोच्चारणनिवृत्त्यर्थम् । तेन सावित्रीमन्त्रोच्चारणं वाचैव कर्तव्यम्' इति ॥ भरद्वाजोऽपि—'सूतके मृतके कुर्यात्प्राणायाममन्त्रकम् । तथा मार्जनमन्त्रांस्तु मनसोच्चार्य मार्जयेत् ॥ गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत् । मार्जनं तु नवा कुर्यादुपस्थानं न चैव हि' इति ॥ ॥ विष्णुरप्याशौचे वर्ज्यकर्माण्याह—'आशौचे होमदानप्रतिग्रहस्वाध्याया निवर्तन्ते नाशौचे कस्यचिदन्नमश्नीयात्' इति । होमोऽत्र वैश्वदेवोऽभिप्रेतः ।—'विप्रो दशाहमासीत वैश्वदेवविवर्जितः । पञ्चयज्ञविधानं तु न कुर्यान्मृतिजन्मनोः' इति संवर्तेन विशेषाभिधानात् ॥ वैश्वदेवाभिप्राये शङ्खेनापि—'दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च । प्रेतपिण्डक्रियावर्जमाशौचे विनिवर्तते' इति । पितृकर्मामावास्यादिकम् । नच होम इति सामान्योक्तेरग्निहोत्रौपासनहोमादिकमपि निवर्तनीय-

मिति शङ्कनीयम् । अत आह याज्ञवल्क्यः—'वैतानोपासनाः कार्याःक्रियाश्च श्रुतिचोदिताः' इति । वैताना गार्हपत्यादित्रह्नि-साध्याः 'यावज्जीवमग्निहोत्रं जुहोति' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्यादि श्रुतिचोदिताः कार्याः । तथा गृह्याग्नि-साध्या 'औपासनादिकाः कार्याः क्रियाश्च श्रुतिचोदिताः' इति वैतानगार्हपत्यादित्र्यग्निसाध्या औपासनहोमपार्वणस्थालीपाका-द्याश्च क्रियाः कार्या इत्यर्थः ॥ अत्र विशेषमाह हारीतः—'कर्म वैतानिकं कार्यं स्नानोपस्पर्शनात्स्वयम्' इति । आशौ-चमात्यनन्तरं स्नात्वाचम्य वैतानिकं कर्माग्निहोत्रादिकं तत्तत्काले स्वयं कुर्यादित्यर्थः । नच धर्मायोग्यलक्षणे आशौचे स्थिते कथं वैतानिके कर्मणि स्वयं कुर्यादिति विधिर्घटत इति वाच्यम् । यतो विधिबलादेव कर्मयोग्यत्वमस्तीत्यर्थाद्गम्यते । तदुक्तं गोभिलेन—'अग्निहोत्रस्य होमार्थं शुद्धिस्तात्कालिकी भवेत् । पञ्चयज्ञान्न कुर्वीत ह्यशुद्धः पुनरेव सः' इति । अग्निहोत्रादिकर्मणि यत्राशौचे कर्तव्यमिति विधिरस्ति तत्र तात्कालिकी शुद्धिः । कर्मसंकल्पात्पूर्वक्षणमारभ्य कर्मापवर्गपर्यन्तं कर्मयोग्यत्वलक्षणा वेदितव्या । यत्र पुनः पञ्चयज्ञादावाशौचे कर्तव्यमिति विधिर्नास्ति तत्र शुद्धिज्ञापकविध्यभावात्कर्मयोग्य-त्वमित्यर्थः । एवं विधिज्ञापितकर्मयोग्यत्वे सत्यपि यो न करोति तस्य सत्यप्यधिकारे कर्मत्यागदोषोऽस्तीत्येवावगन्तव्यम् । अतएव मरीचिः—'दर्शं च पूर्णमासं च कर्म वैतानिकं च यत् । मृतकेऽपि त्यजन्मोहात्प्रायश्चित्तीयते द्विजः' इति । वैतानिकग्रहणं स्मार्तस्याप्याशौचे विहितस्य कर्मण उपलक्षणार्थम् । अतएव जातूकर्ण्यः—'सूतके तु समुत्पन्ने स्मार्तं कर्म कथं भवेत् । पिण्डयज्ञं चरुं होममसगोत्रेण कारयेत्' इति । पिण्डयज्ञः पिण्डपितृयज्ञः । चरुः पार्वणस्थालीपाकः । होमः प्रतिदिनमौपासनहोमः । कारयेदिति विधिबलात्स्मार्ते कर्मणि त्यागात्मककर्मण्येव धर्मयोग्यत्वलक्षणा शुद्धिर्नेतरत्रेति गम्यते । अतएव बृहस्पतिः—'सूतके

मृतके चैव अशक्तौ श्राद्धभोजने । प्रवासादिनिमित्तेषु हावयेन्नतु हापयेत्' इति । न हापयेन्न त्यजेदित्यर्थः । तथाच जाबालिः—'जन्महान्योर्विनान्यत्र कर्मत्यागो न विद्यते । शालाग्नौ केवलो होमः कार्य एवान्यगोत्रजैः' इति । शालाग्नौ होम औपासनाख्यः सोऽन्यगोत्रजैः कार्य इति नियमाद्वैतानिकाग्नौ क्रियमाणो होमोऽग्निहोत्रादिरन्यगोत्रजैः कार्यः स्वयं वा कुर्यादिति गम्यते । यत्तु स्मृत्यन्तरे—'वर्जयेत्मृतके कर्म नित्यनैमित्तिकादिकम् । आहिताग्नेः सदा शुद्धिः सद्य एव विधीयते' इति । तत्र पूर्वार्धमाशौचेऽकर्तव्यत्वेनाभिहितनित्यनैमित्तिकविषयम् । उत्तरार्धं तु कर्तव्यत्वेनाभिहितवैतानिकविषयमित्यवगन्तव्यम् । 'एवमेवाशौचे नित्यानि निवर्तेरन्वैतानवर्जम्' इति पैठीनसिवचसोपि विषयो बोद्धव्यः । श्रौतानां स्मार्तानां च काम्यानामाशौचे त्याग एव । प्रतिप्रसवविध्यभावात् । श्रौतानामप्यग्निहोत्रादीनां प्रथमारम्भात्प्रागाशौचे त्याग एव । प्रतिप्रसवविधीनां प्रथमारम्भोत्तरकालानुष्ठेयाग्निहोत्रादिविषयत्वात्सद्यः शौचमित्यनुवृत्तौ काम्ये कंचित्प्रतिप्रसवार्थमाह पुलस्त्यः—'सान्निहत्यामुपस्पृश्य राहुग्रस्ते दिवाकरे । सत्रधर्मप्रवृत्तस्य दानधर्मफलैषिणः' इति । अस्यार्थः—दानकर्मसाध्यफलकामिनोपि संनिहिततीर्थविशेषे स्नात्वा दाने प्रवृत्तस्य सद्यः शौचम् । अन्नसत्रजन्यधर्मप्रवृत्तस्य तद्दानफलार्थिनोपि सद्यःशौचमिति । नैमित्तिके कंचित्प्रतिप्रसवार्थमाह बृहस्पतिः—'कन्याविवाहे संक्रान्तौ सूतकं न कदाचन' इति । नैमित्तिककाम्येष्वपि कंचित्प्रतिप्रसवार्थमाह जमदग्निः—'सूतके मृतके वापि जाह्नव्याः सलिले स्थितः । नाभिमात्रे जले स्थित्वा कुर्याद्दानजपादिकम्' इति । नित्यं नैमित्तिकं काम्यमपीति शेषः । यत्तु मार्कण्डेयवचनम्—'नित्यस्य कर्मणो हानिं न कुर्वीत कदाचन । तस्य त्वकरणे बाधः केवलं सूतिजन्मसु'

इति । तदाशौचे प्रातिपथेन विहिताग्निहोत्रादिनित्यकर्महानिविषयम् । तथात्वे 'नित्यानि निवर्तेरन्वैतानवर्ज'मिति पूर्वोक्तवचनविरोधापत्तेः । तदपि तेनैवोक्तम्—'दशाहं ब्राह्मणस्तिष्ठेद्दानहोमादिवर्जितः । क्षत्रियो द्वादशाहं च वैश्यो मासार्धमेव च ॥ शूद्रश्च मासमासीत निजकर्मविवर्जितः' इति, तद्वयोवस्थाप्रयुक्ताद्यसंपूर्णाशौचकालानामप्युपलक्षणार्थम् । यत्तु हारीतेनोक्तम्—'ततस्त्वेकादशदिने यज्ञः स्वाध्याय एव च । प्रवर्तन्ते क्रियाश्चैता इत्येतन्मैत्रिरब्रवीत्' । तत्राप्येकादशदिन इत्येतदाशौचान्त्यदिनान्तरदिनोपलक्षणार्थम् ॥

आशौचापवादः । ब्रह्मचारिणं प्रत्याह कात्यायनः—'न त्यजेत्सूतके कर्म ब्रह्मचारी स्वयं क्वचित्' इति । गृहस्थवदस्य सूतकाभावादित्यभिप्रायः । माधवीये पराशरव्याख्यायां—'नित्यमन्नप्रदस्यापि कृच्छ्रचान्द्रायणादिषु । प्रथमे (प्रवृत्ते) कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने ॥ गृहीतनियमस्यापि न स्यादन्यस्य कस्यचित् । निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि ॥ निमन्त्रितस्य विप्रस्य स्वाध्यायनिरतस्य च । देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित्' इति । याज्ञवल्क्यः—'ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् । सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥ दाने विवाहे यज्ञे च संग्रामे देशविप्लवे । आपद्यपि च कष्टायां सद्यःशौचं विधीयते' इति । अङ्गिराः—'राज्यनाशस्तु येन स्याद्विना राज्ञः स्वमण्डले । प्रयासतश्च संग्रामे होमे प्रास्थानिके मति ॥ मन्त्रादितर्पणे चापि प्रजानां शान्तिकर्मणि । गोमङ्गलादौ वैश्यानां कृषिकालात्ययेऽपि ॥ आशौचं न भवेल्लोके सर्वत्रान्यत्र विद्यते' इति । कर्मप्रदीपेऽपि—'सूतकादौ समुत्पन्ने स्मार्तं कर्म न किंचन । अनारब्धे भवेदेतत्प्रारब्धे नास्ति सूतकम्'

इति । इति मृतकिनां कर्मनिर्णयः ॥ ❀ ॥ अथैषां शुद्धिकाला उच्यन्ते । अग्निस्मृतौ—'पुंजन्मनि सपिण्डानां दशाहाच्छुद्धिरिष्यते । त्र्यहादेकोदकानां च एकाहं मृतके क्वचित् ॥ स्त्रीजन्मनि सपिण्डानां सोदकानां त्र्यहाच्छुचिः । स्त्रीषु त्रिपुरुषं ज्ञेयं सपिण्डत्वं द्विजोत्तमैः' इति ॥ ❀ ॥ सपिण्डानां लक्षणं तत्रैवोक्तम्—'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । एकोदकास्तदूर्ध्वं निर्दिष्टाः सप्तपूरुषात्' इति । एकाहं मृतके क्वचिदिति यदुक्तं तद्वृत्तस्वाध्यायविषयं तदपि कलौ न कार्यम् । 'वृत्तस्वाध्यायसापेक्षमघसंकोचनं तथा' इति कलिवर्ज्येषु निषिद्धत्वात् । अथ मृतकम् ॥ ❀ ॥ अथ सूतिकाया आशौचनिवृत्तिकाल उच्यते । चन्द्रिकायां पारस्करः—'द्विजातेः सूतिका या स्यात्सा दशाहेन शुध्यति । त्रयोदशेऽह्नि संप्राप्ते शूद्रा शुध्यत्यसंशयम्' इति । एवंच सूतिकाया अस्पृश्यत्वानुरूपमाशौचं युगमात्रपरिहरणादिहेतुभूतं द्विजातिषु दशदिवसपर्यन्तं शूद्रजातिषु द्वादशदिवसपर्यन्तं अल्पाशौचमस्पृश्यत्वादिहेतुभूतं द्विजात्युक्तदशाहादुपरि मासपर्यन्तं दानादिकर्मानधिकारलक्षणं द्विजातिषु पुत्रजन्यां विंशतिरात्रपर्यन्तं स्त्रीजन्यां मासपर्यन्तं नियतमित्यवगन्तव्यम्' इति । इति सूतिकानां शुद्धिकालः ॥

अथ पुत्रकामेष्टिः । लक्ष्मीनृसिंह भगवन्रघुकुलतिलकेन पुत्रकामेष्ट्या । इष्टो मनसि सुहृष्टस्तुष्ट्यै तस्यैव पुत्रकामार्थः ॥ अथ प्रसङ्गात्पुत्रकामेष्टिरभिधीयते—'ऋणमस्मिन्संनयत्यमृतत्वं च गच्छति । पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्' इत्यादिश्रवणात्पित्रृणापाकरणार्थं पुत्रोत्पादनं कर्तव्यम् । तत्पूर्वजन्मकृतकर्मवशादलभ्यं चेत्कर्मविपाकरूपा पुत्रकामेष्टिः कर्तव्या ।

तथाच बृहस्पतिः—'अनर्भको भवेन्नाशो न स्वर्गोऽपुत्रकस्य च । न मोक्षोऽपुत्रकस्य स्यान्नाऽपुत्रस्य परा गतिः । तस्मात्सुपुत्रसन्त्राणे यतेत पुरुषः सुधीः' इति ॥ पुत्रकामेष्टिविधानमाह कारिकाकारः—'अनाहिताग्निरेवेमं कुर्यात्काम्यचरुं तथा । परिषेचनपर्यन्तमन्वाधानादि पूर्ववत् ॥ अग्नये पुत्रिणे त्वेति पुत्रकामस्तु निर्वपेत् । अग्नये पुत्रिणे स्वाहेत्येतेन जुहुयाच्चरुम्' इति । अत्र भगवान्—'यस्य जाताः प्रमीयेरन्पुत्रा नैव भवन्ति च । ऋतुकाले दिने षष्ठे दंपती समलंकृतौ ॥ कृत्वाभ्युदयिकं श्राद्धं स्वस्तिवाचनपूर्वकम् । पूर्णपात्रनिधानान्तमुपलेपादि पूर्ववत् ॥ श्वेतायाः श्वेतवत्सायां गोः क्षीरेण चरुं पचेत् । कृत्वाज्यभागपर्यन्तमाज्यस्योत्पवनादिकम् ॥ जुहुयात्पायसं तत्र ऋग्भिः पञ्चदशाहुतीः । प्रजावत्सूक्तपञ्चर्ग्भिर्जीवपुत्रस्य पञ्चभिः ॥ नेजमेषेतितिसृभिः गोभो धेनुमृचैकया । इहैवस्तमृचा चैव ततः स्विष्टकृदादिकम् । [ अपश्यं त्वेति मन्त्राभ्यां होमशेषं च दंपती । प्राशयेत्तत आचम्य दंपती नाभिमालभेत् ॥ पिशङ्गभृष्टिमित्यृचा तावुभावभिमन्त्र्य च । प्रायश्चित्तादिसकलं होमशेषं समापयेत् । सवत्सां दक्षिणार्थाय गां दद्यात्तु पयस्विनीम् ॥ पुत्रार्थमाचरेद्दानं विप्रेभ्यो हेमवत्सयम् । रात्र्यास्तु पश्चिमे यामे शयीतां दर्भसंस्तरे ॥ मनसा चतुर्होतारमनुद्रुत्योमिति त्रुवन् । उपगम्य ततः पत्नीं व्यवेयाच्च यथाविधि । एवमुत्पादितः पुत्रो न लुप्येत कदाचन' इति । प्रजावज्जीवपुत्राख्यसूक्तमन्त्रा आ ते गर्भो योनिमित्यादि दैवकृतं ब्राह्मणं कल्पमानमित्यन्ता दश मन्त्रा अनवलोभनप्रकरणे द्रष्टव्याः । शेषाः प्रसिद्धाः । चतुर्होतृमन्त्रास्तु—'पृथिवी होता । द्यौरध्वर्युः । रुद्रोऽग्नीत् । बृहस्पतिरुपवक्ता । वाचस्पते

पाठ०—१ प्रवेयाताम् ।

या चो वीर्येण । संभृततमे नार्यस्परसे । यजमानाय वार्यम् । आसुवस्करसे । वाचस्पतिः सोमं पिबति । जजनदिन्द्रमिन्द्रियाय स्वाहा' इति ॥ ❀ ॥ पुनर्विधानान्तराणि ऋग्विधानस्थान्याह स एव—'सहस्रशीर्षसूक्तं च सर्वकामफलप्रदम् । वेदगर्भशरीरेण मर्त्ये नारायणं स्मृतम् ॥ ब्रह्मेन्द्ररुद्रपर्जन्या अत्र सूक्ते व्यवस्थिताः । अग्रस्थमेव द्रष्टव्यं जगत्स्थावरजंगमम् ॥ शुक्लपक्षे शुभे वारे पुं(शु)नक्षत्रे सुगोचरे । द्वादश्यां पुत्रकामाय चरुं ( कूर्चं ) कुर्वीत वैष्णवम् ॥ दंपत्योरुपवासः स्यादेकादश्यां सुरालये । ऋग्भिः षोडशभिः सम्यगर्चयित्वा जनार्दनम् ॥ दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा । अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥ चरुं पुरुषसूक्तेन श्रपयेत्पुत्रकाम्यया । प्राप्नुयाद्वैष्णवं पुत्रमचिरात्संततिक्षमम् ॥ समिधोऽश्वत्थवृक्षस्य हुताग्नौ जुहुयात्पुनः । उपस्थाने हुताशस्य ध्यायेच्च मधुसूदनम् ॥ हविर्होमं ततः कुर्यात्प्रत्यृचं वाग्यतः शुचिः । सूक्तेन जुहुयादाज्यं हविःशेषं च पूर्ववत् ॥ अत्र हविःशेषं च पूर्ववदिति हविःशेषेण पूर्ववत्स्विष्टकृद्धोमं कुर्यादित्यर्थः । हविःशेषं नमस्कृत्य नारी नारायणं प्रति । भक्षयित्वा हविःशेषं लभ्याशीः संनिशेत्क्षपाम् ॥ ततः कृत्वा द्विजः कर्म कर्तव्यं द्विजतर्पणम् । यां द्वितीयां निवर्तेत या च गर्भं न विन्दति ॥ अपुत्रा मृतपुत्रा वा या च कन्याः प्रसूयते । क्षिप्रं सा जनयेत्पुत्रमृष्यशृङ्गो यथाब्रवीत्' इति पुरुषसूक्तकल्पः ॥ ❀ ॥ अन्यच्च—'यस्या गर्भः प्रमीयेत तन्नारी जुहुयाद्धविः । ब्रह्मणाग्निः संविदान इत्याज्येन यथाविधि ॥ आज्यशेषेण चाभ्यज्य गर्भिणी प्रसवेऽपि च । पिबेच्चेदाज्यशेषं तु जीवंस्तस्याः प्रजायते' इति ॥ अन्यच्च—'उरोष्ट इति सूक्तेन चोपतिष्ठेच्छतक्रतुम् । प्रजाकामो यजेन्नित्यं चरुणैवापि यत्नतः ॥ उपहृत्योपहारं च शिष्टं भुञ्जीत वाग्यतः । उच्छिष्टं च प्रदातव्यं

मार्यायै पुत्रमिच्छता ॥ धेन्वाः सरूपवत्सायाः पयसा साधयेच्चरुम् । अनुरूपां प्रजामाशु लभते नात्र संशयः' इति ॥ ❀ ॥ जपरूपाण्याह स एव—'यज्ञो देवानां सूक्तं तु त्र्ययुतं विष्णुमन्दिरे । मृतपुत्रोऽनपत्यो वा सुपुत्रं सर्वथा लभेत् ॥ आमनीषा जपेद्वर्गं यदुकन्या लभेद्यदि । सुपुत्रं लभते पश्चात्त्ययुतं विष्णुमन्दिरे ॥ तयोद्वपा जपेत्सूक्तं वन्ध्या लक्षं शिवालये । आयुष्यवन्तं पुत्रं च भाग्यवन्तं प्रसूयते ॥ पुष्पं दृष्ट्वापि या गर्भं न गृह्णीयाद्वयोन्विता । विष्णुर्योनिमिति त्वेतद्योनिं स्पृष्ट्वा ततो जपेत्' इति ॥ आह च व्यासः—'सुदर्शनं महामन्त्रं शुचिर्भूत्वा समाहितः । नित्यमष्टोत्तरशतं जपन्पुत्रं लभेत्सुतम्' इति ॥ ❀ ॥ अथौषधिरूपाण्युच्यन्ते । श्रीधरीये व्यासः—'अङ्कोलमूलकल्कं तु चूर्णीकृत्वा गुडेन युक् । काकाण्डमितमश्नीयात्पुत्रिणी च भविष्यति' इति ॥ वसिष्ठश्चाह—'उत्तमं कर्णिकामूलं पेषयित्वा पयः पिबेत् । पायसान्नं समश्नीयात्पुत्रिणी सहसा भवेत्' इति ॥ गौतमश्च—'जीवद्रक्षाङ्कुरं (?) गृह्य पेषयित्वा पयः पिबेत् । दैवोऽप्यत्र कृतो दोषो विनश्यति सुतं लभेत्' इति ॥ मुद्गलश्च—वटाग्रं निम्बबीजं च स्तन्येन पयसा पिबेत् । पुत्रं प्रसूयते नारी दैवदोषं विमुञ्चति' इति ॥❀॥ अथ तीर्थरूपाणि । तत्र पराशरः—'महातीर्थे महायोगे महानद्यनुसंगमे । पलाशस्य दलात्स्नानं कुर्यात्पुत्रसुतार्थिनी' ॥ देवलश्च—'पलाशदशसाहस्रात्सावित्रेण दलं प्रति । स्नापयेत्सपवित्रेण एकादश्यां प्रजार्थिनी' इति ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे पुत्रकामेष्टिप्रकरणम् ॥

अथ पुत्रप्रतिग्रहः । कृपापरयशो लोकैः श्रीनृसिंह निगद्यसे । शुक्तं तत्कातरं शत्रोः पुत्रं पर्यग्रहीर्यतः ॥ एवमुक्तपुत्रकामेष्ट्यादिनाप्यजातपुत्रस्य पुत्रपरिग्रहविधिरभिधीयते—'नाऽपुत्रस्य लोकोऽस्ति' इति श्रवणात्, विष्णुरप्याह—'पुत्रेण

लोकान्जयति पौत्रेणानन्त्यमश्नुते । अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥ पौत्रदौहित्रयोर्लोके विशेषो नोपलक्ष्यते । परलोके ह्यपुत्रेनं संतारयति पौत्रवत्' इति । तस्मादपुत्रेण पुत्रपरिग्रहः कर्तव्यः ॥ पुत्रप्रतिग्रहप्रकारः शौनकेन प्रदर्शितः—'शौनकोऽहं प्रवक्ष्यामि पुत्रसंग्रहमुत्तमम् । अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च ॥ वाससी कुण्डले दत्त्वा उष्णीषं चाङ्गुलीयकम् । आदाय धर्मसंयुक्तं वैष्णवं वेदपारगम् ॥ बर्हिः कुशमयं चैव पलाशं चेध्ममेव च । एतान्याहृत्य बन्धूंश्च ज्ञातीनाहूय सत्तमः ॥ बन्धूनन्नेन संभोज्य ब्राह्मणांश्च विशेषतः । अन्वाधानादि यत्तन्त्रं कृत्वाज्योत्पवनादिकम् ॥ दातुः समक्षं गत्वा तु पुत्रं देहीति याचयेत् । दाने समर्थो दद्यादेवं यज्ञेनेति पञ्चभिः ॥ देवस्य त्वेति मन्त्रेण हस्ताभ्यां परिगृह्य तम् । अङ्गादङ्गेत्यृचं जप्त्वा आघ्राय शिशुमूर्धनि ॥ वस्त्रादिभिरलंकृत्य छत्रछायासमन्वितः । नृत्यगीतैश्च वाद्यैश्च स्वस्तिशब्दैश्च संयुतः ॥ गृहमध्ये तमादाय चरुं कृत्वा विधानतः । यस्त्वा हृदेत्यृचा चैव तुभ्यमग्रेत्यृचैकया ॥ सोमोऽददद्दित्येताभिः प्रत्यृचं पञ्चभिस्तथा । स्विष्टकृदादिहोमं च कृत्वा शेषं समापयेत् ॥ ब्राह्मणानां सपिण्डेषु कर्तव्यः पुत्रसंग्रहः । तदभावे सगोत्रो वा अन्यत्र तु न कारयेत् ॥ क्षत्रियाणां सजातौ वा गुरुगोत्रभवोपि वा । वैश्यानां वैश्यजात्यां तु शूद्राणां शूद्रजातिषु ॥ सर्वेषां चैव जातीनां ज्ञातिष्वेव च नान्यतः । दौहित्रं भागिनेयं वा शूद्राणां च पतिर्यदि ॥ नैकपुत्रेण कर्तव्यं पुत्रदानं कदाचन । बहुपुत्रेण कर्तव्यं पुत्रदानं च यत्नतः ॥ दक्षिणां गुरवे दत्त्वा यथाशक्ति द्विजोत्तमः । नृपो राष्ट्रार्धमेवापि वैश्यो वित्तस्य तु त्रयम् ॥ शूद्रः सर्वस्वमेवापि ह्यशक्तश्चेद्यथाबलम्' इति ॥ ॥ हेमाद्रौ वसिष्ठस्तु—'शुक्रशोणितसंभवः पुरुषो मातापितृनिमित्तकस्तस्माचस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतो नत्वेकं पुत्रं

दद्यात्प्रतिगृह्णीयाद्वा स हि त्रायते पुरुषः । नतु स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्तुः । पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि चावेद्य निवेशनमध्ये व्याहृतिभिर्हुत्वाऽदूरेबान्धवं संनिकृष्टमेव प्रतिगृह्णीयात् । संदेहे चोत्पन्ने दूरेबान्धवं शूद्रमिव स्थापये-द्विज्ञायते ह्येकेन बहूंस्त्रायत इति तस्मिंश्चेत्प्रतिगृहीते तत औरसः पुत्र उत्पद्येत स चतुर्थभागभागी स्यात्' इति । अस्यार्थः—बन्धूंस्त्वबान्धवान् । राजनि चावेद्य राज्ञोनुज्ञां प्राप्य । निवेशनं गृहं तस्य मध्ये लौकिकमेवाग्निं स्थापयित्वा आज्यभागानन्तरं व्यस्तसमस्ताभिर्व्याहृतिभिराज्याहुतिचतुष्टयं हुत्वा जयानभ्यातानान्राष्ट्रभृतः सर्वप्रायश्चित्तं महाव्याहृतीश्च हुत्वा स्विष्टकृदादिप्रणीतानिमोकान्तं विधाय ब्रह्मणे ब्राह्मणेभ्यश्च दक्षिणां प्रदाय पुत्रं प्रतिगृह्णीयात् । अदूरेबान्धवं अदूरेचासौ बान्धवश्चादूरे बान्धवः । अयमर्थः—प्रथमं तावत्सतिसंभवे संनिहितो बन्धुरेव पुत्रीकार्यः । तदभावे व्यवहितो बन्धुः तदभावे बन्धुव्यतिरिक्तोपि । संदेहे चोत्पन्ने इति वक्ष्यमाणत्वात् । संदेहोत्र कुलशीलादिविषयः स च बन्धुव्यतिरिक्ते एव संभवति । बन्धुसंनिकृष्टे समीपबान्धवत्वेन विदिताभिजनमित्यर्थः । संदेहे तु दूरेबान्धवं बहुविदूरदेशवर्तिनमासंदेहनिवृत्तेः स्थापयेत् । अत्र हेतुत्वेन श्रुतिमुपन्यस्यति—'विज्ञायते ह्येकेन बहूंस्त्रायत' इति । एकेन पुत्रेण बहून्पुरुषांस्त्रायते तस्मात्प्रतिग्रहेणापि पुत्रमर्जयेदित्यर्थ इति । इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे पुत्रप्रतिग्रहप्रकरणम् ॥

अथ नामकरणम् । दूरीभवन्ति दुरितान्यपयान्ति पापाः प्रादुर्भवन्ति विभवाः परमाः सुहृद्याः । संपद्यते च सुखसंपदपैति मोहः श्रीमन्नृसिंह तव नामजपक्रियातः ॥ अथेदानीं नामकरणविधिरभिधीयते । तत्र तावत्तिथ्यादिविधिमाह

वसिष्ठः—'दशमे द्वादशे वाह्नि नामकर्म विधीयते । ततः परं विधानोक्तं वारनक्षत्रराशिषु' ॥ मनुरपि—'नामधेयं दशम्यां तु द्वादश्यां वास्य कारयेत् । पुण्ये तिथौ मुहूर्ते च नक्षत्रे वा गुणान्विते' ॥ प्राप्तकालेपि निषेधमाह गर्गः—'व्यतीपाते च संक्रान्तौ ग्रहणे वैधृतावपि । श्राद्धं विना शुभं नैव प्राप्तकालेऽपि मानवः' ॥ अन्यच्च—'अमासंक्रान्तिविष्ट्यादौ प्राप्तकालेऽपि नाचरेत्' ॥ व्यासः—'नामधेयं दशम्यां तु केचिदिच्छन्ति सूरयः । द्वादश्यामाहुरन्ये तु मासे पूर्णे तथापरे ॥ अष्टादशेऽहनि तथा वदन्त्यन्ये मनीषिणः' इति । गृह्यपरिशिष्टे—'जननाद्दशरात्रे व्युष्टे पररात्रे संवत्सरेऽपि वा नामकरणम्' इति । इदं च नामकरणं त्रैवर्णिकसाधारणम् ॥ तदाह मनुः—'नामधेयं दशम्यां तु द्वादश्यां वा द्विजन्मनाम् । पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते' इति ॥ नारदस्तु शूद्राणामप्यसीत्याह—'जन्मतो दशमे वापि द्वादशे वापि तत्पुनः । विप्राणां नामकर्म स्यादाशौचान्तेषु शेषयोः ॥ शूद्राणामपि चैवं स्यात्सतां नामासतामपि । केचिन्नाम सतां प्राहुरेकविंशदिने शुभे ॥ काले नाम प्रयोक्तव्यं तद्विप्रैः स्वस्तिवाच्य च ॥ प्राप्तकाले त्वतिक्रान्ते नाम स्याच्छास्त्रचोदिते' इति ॥ बृहस्पतिश्चाह—'द्वादशे दशमे वापि जन्मतो दिवसे शुभे । षोडशे विंशतौ चैव द्वात्रिंशे वर्णतः क्रमात्' ॥ तथाच महाभारते—'द्वादशे षोडशे विंशे द्वात्रिंशे क्रमतो दिने । नाम कार्यं द्विजातीनां विप्रस्य दशमेपि वा' इति ॥ ॥ एतदुक्तकालातिक्रमे शास्त्रचोदिते कर्तव्यमित्युक्तं सच कालः श्रीधरीयदर्शितेन पथा प्रतिपाद्यते—'नामकर्म दशमेऽथवाहनि द्वादशे शुचिषु वा विधीयते । स्वोचमित्रभवनेषु सद्ग्रहैः स्याद्यैर्यदि विलोकिताः शुभाः' । अत्राह्नीति दिवसविधानेन नामकर्मणि गुरुशुक्रमूढत्वदोषो नास्तीत्युच्यते ॥ तथाच बृह-

स्पतिः—'यस्यां क्रियायां मयोक्तः कालो मार्गैर्दिनैरपि । तस्यां न दोषो मूढत्वे वक्रत्वे जीवशुक्रयोः' ॥ मुहूर्तसंग्रहे विशेष उक्तः—'पूर्वाह्णः श्रेष्ठ इत्युक्तो मध्याह्नो मध्यमः स्मृतः । अपराह्णं च रात्रिं च वर्जयेन्नामकर्मणि' इति ॥ ज्योतिर्नृसिंहोपि— 'सायाह्ने दुष्टयोगे च शनिभूमिजवारयोः । रिक्तापर्वाष्टमीविष्टिकिंस्तुघ्नेषु विशेषतः । एतैर्दोषैर्युते काले रात्रावपि न कारयेत्' ॥ अथोत्तरार्धे लग्नगोचराणि लग्नविधिश्चोच्यते । स्वोच्चमित्रेत्युत्तरश्लोके 'राशौ स्थिरे चोभये' इति वक्ष्यमाणस्वोच्चमित्रभवनगताः शुभग्रहाः स्वोच्चमित्रभवनगतैः शुभग्रहैर्निरीक्षिताः राशेश्च स्थिराख्यराशेश्च नामकर्मणि शुभप्रदाः । तथाच बृहस्पतिः—'शुभांशे शुभवीक्षायां शुभक्षेत्रे शुभोदये । शुभवारे च पड्वर्गे शुभानां नाम संपदे ॥ राशयश्च स्थिराः श्रेष्ठा द्विस्वभावाः शुभैर्युताः । श्रेष्ठा नेष्टास्तथा शेषा यद्यप्युक्तशुभैर्युताः ॥ स्वोच्चस्वषड्वर्गयुतग्रहाणां लग्नेऽथवा वीक्षितयुक्तराशौ । शुभग्रहाणां च विशेषतश्च नामानुकीर्तिं शुभदां वदन्ति' ॥ अथ नक्षत्रादिनिर्णयः—'मित्रादित्यमघोत्तराशतभिषक्स्वातीधनिष्ठाच्युतप्राजेशाश्विशशाङ्क-पौष्णदिनकृत्पुष्येषु राशौ स्थिते । छिद्रां पञ्चदशीं विहाय नवमीं शुद्धेऽष्टमे भार्गवज्ञाचार्यामृतपादभागदिवसे नामानि कुर्याच्छिशोः' ॥ मित्रोऽनूराधा । आदित्यः पुनर्वसुः । अच्युतः श्रवणः । प्राजेशो रोहिणी । शशाङ्को मृगशिरः । दिनकृद्धस्तः । शेषाणि प्रसिद्धानि । एषु नक्षत्रेषु शिशोर्नामानि कुर्यादिति संबध्यते ॥ तदुक्तं विधिरत्ने—'आदित्यतिष्यश्रवणश्रविष्ठाः पूषा विरिञ्चिः पवनोपि मित्रः । हस्तो मघाश्वी वरुणश्च मूलं त्रीण्युत्तराण्याहुरुडूनि नाम्नि' ॥ बृहस्पतिश्चाह—'त्र्युत्तरासु श्रविष्ठायां रेवतीहस्तयोरपि । मूलवारुणपुष्येषु श्रविष्ठादित्ययोरपि ॥ मैत्रवाजिमयोः स्वातिरोहिण्यैन्दवभेषु च । कुर्यान्नामक्रियां वि-

ज्ञानायुःश्रीकान्तिवृद्धये' इति । राशौ स्थिरे वृषभसिंहवृश्चिककुम्भेषु ॥ अथ तिथिनिर्णयः—छिद्रामित्यादि । चतुर्थीषष्ठचष्टमीद्वादशीचतुर्दश्यश्छिद्राः । एताश्च पञ्चदशीं नवमीं चेति सप्ततिथीन्विहाय शेषास्तिथयो नामकर्मणि विहिताः । 'युग्माश्च तिथयः सर्वा अजधर्मतिथीन्विना। पक्षच्छिद्रा इति ज्ञेयाः सर्वकर्मसु गर्हिताः' इति । अजो द्वितीया । धर्मो दशमी । तथा नृसिंहः—'छिद्राख्याः पर्व नवमीं हित्वा शेषाः शुभावहाः । शकुन्यादीनि विष्टिं च नामकर्मणि वर्जयेत्' ॥ नारदः—'शुभनक्षत्रयोगेषु शुभेषु शुभमीरितम् । अशुभेष्वशुभं विद्यान्नामकर्मणि मानुषे ॥ ॥ अथ लग्नगोचरमाह—शुद्धेऽष्टम इति । लग्नादष्टमे ग्रहरहिते इत्यर्थः । तथाह नृसिंहः—'लग्नाद्व्ययेऽष्टमे सर्वे अशुभा नामकर्मणि । केन्द्रत्रिकोणगाः सौम्या व्यये सर्वेप्यशोभनाः' इति ॥ अथ वारांशकविधिमाह—भार्गवेत्यादि । भार्गवः शुक्रः । ज्ञो बुधः । आचार्यो बृहस्पतिः । अमृतपादः शशी । एषां चतुर्णामंशकेषु दिवसेषु नामकर्म कार्यम् । तथाह वसिष्ठः—'बुधेन्दुसितजीवानामंशके दिवसोदये । द्रेकाणे कालहोरायां नामकर्म प्रशस्यते' ॥ कालनिर्णये—'शुभवारे च षड्वर्गे शुभानां नाम संपदे । पापानां वारवर्गाश्च निन्दिता नामकर्मणि' इति । अत्र शिशोरिति नामादीनां देवालयग्रामादीनामुपलक्षणम् । तदाह संग्रहकारः—'देवालयगजाश्वानां वृक्षाणां वापिकूपयोः । सर्वोपकरणानां च चिह्नानां योषितां नृणाम् ॥ कन्यादीनां कवीनां च पश्वादीनां विशेषतः । राजप्रासादसंज्ञानां नामकर्म विधिष्यते' ॥ गर्गस्तु—'मासनाम गुरोर्नाम दद्याद्बालस्य वै पिता । कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ जनार्दनः ॥ उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः । योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात् ॥ तन्मासनाम प्रथमं दद्यात्संबोध्य चैव हि' ॥

अत्र मनुः—'माङ्गल्यं ब्राह्मणस्य स्यात्क्षत्रियस्य बलान्वितम् । वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥ शर्मवद्ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम् । वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम्' ॥ व्यासः—'शर्मेति ब्राह्मणस्योक्तं वर्मेति क्षत्रियस्य तु । गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः' ॥ यमः—'शर्मदेवश्च विप्रस्य वर्म राजा च भूभुजः । गुप्तो दासश्च वैश्यस्य दासः शूद्रस्य कारयेत्' । नामान्तीति शेषः ॥ अत्राहाश्वलायनाचार्यः—'चतुरक्षरं द्व्यक्षरं वा नामकर्माणि शस्यते । नाम पैतामहं शस्तं माद्यं वा द्विजन्मसु ॥ द्वादशेऽहनि कार्या स्यान्नामकर्मक्रिया शुभा । गृह्योक्तविधिना विप्रैरुत्तरत्र शुभेऽह्नि वा ॥ शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु । गुप्तदासपदे स्यातामुभयोर्वैश्यशूद्रयोः' ॥ अत्रोपपत्तिमाह—'तपसा ब्रह्मचर्येण दमेन च शमेन च । जगतां शर्मदानेन शर्मान्तं ब्राह्मणे भवेत् ॥ तापत्रयादतिबलाज्जगत्संवहतीति यत् । तस्मात्सर्वसमे धीरे वर्मान्तं क्षत्रिये भवेत् ॥ कालेकाले धनं दत्त्वा सर्वान्गोपायतीति यत् । तस्माद्वैश्यस्य नामैतद्गुप्तान्तमभिधीयते ॥ द्विजान्शुश्रूषया नित्यं शूद्रस्तोषयतीति यत् । तस्मात्तस्य च दासत्वं तत्स्त्रीणां तथा तथा' ॥ अत्र मनुः—'स्त्रीणां च सुखमक्रूरं विस्पष्टार्थं मनोहरम् । माङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत्' ॥ सायणीये—'नार्थहीनं न चाशास्त्रं नापशब्दयुतं तथा । नामङ्गल्यं न जुगुप्स्यं नाम कुर्यान्मनोहरम् ॥ नातिदीर्घं न कुत्सार्थं नातिगुर्वक्षरान्वितम् । सुखोच्चारयुतं नाम कुर्याद्विप्रवरो गुरुः' ॥ कपिलसंहितायाम्—'एकादशेऽह्नि विधिवन्नाम कुर्यात्कुलोचितम् । देवतानां विशेषेण पित्रोर्नाम च शस्यते ॥ नैव कार्यं नृपादीनां नाम जीवनहेतुतः । पूर्वं परस्य वर्णस्य हीनस्यापि न धारयेत्' इति । कारिका—'द्वादश्यां नामकरणं नान्दीश्राद्धे कृते भवेत् । अनन्तरं दशम्यादौ

यद्वा नाम्नः कृतिर्भवेत् ॥ अनन्तरं जातकर्मानन्तरं वेत्यर्थः । पुंसां युग्माक्षराणि स्युर्विपरीतानि योषिताम् । पक्षो घोषवदित्या-दिरेवकारादनादृतः ॥ स्वस्त्यस्मै देवदत्ताय ब्रूतेति ब्राह्मणान्वदेत् । नामाभिवादनीयं च गुप्तमामौञ्जिबन्धनात्' इति । कुर्यादिति शेषः । इदमत्र गृह्यम्—'नाम चास्मै दद्युर्घोषवदाद्यन्तरन्तस्थमभिनिष्ठानान्तं द्व्यक्षरं चतुरक्षरं वा द्व्यक्षरं प्रतिष्ठाकामश्चतुरक्षरं ब्रह्म-वर्चसकामो युग्मान्येव पुंसामयुजानि स्त्रीणामभिवादनीयं च समीक्षेत तन्मातापितरौ विद्यातामोपनयनात्' इति । अस्यार्थः—दद्युरिति बहुवचननिर्देशात्पिता माता बान्धवाश्च समुदिता नाम दद्युः कुर्युरित्यर्थः । नामकरणस्याचार्येण कालान्तरानुक्तेर्जातकर्मा-नन्तरं कार्यमित्येके । अन्ये शास्त्रान्तरोक्तः कालो ग्राह्य इत्याहुः । उक्तं च मनुना—'नामधेयं दशम्यां तु द्वादश्यां वापि कार-येत् । पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते' इति । कीदृग्लक्षणं तन्नामेत्याह—घोषवदिति । वर्गाणां प्रथमद्वितीया ऊष्मा-णश्च हकारवर्जमघोषवन्तः शिष्टा घोषवन्तः त आदौ यस्य तत्तथोक्तम् । अन्तर्मध्येऽन्तस्था यस्य तत्तथोक्तम् । यकारादयश्चतस्रो-ऽन्तस्थाः । अभिनिष्ठानो विसर्जनीयः सोऽन्ते यस्य तत्तथोक्तं अक्षरं स्वरव्यञ्जनात्मकम् । अकारादयो द्वादश स्वराः शिष्टं व्यञ्जनम् द्वे अक्षरे यस्य तत् द्व्यक्षरं व्यञ्जनद्वयपरिमितं चतुरक्षरं वा उक्तलक्षणं नाम कुर्युः—रुद्रः देवः भवः भवनाथः देवदत्तः नागदेवः रुद्रदत्तः इत्येवंलक्षणानि नामानि भवन्ति । द्व्यक्षरं चतुरक्षरं वेति यदुक्तं तत्काम्यमपीत्याह—द्व्यक्षरं प्रतिष्ठाकामश्चतुरक्षरं ब्रह्मवर्चस-काम इति । प्रतिष्ठाब्रह्मवर्चसे कुमारस्य, तत्संस्कारत्वात् । न कर्तुः । अथवा युग्मानि स्त्रेव पुंसामिति । युग्मानि युग्माक्षराणि पुंसां नामधेयानि भवन्ति । एवकारोऽवधारणार्थः । कथं युग्ममेवाद्रियेत न पूर्वाणि लक्षणानीति । तेन शिवदत्तः नागदत्तः देवस्वामी वसु-

शर्मा रुद्रः जनार्दनः देवघोषः पुरंदरः विष्णुशर्मेत्यादि सिद्धम् । अयुजानि स्त्रीणामिति । अयुजान्ययुग्माक्षराणि स्त्रीणां नामानि भवन्ति—सुभद्रा मावित्री सत्यदा वसुदा इत्यादि । एवं सांव्यवहारिकं नाम कृत्वा अभिवादनीयं च कार्यमित्याह—अभिवादनीयं चेत्यादि । येन नाम्ना उपनीतोऽभिवादयते तच्च समीक्षेत कुर्यादित्यर्थः । तच्च मातापितरावेव विद्यातामोपनयनात् । उपनीतस्तु तमाचक्षते अनेन नाम्नाभिवादयस्वेति ॥ अत्र भगवान्—'शिशोर्नामाथ पित्रादिर्दशमे द्वादशेऽह्नि वा । कुर्याद्वा गुणैर्युक्ते नक्षत्रे सुगुणे शिशोः ॥ इदमार्याः कुमारस्य नामास्य विदधाम्यहम् । इति विज्ञापितैर्विप्रैर्विद्वद्भिरनुमोदितः ॥ नाम घोषवदादित्वाद्युक्तलक्षणसंयुतम् । पुण्ये मुहूर्ते बालस्य विधेयं वेदपारगैः ॥ ब्राह्मणैः सार्धमारभ्य पूर्वं पुण्याहवाचनम् । तत्र पुण्याहपर्यन्तं यथाविधि समाप्य च ॥ स्वस्तिपर्यायमध्ये तु नामधेयं विधित्सितम् । चतुर्थ्यन्तमुदीर्यादौ पिता तन्नामकर्मणः । स्वस्तीत्यादिं ब्रुवन्स्वन्तं भवत्पदमुदीरयेत् ॥ वक्तारश्च चतुर्थ्यन्तं बालनामोक्तिपूर्वकम् ॥ स्वस्तीत्येव प्रतिब्रूयुरथ सर्वैरपि द्विजैः । सह मन्त्रमुदीर्यादौ पिता तन्नामकर्मणः । पुण्याहशेषं तत्सर्वं यथाविधि समाप्नुयात् ॥ येन नाम्नोपनीतोऽसौ करिष्यत्यभिवादनम् । तच्चास्मिन्नेव समये कर्तासौ नामकर्मणः । अभिवादननामेदमस्येत्यालोच्यते सदा । उपांशु निर्दिशेच्चैतन्न जानीयुर्यथा परे ॥ तच्च नामोपनयने स्मरेतां पितरौ शिशोः' इति । केचिदिदमपि कर्म सहोमकमिति ब्रुवते तत्पक्षे होमप्रकारमाह स एव—'अत्रापि होमवत्पक्षे जातकर्मवदादितः । पुरस्तात्तममाचार्यः कृत्वाऽनादेशआहुतीः ॥ ततस्तेनेह पुण्याहप्रकारेण यथापरम् । नामाभीप्सितमादाय ततः स्विष्टकृदादिकम् ।

संस्कारप्र०

नामकरणं०

उपरिष्टात्तनं तन्त्रं कुर्याच्चैव यथाक्रमम् ॥ कुमार्याश्चेदमखिलं कर्म कुर्यादमन्त्रकम् । पुंसां युग्माक्षरं नाम स्यात्स्त्रीणामयुगक्षरम् । यत्किंचिद्वाथ पित्रादेर्नाम दद्याद्यथेप्सितः' इति ॥

अथ नामकरणप्रयोगः । जन्मदिनापेक्षया दशमे द्वादशाहे वान्यस्मिन्वानुकूले दिने शिशोर्नामकर्म करिष्यन्ब्राह्मणानाहूय स्वस्तिवाचनमुपक्रम्य पूर्वोक्तवत्पुण्याहवाचनं कृत्वा करिष्यमाणं नाम चतुर्थ्यन्तमुच्चार्य तस्मै नाम्ने स्वस्ति भवन्तो ब्रुवन्त्वित्युक्त्वा तैश्च ब्राह्मणैरेतन्नाम्ने स्वस्तीति प्रत्युक्ते पुनरेवं द्विवारमुक्त्वा पुण्याहशेषं समाप्य ब्राह्मणान्प्रति 'इदमार्याः कुमारस्य नामास्य विद्धाम्यहं' इति विज्ञाप्य तदनुज्ञामादाय देशकालौ निर्दिश्य अस्य शिशोरायुरभिवृद्धिव्यवहारसिद्धिद्वारा श्रीप० नामकर्म करिष्य इति संकल्प्य तदादौ ग्रहयज्ञाभ्युदयिके कृत्वा जातकर्मवदनादेशदेवताभ्यः प्रधानहोमान्तं कृत्वा चैत्रमासादिक्रमेण मार्गशीर्षादिक्रमेण वा यथाचारं प्रागुक्तकृष्णादिनामानि परिगणय्य क्रमप्राप्ततज्जन्ममासर्क्षनामानि प्रथमं कृत्वा पुंसो युग्माक्षरं दैवं पैतामहं वा नाम कृत्वा ततोऽभिवादनीयं नाम यथावर्णं शर्म—वर्म—गुप्त—दासा—न्यतमपदान्तमुपांशु कुर्यात् । तच्चामौञ्जीबन्धनात्पितरौ स्मरेताम् । ततः पिता देवताभ्यो ब्राह्मणेभ्यश्च नमस्कृत्य स्विष्टकृदादिहोमशेषं समाप्य कर्मान्ते कर्तव्यं स्वस्तिवाचनं पूर्ववत्कृत्वा ब्राह्मणान्भोजयीत । कुमार्याश्चेदयुग्माक्षरं कुर्यात् । इदमार्याः कुमारस्येत्यत्र कुमार्या इत्यूहः कार्यः । अभिवादनीयनामवर्जमितरत्सर्वं समानम् ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे नामकरणप्रकरणम् ॥

अथ जननशान्तयः ॥ नृसिंह युष्मत्पदपद्मसेवाप्रसादमासाद्य सुतान्प्रसूते । त्यागं च भोगं च विभुत्वलाभं सौभाग्य-

लाभं पृथुदान्तिशान्ती ॥ अथोक्तस्य नामकर्मणो दुष्टनक्षत्रतिथिलग्नजातानां शान्तिहोमपुरःसरं कर्तव्यत्वात्तत्प्रतिपदोक्तशान्तयो वक्ष्यन्ते। तत्रतावत्सर्वारिष्टशान्तिसाधारणत्वाद्गोमुखप्रसवशान्तिकर्मादौ वक्ष्यते । तत्र गर्गः—'प्रणिपत्य रविं वक्ष्ये प्रायश्चित्तमनुस्मरन् । सर्वारिष्टविनाशाय यदुक्तं ज्यौतिषार्णवे ॥ मात्रंरिष्टे पित्ररिष्टे आत्मारिष्टे तथैव च। प्रायश्चित्तं तदा कुर्यात्तद्दोषस्य शान्तये ॥ पूषाश्विनोर्गुरौ सार्पमघाचित्रेन्दुमूलके । ऋक्षेष्वेतेषु जातस्य कुर्याद्गोजननं तथा॥ जन्मर्क्षे वा त्रिजन्मर्क्षे शुभे वारे शुभे दिने । कृत्वाभ्यङ्गादिकं सर्वं गृहालंकारपूर्वकम् ॥ गोमयेनोपलिप्याथ गृहस्यैशानभागके । पङ्कजं कर्णिकायुक्तं रजोभिः श्वेतवर्णकैः ॥ व्रीहींस्तत्र विनिक्षिप्य यथावित्तानुसारतः । नवशूर्पं तु तन्मध्ये रक्तवस्त्रं प्रसारयेत् ॥ स्थापयित्वा शिशुं तत्र पुनः सूत्रेण वेष्टयेत् । प्राक्मस्तकमधारपादं तिलगर्भगतं शिशुम् ॥ गोमुखं दर्शयित्वाथ पुनर्जातं तु गोमुखात् । विष्णुर्योनीति सूक्तेन गव्येन स्नापयेच्छिशुम् ॥ गवामङ्गेषुमन्त्रेण गवामङ्गेषु संस्पृशेत् । विष्णोः श्रेष्ठेन मन्त्रेण गोप्रसूतं तु बालकम् ॥ आचार्यस्तं समादाय पश्चान्मात्रे ददेत्पिता ॥ माता जघन्यभागस्थं शिशुमानीय तन्मुखात् । ततः पित्रे तदा दद्यात्ततो मात्रे प्रदापयेत् ॥ वस्त्रे स्थाप्य पिताऽस्याथ पुत्रस्य मुखमीक्षयेत् । गोमूत्रं गोमयं क्षीरं दधि सर्पिश्च संयुतम् । आपोहिष्ठादिभिर्मन्त्रैरभिषिञ्चेत्ततः शिशुम्। मूर्ध्नि चाघ्राय सत्पुत्रं तन्मन्त्रेण तदा पिता ॥ अङ्गादङ्गात्संभवसि हृदयादधि जायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥ मूर्धनि त्रिरवघ्राय तं शिशुं स्नापयेत्ततः । पुण्याहं वाचयेत्पश्चाद्ब्राह्मणैर्वेदपारगैः॥ दरिद्रायाथ विप्राय तां गां चाभ्यर्च्य

१ पित्रारिष्टे पुत्रारिष्टे मातृरिष्टे तथैव च।

दापयेत् । गोवस्त्रस्वर्णधान्यादि दद्यादर्कादितः क्रमात् ॥ यथाशक्ति धनं दद्याद्ब्राह्मणेभ्यस्तदा पिता । ततो होमं प्रकुर्वीत स्वस्वशाखोक्तमार्गतः ॥ उल्लेखनादिकं कृत्वा आज्यभागान्तमाचरेत् । गृहस्यैशानदिग्भागे धान्योपरि शुभं घटम् । पञ्चगव्यं घटे स्थाप्य तिलांस्तत्र विनिक्षिपेत् ॥ क्षीरद्रुमकषायांश्च पञ्चरत्नानि निक्षिपेत् । वस्त्रयुग्मं च संस्थाप्य गन्धादिभिरथार्चयेत् ॥ विष्णुं वरुणमभ्यर्च्य प्रतिमायां विधानतः । यतइन्द्रादिभिर्मन्त्रैः कुम्भं स्पृष्ट्वाभिमन्त्रयेत् ॥ दधिमध्वाज्ययुक्तेन होमं कुर्याद्विधानतः । 'वरुणेति शेषः । आपोहिष्ठेति तिसृभिरप्सु मे सोम इत्यपि । तद्विष्णोरिति मन्त्रेण अक्षीभ्यामिति सूक्ततः ॥ ऋग्भिराभिः प्रत्यृचमष्टाविंशतिसंख्यया । अशक्तश्चाष्टसंख्या वा दधिमध्वाज्यसंयुतम् । आदित्यादिग्रहाणां च होमं कुर्यात्समन्त्रकम्' इति ॥ इति शौनकीये गोमुखप्रसवशान्तिः ॥

अथ कृष्णचतुर्दशीजननशान्तिः ॥—'मन्दरस्थं सुखासीनं गर्गं मुनिवरं शुभम् । नमस्कृत्वा तु पप्रच्छ शौनको मुनिपुंगवः ॥ शान्तिकर्माणि सर्वाणि त्वत्तो जानाम्यहं पुरा । अधुना श्रोतुमिच्छामि कृष्णपक्षचतुर्दशीम् ॥ दिवा वा यदि वा रात्रौ प्रसूतेः किं फलं वद ॥ गर्गः—कृष्णपक्षे चतुर्दश्यां प्रसूतेः षड्विधं फलम् । चतुर्दशीं च षड्भागां कुर्यादादौ शुभं स्मृतम् ॥ द्वितीये पितरं हन्ति तृतीये मातरं तथा । चतुर्थे मातुलं हन्ति पञ्चमे वंशनाशनम् ॥ षष्ठे तु धनहानिः स्यादात्मनो वंशनाशनम् । तस्मात्सर्वप्रयत्नेन शान्तिं कुर्याद्विधानतः ॥ आचार्यं वरयेद्धीमान्पुत्रदारसमन्वितम् । स्वकर्मनिरतं शान्तं श्रोत्रियं वेदपारगम् ॥ सर्वालंकारसंयुक्तं सर्वलक्षणसंयुतम् । ब्राह्मणानृत्विजश्चैव स्वस्तिवाचनपूर्वकम् ॥ रुद्रोऽधिदेवता तस्याः कर्षमात्रसुवर्णतः । तदर्धार्धेन

वा कुर्याद्वित्तशाठ्यविवर्जितः ॥ प्रतिमां कारयेच्छंभोः सर्वलक्षणसंयुताम् । वृषभे च समासीनं वरदाभयपाणिनम् ॥ शुद्धस्फटिकसंकाशं श्वेतमाल्याम्बरान्वितम् । त्र्यम्बकेण मन्त्रेण पूजां कुर्याद्विधानतः ॥ स्थापयेच्चतुरः कुम्भांश्चतुर्दिक्षु यथाक्रमम् । पुण्यतीर्थजलोपेतान्धान्यस्योपरि विन्यसेत् ॥ तन्मध्ये स्थापयेत्कुम्भं शतच्छिद्रसमन्वितम् । सप्तमृत्पञ्चरत्नानि पञ्चत्वक्पञ्चपल्लवान् ॥ पञ्चधान्यं सुवर्णं च तत्तन्मन्त्रैर्विनिक्षिपेत् । शतौषधानि निक्षिप्य श्वेतवस्त्रैश्च वेष्टयेत् ॥ सुरभीणि च पुष्पाणि श्वेतानि परिवेष्टयेत् ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ आवाह्य वारुणैर्मन्त्रैरनेन च विधानतः । इमं मे वरुणेत्यनया तत्त्वायामीत्यृचा तथा ॥ त्वं नो अग्न इत्यनया स त्वं न इति मन्त्रतः । आग्नेयकुम्भमारभ्य पूजां कुर्याद्यथाक्रमम् ॥ आनोभद्राःसूक्तकं च भद्राअग्नेश्च सूक्तकम् । सहस्रा पुरुषसूक्तं च रुद्राय क्रमाज्जपेत् ॥ ईश्वरस्याभिषेकं च ग्रहपूजां च कारयेत् । पूजाकर्म सुनिर्वर्त्य होमं कुर्याद्विधानतः ॥ गृहस्येशानदिग्भागे कुण्डं कुर्यान्मनोहरम् । विस्तारायामयातं च अरत्निद्वयसंमितम् ॥ कुण्डकण्ठं परित्यज्य समन्ताद्द्व्यङ्गुलं क्रमात् । मेखलोच्छ्रायविस्तारैश्चतुस्त्रिद्व्यङ्गुलोच्छ्रितम् ॥ पश्चिमे मध्यभागे तु योनिं कुर्याद्विधानतः । योनिं षडङ्गुलिं तिर्यग्द्वादशाङ्गुलिदैर्घिकाम् ॥ अश्वत्थदलसंकाशां किंचिन्निम्नायतां शुभाम् । कुर्यादाघारपर्यन्तं सगृह्योक्तविधानतः ॥ समिदाज्यचरूंश्चैव तिलमाषांश्च सर्षपैः । अश्वत्थप्लक्षपालाशसमिद्भिः खादिरैः शुभैः ॥ अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा । अष्टाविंशतिमेतैश्च होमं कुर्यात्पृथक् पृथक् ॥ त्र्यम्बकेण मन्त्रेण तिलान्व्याहृतिभिः क्रमात् । ग्रहा अपि च

होतव्या अस्मदुक्तविधानतः ॥ एवं क्रमेण होतव्यं होमशेषं समापयेत् । सर्वालंकारयुक्तानां त्रयाणामभिषेचनम् ॥ चतुर्भिः कलशैरद्भिर्हत्कुम्भसमन्वितम्। धौताम्बराणि धृत्वाथ कुर्यादाज्यावलोकनम् ॥ पूर्णाहुतिं च जुहुयाद्यजमानः समाहितः । तत्सर्वं परया भक्त्या ईश्वराय निवेदयेत् ॥ सर्वालंकारसंयुक्तां सवत्सां गां पयस्विनीम् । प्रतिमां वस्त्रयुग्मं च आचार्याय निवेदयेत् ॥ अन्येषां चैव सर्वेषां कुर्याद्ब्राह्मणभोजनम् । तस्मादनेन विधिना वित्तशाठ्यविवर्जितः ॥ एवं यः कुरुते शान्तिं सर्वपापैः प्रमुच्यते । सर्वान्कामानवाप्नोति चिरजीवी सुखी भवेत्' इति ॥ इत्युत्तरगार्ग्योक्तकृष्णचतुर्दशीजननशान्तिः ॥

अथ सिनीवालीजननशान्तिः ॥—'सिनीवाल्यां प्रसूता स्याद्यस्य भार्या पशुस्तथा । गजाश्वमहिषी चैव शक्रस्यापि श्रियं हरेत् ॥ ये सन्ति सकलाश्चान्ये स्वप्रसादोपजीविनः । वर्जयेत्तानशेषांस्तु पशुपक्षिमृगादिकान् ॥ कुहूप्रसूतिरत्यर्थं सर्वदोषकरी महत् । यस्य प्रसूतिरेतेषां तस्यायुर्धननाशनम् ॥ सर्वगण्डसमस्तत्र दोषस्तु प्रबलो भवेत् । शान्तिं विना विशेषेण परित्यागो विधीयते । परित्यागात्तत्र शान्तिं कुर्याद्धीमान्विचक्षणः' ॥—परित्यागादिति ल्यब्लोपे पञ्चमी । परित्यागं कृत्वेत्यर्थः । तत्फलं तत्क्षणार्धेन पुनरेवानुपालने । न त्यजेत्पण्डितो मोहादर्थादज्ञानतोऽपि वा ॥ तद्योगं नाशयेत्किंचित्स्वयं वा नाशमश्नुते । कल्पोक्तशान्तिः कर्तव्या शीघ्रं दोषापनुत्तये ॥ रुद्रः शक्रश्च पितरः पूज्याः स्युर्देवताः क्रमात् ॥ कर्षमात्रसुवर्णेन तदर्धार्धेन वा पुनः । अथवा शक्तितः कुर्याद्वित्तशाठ्यविवर्जितः ॥ प्रतिमां कारयेच्छंभोश्चतुर्भुजसमन्विताम् । त्रिशूलखड्गवरदाभयहस्तां यथाक्रमम् ॥ श्वेतवर्णां श्वेतपुष्पां श्वेतवस्त्रां

---

१ सर्वालंकारसंयुक्तो मन्त्राणामभिषेचनम् । २ स शक्रोऽपि विनश्यति ।

रूपे स्थिताम् । त्र्यम्बकेण मन्त्रेण पूजां कुर्याद्यथाविधि ॥ इन्द्रश्चतुर्भुजो वज्राङ्कुशचापासिसायकः । रक्तवर्णो गजारूढो यतइन्द्रेतिमन्त्रतः ॥ पितरः कृष्णवर्णाश्च चतुर्हस्ता विमानगाः । पद्मपक्षसूत्रकमण्डलभयस्यैव धारिणः ॥ येसत्यासश्च मन्त्रेण पूजां कुर्याद्यथाविधि ॥ आग्नेयीं दिशमारभ्य कुम्भान्कोणेषु विन्यसेत् । तन्मध्ये स्थापयेत्कुम्भं शतच्छिद्रसमन्वितम् ॥ तेष्वेव पञ्चगव्याद्यन्तन्मन्त्रैश्च निक्षिपेत् । कल्पोक्तशान्तिं विधिवत्कुर्याच्छीघ्रं स्वशक्तितः ॥ गोदानं वस्त्रदानं च सुवर्णं चोर्वरां शुभाम् । दशदानानि चोक्तानि क्षीरमाज्यं गुडं तथा । आज्यावेक्षणमेतानि तत्तन्मन्त्रैश्च कारयेत् ॥ गमिदाज्यचरुद्रव्यैस्तिलमाषैश्च सर्षपैः । अश्वत्थप्लक्षपालाशशमिध्भिः खादिरैरपि । अष्टोत्तरशतं मुख्यं प्रत्येकं जुहुयात्ततः । त्र्यम्बकेण मन्त्रेण तिलान्व्याहृतिभिः पुनः ॥ चतुर्भिः कलशैर्युक्तं बृहत्कुम्भसमन्वितम् । शान्तिवत्कलशं कार्यमभिषेकं च कारयेत् ॥ पितृमातृशिशूनां च अभिषिञ्चेत्तु वारुणैः । शंकरस्याभिषेकं च कुर्याद्ब्राह्मणभोजनम् ॥ अन्येषां चैव सर्वेषां ब्राह्मणानां च तर्पणम् । यथाशक्त्यनुसारेण द्विजवाचनपूर्वकम्' । इति ॥ इत्युत्तरगार्ग्योक्ता सिनीवालीजननशान्तिः ॥

अथ दर्शशान्तिः ॥—'अथातो दर्शजातानां मातापित्रोर्दरिद्रता । तद्दोषपरिहारार्थं शान्तिं वक्ष्यामि नारद ॥ पुण्याहं वाचयित्वादौ क्रतुसंकल्पपूर्वकम् । कुण्डं वा स्थण्डिलं कुर्यात्तद्देशे स्थापयेद्घटम् ॥ तत्कुम्भे निक्षिपेद्द्रव्यं दधिक्षीरघृतादिकम् । न्यग्रोधोदुम्बराश्वत्थाः मधूतो निम्बकस्तथा ॥ एतेषां वृक्षमूलानां तगादीन्पल्लवांस्तथा । पञ्चरत्नानि निक्षिप्य वस्त्रयुग्मेन वेष्टयेत् ॥

१ शमिदाज्यचरून् होम ।

गर्भे समुद्राः० ॥ आपोहिष्ठेतितिसृभिः कयानस्तिसृभिस्तथा । यत्किंचेदमृचा चैव समुद्रज्येष्ठा इत्यपि ॥ अभिमन्त्र्योदकं पश्चादग्नेः पूर्वप्रदेशके । हारिद्रं रक्तकं चैव कृष्णं श्वेतं च नीलकम् । एतेषां तण्डुलैश्चैव सर्वतोभद्रमुद्धरेत् ॥ दर्शस्य देवताश्चाश्च कुर्यात्सूर्यस्य रूपकम् । प्रतिमां स्वर्णजां नित्यं राजतीं ताम्रजां तथा ॥ सर्वतोभद्रमध्ये च स्थापयेद्दर्शदेवताम् । ग्रहवर्णं वस्त्रयुग्मं तद्वर्णं गन्धपुष्पकम् । आप्यायस्वेति मन्त्रेण सविता पश्चात्तत्तथा ॥ उपचारैः समाराध्य ततो होमं समाचरेत् । ततो वह्निं प्रतिष्ठाप्य क्रतुसंकल्पमीदृशम् ॥ आयुरारोग्यसिद्ध्यर्थं सर्वारिष्टप्रशान्तये । पुत्रस्य दर्शजननदोषनिर्हरणाय च ॥ मातापित्रोः शिशोश्चैव सर्वारिष्टप्रशान्तये । तेषामायुःश्रिये चैव शान्तिहोमं करोम्यहम् ॥ समिधश्च चरुद्रव्यं क्रमेण जुहुयाद्घृतम् । हुनेत्सवितृमन्त्रेण सोमोधेनुं च मन्त्रतः ॥ एतैर्मन्त्रैश्च प्रत्येकं हुनेदष्टोत्तरं शतम् । दर्शस्य देवताहोममष्टाविंशतिसंख्यया ॥ होममेवं च कृत्वाथ निधायाग्निमभिषेचनम् । श्रीसूक्तायुष्यसूक्ते च समुद्रज्येष्ठा इति क्रमात् ॥ एतैर्मन्त्रैरभिषेकं मातापित्रोः शिशोस्तथा । ततः स्विष्टकृदादि स्याद्धोमशेषं समापयेत् ॥ हिरण्यं रजतं चैव कृष्णां धेनुं सदक्षिणाम् । अन्येभ्योऽपि यथाशक्ति दातव्या दक्षिणा तथा॥ ब्राह्मणान्भोजयेत्तत्र कारयेत्स्वस्तिवाचनम्' इति ॥ इति नारदोक्ता दर्शजननशान्तिः ॥

अथ मूलनक्षत्रजननशान्तिः ॥—'अथातः संप्रवक्ष्यामि मूलजातहिताय च । मातापित्रोर्धनस्यापि कुलज्ञातिहिताय च ॥ त्यागो वा मूलजातस्य स्यादष्टाब्दान्यदर्शनम् । अभुक्तमूलजातानां परित्यागो विधीयते ॥ अदर्शनाद्वापि पितुः स तु तिष्ठेत्समाष्टकम् । एवं च दुहितुर्ज्ञेयं मूलजातफलं बुधैः ॥—ग्रन्थान्तरेषु कान्यायाः फलमन्यथाहुः—'न बाला हन्ति मूलर्क्षे पितरं मातरं

तथा । मूलजा श्वशुरं हन्ति व्यालजा च तदङ्गनाम् ॥ माहेन्द्रजाग्रजं हन्ति देवरं तु द्विदैवजा । शान्तिर्वा पुष्कला स्याचेत्तर्हि दोषो न कश्चन ॥ मुख्यकालं प्रवक्ष्यामि शान्तिहोमस्य यत्नतः । जातस्य द्वादशाहे वा जन्मर्क्षे वा शुभे दिने ॥ समाष्टमे द्वादशाहे कुर्याद्वा शान्तिमादरात् । यदेव शान्तिकं कुर्यात्कर्म तत्र प्रचक्ष्महे ॥ सुसमे पुण्यदेशे तु मण्टपं कारयेद्बुधः । पुण्याग्भिर्मन्त्रितैस्तोयैः प्रोक्षितायां क्षितौ ततः ॥ तत्रोदकुम्भं सुश्लक्ष्णं रक्तं व्रणविवर्जितम् । वस्त्रावगुण्ठितं कुर्यात्पूरयेत्तीर्थवारिणा ॥ कूर्चहेमसमायुक्तं चूतपल्लवसंयुतम् । स्वस्तिकोपरि विन्यस्य सक्षीरद्रुमपल्लवैः ॥ द्रोणव्रीहींश्च निक्षिप्य ऐशाने च निधापयेत् । पञ्चरत्नानि निक्षिप्य सर्वौषधिसमन्वितम् । अर्चितं गन्धपुष्पाद्यैः श्रीरुद्रं च स्पृशञ्जपेत् ॥ षडङ्गसहितं सम्यक्तं जपेद्रुद्रसंख्यया । बह्वृचो रुद्रसूक्तैर्वा छन्दोगो रुद्रसामगैः ॥ एकादशाष्टत्रिद्व्येकसंख्यया शक्तितो जपेत् । तत्राप्रतिरथं सूक्तं शतरुद्रानुवाककम् ॥ रक्षामन्त्रं तथा पुण्यं रक्षोघ्नं च स्पृशञ्जपेत् । त्र्यम्बकं जपेत्सम्यगष्टोत्तरसहस्रकम् ॥ एकवारं तथा जापी पावमानीः स्पृशञ्जपेत् । कुम्भत्रयं च संस्थाप्य द्वयं वा तदलाभतः ॥ श्रीरुद्रस्यैककुम्भं च सर्वमन्त्राभिमन्त्रितम् । अथान्यं च शुभं कुम्भं पूर्वोक्तैर्लक्षणैर्युतम् । चतुःप्रस्रवणं कुर्यात्पञ्चवक्त्रं च तद्भवेत् ॥ वस्त्रावगुण्ठितं कुर्यात्पूरयेत्तीर्थवारिणा । पञ्चरत्नसमायुक्तमाम्रपल्लवसंयुतम् ॥ गजाश्वरथ्यावल्मीकसंगमाद्ध्रदगोकुलात् । राजद्वारप्रदेशाच्च मृदमानीय निक्षिपेत् ॥ कुम्भस्य नैर्ऋते देशे होमदेशं प्रकल्पयेत् । गोमयालेपिते देशे कुर्यात्स्थण्डिलमुत्तमम् ॥ कृत्वाग्निमुखपर्यन्तमुल्लेखादि स्वशाखया । पूर्णपात्रनिधानान्तं कृत्वा पूजां समाचरेत् ॥

पाठा०—१ व्यापयेद्वीणि कुम्भानि । २ तत्रैसूक्तानि तत्र तु ।

नक्षत्रदेवतारूपं सुवर्णेन प्रयत्नतः । निष्कमात्रेण वार्धेन पादेनाथ स्वशक्तितः ॥ प्रतिमां लक्षणेनकां कारयित्वा विचक्षणः । यद्वा मूल्यं सुवर्णस्य स्थापयित्वा प्रपूजयेत् ॥ सुवर्णं सर्वदैवत्यं सर्वदेवात्मकोऽनलः । सर्वदेवात्मको विप्रः सर्वदेवमयो हरिः ॥ संस्मरेन्निर्ऋतिं श्यामं सुमुखं नरवाहनम् । रक्षोधिपं खड्गहस्तं दिव्याभरणभूषितम् ॥ प्रतिमापूजनार्थाय वस्त्रयुग्मं प्रकल्पयेत् । पङ्कजं कारयेद्भूमौ रक्ताभैर्व्रीहितण्डुलैः । चतुर्विंशद्दलोपेतं शुक्लैर्वा कर्णिकान्वितम् ॥ तस्योपरि न्यसेत्पात्रं स्वर्णं वा रौप्यमृन्मयम् । शुद्धवस्त्रेण संच्छाद्य तत्र मूलानि निक्षिपेत् ॥—मूलानि शतमूलानि । तदलाभे तु—विष्णुक्रान्ता सहदेवी तुलसी च शतावरी । मूलानीमानि गृह्णीयाच्छतालाभे विशेषतः ॥ स्थापयेत्कर्णिकामध्ये वस्त्रगन्धाद्यलंकृतम् । कूर्चं हेमजलोपेतं कुङ्कुमौषधिसंयुतम् ॥ कुम्भोपरि न्यसेद्विद्वान्मूलनक्षत्रदेवताम् । अधिप्रत्यधिदेवौ च दक्षिणोत्तरदेशयोः ॥ अधिदेवं यजेदादौ ज्येष्ठानक्षत्रदेवताम् । निर्ऋतिं पूजयेन्मध्ये मूलनक्षत्रदेवतम् ॥ पश्चात्प्रत्यधिदेवं तु पूर्वाषाढाधिदेवताम् । ऐन्द्रादीशानपर्यन्तं चतुर्विंशतितारकाः ॥ उत्तराषाढऋक्षादि अनूराधान्तमर्चयेत् । स्वस्वमन्त्रैस्तथा चापि नामभिर्वा प्रपूजयेत् ॥ स्वलिङ्गोक्तैः स्वमन्त्रैश्च प्रधानत्रितयं यजेत् । पञ्चामृतेन संस्नाप्यावाहनादिभिरर्चयेत् ॥ उपचारैः षोडशभिर्यद्वा पञ्चोपचारकैः । रक्तचन्दनगन्धाद्यैः पुष्पैः कृष्णासितादिभिः ॥ मेषशृङ्गादिधूपैश्च घृतदीपैस्तथैव च । सुरापोलिकमांसाद्यैर्नैवेद्यैरोदनादिभिः ॥ मत्स्यमांससुरादीनि ब्राह्मणानां विवर्जयेत् । सुरास्थाने प्रदातव्यं क्षीरं सैन्धवमिश्रितम् ॥ पायसं लवणोपेतं मांसस्थाने प्रकल्पयेत् ॥ उक्तगन्धाद्यलाभे तु यथालाभं समर्पयेत् । पुष्पान्तं तु समभ्यर्च्य होमं कुर्याद्यथोदितम् ॥ निर्वापप्रोक्षणादीनि चरोः कुर्याद्यथाविधि । कुम्भाभिमन्त्रणं कुर्याद्दक्षिणेन करेण तु ॥

विष्टुभः । पायसेन त्रयोदशाहुतीर्हुत्वा आज्येन महाव्याहृतीर्हुत्वा व्याहृतिभिस्तिलव्रीहीन्हावयेत् ।] हुत्वा स्विष्टकृतं पश्चात्प्रायश्चित्तं समापयेत् ॥ आचार्यो यजमानो वा अग्नौ पूर्णाहुतिं हुनेत् । समुद्रादूर्मिसूक्तेन प्राजापत्यऋचा तथा ॥ पूर्णादर्विमस्रतेग्ने एतैः पूर्णाहुतिं हुनेत् । एवं पूर्णाहुतिं हुत्वा होमशेषं समापयेत् ॥ अभिषेकविधिं वक्ष्ये सर्वाचार्यैरुदीरितम् । भद्रासनोपविष्टस्य यजमानस्य ऋत्विजः । दारपुत्रसमेतस्य कुर्युः सर्वेऽभिषेचनम् ॥ अक्षीभ्यामिति सूक्तेन पावमानीभिरेव च । आपोहिष्ठेतिनवभिरापद्वाद्वयेन च । सहस्राक्षतृचेनापि देवस्त्वेति मन्त्रकैः ॥ योसौ वज्रधरो देवो महेन्द्रो गजवाहनः । मूलजातशिशोर्दोषं मातापित्रोर्व्यपोहतु ॥ योसौ शक्तिधरो देवो हुतभुङ्मेषवाहनः । सप्तजिह्वश्च देवोऽग्निर्मूलदोषं व्यपोहतु ॥ योसौ दण्डधरो देवो यमो महिषवाहनः । मूलजातशिशोर्दोषं व्यपोहतु यमः सदा ॥ योसौ खड्गधरो देवो निर्ऋती राक्षसाधिपः । प्रशामयतु मूलोत्थं दोषं गण्डान्तसंभवम् ॥ योसौ पाशधरो देवो वरुणश्च जलेश्वरः । नक्रवाहः प्रचेताश्च मूलोत्थानं व्यपोहतु ॥ योसौ देवो जगत्प्राणो मारुतो मृगवाहनः । प्रशामयतु मूलोत्थं दोषं बालस्य शान्तिदः ॥ योसौ निधिपतिर्देवो गदाभृद्वाजिवाहनः । मातापित्रोः शिशोश्चैव मूलदोषं व्यपोहतु ॥ योसौ पशुपतिर्देवः पिनाकी वृषवाहनः । आश्लेषामूलगण्डान्तदोषमाशु व्यपोहतु ॥ विघ्नेशः क्षेत्रपो दुर्गा लोकपाला नवग्रहाः । सर्वदोषप्रशमनं सर्वे कुर्वन्तु शान्तिदाः ॥ तन्त्रयोरभिषेकं तु सर्वदोषोपशान्तिदम् । सर्वकामप्रदं दिव्यं मङ्गलानां च मङ्गलम् ॥ वस्त्रान्तरितकुम्भाभ्यां पश्चात्तु स्नापयेद्बुधः ॥ ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः । यजमानो दक्षिणाभिस्तोषयेदृत्विगादिकान् ॥ धेनुं पयस्विनीं दद्यादाचार्याय सवत्सकाम् । निर्ऋतिप्रतिमां वस्त्रं कुम्भं हेम च दापयेत ॥

ग्रहार्थंनखप्रतिमास्तत्तद्रोभूय दापयेत् । श्रीरुद्रजापिने देयः कृष्णोऽनड्वान्प्रयत्नतः ॥ तत्कुम्भवस्त्रप्रतिमास्तर्सं दद्यात्प्रयत्नतः । इतरेभ्योऽपि विप्रेभ्यः शक्त्या दद्याच्च दक्षिणाम् ॥ उक्तालाभे ततो दद्यादाचार्यब्रह्मऋत्विजाम् । तत्तन्मूल्यं प्रदातव्यं शक्त्या वाथ प्रदापयेत् ॥ आचार्याय च यद्दत्तं तदर्धं ब्रह्मणो भवेत् । मदस्याथ ब्रह्मणोऽर्धमृत्विग्भ्यश्च तदर्धकम् ॥ गृह्णीयादाशिषस्तेभ्यः प्रणम्याथ क्षमापयेत् ॥ दद्यादन्नं पायसादि ब्राह्मणान्भोजयेच्छतम् । अलाभे सति पञ्चाशद्दशकं तदलाभतः ॥ सर्वशान्तेश्च पठनं ब्राह्मणैराशिषस्तथा । गृही क्षमापयेद्विद्वान्निर्ऋतिः प्रीयतामिति ॥ विधाने चरितेऽस्मिंस्तु ततः शान्तिर्भवेद्ध्रुवम् ॥ गण्डान्तेऽप्येवं कर्तव्यं पुष्याद्ये तद्वदेव तु । समाप्यैकं द्वादशाहे कुर्याद्वा शान्तिमादरात् ॥ इत्युक्तं मनुना सम्यङ्मूलजातहिताय च । मातापित्रोर्धनस्यापि बन्धुशोकोपशान्तये' इति ॥ इति मनुप्रोक्तमूलनक्षत्रजननशान्तिः ॥

अथाश्लेषाजननशान्तिः ॥—'आश्लेषायां तु जातानां शान्तिं वक्ष्याम्यशेषतः । जातस्य द्वादशाहे च शान्तिहोमं समाचरेत् ॥ असंभवे तु जन्मर्क्षे अन्यस्मिन्वा शुभे दिने । स्नातोऽभ्यङ्गादिभिस्तस्मिन्वरयेद्दलिगादिकान् ॥ विभवे पञ्च कुम्भांस्तु द्वयं वा तदलाभतः । देवतास्थापने चैकमेकं रुद्राभिमन्त्रणे । मूलर्क्षोक्तप्रकारेण कुम्भे निक्षिप्य पूजयेत् ॥ गोमयालेपिते देशे धान्याद्यैः परिशोभिते । पङ्कजं कारयेत्तत्र चतुर्विंशदलान्वितम् ॥ तण्डुलैः कारयेद्वा रक्तपीतसितासितैः । कर्णिकायां न्यसेद्व्रीमान्स्थापयेत्तेषु कुम्भकम् ॥ आकलशेष्वित्यनया कलशस्थापनं शुभम् । इमंमेगङ्गेमन्त्रेण पूरयेत्तीर्थवारिणा ॥ कुम्भं च वस्त्रगन्धाद्यैस्तत्तन्मन्त्रैः प्रपूजयेत् । याः फलिनीरित्यनया क्षिपेद्धन्यौषधादिकम् ॥ कुम्भोपरिस्थपात्रे तु आश्लेषाप्रतिमां यजेत् । निष्कनिष्कार्धपा-

देवीं कारयित्वा स्वशक्तितः ॥ तत्तत्पूर्वोक्तनक्षत्रे दक्षिणोत्तरयोर्यजेत् ॥ ऐन्द्रादीशानपर्यन्तमन्यदस्त्राणि पूजयेत् । मूलोक्तेन विधानेन कुम्भयोरभिमन्त्रणम् ॥ रुद्रं वा रुद्रकुम्भे तु पूर्ववच्छेपमाचरेत् । नमोऽस्तुसर्पेभ्यः पूजामन्त्र इतीरितः ॥ सर्पो रक्तत्रि-नेत्रश्च द्विभुजः पीतवस्त्रकः । फलकासिधरस्तीक्ष्णो दिव्याभरणभूषितः ॥ एवं ध्यात्वा ततोऽभ्यर्च्य होमकर्म समाचरेत् । कर्तुः शास्त्रोक्तमार्गेण आचार्यस्त्वाथवाचरेत् ॥ अथेध्माधानपर्यन्तमुपलेपादि पूर्ववत् । छन्दोगा बह्वृचाश्चैव तथान्ये तैत्तिरीयकाः । अग्नि-कार्यमशेषं तु कर्तुर्गृह्योक्तमार्गतः ॥ होमं कुर्याद्विशेषेण आचार्यो ब्राह्मणैः सह । समिदाज्यचरून्हुत्वा गायत्र्याष्टशतं क्रमात् । गायत्र्या स्विष्टकृद्धोमं होमशेषं समापयेत् ॥ दारपुत्रसमेतस्य यजमानस्य पूर्ववत् । अभिषिञ्चेत्तथाचार्य ऋत्विग्भिः सहितस्ततः ॥ अभिमन्त्रितकुम्भाद्भिरभिषेचनमाचरेत् । तथा पौराणमन्त्रैश्च पल्लवैरभिषेचयेत् ॥ आश्लेषाऋक्षजातस्य मातापित्रोर्धनस्य च । भ्रातृज्ञातिकुलस्थानां दोषं सर्वं व्यपोहतु ॥ योसौ वागीश्वरो नाम अधिदेवो बृहस्पतिः । मातापित्रोः शिशोश्चैव गण्डान्तं च व्यपोहतु ॥ पितरः सर्वभूतानां रक्षन्तु पितरः सदा । सार्पनक्षत्रजातस्य वित्तं च ज्ञातिबान्धवान् । एवं कृतेऽभिषेके तु सर्वशा-न्तिर्भवेद्ध्रुवम् ॥ ततः शुक्लाम्बरधरो यजमानः सुभूषितः । दक्षिणाभिस्ततो विप्रान्मूलवच्च प्रपूजयेत् । भुक्तवत्स्वथ विप्रेभ्यः स्वीकु-र्यादाशिषो गृही ॥ इत्युक्तेन विधानेन सर्वारिष्टं व्यपोहति । सर्वकामार्थसिद्धिश्च वेदोक्तायुर्भविष्यति ॥ इत्युक्तं वेदशास्त्रार्थ-सारमागमचोदितम् । मानवानां हितार्थाय मनुना सार्वकामिकम् ॥ अर्घ्यमन्त्रः—सर्पाधीश नमस्तुभ्यं नागानां च गणाधिप ।

गृहाणार्घ्यं मया दत्तं सर्वारिष्टप्रशान्तये ॥ मूलनक्षत्रवत्कुर्यात्सर्पगण्डे स्वनामतः' । इति ॥ इति मानवसंहितायामाश्लेषानक्षत्रजननशान्तिः ॥ ॥

अथ ज्येष्ठानक्षत्रजननशान्तिः ॥—'सुखासीनं मुनिश्रेष्ठं गर्गं मुनिगणान्वितम् । कृताञ्जलिपुटो भूत्वा परिपप्रच्छ शौनकः ॥ ज्येष्ठानक्षत्रसंभूतगण्डदोषविनिर्णयम् । तस्य शान्तिविधानं च वद मे मुनिसत्तम ॥ शौनकस्य वचः श्रुत्वा प्रत्युवाच महामुनिः ॥ शृणु शौनक यत्नेन गण्डदोषविनिर्णयम् । तस्य शान्तिविधानं च यथावत्कथयाम्यहम् ॥ घटिकैका च मित्रान्ते ज्येष्ठादौ घटिकाद्वयम् । तयोः संधिरिति ज्ञेयः शिशुगण्डः समीरितः ॥ प्रथमे च द्वितीये च ज्येष्ठर्क्षे च तृतीयके । पादत्रये जातनरो ज्येष्ठेप्यत्र प्रजायते ॥ ज्येष्ठान्त्यपादजातस्तु पितुः स्वस्य विनाशनः । जायते नात्र संदेहो दशाहाभ्यन्तरे तथा ॥ ज्येष्ठर्क्षे कन्यका जाता हन्ति शीघ्रं धवाग्रजम् । तच्छान्तिं तस्य वक्ष्यामि गण्डदोषप्रशान्तये ॥ सुदिने शुभनक्षत्रे चन्द्रताराबलान्विते । भूतकान्ते तथा कुर्याज्ज्येष्ठाशान्तिं विधानतः ॥ वज्राङ्कुशधरं देवमैरावतगजान्वितम् । कुर्याच्छचीपतिं रम्यं देवेन्द्रं सुरनायकम् ॥ कर्षमात्रसुवर्णेन कर्षार्धेनाथ पादतः । तद्विधानेन कुर्वीत वित्तशाठ्यं न कारयेत् ॥ शालितण्डुलसंपूर्णं कुम्भस्योपरि पूजयेत् । इन्द्रायेन्दो मरुत्वत इति मन्त्रेण वाग्यतः ॥ गन्धपुष्पैर्धूपदीपैर्नानाभक्ष्यनिवेदनैः । पूजयेद्विधिना विप्रलोकपालगणान्वितम् । रक्तवस्त्रद्वयोपेतं पूजयेत्सुरनायकम् ॥ तत्र संस्थापयेत्कुम्भांश्चतुर्दिक्षु विशेषतः । पुण्योदकसमायुक्तान्वस्त्रयुग्माभिवेष्टितान् ॥ तन्मध्ये स्थापयेत्कुम्भं शतच्छिद्रसमन्वितम् । कुम्भेषु विन्यसेद्दीमान्पञ्चगव्यं समन्त्रकम् ॥ पञ्चामृतं पञ्चरत्नं मृत्तिकाः सप्तसंख्यकाः । पञ्चवृक्षकषायांश्च पञ्चपल्लवकांस्तथा ॥ सुवर्णं कुशदूर्वांश्च

शतौषधिमपि क्षिपेत् । पूजयेद्वारुणैर्मन्त्रैः कुम्भान्धीमान्प्रयत्नतः ॥ शंनोअग्ने जपेदादौ स शंनोपि द्वितीयकम् । समुद्रज्येष्ठा इति चेमंमे गङ्गे चतुर्थकम् ॥ पूजयेद्वस्त्रपुष्पाद्यैश्चतुरः कलशानपि । जपं कुर्युः प्रयत्नेन मन्त्रैरेभिर्द्विजोत्तमाः ॥ आनोभद्रा जपेदादौ भद्रा अग्नेर्द्वितीयकम् । तृतीयं पुरुषसूक्तं च कद्रुद्राय चतुर्थकम्॥ आचार्यो मूलमन्त्रेण जपं कुर्याद्विशेषतः । इन्द्रसूक्तं रुद्रजाप्यं जपेन्मृत्युंजयं ततः । इत्थं संपूज्य देवेन्द्रं वरुणं कुम्भसंस्थितम् । सुसंकल्पविधानेन होमकर्म तदाचरेत् ॥ समिद्भिर्न्नक्षवृक्षस्य शतमष्टोत्तरं तथा । सर्पिषा चरुणा चैव मूलमन्त्रेण वाग्यतः ॥ हुनेज्जाप्यं च तेनैव यतइन्द्र भयेति च । तिलान्व्याहृतिभिर्हुत्वा शतमष्टोत्तरं पृथक् ॥ भार्याशिशुसमोपेतं यजमानं विशेषतः । अभिषेकं प्रकुर्वीत सूक्तैर्वारुणसंज्ञितैः ॥ समुद्रज्येष्ठादिमन्त्रैरिमंमे वरुणेति च । द्यौः शान्तीत्यादिभिर्मन्त्रैरभिषेकं समाचरेत् ॥ अभिषेके निवृत्ते तु यजमानः समाहितः । शुक्लाम्बराणि धृत्वाथ कुर्यादाज्यावलोकनम् ॥ रूपंरूपेतिमन्त्रेण चित्रं तचक्षुरेव च । देवतापुरतः स्थित्वा धूपदीपनिवेदनम् । दद्यादाचमनं मम्यस्ताम्बूलार्घ्यं तथैव च ॥ नमस्ते सुरनाथाय नमस्तुभ्यं शचीपते । गृहाणार्घ्यं मया दत्तं गण्डदोषप्रशान्तये ॥ कार्यं यत्पूजकादीनां कारितं यत्फलं शुभम् । लब्ध्वा तु तत्फलं सर्वं देवेन्द्राय समर्पयेत् ॥ आचार्याय च गां दद्यात्सुशीलां च पयस्विनीम् । रक्तवर्णां वस्त्रयुतां सर्वालंकारभूषिताम् ॥ वस्त्रयुग्मपिधानां च प्रतिमां च सदक्षिणाम् ॥ यक्षगन्धर्वसिद्धैश्च पूजितोसि शचीपते । दानेनानेन देवेश गण्डदोषं विनाशय ॥ अष्टोत्तरशतं तत्र कुर्याद्ब्राह्मणभोजनम् । तेभ्योपि दक्षिणां दद्यात्प्रणिपत्य क्षमापयेत् ॥ इमां कृत्वा ज्येष्ठाशान्तिं यथाविध्युक्तमार्गतः । गण्डदोषं विनिर्जित्य आयुष्मान्जायते नरः ॥ इत्युक्तं वृद्धगार्ग्येण शौनकाय विशेषतः ।

ज्येष्ठानक्षत्रसंभूतगण्डदोषप्रशान्तये ॥ अज्ञानाद्वाथवा ज्ञानाद्वैकल्यात्साधनस्य च । यन्न्यूनमतिरिक्तं वा तत्सर्वं क्षन्तुमर्हसि' इति ॥ इति वृद्धगार्ग्योक्तज्येष्ठानक्षत्रजननशान्तिः ॥

अथैकनक्षत्रजननशान्तिः ॥—'एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः । प्रसूतिश्चेत्तयोर्मृत्युर्भवेदेकस्य निश्चयः ॥ शौनकोऽहं प्रवक्ष्यामि नक्षत्रैक्यस्य शान्तिकम् । मातृनक्षत्रजातस्य मात्ररिष्टं तथैव च ॥ पितृनक्षत्रजातस्य पित्ररिष्टं भवेद्ध्रुवम् । तन्नक्षत्रे पादयुक्ते तत्र जातं शिशुं त्यजेत् ॥ तस्य नक्षत्रजातस्य न श्रोतव्यो ध्वनिः पितुः । जातस्य द्वादशाहे तु जन्मर्क्षे वा शुभे दिने ॥ गोमुखप्रसवं कुर्याद्गोदानं च ततः परम् । सर्वारिष्टविनाशाय गोमुखप्रसवो भवेत् ॥ अथातः संप्रवक्ष्यामि शान्तिकर्मविधानतः । गृहस्यैशानदिग्भागे होमदेशं प्रकल्पयेत् ॥ तस्मादीशानदिग्भागे गोमयालेपिते शुभे । व्रीहिराशिं च निक्षिप्य स्थापयेदव्रणं घटम् ॥ आचार्यं वरयेत्तत्र शान्तिकर्मणि कोविदम् । पुण्याहं वाचयित्वा तु नवग्रहपुरःसरम् ॥ कुम्भद्वयं च निक्षिप्य पूरयेन्निर्मलोदकम् । पञ्चगव्यं पञ्चरत्नं पञ्चत्वक्पञ्च पल्लवान् ॥ कुशकूर्चं च निक्षिप्य मृदौषधिविधानतः । तदृक्षदेवतारूपां प्रतिमां कारयेद्बुधः ॥ निष्कमात्रसुवर्णेन पादेनाथ स्वशक्तितः । प्रतिमां कारयित्वा च यजमानस्तु ऋत्विजा ॥ धान्योपरि न्यसेत्पात्रं वस्त्रयुग्मेन वेष्टयेत् । तन्नक्षत्रोक्तमन्त्रेण अर्चयेत्कलशोपरि ॥ उपचारैः षोडशभिर्जपेत्तल्लिङ्गमन्त्रकम् । त्र्यम्बकेन मन्त्रेण रुद्रकुम्भं स्पृशञ्जपेत् ॥ कुम्भस्य पश्चिमे देशे स्थण्डिले समलंकृते । अन्वाधानादिकं कर्म आज्यभागान्तमाचरेत् ॥ तन्नक्षत्रोक्तमन्त्रेण समिदाज्यचरून्हुनेत् । अष्टोत्तरसहस्रं तु अष्टोत्तरशतं तु वा ॥ मृत्युंजयेन मन्त्रेण तिलमष्टोत्तरं शतम् । गायत्र्या च हुनेत्तत्र पूर्वाश्च शतसंख्यया ॥

अष्टाविंशतिमष्टौ वा होमं कुर्याद्विधानतः । ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥ भद्रासनोपविष्टस्य अभिषेकं समाचरेत् । आचार्यो मूलमन्त्रेण ऋत्विग्भिः सह मार्जयेत् ॥ आपोहिष्ठेति सूक्तेन अक्षीभ्यामिति सूक्ततः । तन्नक्षत्रोक्तमन्त्रेण पावमानीभिरेव च ॥ समुद्रज्येष्ठा इत्यादिमन्त्रैश्चैवाभिषेचयेत् । अभिषेकाप्लुतं वस्त्रमाचार्याय निवेदयेत् ॥ आचार्याय च गां दद्यात्सुशीलां च पयस्विनीम् । अत्रोपकरणं सर्वमाचार्याय निवेदयेत् ॥ इति शान्तिं न कुर्याच्चेत्षण्मासान्मृत्युमाप्नुयात् । तस्मात्सर्वप्रयत्नेन शान्तिं कुर्याद्यथाविधि ॥ ब्राह्मणान्भोजयेत्पश्चादाशिषो वाचयेत्ततः ॥ इति शौनकीये एकनक्षत्रजननशान्तिः ॥

अथ नक्षत्रगण्डान्तजननशान्तिः ॥—'अश्विनीमघमूलादौ त्रिपञ्चनवनाडिकाः । रेवतीसर्पशक्रान्ते मासाश्च ऋतुसायकाः ॥ अश्विनीमघमूलादौ नाडिकाद्वितयं तथा । रेवतीसर्पशक्रान्ते नाडिकाद्वितयं तथा ॥ अश्विनीमघमूलानां पूर्वार्धे बाधते पिता । पूषाहिशक्रपश्चार्धे जननी बाध्यते शिशोः ॥ पितृभश्च दिवाजातो रात्रिजातस्तु मातृहा । आत्महा संध्ययोर्जातो नास्ति गण्डे निरामयः ॥ सर्वेषां गण्डजातानां परित्यागो विधीयते । वर्जयेद्दर्शनं तावं तच्च पाण्मासिकं भवेत् ॥ तस्य शान्तिं प्रवक्ष्यामि सोममन्त्रेण भक्तिमान् । कांस्यपात्रं प्रकुर्वीत पलैः षोडशभिर्नवम् ॥ अष्टाभिश्च चतुर्भिर्वा द्वाभ्यां वा शोभनं तथा । तन्मध्ये पायसं शङ्खं नवनीतेन पूरिते ॥ राजतं चन्द्रमर्चेत सितपुष्पमहस्रकैः । दैवज्ञः क्षौमवासास्तु शुक्लमाल्याम्बरार्चितः ॥ सोमोऽहमिति संचिन्त्य पूजां कुर्यादतन्द्रितः । जपेत्साहस्रकं मन्त्रं श्रद्दधानः समाहितः ॥ आप्यायस्वेति मन्त्रेण पूजां कुर्यात्समा-

हितः । दद्याद्वै दक्षिणामिष्टां गण्डदोषप्रशान्तये ॥ शुक्लं वा ईश्वरं चैव ताम्रपात्रसमन्वितम् । गण्डदोषोपशान्त्यर्थं दद्याद्वेदविदे शुचिः' इति ॥ इति नक्षत्रगण्डान्तजननशान्तिः ॥

अथ तिथ्यादिगण्डान्तजननशान्तिः ॥—'अभुक्तेतरजातस्य सूतकान्तदिनेऽथवा । शान्तिं शुभेऽह्नि वा कुर्यात्तावत्पुत्रं न लोकयेत् ॥ तिथिगण्डे त्वनड्वाहं नाक्षत्रे धेनुरुच्यते । काञ्चनं लग्नगण्डे तु गण्डदोषो विनश्यति ॥ आद्यभागे पितुर्गण्डे त्रयाणामभिषेचनम् । इतरत्र शिशोर्मातुरभिषेकं च कारयेत् ॥ उत्तरे तिलपात्रं स्यात्पुष्ये गोदानमुच्यते । अजाप्रदानं त्वाष्ट्रे च पूर्वाषाढे च काञ्चनम् ॥ उत्तरातिष्यचित्रासु पूर्वाषाढोद्भवस्य च । कुर्याच्छान्तिं प्रयत्नेन नक्षत्राकारकं बुधः ॥ सुवर्णेन तदर्धेन यथावित्तानुसारतः । नक्षत्राधिपते रूपं कृत्वा वस्त्रद्वयान्वितम् । वरुणस्यार्चनं कार्यं स्वस्तिवाचनपूर्वकम् ॥ शतौषधानि रत्नानि मृत्स्नापञ्चकसंयुतम् । पूजान्ते समिदाज्यैर्होमं तिलयवैस्तथा ॥ ततः पूर्णाहुतिं हुत्वा वेदाध्यायिकुटुम्बिने । उत्तराप्रथमे पादे तिलपात्रं तथैव च ॥ तिष्ये तु गां सवत्सां च सुशीलां च पयस्विनीम् । अजां चित्रासु वै दद्यात्पूर्वापाढे तु काञ्चनम् ॥ यवांश्च व्रीहिमाषांश्च तिलमुद्गान्प्रदापयेत् । यथावित्तानुसारेण कुर्याद्ब्राह्मणभोजनम् ॥ पितुरायुष्यवृद्ध्यर्थं शान्तिं तत्र समाचरेत् ॥ एवं कृते गम्यक् शान्तिकर्म समाहितः । न दोषैर्लिप्यते नूनं पद्मपत्रमिवाम्भसा ॥ आयुरारोग्यमैश्वर्यं संप्राप्नोति दिनेदिने । धनधान्यसमृद्धिं च पुत्रपौत्रसमृद्धिमान्' इति ॥ इत्युत्तरगार्ग्योक्ततिथ्यादिगण्डान्तजननशान्तिः ॥

अथ दिनक्षयादिसर्वगण्डान्तशान्तिः ॥—'अथातः संप्रवक्ष्यामि जन्मकाले विशेषतः । गण्डान्तानां च नामानि महादोषक-

राणि च ॥ दिनक्षये व्यतीपाते व्याघाते विष्टिवैधृतौ । शूले गण्डेऽतिगण्डे च परिघे यमघण्टके ॥ कालगण्डे मृत्युयोगे दग्धयोगे सुदारुणे । तस्मिन्गण्डदिने प्राप्ते प्रसूतिर्यदि जायते ॥ अतिदोषकरी प्रोक्ता तत्र पापयुते सति । विचार्य तत्र दैवज्ञं शान्तिं कुर्याद्यथाविधि ॥ यजनं देवतानां च ग्रहाणां चैव पूजनम् । दीपं शिवालये भक्त्या घृतेन परिकल्पयेत् ॥ अभिषेकं शंकरस्य अश्वत्थस्य प्रदक्षिणम् । आयुर्वृद्धिकरं कार्यं सर्वारिष्टविनाशनम् ॥ गुरुदैवतविप्राणां पूजनं गोत्रवर्धनम् । पुष्ट्यायुस्तुष्टिसिद्ध्यर्थमभीष्टफलसिद्धये ॥ सर्वारिष्टहरार्थाय ग्रहयज्ञं समाचरेत् ॥ शिवाय विधिवद्भक्त्या दीपदानं करोति यः । अखण्डं गोघृतेनैव स वै मृत्युं जयेन्नरः ॥ विष्णुमूर्तिं महापुण्यमश्वत्थं श्रीकरं तथा । प्रदक्षिणं नरो भक्त्या कृत्वा मृत्युंजयं जपेत् ॥ सर्वसंपत्समृद्ध्यर्थं नित्यं कल्याणवृद्धये । अभीष्टफलसिद्ध्यर्थं कुर्याद्ब्राह्मणभोजनम् ॥ अभिषेकं शिवे शान्तिं कृत्वा भक्त्या नरोत्तमः । अकालमृत्युं निर्जित्य दीर्घायुर्जायते नरः ॥ गाणपत्यं पुरुषसूक्तं सौरं मृत्युंजयं शुभम् । शान्तिजाप्यं रुद्रजाप्यं कृत्वा मृत्युंजयी भवेत् ॥ मूले वा सार्पगण्डे वा कुर्यादेतानि यत्नतः । आयुर्वृद्धिकरार्थाय गण्डदोषप्रशान्तये' इति ॥ इत्युत्तरगार्ग्योक्ता सर्वगण्डान्तजननशान्तिः ॥

अथ वैधृतिव्यतीपातसंक्रान्त्यादिजननशान्तिः ॥—'अथातः संप्रवक्ष्यामि शौनकः शान्तिमुत्तमाम् ॥ वैधृतौ च व्यतीपाते महादोषोऽभिजायते ॥ कुमारजन्मकाले तु व्यतीपातश्च वैधृतिः । संक्रमश्च रवेस्तत्र जातो दारिद्र्यकारकः ॥ दारिद्र्यं च महादुःखं व्याधिपीडां महद्भयम् । अश्रियं मृत्युमाप्नोति नात्र कार्या विचारणा ॥ स्त्रीणां च शोकदुःखं च सर्वनाशकरो भवेत् । शान्तिर्वा पुष्कला कार्या तत्र दोषविनाशिनी ॥ गोमुखप्रसवं कुर्याच्छान्तिं चापि प्रयत्नतः । जपाभिषेकदानानि होमानपि विशेषतः ॥

नवग्रहमखं कुर्यात्तस्य दोषप्रशान्तये । प्रथमं गोमुखाज्जन्म ततः शान्ति समाचरेत् ॥ गृहस्य पूर्वदिग्भागे गोमयेनोपलिप्य च । अलंकृते शुद्धदेशे व्रीहिराशिं प्रकल्पयेत् ॥ पञ्चद्रोणमितं धान्यं तदर्धं तण्डुलं तथा । तदर्धं तु तिलैः कुर्यादन्योन्योपरि कल्पयेत् ॥ द्रव्यत्रितयराशौ तु अष्टपत्रं लिखेद्बुधः । पुण्याहं वाचयित्वा च आचार्यं वृणुयात्पुरा ॥ आचारवन्तं धर्मज्ञं कुलीनं च कुटुम्बिनम् । मन्त्रतन्त्रार्थतत्त्वज्ञं शान्तिकर्मणि कोविदम् ॥ पञ्चाङ्गभूषणं दद्यात्पट्टवस्त्राङ्गुलीयकम् । राशौ प्रतिष्ठितं कुम्भमव्रणं सुमनोहरम् ॥ तीर्थोदकेन संपूर्य सप्तदीपधिपल्लवम् । सगन्धं गन्धरत्नं च वस्त्रयुग्मेन वेष्टयेत् ॥ ( तस्योपरि न्यसेत्पात्रं सूक्ष्मवस्त्रेण संयुतम् । ) प्रतिमां स्थापयेद्धीमान्साधिप्रत्यधिदेवताम् । चन्द्रादीत्याकृती पार्श्वे मध्ये वैधृतिमर्चयेत् ॥ एवमेव व्यतीपातशान्तौ संक्रमणस्य तु । भानोरुत्तरतो रुद्रमग्निं दक्षिणतो यजेत् ॥ निष्कमात्रेण वार्धेन पादेनापि स्वशक्तितः । प्रतिमां कारयेद्धीमांस्तत्तल्लक्षणलक्षिताम् ॥ प्रतिमापूजनार्थाय वस्त्रयुग्मेन वेष्टयेत् ॥ अधिदैवं भवेत्सूर्यश्चन्द्रः प्रत्यधिदेवता । तत्तद्व्याहृतिपूर्वेण तत्तन्मन्त्रेण पूजयेत् ॥ त्रैयम्बकेण मन्त्रेण प्रधानप्रतिमां यजेत् । उत्सूर्य इति मन्त्रेण सूर्यपूजां समाचरेत् ॥ ( आप्यायस्वेति मन्त्रेण सोमपूजां समाचरेत् । ) उपचारैः षोडशभिर्यद्वा पञ्चोपचारकैः । अर्चयेद्गन्धपुष्पाद्यैः फलनैवेद्यमर्पयेत् ॥ मृत्युंजयेन मन्त्रेण प्रधानप्रतिमां यजेत् । अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा । अष्टाविंशतिधा वापि प्रजप्याथ स्वशक्तितः ॥ सर्वसौरं प्रजप्याथ सोमार्थं सोममन्त्रतः । आनोभद्रेति सूक्तं च भद्राअग्नेश्च सूक्तकम् ॥ जपेच्च पौरुषं सूक्तं त्रैयम्बकमतः परम् । कुम्भं स्पृष्ट्वा चतुर्दिक्षु जपं कुर्युरथर्त्विजः ॥ कुम्भस्य पश्चिमे देशे स्थण्डिलेऽग्निं प्रकल्पयेत् । स्वगृह्योक्तविधानेन कारयेत्संस्कृतानलम् ॥

त्र्यम्बकेण मन्त्रेण समिदाज्यचरून्हुनेत् । अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा । अष्टाविंशतिं वा कुर्यात्स्वस्वशक्त्यनुसारतः ॥ मृत्युंजयेन मन्त्रेण तिलहोमं समाचरेत् । ततः स्विष्टकृतं हुत्वा अभिषेकं समाचरेत् ॥ समुद्रज्येष्ठासूक्तेन आपोहिष्ठादृचेन वा । अक्षीभ्यामिति सूक्तेन पावमानीभिरेव च ॥ त्र्यम्बकेण उत्सृज्य आप्यायस्वेतिमन्त्रतः । सुरास्त्वामिति मन्त्रेण अभिषेकं समाचरेत् ॥ अभिषेकाद्युतं वस्त्रमाचार्याय प्रदापयेत् । श्वेतवस्त्रधरो भूत्वा भूषणाद्यैरलंकृतः । यजमानः स्त्रिया युक्त आज्यावेक्षणमाचरेत् ॥ आचार्यं पूजयेत्पश्चाद्वस्त्रहेमाङ्गुलीयकैः । गोदानं वस्त्रदानं च स्वर्णदानं विशेषतः । प्रच्छादनपटं दद्यात्ततः शान्तिर्भविष्यति ॥ जापकेभ्यो ब्राह्मणेभ्यो दक्षिणाभिश्च तोषयेत् । दीनान्धकृपणादिभ्यः प्रदद्याद्भूरिदक्षिणाम् ॥ ब्राह्मणाञ्शतसंख्याकान्मृष्टान्नैर्भोजयेत्ततः । बन्धुभिः सह भुञ्जीत यथावित्तानुसारतः ॥ एवं यः कुरुते मर्त्यो न स दुःखमवाप्नुयात् । आयुरारोग्यमैश्वर्यं मातापित्रोः शिशोरपि ॥ सर्वदुःखनिवृत्तिः स्यात्पुत्रपौत्रप्रवर्धनम् । सर्वान्कामानवाप्नोति सुखी भूत्वा चिरं वसेत्' इति ॥ इति शौनकीये वैधृतिव्यतीपातसंक्रान्तिजननशान्तिः ॥

अथ ग्रहणजननशान्तिः ॥—'ग्रहे चन्द्रस्य सूर्यस्य प्रसूतिर्यदि जायते । व्याधिपीडा तदा स्त्रीणामादौ तु ऋतुदर्शनात् ॥ इत्थं संजायते यस्य तस्य मृत्युर्न संशयः । व्याधिपीडा च दारिद्र्यं शोकश्च कलहो भवेत् ॥ [ शान्तिं तेषां प्रवक्ष्यामि नराणां हितकाम्यया । यन्निनक्षत्रे विशेषेण ग्रहणं संप्रजायते ॥ तन्नक्षत्राधिपते रूपं सुवर्णेन प्रकल्पयेत् । यथाशक्त्यनुसारेण वित्तशाठ्यं न कारयेत् ॥] सूर्यग्रहे सूर्यरूपं सुवर्णेन स्वशक्तितः । चन्द्रं चन्द्रग्रहे धीमान्राजतेन विशेषतः ॥ राहुरूपं प्रकुर्वीत नागेनैव विचक्षणः । नागेन

मीसेन । शुचौ देशे प्रयत्नेन गोमयेन प्रलेपयेत् ॥ तस्योपरि न्यसेद्धीमान्नववस्त्रं सुशोभनम् । त्रयाणां चैव रूपाणां स्थापनं तत्र कारयेत् ॥ रक्ताक्षतं रक्तगन्धं रक्तपुष्पाम्बरादिकम् । सूर्यग्रहे प्रदातव्यं सूर्यप्रीतिकराय च ॥ श्वेतवस्त्रं श्वेतमाल्यं श्वेतगन्धाक्षतादिकम् । चन्द्रग्रहे प्रदातव्यं चन्द्रप्रीतिकराय च ॥ राहवे चैव दातव्यं कृष्णपुष्पाम्बरादिकम् । दद्यान्नक्षत्रनाथाय श्वेतगन्धानुलेपनम् ॥ सूर्यं संपूजयेद्धीमानाकृष्णेनेति मन्त्रतः । चन्द्रग्रहे तथा सम्यगाप्यायस्वेति मन्त्रतः ॥ स्वर्भानोरिति मन्त्रेण राहुं यत्नेन पूजयेत् । एवं संपूजयेद्धीमान्समिद्भिश्चार्कसंभवैः ॥ चन्द्रग्रहे च पालाशैः समिद्भिर्जुहुयान्नरः । दूर्वाभिर्जुहुयाद्धीमान्राहोः संप्रीणनाय च ॥ समिद्भिर्गृह्यसूत्रोक्तैर्मन्त्रैस्ताय जुहुयाद्बुधः । आज्येन चरुणा चैव तिलैश्च जुहुयात्ततः ॥ पञ्चगव्यैः पञ्चरत्नैः पञ्चत्वक्पञ्चपल्लवैः । जलैरौषधिकल्कैश्च सहितैः कलशोद्भवैः ॥ अभिषेकं प्रकुर्वीत यजमानः प्रयत्नतः । मन्त्रैर्वारुणसंभूतैरापोहिष्ठादिभिस्त्रिभिः । इमंमेगङ्गे परतस्तत्त्वायामीति मन्त्रतः ॥ अभिषेके निवृत्ते तु यजमानः समाहितः । आचार्यं पूजयेत्पश्चात्सुशान्तो विजितेन्द्रियः ॥ तस्मै दद्यात्स्वपलेन भक्त्या प्रतिकृतित्रयम् । दक्षिणामिश्र संयुक्तं यथाशक्त्यनुसारतः ॥ ब्राह्मणान्भोजयित्वा तु प्रणिपत्य क्षमापयेत् । तेभ्योपि दक्षिणां दद्याद्यजमानः समाहितः ॥ अनेन विधिना शान्तिं कृत्वा सम्यग्विशेषतः । अकालमृत्युं शोकं च व्याधिपीडां न चाप्नुयात् ॥ सौख्यं सौमनसं नित्यं सौभाग्यं च लभेन्नरः ॥ इत्थं ग्रहणजातानां सर्वारिष्टविनाशनम् । कथितं भार्गवेणापि शौनकाय महात्मने' इति ॥ इति शौनकीये ग्रहणजननशान्तिः ॥

अथ विषघटिकाजननशान्तिः ॥–वृद्धगार्ग्यः—'विषनाडीषु संजातः, पितृमातृधनात्मनाम् । नाशकृद्विषशस्त्राद्यैः क्रूरे

लग्नेऽष्टमेऽपि वा । तद्दोषपरिहारार्थं शान्तिकर्म समाचरेत् । रुद्रो यमोऽग्निर्मृत्युश्च देवताः परिकीर्तिताः ॥ सुवर्णेन यथाशक्ति तल्लक्षणसंयुताः । प्रतिमाः कारयित्वाथ आढकैर्व्रीहिभिः स्थले ॥ स्थण्डिलं परिकल्प्याथ कुम्भमौषधिसंयुतम् । जलैः संपूर्य संस्थाप्य मृदादि प्रक्षिपेत्ततः ॥ वस्त्रद्वयेन संवेष्ट्य पञ्चरत्नानि निक्षिपेत् । कुम्भोपरि तु संस्थाप्य चतस्रः प्रतिमास्ततः ॥ तत्तन्मन्त्रैश्च संपूज्य गन्धपुष्पोपहारकैः । कद्रुद्रायेति मन्त्रेण यमायसोममित्यथ ॥ अग्निर्मूर्धेति मन्त्रेण परंमृत्यो इतीत्यथ । एतैश्चतुर्भिर्मन्त्रैश्च क्रमाद्धेद्धुनेत्ततः ॥ समिदन्नघृतद्रव्यैः प्रत्येकं च यथाक्रमम् ॥ ऋत्विग्भिश्च सहाचार्यो जुहुयादष्टसहस्रकम् । अष्टोत्तरशतं वाथ अष्टाविंशतिमेव वा ॥ ततस्तिलैर्हुनेद्देवांस्तत्तन्मन्त्रैश्च कल्पवित् । ततोऽभिषेचयेदेव मन्त्रैः पौराणिकैः क्रमात् ॥ प्रीयतां भगवानीशः पिनाकी सर्वतोमुखः । तव मूर्तिप्रदानेन ममत्वामीष्टदो भव ॥ ईषत्पीनो यमः कालो दण्डहस्तः प्रसन्नधीः । रक्तदक्पाशभृत्कृष्णो महिषस्थः शिवं कुरु ॥ पिङ्गभ्रूश्मश्रुकेशान्तः पिङ्गाक्षश्चारुणोऽरुणः । छागस्थः साक्षसूत्रश्च सप्तार्चिः शक्तिधारकः । एवं मूर्तिप्रदानेन मम पापं विनाशय ॥ दंष्ट्राकरालवदनो नीलाञ्जनसमाकृतिः । खड्गासिगदापाणिर्मृत्युर्मां पातु सर्वदा ॥ दानमेवंविधैर्मन्त्रैर्यथाविधि समाहितः । गोभूहिरण्यरत्नैश्च आचार्यं पूजयेत्सुधीः । एवं कृते विधानेन विषदोषः प्रशाम्यति' इति ॥ इति वृद्धगार्ग्योक्तविषघटिकाजननशान्तिः ॥

अथ यमलजननशान्तिः । तत्र कारिका–'अथ यस्य वधूर्गौर्वा जनयेद्वेद्यमौ ततः । स मरुद्भ्यश्चरुं कुर्यात्पूर्णाहुतिमथापि वा' इति । अत्र ब्राह्मणम्—'तदाहुर्य आहिताग्निर्यस्य भार्या गौर्वा यमौ जनयेत्का तत्र प्रायश्चित्तिरिति सोऽग्नये मरुत्वते त्रयोदश-

कपालं पुरोडाशं निर्वपेत्तस्य याज्यानुवाक्ये मरुतो यस्यहि क्षयेराद्दवेदचरमा अहेवेत्याहुतिं चाहवनीये जुहुयादग्नये मरुत्वते स्वाहेति मा तत्र प्रायश्चित्तिः' इति । कात्यायनसूत्रेपि —'अथातो यमलविधिं व्याख्यास्यामो यस्य भार्या गौर्दासी वडवा वा विकृतिं जनयेत्तदा शान्तिं कुर्यात्पूर्णे दशाहे स्वस्तिवाचनं चतुर्णां क्षीरवृक्षाणामश्वत्थवटोदुम्बरप्लक्षाणां कषायेण देवदारुगौरसर्षपैर्हिरण्यसहितदूर्वाङ्कुरैश्च पञ्चपल्लवैः पुण्योदकैश्चाष्टौ कलशान्संपूज्य वस्त्रगन्धाक्षतैस्तानलंकृत्य सर्वोपचारैः संपूज्य दम्पती स्नापयेदापोहिष्ठेति तिसृभिः शंनोदेवीरिति पङ्क्तिः समुद्रज्येष्ठा इति चतसृभिः स्नापयित्वालंकृत्य तौ दंपती दर्भेषूपवेशयेत्तत आचार्यो मारुतस्थालीपाकं श्रपयित्वा इध्माधानाद्याज्यभागान्तं कृत्वा अग्नये स्वाहा पवमानाय० मरुद्भ्यः० मृत्यवे० ब्रह्मणे स्वाहा मृत्युंजयाय अग्नये स्विष्टकृते स्वाहा इत्यादिभिर्हुत्वा स्विष्टकृदादिहोमशेषं समापयेत्' इति ॥ इति कात्यायनोक्तयमलजननशान्तिः ॥

अथ प्रसववैकृतजननशान्तिविधिः ॥—'अकालप्रसवा नार्यः कालातीतप्रजास्तथा विकृतप्रसवाश्चैव धूमप्रसवनास्तथा ॥ अमानुषांश्च रण्डांश्च अज्ञातव्यञ्जनांस्तथा । हीनाङ्गानधिकाङ्गांश्च जनयन्ति यदि स्त्रियः ॥ पशवः पक्षिणश्चैव तथैव च सरीसृपाः । विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत् ॥ निर्वासयेत्तान्नृपतिः स्वराष्ट्रात् स्त्रियश्च पूज्याश्च ततो द्विजेन्द्राः । चिकित्सनैर्ब्राह्मणतर्पणैश्च ततोऽस्य शान्तिं समुपैति पापात्' इति ॥ इति प्रसववैकृतजननशान्तिः ॥

अथ सदन्तजननशान्तिः ॥—तत्र पद्मपुराणे विष्णुधर्मोत्तरखण्डे परशुरामं प्रत्याह पुष्करः—'दन्तजन्मनि बालानां लक्षणं तन्निबोध मे । उपरि प्रथमं यस्य जायन्ते च शिशोर्द्विजाः ॥ द्विजा दन्ताः । दन्तैर्वा सह यस्य स्याज्जन्म भार्गवसत्तम ।

मातरं पितरं चाथ भ्रातॄनात्मानमेव वा ॥ तत्र शान्तिं प्रवक्ष्यामि तन्मे निगदतः शृणु । गजपृष्ठगतं बालं तैस्तथा स्थापयेद्द्विजः ॥ तदभावे तु धर्मज्ञः काञ्चने तु वरासने । तदभावे गजाभावे । सर्वौषधैः सर्वगन्धैर्बीजैः पुष्पैः फलैस्तथा ॥ पञ्चगव्येन रत्नैश्च मृत्तिकाभिश्च मार्जयेत् ॥ स्थालीपाकेन धातारं पूजयेत्तदनन्तरम् । सप्ताहं चात्र कर्तव्यं तथा ब्राह्मणभोजनम् ॥ अष्टमेऽहनि विप्राणां तथा देया च दक्षिणा । काञ्चनं रजतं गां च भुवं चात्मानमेव वा ॥ दन्तजन्मनि सामान्ये शृणु स्थानमतः परम् । भद्रासने निवेश्यैनं मूर्ध्नि मूलफलैस्तथा ॥ सर्वौषधैः सर्वबीजैः सर्वगन्धैस्तथैव च । स्नापयेत्पूजयेच्चात्र वह्निं सोमं समीरणम् ॥ समीरणो वायुः । पर्वतांश्च तथा स्यातान्देवदेवं च केशवम् ॥ एतेषामेव जुहुयाद्धुतमग्नौ यथाविधि । ब्राह्मणानां च दातव्या यथा-शक्त्या च दक्षिणा ॥ ततः स्वलंकृतं बालमासने तूपवेशयेत् । पूज्याश्च विधिना नार्यो ब्राह्मणाः सुहृदस्तथा' इति ॥ इति पद्म-पुराणोक्तसदन्तजननशान्तिः ॥

अथ पञ्चमारिष्टजननशान्तिविधिरभिधीयते—'जातस्य पञ्चमे लग्ने सूर्यादिग्रहसंस्थिते । पित्रादीनामरिष्टं तु कुर्वन्ति च यथाक्रमम् ॥ रविश्च पितरं हन्ति मातरं च शशी तथा । भ्रातरं भूमिपुत्रस्तु मातुलं चन्द्रजस्तथा ॥ गुरुर्मातामहं तद्वद्गुरुस्तद्वत्पिता-नामहम् । शनी राहुः शिशुं हन्ति शिखी भ्रातरमेव च ॥ तद्दोषपरिहारार्थं शान्तिं वक्ष्याम्यशेषतः ॥ जातस्य द्वादशाहे वा जन्मर्क्षे वा शुभे दिने । स्वस्त्यादिवाचनं कृत्वा आचार्यं वरयेत्ततः ॥ गृहस्यैशानदिग्भागे गोमयेनोपलिप्य च । व्रीहींस्तत्र विनिक्षिप्य यथा-विभागतः ॥ तस्योपरि न्यसेत्कुम्भं अव्रणं तन्तुवेष्टितम् । आकलशेष्वित्यनया कलशस्थापनं भवेत् ॥ शुद्धोदकेन संपूर्य नदी-

मावाहयेत्ततः । पञ्चगव्यं पञ्चरत्नं पञ्चत्वक्पञ्चपल्लवान् ।। सर्वौषधीः सर्वमृदस्तत्तन्मन्त्रेण निक्षिपेत् । तत्तद्वर्णमयं वस्त्रं कुम्भोपरि निधाय च । प्रधानसार्धमानेन अधिप्रत्यधिदेवते ।। अधिप्रत्यधिदेवौ च दक्षिणोत्तरपार्श्वयोः । ग्रहातिथ्योक्तमार्गेण आवाहनपुरःसरम् । उपचारैः षोडशभिस्तत्तन्मन्त्रैर्यथाविधि ।। श्रीसूक्तं रुद्रसूक्तं च ग्रहमन्त्रान्स्पृशन् जपेत् । अष्टोत्तरशतं कुर्यादष्टाविंशतिमेव वा । ततो होमं प्रकुर्वीत आचार्यो ब्राह्मणैः सह । स्वगृह्योक्तविधानेन कुर्यादग्निमुखं ततः ।। तत्तत्समिद्भिश्चर्वाज्यैरष्टोत्तरशतं हुनेत् । अष्टोत्तरसहस्रं वा अष्टाविंशतिमेव वा ।। होमशेषं समाप्याथ अभिषेकं तु कारयेत् । मातापित्रोः शिशोश्चैव आचार्यो ब्राह्मणैः सह ।। ग्रहमन्त्रैः समुद्राद्यैः पावमानीभिरेव च । श्रीसूक्तेन पुराणोक्तैरभिषेकं तु कारयेत् । ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः । आचार्यं पूजयेत्पश्चात्प्रतिमां वस्त्रसंयुताम् । दद्यात्सदक्षिणां गां च आचार्याय प्रदापयेत् । ऋत्विजोऽपि यथाशक्ति दक्षिणाभिः प्रतोषयेत् । ब्राह्मणान्भोजयेत्पश्चात्स्वयं भुञ्जीत बन्धुभिः ।। एवं शान्तिं प्रकुर्वीत तस्य दोषो विनश्यति । सर्वारिष्टविनाशः स्याद्वेदोक्तायुर्भविष्यति' इति ।। इति मनुप्रोक्तपञ्चमारिष्टजननशान्तिः ।।

अथ पुष्यपूर्वाषाढयोर्जननशान्तिरुच्यते—सुखासीनं मुनिश्रेष्ठं गर्गं मुनिगणान्वितम् । कृताञ्जलिपुटो भूत्वा परिपप्रच्छ शौनकः ।। पुष्यतोयर्क्षसंभूतगण्डदोषविनिर्णयम् । तस्य शान्तिं विधानं च वद मे मुनिसत्तम ।। शौनकस्य वचः श्रुत्वा प्रत्युवाच महामुनिः । वृद्धगार्ग्यः—शृणु शौनक यत्नेन गण्डदोषविनिर्णयम् । शान्तिकर्मविधानं च यथावत्कथयाम्यहम् ।। चन्द्रोदये पुष्यजलर्क्षजातो निहन्ति तातं जननीं सपुत्राम् । पुष्ये जलर्क्षे पितृमातृपुत्रतन्मातुलं हन्ति पदक्रमेण' ।। अगस्त्यः—'त्वाष्ट्रे च

तिष्ये च तथा च तोये कन्या कुलीरोदयचापलग्ने । शुभग्रहः पश्यति चेन्न हन्यात्पितृंश्च मातृंश्च सुतं च मातुलम्' ॥ वसिष्ठः—'पुष्ये कर्कटके चापे जलांशे पितृमृत्युकृत् । पुत्रो जातो यदि भवेन्मातरं स जिघांसति ॥ पूर्वाषाढे च पुष्ये च पितरं मातरं सुतम् । मातुलं च तथा हन्यात्प्रथमाद्यंशजः क्रमात् ॥ अत्रयोगे कष्टदिने विष्टिवैधृतिसंयुते । गण्डव्याघातशूले च परिघे चार्धपूर्वके ॥ चन्द्राष्टके नैधने च तत्र विष्टिसमन्विते । बलाञ्जायते दोषस्तिष्यतोयसमुद्भवे ॥ शान्तिं तस्य प्रवक्ष्यामि गण्डदोषप्रशान्तये ॥ सुदिने शुभनक्षत्रे चन्द्रताराबलान्विते । सूतकान्ते तथा कुर्यात्तिष्यतोयर्क्षशान्तिकम् ॥ सुराचार्यं पीतवर्णं चतुर्भुजसमन्वितम् । कमण्डल्वक्षसूत्राढ्यं वरदाभयपाणिकाम् ॥ कुर्यात्प्रतिकृतिं रम्यां देवपूज्यबृहस्पतेः । कर्षमात्रसुवर्णेन कर्षार्धेनाथ वा पुनः । तदर्धेनाथ वा कुर्याद्वित्तशाठ्यं न कारयेत् ॥ कुर्याद्देवं विधानेन जलगण्डे च शौनक । वरुणं श्वेतवर्णं च द्विभुजं नक्रवाहनम् । कमण्डलुधरं देवं कुर्यात्प्रतिकृतिं ततः ॥ आचार्यं वेदशास्त्रज्ञं सदाचारसमन्वितम् । जितेन्द्रियं सपत्नीकं शान्तं शान्तकुटुम्बिनम् ॥ शान्तिकर्मविधानज्ञं दैवज्ञं संपरीक्ष्य च । आहूय पूजयेद्धीमान्वस्त्रमाल्यानुलेपनैः ॥ ततस्तु चतुरो विप्रान्वेदवेदाङ्गपारगान् । सुरूपाञ्श्रोत्रियान्दान्तान्सुशान्तान्विजितेन्द्रियान् । अर्चयेद्गन्धमाल्याद्यैर्वस्त्राभरणकैस्तथा ॥ शालितण्डुलमध्ये तु पद्मस्योपरि पूजयेत् । बृहस्पतेति मन्त्रेण पूजयेत्प्रयतो द्विजः ॥ गन्धपुष्पैश्च धूपैर्दीपैर्नानादीपसमन्वितैः । पीतवस्त्रद्वयोपेतं पूजयेद्विधिना ततः ॥ तत्र संस्थापयेत्कुम्भांश्चतुर्दिक्षु विशेषतः । दिक्पालप्रतिमां कुर्याद्यथावित्तानुसारतः ॥ पुण्योदकसमायुक्तान्वस्त्रमाल्यैर्विभूषितान् । कुम्भेषु विन्यसेद्धीमान्पञ्चगव्यं समन्त्रकम् ॥ पञ्चामृतं पञ्चरत्नं मृत्तिकाः सप्तसंख्यया । पञ्चवृक्षकषायाणि पञ्चपल्लवकांस्तथा ॥ सुवर्णकुशदूर्वाश्च सर्वौषध्यादि निक्षिपेत् ।

पूजयेद्वारुणैः सूक्तैः कुम्भान्सर्वान्प्रयत्नतः ॥ आनोभद्रा भवेदादौ भद्राअग्ने द्वितीयकम् । तृतीयं पुरुषसूक्तं च कद्रुद्राय चतुर्थकम् ॥ पूजयेयुश्च पुष्पाद्यैश्चत्वारो वेदपारगाः । जपं कुर्युः प्रयत्नेन मन्त्रैरेभिः पृथक्पृथक् ॥ आचार्यो मूलमन्त्रेण जपं कुर्यात्प्रयतः । इत्थं संपूज्य देवेज्यं वरुणं वा यथाक्रमम् ॥ अश्वत्थवृक्षसंभूतैः शतमष्टोत्तरं हुनेत् । घृतपायससंयुक्तं मूलमन्त्रेण वाग्यतः ॥ तिलव्याहृतिभिश्चैव हुनेदष्टोत्तरं शतम् ॥ गृहस्य पूर्वदिग्भागे उत्तरस्यामथापि वा । मण्डपं कारयेद्विद्वांस्तोरणाद्यैः सुशोभितम् ॥ गृहे वाथ प्रकुर्वीत शान्तिकर्म विधानतः । होमार्थं कारयेत्कुण्डं स्थण्डिलं वा विचक्षणः ॥ सर्वशान्तिकरायैव तत्र होमं समाचरेत् ॥ बृहस्पते परिदीयेत्यस्य मन्त्रस्याप्रतिरथऋषिः बृहस्पतिर्देवता त्रिष्टुप्छन्दः। बृहस्पते परिदीया रथेन रक्षोहा मित्रॉं अपबाधमानः । प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् । कुङ्कुमगन्धः सरोरुहपुष्पं । पूर्वाषाढर्क्षगण्डे तु समिद्भिर्ब्रह्मवृक्षकैः । चरुणा पायसेनैव तिलव्याहृतिभिर्हुनेत् ॥ आपोहिष्ठेत्यस्य सिन्धुद्वीप आपोगायत्री । आपोहिष्ठा० १ चन्दनगन्धः कह्लारपुष्पं । ततः स्विष्टकृदाद्यं च होमशेषं समाचरेत् । एवं होमे समाप्ते तु आचार्यः सुसमाहितः । सुसंकल्प्य विधानेन कुम्भस्थैर्वारुणोदकैः । भार्याशिशुसमेतस्य यजमानस्य ऋत्विजः । अभिषेकं प्रकुर्युस्ते सूक्तैर्वारुणसंयुतैः । समुद्रज्येष्ठादिभिर्मन्त्रैरापोहिष्ठादिभिस्तथा । द्यौः शान्तेत्यादिभिर्मन्त्रैरभिषेकं समाचरेत् ॥ अभिषेकसमाप्तौ तु यजमानः समाहितः । शुक्लाम्बराणि धृत्वाथ कुर्यादाज्यावलोकनम् ॥ देवस्य पुरतः स्थित्वा धूपदीपनिवेदनम् । दत्वाचानमनं सम्यक्ताम्बूलान्तं तथैव च ॥ नमस्तेस्तु सुराचार्य नमस्तुभ्यं बृहस्पते । गृहाणार्घ्यं मया दत्तं गण्डदोषप्रशान्तये ॥ नमस्तेस्तु जलाधीश नमस्तुभ्यं प्रचेतसे । गृहाणार्घ्यं मया दत्तं गण्डदोषप्रशान्तये ॥ आचार्येणलिंगाद्यैश्च

कारितं यत्फलं शुभम् । लब्ध्वा तु तत्फलं तत्र इज्याय च समर्पयेत् ॥ आचार्याय च गां दद्यात्सुशीलां च पयस्विनीम् । श्वेतवर्णां वस्त्रयुतां गन्धमाल्यैर्विभूषिताम् ॥ पितृगण्डे विशेषेण दक्षिणाभिश्च संयुताम् । गण्डेऽन्यत्र प्रकुर्वीत स्वर्णदानं स्वशक्तितः ॥ अन्येषां ब्राह्मणानां च जापकानां तथैव च । यथाशक्ति प्रदातव्यं वित्तशाठ्यं न कारयेत् ॥ वस्त्रदानं धान्यदानं स्वर्णदानं तथैव च । अयःपिण्डं च कार्पासं दशदानानि कारयेत् ॥ देवेन्द्राद्यैः सदामत्रैः पूजितस्त्वं बृहस्पते । दानेनानेन देवेज्य गण्डदोषं विनाशय । इति बृहस्पतिप्रतिमादानम् ॥ ॥ जलाधीश नमस्तुभ्यं पूजितो नक्रवाहन । दानेनानेन तुष्टस्त्वं गण्डदोषं विनाशय ॥ इत्यब्देवताप्रतिमादानम् ॥ ॥ इत्थं कृत्वा विधानेन कुर्याद्ब्राह्मणभोजनम् । गण्डदोषं विनिर्जित्य स आयुष्मान्भवेन्नरः ॥ इत्युक्तं वृद्धगार्ग्येण शौनकाय महात्मने । तिष्यतोयर्क्षसंभूतगण्डदोषप्रशान्तिकम् ॥ अज्ञानाज्ज्ञानतो वापि वैकल्याच्छन्दतस्तथा । यन्न्यूनमतिरिक्तं वा तत्सर्वं क्षन्तुमर्हसि ॥ इति वृद्धगार्ग्योक्तपुष्यपूर्वाषाढानक्षत्रजननशान्तिः ॥

अथ चित्रानक्षत्रजननशान्तिविधिरुच्यते—'चित्रानक्षत्रजातानामरिष्टं च पदक्रमात् ॥ पितुश्च मातुश्च पितामहस्य च धनस्य च ॥ तद्दोषपरिहारार्थं शान्तिं वक्ष्यामि नारद ॥ गोमुखप्रसवं कुर्याद्ग्रहशान्तिमतः परम् । सर्वारिष्टनिवृत्त्यर्थं दशदानं यथाविधि ॥ गृहस्यैशानदिग्भागे दशधान्यं च निक्षिपेत् । कुम्भस्य स्थापनं कुर्याद्वस्त्रेण परिवेष्टयेत् ॥ गृहस्यैशानदिग्भागे मण्टपं कारयेत्ततः । चतुर्द्वारसमायुक्तं चित्रध्वजपताककम् ॥ गोमयेनोपलिप्याथ स्थण्डिलं परिकल्पयेत् । संकल्पं च ततः कृत्वा ब्राह्मणानामपुरःसरम् ॥ आचार्यं वरयेदादौ श्रोत्रियं वेदपारगम् । ऋत्विजो वरयेत्पश्चाच्छ्रोत्रियांश्च कुटुम्बिनः ॥ पुण्याहवाचनं कृत्वा

कुम्भं संस्थाप्य यत्नतः । सुवर्णप्रतिमां स्थाप्य रत्नौषधिमृदादिकम् ॥ प्रधानकुम्भ आवाह्य चित्रानक्षत्रदेवताम् । दक्षिणोत्तरपार्श्वे तु अधिप्रत्यधिदेवते ॥ कुम्भस्य दक्षिणे पार्श्वे उपकुम्भं प्रपूजयेत् । पूर्वोक्तेनैव मार्गेण पूजां कृत्वा यथाविधि ॥ आचार्येणैव कर्तव्यं जपहोमादिकं तथा । प्रधानकुम्भे नक्षत्रदेवतायास्यकाष्टकम् । सहस्रवारं जप्त्वैव शतमष्टोत्तरं तु वा । ऋत्विजो जपकर्तारः स्पृशन्त्वोपकुम्भकम् । तथाहत्पुत्रमन्त्रं सप्तेदं चापि मन्त्रकम् ॥ दिक्पालरुद्रसूक्तं च श्रीसूक्तं च स्पृशञ्जपेत् । कुम्भस्य पश्चिमे देशे होमं कुर्याद्यथाविधि ॥ कर्तुः सूत्रोक्तमार्गेण आज्यभागान्तमाचरेत् । समिधः पायसं चाज्यमष्टौ वाक्यैः शतं हुनेत् ॥ जपमन्त्रादिर्कृत्वा नक्षत्रे सर्वमेव हि । जयादिपरिषेकान्तं कृत्वा कर्म समापयेत् ॥ मातापित्रोः शिशोश्चापि निरीक्षेदाज्यपात्रकम् । एवं कृते न संदेहः सर्वारिष्टं प्रशाम्यति' इति ॥ इति मानवीयसंहितायां चित्रानक्षत्रजननशान्तिः ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे जननशान्तिप्रकरणम् ॥

अथ खट्वारोहणम् । यदुदरधृतलोकः खट्विकामारुरुक्षत्यमृतकृति विदग्धो दुग्धकं यत्पिपासुः । निरवयवतनुर्यत्कर्णवेधं निधित्सुः कलय सकलमेतद्युज्यते किं नृसिंह ॥ अथेदानीं नामकरणानन्तरं ज्योतिःशास्त्रे विहितत्वात् खट्वारोहणदुग्धपान-कर्णवेधाख्यानि कर्माणि क्रमेण कथ्यन्ते । तत्र खट्वारोहे बृहस्पतिः—'खट्वारोहस्तु कर्तव्यो दशमे द्वादशेऽपि वा । षोडशे दिवसे वापि द्वात्रिंशद्दिवसेऽपि वा' इति ॥ भविष्यत्पुराणे—'अभीष्टे पुण्यदिवसे चन्द्रताराबलान्विते । मृदुध्रुवक्षिप्रभेषु माता वा कुलयोषितः । योगशायं हरिं स्मृत्वा प्राक्शीर्षं विन्यसेच्छिशुम्' इति ॥ ❀ ॥ मृदुनक्षत्रादिलक्षणमुक्तं श्रीप-

तिना—'रोहिण्युत्तरभं स्थिरं गिरिशमूलेन्द्रोरगं दारुणं क्षिप्रं चाश्विदिनेशपुष्यमनलेन्द्राग्नी तु माधारणम् । उग्रं पूर्वमघान्तकं मृदुमृगत्वाष्ट्रान्त्यमैत्रं चरा विष्णुस्वातिशतोडुवस्वादितयः कुर्युः स्वसंज्ञाफलम्' इति । इति खट्वारोहणम् ॥ ॥ ❀ ॥ अथ दुग्धपानविधिरभिधीयते श्रीधरीये—'एकत्रिंशे वासरे वा द्वितीये जन्मर्क्षे वा शुद्धलग्नेऽनुकूले । शङ्खे क्षीरं संनिदध्याच्छिशूनां पक्षे धात्री पूज्यपूजां विधाय' ॥ अयमर्थः—जातस्य जन्मदिवसादेकत्रिंशद्दिवसे तदलाभे द्वितीये जन्मनक्षत्रे पयःपानं कारयितव्यम् । तथाह नृसिंहः—'एकत्रिंशद्दिने चैव पयः शङ्खेन पाययेत् । अन्नप्राशननक्षत्रदिवमोदयराशिषु ॥ नक्षत्रे मासि संपूर्णे जातर्क्षे तु विशेषतः । मासान्ते दुग्धपानं स्यात्पश्चात्काले सुशोभने ॥ उत्तरात्रयहस्तौ च त्वाष्ट्रवैष्णववासवाः । पूषाश्विनी मघा स्वाती वारुणादितिजीवभम् ॥ रोहिण्यैन्द्यमैत्राश्च दुग्धपाने शिशोः शुभाः । षष्ठी दर्शाष्टमी रिक्ता वर्ज्या विष्टिः स्थिराणि च । वर्ज्यास्त्वशुभयोगाश्च कृष्णे चान्त्यत्रिकं विना ॥ अधोमुखानि वर्ज्याणि मीनाजालिगृहाणि च । जीवशुक्रेन्दुसौम्यानां वारा वर्गोदयेक्षणः ॥ शुभानां राशयः श्रेष्ठा विशेषाच्छुभकर्मणि । आयारिभ्रातृगाः पापा विशेषेण शुभाः शिशोः ॥ पूर्वाह्णे वापि मध्याह्ने कुर्याद्रात्रौ विवर्जयेत् । योगिनीराहुरुद्रादिमुखं चैव विवर्जयेत्' ॥ इति दुग्धपानम् ॥ ॥ ❀ ॥ स्थिरयोगिनीलक्षणम्—'शतमखेन्दुहुताशनरक्षसां यमजलेशसमीरणशूलिनाम् । दिशि भुवि क्रमशः परिवर्तते सिततिथिप्रथमादिषु योगिनी' ॥ एतत्स्थिरयोगिनीलक्षणम् ॥ अथ चरयोगिनीलक्षणम्—'इन्द्रवायुयमशूलिपाशिनां वह्निवैश्रवणरक्षसां क्रमात् । अर्धयाममनुयागरादितो दिक्षु संभ्रमति योगिनी चरा' इति ॥ ❀ ॥ अथ राहुलक्षणम्—'गुरुभान्वोर्वैसेत्प्राच्यामिन्दौ शुक्रे न दक्षिणे । कालराहुः कुजे प्रत्यगुत्तरे बुधमन्दयोः' इति ॥ ❀ ॥ अथ रुद्रलक्षणम्—'हरिसोमवह्निराक्षसयमवरुणानिलहरा-

लयेन्नेत्रम् । उदयादि भ्रमति सदा घटिका रुद्रो महाप्रबलः' इति ॥ अभ्युदयार्थिनामयं रुद्रः पृष्ठतः स्थाप्य इत्याहुः— 'द्यूतेषु महिषकुक्कुटमल्लगजाजयुद्धेषु विजयकरः । रुद्रः पृष्ठगतोऽसावङ्गगतो ह्यत्र भङ्गदो भवति' इति । एतत्फलं योगिनीराहोरपि द्रष्टव्यम् ।—'चन्द्रे सद्गुणसंयुक्ते शुभग्रहदृशा युते । स्वोच्चमित्रस्ववर्गस्थे शुक्रे चातिबलान्विते ॥ पारावतगते वापि सुरेश्वरगतेपि वा । ऐरावतगते वापि दुग्धपानं शुभावहम्' इति ॥ ❀ ॥ अथ पारावतादिलक्षणं व्युत्क्रमेणोक्तं वसिष्ठेन—'चतुर्भिः पञ्चभिः षड्भिर्वर्गैश्च शुभान्वितैः । ऐरावतः पारावतः सुरेशः पुष्करः क्रमात्' इति । अत्र चतुर्भिरित्यादिलग्नहोरादिषड्वर्गमध्ये शुभान्वितैः शुभग्रहान्वितैरित्यर्थः ॥ इति योगिनीलक्षणम् ॥ ❀ ॥ अथ कर्णवेधनविधिः । श्रीधरीये—'मासे षष्ठे सप्तमे वाष्टमे वा वेध्यौ कर्णौ द्वादशे षोडशेऽह्नि । मध्ये वाह्नः पूर्वभागे न रात्रौ नक्षत्रे द्वे द्वे तिथी वर्जयित्वा' । अस्यार्थः—जातस्य जन्मदिवसाद्द्वादशे षोडशे वा दिवसे षष्ठे सप्तमेऽष्टमे वा मासि शिशोः कर्णौ वेध्यौ ॥ तथाच बृहस्पतिः—'जन्मतो दशमे वाह्नि द्वादशे वाथ षोडशे । सप्तमे मासि वा कुर्यादष्टमे मासि वा पुनः' ॥ गर्गः—'मासे षष्ठे सप्तमे वाप्यष्टमे मासि वत्सरे । कर्णवेधं प्रशंसन्ति पुष्ट्यायुःश्रीविवृद्धये' ॥ कारिका—'कार्त्तिकापूर्वमासे वा चैत्रे वा फाल्गुनेपि वा । कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने ॥ सुनक्षत्रे शुभे चन्द्रे सुस्थे शीर्षोदये शुभे । दिने छिद्रव्यतीपातविष्टिवैधृतिवर्जिते ॥ शिशोरजातदन्तस्य मातुरुत्सङ्गसर्पिणः । सव्यं च वेधयेत्कर्णं सूच्या द्विगणसूत्रया ॥ हस्ताश्विनीस्वातिपुनर्वसू च तिष्येन्दुचित्राहरिरेवतीषु । चन्द्रानुकूले गुरुशुक्रवारे कर्णौ तु वेध्यावमले च लग्ने' ॥ ❀ ॥ अत्र जन्ममासं निषेधति व्यासः—'यो जन्ममासे क्षुरकर्म यात्रां कर्णस्य वेधं

कुरुते तु मोहात् । नूनं स रोगी धनपुत्रनाशं प्राप्नोति मूढो वधबन्धनानि' ॥ अह्नः पूर्वभागे मध्यभागे वा कर्णौ वेध्यौ नतु रात्रौ । नक्षत्रद्वययुक्ते तिथिद्वययुक्तेऽह्नि च संधेः प्रागपश्चाद्वर्जयेत् ॥ तथाह बृहस्पतिः—'तम्मिन्वारे तिथौ तारे द्वे द्वे युक्ते न शोभने । संध्योर्द्वयोः पुरा पश्चाद्दिनानि शुभतारयोः ॥ पूर्वाह्णे सुप्रशस्तं स्यादपराह्णे न शोभनम्' ॥ अगस्त्यश्चाह—'द्वयोश्च संध्ययोर्लग्ने न कुर्यात्कर्णवेधनम् । रात्रावपि तथा लग्ननक्षत्रतिथिसंधिषु । कर्णवेधं न कुर्वीत कुर्याच्चेच्छेदनं भवेत्' इति ॥ ॥ अथ नक्षत्रादयोऽभिधीयन्ते—'हरिहरकरचित्रासौम्यपौष्णोत्तरार्यादितिवसुषु घटालीसिंहवर्जे विलग्ने । शशिबुधगुरुकाव्यानां दिने पर्वरिक्तारहिततिथिषु शुद्धे नैधने कर्णवेधः' ॥ अस्यार्थः—श्रवणादिषु द्वादशसु नक्षत्रेषु कर्णौ वेध्यौ ॥ तथाह बृहस्पतिः—'सौम्यार्द्रार्यादित्युत्तराहस्तचित्राश्च विष्णुभम् । श्रविष्ठा रेवती चैव शुभाः स्युः कर्णवेधने' ॥ ॥ अथ राशयोऽभिधीयन्ते—घटालीति । एभिस्त्रिभिर्राशिभिर्वर्जितेषु कर्णवेधः स्यात् । तथाह बृहस्पतिः—'स्थिराः श्रेष्ठाश्चरा निन्द्याः मध्यमाश्चोभये स्मृताः । मध्यमे शेषिताः सर्वे शुभाः स्युः कर्णवेधने' ॥ नारदश्च—'वृषभे मिथुने मीने कुलीरे कन्यकासु च । तुलाचापे तु कुर्वीत कर्णवेधं शुभद्वये ॥ मेषश्च मकरश्चैव मध्यमौ गुरुचोदितौ । सिंहवृश्चिककुम्भाश्च मध्यत्वादपि वर्जिताः' इति ॥ ॥ अथ वारा विधीयन्ते—शशीति । चन्द्रगुरुबुधशुक्राणां वारेषु कर्णवेधः कार्यः ॥ तथाह बृहस्पतिः—'मन्दारार्कशिवारास्तु वर्ज्याः स्युः कर्णवेधने । गुरुशुक्रेन्दुजेन्दूनां पूज्या वारांशकोदयाः' ॥ ॥ अथ तिथिविधिः—पर्वेति । पर्वद्वयेन रिक्ताभिश्च वर्जितासु तिथिषु कर्णवेधः कार्यः ॥ तथाह बृहस्पतिः—'एकादश्यष्टमीपर्वरिक्तावर्ज्याः शुभावहाः । शिष्टाश्च तिथयः सर्वाः कृष्णे

चान्त्यत्रिकं विना ॥ शकुन्यादीनि विष्टिं च विशेषेण विवर्जयेत् । शुभयोगेषु सर्वेषु कर्णवेधः शुभावहः' इति ॥ ॥ अथ लग्नगोचरमाह—शुद्धे नैधन इति । नैधनमष्टमं तस्मिन्सर्वग्रहरहिते कर्णवेधः कार्यः ॥ तथाह बृहस्पतिः—'रन्ध्रारिव्ययगो नेष्टो गुरुः शिष्टेषु शोभनः । [ शुभो रन्ध्रगतः सौम्यो नष्टः शेषेषु शोभनः ॥ ] सप्ताष्टमगतः शुक्रो न शुभोऽन्यत्र शोभनः । चन्द्रो द्वित्रिसुतस्त्रीषु धर्मकर्मगतः शुभः' ॥ सुतः पञ्चमः । धर्मो नवमः । कर्म दशमः । शेषाः प्रसिद्धाः ॥—'त्रिषडायगताः पापाः शुभाः कर्णस्य वेधने । अष्टमस्था ग्रहाः सर्वे नेष्टाः स्युः कर्णवेधने' इति । संग्रहे—'सुनक्षत्रे शुभे चन्द्रे सुस्थे शीर्षोदये शुभे । दिनच्छिद्रव्यतीपातविष्टिवैधृतिवर्जिते ॥ शिशोरजातदन्तस्य मातुरुत्सङ्गसर्पिणः । सौचिको वेधयेत्कर्णौ सूच्या द्विगुणसूत्रया' ॥ सुबोधेपि—'शातकुम्भमयी सूची वेधने तु शुभप्रदा । राजती वायसी वापि यथाविभवतः शुभा ॥ सुभूमौ प्राङ्गणे रम्ये शुचौ देशेऽम्बरे रवौ । संनिधौ वेधयेत्कर्णौ स्त्रीपुंसोर्वामदक्षिणौ ॥ क्रमेण पूर्वं वेध्यौ द्वौ शिशोरायुःसुखप्रदौ' ॥ अर्णवेप्युक्तम्—'शङ्खसूत्रसमायुक्तताम्रसूच्याथ वेधयेत् । वेधात्तृतीयनक्षत्रे क्षालयेदुष्णवारिणा ॥ रोपणार्थं सुशुद्ध्यर्थं नाल(?)संपत्तिमाप्नुयात् । एवं छिन्ने च भिन्ने च हित्वा योज्यानि योजयेत्' इति ॥ विष्णुधर्मोत्तरे परशुरामं प्रत्याह पुष्करः—'शिशोरेवाथ कर्तव्यं कर्णवेधं यथा शृणु । पूर्वाह्णे पूजनं कृत्वा केशवस्य हरस्य च ॥ ब्रह्मणश्चन्द्रसूर्याभ्यां दिगीशानां तथैव च । नासत्ययोः सरस्वत्या ब्राह्मणानां गवां तथा ॥ गुरूणां मण्डनं कृत्वा तत्र दत्त्वा वरासनम् । अथोपवेशयेत्तत्र धात्रीं शुक्लाम्बरावृताम् ॥ अलंकृतां तदुत्सङ्गे बालं संस्थाप्य पूजितम् । कर्णौ तु निश्चलं तस्य अलक्तकरसाङ्कितौ ॥ विध्येदेवं कृते छिद्रे सकृदेवात्र लाघवात् ।

प्राग्दक्षिणे कुमारस्य भिषग्वामे तु योषितः । शिशोर्विवर्धनं कार्यं यावदाभरणक्षमम् ॥ कर्णवेधदिने विप्राः सांवत्सरचिकित्सकाः । पूज्याश्च विधिवच्चार्यः सुहृदश्च तथा द्विजैः' इति ॥ अत्र पुरुषकर्णरन्ध्रवृद्धिविषये विशेषमाह हेमाद्रौ देवलः—'कर्णरन्ध्रे रविच्छाया न विशेदग्रजन्मनः । तं दृष्ट्वा विलयं यान्ति पुण्यौघाश्च पुरातनाः' ॥ तस्य प्रमाणान्तरं प्रसङ्गेनाह शङ्खः—'अङ्गुष्ठमानविवरौ कर्णौ न भवतो यदि । तस्मै श्राद्धं न दातव्यं दद्याचेदासुरं भवेत्' इति ॥ अत्र लम्बकर्णनिषेधमाह शालङ्कायनः—'अविद्धकर्णं यद्भुक्तं लम्बकर्णस्तथैव च । दग्धकर्णस्तु यद्भुक्तं तद्वै रक्षांसि गच्छति' ॥ तत्प्रमाणमाह गोभिलः—'हनुमूलादधः कर्णौ लम्बौ तु परिकीर्तितौ । अङ्गुलौ त्र्यङ्गुलौ शस्तौ तेन शातातपोऽब्रवीत्' इति कर्णवेधः ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे खट्वारोहण—दुग्धपान—कर्णवेधनप्रकरणम् ॥

अथ निष्क्रमणम् । निजभक्तपरित्राणे निर्माय वपुरद्भुतम् । निष्क्रान्ताय मणिस्तम्भान्निर्भिद्य महसे नमः ॥ अथ निष्क्रमणविधिरभिधीयते । तस्याकरणे प्रत्यवायं करणेऽभ्युदयं चाह बृहस्पतिः—'अथातः संप्रवक्ष्यामि उपनिष्क्रमणं शिशोः । अत्र निष्क्रमणं नाम गृहात्प्रथमनिर्गमः ॥ अकृतायां क्रियायां स्यादायुःश्रीनाशनं शिशोः । कृते संपद्विवृद्धिः स्यादायुर्वर्धनमेव च' इति ॥ अत्र मासादिनिर्णय उच्यते—'मासे तृतीये दिवसे दिनेशं शिशुं चतुर्थे शशिनं च धेनुम् । विलोकयित्वाग्निविधिप्रयुक्ते काले गृहान्निष्क्रमणं विदध्यात्' ॥ अस्यार्थः—तृतीयमासे जन्मदिवसे बालं दिनेशं दर्शयित्वा सावने चतुर्थे मासि शशिनं च दर्शयित्वा अग्निविधिप्रयुक्ते काले गृहान्निष्क्रमणं विदध्यात् ॥ अत्राह यमः—'तृतीये मासि कर्तव्यमहः सूर्यस्य दर्श-

नम् । उपनिष्क्रमणं कुर्याच्चतुर्थे मासि सावने' इति ॥ तत्र नक्षत्रादिनिर्णय उच्यते मुहूर्तसंग्रहे—'चत्वार्यार्यम्णविश्वर्क्षोत्तिसोऽहिर्बुध्न्यभाद्विधुः । मैत्रमादित्यपुष्यौ च रोहिणी च शुभावहाः ॥ चत्वार्यार्यम्णः उत्तरादिचतुष्टयम् । अर्यम्ण इत्यत्र सलोपश्छान्दसः । विश्वर्क्षोत्तिस्रः उत्तराषाढादित्रयम् । अहिर्बुध्न्यभात्तिस्रः उत्तराभाद्रादित्रयम् । मैत्रमनुराधा । आदित्यः पुनर्वसुः ॥—'पूर्णपक्षः शुभः प्रोक्तः कृष्णे चान्त्यत्रिकं विना । रिक्तापञ्चष्टमीदर्शद्वादशीश्च विवर्जयेत् ॥ वर्ज्यास्त्वशुभयोगाः स्युर्विष्टिश्च शकुनादि च । घटालिमेषा वर्ज्याः स्युस्तथैवाधोमुखानि च ॥ सतां तु वारवर्गाश्च शुभदास्तूदयास्तथा । चान्द्रं सर्वं विवर्ज्यं स्यात्सर्वे यस्मा विनाशदाः ॥ केन्द्रत्रिकोणगाः सौम्याः पापाः षष्ठत्रिलाभगाः । उपनिष्क्रमणे शस्ता मातुलो वा वहेच्छिशुम्' इति ॥ कारिका—'चतुर्थे मासि पुण्यर्क्षे शुक्ले निष्क्रमणंभवेत् । स्नातं स्वलंकृतं चाभिहितस्वस्त्ययनं शिशुम् ॥ आदाय गेहान्निष्क्रम्य गच्छेयुर्देवतालयम् । अभ्यर्च्य देवतां सम्यगाशिषो वाचयेदथ ॥ कृत्वा प्रदक्षिणं गेहमानयन्ति ततः स्वकम् । मातृष्वसृगृहं गत्वा मातुलादिगृहं नयेत् ॥ तदाशीर्वचनाद्यैः स्याद्दीर्घायुरभिनन्दितः । जयन्तस्य मतेनायं लिखितः शिशुनिष्क्रमः' इति अभिहितस्वस्त्ययनं कृतपुण्याहवाचनम् ॥ अत्र गृह्यपरिशिष्टम्—'एवं निष्क्रमणं चतुर्थे मास्यापूर्यमाणपक्षे पुण्ये नक्षत्रे स्वस्तिवाचयित्वा स्विष्टकृतः प्राक्सुस्नातालंकृतं कुमारमादाय देवतायतनमेत्य देवतामुपाहारेणाभ्यर्च्याशिषो वाचयित्वायतनं प्रदक्षिणं परीत्य गृहमियात्संनन्धिनो वा गृहं नीत्वानयेदेवमन्नप्राशनादावपीच्छायामनादिष्टदेवता यष्टव्या इति' । इत्याश्वलायनगृह्यपरिशिष्टे प्रथमोऽध्यायः ॥ अत्र स्मृतिरूपेणाहाचार्यः—'चतुर्थे मासि कार्यं स्यादुपनिष्क्रमणं शिशोः । षष्ठे वा देवतास्थानमि-

यादादाय तं शिशुम् ॥ प्रत्यक्षैः कृत्रिमैर्वातमलंकृत्य शिशुं पिता । नयेदाकल्पकैः सम्यग्देवतायतनं गृहात् ॥ अभ्यर्च्य देवतामूर्तिं पञ्चघोपपुरःसरम् । भोजयित्वा द्विजान्गेहे स्वस्तिवाचनमाचरेत् ॥ शाकुन्तं प्रजपेत्सूक्तं शिशोर्निष्क्रमणे पिता । द्विजांश्चादर्शपूर्णाणि मङ्गलानि पुरो नयेत् ॥ दर्पणः पूर्णकलशः कन्याः सुमनसोऽक्षताः । दीपमाला ध्वजो लाजाः संप्रोक्तं चाष्टमङ्गलम्' ॥ सुमनसः पुष्पाणि । 'विवाहे निष्क्रमे काम्ये वृद्धौ पूर्ते समागमे । उत्सवेषु च यात्रायां प्रशस्तं चाष्टमङ्गलम्' इति ॥ अत्र भगवान्—'मासे चतुर्थे षष्ठे वा शिशोर्निष्क्रमणं गृहात् । विदधीतास्य पित्रादिर्हितैषी यश्च रक्षकः ॥ पूर्वपक्षे शिशोर्जन्म नक्षत्रानुगुणे शुभे । नक्षत्रे गुणसंपन्ने तिथिवारादिसंयुते ॥ स्नापयित्वा शिशुं पूर्वं भूषयित्वा ततो द्विजान् । भोजयित्वाथ तैस्तुष्टैः कृतपुण्याहवाचनम् । निर्गमय्य गृहादेनं नीत्वाथो देवतालयम् ॥ ततः प्रदक्षिणं नीत्वा बालं तद्देवतालयम् । गन्धमाल्यादिभिस्तत्र पूजयित्वाथ देवताम् ॥ प्रणमय्य च तं बालं ततो देवालयस्थितैः । विद्वद्भिर्ब्राह्मणैराशीर्वादाद्यैरभिनन्दितम् । परिगृह्य ततः स्थानान्निष्क्रमय्य शिशुं ततः । मातुलादेः समासन्नबन्धोः प्रापय्य मन्दिरम् ॥ तत्रोपाहारदानाद्यैराशीर्भिश्चातिलालितम् । कुमारं परिगृह्यैनं प्रापयेत्स्वगृहं ततः' इति ॥ अत्र विशेषमाह श्रीधरीये बृहस्पतिः—'अलंकृतं शिशुं सम्यगभ्यर्च्य च शुभाक्षतैः । स्वस्तिवाच्य समारूढवाहनं निर्नयेद्गृहात् ॥ मातुलो वा वहेत्तत्र निर्वाहनशिशुं स्वयम् । शिशुना सह मित्राणि बान्धवा निर्ययुस्तदा ॥ सर्वे दुन्दुभिघोषैश्च वाद्यशब्दसमन्वितैः । चतुरस्रे शुभे देशे गोमयेनोपलेपिते । धान्यपुञ्जे समासीनं पीठे बालमथापि वा ॥ अर्चयेद्गन्धपुष्पाद्यैस्तस्य मूर्ध्नि ललाटके । अस्य

पाठा०—१ निर्ययुश्च गृहात्स्वयम् ।

रक्षां ततः कृत्वा मृतसंजीविनीं जपेत् ॥ तत्रार्चयेद्गृहेशानं भूतेशानं तथैव च । भक्ष्यैर्विचित्रैः सफलैः शिशूनभ्यर्चयेद्बुधः' इति ॥ विष्णुधर्मोत्तरे परशुरामं प्रत्याह पुष्करः—'चतुर्थे मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात् । दिगीशानां दिशां तत्र तथा चन्द्रार्कयोर्द्विजः । पूजनं वासुदेवस्य गगनस्य च कारयेत् ॥ ततः स्वलंकृता धात्री बालमादाय पूजितम् । बहिर्निष्कासयेद्गेहाच्छङ्खपुण्याहनिस्वनैः । ततस्तत्र जपेन्मन्त्रं यं तं राम निबोध मे ॥—चन्द्रार्कयोर्दिगीशानां दिशां च गगनस्य च । निक्षेपार्थमिमं दद्मि तेऽमुं रक्षन्तु सर्वदा ॥ अप्रमत्तं प्रमत्तं वा दिवा रात्रावथापि वा । रक्षन्तु सततं सर्वे देवाः शक्रपुरोगमाः ॥ स्त्रीणामविधवानां च द्विजानां सुहृदां तथा । तदा तु पूजा कर्तव्या गीतनृत्यैस्तथोत्सवम्' इति ॥

अथ निष्क्रमणप्रयोगः ॥ जननाद्द्वितीये मासि जन्माहे शुभलग्ने शिशुना सूर्यदर्शनं कारयित्वा चतुर्थे मासि प्रागुक्तवत्तिथ्यादिकं विचार्य भार्यापुत्रयुतोऽभ्यङ्गस्नातो ममास्य कुमारस्यायुःश्रीवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं निष्क्रमणाख्यं कर्म करिष्ये इति संकल्प्य तदङ्गस्वस्तिवाचनाभ्युदयिके ग्रहयज्ञं च प्रागुक्तवत्कृत्वा इन्द्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानानां प्राच्यादिदिशां चन्द्रार्कवासुदेवगगनानां च यथाक्रमं पूजां कृत्वा ब्राह्मणान्भोजयित्वा तैः स्वस्त्ययनं वाचयित्वा सायंसंध्यादिकं कृत्वा शिशुं सुवर्णाभरणैः कृत्रिमाभरणैर्वा यथाशक्त्यलंकृत्य लौकिकाग्निं प्रतिष्ठाप्य जातकर्मवदनादेशदेवताभ्यो हुत्वा शिशुनाऽग्निचन्द्रधेनूनां दर्शनं कारयित्वा वाहनेन मातुलेन धात्र्या वा शिशुं वाहयित्वा भार्यापुत्रवद्ब्राह्मणज्ञातिबान्धवपुरन्ध्रीगणदर्पणपूर्णकलशयुक्तकन्यागन्धपुष्पहरिद्राक्षतदीपमालाध्वजलाजमङ्गलवाद्यघोषयुक्तशाकुन्तादिसुमङ्गलसूक्तपठनपुरःसरं गृहाद्बहिर्गत्वा मन्त्रमुदीरयेत् । स च

मन्त्रः—चन्द्रार्कयोर्दिगीशानां दिशां च गगनस्य च । निक्षेपार्थमिमं दद्मि तेऽमुं रक्षन्तु सर्वदा ॥ अप्रमत्तं प्रमत्तं वा दिवारात्रावथापि वा । रक्षन्तु सततं सर्वे देवाः शक्रपुरोगमाः ॥ इति शिशुरक्षणार्थं सर्वान्देवान्संप्रार्थ्य विष्णुशिवालययोरन्यतरद्वन्धुगृहं वा गत्वा तत्र देवं मङ्गलवाद्यघोषैः पुष्पोपहारादिभिः संपूज्य गोमयाद्यनुलेपितचतुरस्रदेशे धान्यानि निधाय तत्र शिशुमासयित्वा समन्त्रं रक्षां कुर्यात् ॥ तत्र मन्त्रः—त्र्यम्बकमित्यस्य वसिष्ठो मृत्युंजयस्त्र्यम्बकोऽनुष्टुप् । ॐ जूं सः त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । सः जूं ॐ इत्येवंरूपं मृतसंजीवनीमन्त्रं जपन् विभूत्याक्षतैर्वा मूर्ध्नि ललाटे च रक्षां कृत्वा अपूपादिभिर्भूतेशानं गणेशमभ्यर्च्य शिशून्भक्ष्यादिभिस्तोषयित्वाशिषो वाचयित्वा शिशुना देवताप्रणामं प्रदक्षिणत्रयं च कारयित्वा मातुलाद्यासन्नबन्धुगृहं पूर्वं नीत्वा तत्र नीराजनदानोपहारादिभिः शिशुं तोषयित्वा स्वगृहं गत्वा स्विष्टकृदादिहोमशेषं समाप्य कर्मान्ते कर्तव्यं स्वस्तिवाचनं पूर्ववत्कृत्वा ब्राह्मणैराशिषो वाचयित्वा तेभ्यः सुवासिनीभ्यश्च यथाशक्ति दक्षिणां दत्त्वा बन्धुभिः सह भुञ्जीत ॥ कुमार्या अप्येतत्समानम् ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे निष्क्रमणप्रकरणम् ॥

अथ बालोपवेशनम् ॥ अथ प्रसङ्गात्पञ्चममासि कर्तव्य उपवेशनविधिरभिधीयते । तत्र पद्मपुराणे विष्णुधर्मोत्तरखण्डे परशुरामं प्रत्याह पुष्करः—'पञ्चमे च तथा मासि भूमौ तमुपवेशयेत् । तत्र सर्वे ग्रहाः शस्ता भौमो राम विशेषतः ॥ तिथिं विवर्जयेद्रिक्तां शस्तानि शृणु भानि मे । उत्तरात्रितयं सौम्यं पुष्यर्क्षं शक्रदैवतम् ॥ प्राजापत्यं च हस्तश्च शस्त आश्विनमित्रभम्' ॥ अस्यार्थः—जन्मदिनप्रभृति पञ्चमे मासि उत्तरोत्तराषाढोत्तराभाद्रपदामृगशीर्षाश्विनीज्येष्ठारोहिणीहस्तानुराधानक्षत्राणामन्यतमर्क्षे

चतुर्थ्यादिरिक्तातिथीर्विहाय शिष्टेषु शुभतिथ्यादिषु अब्दपूर्तौ वस्त्रधारणवच्छुभग्रहानिचार्य तत्र भौमबलं विशेषेण विचार्य पृथिव्यां बालमुपवेशयेदिति ॥ तत्रेतिकर्तव्यतामाह स एव—'वराहं पूजयेद्देवं पृथिवीं च तथा द्विजः । पूजनं पूर्ववत्कृत्वा गुरुदेवद्विजन्मनाम् ॥ भूभागमुपलिप्याथ कृत्वा तत्र तु मङ्गलम् । शङ्खपुण्याहशब्देन भूमौ तमुपवेशयेत् ॥ अत्र शङ्खवचनं सर्ववाद्योपलक्षणार्थम् । एतदुक्तं भवति—पूर्वोक्तवत्स्वस्तिवाचनं कृत्वा मङ्गलतूर्यादिध्वनौ क्रियमाणे बालं धरण्यामुपवेशयेदिति । तत्र मन्त्रमाह स एव—मन्त्रश्चात्र भवेद्राम तं मे निगदितः शृणु ।—रक्षैनं वसुधे देवि सदा सर्वगतं शुभे । आयुःप्रमाणं सकलं निक्षिपस्व हरिप्रिये ॥ अचिरादायुषस्तस्य ये केचित्परिपन्थिनः । जीवितारोग्यवित्तेषु निर्दहस्वाचिरेण तान् ॥ धारिण्यशेषभूतानां मातस्त्वमधिका ह्यसि । अजरा चाप्रमेया च सर्वभूतनमस्कृते ॥ त्वमेवाशेषजगतां प्रतिष्ठा चाश्रयो ह्यसि । कुमारं पाहि मातस्त्वं ब्रह्मा तदनुमन्यताम्' इति ॥ ततः किंकर्तव्यमित्यत आह स एव—'तस्योपवेशनं कृत्वा भूमौ ब्राह्मणभोजनम् । तत्र कृत्वा ततः कुर्यादुत्सवं पूर्ववद्द्विजः' इति । उत्सवो नीराजनादिः । एतत्कुमार्या अप्युपलक्षणार्थं तथा प्रकृतत्वाद्बालरक्षणत्वाच्चेति ॥ इति बालोपवेशनविधिः ॥

अथान्नप्राशनप्रकरणम् ॥ जयन्तु जगदुद्धारसुमुखा नृहरेर्नखाः । प्रागभूत्प्राशनं येषां प्रत्यर्थिप्राणवायुभिः ॥ अथेदानीमन्नप्राशनविधिरभिधीयते ॥ तत्र तावत्कालनिर्णय उच्यते श्रीधरीये—'व्योमेन्द्रियेन्दौ दिवसे प्रवृद्धे पक्षात्स्थिते बालनवान्नभुक्तिः । खाष्टेन्दुसंख्यात्परतस्तु युग्मे मानेन सौरेण वदन्ति तज्ज्ञाः' इति ॥ तत्रैतदुक्तं भवति—जन्मदिवसादारभ्य पञ्चाशदुत्तरशतदिने प्रवृद्धे गते सति ततः पक्षास्थिते काले प्रथमपक्षे बालनवान्नभुक्तिः कार्या । खाष्टेन्दुसंख्यादिति ।

जन्मदिवसादशीत्युत्तरशतदिनादर्वाक् । ततः परतस्तु सौरमानेन युग्मे अष्टमे दशमे द्वादशे वा मासेऽन्नभुक्तिः स्यात् । तथाच बृहस्पतिः—'पञ्चाशद्दिवसात्त्रिमात्यथात्रिहतपञ्चहात् । अर्वागेवोत्तमा भुक्तिर्मासिन्येऽप्येवमूचिरे' इति ॥ नारदस्तु षष्ठमपि सौरेणोक्तवान् ।—'जन्मतो मासि षष्ठे स्यात्सौरेणोत्तममन्नदम् । संवत्सरे वा संपूर्णे केचिदिच्छन्ति पण्डिताः' ॥ विधिरत्ने—'बालान्नभोजनविधौ गुरुशुक्रमौढ्यं मासप्रयुक्तमशुभं त्वधिमासदोषः । नास्त्येव सावनविधाविह मासि षष्ठे युग्मे च मासि परतः शुभचन्द्रपक्षे' ॥ बालान्नभुक्तिरित्यत्र बालेति पुंशब्दप्रयोगात्कन्यकानामन्नप्राशने न युग्ममासविधिरित्युक्तं भवति । तासां विशेषदर्शनात् । तथाह श्रीपतिः—'षष्ठे मासे प्राशनं दारकाणामन्यस्मिंस्तत्कन्यकानां विधेयम्' । लल्लश्चाह—'षष्ठे मासि विधेयं पुंसोऽन्नं तु स्त्रियोऽन्यस्मिन्' । अत्रान्यस्मिन्नित्यनेन सप्तममासो गृह्यते पञ्चमस्य प्रसङ्गाभावात् । नारदोक्तेन नवममासविधिनापि कन्यकाभुक्तिरुपलक्ष्यते । स्त्रीणां विषये प्रायेण कर्मस्वयुग्मप्राधान्यप्रयोगात् ॥ अतएवाह गर्गः—नरस्यान्नाशने युग्मं स्त्रीणां चान्नाशनेऽयुजम्' इति । [ तथाच माधवीये—'मासस्तज्जननादिकोऽर्कगतिजः षष्ठेऽष्टमे वा शुभः कश्चित्मानसंज्ञितो निगदितः साम्यं तयोरुत्तमम् । बालस्य प्रथमान्नभोजनविधौ' इति । वसिष्ठः—'युग्मेषु मासेषु च षष्ठमासात्संवत्सरे वा नियतं शिशूनाम् । अयुग्ममासेषु च कन्यकानां नवान्नसंप्राशनमिष्टमेतत्' ॥ बृहस्पतिः—'मासि षष्ठेऽथ सौरेण वाष्टमे दशमेऽपि वा । द्वादशे वा परं विद्याद्युग्मेषु शिशुजन्मतः' इति ] ॥ अथ नक्षत्रादिनिर्णयः । श्रीधरीये—'आदित्यतिष्यवसुसौम्यकरानिलाश्विमित्राजविष्णुवरुणोत्तरपौष्णमित्राः । बालान्नभोजनविधौ दशमे विशुद्धे छिद्रां विहाय नवमीं तिथयः शुभाः स्युः' इति । एतानि षोडशनक्षत्राणि बालान्नप्राशने

शुभदानि । तथाह बृहस्पतिः—'पौष्णादितीन्दुहस्ताश्विलाघ्रवायव्यवैष्णवाः । रोहिणीमैत्रतिष्याश्च वरुणश्चोत्तरात्रयम् । श्रविष्ठा तारका ह्येताः षोडशान्नाशने शुभाः' । ज्योतिरर्णवे—'जन्मर्क्षे स्त्रीक्षयं विन्द्यात्कर्मर्क्षे चापि सौख्यकृत् । आधानर्क्षे च बालानां भोजनं रोगनाशनम्' इति ॥ विधिरत्नेपि—'अन्नप्राशनकार्ये तु जन्मभं मृत्युदं भवेत् । शुभं कर्मर्क्षमाधानं विवाहे चान्नभोजने' इति । ज्योतिरर्णवे—'संपत्साधनमित्रेषु क्षेमे परममित्रभे । भोजयेच्छुभवृद्ध्यर्थं कर्माधानर्क्षयोरपि ॥ शेषर्क्षा वर्जिता जन्मविपत्प्रत्यरनैधनाः । जन्मर्क्षं वर्जयेद्विद्वान्विशेषेण विनाशकृत्' इति। [ माधवीये—'आद्ये जन्मनि नव्यशुक्तिवसनालंकारपुण्यैर्विना सर्वं कर्म शुभाशुभं परिहरेद्भुक्तिं नवां चार्कभे । हित्वाभ्यङ्गविधिं निषेधसहितं क्षौरं च शिष्टं शुभं कार्यं चैवमुशन्ति केचिदपरौ जन्मर्क्षयोरन्ययोः'] । नृसिंहस्तु—'जन्मर्क्षे च दिने श्रेष्ठे निशायां न च भोजयेत् । उभयोः शुभदं प्रोक्तं कर्माधानर्क्षयोरपि' इति ॥ ❀ ॥ जन्मभादीनां स्वरूपमुक्तं संग्रहे—'जन्मभं जन्मनक्षत्रं दशमं कर्मसंज्ञितम् । एकोनविंशमाधानं त्रयोविंशं विनाशभम्' इति । दशमे विशुद्ध इत्युत्तरत्र व्याख्यायते ॥ ॥ अथ तिथयोऽभिधीयन्ते—छिद्रामित्यादिना। छिद्राः द्वितीयादशमीव्यतिरिक्ता युग्मतिथयः । तथोक्तं कालनिर्णये—'युग्माश्च तिथयः सर्वा अजधर्मतिथी विना । पक्षच्छिद्रा इति ज्ञेयाः' इति । ताश्च नवमीं च विहाय शेषास्तिथयो बालान्नभोजने शुभदाः । तथाच नारदः—'पक्षयोरुभयोरुक्तं कृष्णे चान्त्यत्रिकं विना । ओजाश्च तिथयः श्रेष्ठा नवमीपर्ववर्जिताः ॥ युग्मेषु दशमी प्रोक्ता द्वितीया चान्नभोजने' ॥ वसिष्ठश्चाह—'विष्टिं च नवमीं चैव पक्षच्छिद्रां तथैव च । वर्जयेत्सर्वयत्नेन भुक्तिमान्भोजनद्वये' ॥ 'पक्षच्छिद्रापवादमाह नारदः—'वर्जितास्वपि भोक्तव्यं चन्द्रे

मित्रनवांशगे' इति ॥ ॥ अथ वारादयो विधीयन्ते—'वारांशकाश्च गुरुशुक्रशशीन्दुजानां मेषालिमीनरहितानि शुभानि भानि ।
भुक्तौ शिशोः शुभकराः परिहृत्य सौम्यं भौमं सितं नवमनैधनसप्तमेषु' । अत्र शशीत्यनेन कृष्णपक्षान्त्यत्र्यंशव्यतिरिक्ते काले
चन्द्रवार उच्यते । अस्मिन्काले तस्य निषिद्धत्वात् । तथाच नारदः—'बुधशुक्रगुरूणां तु वारा बालाशने शुभाः । चन्द्रवारं
प्रशंसन्ति कृष्णे चान्त्यत्रिकं विना ॥ अर्काङ्गारकमन्दानां वाराश्चापि शुभप्रदाः । यदा वाराधिपस्तिष्ठेत्स्वोच्चमित्रगृहे तथा ॥ गुरुणा
बलिना वापि वीक्षितश्च बलान्वितः' । वसिष्ठश्च—'जीवसौम्यसितानां तु द्रेकाणदिवसांशकाः । बालान्नप्राशने शस्ता न चन्द्रा-
र्कार्किजासृजाम्' इति ॥ असृक् भौमः ॥ ॥ अथ राशयोऽभिधीयन्ते—[मेषालिमीनवर्जितानि नव क्षेत्राणि बालान्नप्राशने शुभानि ।
तथोक्तमर्णवे—'गोश्वकुम्भतुलाकन्यासिंहकर्किमृगाः समाः । एते च राशयः शस्ता न मेषझषवृश्चिकाः' । माधवीये—'अष्टौ
भुक्तिषु राशयोऽत्र शुभदा वीणाधरो मध्यमो मीनः सद्ग्रहसंगमेक्षणयुतो ग्राह्योऽन्यथानिन्दितः । कीटाजावशुभौ युतावशुभदैः
शस्ताः शुभस्वांशके द्रेकाणाभ्युदयोपगो हिमरुचिर्मध्याः परस्ताच्छुभाः' इति ]। नृसिंहः—'मेषालिमीना वर्ज्याः स्युस्तथैवाधो-
मुखानि च' । अधोमुखानीति सूर्याधिष्ठितराशय उच्यन्ते । तथाच संग्रहे—'सूर्याधिष्ठितराश्युपक्रमतयाधस्तिर्यगूर्ध्वाननाः' इति ॥
अथ लग्नगोचरमाह—भुक्तावित्यादिना । पूर्वश्लोके दशमे विशुद्धे इत्यनेन लग्नान्नवाष्टमसप्तमेषु क्रमेण स्थितं बुधं भौमं सितं
च वर्जयित्वा शेषाः शुभदा भवन्ति । तथाच बृहस्पतिः—'शुक्रारज्ञाः क्रमाद्याताः सप्तमाष्टमधर्मभे । भोज्यभोक्त्रोर्नवे त्वेते स-
र्वेषां मरणप्रदाः ॥ अनुक्तेऽपि च यत्स्थाने स्थितो जीवचलो ग्रहः । मित्रदृष्टः स्ववर्गे वा स्वतुङ्गे चातिशोभनः ।दशमे विशुद्ध इति ।

सर्वग्रहरहित इत्यर्थः । तथोक्तमर्णवे—'दशमस्थान्ग्रहान्सर्वान्वर्जयेन्मतिमान्नरः । अन्नप्राशनकृत्येषु मृत्युक्लेशभयावहान्' इति । मुहूर्तसंग्रहे—'बुधशुक्रेनजीवाः स्युर्व्ययलमाथकेन्द्रगाः । शुभांशे शीतगुर्भोकुर्दद्युरायुः श्रियं शुभाम्' इति । इनः सूर्यः ॥ ❀ ॥ अथैकेन श्लोकेनाष्टमलग्ननिषिद्धकर्माण्याह—'निधनभवनलग्ने भोजनं पौष्टिकानि क्षितिपतिकुलसेवां सांपरायप्रयोगम् । रथ-तुरगगजेन्द्रारोहणं शस्त्रशिक्षामपि शुभकरमन्यद्वर्जयेज्जीवितार्थी' इति । अस्यार्थः—निधनभवनलग्नं खलग्नादष्टमलग्नं तस्य मृत्युरिति नाम । तत्तु वधनक्षत्रवत्स्वभावादेव मृत्युकृद्भवति । तस्माद्भोजनादीनि शस्त्रशिक्षान्तानि कर्माणि अष्टमराशौ जीवितार्थी पुरुषो वर्जयेत् । अन्यदपि शुभकरं कर्म तत्र वर्जयेदित्यभिप्रायः ॥ कारिका—'अथ पुण्येऽह्नि षष्ठे तु मासेऽन्नप्राशनं भवेत् । कृताभ्यु-दयिकं श्राद्धं दधिमध्वाज्यसंयुतम् ॥ अन्नं तं प्राशयेदन्नपत इत्यादिमन्त्रतः । आजतैत्तिरमांसानां प्राशनं कामयोगतः । [कामयो-गेन वाजादिपक्षोक्तं प्राशयेद्द्विजः ।] अमन्त्रकमिदं कुर्यात्प्राशनं योषितामिति' इति ॥ इदमत्र गृह्यम्—'षष्ठे मास्यन्नप्राशनमाज-मन्नाद्यकामस्तैत्तिरं ब्रह्मवर्चसकामो घृतौदनं तेजस्कामो दधिमधुघृतमिश्रमन्नं प्राशयेत्—अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे इत्यावृतैव कुमार्यै' इति । अस्यार्थः—जन्मप्रभृति षष्ठे मासि न गर्भप्रभृति । जाताधिकारात् । तत्रान्नप्राशनं नाम कर्म कार्यम् । अजस्येदमाजम् । तैत्तिरसाहचर्यान्मांसस्यात्र ग्रहणं न क्षीरदधिघृतानाम् । तित्तिरेरिदं तैत्तिरम् । आजतैत्तिरयोर्व्यञ्जनत्वेनोपदेशो नान्नत्वेन । तथा लोके प्रसिद्धत्वात् । तेनान्नमपि सिद्धम् । घृतसंस्कृत ओदनो घृतौदनः । कुतः । ओदनग्रहणात् । यदि हि घृतमिश्रोऽभिप्रेतः स्यात् घृतं तेजस्काम इत्येवावक्ष्यत् । ततश्च पूर्ववद्व्यञ्ज-

सर्पिषान्नादि मिश्रणम् । घृते नैवेद्यमिव घृतसेके कृते घृतसंस्कृतो भवति नतु घृते श्रपणं, विक्लेदनानुपपत्तेः । अकामसंयोगे दध्यादिमिश्रमन्नं प्राशयेत् अन्नपतेऽन्नस्य न इति मन्त्रेण । अयं मन्त्रः सर्वप्राशनेष्वपि भवति । कुतः । प्राशनसहितत्वान्मन्त्रस्य, प्राशयेदित्यत्र च मन्त्रेणान्नाद्यं प्राशयेदित्यादि । आवृतैव कुमार्या इति । कुमार्यास्त्वमन्त्रकमन्नप्राशनं कार्यमित्यर्थ इति ॥ अत्र स्मृतिरूपेणाहाचार्यः—'षष्ठेऽन्नप्राशनं प्रोक्तं समे मास्युत्तरेऽथ वा । प्राग्वा चतुर्थे तन्मासात्प्राशयन्नो न संचरेत् ॥ दधिमधुघृतमिश्रमन्नं तु मन्त्रवित् । स्वमन्त्रप्राशनादूर्ध्वं प्राशयेदायुषे पिता ॥ जातकर्मादिचूडान्तं स्त्रीणां कार्यममन्त्रकम् । इष्टत्वं तु पुंस्कारिणां चूडाकरणादपि' इति ॥ मार्कण्डेयस्तु—'देवतापुरतस्तस्य धात्र्युत्सङ्गगतस्य च । अलंकृतस्य दद्यादन्नं पात्रे च काञ्चने ॥ कृतप्राशनमथोत्सङ्गाद्धात्री बालं समुत्सृजेत्' इति ॥ अत्र भगवान्—'जन्मप्रभृति षष्ठे स्यान्मासेऽन्नप्राशनं शिशोः । प्रशस्तेऽहनि मौहूर्ते विहिते शोभनेऽपि च ॥ मुहूर्ते ब्राह्मणानन्नदानाद्यैः परिपूज्य च । पुण्याहं वाचयित्वा गन्धपुष्पार्चनादिभिः ॥ उपवेश्यासने शुद्धे प्राङ्मुखं बालमन्तिके । अङ्के वा दधिमध्वाज्यमिश्रमन्नं सुसंस्कृतम् । मन्त्रेणान्नपतेऽन्नस्येत्यादिना प्राशयेत्ततः ॥ यथेष्टं प्राशयेत्पश्चाच्छोधयेच्च मुखं शिशोः । इदं कर्म कुमार्याश्च सर्वं कार्यममन्त्रकम्' इति । अत्र होमपक्षे गर्गः स्म प्राह—'होमपक्षश्चेदत्रापि जातकर्मवदाचरेत् । वृद्धिश्राद्धं तु पूर्वेद्युस्तस्मिन्पक्षे समाचरेत् ॥ उत्तरेद्युस्तु कर्माण्यन्यानि च यथाविधि । होमोपदेशो यत्रास्ति नतु मन्त्रोपदेशनम् । तत्रानादेशहोमाः स्युरिति सूत्रकृतो मतम् ॥ तत्र जातकर्मादिकर्माणि प्राशनादिषु । होमस्यापि विधानेन अनादेशाहुतीर्हुनेत्' इति ॥

अथ जीविकापरीक्षा ॥ जन्तूनां जीविकाः सन्ति बहुधा जन्मकर्मजाः । तन्नामसंस्मृतिर्भूयान्नृसिंह मम जीविका ॥ अथान्नप्राशनानन्तरं जीविकापरीक्षा दर्शिता मार्कण्डेयेन—'अग्रतोऽथ प्रविन्यस्य शिल्पभाण्डानि सर्वशः । शस्त्राणि चैव वस्त्राणि ततः पश्येत्तु लक्षणम् ॥ प्रथमं यत्स्पृशेद्बालस्तेषु भाण्डं स्वयं तदा । जीविका तस्य बालस्य तेनैव च भविष्यति' इति ॥ ❀ ॥ अथ कुमारस्यान्नप्राशनमन्त्रार्थः—अन्नपते इति । हे अन्नपते अन्नाधिष्ठातर्देव, अन्नस्य । कर्मणि षष्ठी । अन्नं नः अस्मभ्यं देहि । कीदृशमन्नम् । अनमीवस्य आरोग्यकरणस्य । शुष्मिणः शुष्मिन्निति बलनाम । तत्करणस्य तद्वतः । उभयत्रापि कर्मणि षष्ठी । एवंभूतमन्नं च तत्प्रदातारं मां च प्रतारिषः प्रकर्षेण वर्धय । किंच नोऽस्माकं संबन्धिनो द्विपदे चतुष्पदे ऊर्जमन्नं बलं वा धेहि इति ॥

अथान्नप्राशनप्रयोगः ॥ पूर्वोक्तानुकूलतिथ्यादौ यजमानो भार्यापुत्रादिभिः सह मङ्गलस्नातो देशकालौ कीर्तयित्वा ममास्य कुमारस्य मातृगर्भमलक्षालनशुद्ध्यन्नाद्यब्रह्मवर्चसतेजइन्द्रियायुर्लक्षणफलसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं अन्नप्राशनाख्यं कर्म करिष्य इति संकल्प्य तदङ्गस्वस्तिवाचनाभ्युदयिके पूर्वोक्तवत्कृत्वा शिशोः कौतुकबन्धनं कृत्वा जातकर्मवल्लौकिकाग्निं प्रतिष्ठाप्य अनादेश-देवताभ्यो हुत्वा पूजोपहारादिभिरभ्यर्चितस्याभीष्टदेवतस्य पुरतः शुभवस्त्रोपरिस्थितमातुरुत्सङ्गे प्राङ्मुखमुपविष्टस्य शिशोः प्रथमान्न-प्राशनं कारयेत् । तत्रायं क्रमः—दधिमधुघृत(क्षीर)मिश्रमन्नं काञ्चनपात्रे निक्षिप्य । अन्नपत इत्यस्य नलकूबरोऽन्नपतिर्बृहती । अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥ इति मन्त्रेण प्रथमकवलं प्राश-

वित्वा पुनस्तूष्णीं यथेष्टं भोजयित्वा मुखं प्रक्षाल्य पूर्वोक्तवज्जीविकां परीक्ष्य स्विष्टकृदादि होमशेषं समाप्य कर्मान्ते कर्तव्यं स्वस्तिवाचनं पूर्ववत्कृत्वा यथाशक्ति ब्राह्मणान्भोजयित्वा तेभ्यो दक्षिणां दत्त्वाशिषो वाचयित्वा स्वयमपि बन्धुभिः सह भुञ्जीत ॥ कुमार्यभेत्याशनं मन्त्रवर्जं सर्वं कुर्यात् ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डेऽन्नप्राशनप्रकरणम् ॥

अथ शिशुरक्षाविधिः ॥ जगद्रक्षाद्दढप्रज्ञ रक्षामुं विजनं जनम् । लक्ष्मीनृसिंह सत्पक्षवीक्षाविक्षिप्तकण्टकम् ॥ अथ शिशुरक्षाविधिरुच्यते कपिलसंहितायाम्—'शिशुसंरक्षणार्थाय भूतग्रहनिवारिणीम् । रक्षां संध्यासु कुर्वीत निम्बसर्षपगुञ्जनैः ॥ फलीकरणसंमिश्रैः करञ्जैरनलंकृताम् । वचां द्वारप्रदेशेषु बालग्रहविमुक्तये ॥ वासुदेवो जगन्नाथः पूतनाभञ्जनो हरिः । रक्षतु त्वरितो बालं मुञ्च मुञ्च कुमारकम् ॥ कृष्ण रक्ष शिशुं शश्वन्मधुकैटभमर्दन । प्रातःसंगवमध्याह्नसायाह्नेषु च संध्ययोः ॥ महानिशि सदा रक्ष कंसारिष्टनिषूदन । यक्षरक्षःपिशाचांश्च ग्रहान्मातृग्रहानपि ॥ बालग्रहान्विशेषेण छिन्धि छिन्धि महाभयात् । त्राहि त्राहि हरे नित्यं त्वद्रक्षाभूषितं शिशुम् ॥ इति भस्माभिमन्त्र्यैव भूषयेत्तेन भस्मना । शिरोललाटाद्यङ्गेषु रक्षां कुर्याद्यथाविधि ॥ मन्त्रसंरक्षणादेव शिशुः संवर्धतेऽन्वहम्' इति ॥ ॥ अथ यदि बालकस्य प्रमादाद्भुवि पतनादिना भीतिरुपजायते तदा पार्थिवं रजः परिगृह्य शिशोः शिरः प्रदक्षिणमावर्त्य 'विष्णुस्ते पूर्वतः पातु' इत्यादिभिर्मन्त्रै रक्षां कुर्यात् । एष रक्षाविधिः शकटभञ्जने नन्दगोपेन भीतोयं शिशुरिति बुद्ध्या यदुनन्दनस्य श्रीकृष्णस्य कृतः ॥ तथाच हरिवंशे—'नन्दोऽङ्कमेवमारोप्य भूरेणुं परिगृह्य च । शिरः प्रदक्षिणं कुर्वन्मन्त्रमेनं जजापह ॥—'विष्णुस्ते पूर्वतः पातु रुद्रो रक्षतु दक्षिणम् । ब्रह्मा तु पश्चिमे पायाचन्द्रो रक्षतथो-

चरम् ॥ उपविष्टं तथा सूर्यः पायाच्चाधश्च वासुकिः । पायादूर्ध्वमधो वत्सं शिष्टाः काष्ठाः समीरणः ॥ स्वस्ति करोतु भगवान्पिनाकी वृषभध्वजः । गावो रक्षन्तु सर्वत्र भूमौ पातु सदाशिवः' ॥ एवमुच्चार्य नन्दस्तु कृष्णं पस्पर्श पाणिना । एष मन्त्रो हि बालानां रक्षार्थं परिकल्पितः' इति ॥ ॥ अथ बालस्य दन्तघर्षणदोषपरिहारोपाय उच्यते मार्कण्डेयपुराणे—'दन्ताकृष्टिः प्रसूतानां बालानां दशनास्थितः । करोति संघर्षमिति चिकीर्षुर्दुःसहागमम्' ॥ दुःसह इत्यलक्ष्मीभृत्योः पुत्रः । तत्पौत्रो दन्ताकृष्टिः । तस्योपशमनं कार्यं सुप्तस्य सितसर्षपैः । शयनस्योपरिक्षिप्तैर्माषैश्च दशनोपरि ॥ सुवर्चलौषधिस्नानात्तथा सच्छास्त्रकीर्तनात् । उग्रकण्टकखड्गास्थिक्षौमवस्त्रविधारणात्' इति ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे शिशुरक्षादन्तपीडोपशमप्रकरणम् ॥

अथाब्दपूर्तिविधिः ॥ अब्दपूर्तिपरिकीर्तितकर्मा बालवेषधृगयं सदय त्वम् । श्रीनृसिंह जगतोऽनुगतार्ति कीर्तिभूषण सहर्षमहार्षीः ॥ अपिच—सर्वतः श्रीशवित्रासतत्राविष्कृतसद्रस । सद्रसप्रभुतावास सर्वस्यान्तः पितर्वस ॥ अयमष्टदलपद्मबन्धश्लोकः ॥ अथ प्राप्तैकवर्षस्य शिशोरब्दपूर्तिरभिधीयते श्रीधरीये—'वर्षान्तजन्मदिवसे रविमासशुद्धे संस्नाप्य शान्तिकरकर्म चिराय कृत्वा । आबध्य हेमकटिसूत्रमथानुकूले लग्ने शिशोर्नवतराम्बरयोगमाहुः' इति । अस्यार्थः—सौरवर्षान्ते जन्मदिवसे 'बालं संस्नाप्य आयुर्वृद्धिकरं कर्म प्रभूतं कृत्वा हेममयकटिसूत्रमाबध्य नवतराम्बरधारणं कारयितव्यम् । तथोक्तं विधिरत्ने—अब्देन सौरेण शिशोः समाप्ते बालं तु संस्नाप्य च जन्मधिष्ण्ये । कृत्वायुषो वृद्धिकरं च कर्म तं धारयेच्छान्तिसुवर्णसूत्रम्' ॥

नृसिंहश्च—'मैत्रेणाद्याब्दजन्मर्क्षे शिशुं संस्नाप्य शास्त्रतः । आबध्य हेमसूत्रं तु राश्यादावनुकूलके ॥ नवक्षौमाम्बरादीनि यथार्हं धारयेत्तदा । हस्तादिभूतनक्षत्राण्यजादित्योत्तराणि च ॥ वसुः पौष्णादिती पुष्यवर्जितानि शुभानि तु । रिक्तापर्वाष्टमी चैव कृष्णे चान्त्यत्रिकं विना । शकुन्यादीनि विष्टिं च वर्ज्या योगाः शुभेतराः ॥ शुभानां वारवर्गाश्च राशयश्च धनुर्विना । श्रेष्ठा नेष्टास्तथा शेषा मकरो मध्यमो भवेत् ॥ लग्ने सर्वे शुभाः श्रेष्ठास्तथा केन्द्रत्रिकोणयोः । चन्द्रः शुभप्रदो ज्ञेयो द्वादशाष्टमभाद्विना ॥ पापाश्चिलामपष्ठस्थाः शुभा वस्त्रस्य धारणे । उच्चमित्रस्ववर्गेषु शुभे केन्द्रत्रिकोणगे ॥ वस्त्रवाहनशस्त्रादिभूषणानि सुसंपदः । सद्गुणस्थे निशानाथे कुर्यात्तच्छोभने दिने ॥ नद्यादिगमने चैव तथा देवादिदर्शने । शिशोर्लीलादि चान्यत्तु वस्त्रधारणवद्भवेत्' इति । न केवलमादिमश्लोकार्धेन प्रथमाब्दपूर्तिविधिरेवोक्तः किंतु प्रत्यब्दमेवानुष्ठेयो वर्षान्तनक्षत्रविधिरपि दर्शितः ॥ तथाह गर्गः—'यस्मिन्दिने सवितरि तन्नक्षत्रदिनं भवेत् । प्रत्यब्दान्ते च नक्षत्रे विधिं वक्ष्ये नृणां परम् ॥ तेनायुर्वर्धते नित्यं बलं तेजः सुखं तथा । पूर्वं जन्मदिनाद्रात्रौ कृत्वा कौतुकबन्धनम् ॥ कृत्वा शान्त्युदकं चैव प्राशयेच्चाभिषेचयेत् । ग्रहशान्तिं समाप्यैवं नक्षत्रादिषु पूजनम्' इति ॥ आदित्यपुराणे—'सर्वैः स्वजन्मदिवसे स्नातैर्मङ्गलवारिभिः । गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः ॥ स्वनक्षत्रं च पितरस्तथा देवः प्रजापतिः । प्रतिसंवत्सरं यत्नात्कर्तव्यश्च महोत्सवः' इति ॥ ब्रह्मपुराणे बृहस्पतिरिन्द्रमाह—'प्रतिसंवत्सरान्त्यर्क्षे वक्ष्ये नृणां विधिं परम् । पूर्वाह्णे चैव जन्मर्क्षे स्नात्वा नद्यां सुरोत्तम ॥ मध्वाज्यदधिसंयुक्तदूर्वा मृत्युंजयेन तु । जुहुयाच्च सहस्रं वा अष्टाविंशतिमाहुतीः ॥ ततोऽपराह्णे संप्राप्ते कृत्वा कौतुकमङ्गलम् । ग्रहपूजां प्रकुर्वीत नक्षत्राधिपपूजनम् ॥ आयुष्यहोमं

कृत्वाथ श्रोत्रियानथ भोजयेत् । दत्त्वा गोभूहिरण्यादि तथा स्वर्णादिनिर्मितम् ॥ बद्ध्वाथ कटिसूत्रं च वस्त्रं च परिधापयेत् ।' इति ॥ सायणीये—'आबध्य कटिसूत्रं च वासः संगृह्य नूतनम् । दूर्वाङ्कुरैस्तथाज्येन चरुणापि पिनाकिनम् ॥ आयुष्यहोमं कृत्वा च तर्पयेत्पितृदेवताः' इति । अत्र कटिसूत्रबन्धनं गृहस्थव्यतिरिक्तविषयम् । गृहस्थस्य निषेधदर्शनात् ॥ तदाह गृहस्थधर्मप्रकरणे आश्वलायनाचार्यः—'यत्किंचित्कुरुते कर्म वैदिकं वाथ तान्त्रिकम् । कटिबन्धेन संयुक्तं तत्सर्वं निष्फलं भवेत् ॥ रौप्यकार्पासिकक्षौमपट्टसूत्रकृतां च वा । वर्जयेत्कर्मकालेषु काञ्चीं विप्रो विशेषतः' इति । एवं च सति ब्रह्मचारिणोऽपि कटिसूत्रनिषेधः प्रसज्येत तस्य कर्मार्हतया विद्यमानत्वान्नायं दोषः । 'कौपीनाच्छादनार्थाय मौञ्जीं कार्पासकीं द्विजः । संभवे त्रिवृतां तावद्वाससी वाहतेपि च' इति तेनैवाचार्येणोपनयनप्रकरणे सूक्तत्वात् । कार्पासकीं मौञ्जीं कार्पासकीं रज्जुमित्यर्थः । तत्रैव गृह्ये मेखलायाः पृथगुपादानात् ॥ ॥अत्रोक्तं आयुष्यचरुहोमविधानमाह शौनकः—'आयुष्यहोमं वक्ष्यामि शौनकोऽहं द्विजन्मनाम् । कुर्यात्रिजन्मनक्षत्रे विषुवे संक्रमे तथा । पौर्णमास्याममायां च ग्रहणे सूर्यचन्द्रयोः ॥ स्नातः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः । अलंकृतः स्वस्तिवाच्य अन्नं दत्त्वा द्विजातये ॥ अथाज्यभागपर्यन्तं कृत्वोपलेपनादिकम् । घृतान्नं जुहुयात्सम्यगवदानस्य संपदा ॥ आनोभद्राः क्रतवो यमित्यृचां दशकेन च । इमं स्तोममर्हत इत्यृचां षोडशकेन च ॥ एकर्चा जातवेदसा हुत्वा स्विष्टकृतं ततः । होमशेषं समाप्याथ ब्राह्मणान्भोजयेत्ततः ॥ स्वस्तिवाच्य द्विजाग्र्यैस्तैर्धेनुं दद्याच्च दक्षिणाम्' इति ॥ इत्यायुष्यहोमः ॥

अथ वर्षविधिरुक्तः संग्रहे—'जन्ममासस्य जन्माहे जन्मवारेन्दुसंयुते । तदलाभे ऋक्षमात्रे कुर्याद्वर्षविवर्धनम्' इति ॥

अन्यच—'तिथिनक्षत्रयोगे सत्यासे नक्षत्रमात्रके । अभिषेकदिने राज्ञो वर्षवृद्धिः प्रशस्यते ॥ अन्येषां जन्मनक्षत्रे क्षीणायुस्त्वन्यथा भवेत् । प्रत्यब्दं जन्मदिवसे वर्षवृद्ध्यभिषेचनम् ॥ वर्धयित्वाथवा कुर्याज्जन्ममासे शुभे दिने । वर्षवृद्ध्यभिषेकादि कर्तव्यमधिके न तु ॥ अधिके मलिम्लुचे न कर्तव्यमित्यर्थः । कृतनित्यक्रियो विद्वान्नवशुक्लाम्बरावृतः ॥ संनिधौ विष्णुदेवस्य लिप्ते गोमयवारिणा । पुण्याहं वाचयित्वा तु गुरुमित्रद्विजोत्तमैः ॥ माङ्गल्यद्रव्यसंभारसंभृताभिनवं घटम् । वक्रबिम्बसमाकारं सत्सूत्रैः परिवेष्टितम् । सरत्नमालिकाम्भोभिः पूरितं सितचन्दनैः । सुतण्डुलैः स्थिरीभूतं चूतपल्लववस्त्रकम् ॥ राजतीं प्रतिमां तत्र मार्कण्डेयमहामुनेः । अथवा पिष्टपीठे तु पैष्टिकीं प्रतिमां ततः । स्थापयेत्प्रणवेनैव यजेत्कुम्भे जलाधिपम् ॥ वरुणं हंसपृष्ठस्थं दक्षिणेनाभयप्रदम् । वामेन नागपाशं तु धारयन्तं स्वरूपिणम् ॥ मौलिनं च महाकायं चिन्तयेत्तमपांपतिम् । एवं संचिन्त्य वरुणं सूक्तैर्वरुणवाचकैः ॥ सितचन्दनपुष्पैश्च धूपदीपनिवेदनैः । राजताष्टदले पद्मे कर्णिकामध्यसंस्थितम् ॥ सौम्यं कुशासनासीनं कुण्डिकाजपमालिनम् । सौम्यं सोमकुलोद्भूतं रूपेणाप्रतिमं भुवि ॥ शुक्लवर्णं च तत्सूक्तैः सोमं संचिन्तयेच्छुभम् । पद्मिनीपत्रसंकाशं वायव्ये गणनायकम् ॥ ग्रहानीशदलाग्रे तु क्षेत्रपं वह्निदिग्दले । मृत्युंजयं स्वमन्त्रेण नैर्ऋत्यदलमध्यके ॥ पूर्वादौ सप्तसप्तैव कृत्तिकाद्यास्तु तारकाः ।—उत्तराषाढानन्तरमभिजित् । त्रींस्त्रींस्तथा ततो राशीन्स्वनाम्ना तु समर्चयेत् ॥ तथा नक्षत्रवत् प्रागादौ पूजयेदित्यर्थः । मेषं धनुर्धरं सिंहं पूर्वतो याम्यगोचरे । मकरं वृषभं कन्यां पश्चिमे मिथुनं घटम् ॥ तुलाधरं चोत्तरस्यामलिं मीनं च कर्कटम् । पथ्यादीनर्चयेद्वाह्ये पूर्वादिषु यथाक्रमम् ॥ षष्ठीं संपूजयेद्यत्नात्साङ्गां सपरिवारकाम् । वस्त्रैराभरणैर्दिव्यैः पुष्पाद्यैश्च

मनोरमैः ॥ आयुर्दात्रीश्वतस्रश्च मातॄः संपूजयेत्ततः । आयुर्दात्रीरायुर्दात्र्यो देवताः । तासां नामान्युत्तरत्र वक्ष्यन्ते । महाभूतानि पञ्चैव ब्रह्मविष्णुमहेश्वराः ॥ मनोबुद्धिरहंकारश्चन्द्रादित्यौ च देवताः । अश्वत्थामादिसप्तैतान्संपूज्य प्रार्थयेद्वरम् ॥—'रत्नगर्भ सुमङ्गल्य चूतपल्लवशोभित । चन्दनाक्षतपुष्पाढ्य पूर्णकुम्भ नमोस्तु ते ॥ आयुःप्रद महाभाग सोमवंशविवर्धन । महाव्रत मुनिश्रेष्ठ मार्कण्डेय नमोस्तु ते ॥ मार्कण्डेय महाबाहो सप्तकल्पान्तजीवित । आयुरारोग्यमैश्वर्यमस्माकं वरदो भव ॥ नववर्षायुषं प्राप्य तपसा महता पुरा ॥ सप्तकल्पं कृतं येन स आयुर्मे प्रयच्छतु ॥ आयुर्देहि यशो देहि श्रियं देहि त्वमेव च । पुत्रान्पौत्रान्प्रपौत्रांश्च देहि मे गणनायक ॥ षष्ठीदेवि नमस्तुभ्यं सूतिकागृहशायिनि । पूजिता परया भक्त्या दीर्घमायुः प्रयच्छ मे ॥ धिषणा वृद्धिमाता च गौरी च शकपूतना । आयुर्दात्र्यो भवन्त्वेता अद्य जन्मदिने मम ॥ क्षित्यब्वायुवियत्तेजोब्रह्मविष्णुमहेश्वराः । मामेव हि सदा पान्तु मार्कण्डायुर्भवाम्यहम् ॥ मनोबुद्धिरहंकारश्चन्द्रादित्यौ तु देवताः । मामेव हि सदा पान्तु चिरजीवी भवाम्यहम् ॥ अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः । कृपः परशुरामश्च सप्तैते चिरजीविनः ॥ सप्तैतान्यः स्मरेन्नित्यं मार्कण्डेयमथाष्टमम् । जीवेद्वर्षशतं सोपि सर्वव्याधिविवर्जितः ॥ द्रोणपुत्र महाभाग रुद्रतेजःसमुद्भव । भवायुर्बलदो मे त्वमश्वत्थामन्नमोस्तु ते' ॥ दैत्येन्द्रकुलसंभूत बले दानक्रियारत । प्रपन्नः शरणं च त्वां दीर्घमायुः प्रयच्छ मे । नारायणांशसंभूत ममाद्य वरदो भव ॥ अञ्जनागर्भसंभूत कपीन्द्र सचिवोत्तम । रामप्रिय नमस्तुभ्यं हनूमन्रक्ष सर्वदा ॥ विभीषण नमस्तुभ्यं रामपादाब्जपूजक । आयुरारोग्यमैश्वर्यं देहि पौलस्त्यनन्दन ॥ जितेन्द्र भरताचार्य सर्वशास्त्रविशारद । शरणं त्वां प्रपन्नोसि कृप मां रक्ष सर्वदा ॥ रेणुकेय महावीर्य

कार्तवीर्य कुलान्तक। आयुः प्रयच्छ मे राम जामदग्न्य नमोस्तु ते ॥ एवं संप्रार्थ्य भक्त्या तान् प्रणमेद्दण्डवत्क्षितौ। भूमिं दीपं बलिं दूर्वां पुष्पं गोरोचनं तथा॥ दर्पणं दधि सिद्धार्थान्घृतं चासादयेत्क्रमात्।—चकारेण सुवर्णमन्नं च सूचितम्। तयोरुत्तरत्र विनियोगदर्शनात्। क्रमादिति वक्ष्यमाणमन्त्रक्रमादित्यर्थः।—ततो रक्षां च रक्षोघ्नैर्द्रव्यैर्मङ्गलसाधनैः। द्विजाः कुर्वन्तु वेदज्ञा वेदमन्त्रैः शुभार्थिनः॥ अग्ने समितिमन्त्रेण नानाद्रव्यसमीक्षणम्। युञ्जन्तीति च मन्त्रेण मूर्ध्नि रोचनमालिखेत्॥ तेजोसीति घृतेनैव तस्मिन् तेनात्मलोचनम्। दधिक्राव्णऋचा दध्ना ललाटे तिलकं लिखेत्॥ दद्याच्छिरसि दूर्वाश्च काण्डान्मन्त्रेण मन्त्रिताः॥ एते रुद्रावयवः सिद्धार्थं शिरसि क्षिपेत्। याःफलिनीऋचा सम्यङ्नमस्कुर्यात्फलोत्तमम्॥ शिरसि प्रक्षिपेत्पुष्पं श्रीश्चमेमन्त्रमन्त्रितम्। आकृष्णेनेति मन्त्रेण दर्पणे मुखदर्शनम्॥ ज्योतिरसीत्यृचा दीपं भूरसीति भुवं स्पृशेत्। यदाबध्नन्नृचा स्वर्णं नमस्कुर्यात्कृताञ्जलिः॥ गन्धवस्त्रमलंकारं गृह्णीयात्तदनन्तरम्। दूर्वां सितां सितां निम्बरोचनां वेणुरोचनाम्। न्यग्रोधशङ्खसिद्धार्थान्पञ्चरत्नानि यं यतः॥ एभिः संवत्सरग्रन्थिबन्धनं समुदाहृतम्। ग्रन्थिबन्धं च कर्तव्यं दीर्घायुत्वेतिमन्त्रतः॥ वर्षवृद्धेरपूर्वत्वादाशीर्वादमनन्तरम्। देवस्य त्वा सरस्वत्या अश्विनावर्ध्यृचापरः॥ आयुष्यमितिसूक्तेन नतद्रक्षांसनन्तरम्। एभिर्मन्त्रैश्च संमन्त्र्य शान्तिसागरखण्डिकाम्। मद्दत्तं सततं सैस्वं दद्याच्छिरसि सादरम्॥ एभी रक्षाकरैर्मन्त्रैर्जन्मर्क्षे योऽभिरक्षितः। रक्षोभूतपिशाचेभ्यो भयं तस्य न जायते। सुवर्णं शतमानं च गुरवे देयमादरात्॥ शतमानप्रार्थना—'शतमान शतायुस्त्वं शतवीर्यः शतेन्द्रियः। अतस्त्वां

पाठा०—१ भूर दीपं फलं दूर्वाः। २ शान्तिसागरखण्डितम्। ३ तस्य दद्यात्।

संप्रयच्छामि शतमायुः प्रयच्छ मे' इति ॥ ❀ ॥ शतमानविधिविशेष उक्तो ब्रह्माण्डपुराणे—'गव्येन भूमिं शकृता जलेन चालिप्य मध्ये सिततण्डुलैश्च । सरोरुहं केसरभूषणाढ्यं सकर्णिकं चाष्टदलं विलिख्य ॥ तस्मिन्हिरण्यं शतमानमात्रं निधाय तस्योपरि संविचिन्त्य । ब्रह्माणमीशं कमलासनस्थमाराध्य गन्धादिभिरादरेण ॥ विप्रं तथा वेदविदं विचिन्त्य संचिन्त्य बुद्ध्या तु समर्चयित्वा । दद्यात्पुराणं शतमानमस्मै संप्रीयतामात्मभूरित्युदीर्य ॥ योऽसौ दानं शतमानं हिरण्यं दद्यादायुः सर्वमेवैति चोक्तम् । अतः कुर्यात्सादरं तत्सम्यक् निले मासे हायने शक्तितो वा' इति ॥ मृष्टान्नैर्भोजयेद्विद्वान्गुरुस्वजनबान्धवान् ॥—स्नात्वा जन्मदिने श्रियं परिहरन्याशोत्वमीशां श्रियं मत्स्यान्मोचयतस्तिलांश्च ददतो दीर्घं भवेज्जीवितम् । सक्तून्स्वादति यस्तु तस्य विपदो यान्ति प्रणाशं चिराद्रुद्रे यस्तु तिलाशिषं न तु भवेज्जन्मान्तरे पण्डितः ॥ एवं संपूजयेद्यस्तु मार्कण्डेयं महामुनिम् । जरासमुद्भवं दुःखं पितनाशादिसंभवम् ॥ विजित्य नियतं कालमपमृत्युं सुदारुणम् । परमायुरवाप्नोति सर्वबाधाविवर्जितः' इति ॥ इति वर्षवृद्धिप्रयोगः ॥ ❀ ॥ अथ भविष्यपुराणोक्तकुमुदादिपूजा—'कुमुदा माधवी गौरी रुद्राणी पार्वती ह्युमा । काली सरस्वती चैव सावित्री ब्रह्मणः प्रिया ॥ मती संज्ञा तथा मेधा तुष्टिः पुष्टिस्तथैव च । नृपडिम्भपरित्राणा जीवन्तीत्येव षोडश ॥ सुवासिनीस्तु तन्नीतैर्गन्धमाल्यैश्च पूजयेत् । शूर्पेष्वयो षोडशसु भक्ष्यादि प्रक्षिपेद्बुधः ॥ तत्संख्याकैश्च शूर्पैस्तु द्रव्याण्याच्छादयेत्तथा । ताभ्यस्तत्प्रीतये दद्यात्तानि चैव यथाक्रमम् ॥ प्रीयन्तां कुमुदाद्या मे बालप्राणविवर्धनाः । बलेन यशसा पुष्ट्या सहायुर्वर्धयन्तु मे । प्रयच्छन्तु सदारोग्यं सौख्यं सौभाग्यमेव च' इति ॥ ❀ ॥ अथ योगविशेषेण फलविशेष उक्तः सुदीपिकायाम्—'जन्म-

र्धयुक्ता यदि जन्ममासे यस्य ध्रुवं जन्मतिथिर्भवेच्च । भवन्ति विद्वत्सु समेषु यावत्सुहृत्सु सन्मानसुखानि तस्य' ॥ शान्तिः शुद्धदीपिकायाम्—'कृतान्तकुजयोर्वारे यस्य जन्मदिनं भवेत् । जन्मर्क्षयोगे संप्राप्ते विघ्नस्तस्य पदे पदे' । कृतान्तः शनिः ॥ अत्र जन्ममासे कर्तव्यमाह—व्यासः—'यो जन्ममासे क्षुरकर्म यात्रां कर्णस्य वेधं कुरुतेऽतिमोहात् । नूनं स रोगी धनपुत्रनाशं प्राप्नोति नूनं वधबन्धनानि' इति ॥

अथ वर्षापनप्रयोगः ॥ वर्षान्तजन्मदिवसे पूर्वाह्णेऽभ्यज्य स्नात्वा शुक्लाम्बरधरो यथाविभवमलंकृतः सोत्तरच्छदे भद्रपीठासन उपविश्य स्वस्तिवाचनद्रव्याण्यासाद्य सुमुखश्चेत्यादिकमुक्त्वा संकल्पं कुर्यात् । तत्रायं क्रमः—देशकालौ संकीर्त्य ममाब्दपूर्तिदिवसे आयुरभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं ग्रहयज्ञदूर्वाहोमायुष्यचरुहोममार्कण्डेयादिपूजाकर्म करिष्यमाणः तदङ्गमङ्कुरार्पणं कौतुकबन्धनं च कर्तुं तदादौ शुद्धिरभ्युदयसिद्ध्यै स्वस्तिपुण्याहवाचनं करिष्य इति संकल्प्य पुण्याहशेषं समाप्य अङ्कुरार्पणं कौतुकबन्धं ग्रहयज्ञं च पूर्वोक्तप्रकारेण कृत्वा गृहस्यैशानदिग्भागे शुद्धस्थलं गोमयेनोपलिप्य रङ्गवल्लिक्रियालंकरणं कारयित्वा तत्र जन्मनक्षत्राधिदेवतां जन्मनक्षत्रं अग्निप्रभृतीन्दिपितॄन् प्रजापतिं च तत्तल्लिङ्गमन्त्रैरुत्तरसंस्थमावाह्य आसनाद्युपचारान्कृत्वा आयुष्यचरुहोमाङ्गभूतं यथाशक्त्यन्नं ब्राह्मणाय दत्त्वाचार्यं वृणुयात् । तत आचार्यो दूर्वाहोमायुष्यचरुहोमौ तन्त्रेण कुर्यात् । यथा—उपलेपनाद्यग्निप्रतिष्ठापनाग्निमूर्तिध्यानान्तं कृत्वा पुनर्देशकालौ निर्दिश्य समिद्द्वयमादाय नक्षत्रे राशौ जातस्यामुकनामधेयस्यायुरभिवृद्धिद्वारा श्रीप० प्रीत्यर्थमनयोर्दूर्वाहोमायुष्यचरुहोमयोर्देवतापरिग्रहार्थमन्वाधानं करिष्य इत्यादिचक्षुषी आज्येनेत्यन्तमुक्त्वा प्रधानदेवतां मृत्युंजयमष्टोत्तरसहस्रा-

प्रोत्तरयतादार्गिशलन्यतमसंख्याकदधिमधुघृताक्तदूर्वाद्रव्येण त्र्यम्बकमन्त्रेण विश्वान्देवान्दशवारं अग्निं षोडशवारं अग्निं जातवेद-समेकवारं चरुद्रव्येण शेषेण स्विष्टकृतमित्यादि सद्यो यस्य इत्यन्तमुक्त्वा व्याहृत्या समिद्ध्यमग्नावाधायोद्देशत्यागौ कृत्वा परिस-मूहनाद्याज्ये दर्भाग्रद्वयक्षेपणान्तं कृत्वा सिद्धान्नमग्निसमीपे निधायाज्येन सह तदन्नं त्रिःपर्यग्निकृत्वा तदुल्मुकमपास्यापः स्पृष्ट्वाज्यो-द्वासनादिस्रुवसंमार्जनान्तं कृत्वा अन्नं पात्रान्तरे निधायाग्नावधिश्रित्याभिघार्योदगुद्वास्याग्न्याज्ययोर्मध्ये नीत्वाज्याद्दक्षिणत आसाद्य पुनरप्यभिघार्याग्यलंकरणाद्याज्यभागान्तं कृत्वा आज्यदधिमधून्येकस्मिन्पात्रे आसिच्य तेनाक्ता दूर्वाः संकल्पितसंख्यया मृत्युंजय-त्र्यम्बकमन्त्रेण जुहुयात् । मन्त्रस्तु—त्र्यम्बकमित्यस्य वसिष्ठो मृत्युंजयोऽनुष्टुप् । ॐ जूं सः त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्स्वाहा सः जूं ॐ मृत्युंजयायेदं नमम इति । तत आयुष्यचरुहोमं कुर्यात् । तत्र मन्त्राः—आनोभद्रा इति दशर्चस्य सूक्तस्य राहूगणो गोतमो विश्वेदेवाः पञ्चाद्याः सप्तमी च जगत्यः षष्ठी विराट् अष्टम्याद्यास्तिस्त्रिष्टुभः । आनो भद्राः क्रतवो यंतु० १० विश्वेभ्यो देवेभ्य इदं इति सर्वत्रोद्देशत्यागौ कुर्यात् । इमं स्तोममितिषोडशर्चस्य सूक्तस्याङ्गिरसः कुत्सोऽग्निः आद्याश्चतुर्दश जगत्यः अन्त्ये द्वे त्रिष्टुभौ । पूर्वोदेवा इत्याद्यास्त्रयः पादा देवदेवत्याः तन्नोमित्रइत्यर्धर्चो लिङ्गोक्तदेवतः (मित्रावरुणादितिसिंधुपृथिवीद्युदेवत्योऽग्निर्वा) इमं स्तोममर्हते जातवेदसे० १६ अग्नय इदं० । जातवेदसे मारीचः कश्यपो जातवेदा अग्निस्त्रिष्टुप् । जातवेदसे० १ अग्नय इदं० । एभिः सप्तविंशतिभिर्मन्त्रैरवदानधर्मेण हुत्वा तत्तद्देवताभ्य इदं नममेत्युद्दिश्य त्यक्त्वा स्विष्टकृदादिहोमशेषं समापयेत् ॥ इति वर्षवृद्धिप्रयोगः ॥ ॥ अथ मार्कण्डेयपूजा । ततो यजमानः उप-

लिप्ते गन्धरङ्ग्लिकयानुरञ्जिते विष्णुमंनिहितप्रदेशे उपविश्य देशकालौ संकीर्त्य ममाब्दपूर्तिदिवसे स्थानसम्यग्भूपाद्यासिग्रहनक्षत्रराशिदिक्पालद्वैनपालप्रीत्यविमनर्धकार्येष्टार्थसिद्ध्यपमृत्युजरावातपित्तश्लेष्मोद्भवरोगादिसर्वबाधाविवर्जितपरमायुःप्राप्तिद्वारा श्रीपर० चन्द्रगहितमार्कण्डेयपूजां करिष्य इति संकल्प्य स्थण्डिलोपरि नवसूत्रवेष्टितं दृढं मृन्मयं रक्तवर्णं कलशं समन्त्रं स्थापयेत्। तत्र मन्त्राः— आकलशेष्वित्यस्य विश्वामित्रः पवमानः सोमो गायत्री। आकुलशेषु०। इमंमेगङ्ग इत्यस्य सिन्धुक्षित्प्रैयमेधो नदीस्तुतिर्जगती। इमं मे गङ्गे०। अनेन पुण्यजलेन पूरयित्वा नवसूत्रेण वस्त्रयुग्मेन चावेष्ट्य। उद्धृतासि वराहेण कृष्णेन शतबाहुना। मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम्। इति मन्त्रेण सप्तमृदो नवपर्नतधातूंश्च प्रक्षिप्य। रुवतिभीम इत्यस्य वैश्वामित्रो रेणुः पवमानः सोमो जगती। रुवति भीमो वृषभस्तविष्यया शृङ्गे शिशानो हरिणी विचक्षणः। आ योनिं सोमः सुकृतं निषीदति गव्ययी त्वग्भवति निर्णिगव्ययी॥ अनेन न्यग्रोधाश्वत्थप्लक्षजम्बूचूतवृक्षत्वचः। प्रनोयज्ञेष्वित्यस्य वसिष्ठो विश्वेदेवास्त्रिष्टुप्। प्रवो यज्ञेषु देवयन्तो अर्चन्द्यावा नमोभिः पृथिवी इषध्यै। येषां ब्रह्माण्यसमानि विप्रा विष्वग्वियन्ति वनिनो न शाखाः। अनेन तेषां पल्लवान्०। गायत्र्या विश्वामित्रः सविता गायत्री। तत्सवितु० अनेन गोमूत्रम्। गन्धद्वारामित्यस्यानन्दकर्दमः श्रीरनुष्टुप्। गन्धद्वारां०। अनेन गोमयं। आप्यायस्वगोतमः पवमानःसोमो गायत्री। आप्यायस्व०। अनेन गोक्षीरं। दधिक्राव्ण इत्यस्य वामदेवो दधिक्रावानुष्टुप्। दधिक्राव्णो०। अनेन दधि। घृतंमिमिक्षे इत्यस्य गृत्समद इध्मायास्त्रिष्टुप्। घृतं मिमिक्षे० इति घृतं। सहिरत्नानीत्यस्य श्यावाश्वः सविता गायत्री। सहिरत्नानि०। अनेन नवरत्नानि। या ओषधीरित्यस्याथर्वणो भिषगोषधयोऽनुष्टुप्। या

ओषधीः० । इति सर्वौषधानि दशमूलानि वा तदलाभे सुवर्णं वा । गन्धद्वारामिति गन्धं । आयनेते परायणे० इत्यक्षतान्पुष्पाणि च निक्षिप्य अष्टदलपद्माङ्कितरजतपीठकुशासनासीनां कुण्डिकाजपमालाधारिणीं राजतीं मार्कण्डेयप्रतिमां च संपाद्य कुम्भोपरि नववस्त्रमाच्छाद्य तदुपरि रजतपीठं निधाय तत्र मार्कण्डेयप्रतिमां प्रणवेन संस्थाप्य कुम्भे वरुणपूजां कुर्यात् । तत्रायं क्रमः। वरुणं हंसपृष्ठगं दक्षिणेनाभयप्रदम् । वामेन नागपाशं च धारयन्तं सुरूपिणम् । मौलिनं च महाकायमपांपतिं वरुणं संचिन्त्यावाह्य नाममन्त्रेणागमनाद्युपचारान्कृत्वा वरुणसूक्तानि जपेत् । स्वस्याशक्तावन्येन पाठयेत् । ततो रजतपीठमध्यस्थप्रतिमायां मार्कण्डेयमावाहयेत् । तत्रायं क्रमः—राजताष्टदलपद्मे कर्णिकामध्ये संस्थितं सोमकुलोद्भवं कुशासनासीनं कुण्डिकाजपमालिनं मार्कण्डेयमावाह्य । [ नत्रैव शुभ्रवर्णं सोमं चावाह्य] दलेषु क्रमेण गणनायकादिदेवताः प्रणवपूर्वकं चतुर्थीविभक्त्यान्वितनमोन्तैस्तत्तन्नाममन्त्रैरावाहयेत् । यथा वायव्यपद्मदले पद्मघनसंकाशाय गणनायकाय नमः । ईशानदले आदित्याय सोमायाङ्गारकाय बुधाय बृहस्पतये शुक्राय शनैश्चराय राहवे केतुभ्यो नमः । आग्नेयदले क्षेत्रपालाय नमः । नैर्ऋत्यदले मृत्युंजयाय नमः । पूर्वदले कृत्तिकाश्लेषान्तसप्तनक्षत्राणि । कृत्तिकाभ्यो नमः रोहिण्यै मृगशीर्षाय आर्द्रायै पुनर्वसुभ्यां पुष्याय आश्लेषाभ्यः । दक्षिणदले मघाविशाखान्तसप्तनक्षत्राणि । मघाभ्यः पूर्वाफल्गुनीभ्यां उत्तराफल्गुनीभ्यां हस्ताय चित्रायै स्वात्यै विशाखाभ्यां । पश्चिमदले अनुराधाद्यभिजित्सहितश्रवणान्तसप्तनक्षत्राणि । अनुराधाभ्यः ज्येष्ठायै मूलाय पूर्वाषाढेभ्यः उत्तराषाढेभ्यः अभिजिते श्रवणाय । उत्तरदले धनिष्ठाभरण्यन्तसप्तनक्षत्राणि । श्रविष्ठाभ्यः शतभिषजे पूर्वाभाद्रपदाभ्यः उत्तराभाद्रपदाभ्यः रेवत्यै अश्विभ्यां भरणीभ्यां । पुनश्च पूर्वदले राशीन्

मेषाय सिंहाय धनुषे । दक्षिणदले वृषभाय कन्यायै मकराय । पश्चिमदले मिथुनाय तुलायै कुम्भाय। उत्तरदले कर्कटकाय वृश्चिकाय मीनाय । एवमेता देवता आवाह्य । पश्चनाहे षष्ठ्यादिदेवताः साङ्गाः सपरिवारा आवाहयेत् । तत्रायं क्रमः—प्रथमतः पूर्वभागे षष्ठीदेवतायै । आग्नेये धिषणायै वृद्धमात्रे गौर्यै शकपूतनायै इति चतस्रो देवताः । दक्षिणदले गौर्यै पद्मायै शच्यै मेधायै सावित्र्यै विजयायै जयायै देवसेनायै स्वधायै स्वाहायै इति दशलोकमातृः । नैर्ऋते पृथिव्यै अद्भ्यः तेजसे वायवे आकाशाय इति पञ्चभूतानि । पश्चिमे ब्रह्मणे विष्णवे महेश्वराय इति तिस्रो देवताः । वायव्ये मनसे बुद्धये अहंकाराय इति त्रीन् । उत्तरे चन्द्रमसे आदित्याय च द्वे । ऐशाने अश्वत्थाम्ने बलये व्यासाय हनुमते विभीषणाय कृपाय परशुरामाय चेति सप्त चिरंजीविदेवताः । एवं देवता आवाह्य मार्कण्डेयादिपरशुरामान्तदेवता आसनादिषोडशोपचारैः संपूज्य कृताञ्जलिः सन् प्रार्थयेत् । तत्र मन्त्राः—रत्नगर्भ सुमङ्गल्य चूतपल्लवशोभित । चन्दनाक्षतपुष्पाढ्य पूर्णकुम्भ नमोस्तु ते ॥ इति कुम्भम् ।—आयुःप्रद महाभाग सोमवंशविवर्धन । महातप मुनिश्रेष्ठ मार्कण्डेय नमोस्तु ते ॥ मार्कण्डेय महाबाहो सप्तकल्पान्तजीवित । आयुरारोग्यमैश्वर्यमस्माकं वरदो भव ॥ नवचर्षायुपं प्राप्य तपसा महता पुरा । सप्तकल्पं कृतं येन आयुष्यं मे स यच्छतु ॥ इति मार्कण्डेयम् ।—आयुर्देहि यशो देहि श्रियं देहि तमेव च । पुत्रान्पौत्रान्प्रपौत्रांश्च देहि मे गणनायक ॥ इति गणपतिम् ।—षष्ठीदेवि नमस्तुभ्यं सूतिकागृहशायिनि । पूजिते परया भक्त्या दीर्घमायुः प्रयच्छ मे ॥ इति षष्ठीदेवीम् ।—धिषणा वृद्धमाता च गौरी च शकपूतना । आयुर्दाव्यो भवन्त्वेता अद्य जन्मदिने मम ॥ इत्यायुर्दात्रीः ।—क्षित्यम्वायुवियत्तेजोब्रह्मविष्णुमहेश्वराः । मामेव हि सदा पान्तु मार्कण्डेयो भयाम्यहम् ॥ इति पञ्चभूतानि

ब्रह्मविष्णुमहेश्वरांश्च ।—मनोबुद्धिरहंकारश्चन्द्रादित्यौ तु देवताः । मामेव हि सदा पान्तु चिरजीवी भवाम्यहम् ॥ इति मनोबुद्ध्यहंकारांश्चन्द्रादित्यौ च ।—द्रोणपुत्र महाभाग रुद्रतेजःसमुद्भव । भवाय वरदो मे त्वमश्वत्थामन्नमोस्तु ते ॥ इत्यश्वत्थामानम् ।—दैत्येन्द्रकुलसंभूत बले दानक्रियारत । प्रपन्नः शरणं त्वां च दीर्घमायुः प्रयच्छ मे ॥ इति बलिम् ।—सांप्रतं वै यद्भविष्यद्यतीतज्ज्ञानमन्यमिन । नारायणांशसंभूत ममाद्य वरदो भव ॥ इति व्यासम् ।—अञ्जनागर्भसंभूत कपीन्द्र सचिवोत्तम । रामप्रिय नमस्तुभ्यं हनूमन्रक्ष सर्वदा ॥ इति हनूमन्तम् ।—विभीषण नमस्तुभ्यं रामपादाब्जपूजक । आपुरारोग्यमैश्वर्यं देहि पौलस्त्यनन्दन ॥ इति विभीषणम् ।-द्विजेन्द्र भारताचार्य सर्वशास्त्रविशारद । शरणं त्वां प्रपन्नोऽस्मि कृप मां रक्ष सर्वदा ॥ इति कृपम् ।—रैणुकेय महावीर्य कार्तवीर्यकुलान्तक । आयुः प्रयच्छ मे राम जामदग्न्य नमोस्तु ते ॥ इति परशुरामम् । एवमेता देवताः संप्रार्थ्य भक्तिपूर्वकं दण्डवत्प्रणम्य ग्रहयज्ञकुम्भे मार्कण्डेयपूजाकुम्भजलमासिच्य तत्रत्यकिंचिज्जलं प्राशयेत् । ततो दैवज्ञाः शुभार्थिनो ब्राह्मणाश्चत्समीपे यजमानस्य ग्रहयज्ञाङ्गाभिषेकं कृत्वा रक्षां कुर्युः । तत्रायं क्रमः—दीपं फलं दूर्वां पुष्पं गोरोचनं दर्पणं दधि सिद्धार्थान् घृतं सुवर्णं अन्नं च यथाक्रमं प्राक्संस्थमुत्तरसंस्थं वासाद्य यजमानेनाग्रे रूपमिति मन्त्रेणासादितद्रव्यसमीक्षणं कारयित्वा गुडान्नि त्र्यां० इति मन्त्रेण पूर्वासादितगोरोचनेन यजमानस्य मूर्ध्नि संलिख्य तेजोसीति मन्त्रेणाचुच्चा तच्चक्षुषी अङ्क्त्वा दधिक्राव्ण्ण इति मन्त्रेण दध्ना ललाटे तिलकं कृत्वा काण्डात्काण्डादिति मन्त्रेणाभिमन्त्रितां दूर्वां शिरसि निक्षिप्य एते रुद्रा वसव इति मन्त्रेण सिद्धार्थान्शिरसि प्रक्षिप्य याःफलिनीरिति यजमानेन फलनमस्कारं कारयित्वा श्रीश्चते इति मन्त्रेणाभिमन्त्रितं पुष्पं शिरसि

प्रक्षिप्य आकृष्णेनेति मन्त्रेण दर्पणे मुखदर्शनं ज्योतिरसीति दीपसमीक्षणं भूरसि श्रेष्ठो रश्मीनां प्राणपाः प्राणं मे पाहि इति भूमिस्पर्शनं यद्वानभभित्यृचा सुवर्णनमस्कारं अन्नपतेऽन्नस्येति मन्त्रेणान्ननमस्कारं च कारयित्वा रक्षोभूतप्रेतपिशाचानां भयनिवृत्यर्थं सितासितदूर्वाः निम्बपत्राणि गोरोचनं न्यग्रोधपल्लवान् सिद्धार्थान्पञ्चरत्नानि च शुद्धवस्त्रे निक्षिप्य ग्रन्थिं कृत्वा दीर्घायुत्वेति मन्त्रेण तस्य दक्षिणहस्ते बध्वा अखण्डितान्सदूर्वान्शुभशाल्यक्षतान्गृहीत्वा देवस्यत्वेति मन्त्रेण सरस्वत्यमीतिमन्त्रेण अश्विनावर्तीति मन्त्रेण आपुष्यं वर्चस्यमिति सूक्तेन नतद्रक्षांसीति मन्त्रेण च तानक्षतानभिमन्त्र्य सदारस्य तस्य शिरसि प्रतिमन्त्रं मन्त्रान्ते प्रक्षिपेयुः। ततो यजमानो गुरवे शतमानसुवर्णं विधिवद्दद्यात्। तत्रायं क्रमः—देशकालौ संकीर्त्य मम दीर्घायुःप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं शतमानदानं करिष्ये इति संकल्प्य शुभस्थलं गोमयेनोपलिप्य तत्र सितासिततण्डुलान्प्रक्षिप्य तन्मध्येऽष्टदलं पद्मं विलिख्य तस्मिन्यथाशक्ति शतमानहिरण्यं निधाय तत्र कमलासनं ब्रह्माणमावाह्य षोडशोपचारैरभ्यर्च्य तथा गुरुभूतं विप्रं ब्रह्मबुद्ध्या समभ्यर्च्य दद्यात्। शतमान शतायुस्त्वं शतवीर्यः शतेन्द्रियः। अतस्त्वां संप्रयच्छामि शतमायुः प्रयच्छ मे ॥ इति मन्त्रेण शतमानं संप्रार्थ्य सगन्धाक्षतं कुशपुष्पोदकं गृहीत्वा वामहस्तेन शतमानं स्पृशन् अमुकगोत्रोऽमुकशर्माहममुकगोत्रायामुकशर्मणे ब्राह्मणायेदं शतमानसुवर्णमग्निदैवत्यं शतायुःकामस्तुभ्यं संप्रददे न ममेति दत्त्वा विधिवद्दक्षिणां दत्त्वा यथाशक्ति गोभूतिलहिरण्यदानादिकं कृत्वा आचार्याय मार्कण्डेयप्रतिमां सदक्षिणां दत्त्वा मौहूर्तिकाभिहिते मुहूर्ते नववस्त्रगन्धमाल्यादि धृत्वा सुवासिनीभिर्नीराजितविग्रहो ब्राह्मणाशिषो गृहीत्वा कुमुदादिपूजां कुर्यात्॥ ॥ तत्रायं क्रमः—देशकालौ संकीर्त्य प्रथमाब्दपूर्तिदिवसे आयुरभिवृद्धियशः-

पुत्रारोग्यसुखसौभाग्यप्राप्तिद्वारा श्रीप० कुमुदादिपूजां करिष्ये इति संकल्प्य षोडशसंख्याकाः सुवासिनीः शुभासनेषूपवेश्य—कुमुदा माधवी गौरी रुद्राणी पार्वती उमा काली सरस्वती सावित्री ब्रह्मप्रिया सती मेधा तुष्टिः पुष्टिः नृपडिम्भपरित्राणा जीवन्ती इति षोडशसंख्याकाः देवतास्तास्वावाह्य गन्धमाल्यादिभिरभ्यर्च्य धूपदीपोपहारान्कृत्वा षोडशसु नवशूर्पेषु यथाशक्तिसंपादितभक्ष्यादीन्प्रक्षिप्यान्यशूर्पैस्तान्युपायनान्याच्छाद्य कुमुदादिस्वरूपाभ्यः संप्रददे नममेति ताभ्यो दत्त्वा—प्रीयन्तां कुमुदाद्याश्च बालप्राणविवर्धनाः। बलेन यशसा पुष्ट्या सहायुर्वर्धयन्तु मे। प्रयच्छन्तु सदारोग्यं सौख्यं सौभाग्यमेव च॥ इति संप्रार्थ्य कर्मान्ते कर्तव्यं स्वस्तिवाचनं पूर्ववत्कृत्वाचार्यादिभ्यो यथाशक्ति दक्षिणां दत्त्वा तान्भोजयित्वा तेभ्य आशिषो गृहीत्वा तान्नमस्कृत्य ग्रहदेवता गुरूंश्च संपूज्य नमस्कृत्य स्वयं हृष्टमना बन्धुभिः सह तिलसक्तुपूर्वकं भुक्त्वा ब्रह्मचारी दिनशेषं नयेत् ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे अब्दपूर्तिप्रकरणम्।

अथ जन्मनक्षत्रकर्तव्यविधिः। जन्मदिवसप्रसङ्गाज्जन्मनक्षत्रे कर्तव्यविधिरभिधीयते। तत्र भगवाञ्शौनकः—'अथ स्वजन्मनक्षत्रे स्नातः शुक्लाम्बरो नृपः। कृतकौतुकबन्धश्च सर्वाभरणभूषितः॥ नक्षत्रदेवतापूजां कुर्याद्गुरुसमन्वितः। आचार्येणैव होतव्यो होमः सर्वत्र भूपतेः॥ स्थण्डिलाद्याज्यभागान्तं कृत्वा सर्वं यथाक्रमम्। दूर्वा घृताक्ता जुहुयादष्टोत्तरशताहुतीः॥ यद्देवताकं नक्षत्रं मन्त्रस्तद्दैवतः स्मृतः। ततः स्विष्टकृदादि च होमशेषं समापयेत्॥ गोभूहिरण्यवस्त्राद्यैर्ब्राह्मणान्पूजयेन्नृपः। तस्मिन्नहनि सर्वत्र देवतायतनानि च॥ यद्दुःखितान्सर्ववर्णान्मोचयेन्नृपतिस्ततः। द्विजान्सर्वानथाभ्यर्च्य तस्मिन्नहनि कारयेत्॥ तुष्टा-

निति शेषः । पूजयित्वा विधानेन पूजनीयान्स्वबान्धवान् ॥ न हिंस्यात्सर्वभूतानि तदहस्तु विशेषतः । मत्र्यं समाचरन्राजा सुखी भवति सर्वदा' इति ॥ ❀ ॥ अत्रापेक्षितनक्षत्रदेवतास्तन्मन्त्रांश्च स एवाह—'शौनकोऽहं प्रवक्ष्यामि होमं नक्षत्रसंज्ञितम् । आयुरारोग्यसिद्ध्यर्थं द्विजानां भावितात्मनाम् ॥ अन्वाधानादिकं कृत्वा आज्यभागावसानकम् ॥ अग्निः प्रजापतिः सोमो रुद्रोऽदितिर्बृहस्पतिः । सर्पाश्च पितरो भगोऽथार्यमा सवितापि च ॥ त्वष्टा वायुस्तथेन्द्राग्नी मित्र इन्द्रोऽथ निर्ऋतिः । आपश्च विश्वेदेवाश्च ब्रह्मा विष्णुर्वसुस्तथा ॥ वरुणोऽजैकपाच्चैव अहिर्बुध्न्यस्तथैव च । पूषाश्विनौ यमश्चैव अष्टाविंशतिरीरिताः ॥ मन्त्रास्तथैषां कथ्यन्ते नक्षत्राणां यथाक्रमम् ॥ अग्नयेऽप्यग्निर्मूर्धेति प्राजापत्यं प्रजापतेः । त्वं सोमासीति सोमाय प्रवःपान्तं रुद्राय च ॥ अदितिर्द्यौरदितिश्च बार्हस्पत्यं बृहस्पतेः । केतुं कृण्वंश्च सर्पेभ्यः पित्र्ये आहंपितॄनिति ॥ अनूक्षरा इत्यर्यम्णे शंनोदेवीर्भगाय च । सवितापश्चातात्सवित्रे त्वष्ट्रे त्वष्टारमग्रजाम् ॥ वायउक्थेभिर्वायव्ये इन्द्राग्नियोर्गीर्भिरेव च । मित्रं वयं च मित्राय इन्द्राय प्रससाहिषे ॥ उदीरतां निर्ऋतये आपो अस्मानपां तथा । विश्वेदेवाश्च विश्वेभ्यो ब्रह्मजज्ञेति ब्रह्मणे ॥ विष्णवे तद्विप्रासश्च उस्रावेदेति वासवे । इमं मे वरुणायेति शंनोदेवी अजैकपात् ॥ अहिर्बुध्न्यदेवतायै अहिर्बुध्न्यउतनःशृणोतु । पूषेमाआशेति पूष्णे अश्विभ्यामश्विनेति च ॥ यमायघृतवद्धविर्मन्त्रेण तु यमाय च । समिदाज्यचरूणां च अष्टाविंशतिमाहुतीः ॥ स्वर्क्षस्य देवतायै तु होमं कुर्यादतन्द्रितः । मासिमासि कृतावृत्तौ वत्सरे वत्सरे तथा ॥ मुञ्चामिस्वेति पञ्चभिश्च सोमेनादित्या बलिनः । ततः स्विष्टकृदाद्ये-

पाठा०—१ एतेषामृक्षमन्त्राणा छन्दर्ष्यादिक मूलनक्षत्रजननशान्तावालोचनीयम् ।

तद्धोमशेषं समापयेत् ॥ दद्याद्धिरण्यं धेनुं च आचार्याय प्रयत्नतः । ब्राह्मणान्भोजयेत्पश्चात्सर्वकामार्थसिद्धये' इति ॥❀॥ विष्णुधर्मोत्तरे पुष्करं प्रत्याह परशुरामः—'स्नानमन्यत्समाचक्ष्व भगवन्पुष्टिवर्धनम् । न तृप्तिमधिगच्छामि तव वाक्यामृतं पिबन् ॥ पुष्करः—जन्मनक्षत्रगे सोमे सर्वौषधिसमन्वितम् । कुम्भं तु पूजितं कृत्वा स्नपनं चैव कारयेत् ॥ स्नातश्चैवार्चयेद्देवं वासुदेवं जगत्पतिम् । नक्षत्रदेवतां चन्द्रनक्षत्रं वरुणं तथा ॥ वाहनायुधपीठाद्यं छत्रं संपूजयेत्तथा । यथोक्तदेवतालिङ्गैर्मन्त्रैश्च जुहुयाद्भृतम् ॥ शक्त्या च दक्षिणा देया ब्राह्मणेभ्यो भृगूत्तम ॥ ततोऽनुलिप्तसुरभिः स्रग्वी विविधभूषणः । तिष्ठेन्मनुजशार्दूल हविष्याशी जितेन्द्रियः ॥ उपवासं विनाप्येतत्स्नानं पुष्टिप्रदं तथा । अलक्ष्मीशमनं धन्यं कलिदुःस्वप्ननाशनम् ॥ सर्वव्याधिहरं पुण्यं पवित्रं पापनाशनम् । मातृस्थानं च जगतां जन्मताराभिधीयते ॥ चन्द्ररूपी च भगवान्पिता विष्णुः प्रकीर्तितः । तस्मात्सर्वप्रयत्नेन जन्मनक्षत्रसंस्थितम् । भक्त्या संपूजयेच्चन्द्रं जन्मर्क्षं च विशेषतः ॥ पूजां सदा चन्द्रमसस्तु कृत्वा जन्मर्क्षसंस्थस्य भृगुप्रधान । कामानवाप्नोति नरस्तु सर्वान्सुखी तथा स्याद्भुवि नष्टपाप्मा ॥ एकमासि द्विजन्मर्क्षे अन्यर्क्षे जन्म चाचरेत् । तस्मिन्नक्षत्रखण्डे तु अन्यखण्डे समाचरेत् ॥ उदयव्यापिजन्मर्क्षे तस्माद्ग्राह्यं तु जन्मतः । संगवव्यापिजन्मर्क्षे तच्च जन्म वरं शुभम् ॥ आयुष्यहोमं कृत्वा च दिगीशानर्चयेद्बुधः । देवांश्च वैदिकान्विप्रान्गुरून्बन्धून्सुहृज्जनम् । प्रणम्य पूजयेद्विप्रान्गन्धमाल्यानुलेपनैः ॥ नवाम्बरधरो भूत्वा युक्तः स्रग्वस्त्रभूषणैः । गुरुप्रणामं कृत्वा च राजा च महिषीरतः ॥ निगलेभ्यो विसृज्याथ मनुजान्निगलैर्वृतान् । अन्यानि पुण्यकर्माणि प्रकुर्वीत यथाविधि ॥ पापकर्म न कुर्वीत यस्माच्छतगुणं भवेत् ॥❀॥ अत्र पार्वणश्राद्धमपि कर्तव्यम् । तथाच चन्द्रिकायां मनुः—'ग्रहणे

च व्यतीपाते नवसस्थे समागते । जन्मर्क्षे ग्रहपीडायां श्राद्धं पार्वणवद्भवेत्' इति ॥ ❀ ॥ अथ जन्मनक्षत्रे सौरवारादियोगे शान्तिविशेष उक्तः शुद्धदीपिकायाम्—'सौरारयोर्दिनयुते देवमृक्षे च काञ्चनम्। जन्मर्क्षे च यदि स्यातां मनोदुःखप्रदायकः ॥ तस्य सर्वौषधिस्नानं गुरुविप्रसुरार्चनम् । मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम् । शताचम्पकमुस्ताश्च सर्वौषधिगणः स्मृतः ॥ यस्य जन्मर्क्षमासाद्य रविसंक्रमणं भवेत् । तन्मासाभ्यन्तरे तस्य रोगक्लेशो धनक्षयः ॥ तगरसरोरुहपत्रे रजनीसिद्धार्थलोध्रसंयुक्ते । स्नानं जन्मनिऋक्षे रविसंक्रान्तौ नृणां शुभदम्' इति ।

अथ जन्मनक्षत्रदिवसकृत्यप्रयोगः । यजमानः कृतनित्यक्रियो गृहस्यैशानदिग्भागे गोमयोपलिप्ते रङ्गवल्लिकयानुरञ्जिते शुद्धस्थले नवमव्रणं मनोहरं सुशुद्धं सूत्रवेष्टितं सुदृढं मृण्मयकलशमाकलशेष्विति मन्त्रेण संस्थाप्य गङ्गादिजलपूरणाद्यभिमन्त्रणान्तं कृत्वा तेनोदकेन स्नात्वा शुक्लाम्बरधरो यथाविभवमलंकृतसोत्तरच्छदे भद्रपीठासने उपविश्य स्वस्तिवाचनद्रव्याण्यासाद्य प्राणानायम्य शुभपुण्यर्थेत्यादिकमुच्चार्य देशकालौ संकीर्त्य मम जन्मनक्षत्रदिवसे ग्रहयज्ञं वासुदेवादिपूजां दूर्वाहोममायुष्यचरुहोमं च कर्तुं तदादौ शुद्धिवृद्ध्यभ्युदयसिद्धिद्वारा श्रीप० स्वस्तिपुण्याहवाचनं करिष्य इति संकल्प्य कृत्वाङ्कुरार्पणं कौतुकबन्धं ग्रहयज्ञं च पूर्वोक्तप्रकारेण कृत्वा वासुदेवादिपूजां कुर्यात् । तत्रायं क्रमः—प्रथमतो जगत्पतिं वासुदेवं जन्मनक्षत्राधिदेवतां चन्द्रजन्मनक्षत्रवरुणं चैताः पञ्चदेवताः स्थण्डिले तत्तन्नाममन्त्रैरावाह्य आसनाद्युपचारान्कृत्वा वाहनायुधपीठछत्राणि संपूज्य आयुष्यचरुहोमाङ्गभूतं यथाशक्त्यन्नं ब्राह्मणाय दत्त्वा होमं कुर्यात् । अथवा स्वस्याशक्तावाचार्येण कारयेत् । तत्र क्रमः—आचार्यो देशकालौ संकीर्त्य

यजमानस्यामुकनक्षत्रेऽमुकराशौ जातस्यामुकनामधेयस्यायुरभिवृद्धिद्वारा श्रीप० तस्य जन्मर्क्षे वासुदेवादिपञ्चदेवतानामाज्यहोमं क-
ल्पोक्तविधिना दूर्वाहोममायुष्यहोमं च तन्त्रेण करिष्यामीति संकल्प्योपलेपनाद्यग्निप्रतिष्ठापनान्तं कर्म कृत्वाग्निं ध्यात्वा पुनर्देशका-
लौ संकीर्त्यास्य यजमानस्य जन्मनक्षत्रदिवसे वासुदेवादिपञ्चदेवतानामाज्यहोमदूर्वाहोमायुष्यचरुहोमेषु देवतापरिग्रहार्थमित्यादि
चक्षुषी आज्येनेत्यन्तमुक्त्वा वासुदेवं नक्षत्राधिपं चन्द्रं जन्मनक्षत्रं वरुणं चैताः पञ्चदेवताः अष्टोत्तरशताष्टाविंशत्यष्टसंख्यान्यतमसं-
ख्याकाज्यद्रव्येण जन्मनक्षत्राधिदेवतामष्टोत्तरशतवारं घृताक्तदूर्वाद्रव्येण विश्वान्देवान्दशवारमग्निं षोडशवारं अग्निं जातवेदसं चैकवारं
चरुद्रव्येण शेषेण स्विष्टकृतमित्यादि सद्यो यक्ष्य इत्यन्तमुक्त्वा समिद्द्वयं न्याहृत्याघाराधाय परिसमूहनाद्याज्ये दर्भाग्रद्वयक्षेपणान्तं
कृत्वा सिद्धान्नमग्निसमीपे निधायाग्नावधिश्रित्याभिघार्योदगुद्वास्याभ्याज्ययोर्मध्ये नीत्वाज्याद्दक्षिणत आसाद्य पुनरभिघारणाद्याज्यभा
गान्तं कृत्वा ॐ जगत्पतये वासुदेवाय स्वाहेति मन्त्रेण वासुदेवं तत्तज्जन्मनक्षत्राधिपं आप्यायस्व समेतु ते इति सोमं पूर्वोक्तजन्मनक्षत्रं
इमं मे वरुणेति मन्त्रेण वरुणं चोद्दिश्यान्वाधानसंख्यया आज्यं हुत्वा तत्तद्देवताभ्य उद्दिश्य त्यक्त्वा । पूर्वोक्तजन्मनक्षत्राधिदेवता-
मन्त्रेणाष्टोत्तरशतवारं घृताक्तदूर्वाहुतीर्हुत्वा उद्देशत्यागं कृत्वा । आनोभद्राइति दशर्चस्य सूक्तस्य राहूगणो गोतमो विश्वेदेवाः पञ्चाद्याः
सप्तमी च जगत्यः षष्ठी विराट्स्थाना अष्टम्याद्यास्तिस्रस्त्रिष्टुभः । आनोभद्राः० १० विश्वेभ्योदेवेभ्य इदं नममेत्युद्देशत्यागौ कु-
र्यात् । इमं स्तोममिति षोडशर्चस्य सूक्तस्याङ्गिरसः कुत्सोऽग्निराद्याश्चतुर्दशजगत्योऽन्त्ये द्वे त्रिष्टुभौ पूर्वोदेवा भवन्त्विति त्रयःपादा देव-
देवत्याः तस्यो मित्रइत्यर्धर्चो मित्रावरुणादितिसिन्धुपृथिवीद्युदेवत्योऽग्निर्वा जगती अन्त्ये द्वे त्रिष्टुभौ । इमं स्तोममर्हते० १६ अग्नय

इदं न मम । जातवेदसे मारीचः कश्यपो जातवेदा अग्निस्त्रिष्टुप् । जातवेदसे० १ अग्नय इदं० । एभिः सप्तविंशतिमन्त्रैरवदानधर्मेण हुत्वोद्दिश्य त्यक्त्वा स्विष्टकृदादिहोमशेषं समापयेत् । ततो यजमानः इन्द्रादिलोकपालान्स्थण्डिले तत्तन्नाममन्त्रैरावाह्यासनाद्युपचारान्कुर्यात् । अत्राचार्य ऋत्विग्भिः सह ग्रहयज्ञाङ्गाभिषेकं कुर्यात् । ततो यजमानः श्वेताहतवस्त्रं धृत्वा गन्धमाल्यादिभिरलंकृतो नीराजितविग्रहो ग्रहदेवतागुरून्नमस्कृत्य कर्मान्ते कर्तव्यस्वस्तिवाचनं पूर्ववत्कृत्वाचार्यादिभ्यो यथाशक्ति दक्षिणां दत्त्वा तान्भोजयित्वा तेभ्य आशिषो गृहीत्वा तान्नमस्कृत्य बन्धुभिः सह भुञ्जीत ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे जन्मनक्षत्रकर्तव्यविधिसहितमब्दपूर्तिप्रकरणम् ॥

अथ चूडाकर्मप्रकरणम् ॥ श्रीयुवतिमस्तकस्फुरदुदारमुक्तामणिं त्रिलोकपरिरक्षणक्षमधुरीणरक्षामणिम् । प्रपन्नजनमानसप्रियवितीर्णचिन्तामणिं नृसिंहमहमाश्रये निखिलदेवचूडामणिम् ॥ अथेदानीमुद्देशक्रमप्राप्तश्चूडाकरणविधिरभिधीयते । तत्र तावत्कालनिर्णयमाह मनुः—'चूडाकर्म द्विजातीनां सर्वेषामेव जन्मतः । प्रथमेऽब्दे तृतीये वा कर्तव्यं स्मृतिचोदनात्' ॥ यमस्तु–'ततः संवत्सरे पूर्णे चूडाकर्म विधीयते । द्वितीये वा तृतीये वा कर्तव्यं स्मृतिचोदनात्' ॥ कारिका–'तृतीये वत्सरे चौलं कुर्वीतास्योत्तरायणे । शुक्लपक्षे शुभर्क्षे तु कृताभ्युदयिकं तथा ॥ यथान्वयं वा केषांचिदुपनीत्या सहेष्यते । सरस्त्यादिवाचयेत्पूर्वमृद्धिपूर्वेषु कर्मसु ॥ एतस्मिन्नेव काले स्याद्व्रतस्नातोपनायनम् । अन्यत्रापि विवाहः स्यादिति सूत्रकृतो मतम्' इति ॥ अत्राह षड्गुरुशिष्यः—'जाताधिकाराज्जन्मादितृतीयेऽब्दे तु चौलकम् । यादृशः कुलधर्मः स्यात्तादृशं चौलकर्म वा ॥

आद्येऽब्दे कुर्वते केचित्पञ्चमेऽन्ये द्वितीयके । उपनीत्या सहैवेति विकल्पः कुलधर्मतः' इति । इदमत्र गृह्यम्—'तृतीये वर्षे चौलं यथाकुलधर्मं वा' इति । अस्यार्थः—कुलधर्मोपदिष्टे वा काले चौलं कार्यम् । जन्मप्रभृति तृतीये वर्षे वा कार्यमिति व्यवस्थितविकल्पः । केषांचिदुपनयनेन सह सर्वत्र इति ॥ अत्र स्मृतिरूपेणाहाचार्यः—तृतीये पञ्चमे वाब्दे चौलकर्म प्रशस्यते । प्राग्वा समे सप्तमे वा सहोपनयनेन वा' इति ॥ अत्र भगवान्—'वर्षे तृतीये बालस्य चौलकर्म समाचरेत् । अथवा पूर्वपुरुषसमाचारवशाद्भवेत् ॥ वदोत्तरायणे पक्षे शुक्ले मौहूर्तसंमते । नक्षत्रगुणसंपन्ने मुहूर्ते च समाचरेत्' इति ॥ श्रीधरीये—'वर्षे तृतीयेऽप्यथ पञ्चमेऽब्दे गतत्रिभागे प्रवदन्ति चौलम् । उद्गतेऽर्के गुरुशुक्रतेजःप्रकाशिते व्योम्नि च शुक्लपक्षे' । अस्यार्थः—तृतीये पञ्चमे वा वर्षे प्राप्ते चौलं वदन्ति । तथाह कश्यपः—'जन्मर्क्षाणां चतुर्विंशात्परतश्चौलमाचरेत् । अथवा पञ्चमे वर्षे सावनेनैव योजयेत्' ॥ बृहस्पतिस्तु—'तृतीयेऽपि शिशोर्गर्भाज्जन्मतो वा विशेषतः । पञ्चमे सप्तमे वापि स्त्रियाः पुंसोऽथवा समम्' । अत्र जन्मतो गर्भतश्चेत्येवमुभयविधिर्मुख्यगौणात्मक इत्याहुः । तथाच नारदः—'जन्मतस्तु तृतीयेऽब्दे श्रेष्ठमिच्छन्ति पण्डिताः । पञ्चमे सप्तमे वर्षे जन्मतो मध्यमं भवेत् ॥ अधमं गर्भतः स्यात्तु दशमैकादशे तु वा' इति । गतत्रिभागे इत्यनेन मतान्तरमुच्यते—तृतीये पञ्चमे वा वर्षे गतत्रिभागे कर्तव्यमिति । तथाह नृसिंहः—'तृतीये पञ्चमे वर्षे गतभागे तृतीयके । आदौ चौलं प्रकर्तव्यमिति केचित्प्रचक्षते' इति ॥ ॥ अथायनमाह श्रीपतिः—'शिशिरपूर्वमृतुत्रयमुत्तरं ह्ययनमाहुरहश्च तदामरम् । भवति दक्षिणमन्यदृतुत्रयं निगदिता रजनी मरुतां च सा' ॥ देवरातश्च—'उत्तरं देवभागः स्याद्दक्षिणं याम्यमुच्यते । देवभागं

गते सूर्ये चूडाकर्म समाचरेत् ॥ अयने चोत्तरे सौम्यं दक्षिणे त्वशुभावहम्' इति ॥ अथ राशिनिर्णयः ज्योतिरर्णवे—'मकरे गर्वसंपत्तिः कुम्भः संतानकारकः । मीने मासि सदा सौख्यं मेषे सर्वार्थसाधनम् ॥ विजयं वृषभे विन्द्यान्मिथुने वंशवृद्धिकृत् । कर्कटे बहुरोगित्वं सिंहे नष्टप्रजो भवेत् ॥ षष्ठे कुलक्षयं विन्द्यात्तुलायां देहनाशनम् । वृश्चिके बन्धुनाशः स्याद्वित्तनाशस्तु कार्मुके' इति ॥ ॥ अथ गुरुशुक्रमौढ्ये निषेधमाह—गुरुशुक्रतेजःप्रकाशिते व्योम्नीति । तथाह बृहस्पतिः—'उत्तरायणगे सूर्ये विशेषात्सौम्यगोलके । अधिमासस्तु निन्द्यः स्यात्संसर्पांहस्पती तथा ॥ गुरुशुक्रौ न दृश्येते यदातिस्फुटमम्बरे । बालवृद्धावयः कालशीले निन्द्यस्तयोर्द्वयोः' इति ॥ अथ जन्ममासं निषेधति व्यासः—'यो जन्ममासे क्षुरकर्म यात्रां कर्णस्य वेधं कुरुतेऽतिमोहात् । नूनं स रोगी धनपुत्रनाशं प्राप्नोति मूढो वधबन्धनानि' इति ॥ अथ पक्षनिर्णयः—शुक्लपक्षे इति । तथाह बृहस्पतिः—'शुक्लपक्षे शुभं प्रोक्तं चौलं कृष्णे शुभेतरत् । अशुभोऽन्त्यत्रिभागः स्यात्कृष्णपक्षे त्रिधाकृते' इति ॥ अथ नक्षत्राणि निर्धीयन्ते—'आदित्यसौम्यवसुरेवणपौष्णतिष्यलाम्राश्विचण्डकिरणेषु दिवा प्रशस्तम् । स्वातीविधातृवरुणोत्तरभानि मध्यान्याहुर्निशास्वथ न च क्षुरकर्म कार्यम्' । चण्डकिरणो हस्तः । अत्र पूर्वार्धेनोत्तमानि नक्षत्राणि दिवाविधिश्चोच्यते । एषु नवसु नक्षत्रेषु चौलमतिप्रशस्तम् । तथाह बृहस्पतिः—'हस्ताश्विविष्णुपौष्णाश्च श्रविष्ठादित्यपुष्यभम् । सौम्यचित्रे नवक्षौरे उत्तमा नव तारकाः' इति । दिवाप्रशस्तमित्यनेन चौलकर्मणो दिवैव कर्तव्यतामाह । तथाच नारदः—'नराणां मज्जनं पुंसः सीमन्तः कर्णवेधनम् । नामकर्मक्रिया चौलं विद्यारम्भोपनायने ॥ दिवाकार्याणि चान्यानि कर्तव्यानि दिवैव हि' इति । [ तथाच माध-

र्णवे—'कृषिं बीजवापं नरेन्द्राभिषेकं सविधा गृहारम्भदेवप्रतिष्ठा। क्रियाः सप्त चौलादिका नामधेयक्रियां च क्षपायां न कुर्वन्ति सन्तः' इति ] ॥ मध्यनक्षत्राण्याह—स्वातीति। एतानि षण्नक्षत्राणि चौले मध्यमानि। शिष्टानि द्वादशनक्षत्राण्यधमानीत्यर्थान्सिद्धम्। तथाह बृहस्पतिः—'त्रीण्युत्तराणि वायव्यं रोहिणी वारुणं तथा। क्षौरे षण्मध्यमाः प्रोक्ताः शेषा द्वादश गर्हिताः ॥ संपदि क्षेममे मित्रे साधके मेऽतिमित्रमे। क्षौरकर्म प्रशस्तं स्याच्छोभनांशगते विधौ ॥ आद्योंशो विपदि त्याज्यः प्रत्यरे चरमोऽशुभः। वधे त्याज्यस्तृतीयोंशः शेषांशा अतिशोभनाः ॥ जन्माष्टमे विधौ याते क्षौरमायुःक्षयाय च। तस्माच्चन्द्रोऽष्टमो वर्ज्यः सर्वथा क्षुरकर्मणि ॥ वैनाशिकाख्यनक्षत्रे अष्टाशीत्यंशकं विना। शिष्टांशाः शुभदाः सर्वे जन्मनीन्दुगतांशकात् ॥ जन्मर्क्षं कर्मनक्षत्रमाधानर्क्षं च वर्जयेत्। सर्वथा क्षौरकर्मादि कृतं चेन्मृत्युतां व्रजेत्' इति। कर्मनक्षत्रं दशमम् ॥ आधाननक्षत्रमेकोनविंशम्। उक्तं चार्णवे—'जन्मत्रये चार्किदिवाकरारवारेऽधिमासे सितजीवमौढ्ये। पक्षद्वये पर्वनिशादिनान्ते क्षौरं यदि स्यात्कुलनाशहेतुः' इति। अत्र वसिष्ठः—'मित्रे परममित्रे च क्षेमे संपदि साधके। आयुष्यं कर्म कुर्वीत प्रशस्ते दिवसे तथ ॥ निधने जन्मनक्षत्रे वैनाशे चन्द्रमोऽष्टमे। विपत्करे वधे क्षौरं प्रत्यरे च विवर्जयेत्' इति ॥ अथ तिथ्यादयोऽभिधीयन्ते—'षष्ठ्यष्टमीप्रतिपदस्तिथयश्च रिक्ता वर्ज्याः शशाङ्कगुरुसोमजभार्गवाणाम्। वारांशकोदयविलोकनमिष्टमाहुः क्षौरे तु कर्मणि न शौक्रमुदाहरन्ति गार्ये'। क्षौरे कर्मणीति। षष्ठ्यष्टमीप्रतिपदः प्रसिद्धाः। रिक्ताश्चतुर्थीनवमीचतुर्दश्यः चौले वर्जनीयाः। तथाह वसिष्ठः—'पक्षच्छिद्रां च नवमीमाद्यां पञ्चदशीं तथा। हित्वा तु तिथयः सर्वाः प्रशस्ताः क्षुरकर्मणि ॥ द्वित्रिपञ्चमसप्तम्यामेकादश्यां तथैव च।

दशम्यां च त्रयोदश्यां कार्यं क्षौरं विजानता' इति। नृसिंहश्चाह—'पञ्चाष्टमी चतुर्थी च नवमी च चतुर्दशी। द्वादशी दर्शपूर्णे-
न्दु प्रतिपच्चैव निन्दिताः ॥ शकुन्यादीनि विष्टिं च वर्जयेत्क्षौरकर्मणि' इति ॥ अथ वारा विधीयन्ते—शशाङ्केति। एषां चतुर्णां
वारांशकोदयाश्च निरीक्षणं च मर्त्ये क्षौरे शुभमाहुः। तथाह वसिष्ठः—'रवेरङ्गारकस्यैव सूर्यपुत्रस्य चैव हि। निन्दिता दिवसाः
क्षौरे शेषाः कार्यकराः शुभाः' ॥ शशाङ्कगुरुसोमजे इत्यत्र शशाङ्कः शुक्लपक्षचन्द्रः। सोमज इत्यनेन शुभसंयुक्तो बुध इति विवक्षि-
तम्। तथाह बृहस्पतिः—'पापग्रहाणां वारांशा निन्दिताः शुभकर्मणि। शुभग्रहाणां वारास्तु पूजिता ब्रह्मणो मतम् ॥ सोमवारः
सिते पक्षे कृष्णपक्षे विगर्हितः। बुधवारोऽशुभः प्रोक्तः पापग्रहयुते बुधे ॥ पापग्रहेषु वाराद्या विप्राणां तु शुभा रवेः। क्षत्रियाणां
क्षमासूनोर्विट्शूद्राणां शनेः शुभाः' ॥ अत्रोक्तः शनिवारविधिः सद्वैश्यशूद्रविषय इत्याह नारदः—'द्रेकाणादि रवेर्युक्तं वि-
प्राणां तु विशेषतः। भौमस्य क्षत्रियाणां तु शनेस्तद्वैश्यशूद्रयोः' इति ॥ माधवीये—'क्षौरेऽपि चौलविहितः समयः समानः
श्रेष्ठा द्विजस्य च रवेरुदयांशवाराः। इन्दोः स्त्रियः क्षितिपतेः क्षितिजस्य सौरेर्विट्शूद्रयोरुशनसो न शुभास्तु शावे' इति ॥ ॥अथ-
राशयोऽभिधीयन्ते—'कन्याङ्गनामिथुनमीनतुलोक्षनक्राः पूज्याः क्रियालिहरिचापधरा जघन्याः। तेऽपि सवीर्यशुभदृष्टियुता
विधेयाश्चौले घटः शुभयुतोऽपि निषिद्ध एव' ॥ कर्की कर्कटः। अङ्गना कन्या। उक्षा वृषभः। नक्रो मकरः। शेषाः प्रसिद्धाः।
क्रियो मेषः। अलिर्वृश्चिकः। हरिः सिंहः। चापधरो धनुः। एते चत्वारो राशयश्चौले निषिद्धाः। एतेपि चत्वारः सवीर्ययुताः।
वीर्यं बलं। तच्च राशीनां शुभग्रहयोगात्संपद्यते। ततः सवीर्ययुताः शुभग्रहदृष्टियुक्ताश्चेद्विधेया इति। कुम्भस्तु शुभग्रहयुक्तोपि

मेस्कारम.

नृसिंहमे.

निषिद्ध एव । तथाह वसिष्ठः—'वृषभश्च कुलीरश्च यमः कन्या तुलाधरः । मकरश्चैव मीनश्च क्षुरकर्मणि पूजिताः ॥ मेषे दुःखी मृगेन्द्रे च वृश्चिके व्यसनं महत् । राजबाधा च धनुषि शुभयुक्ते न दुष्यति ॥ विषशस्त्रजलैर्घोरैः पीड्यते मरणान्वितः । क्षौरे मर्त्यो घटे लग्ने शुभयुक्ते प्रशस्यते' इति । [ तथाच माधवीये—'चौलविधौ व्यसनं मृगराजे रोगभयं क्रियकीटघटेषु । धन्विनि राजभयं शुभयुक्तौ चापहरी च शुभौ विधुरन्ये ]॥ अथ लग्नानुकूल्यं भृगुराह—'कृषिं प्रयाणं क्षौरं च विवाहं प्राशनं तथा । शिशोर्गर्भं च यानं च जन्मराशौ शुभं भवेत् । जन्मलग्ने शुभं क्षौरं मध्ये वर्ज्यं व्ययेऽष्टमे' इति । गर्गस्तु—'जन्मराश्युदये षष्ठे द्वादशे निधने तथा । शत्रुक्षेत्रे च मीने च क्षौरं नैव प्रकारयेत्' इति ॥ अत्र विशेषमाह संग्रहकारः—'कर्तुः षष्ठं त्यजेल्लग्नं क्षौरोद्वाहगतीर्विना । मूर्तिं व्ययं च सर्वत्र एकमित्राधिपादृते' इति॥ अथ लग्नगोचरमाह—'सर्वेऽष्टमे न शुभदाः शुभदं वदन्ति केचित्सितं सितदिवाकरभौममन्दाः । कुर्वन्ति दारभवनेऽप्यशुभानि चौले स्याच्छ्मश्रुदन्तनखकर्मसु सर्वमेवम्' ॥ लग्नाष्टमे सर्वे-ग्रहा न शुभदाः । तथोक्तं ज्योतिषार्णवे—'स्नानं चौलं व्रतं नाम नृपाणामभिषेचनम् । अन्यत्क्षौरेण युक्तं चाशुद्धे रन्ध्रे न कारयेत्' ॥ मतान्तरमाह—शुभदं वदन्ति केचित्सितमिति । तथाह बृहस्पतिः—'अष्टमस्था ग्रहाः सर्वे नेष्टाः शुक्रविवर्जिताः । शुक्रस्तु निधने क्षौरे सर्वसंपत्प्रदः शिशोः' इति ॥ ॥ अत्राष्टमगतग्रहदोषाणामपवादवचनान्याह बृहस्पतिः—'लग्नाद-ष्टमराशीशः केन्द्रगः शुभवीक्षितः । यद्यप्यष्टमगस्योक्तं दोषमाशु व्यपोहति ॥ रन्ध्रेशः स्वांशगः स्वोच्चस्वक्षेत्रोपचयर्क्षगः । अष्टम-स्थस्य दोषोऽयं विनश्यति न संशयः' इति । नारदः—'लग्नाष्टमेशयोर्मध्ये लग्नेशे बलसंयुते । अस्तगे नीचगेंऽशे वा निधनेऽपि

शुभो ग्रहः' इति ॥ ॥ अथ सप्तमगृहस्थितानां शुक्रदिवाकरमन्दभौमानां दोषमाह—सितदिवाकरेत्यादि । तथाह वसिष्ठः—'जामित्रे भास्करे शौरे मृत्युः स्याद्भूमिजे तथा। शुक्रे सौख्यविनाशः स्यान्मन्दभाग्यं शनैश्चरे ॥ त्रिषडायगताः पापाः क्षुरकर्मणि पूजिताः । शेषेषु निन्दिताः प्रोक्ताः स्वोच्चवर्गबलादृते ॥ तस्मात्सम्यक्परीक्ष्यैव कर्तव्यं क्षौरमायुषम्' इति । [ माधवीये—'गेगं लग्नगतः करोति दिनकृच्छस्त्रान्मृतिं भूमिजस्तापं शीतकरो दिवाकरसुतश्चाले विनाशं शिशोः । ते शुक्रेण युताः शशाङ्करहिता मृत्युप्रदाः सप्तमे सर्वेप्यष्टमगा न जातु शुभदाः शुक्रोऽत्र संपत्प्रदः' ॥ ] अथ चौलयोगानाह बृहस्पतिः—'यथोक्तकालाभावे तु यथालाभं बलैः शुभः । योगो दोषहरः कुर्याद्दोषाणामपवादनम् ॥ अथात्र योगं वक्ष्यामि दुर्लभे प्रोक्तलक्षणे । अर्द्धं तद्दोषसंघाततूलवातं लयो दिने ॥ त्रिकोणे केन्द्रगे वापि सत्कर्मनिरते विधौ । गुरुर्वातिबलः प्रोक्तः क्षौरयोगः शुभावहः ॥ गुरुर्भृगुर्वा चन्द्रो वा शुभांशस्थो बलान्वितः । तथोपचयगो लग्नात्क्षौरयोगः शुभावहः ॥ लग्नेन्दुराशिगौ द्वौ द्वौ भवनाथयुतेक्षितौ । भवेत्कश्चिद्बली तत्र चूडायोगोऽप्ययमुत्तमः ॥ मीने शुक्रे च लग्नस्थे भवनाथौ चतुष्टये । गुरौ चायेऽथवा योगः शुभदः क्षुरकर्मणि ॥ घटे सशुक्रे लग्नस्थे बुधे व्ययगते रवौ । त्रिकोणगे गुरौ चन्द्रे चूडायोगोऽप्ययमुत्तमः ॥ मीनमेषवृषे लग्ने ससिते भवगे रवौ । बुधोदये वा योगाः स्युश्चूडाकर्मणि पूजिताः ॥ यमे कर्किणि सिंहे च ससिते मृगुजे बुधे । रवौ भवे व्यये वापि योगः क्षौरे शुभावहः ॥ भवव्ययोदये भानुबुधशुक्रा यदि स्थिताः । चन्द्रे शुभांशगे केन्द्रे चूडायोगः शुभावहः ॥ त्रिषडायगताः पापाः शुभाः केन्द्रत्रिकोणगाः । एको द्वौ वा यथालाभं चूडायोगः शुभावहः ॥ अनिष्टस्थानगो यः स्याद्ग्रहो लग्नेशवीक्षितः । गुरुणा

बलिना दृष्टो मदीष्टस्थानगो भवेत्' इति ॥ एतस्मिन्नुक्तकालेपि सिंहस्थे गुरौ चौलकर्म न कार्यमित्याह गर्गः—'न गुरौ सिंहराशिस्थे सिंहांशकगतेऽथवा । क्षौरमन्नं न कुर्वीत विवाहं गृहकर्म वा' इति । तदेतन्नर्मदोत्तरविषयमित्याह ग्रन्थान्तरे—'नर्मदोत्तरदेशे तु सिंहस्थे देवमन्त्रिणि । शुभकर्म न कुर्वीत निषेधो नास्ति दक्षिणे' इति ॥

अथ मातरि गर्भिण्यां चौलनिषेधः—अन्तर्वत्नी चेन्माता तदा शिशोश्चौलकर्म न कार्यम् । तदाह गर्गः—'पुत्रचूडाकृतौ माता यदि वा गर्भिणी भवेत् । शस्त्रेण मृत्युमाप्नोति तस्मात्क्षौरं विवर्जयेत्' इति । ज्योतिर्नारदः—'सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् । पञ्चाब्दात्प्रागथोर्ध्वं तु गार्भिण्यामपि कारयेत् ॥ यदि गर्भविपत्तिः स्याच्छिशोर्वा मरणं भवेत् । सहोपनीत्या कुर्याच्चेत्तदा दोषो न विद्यते' इति ॥ ❀ ॥ तत्र तावदग्न्यादिनिर्णयमाह चौलकारिकाकारः—'चौलकर्मोपनयने विवाहप्रथमास्तथा । व्रतानि स्नानमित्येषां लौकिकाग्निरिति स्थितिः ॥ पूर्णपात्रनिधानान्तमुपलेपादि पूर्ववत् । व्रीहिपूर्णं शरावं स्याद्यवपूर्णं तथापरम् ॥ माषपूर्णं तथान्यत्स्यात्तिलपूर्णं तथापरम् । एतानि च शरावाणि न्यसेदुत्तरतोऽनलात् ॥ कुमारो मातुरुत्सङ्ग आस्ते प्रत्यग्धविर्भुजः । तथानडुहमन्यस्मिन्शरावे गोमयं क्षिपेत् ॥ शमीपर्णानि चान्यस्मिन्द्वे स्तो मातुः समीपतः । मातुर्दक्षिणतो ब्रह्मा सप्त सप्त च सप्त च ॥ कुशपिञ्जूलिकानां तु गृहीतास्तेऽथवा पिता । कुर्यादाधारपर्यन्तमाज्यसेकादिपूर्ववत् ॥ इदमादि विवाहान्तं नैवेद्याद्याज्यभागकौ । अग्नआयूंषिति त्रिभिः प्रजापतेन इत्यृचा । स्रुवेणाज्याहुतीर्हुत्वा शीतोष्णापस्तदानयेत् । पश्चात्स्थित्वा कुमारस्य शीता उष्णाश्च ता अपः । पाणिभ्यां भाजनेऽन्यस्मिन्युगपन्निनयेदथ ॥ उष्णेन वाय उदकेनेहीत्येतेन तद्भवेत् । एकदेशं गृहीत्वासां नव-

नीतं च ये ततः ॥ दध्नोद्रप्समुपादत्ते नास्ति चेन्नवनीतकम् । प्रदक्षिणं कुमारस्य शिरस्त्रिः क्लेदयेदथ ॥ आरभ्य वामतः कर्णप्रदेशा-त्क्लेदनं भवेत् । सवितेनददितिः केशान्वपत्वित्यादिमन्त्रतः ॥ निदध्यादोषधे त्रायस्वैनमित्यस्य दक्षिणे । केशपक्षे कुमारस्य तदग्र-त्वकुशत्रयम् ॥ पिञ्जूलेषु क्षुर न्यस्य स्वधिते मैनमित्यथ । अवपीडयतीत्यर्थः क्षुरस्ताम्रमयो भवेत् ॥ येनावपदिति छिन्द्याच्छिन्ना-न्याग्रकान्कुशान् । एकीकृत्य शमीपर्णैस्तांश्च मात्रे प्रयच्छति ॥ छेदनं तु सकेशानां पिञ्जूलानां भवेदिह । निदधाति च सा माता-नानडुहगोमये ॥ पूर्ववत्कुशपिञ्जूलनिधानादि समं भवेत् । येन धातेति मन्त्रोयं द्वितीये छेदने भवेत् ॥ तृतीये च चतुर्थे च पिञ्जूलादि समं भवेत् । तृतीये येन भूयश्च चतुर्थे छेदनं त्रिभिः ॥ एवमेवोत्तरे पक्षे त्रिरेव छेदनं भवेत् । यत्क्षुरेणेति मन्त्रेण क्षुरधारां निमार्ष्टि च ॥ आरभ्याग्रत आमूलप्रदेशान्तं निमार्जनम् । शीतोष्णाभिरिति प्रैषेणानुशास्य च नापितम् ॥ शिखा अपि च क-र्तव्यास्तस्य स्वकुलसंस्थया । ततः स्विष्टकृदादि स्यात्कुमार्यां स्यादमन्त्रकम् ॥ व्रीह्यादिपूर्णान्येतानि नापिताय प्रयच्छति' इति ॥ ॥ अथ क्षुरविषये विशेषमाह पशुरुशिष्यः—'क्षुरस्य नित्यं लौहत्वात्ताम्रत्वायेह लौहगीः । गृह्यान्तरेषु बहुषु क्षुरस्ताम्रमयो यतः' इति ॥ ॥ इदमत्र चौलादिविवाहान्तकर्मसाधारणं गृह्यम्—'तृतीये वर्षे चौलं यथाकुलधर्मं वोत्तरतोग्नेर्व्रीहियवमाषतिलानां पृथक्पूर्णशरावाणि निदधाति पश्चात्कारयिष्यमाणो मातुरुपस्थ आनडुहं गोमयं नवे शरावे शमीपर्णानि चोपनिहितानि भवन्ति मातुः पिता दक्षिणत एकविंशतिकुशपिञ्जूलान्यादाय ब्रह्मा वैतानि धारयेत्पश्चात्कारयिष्यमाणस्यावस्थाय शीतोष्णा अपः समानीयो-ष्णेन वाय उदकेनेहीति नाम्नां गृहीत्वा नवनीतं दधिद्रप्सान्वा प्रदक्षिणं शिरस्त्रिरुन्दत्यदितिः केशान्वपत्वाप उन्दन्तु वर्चस इति

दक्षिणे केशपक्षे त्रीणि त्रीणि कुशपिञ्जूलान्यभ्यात्माग्राणि निदधाति—ओषधे त्रायस्वैनं स्वधिते मैनं हिंसीरिति निष्पीड्य लौहेन क्षुरेण प्रच्छिनत्ति—येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान्। तेन ब्रह्मणो वपतेदमस्यायुष्माञ्जरदष्टिर्यथासदिति प्रच्छिद्य प्रच्छिद्य प्रागग्रान्दर्भाञ्शमीपर्णैः सह मात्रे प्रयच्छति तानानडुहे गोमये निदधाति—येन धाता बृहस्पतेरग्नेरिन्द्रस्य चायुषे वपत्। तेन त आयुषे वपामि सुश्लोक्याय स्वस्तय इति द्वितीयं—येन भूयश्चरात्यां ज्योक्च पश्याति सूर्यम्। तेन त आयुषे वपामि सुश्लोक्याय स्वस्तय इति तृतीयं सर्वैर्मन्त्रैश्चतुर्थमेवमुत्तरतस्त्रिः क्षुरतेजो निमृजेत्—यत्क्षुरेण मर्चयता सुपेशसा वप्ता वपसि केशान्। शुन्धि शिरो मास्यायुः प्रमोषीरिति नापितं शिष्यादुष्णशीताभिरद्भिरर्थं कुर्वाणोऽक्षुण्वन्कुशलीकुर्विति यथाकुलधर्मं केशवेशान्कारयेदावृतैव कुमार्य' इति॥ अस्यार्थः—उदगयनेति। अनेन चौलकर्मादीनां कालो विधीयते। उदग्यदा गच्छत्यादित्यस्तदुदगयनं तथा लोकप्रसिद्धेः। आपूर्यमाणस्य चन्द्रमसः यः पक्षस्तथोक्तः स हि मासस्य पक्षस्य च कर्ता। अथवा आपूर्यमाणश्चासौ पक्षश्च आपूर्यमाणपक्षः। स हि चन्द्ररश्मिभिरापूर्यते। शुक्लपक्ष इत्यर्थः। ज्योतिःशास्त्राऽविरुद्धं कल्याणं नक्षत्रम्। चौलकर्मेति चौलस्यैव संज्ञान्तरम्। ननु व्रतादेशानामयं काल इष्यते। स कथं प्राप्नोति। उपनयनातिदेशात्। तर्हि गोदानग्रहणमपार्थकं चौलातिदेशात्। उच्यते—समावर्तनार्थं गोदानग्रहणम्।'गौदानिकं कर्म कुर्वीते'ति कर्मग्रहणं यथा कर्मणोऽन्यनियमं वाग्यमनादिकं निवर्तयति तथा कालमपि नि-

१ यद्यप्यत्र गृह्यप्रथमाध्यायगता १७ सप्तदश्येव चूडाकरणकण्डिकोपन्यस्ताऽथापि गृह्यप्रथमाध्यायस्थाया 'उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे' इति चतुर्थकण्डिकाया चौलादिविवाहान्तसंस्कारसंबद्धत्वादादावत्र तद्विवरण प्रदर्श्यान्यवहितमेव चूडाकरणकण्डिकाऽत्र संगृहीतेति ज्ञेयम्।

वर्तयेत्। तस्माद्गोदानग्रहणम्, यत्र गोदानगन्धोऽप्यस्ति तत्रापि यथा स्यात्। तर्हि समावर्तनग्रहणमेव कार्यम्। उच्यते—लाघवार्थं गोदानग्रहणम्। एके आचार्याः सर्वस्मिन्काले विवाहमिच्छन्ति नोदगयनादिनियमस्तेषां कोऽभिप्रायः। दोषश्रवणात् 'ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छती'ति। अन्ये च लौकिका दोषाः समुत्पद्यन्ते। तेषांग्रहणं किमर्थम्। विवाहस्यानन्तरत्वात्सर्वेषां प्राप्त्यर्थमिति चेत्। तन्न। दर्शनात्सर्वेषां स्युः, यदयं 'विवाहे चतुर्थी'मित्याह। उच्यते—तेषां संबन्धिन्योऽन्तर्वर्तिन्य एता आहुतयो भवन्ति नतु तेभ्यः पूर्वं भवन्तीत्येवमर्थं तेषांग्रहणम्। तर्हि पुरस्ताद्ग्रहणमपार्थकम्। न। प्रयोजनमुपरिष्टाद्वक्ष्यामः। संख्यावचनं किमर्थम्। तत्रैके ब्रुवते—यत्र परिमाणवचनं प्रत्यृचग्रहणं वा नास्ति 'धाता ददातु दाशुष इति द्वाभ्या'मित्यादौ तत्र कथं प्रत्यादेशहोमः स्या-दिति। तदसत्। 'एकमन्त्राणि कर्माणी'ति न्यायात्। अपिच स्वाहाकारान्तैर्मन्त्रैरिति प्रतिमन्त्रं स्वाहाकारः प्राप्तः नच प्रदानार्थः, नच तमतिक्रम्य होतव्यमिति युक्तं वक्तुमस्य विद्यमानायां गतौ। तेन सर्वत्र प्रत्यृचमेव होम इति सिद्धम्। का पुनरस्य गतिः। तत्रैके नियमार्थमित्याहुः। समुच्चयपक्षेऽपि कथं चतस्र एव स्युर्न बह्व्य इति। कथं प्रयोगः। एकैकस्या ऋचोन्ते एकैका आहुतिरिति। तदप्यसत्। प्राधान्येनाहुतिविधिप्रकरणत्वादाहुतिसमुच्चय एव न मन्त्रसमुच्चयः। किमर्थं तर्हीदम्, नियमार्थमेव चतस्र एव स्युरिति। तेनाज्यभागौ न भवतः। तर्हि स्विष्टकृदपि न स्यात्। न। पुरस्तान्नियमार्थं हि पुरस्ताद्ग्रहणं कृतम्। आघारौ तु स्त एव अनाहुतित्वात्। आज्यग्रहणं परिस्तरणविकल्पार्थम्। चतसृभिः चतसृणामेव हि भूत्रे व्याहृतिसंज्ञा कृता। व्याहृतिभिश्च भूःस्वाहेत्यादिभिः। एके आचार्या ऋगाहुतीनां व्याहृत्याहुतीनां च

समुच्चयमिच्छन्ति तेनाष्टावाज्याहुतयः । नैके कांचन । एके आचार्याः काम्याहुतिं नेच्छन्ति । नैके इत्येव वक्तव्ये कांचनग्रहणमृगाहुतीनां न्याहृत्याहुतीनां चायं प्रतिषेधो यथा स्यात् अन्यास्त्वाहुतयो होतव्या इत्येवमर्थम् । किंशब्दस्य सर्वनामत्वात्सर्वनाम्नां च प्रकृतपरामर्शित्वात् तेनानादेशाहुतयः सिद्धाः । अत्र संशयः पूर्वस्य बाध उतोत्कर्ष इति । उत्कर्ष इति ब्रूमः, असमानजातित्वात् । समानजातेरेव हि बाधो विहितः, एष समानजातिधर्म इति तच्छब्दचोदितश्च समानजातिर्भवति, यथा—'अथ सामिधेन्यस्ताः सामिधेन्यः' इति । अत्रच तच्छब्दचोदितत्वान्न बाधोऽपितूत्कर्षः । यथा 'प्रतिप्रस्थाता वाजिने तृतीयः' इत्यत्राग्नीध्रस्योत्कर्षस्तद्वदत्रापि । अपिच संख्यानिर्दिष्टो न पूर्वं बाधते । यत्र तु बाधते तत्र स्थानग्रहणं करोति । यथा—'तृतीयाहुतिस्थाने महाव्रतम्' इति । तस्मादुत्कर्ष इति सिद्धम् ॥ ॥ अथ चौलसूत्रस्यार्थः—कुलधर्मोपदिष्टे वा काले चौलं कार्यम्, जन्मप्रभृति तृतीये वर्षे वा कार्यमिति व्यवस्थितविकल्पः । केषांचिदुपनयनेन सह स्यात् इति । प्रणीताप्रणयनोत्तरकाले उत्तरतोऽग्नेर्व्रीहियवमाषतिलैः पृथक्पूर्णानि शरावाणि निदधाति स्थापयति । पृथग्ग्रहणं द्रव्यभेदार्थं पृथक्पूरयित्वा निदध्यादिति । अन्यथा समासोपदेशान्मिश्रितानां पूरणं स्यात्, यथा—'सर्पिर्मधुनी हिरण्यनिकायं' इत्यत्र मिश्रितानां प्राशनम् । अथवा सत्यपि समासोपदेशे यथा—'कामं तु व्रीहियवतिलै'रित्येकं भवति एकेन कृतार्थत्वात्, एवमिहाप्येकं द्रव्यं प्रसज्येत तन्निवृत्त्यर्थं पृथग्ग्रहणम् । कथम्। पृथग्भूतानां सर्वेषां द्रव्याणां पूर्णशरावाणि निधीयेरन्निति । अग्नेः पश्चात्कारयिष्यमाणः कुमारः, तत्प्रयुक्तं हि चौलम्, एवंच कृत्वा संस्कारकर्मसु व्यवायपरिहारेषु कार्येषु कुमारोऽन्तरतम इति दर्शितं भवति । मातुरुपस्थे उत्सङ्गे आस्ते। आनडुहं गोमयं नवे शरावे

उपनिहितं भवति । शमीपर्णानि चान्यस्मिन्नेव शरावे उपनिहितानि भवन्ति । मातुर्दक्षिणतः पिता एकविंशतिकुशपिञ्जूलान्यादाय आस्ते । मातुर्ग्रहणं मातुःसकाशाद्दक्षिणतो यथा स्यादग्नेर्दक्षिणतो माभूदिति । एतानि कुशपिञ्जूलानि ब्रह्मा वा धारयेद्यद्यस्ति सः । आघारान्तं कृत्वा पूर्वोक्ता आहुतीर्हुत्वा कुमारस्य पश्चिमदेशे स्थित्वा शीतमुदकमुष्णं चोदकमुभाभ्यां पाणिभ्यां गृहीत्वा अन्यस्मिन्पात्रे युगपन्निनयति उष्णेनेति मन्त्रेण । समित्येकीभावे । ननु दक्षिणाङ्गकारितया भाव्यं, कथमुभाभ्यां पाणिभ्यामिति । उच्यते–अनियमे प्राप्ते नियमार्था सा परिभाषा ननु दक्षिणाङ्गविधायिका । तासामपामेकदेशं गृहीत्वा नवनीतं च गृहीत्वा तदभावे दधिद्रप्सं वा गृहीत्वा प्रदक्षिणं शिरस्त्रिरुन्दति क्लेदयति मन्त्रेण । मन्त्रार्थश्चिरुक्ता । तासांग्रहणं समानीतानां ग्रहणार्थम् । इतरथा समानयनस्य शीतोष्णाभिरद्भिरर्थमित्यत्र कृतार्थत्वात्तासांग्रहणमेव न स्यात्, गृहीत्वेत्यस्य च नवनीतेनैव संबन्धः स्यात्, तस्मिंस्तु सति आपो नित्याः नवनीतदधिद्रप्सयोश्च विकल्पः सिद्ध्यति । दक्षिणे इति । दक्षिणग्रहणं विस्पष्टार्थम् । तस्मिन्केशपक्षे त्रीणित्रीणि कुशपिञ्जूलानि कुमारस्याभ्यात्मायाणि स्थापयति मन्त्रेण । वीप्सा बह्वर्था । स्वधिते इति । अनेन मन्त्रेण लौहेन क्षुरेण तानि कुशपिञ्जूलानि निष्पीडयति । तेषु क्षुरं स्थापयतीत्यर्थः । लोके क्षुरो लोह एव प्रसिद्धः । अतोत्र तस्याऽवाच्यत्वाल्लोहशब्दस्ताम्रे वर्तते, शास्त्रान्तरे विहितत्वाच्च । लोके लोहशब्दश्चायं रजतादिष्वपि वर्तते अत्र तु ताम्रे । तथा दृष्टत्वात् । प्रच्छिद्येति । ततोऽनेन मन्त्रेण तेनैव क्षुरेण प्रच्छिनत्ति । प्रोऽनर्थकः । अनभिप्राय इत्यर्थः । अन्ये क्षिप्रार्थ इत्याहुः । प्रच्छिद्यप्रच्छिद्येति वीप्सा द्विर्वचनं यो यत्र धर्म उपदिश्यते स सर्वेषु छेदेषु यथा स्यादिति । प्रागग्रान्कृत्वा शमीपर्णैः सहैकीकृत्य मात्रे प्रयच्छति

ददाति । तानसावानडुहे गोमये निदधाति स्थापयति । नात्र प्रागग्रतानियमः । संख्यावचनं मन्त्रान्तरप्रदर्शनार्थं मन्त्रमध्येपीति-कारो विधत्त इत्युक्तम् । कुशपिञ्जूलनिधानस्याभ्यात्मविधानार्थं भवितुमर्हति । अभ्यासस्य त्रीणित्रिणीति वीप्सयैव सिद्धत्वात् मन्त्रैस्त्रिभिर्मन्त्रैश्चतुर्थवारं छिनत्ति । यथा दक्षिणे केशपक्षे एवमुत्तरेपि केशपक्षेऽत्र कुर्यात्त्रिः । त्रिरिति परिसंख्येयं उत्तरे केशपक्षे त्रिरेव न चतुर्थमिति । ततः क्षुरधारां त्रिर्निमृजेच्छोधयेन्मन्त्रेण यत्क्षुरेणेति । निमार्जनमनुमार्जनम् । 'न्यवौ विनिग्रहार्थीया' वितिवचनात् । नापितं शिल्पिनं शिष्यात्प्रेषयेत् प्रैषेण, शीतोष्णाभिरित्यादिना प्रैषेण प्रेषयेत्। कुशलीकरणवचनं विपरीतलक्षणया वापने वर्तते येन विहितो यं मुण्डयति । इति हि श्रूयते 'एकशिखस्त्रिशिखः पञ्चशिखो वा' इति बोधायनः। पूर्वशिखः परशिख इति कुलधर्माः । तेषु यो यस्य कुलधर्मस्तदनुरोधेन तस्य केशनिवेशान्केशसंनिवेशान्कारयेत् । वेषानित्यपिपाठे स एवार्थः । ततः स्विष्टकृदादिहोमशेषं समापयेत् । आवृता अमन्त्रकमित्यर्थः । कुतः येनान्यत्र आवृतेत्युक्त्वा तूष्णीमित्याह 'अपरया द्वारा नित्या-ऽऽवृता सदोद्वार्ये चाभिमृश्य तूष्णीं प्रतिप्रसर्पन्ती'ति । नैतदेवम् । एवकारोऽत्रावधारणार्थः, आवृत् तत्रमेव भवति न मन्त्र इति । तेनावृतेत्यस्य तूष्णीमित्ययमर्थ इति सिद्धम् । एवंचेच्छेषः अमन्त्रकं होमः प्राप्नोति । इष्टमेव । न एतदिति केचिदाहुः । अन्ये होमो न भवतीत्याहुः । अमन्त्रकस्य होमस्य कचिदप्यदृष्टत्वात् । ननु 'तूष्णीं द्वितीये उभयत्रे'त्यत्र दृष्ट इति शङ्का न कार्या । तत्रापि प्रजापतये स्वाहेति मन्त्रोस्त्येवेति ॥ ॥ अथ व्रीह्यादिशरावस्थापने कारणमाह स्मृतिरूपेणाचार्यः—'अच्छेद्यत्वाद-पक्वानामोषधीनां द्विजातिभिः । निधाय तत्र पात्राणि व्रीह्यादीनां चतुस्तथा ॥ केशानां सहजातानामोषधित्वं निगद्यते । एतां

शुष्का छेत्सीति बीजं दृष्ट्वा स्मरेत्तदा' इति ॥ शीतोष्णोदकद्वयग्रहणे कारणमाह स एव—'भूमेरौष्ण्याच्च शैत्याच्च निखिलौ-षधयस्त्विह । पर्यन्ते परिपच्यन्ते पावकस्य जलस्य च ॥ इति यस्मात्ततस्तावदुष्णेनेत्युच्चरन्मनुम् । उष्णं शीतोदके सिक्त्वा केशमूले पिनोन्दति' इति ॥ दधिद्रप्सोपादाने फलमाह स एव—'बालस्य वर्चोवृद्ध्यर्थमेष्यल्लोम्नां च वृद्धये । प्रदक्षिणं त्रिरुन्दति दधि-द्रप्सेन तच्छिरः ॥ स्वधितेर्शौषधीनां च प्रशंसार्थमुदाहृतः । ओषधेरिति मन्त्रोयं स्वरक्षार्थं च गद्यते ॥ लोम्नां संच्छेदनादायुः क्षीयते तद्विवृद्धये । मन्त्राः प्रव्याहृता येनावपदित्यादयस्तथा ॥ शमीमिदर्भैपिञ्जूलैर्मिश्रयित्वा शिरोरुहान् । छिनत्ति प्रतिमन्त्रेण तासां दम्यत्तसिद्धये' इति ॥ कुमारीविषये विशेषमाह स एव—'हुतकृत्यं तु पुंवत्स्यात्स्त्रीणां चूडाकृतावपि' इति ॥ ॥ अत्र भ-गवाञ्शौनकः—'पूर्वेद्युराभ्युदयिकं श्राद्धं कृत्वा परेऽहनि । स्नातं बालमलंकृत्य पुण्याहं वाचयेद्द्विजैः ॥ ततः कौतुकमाबध्य मुहूर्ते शोभनेऽनलम् । प्रतिष्ठाप्योत्तरे तस्माद्दर्भान्संस्तीर्य तेष्वथ ॥ नूतनानि शरावाणि चत्वारि व्रीहिभिर्यवैः । माषैस्तिलैश्च प्रत्येकं पूरितान्येकशः क्रमात् ॥ प्राक्संस्थं सादयेत्तत्र यवालाभे तु तत्समैः । व्रीहिभिः पूरयेत्पात्रं प्रत्यग्देशे ततोऽनलात् ॥ तस्योत्तरे बालकृतः समीपे जननी शिशोः । अङ्केन बिभ्रती पुत्रमासीत प्राङ्मुखी सती ॥ तस्याः पुरस्ताद्गोश्च पश्चादानडुहं शकृत् । अस्पृ-ष्टभूमि निन्यस्य शरावे सादयेत्ततः ॥ शमीपर्णानि चान्यस्मिन्शरावे न्यस्य भूतले । तत्रैव सादयेद्देशे शकृत्पात्रस्य पार्श्वतः ॥ ततः कुमारस्य पिता हस्ते बिभ्रत्कुशाङ्कुरान् । एकविंशतिमासीत शिशोर्मातुश्च दक्षिणे ॥ पितुरन्यो भवेच्चाथ पक्षेऽसिंश्चौलकृत्ततः ।

पाठा०—१ आसीरप्रत्यङ्मुखी सती ।

अग्रत्वेन हि यो विप्रो धारयेद्वा कुशाङ्कुरान् ॥ असिन्पक्षे पितैवास्तु कर्ता चौलस्य कर्मणः । अत्रैव समये कुर्यात्क्षुरस्यापि परिग्रहम् ॥ अन्वाधानाद्यनूयाजनिधानान्तं पुरस्तनम् । तन्त्रं कृत्वा निषण्णेन दक्षिणे शिशुनात्मनः ॥ अन्वारब्धो विधायेध्मनिधानादिषु शेषितम् । पुनः कृत्वा वाज्यभागौ प्रधानाहुतिमाचरेत् ॥ तत्राग्नआयूंषीत्याद्यैर्हुत्वा मन्त्रैस्त्रिभिः पुनः । प्रजापतेनत्वदृचा व्याहृतित्रितयेन च ॥ व्यस्तेनादौ समस्तेन क्रमेण जुहुयादथ । बालस्य प्रत्यगासित्वा शीतोष्णे वारिणी पृथक् । पात्रद्वयस्थे आसिक्ते हस्ताभ्यामन्यभाजने । उष्णेनवायवित्यादिमन्त्रेण स्थाप्य तत्पुनः ॥ नवनीतेन दध्ना वा संमिश्रीकृत्य पाणिना । समादायादितिः केशान्वपत्वित्यादिमन्त्रतः ॥ शिरोऽस्य वामकर्णान्तमारभ्य त्रिः प्रदक्षिणम् । उन्देत्प्रत्युन्दनं मन्त्रं पुनःपुनरुदीरयेत् । दक्षिणे केशपक्षेऽथ बालस्य त्रीन्कुशाङ्कुरान् । बालाभिमुखपर्यन्तान्पठित्वा मन्त्रमोषधे । त्रायस्वैनमिति न्यसेदन्योन्यसात्पृथक्कृतान् ॥ उच्चार्य मन्त्रं स्वधिते मैनं हिंसीरिति क्षुरम् । संधाय साङ्कुरैः केशैस्तयेनावपदादिकम् ॥ यथासदितिपर्यन्तं मन्त्रमुच्चार्य खेलिकम् । प्रच्छिद्य तान्छमीपर्णैः संयोज्य च कुशाङ्कुरान् ॥ केशान्प्राग्लूनान्बालस्य तस्य मातुः करे न्यसेत् ॥ सा च तान्निहितान्सर्वान्छकृत्यानडुहे सह ॥ अनेन विधिना कुर्याद्द्वितीयं केशकृन्तनम् । मन्त्रस्तु येन धातादिः कृन्तनेनैव गम्यते ॥ पुनस्तथैव कुर्वीत तृतीयं केशकृन्तनम् । मन्त्रस्तु येनभूयश्च तत्रं पूर्ववदाचरेत् ॥ पूर्वोक्तमन्त्रत्रितयं क्रमेणोपसमाचरन् । चतुर्थकृन्तनं कुर्यात्सावधानमतन्द्रितः ॥ एवमुत्तरतः केशपक्षेपि छेदनत्रयम् । कुर्यादादित आरभ्य न चतुर्थं समाचरेत् ॥ मन्त्रं तु यत्क्षुरेणेति प्रक्रान्तं समुदीर्य तु । क्षुरस्य धारामुपरि प्रारभ्याधः परामृशेत् ॥ मन्त्रं शीतोष्णाभिरिति प्रक्रान्तं समुदीर्य च । वप्तारमनुशिष्यैनं मन्त्रार्थं चावबोध-

येत् ॥ बधाय तोयैः शीतोष्णैः पूर्वसेकावशेषितैः । बालस्य सकलान्केशानार्द्रीकृत्वार्द्रपाणिना । वंशाचारक्रमोपेतां शिखां कृत्वा वपेन्छिरः ॥ अथोप्तकेशं स्नातं तमुपवेश्य यथापुरा । आरभ्य स्विष्टकृद्धोममूर्ध्वतन्त्रं समाचरेत्' इति ॥ ❀ ॥ एतच्चौलहोमेऽग्निनिर्णयमाह कारिकाकारः—'चौलकर्मोपनयने विवाहप्रथमास्तथा । व्रतादिस्नानमिलेते लौकिकाशाविति स्थितिः' इति ॥ आश्वलायनाचार्यस्तु स्मार्ताग्नौ कुर्यादित्याह—गर्भपुंसवसीमन्तवलयश्चौलनिष्कृती । काम्यांश्च कुर्यात्स्मार्ताग्नावुत्सर्गोपाकृती च ये' इति । स्मार्ताग्निरौपासनाग्निः । अनयोर्विरोधे आचार्योक्तिः आश्वल्याचेनोक्तरीत्यौपासनाग्नावेव होमः कर्तव्यः ॥ ❀ ॥ अथ चूडाकरणान्तानाममीषां संस्काराणां फलमाह याज्ञवल्क्यः—'एवमेनः शमं याति बीजगर्भसमुद्भवम्' इति ॥ ❀ ॥ चूडाकर्मदिने तद्गृहे भोक्तुः प्रायश्चित्तमुच्यते पराशरप्रायश्चित्तकाण्डे—'निर्वृत्ते चूडहोमे तु प्राङ्नामकरणात्तथा । चरेत्सांतपनं भुक्त्वा जातकर्मणि चैव हि ॥ अतोऽन्येषु तु भुक्त्वान्नं संस्कारेषु द्विजोत्तमः । नियोगादुपवासेन शुध्यते निन्द्यभोजनात्' इति ॥

अथास्मिन्कर्मणि विनियुक्तमन्त्राणामर्थः कथ्यते ॥ अग्न आयूंषीति—हे अग्ने, आयूंषि पवसे रक्ष । ऊर्जं बलं इषमन्नं च नः अस्मभ्यं आसुव अभ्यनुजानीहि । दुच्छुनां दुर्भिक्षादिकं अस्मादारे दूरे बाधस्व पीडय ॥ अग्निर्ऋषिरिति—ऋषिः सर्वस्य द्रष्टा पवमानः शोधयिता पाञ्चजन्यः—निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजनास्तेभ्यो हितः—पुरोहितः पूर्वस्यां दिशि आहवनीयात्मना निहितः तत्स्थानीयः एवंभूतो योऽग्निः महागयं महाधनं महागृहं वा तमग्निं ईमहे याचामहे ॥ अग्ने पवस्वेति—हे

अग्ने, त्वपाः सुकर्मा त्वं सुवीर्यं शोभनवीर्यं वर्चः दीप्तिं मयि पोषं पुष्टिं दधत् अस्मे अस्मभ्यं रयिं धनं पनस्व देहि ॥ प्रजापत इति—हे प्रजापते, त्वत् त्वत्तोऽन्यः कश्चिदपि विश्वा विश्वानि एतानि ता तानि जातानि उत्पन्नानि न परिबभूव न परिगृह्णाति त्वदन्यः परिग्रहीतुं न कश्चिदपि शक्तोऽस्ति । अतः यत्कामाः वयं ते तुभ्यं जुहुमः तदभिलषितं नः अस्माकमस्तु भवतु । वयं रयीणां धनानां पतयः स्याम ॥ उष्णेन वायविति—हे वायो, उष्णेन उदकेन उष्णमुदकं गृहीत्वा एहि आगच्छ ॥ अदितिः केशानिति—अदितिर्देवमाता अस्य माणवकस्य केशान्वपतु केशानधितिष्ठत्विति तदर्थं तां आपः उन्दन्तु । उन्दी क्लेदने । शिरः क्लेदयन्तु । वर्चसे दीप्तये कुमारोऽयं तेजस्वी स्यादिति ॥ ओषधे त्रायस्वैनमिति—हे ओषधे बर्हिरात्मिके, एनं माणवकं त्रायस्व रक्ष । हे स्वधिते, एनं माणवकं माहिंसीः मावधीः ॥ येनावपदिति—विद्वान्क्षुरकर्मणि कुशलः सविता येन क्षुरेण सोमस्य राज्ञः वरुणस्य च शिरः वपत् तेन तादृशेन क्षुरेण हे ब्रह्माणः ब्राह्मणाः, इदमस्य माणवकस्य शिरो वपत वपने मां श्रयुंग्ध्वम् । युष्मदनुज्ञया अहं वपामि । वपने सति यथा कुमारोऽयमायुष्मान् जरदष्टिः जीर्णवृद्धः असत् भवति ॥ येन धातेति—धाता आदित्यानामन्यतमः सः येन क्षुरेण बृहस्पतेः अग्नेः इन्द्रस्य च आयुषे चिरजीवनाय आवपत् वपनमकरोत् तेन क्षुरेण आयुषे आयुषो वर्धनाय सुश्लोक्याय शोभनकीर्तिमत्त्वाय स्वस्तये अविनाशाय ते तव केशान्वपामि ॥ येन भूयश्चेति—येन क्षुरेण उप्तोऽयं माणवकः भूयो भूयिष्ठं चराति लेट् । चरेत् आं एवं ज्योक् दीर्घकालं सूर्यं पश्याति लेट् । पश्येत् तेनेत्यादि पूर्ववत् ॥ यत्क्षुरेणेति—हे क्षुराधिदेव, वप्ता त्वं यत् यदा तीक्ष्णत्वात् मर्चयता भर्त्सयता सुपेशसा सुरूपेण उज्ज्वलेन क्षुरेण स्वात्म-

भूतेन केशान्वपसि तदा अस्य शिरः मा छिन्धि। अस्यायुश्च मा प्रमोषीः। वपनस्य सतो मङ्गलत्वादेवं प्रार्थ्यते। शुन्धीति पाठे अस्य शिरः शुद्धं कुरु॥ शीतोष्णाभिरिति—हे नापित, शीतोष्णाभिर्मिलिताभिरद्भिः अवर्थं अपांप्रयोजनं क्लेदनरूपं कुर्वाणः अक्षुण्वन् माणवकमक्लेशयन् कुशलीकुरु कुशलवान्भूत्वा संवपेत्यर्थः॥

अथ चूडाकरणप्रयोगः॥ प्रागुक्ते तृतीयादौ वर्षे उदगयने शुक्लपक्षे प्रागभिहितप्रशस्ततिथिवारनक्षत्रयुते काले शुभे मुहूर्ते कुमारस्य चौलकर्म करिष्यन्कर्ता पूर्वेद्युः स्वस्तिवाचनपूर्वकं नान्दीश्राद्धं ग्रहयज्ञं च पूर्वोक्तविधिना विधाय तदहरेव वा कृतमङ्गलस्नानं कुमारमलंकृत्य ब्राह्मणैः सह पुण्याहं वाचयित्वा अङ्कुरार्पणं कौतुकबन्धनं च कृत्वा देशकालकथनपूर्वकं ममास्य कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणबलायुर्वर्चोयशोभिवृद्धिद्वारा श्रीप० चौलाख्यं कर्म करिष्य इति संकल्प्य स्थण्डिलोल्लेखनादिशकलनिरसनान्तं कर्म कृत्वा शुभमुहूर्ते औपासनाग्निं प्रतिष्ठाप्य प्रबोध्याग्निं ध्यात्वा पुनर्देशकालौ संकीर्त्य मया क्रियमाणे चौलहोमकर्मणि देवतापरिग्रहार्थमन्वाधानं करिष्ये। अस्मिन्नन्वाहितेऽग्नावित्याद्याधारावाज्येनेत्यन्तं प्राग्वदुक्त्वा अग्निं पवमानं त्रिः प्रजापतिं चाज्येन शेषेणाग्निं स्विष्टकृतमित्याद्युक्त्वा समिद्द्वयमग्नावाधाय सीमन्तोक्तरीत्या पूर्णपात्रनिधानान्तं पुरस्तनं तन्त्रमनुष्ठाय उदगग्नेरास्तीर्णेषु दर्भेषु व्रीहियवमाषतिलैः पृथक्पृथक्पूरितानि नवानि चत्वारि शरावाणि क्रमेणैकैकशः प्राक्संस्थमासादयेत्। ततो माता प्रत्यगग्नेरासीनस्य कर्तुर्दक्षिणतः कुमारमुत्सङ्गे दधती प्राङ्मुख्यासीत। ततो यजमानो मातुः समीपे पुरस्तादग्नेः पश्चादस्पृष्टभूम्यानडुहशकृत्शरावं शमीशरावं च निदध्यात्। ततो ब्रह्मैकविंशतिकुशाङ्कुरान्दधानो मातुर्दक्षिणतो निवसेत्। ततः कुमारेणान्वारब्धः कर्ता

पुरस्तन्तं तन्त्रमाघारान्तं कृत्वा । अग्नआयूंषीति तिसृणां शतं वैखानसा अग्निः पवमानो गायत्री । प्रधानाज्यहोमेवि० ॥ अग्न आयूंषि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनां स्वाहा । अग्नये पवमानायेदं नमम ॥ १ ॥ अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयं स्वाहा ॥ २ ॥ अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधद्रयिं मयि पोषं स्वाहा ॥ ३ ॥ प्रजापते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् । प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि॰ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणां स्वाहा ॥ ४ ॥ प्रजापतय इदं नमम । इति चतुर्थीमाहुतिं हुत्वा सर्वत्रोद्देशत्यागौ कृत्वा । शीतमुष्णं चोभे वारिणी पात्राभ्यां पृथगानीय कुमारस्य पश्चिमदेशे स्थित्वा तदुदकद्वयमन्यस्मिन्पात्रे दक्षिणसव्यपाणिभ्यां उष्णेन वाय उदकेनेहीति मन्त्रेण युगपन्निनीय तदेकदेशं गृहीत्वा नवनीतेन दधिद्रप्सेन वा मिश्रयित्वा कुमारस्य वामकर्णदेशमारभ्य प्रदक्षिणं—अदितिः केशान्वपतु आप उन्दन्तु वर्चसे इति मन्त्रं प्रतिच्छेदनमावर्तयन् शिरस्त्रिवारं क्लेदयित्वा स्वहस्तस्थितेषु ब्रह्महस्तस्थितेषु वा एकविंशतिकुशाङ्कुरेषु त्रीनङ्कुरानादाय कुमाराभिमुखं पश्चिमाग्रान्कृत्वा—ओषधे त्रायस्वैनम् । इति मन्त्रेण दक्षिणकेशभागे निधाय । तेष्वङ्कुरेषु ताम्रमयं क्षुरं—स्वधिते मैनं हिंसीः । इति निधाय ।—येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदमस्यायुष्मान्जरदष्टिर्यथासत् । इति मन्त्रेण सकेशान्कुशाङ्कुरांश्छित्त्वा कुशाग्रान्प्रागग्रान्कृत्वा शमीपर्णशरावाच्छमीपर्णान्यादाय तैः सहैकीकृत्य मातुः करे दद्यात् । सा च तान्सकेशशमीपर्णकुशाङ्कुरानानडुहे गोमये निदध्यात् । एवं द्वितीयादिच्छेदनेषु कुशाङ्कुरत्रयनिधानादिसमन्त्रकं कर्तव्यम् । मन्त्रस्तु—येन धाता बृहस्पतेरग्नेरिन्द्रस्य चायुषे वपत् । तेन त आयुषे वपामि शुश्लोक्याय स्व-

स्तये। इति द्वितीयच्छेदने।—येन भूयश्चरात्र्यां ज्योक् पश्याति सूर्यम्। तेन त आयुषे वपामि सुश्लोक्याय स्वस्तये। इति तृतीयच्छेदने। चतुर्थच्छेदने तु—येनावपत्० येन धाता० येन भूयश्चेति त्रयोपि मन्त्राः। एवं दक्षिणकेशभागे चत्वारि छेदनानि कृत्वोत्तरकेशभागेऽप्यनया रीत्या त्रीणि छेदनान्यादित आरभ्य मन्त्रत्रयेण कृत्वा। क्षुरधारां—यत्क्षुरेण मर्चयता सुपेशसा वप्ता वपसि केशान्। शुंधि शिरो मास्यायुः प्रमोषीः। इति मन्त्रेणाग्रत आरभ्य आमूलमवमृज्य नापितमाहूय—शीतोष्णाभिरद्भिरवर्थं कुर्वाणोऽक्षुण्वन्कुशलीकुरु। इति प्रैषेणानुशास्य तंप्रति प्रैषार्थं चावबोध्य तेन नापितेन पूर्वसेकावशिष्टाभिः शीतोष्णाभिरद्भिरार्द्रपाणिनार्द्रीकृत्य यथाकुलधर्मसुपकल्पितशिखं कुमारं स्नापयित्वा पूर्ववन्मातुरुत्सङ्गेऽवस्थाप्य स्विष्टकृदादिहोमशेषं समाप्य तच्च व्रीह्यादिपात्रचतुष्टयं नापिताय दद्यात्। कर्मान्ते स्वस्तिवाचनं पूर्ववत्। एतत्सर्वं कुमार्या होममन्तरेणामन्त्रकं होमस्तु समन्त्रक इति॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे चूडाकर्मप्रकरणम्॥

अथाक्षराभ्यासविधिः॥ नामाक्षराणि भवतो नरसिंह भूम्नो नाकौकसाममृतसेवनसोपहासीः (?)। आस्वादयत्यविकलं मनसा रसज्ञा विज्ञाज्ञया धृतयुगत्रयसंससंज्ञा (?)॥ अथेदानीमवसरप्राप्तत्वादक्षरारम्भविधिरभिधीयते। मार्कण्डेयः—'प्राप्ते तु पञ्चमे वर्षे अप्रसुप्ते जनार्दने। षष्ठीं प्रतिपदं चैव वर्जयित्वा चतुर्दशीम्॥ पर्वाष्टम्यौ तथा रिक्ता सौरभौमदिनं तथा। एवं सुनिश्चिते काले विद्यारम्भं तु कारयेत्॥ पूजयित्वा हरिं लक्ष्मीं दुर्गां चैव विशेषतः' इति॥ श्रीधरीये—'उदग्गते भास्वति पञ्चमेऽब्दे प्राप्तेऽक्षरस्वीकरणं शिशूनाम्। सरस्वतीं विघ्नविनायकं च गुडौदनाद्यैरभिपूज्य कुर्यात्'॥ अस्यार्थः—

१ पद्यमिदं न यथावदवगम्यते।

शिशुभिः पञ्चमे वर्षे प्राप्ते उदगयनेऽक्षरस्वीकरणं कर्तव्यम् ॥ तत्र नक्षत्रादिशुद्धिः—'हस्तादित्यसमीरपौष्णपुरजिन्मित्राश्विचित्राच्युतेष्वारार्कार्किदिनोदयादिरहिते राशौ स्थिरे चोभये। पक्षे पूर्णनिशाकरे प्रतिपदं पष्ठ्यष्टमीं द्वादशीं हित्वा चाष्टमशुद्धिभाजि भवने प्रोक्ताक्षरस्वीकृतिः ॥ मृगादिपञ्चस्वपि मेषु मूले हस्तादिके च त्रितयेऽश्विनीषु। पूर्वात्रये च श्रवणत्रये च विद्यासमारम्भमुशन्ति सिद्धम्' इति ॥ चिधिरत्ने—'बालस्य पञ्चमे वर्षे प्राप्ते भानौ मृगादिके। आरभेताक्षरं तत्र शुभकाले यथोदितम् ॥ हस्तादित्यभरुचित्रारौद्रपौष्णभवैष्णवम्। श्रवणं च प्रसिद्धं स्यादक्षरग्रहणे शिशोः ॥ प्रतिपत्षष्ठीरिक्ताश्च पर्वाष्टम्यौ विवर्जयेत्। बवादीनि तु सौम्यानि करणानि विशेषतः। शकुन्यादीनि विष्टिं च वर्जयेत्सर्वदा द्विजः ॥ शूलवज्रव्यतीपातव्याघातपरिघान्विना। गण्डातिगण्डविष्कम्भवैधृतीनितरे शुभाः ॥ गुरुज्ञेन्द्वर्कशुक्राणां वारवर्गोदयाः शुभाः ॥ स्थिराः श्रेष्ठाश्चरा निन्द्या मध्यमाश्चोभये स्मृताः। त्रिषडायगताः पापाः शुभाः केन्द्रत्रिकोणगाः ॥ चन्द्रताराबलं वीक्ष्य अक्षरग्रहणं शिशोः। सरस्वतीं गणेशं च सूत्रकारं गुरुं तथा। पूजयित्वा यथान्यायं पात्रस्थे तण्डुले लिखेत् ॥ प्राङ्मुखो गुरुरासीनो वरुणाभिमुखः शिशुः। अङ्गुष्ठानामिकाभ्यां तु चतुर्थ्यन्तेष्टदेवताम् ॥ ॐकारमादितः शब्दमुच्चार्यैवाक्षराणि च ॥ ततः प्रभृत्यनध्यायान्वर्जनीयान्विवर्जयेत्। चतुर्दश्यष्टमीपर्वदिनानि प्रतिपद्दिनम्' इति ॥—'सारस्वतादयो योगाः स्वाध्यायप्रकरणे वक्ष्यन्ते। लग्नमपि सविस्तरं विवाहप्रकरणेऽभिधास्यते। इत्थमुक्तकाले शुभे मुहूर्ते सरस्वतीविनायकगुरून्संपूज्याक्षराणि स्वीकुर्यात्। नृसिंहः—'वाचं गणपतिं चेष्ट्वा गुरुं

पाठा०—1 हस्तादित्यमरुन्मित्ररौद्रपौष्णाश्विचित्रभम्।

पश्चाद्यथाक्रमम्। आददीत गुरोर्विद्यां वारुण्यभिमुखः शिशुः' इति ॥ ॥ पूजाप्रकारमाह गर्गः—स्नात्वा शुचौ समे देशे गोनर्मैमात्रमुपलिप्य गैकतं स्थण्डिलं कृत्वा पलाशशाखया मृदं खनित्वा तस्यां सरस्वतीमावाहयेत्। नमः श्रीभुवनमातः सर्ववाङ्मयरूपे आगच्छागच्छ इति। [तथा पात्रे तण्डुलोपरि सरस्वतीं गणेशं सूत्रकारं गुरुं च विलिख्यावाहयेत्]। ततः प्रणवेन पाद्यमर्घ्यमाचमनीयं गन्धपुष्पाक्षतधूपदीपपायसगुडौदननैवेद्यसमर्पणनमस्कारप्रदक्षिणपुष्पाञ्जल्यन्तां पूजां कृत्वा गुरुं शक्तितो वस्त्रालंकारादिभिः पूजयित्वा मन्त्राशिः प्रदक्षिणीकृत्याभिवाद्य प्रणवपूर्वकमक्षरमारभेत् ॥ इति श्रीनृसिंहीये प्रयोगपारिजातेऽक्षरग्रहणविधिः ॥

अथानुपनीतधर्माः ॥ त्वत्संनिधानं मनसा दधानो यः कश्चिदेवोपनयक्रियावान्। लक्ष्मीनृसिंहापरथा वृथा स्याद्यथोपनीतोऽप्यनुपेतधर्मा ॥ अथेदानीं प्रसंगादनुपनीतधर्माः कथ्यन्ते। स्मृतिचन्द्रिकायां गौतमः—'प्रागुपनयनात्कामचारकामवादकामभक्षाः' इति। कामचार इच्छागतिः। कामवादोऽश्लीलादिभाषणम्। कामभक्षः पर्युषितादिभक्षणम्। एतेषु प्रागुपनयनान्न दोष इत्यभिप्रायः। तथाच विष्णुपुराणम्—'भक्ष्याभक्ष्ये तथापेये वाच्यावाच्ये तथानृते। अस्मिन्काले न दोषः स्यात्स यावन्नोपनीयते' इति। एतच्च महापातकव्यतिरिक्तविषयम्। तथाच स्मृत्यन्तरे—'स्यात्कामचारभक्षोक्तिर्महतः पातकादृते' इति। महापातके तु पित्रादिभिः प्रायश्चित्तं कर्तव्यमित्युच्यते पराशरप्रायश्चित्तकाण्डे जातूकर्ण्येन—'अनुपेतस्तु यो विप्रो मद्यं मोहात्पिबेद्यदि। तस्य कृच्छ्रत्रयं कार्यं पित्रा भ्रात्रा तथैव च' इति। अन्यच्च—'वैश्वदेवं पुरोडाशमग्निमध्ये च यद्धुतम्। प्रमादाच्छिशुराकर्षन्मात्रा रक्ष्यः प्रयत्नतः' इति ॥ आचारविषये आह वसिष्ठः—'नह्यस्य विद्यते कर्म किंचिदामौञ्जिबन्धनात्। वृत्त्या शूद्रसमस्तावद्यावद्वेदेन जायते' इति। गौतमोऽपि—'यथोपपादमूत्रपुरीषो भवति न तस्याचमनकल्पो

विद्यते न तस्योदङ्मुखो दिवारात्रौ दक्षिणाभिमुख इत्यादयो नियमाः' इति ॥ अस्पृश्यस्पर्शने आहापस्तम्बः—'अन्नप्राशनात्प्रयता भवन्त्यासंवत्सरात्प्रयता इत्येके यावता दिशो न प्रजानीयुरोपनयनादित्यपरे' इति । तथापि तेषां शुद्ध्यन्तरमाह गौतमः—'अन्यत्रापामार्जनप्रधावनोक्षणेभ्यो न तस्य स्पर्शनादौ शौचम्' इति । अपामार्जनमद्भिर्मार्जनम् । स्मृतिदीपिकायाम्—'शिशोरभ्युक्षणं प्रोक्तं बालस्याचमनं स्मृतम् । रजस्वलादिसंस्पर्शे स्नानमेव कुमारके' इति ॥ तेषां लक्षणं तत्रैवोक्तम्—'प्राक्चूडाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः । कुमारकस्तु विज्ञेयो यावन्मौञ्जीनिबन्धनम्' इति । कृतचौलमपि नाग्निहोत्रे नियुञ्ज्यात् । तदाह गौतमः—'नखेनमग्निहवनयोर्नियुञ्ज्यात्' इति । तस्य मन्त्रहीनत्वादित्यभिप्रायः । मनुरपि—'नैव कन्या न युवतिर्नाल्पविद्यो न बालिशः । होता स्यादग्निहोत्रस्य नार्तो नासंस्कृतस्तथा' इति ॥ नच मन्त्रान्ग्राहयित्वा विनियोज्य इत्याह गौतमः—'न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनात्' इति । मनुरपि—'नह्यस्मिन्विद्यते कर्म किंचिदामौञ्जिबन्धनात् । नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते' इति ॥ ❀ ॥ अथ बालपितृधर्मान्परशुरामं प्रत्याह पुष्करो विष्णुधर्मोत्तरे—'अपथ्यं न च बालानां तेषां गर्भं च पश्यताम् । प्रार्थितं बालकानां च दातव्यं स्याद्धितं तथा ॥ बालानां प्रार्थितं दत्त्वा नाकलोके महीयते । बालकाश्चानुनेयाः स्युर्धर्मकामैः सदा नरैः ॥ तेषां भोज्यप्रदानेन गोदानफलमाप्नुयात् । तेषां क्रीडनकं दत्त्वा मोदते नन्दते वने ॥ आह्लादयन्ति सततं यस्मात्स्पृष्टेन बालकाः । दौर्भाग्यं महदाप्नोति यत्र यत्राभिजायते ॥ तस्मात्सर्वप्रयत्नेन बालानग्रे तु

---

पाठा०—१ तथा भार्गव पश्यताम् ।

भोजयेत् ॥ अभुक्तवत्सु बालेषु नचाश्नीयात्कदाचन । यन्न दद्यान्न चाश्नीयात्कदाचिदपि तत्समम्' इति ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे अनुपनीतधर्मप्रकरणम् ॥

अथोपनयनप्रकरणम् ॥ त्रैलोक्यकण्टकनिराकरणप्रवीणश्छत्रादिमण्डितकरः कुहलापटुर्यैः । पित्रा कृतोपनयनो धृतवामनाख्यः पायाद्धिरण्यकरिपुर्नरसिंहदेवः ॥ अपिच—उपनीतिमनीतिविनीतिकरीं भगवन्सुरसिंह नृसिंह विभो । भरणं प्रवणं परिणन्तरि ते चरणं शरणं सुरणन्ति सुराः ॥ अथोपनयनविधिरभिधीयते । तत्र कारिका—'ब्राह्मणस्योपनयनमुक्ते काले भवेदथ । कृताभ्युदयिकं श्राद्धं परेद्युरपरेऽहनि' इति । अस्यार्थः—चौलानन्तरं ब्राह्मणस्य गृह्यकारेणोक्ते काले जन्माद्यष्टमाब्दादावुपनयनं भवेत् । ननु कः पुनरुपनयनशब्दार्थः । उच्यते—उपनयनमिति रूढ्या कर्मनामधेयमिति भरद्वाजः । तदुक्तम्—'उपनयनाख्यं यत्कर्म विद्यार्थं तदुदीरितम्' इति । तथा संग्रहकारोपि—'दीर्घं छन्दोनुरोधेन सार्थिकस्तद्वितोऽपि वा । त्रैवर्णिकानां मुख्योऽयमौपनायनिको विधिः' इति । सावित्र्याः प्रापणमुपनयनमिति । तदाह कात्यायनः—'गायत्र्या ब्राह्मणमुपनयीत' इति । येन खलु संस्कारेण बटुराचार्यसमीपं नीयते तदुपनयनम् । करणसाधनमिदम् । अथ गुर्वादिसमीपनीतिरुपनयनमिति भावसाधनं वेति भारुचिः । हरदत्तस्तु—'पितृकुलाद्विधिवदाचार्यकुलप्रापणं शिशोरुपनयनमिति प्रणीतवान् । शुभ्णा शुभमुहूर्ते कुमारमुखनिरीक्षणमुपनयनमिति परिशिष्टकाराः । तदुक्तम्—'ज्योतिर्विदुक्तसमये कुमारमुखदर्शनम् । उपानयं

पाठा०—१ कारयेदिदम् ।

तु तं प्राहुर्याज्ञिकास्तत्त्वदर्शिनः' इति । इदमेव द्वितीयजन्मेत्याह याज्ञवल्क्यः—'मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् । ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजातयः' इति । इदमेव ब्रह्मजन्मेत्याह मनुः—'तत्र यद्ब्रह्मजन्म स्यान्मौञ्जीबन्धनचिह्नितम् । मा तस्य माता सावित्री पिता चाचार्य उच्यते' इति । एतदुपनयनं ब्राह्मणादीनां गृह्योक्तेषु कालेषु कर्तव्यम् ॥ इदमत्र गृह्यम्—'अष्टमे वर्षे ब्राह्मणमुपनयेद्गर्भाष्टमे वैकादशे क्षत्रियं द्वादशे वैश्यमाषोडशाद्ब्राह्मणस्यानतीतः काल आद्वाविंशात्क्षत्रियस्याचतुर्विंशाद्वैश्यस्यातऊर्ध्वं पतितसावित्रीका भवन्ति नैनानुपनयेन्नाध्यापयेन्न याजयेन्नैभिर्व्यवहरेयुः' इति ॥ अस्यार्थमाह नारायणः—जन्मप्रभृत्यष्टमे वर्षे ब्राह्मणमुपनयेत् । कुमारमिति वर्तते । तच्च कुमारीनिवृत्त्यर्थमित्युक्तम् । गर्भप्रभृत्यष्टमे वोपनयेत् । जन्मप्रभृति गर्भप्रभृति वा एकादशे वर्षे क्षत्रियमुपनयेत् । जन्मप्रभृति गर्भप्रभृति वा द्वादशे वर्षे वैश्यमुपनयेत् । षोडशवर्षपर्यन्तं ब्राह्मणस्योपनयनकालोऽतीतो न भवति । षोडशद्वाविंशचतुर्विंशपर्यन्तेष्वनुपनीताश्चेत्पतितसावित्रीका भवन्ति । संज्ञायाः प्रयोजनं पतितसावित्रीक उद्दालकव्रतं चरेदिति । अतऊर्ध्वमिति वचनं पूर्वसूत्रेष्वाकारा अभिविधाविति ज्ञापनार्थम् । नैनानुपनयेदिति । अचीर्णप्रायश्चित्तानिति शेषः । उपनयनप्रतिषेधादेव सर्वत्र प्रतिषेधे सिद्धे यदि केनचिल्लोभादज्ञानाद्वोपनीताः स्युस्तथापि नैवोत्तराणि कर्माणि पतितसावित्रीकाणां कुर्यादिति सर्वेषां पाठः क्रियते । जाताधिकाराज्जननकालादारभ्याष्टममुच्यते । कुमारमित्यधिकारान्न स्त्रीणामुपनयनं भवति । तदाह पञ्चुरुशिष्यः—'जाताधिकाराज्जन्मादावष्टमेऽब्दे भवेदिदम् । कुमाराधिकृतेश्चापि न स्त्रीणामिदमुच्यते' इति । स्त्रीणामुपनयनं तु विवाह एवेत्याह मनुः—'वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः । प-

तिसेना गुरौ सेवा गृहस्थाग्निपरिक्रिया' इति । ब्राह्मणग्रहणं चात्र शूद्रादिनिवृत्त्यर्थम् । यथाह हरदत्तः—'विशेषो वक्ष्यते यस्मादिह क्षत्रियवैश्ययोः । ब्राह्मणाः क्षत्रिया वैश्या इति बोधायनादिभिः । उक्तानामनुलोमानामप्यत्र ग्रहणं मतम्' इति । हरदत्तस्तु—उपनयेदिति परस्मैपदप्रयोगोऽध्येतॄणां प्रमादात्पतित इत्याह । यदाह गृह्यभाष्ये सर्वतन्त्रस्वतन्त्रो हरदत्तः—'परस्मैपदपाठोऽयमध्येतॄणां प्रमादजः । आचार्यकरणे यस्मात्प्राप्तोत्स्येवात्मनेपदम्' इति । अपरे पुनराचार्यकरणमत्राविवक्षितं, किंतर्हि समीपानयनमिति परस्मैपदं निर्वहन्ति । तदुक्तम्—'गुरोर्व्रतानां वेदस्य यमस्य नियमस्य च । देवतानां समीपं वा येनासौ नीयते द्विजः' इति । गर्भाष्टमे वा वर्षे ब्राह्मणमुपनयेत् । यस्मिन्वर्षे गर्भो भूत्वा शेते स गर्भ इति हरदत्तः । गर्भसहचरितोऽब्दोऽनेनोच्यत इति भारुचिः । सोऽष्टमो यस्येति बहुव्रीहिः । षष्ठीसमासस्य पूरणप्रत्ययान्तेन निषेधात् । एकादशे क्षत्रियं प्रकरणाद्गर्भादेकादशे वेति गम्यते । द्वादशे वैश्यमित्यत्रापि गर्भाद्द्वादशे वेत्यवगन्तव्यम् ॥ अनुकल्पानाह—आषोडशाद्ब्राह्मणस्यानतीतः कालः । आङत्रयमत्राभिविधौ वर्तते अतऊर्ध्वमित्यत्राभिधानात् । आद्वाविंशात्क्षत्रियस्याचतुर्विंशाद्वैश्यस्य यद्यप्यनतीतः काल इत्युक्तस्तथापि मुख्यकालादूर्ध्वं करणे प्रायश्चित्तं भवति । अतऊर्ध्वमिति । अतः षोडशादिभ्यो वर्षेभ्य ऊर्ध्वमेषामकृतप्रायश्चित्तानां सावित्र्यधिकारो नास्ति । अतश्च नैनानुपनयेदित्यादिनिषेधः । अत्रोपनयननिषेधादेव सर्वप्रतिषेधे सिद्धे—रागाल्लोभाद्भयादज्ञानाद्वा केनचिदुपनीतस्यापि नाध्यापनादीनि कर्तव्यानीति सर्वेषां प्रतिषेधः । एतच्च सर्वप्रायश्चित्ते सति भवति । सर्वप्रायश्चित्तं तु पतितसावित्रीकस्योद्दालकव्रताचरणम् ॥ ❁ ॥ उद्दालकव्रतमाह वसिष्ठः—'पतितसावित्रीक उद्दालकव्रतं चरेद्द्वौ मासौ या-

वकेन वर्तयेन्मासं पयसार्धमासमामिक्षयाष्टरात्रं घृतेन षडात्रमयाचितेन त्रिरात्रमब्भक्षोऽहोरात्रमुपवासोऽश्वमेधावभृथं वा गच्छेद्व्रात्यस्तोमेन वा यजेत' इति ॥ आमिक्षालक्षणं—'आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः' इति । अतऊर्ध्वं सर्वकर्मार्ह एवेति । याज्ञवल्क्योपि—'यवोद्भवयवागूं च पिबेन्मासद्वयं प्रति । पयः पिबेदेकमासमामिक्षां चार्धमासकम् ॥ पिबेद्घृतं चाष्टरात्रं निशाषट्कमयाचितम् । ततस्त्रिरात्रमब्भक्षस्त्वहोरात्रमुपोषणम्' इति । आपस्तम्बस्तु—'अतिक्रान्ते सावित्र्याः काले ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं ततः संवत्सरमुदकोपस्पर्शनमथाध्याप्यः' इति । तस्य पितुः प्रायश्चित्तमुक्तं कपिलसंहितायाम्—'यदि कालो ह्यतिक्रान्तो निमित्तैश्च दुरासदैः । कालातिपत्तिजनितदोषनिष्कृतिमादितः ॥ कुर्यादिति शेषः । पिता विद्वदनुज्ञातो विधिवद्ब्रह्मकूर्चकम् । उपोष्य प्राशयेदादौ ततश्चाब्दं व्रतं चरेत् ॥ गायत्रीं च जपेल्लक्षमधिकारप्रसिद्धये' इति ॥ अत्राचार्यः स्मृतिरूपेणाह—'गर्भाष्टमेऽष्टमे वाब्दे पञ्चमे सप्तमेऽपि वा । द्विजत्वं प्राप्नुयाद्विप्रो वर्षे त्वेकादशे नृपः ॥ वैश्यश्च द्वादशे वर्षे विप्राणां षोडशोऽवधिः । द्विजत्वप्रापणे राज्ञां द्वाविंशाब्दोऽवधिः स्मृतः ॥ वैश्यस्य च चतुर्विंशस्त्वथ एते द्विजातयः । अतऊर्ध्वं पतन्त्येते द्विजत्वं प्राप्नुयुर्यदि ॥ मन्त्रकर्मपरिभ्रष्टा यासन्ति व्रात्यतामिह । मन्त्रयोन्यर्थसंबन्धस्तैर्न कार्यः कथंचन ॥ शिष्टेन धर्मनिष्ठेन शुभकर्म प्रयत्नतः । ये द्विजत्वं गताः कालानतीत्योक्तान्द्विजातयः । ते तद्दोषस्य निर्वृत्त्यै चरेयुर्निष्कृतिं बुधाः ॥ गवां दानेन भूम्या वा प्राजापत्यत्रयेण वा । चान्द्रायणेन वा शुद्धास्ते भवन्तीह सत्तमाः ॥ नातीयाद्ब्राह्मणः कालं द्विजत्वाप्त्यै य ईरितः । अत्यापन्नोऽपि वा हीनो गृहापचरणादिभिः ॥ अप्यष्टमस्थानगताञ्छन्दयित्वा द्रुतादिभिः । तत्काल एवोपनेयः पित्रा

पुत्रः प्रयत्नतः' इति ॥ ❀ ॥ काम्योपनयनकालमुशना आह—'जन्मतः पञ्चमे वर्षे ब्राह्मणस्योपनायनम् । राज्ञस्तु षष्ठे वैश्यस्य सप्तमे तु बलार्थिनः' इति । मनुः—'ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे । राज्ञो बलार्थिनः षष्ठे वैश्यस्यार्थार्थिनोऽष्टमे' इति । वसिष्ठोपि—'कुमारस्याष्टमे वर्षे गर्भाद्वा जन्मनस्तथा । ब्रह्मवर्चसकामस्तु नित्यं विप्रो विशेषतः ॥ अन्नाद्यकामो नवमे धीकामो दशवत्सरे । एकादशे सत्वकामो द्वादशे पुष्टिकामकः ॥ आषोडशाब्दात्सर्वेषामनतीतो महापदि । अतिषोडशिको विप्रो नोपनेयः कदाचन ॥ क्षत्रियो विंशतेर्नोर्ध्वं न वैश्यः पञ्चविंशकात्' इति । संग्रहे—'सप्तमे वाष्टमे वर्षे नवमे दशमे तथा । एकादशे द्वादशे वा ह्युपनेया द्विजातयः ॥ ब्रह्मवर्चसमायुष्यं तेजोऽन्नाद्यं तथेन्द्रियम् । पशून्कामयमाना वै प्राप्नुवन्ति यथाक्रमम्' इति ॥ अङ्गिराः—'षष्ठे तथा द्वादशे च राज्ञो वृद्धिर्बलायुषोः ।. ईजायुषोस्तु वैश्यस्य ह्यष्टमे च चतुर्दशे' इति । ईजा कृष्यादिविषया चेष्टा ॥ ❀ ॥

अथ गुरुबलविचारः । अत्र गोचरेण गुरुबलं विचार्यं कर्तव्यमित्युच्यते श्रीधरीये—'उक्तौ गर्भाष्टमाद्युक्तवर्षे विप्रादीनामुच्यते मौञ्जिबन्धः । अर्थायस्त्रीधर्मपुत्राख्यसंस्थे स्याद्वागीशे जन्मचन्द्रर्क्षयोश्च' इति । ऋतुनिर्णयस्तूत्तरत्र वक्ष्यते ।. वर्षाणि प्रागेवोक्तानि जन्मचन्द्रर्क्षयोरित्यत्र । ऋक्षशब्दो राशौ वर्तते । स च जन्मचन्द्रयोरुभयत्र संबध्यते जन्मराशिश्चन्द्रराशिश्चेति । अत्र जन्मशब्दस्य पूर्वोक्त्या तस्य प्राधान्यं विवक्षितम् । तथाह भरद्वाजः—'चन्द्रलग्नं शरीरं स्याल्लग्नं स्यात्प्राणसंमितम् । ते उभे संपरीक्ष्यैव कर्तव्यं श्रेय इच्छता' इति । गुरुस्य जन्मचन्द्रलग्नयोरर्थायस्त्रीधर्मपुत्राख्यसंस्थे द्वितीयैकादशसप्तमनवमपञ्चमराशिषु

वागीशे स्थिते सति मौञ्जीबन्धनं स्यात्। शिष्टेषु सप्तसु स्थानेषु जीवे स्थिते न शस्तमिति। तदाह नारदः—'जन्मभ्रातृचतुर्थारिमृत्युकर्मव्यये गुरौ। मृत्युपातकरोगाश्च रिपुः शस्त्रमृतिर्मृतिः। सुरापित्वं च विज्ञेयं क्रमादेतत्फलं शिशोः' इति॥ बृहस्पतिश्चाह—'एवं शुभेन्दे देवेज्यो जन्मकर्मव्ययारिभिः। तृतीयबन्धुरन्ध्रैश्च विनान्यत्र शुभप्रदः' इति॥ श्रीपतिस्तु—'स्वोच्चे स्वमित्रे स्वगृहे त्रिकोणे जीवे गते यद्युपनीतिकाले। शिशोः सहोत्थे चतुरस्रजन्मकर्मान्त्यषष्ठेऽपि शुभं वदन्ति' इति। बृहस्पतिश्चाह—'झषचापकुलीरस्थो जीवोऽप्यशुभगोचरः। अतिशोभनतां दद्याद्विवाहोपनयादिषु' इति। लल्लस्तु—'नीचगशत्रुगृहगे पराजिते वृत्रशत्रुसचिवेऽथवा भृगौ। यस्य मौञ्जरशना निबध्यते स श्रुतिस्मृतिमखक्रियोज्झितः'। एवं विमृष्टेऽस्मिन्पक्षे स्यादिति सत्तामात्रार्थसूचकेन क्रियापदेन नियतो वर्षावधिः प्रबलो भवति श्रुतेर्बलवत्त्वात्। तथाच नारदः—'द्विजन्मवर्षकाले प्राक्प्रोक्ते वर्षे गुरौ यदि। गते विरोधं वर्षे स्याद्बलवच्छ्रुतिचोदनात्॥ गुरोर्गतिः स्मृतिप्रोक्ता विबला हि श्रुतेः स्मृतिः' इति। तस्माद्गर्भाष्टमे वर्षे प्राप्ते ग्रहदोषस्य शान्तिं कृत्वा मौञ्जीबन्धनं कर्तव्यम्, गुरुगतेरागन्तुकत्वात्। तथाह बृहस्पतिः—'अशुभेऽब्दे ग्रहाः सर्वे शुभगोचरगा यदि। शान्त्यभावाच्छमं नैव यात्यब्दः कालमृत्युवत्॥ अथर्वणप्रदिष्टाः स्युः शतं सैकं तु मृत्यवः। एकस्तेषां स कालः स्यादन्येऽप्यागन्तवो नृणाम्॥ आगन्तवो महाशान्त्या शान्तिं यान्ति हि मृत्यवः। न कालसंज्ञितो मृत्युर्यायाच्छान्त्या शमं बलात्॥ तस्माद्ग्रहेभ्यः कालत्वाद्बली संवत्सरः स्मृतः। शान्तिर्ग्रहाणां कर्तव्या न तु संवत्सरस्य च' इति। एतच्छान्तिर्विवाहप्रकरणे वक्ष्यते॥ अत्र भगवान्—'शुद्धाष्टमादौ सूत्रोक्तवत्सरे दोषवर्जिते। लग्नद्वयस्यापि वशे शुभस्थानस्थिते गुरौ। तथो

त्तरायणे चैव शुक्लपक्षे बलान्विते । नक्षत्रगुणसंपन्ने तिथिवारसमन्विते । मुहूर्ते बहुमौहूर्तविहिते दोषवर्जिते' इति । कुर्यादिति शेषः ॥ ॥ अथायननिर्णयः—अयनादिप्रतिपादकोदगयनापूर्यमाणपक्ष इत्यादिसाधारणगृह्यं चौले व्याख्यातम् । वृद्धवसिष्ठोपि—'विप्रस्य क्षत्रियस्यापि मौञ्जी स्यादुत्तरायणे । दक्षिणे तु विशां कुर्यान्नानध्याये न संक्रमे' इति । श्रीधरीये ज्योतिर्नृसिंहोपि—'उत्तरायणगे सूर्ये कर्तव्यं ह्यौपनायनम्' इति ॥ ॥ अथर्तुमासनिर्णयः । तत्रापस्तम्बः—'वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यम्' इति । श्रीधरीये गर्गः—'विप्रं वसन्ते क्षितिपं निदाघे वैश्यं घनान्ते व्रतिनं विदध्यात्' इति । वृद्धवसिष्ठः—'वसन्तश्चैत्रवैशाखौ ग्रीष्मः शुक्रशुची तथा । इषोर्जौ च शरच्चान्द्रा मासाः श्रौतादिकर्मणि' इति । शुक्रशुची ज्येष्ठाषाढौ । इषोर्जावाश्वयुजकार्तिकौ । श्रूयते हि—'मधुश्च माधवश्च वासन्तिकावृतू' इति ॥ अत्रानुकल्पानाह वृद्धगर्गः—'मीनमेषौ रविर्यावद्वसन्तस्तावदिष्यते । वृषमिथुनगे ग्रीष्मोऽनन्तरं च ऋतुः शरत्' इति । वराहमिहिरस्तु—'माघश्च फाल्गुनश्चैव वसन्तऋतुरिष्यते । मधुश्च माधवश्चापि मुख्यो द्वैधायमुच्यते ॥ माघादिषु च मासेषु मेखलाबन्धनं शिशोः' इति । श्रीधरीये माघादिपञ्चकं त्रैवर्णिकसाधारणमित्युक्तं—'माघादि शुक्रान्तिकपञ्चमासाः साधारणा वा सकलद्विजानाम्' इति ॥✿॥ अत्र ज्येष्ठमासे ज्येष्ठपुत्रोपनयनं निषेधति गर्गः—'ज्येष्ठमासे विशेषेण सर्वज्येष्ठस्य चैव हि । उपनीतस्य पुत्रस्य जडत्वं मृत्युरेव च' इति ॥ ॥ जन्ममासे सर्वेषामुपनयनं निषेधति संग्रहकारः—'विवाहे चोपनयने जन्ममासं विवर्जयेत् । विशेषाज्जन्मपक्षं तु वसिष्ठाद्यैरुदाहृतम्' इति ॥ ॥ अथ पक्षनिर्णयः । कालविधाने—'शुक्रे पक्षे निर्मले शीतभानौ शुक्रे जीवे चाम्बरे दृश्यमाने । शास्त्राधीशे

शक्तियुक्तेऽनुकूले राशावृक्षे स्याच्छिशोर्मौञ्जिबन्धः' इति। अत्र शुक्ले पक्ष इत्यनेन प्रथमपक्षस्य प्राधान्यमुच्यते। तदाह बृहस्पतिः—'शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना' इति। अयमेव पक्षो देवानां दिवाभाग इत्युच्यते। तदाह वत्सः—'पूर्वाह्णः पूर्वपक्षश्च उत्तरायणमेव च। देवानामप्यहश्चेति दिवसो निर्मलस्तथा' इति। निर्मले शीतभानावित्यनेन कुमारस्य चन्द्रबलप्राधान्यमुच्यते। तदुक्तं लल्लेन—'उपनयनं विप्राणां गोदानविवाहमङ्गलादीनि। कुर्याद्बलवति चन्द्रे जीवे भानौ च नियमेन' इति। शुक्रे जीवे चाम्बरे दृश्यमान इति। गुरुशुक्रयोरनस्तमितयोरबालवृद्धयोः सतोरित्यर्थः। तदाह बृहस्पतिः—'भृगोरङ्गिरसो मौढ्ये कर्तव्यं नोपनायनम्। तयोर्बाल्ये च वार्धक्येऽधिमासे दक्षिणायने' इति। भृगुः शुक्रः। अङ्गिरा गुरुः॥ शाखाधीशे शक्तियुक्ते इति। शाखा ऋगादयः तदधीशा गुरुसितभौमशनैश्चराः। तदाह नारदः—'ऋग्वेदाधिपतिर्जीवो यजुर्वेदाधिपः सितः। सामवेदाधिपो भौमः सौम्यसौरी त्वथर्वणः' इति। एतेषां मध्ये निजेशाधिपे शक्तियुक्ते सति केन्द्रगते तदीयदिवसे चोपनयनं कर्तव्यम्। तदाह लल्लः—'शाखाधीशे बलवति केन्द्रगते वा तदीयदिवसे वा' इति। श्रीपतिराह—'शाखाधिपे बलिनि केन्द्रगतेऽथवास्य वारेऽपि चोपनयनं गदितं द्विजानाम्। नीचस्थिते रिपुगृहे च पराजिते च जीवे भृगौ श्रुतिविधिः स्मृतिकर्महीनः' इति। [माधवीये—'वर्णेशे बलिनि द्वितीयजननं त्रैवर्णिकानां शुभं सर्वेषामपि वीर्यशालिषु तथा जीवेप्यतीक्ष्णांशुगे। शाखास्वामिनि केन्द्रगे बलयुते वारे च तस्योत्तमे तस्मिन्क्षीणबले तथा सुरगुरौ शुक्रे च तन्नेष्यते' इति।] अर्णवेऽपि—'शाखाधिपे शुभ्यगृहेण युक्ते कुर्याद्दिने चाप्युपनायनाख्यम्। तद्वत्कुलेशे विधिभेशयुक्ते समस्तसंपत्तिसुखानि च स्युः' इति। कुलेशो जात्यधिपतिः। तदुक्त-

मर्णवे—'ब्राह्मणस्य गुरुः प्रोक्तो नृपस्य ज्योतिषां पतिः। बुधो वैश्यस्य शूद्रस्य सुखदः शीतदीधितिः' इति ॥ ॥ अथ राश्यानुकूल्यमाह—राशावृक्षे स्याच्छिशोर्मौञ्जिबन्ध इति। वाशब्दः समुच्चये। अनुकूले राशाविल्यनेन शिशोर्जन्मलग्नचन्द्रलग्नयोरनुकूले राशौ मौञ्जिबन्धः कर्तव्य इति प्रतिपाद्यते। यथाह भरद्वाजः—'जन्मचन्द्रर्क्षमेशस्य मैत्रमेकाधिपत्यभम्। तुङ्गं चापि शुभं विवादशुभं रिपुनीचभम् ॥ अप्यष्टमारिरिष्फर्क्षे क्षेत्रेशस्योक्तलक्षणाः। शुभैर्दृष्टाश्च युक्ता वा कर्मणां शुभदा नृणाम्' इति। अरिः षष्ठः। रिष्फो द्वादशः। ऋक्ष इत्यत्राप्यनुकूले इत्यनुवर्तते। शिशोरनुकूले नक्षत्रे मौञ्जीबन्धनं स्यादित्यन्वयः। तदाह वसिष्ठः—'सप्तपञ्चमचन्द्राष्टसप्तविंशतिभेषु च। वैनाशिके निजन्मर्क्षे नेष्टं तेषूपनायनम्' इति। विधिसंग्रहे—'प्रथमान्त्यतृतीयांशा विपत्प्रत्यरनैधने। वर्जनीया विशेषेण नाशुभोपनये विपत्' इति। विधिरत्नेपि—'चन्द्राष्टमं विनाशर्क्षं सप्तविंशतिभं तथा। अन्येषु शुभकार्येषु विपदा सहितानि तु ॥ वर्ज्यान्येतानि शेषाणि शुभानि शुभकर्मसु' इति ॥ ॥ सप्तविंशतिनक्षत्रनिषेधविषये विशेष उच्यते—'जन्मर्क्षात्पूर्वनक्षत्रं सप्तविंशतिभं भवेत्। सर्वकर्मविनाशः स्याच्चन्द्रो व्ययगतो यदि ॥ सप्तविंशतिनक्षत्रमेकराशिसमन्वितम्। सर्वेषु शुभदं प्रोक्तं विवाहोपनयादिषु' इति ॥ ॥ अथ तिथिनिर्णयः। बृहस्पतिः—'द्वितीया पञ्चमी षष्ठी सप्तमी दशमी तथा। त्रयोदशी तृतीया च शुक्ले श्रेष्ठाः प्रचोदिताः ॥ द्वादश्येकादशी चैव मध्यमौ च तिथी विना। मध्यमौ च प्रशंसन्ति चन्द्रे तु बलसंयुते ॥ कृष्णे चैव प्रशस्ताः स्युस्तिथयश्चोपनायने' इति। ज्योतिर्नृसिंहः—'तृतीया पञ्चमी षष्ठी द्वितीया चापि सप्तमी। पक्षयोरुभयोश्चैव विशेषेण तु पूजिताः ॥ धर्मकामौ सिते पक्षे कृष्णे च प्रथमा तथा। कृष्णत्रयोदशीं केचि-

दिच्छन्ति मुनयस्तथा ॥ द्वादश्येकादशी चैव मध्यमे तु प्रचक्षते' इति ॥ अथ वर्ज्यास्तिथयः संग्रहे—'रिक्तापष्ठीपर्वतिथीरनध्यायांश्च वर्जयेत्' इति । अनध्यायान्नित्यान्नैमित्तिकांश्च । तेषां स्वरूपमनध्यायप्रकरणे वक्ष्यामः । अपरार्के—'नष्टे चन्द्रेऽष्टमे शुक्रे निरंशे चैव भास्करे । कर्तव्यं नोपनयनं नानध्याये गलग्रहे' इति ॥❀॥ निरंशलक्षणम्—'राशेः प्रथमभागस्थो निरंशः सूर्य उच्यते' इति ॥ ❀ ॥ गलग्रहतिथयः—'त्रयोदशीचतुष्कं तु सप्तम्यादित्रयं तथा । चतुर्थी चैव संप्रोक्ता ह्यष्टावेते गलग्रहाः' इति ॥ ❀ ॥ अत्र नैमित्तिकानध्यायेषु कचित्प्रतिप्रसवमाह भरद्वाजः—'या चैत्रवैशाखसिता तृतीया माघे च सप्तम्यथ फाल्गुनस्य । कृष्णे द्वितीयोपनये प्रशस्ताः प्रोक्ता भरद्वाजमुनीन्द्रमुख्यैः' इति ॥ ❀ ॥ गलग्रहापवादमाह स एव—'विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे । उपनीतस्त्वनध्याये पुनःसंस्कारमर्हति' इति ॥ ॥ अथ वारनिर्णयः नारदः—'गुरुशुक्रबुधानां तु वाराः श्रेष्ठतमाः स्मृताः । मध्यमः सोमवारस्तु सूर्यवारश्च मध्यमः ॥ वारौ मन्दारयोर्वर्ज्यौ कृष्णे वर्ज्यो निशापतेः । अस्तंगतस्य सौम्यस्य वारो वर्ज्यो द्विजन्मनि' इति । द्विजन्मनि उपनयने । वराहमिहिरस्तु—'गुरोः कवेर्लोहितस्य मिहिरस्य च वासराः । ऋग्यजुःसामाथर्वणां शस्ताः स्युर्व्रतबन्धने' इति । लोहितोऽङ्गारकः । मिहिरः सूर्यः । आह बृहस्पतिः—'बह्वृचानां गुरोर्वारो यजुर्वेदजुषां कवेः । सामगानां धरासूनुरथर्वविदुषां रविः' इति । नृसिंहश्चाह—'जीवभार्गवसौम्यानां वारवर्गोदयांशकान् । ईक्षणं च प्रशंसन्ति चान्द्रं सर्वं च मध्यमम्' इति । अत्रांशकशब्दो नक्षत्रांशेषु वर्तते अतो गुरुबुधशुक्रांशकेष्वेवोपनयनं कर्तव्यम् । तदुक्तम्—'सूर्यांशकयुते चन्द्रे शस्त्रजीवी भविष्यति । कृष्णे स्वांशे निशानाथे प्रतिषिद्धस्य सेवकः ॥ सिते पक्षे विधौ स्वांशे सो-

मपः साच्छिशुर्बुधः । भौमस्यांशे निशानाथे ह्यभिशक्तो भवेद्बटुः ॥ बुधांशकगते चन्द्रे द्विजन्मनि घटोः शुभम् । अनस्तगे बुधे वेदविद्वान्स्याच्छास्त्रपारगः ॥ गुरोरंशगते चन्द्रे द्विजन्मनि घटोः शुभम् । आयुर्धीज्ञानयशादि जीवः शास्त्रार्थविद्यतः ॥ शुक्रांशकगते चन्द्रे द्विजानां तु द्विजन्मनि । वेदवेदाङ्गशास्त्रार्थज्ञानायुःश्रीविवर्धनम् ॥ चन्द्रे शनैश्चरांशस्थे दुर्वृत्तः पापकृद्बटुः । यद्यंशेशः स्ववर्गस्थो द्विगुणं त्रिगुणं फलम्' इति ॥ ❀ ॥ एवं नवांशकगणनाक्रम उच्यते—'मेपसिंहधनुषि ह्यजादयस्तौलिकुम्भमिथुने तुलादयः । कन्यकाव्रूपमृगे मृगादयो मीनकर्क्यलिपु कर्कटादयः' इति । अत्रोत्तरादिदशनक्षत्रेपु चन्द्रे दुष्टांशस्थितेपि दोपो नास्तीत्याह वसिष्ठः—'उत्तरादितिसिष्यपूपनायनं हस्तमैत्रमृगरोहिणीपु च । त्वाष्ट्रवासवपुनर्वसुष्वपि श्रेष्ठमप्यशुभभागभे विधौ' इति ॥ ॥ अथ नक्षत्रनिर्णयः बृहस्पतिः—'त्रिपूत्तरेपु रोहिण्यां हस्ते मैत्रे च वासवे । त्वाष्ट्रे सौम्यपुनर्वस्वोः प्रशस्तं त्वौपनायनम्' इति । मैत्रमनुराधा । वासवं धनिष्ठा । त्वाष्ट्रं चित्रा । सौम्यं मृगशिरः ॥ अथ मध्यमानि—'वारुणे वैष्णवे पुष्ये वायव्ये श्रोष्ठपद्यपि । अश्विन्यां पदस्तु मेपूक्तं मध्यमं चैव पौष्णभे' इति । वारुणं शतभिषक् । वैष्णवं श्रवणः । वायव्यं स्वाती । श्रोष्ठपदा उत्तराभाद्रपदा । पौष्णं रेवती ॥ अथ वर्ज्यानि—'कृत्तिकाभरणीमूलज्येष्ठार्द्रासु विशाखयोः । पूर्वात्रये च सार्पर्क्षे न कुर्यादौपनायनम्' । सार्पर्क्षमाश्लेषा ॥ अथ विशेषमाह नृसिंहः—'रौद्रे शैवद्विजः कुर्याद्वैष्णवे वैष्णवस्तथा । वामवर्धे सवर्णश्च वारुणे कुण्डगोलकौ' इति । रौद्रमार्द्रा ॥ ॥ अथ योगनिर्णयो मुहूर्तसंग्रहे—'व्याघातं परिघं वज्रं व्यतीपातं च वैधृतिम् । गण्डातिगण्डौ शूलं च विष्कम्भं चैव वर्जयेत् ॥ शिष्टेपु चैव योगेपु प्रशस्तं ह्यौपनायनम्' इति । वर्ज्य-

ष्वपि विशेषमाह श्रीपतिः—'सवैधृतिस्तु व्यतिपातनामा सर्वोऽप्यनिष्टः परिघस्य चार्धम् । तिस्रस्तु योगे प्रथमे सवज्रे व्याघातसंज्ञे नवपञ्च शूले । गण्डातिगण्डे च षडेव नाड्यः शुभेषु कार्येषु विवर्जनीयाः' इति ॥ ॥ अथ करणनिर्णयः—'बवादीनां तु षट्कं स्यादुग्नाये सुपूजितम् । शकुन्यादीनि विष्टिं च वर्जयेत्तु विशेषतः' इति ॥

अथ लग्ननिर्णयः । श्रीधरीये—'जडलं मेषलग्ने स्याद्विद्वान्श्रीमान्वृषोदये । नृयुग्मलग्ने ज्ञानी स्यात्सषडङ्गश्च कर्कटे ॥ बहुशिल्पो हरेर्लग्ने पण्डितः कन्यकोदये । तुलोदये वणिग्जीवी वृश्चिके काण्डपृष्ठभृत् ॥ सर्वैः संपूज्यते चापे मकरे शूद्रतां व्रजेत् । नृपप्रेष्यो घटे लग्ने वेदशास्त्रार्थविज्झषे ॥ असत्फलप्रदे राशावपि लग्ने शुभेक्षिते । शुभयुक्तेऽथवा तेषां शुभमेव फलं विदुः' इति ॥ अथ ग्रहोदये विशेषफलनिर्णयः । नृसिंहः—'गुरुशुक्रोदये शस्तमनस्तस्य बुधस्य च । पूर्वपक्षे विधोः शस्तं नेतरेषां द्विजन्मनि ॥ जीवोदये तु यज्वा स्याद्दीर्घायुर्धनवान्महान् । सितोदये महाज्ञानी वित्तवानायुषी गुणी ॥ उपनीतौ समादेश्यमेवं ग्रहवशात्फलम्' इति ॥ बृहस्पतिश्चाह—'उपनीतो रवेर्लग्ने हन्यते भूपते रुषा । तेन दृष्टे युते लग्ने बहुरोगी द्विजो भवेत्' इति ॥ तत्र दृष्टलक्षणमुक्तं बृहज्जातके—'त्रिदशत्रिकोणचतुरस्रसप्तमान्यवलोकयन्ति चरणाभिवृद्धितः । रविजामरेज्यरुधिराः परे च ये क्रमशो भवन्ति किल वीक्षणेऽधिकाः' इति ॥ शनिगुरुकुजा इतरे च ग्रहास्तृतीयदशमस्थाने पाददृष्ट्या, त्रिकोणसंज्ञके नवपञ्चमेऽर्धदृष्ट्या, चतुरस्रसंज्ञिते चतुर्थाष्टमे त्रिपाददृष्ट्या, सप्तमे तु संपूर्णदृष्ट्यावलोकयन्तीत्यर्थः ॥ भोजराजीये—'पश्येत्त्रिकर्मभे सौरिस्त्रिकोणे पूर्णमङ्गिराः । स्मरे शेन्द्वर्कभृगुजाश्चतुरस्रे कुजः किल' इति ॥ [ पादैकदृष्टिर्नवमे तृतीये द्विपाददृष्टिर्नवपञ्चमे च । त्रि-

पादहष्टिश्चतुरष्टमे च संपूर्णदृष्टिः समसप्तमे तु ] इति ॥ ॥ अथ ग्रहाणां लग्नादिद्वादशस्थानफलमुच्यते—'द्वितीयेऽर्के धनैर्हीनस्तृतीये च सुखी भवः । चतुर्थे देहनाशः स्यात्पञ्चमे ज्ञाननाशनम् ॥ षष्ठे शत्रुविनाशः स्यात्सप्तमे व्याधिदो रविः । अष्टमे मृत्युदो भानुर्नवमे वित्तनाशनः ॥ दशमे विजयारोग्यदातायुष्यप्रदो भवेत् । द्वादशे वित्तनाशाय स्थितो भानुर्विलग्नतः ॥ एवं फलं वटोर्दद्याद्भानुर्वानाथ शीतगोः । औपनायनिके काले शिशोर्जन्मोपनायने ॥ चन्द्रोदयेऽभिशस्तः स्यात्क्षयरोगी सितेतरे । सिते पक्षे बहुज्ञः स्याद्धर्मवान्यज्ञकृत्सुखी ॥ द्वितीये शान्तिदश्चन्द्रस्तृतीये भोगसौख्यदः । आर्जवं च चतुर्थस्थः पञ्चमे शुभदो भवेत् ॥ व्याधिप्रदोऽथ षष्ठे स्यात्प्रीतिदः सप्तमे स्थितः । अष्टमे व्याधितश्चन्द्रो नवमे धर्मदः शिशोः ॥ दशमेऽतीव पूज्यत्वं मोदमेकादशे शशी । द्वादशेऽतिप्रमादं च कुर्याल्लग्नाद्द्विजन्मनि ॥ भूमिपुत्रोदये सद्यो मृत्युः स्याच्छस्त्रतः शिशोः । वैवर्ण्यदः कुजोऽर्थन्यः मौर्ख्यं भ्रातृगतश्च सः ॥ अङ्गतापं चतुर्थस्थः पञ्चमेप्यापदं ददत् । वृद्धिं षष्ठे कुजो दद्यात्सप्तमेऽज्ञदः कुजः ॥ व्याधिं मृत्युं कुजो मृत्यौ शोकं च नवमं गतः । दशमे भयदो भौमो भवेत्सर्वशुभप्रदः ॥ द्वादशे हानिदो नृणामौपनायनिकर्क्षतः । बुधः सर्वर्क्षगः सौख्यबुद्धिविद्यान्वितं शिशुम् । शास्त्रार्थपारगं कुर्याद्विना षष्ठाष्टमौ सदा ॥ सर्वत्र शुभकृज्जीवः पुत्रारोग्यायुषे सदा । शास्त्रार्थपारगं कुर्याच्छिशोरष्टारिमे विना ॥ शुक्रश्च सर्वभावस्थः सर्वसंपत्समृद्धिदः । षष्ठाष्टमसरान्मुक्त्वा शिशोर्लग्नाद्द्विजन्मनि ॥ अर्कात्मजोदये दोषैरभिशस्तोऽतिपातकः । द्वितीये भास्करिर्हानिं तृतीये सर्वसंपदः ॥ रोगितां च चतुर्थस्थः पञ्चमे मूढतां शनिः । षष्ठे सत्वं कलाज्ञत्वं सप्तमे रोगदो भवेत् ॥ अष्टमे मरणं दद्यान्नवमे च विपत्प्रदः । क्लेशं च दशमे मन्दः सौख्यमाये व्यये व्य-

यम् ॥ राहूदये तु हीनाङ्गो महाकुलविनाशनः । द्वितीये मोक्षदो राहुस्तृतीये लाभदः शिशोः ॥ चतुर्थे भ्रंशदो देशात्पञ्चमे चोरभावदः । षष्ठे सर्वेश्वियं प्राहुः शास्त्रतः सप्तमे शिशोः ॥ अष्टमे तु विषान्मृत्युर्नवमे विकलं तथा । दशमे पापिनं क्रूरं भवे कुर्यान्महासुखम् ॥ व्यये भ्रंशं शिशोर्लेखादीपनायनिकात्सदा ॥ केतूदये तु कुष्ठी स्यादुपरागसमीपतः । पापग्रहेक्षिते लग्ने जीवितार्थी न कारयेत् ॥ चन्द्रश्च पापदृष्टश्चेन्मृदलं संप्रयच्छति । अष्टमस्थान्ग्रहान्सर्वान्सदा नेच्छन्ति पण्डिताः ॥ विना स्वतुङ्गस्वर्क्षादिवर्गस्थान्बलिनो ग्रहान् । एवं भावफलं प्रोक्तं ग्रहाणां लग्नराशितः ॥ इष्टानिष्टफलं वर्जिन्त्वाह्मणा ब्रह्मचारिणः । अनिष्टस्थानगा एते स्वापवादैः शुभं फलम् । दद्युस्ते गदितं शास्त्रे पितामहमुखोदिते ॥ अनिष्टस्थानगोप्यत्र ग्रहः कोपि न दोषकृत् । शुभदृष्टियुतः प्राणी शुभवर्गे यदि स्थितः' इति ॥ ❀ ॥ अथानिष्टानाह स एव—'विद्यां प्राप्तां नाशयेतां मन्दभौमौ द्वितीयगौ । अन्योन्यमथवा दृष्टौ द्वादशस्थौ तु बन्धदौ ॥ अर्कं लग्नाद्व्ययर्क्षस्थं यदि भौमो निरीक्षते । बलवानचिरादन्धं गुरुं च विकलाश्चिरात् ॥ व्ययस्थं रविमार्किर्वा स्वदृष्ट्या यदि पश्यति । शिष्यविद्यां हरेत्प्राणी विकलो रोगदः शिशोः ॥ पापाः पापैर्युता दृष्टाः शुभदृष्टिविवर्जिताः । पापं शिशोः प्रयच्छन्ति विपरीते सुशोभनम् ॥ चन्द्रश्च शुभसंदृष्टः पापदृष्टिविवर्जितः । शुभमेव फलं दद्याद्विपरीते तथेतरत्' इति ॥ ॥ ❀ ॥ शुभयोगानाह बृहस्पतिः—'चन्द्रादर्थे व्यये वापि तथैवोभयतो ग्रहाः । सुनफाप्यनफा चैव योगा दुरुधुराः शुभाः ॥ चन्द्रात्सरारिरन्ध्रेषु यद्येकस्मिञ्शुभग्रहे । स्थितेऽधियोगसंज्ञः स्याच्छुभयोगो द्विजन्मनि ॥ मीने स्वांशगते लग्ने वृषे तत्त्वकला बुधे । सर्वेपि तुङ्गाः शुभदाः शुभयोगो द्विजन्मनि ॥—तत्त्वकला पञ्चविंशतितमी लिप्ता । जीवेन्दू कर्कगौ लग्ने सितज्ञौ मेषगे रवौ । वृषां-

ऽन्ये निषिद्धये काले कुर्याद्द्विजन्म तत् ॥ अनिष्टस्थानगो यश्च तस्य चाष्टकवर्गके । तद्युक्तराशिर्बलाढ्यः सोऽसौ दोषं न यच्छति ॥ एते शुभप्रदा योगा द्वितीये जन्मनीरिताः । सत्स्वप्यत्यन्तदोषेषु शुभं दद्युर्निजैर्बलैः ॥ यथोक्तकालदौर्लभ्याद्योगान्वच्मि शुभप्रदान् । द्विजन्मकालसंभूतदोषाणां कुलनाशनान् ॥ केन्द्रे त्रिकोणे वा जीवे भानौ शुक्रेऽथवा व्यये । द्वितीये ज्ञे शुभो योगो द्विजानां चोपनायने ॥ लग्नार्थभ्रातृभे शुक्रे जीवो वान्योऽथ कण्टके । त्रिषडेकादशे पापे न कोप्यष्टमगो यदि ॥ गुरौ केन्द्रे भवे भानौ चन्द्रे शुभनवांशके । शुभग्रहदृशा युक्तः शुभराश्युदयो यदि ॥ भृगौ मीने वृषे चापे जीवे केन्द्रत्रिकोणगे । कर्किचापझषस्थेऽस्मिन्योगः शुभग्रहोदये ॥ दशमायोदयान्याताः शुक्रभान्विन्दुजाः क्रमात् । चन्द्रे शुभनवांशस्थे योगः स्यादौपनायने ॥ बुधार्कशुक्राः कर्मायलग्नगाः क्रमशो बली । चन्द्रः शुभांशगो योगो द्विजन्मनि शुभोदये ॥ मेषगोकर्कटान्याता भानुशुक्रेन्दवः क्रमात् । यमोदये भवेद्योगो द्विजोपनयने शुभः ॥ यमो मिथुनम् । जीवे शुक्रेऽथवा मीने लग्ने भवगते रवौ । व्यये कर्मणि वा सौम्ये शुभयोगो द्विजन्मनि ॥ दोषे बलविहीने च गुणे बहुबलैर्युते । अपवादबलैर्दोषप्रध्वंसो भावगे शुभे' इति ॥ एतद्ग्रहाणां बलाबलं जातकर्मप्रकरणोक्तं द्रष्टव्यम् । एवं सम्यग्विचार्यैव काले निर्दोषतां गते । कृतोपवीतः शिष्यः स्याद्दीर्घायुः सर्वयज्ञकृत् ॥ दैवज्ञं सम्यगभ्यर्च्य पुरः कनकभूषणैः । वस्त्रगोभूयुतैर्मूल्यैर्यथाशक्ति न वञ्चयेत्' इति । यद्यपि सर्वेषु शुभलग्नेषु परिहरणीया एकविंशतिमहादोषा इहापि परिहर्तुं निरूपणमर्हन्ति तथापि पाणिग्रहणे प्रतिपादयिष्यन्त इति नाकारि तेषामत्र निरूपणम् ॥ इति लग्ननिर्णयः ॥

एवमुपनयनलग्नं शोधयित्वा यथोक्तलक्षणश्चाचार्यः पूर्वेद्युःकर्तव्यं कर्म कुर्वीत ॥ ❀ ॥ आचार्यलक्षणमाह भगवान्—'कुमारस्योपनयनं श्रुताभिजनवृत्तवान् । तपसा धूतनिःशेषपाप्मा कुर्याद्द्विजोत्तमः' इति ॥ आपस्तम्बोऽपि—'तमसो वा एष तमः प्रविशति यमविद्वानुपनयते यश्चाविद्वानिति हि ब्राह्मणम्' इति । अस्यार्थः—यथा कश्चित्तमसः सकाशात्तम एव प्रविष्टो न किंचिज्जानाति एवमेवैष यं माणवकमविद्वानुपनयते तथा यश्चाविद्वानुपनयते इत्यपेक्षितम् । यश्च स्वयमविद्वान्सन्नुपनयते सोपि तमस एव तमः प्रविशति । अस्मिन्नर्थे ब्राह्मणमपि भवति । किंपुनस्तत् । 'तस्मिन्नभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेत्' इति । व्यासोपि—'वेदैकनिष्ठं धर्मज्ञं कुलीनं श्रोत्रियं शुचिम् । स्वशाखाध्यमनालस्यं विप्रं कर्तारमीप्सति' इति । कर्तारमुपनयनकर्तारम् ॥ ❀ ॥ श्रोत्रियस्तु ब्रह्मपुराणेऽभिहितः—'जन्मना ब्राह्मणो ज्ञेयः संस्काराद्द्विज उच्यते । विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते' इति ॥ ❀ ॥ अथोपनेतॄनाह गर्गः—'पिता पितामहो भ्राता ज्ञातयो गोत्रजोऽग्रजः । उपानयेऽधिकारी स्यात्पूर्वाभावे परः परः' इति ॥❀॥ अथोपनेयाः—ये नाम द्वादशविधाः पुत्रास्ते सर्वे संस्कारमर्हन्ति ॥❀॥ द्वादशविधपुत्रलक्षणमाह याज्ञवल्क्यः—'औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः । क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥ गृहे प्रच्छन्न उत्पन्नो गूढजः स सुतः स्मृतः । कानीनः कन्यकाजातो मातामहसुतो मतः ॥ अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः । दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥ क्रीतस्तु ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयं कृतः । दत्तात्मातु स्वयं दत्तो गर्भेविन्नः सहोढजः । उत्सृष्टो गृह्यते यः स्यादुपलब्धो भवेत्स तु' इति ॥❀॥ औरसलक्षणं मनुः—'स्वक्षेत्रसंस्कृतायां तु स्वयमुत्पादयेद्धि

यम् । तमौरसं विजानीयात्पुत्रं प्राथमकल्पिकम्' इति ॥ ❀ ॥ पुत्रिकासुतलक्षणम्—'अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् । यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम्' इति ॥ ❀ ॥ क्षेत्रजलक्षणम्—'यस्तल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य वा । स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः' इति। तल्पशब्देन भार्योच्यते ॥❀॥ गूढजलक्षणम्—'उत्पद्यते गृहे यस्य न विज्ञायेत कस्य सः । स्वगृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः' इति ॥❀॥ कानीनलक्षणम् । बौधायनः—'असंस्कृतामनतिसृष्टामुपगच्छेत्तस्यां यो जातः स कानीनः' इति ॥❀॥ पौनर्भवलक्षणम्। मनुः—'या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया । उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते' इति ॥ दत्तः क्रीतश्च स्पष्टौ ॥❀॥ कृत्रिमलक्षणम्—'सदृशं तु प्रकुर्याद्यं गुणदोषविचक्षणम् । पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः' इति ॥ ❀ ॥ स्वयं दत्तलक्षणम्—'मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् । आत्मानं स्पर्शयेद्यस्तु स्वयंदत्तः स उच्यते' इति । स्पर्शयेद्दद्यात् ॥ ❀ ॥ गर्भविन्नरूपसहोढलक्षणम्—'गर्भे यस्मिन्सति विन्नं परिणयनं स्त्रियाः क्रियते स गर्भविन्नः सहोढजः सहोढा गर्भेण सह परिणीतेत्यर्थः । छान्दसं ह्रस्वत्वम् ॥❀॥ अपविद्धलक्षणम्—'मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा । यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते' इति। तत्र शङ्खः—'एते द्वादश पुत्राश्च संस्कार्याः स्युर्द्विजातयः' इति॥❀॥ षण्ढबधिरादीनामप्युपनयनमुक्तं ब्रह्मपुराणे—'ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः । तस्माच्च षण्ढबधिरकुब्जवामनपङ्गुषु ॥ जडगद्गदरोगार्तशुष्काङ्गविकलादिषु। मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये ॥ ध्वस्तपुंस्त्वेषु चैतेषु संस्काराः स्युर्यथोचितम् ॥ मत्तोन्मत्तौ न संस्कार्याविति केचित्प्रचक्षते । कर्मस्वनधिकाराच्च पातित्यं नास्ति चैतयोः ॥

तदपत्यं च संस्कार्यमपरे त्वाहुरन्यथा । संस्कारमन्त्रहोमादीन्करोत्याचार्य एव तु ॥ उपनेयांश्च बिधिवदाचार्यः स्वसमीपतः । आनीयाग्निसमीपं वा सावित्रीं स्पृश्य वा जपेत् ॥ कन्यास्वीकरणादन्यत्सर्वं विप्रेण कारयेत् । एवमेव द्विजैर्जातौ संस्कार्यौ कुण्डगोलकौ' इति । इत्युपनेयाः ॥

अथैकोदरोपनयननिर्णयः । तत्र भृगुः—'गर्भाधसंस्कृतस्यापि कर्तव्यं चोपनायनम् । प्रायश्चित्तं तु पूर्वेषां नोपनायनिकस्य तु । श्रौतस्मार्ताधिकारी स्यान्नोपनायनिकं विना' इति ॥ ❀ ॥ प्रायश्चित्तप्रकारं भगवानाह—'आरभ्याधानमाचौलात्कालातीते तु कर्मणाम् । व्याहृत्याज्यं सुसंस्कृत्य हुत्वा कर्म यथाक्रमम् ॥ एतेष्वेकैकलोपेऽपि पादकृच्छ्रं समाचरेत् । चूडायामर्धकृच्छ्रं स्यादापदि त्वेवमीरितम् । अनापदि तु सर्वत्र द्विगुणं द्विगुणं चरेत्' इति ॥ कात्यायनोपि—'लुप्ते कर्मणि सर्वत्र प्रायश्चित्तं विधीयते । प्रायश्चित्ते कृते पश्चाल्लुप्तं कर्म समाचरेत् ॥ त्वंनः सत्वंन इत्याभ्यामिमं मेत्येकया ऋचा । येते शतमयाश्चाभ्यामुदुत्तममृचाहुतीः ॥ हुत्वा पृथक्पृथक्पादमर्धं चौले समाचरेत् । स्त्रीणामप्येवमेव स्याज्जाताद्याऽमन्त्रिका क्रिया' इति ॥ ❀ ॥ प्राजापत्यकृच्छ्रस्वरूपमाह मनुः—'त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् । त्र्यहं परं च नाश्नीयात्प्राजापत्यं प्रकीर्तितम्' इति । एकभक्तेन नक्तेन तथैवायाचितेन च । उपवासेन चैकेन पादकृच्छ्रं प्रकीर्तितम्' इति । एतदशक्तौ तत्प्रत्याम्नायत्वेन गवादिकं दद्यात् ।—'प्राजापत्ये तु गामेकां तिस्रो वा शक्त्यपेक्षया । गामेकां पादकृच्छ्रे तु दद्याच्चैव विचक्षणः ॥ गवामलाभे निष्कं स्यात्तदर्धं पादमेव च' इति ॥ इति संस्कारातिपत्तिप्रायश्चित्तम् ॥ ❀ ॥ अथ यथाकालमाचरितेषु चौलान्तेषु कर्मस्वाचार्यकुमा-

रयोरुपनेतृत्वोपनेयत्वाधिकारसिद्ध्यर्थं प्रत्येकं कृच्छ्रत्रयमाचरितव्यम्। तदाह वृद्धविष्णुः—'कृच्छ्रत्रयं चोपनेता त्रीन्कृच्छ्रांश्च बटुश्चरेत्' इति ॥ आचार्यस्य विशेष उच्यते—'सावित्रीमभ्यसेदग्निं पवित्राणि च संस्मरन्। सहस्रं द्वादशाख्यं च सावित्रीं च जपेद्बुधः ॥ स्वाधिकारार्थमेवास्याः प्रधानार्थं हि तत्स्मृतम्' इति ॥

एवमाचरितकृच्छ्रोयमाचार्यः पूर्वेद्युरुपनयनसंभारान्संविभृयात्। तत्रादौ परिधानार्थमहतं शुक्लं काषायं वा वासः,—प्रावरणार्थं चापरं वस्त्रं कृष्णाजिनं वा, कौपीनं तद्बन्धनसूत्रं उपवीतं मेखलां दण्डं कमण्डलुं च यथोक्तलक्षणानेतान्संपाद्य स्वस्तिवाचनं ग्रहयज्ञमाभ्युदयिकं च कुर्यात्। तदाह भगवान्—'पूर्वेद्युरेव सकलान्संभारांश्च यथोचितान्। संभृत्याभ्युदयश्राद्धमपि कुर्याद्यथाविधि' इति। अत्रापिशब्देन स्वस्तिवाचनग्रहयज्ञौ समुच्चीयेते। अनयोः शुभकर्मादौ करणीयत्वं तत्प्रकरण एव प्रत्यपादि।—'अत्रादौ परिधानार्थं कल्पयेन्नववस्त्रकम्। शिरोवगुण्ठनं चैव नवमन्यत्प्रकल्पयेत् ॥ शिरोवगुण्ठनमत्र प्रावरणस्थानीयम्। यथोक्तमजिनं चापि कल्पयेदवगुण्ठनम्। उपवीतं च संपाद्य तथा कृष्णमृगाजिनम् ॥ यथोक्तां मेखलां दण्डं यथोक्तं च प्रकल्पयेत्। एवं संभृत्य संभारान्पूर्वेद्युश्च यथोचितान्' इति ॥ आचार्यः—'क्रमशश्चाजिनादीनि भिक्षापात्रं जलस्य च। कौपीनाच्छादनार्थाय मौञ्जीं कार्पासिकीं द्विजः ॥ संभवे त्रिवृतां तावद्वाससी चाहरेत्पुरा' इति। अतएव हि बन्धसूत्रोपदेशाद्ब्रह्मचारिणः कौपीनधारणमपि प्रतीयते। यदाचार्य एव वक्ष्यति मेधाजनने—'वाससी ते स्वगुरवे मेधाजननकर्मणि। दद्यात्तावत्प्रभृत्येव कौपीनेन स वर्तयेत् ॥ प्राग्द्वादशाब्दाद्व्रतिनो वासो न बिभृयुरित्यपि। केचिदाहुर्द्विजाः केचिदाष्टाब्दाच्च सूरयः ॥ कौपीनमात्रा वर्तन्ते य-

धान्वे ब्रह्मचारिणः' इति ॥(३)॥ अत्र परिधानीयादिलक्षणमाह गृह्यकारः—'अहतेन वाससा संवीतमैणेयेन वाजिनेन ब्राह्मणं रौरवेण क्षत्रियमाजेन वैश्यं यदि वासांसि वसीरन्रक्तानि वसीरन्काषायं ब्राह्मणो माञ्जिष्ठं क्षत्रियो हारिद्रं वैश्यः' इति ॥ अस्यार्थः—अत्राहतेन वाससा संवीतमैणेयेन वाऽजिनेनेति वासोऽजिनयोर्विकल्पः उभयोरपि प्रावरणार्थत्वात् । एतत्तावत्साधारणम् । यदाजिनं प्रावरणं तदा ब्राह्मणक्षत्रियविशां यथाक्रममैणेयरौरवाजान्यजिनानि भवन्तीत्यर्थः । एणी विन्दुरहिता मृगी । तस्याः संबन्ध्यैणेयम् । एणीशब्दाड्ढक्प्रत्ययः । रुरुर्विन्दुमान्मृगः । अजश्छागः । यदि वासांसि वसीरन्नित्यादिव्यवहितकल्पनया वाक्यमेतद्व्याख्येयमिति । वासांसि वसीरन्नित्येको विधिः । यदि रक्तानि वसीरन् काषायं ब्राह्मण इत्यादिर्द्वितीयः । अत्र प्रथमवाक्येन वासांसि वसीरन्नदध्युरिति परिधानं विधीयते अपेक्षितत्वात् । द्वितीयेन तु द्रव्यान्तरापादितवर्णान्तराणि च वासांसि यदि वसीरन् तदा काषायं ब्राह्मण इत्यादि प्रतिवर्णं परिधानवर्णविशेषो विधीयते । शुक्लस्य वर्णान्तरापादितस्यैव रागशब्दार्थत्वात् । यदाह काशिकावृत्तिकारः—'शुक्लस्य वर्णान्तरापादनमिह रञ्जेरर्थः' इति । स्मर्यते च पराशरस्मृतिव्याख्याने मनुना—'कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिणः । वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च' इति । अत्र कृष्णादीनां चर्माण्युत्तरीयाणीति व्याख्यातम् । शङ्खोपि—'कृष्णरुरुवस्ताजिनान्युत्तरीयाणी'ति । वसिष्ठोपि—'कृष्णाजिनमुत्तरीयं ब्राह्मणस्य रौरवं राजन्यस्य गव्यं बस्ताजिनं वा वैश्यस्य' इति । तथाच पारस्करः—'ऐणमजिनमुत्तरीयं ब्राह्मणस्य रौरवं राजन्यस्य गव्यं बास्तं वा वैश्यस्य सर्वेषां वा गव्यं शाणादीन्युत्तरीयाणि' इति । अत्रापस्तम्बः—'वासांसि शाणक्षौमाविकानि काषायकं चैके वस्त्रमुपदिशन्ति ब्राह्मणस्य

माञ्जिष्ठं राजन्यस्य हारिद्रं वैश्यस्य' इति । अत्र वसिष्ठः—'शुक्लमहतं कार्पासं वासो ब्राह्मणस्य माञ्जिष्ठं क्षौमं क्षत्रियस्य पीतं कौशेयं वैश्यस्य' इति ॥ ❀ ॥ अहतवस्त्रलक्षणमुक्तं प्रचेतसा—'ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् । अहतं तद्विजानीयात्सर्वकर्मसु पावनम्' इति ॥ ❀ ॥ अथ मेखलालक्षणम् । अत्र गृह्यम्—'तेषां मेखला मौञ्जी ब्राह्मणस्य धनुर्ज्या क्षत्रियस्याावी वैश्यस्य' इति । अस्यार्थः—मुञ्जास्तृणविशेषास्तत्कृता मेखला मौञ्जी । धनुर्ज्या धनुषोऽवनमनाय ग्राह्या मौर्वी । अविरूर्णायुक्तरोमभिः कृता आवी । तेषां ब्राह्मणक्षत्रियविशां क्रमेण मौञ्जी मौर्वी आवी च मेखला भवतीत्यर्थः । अत्र मौञ्जी ब्राह्मणस्य धनुर्ज्या क्षत्रियस्य आवी वैश्यस्येति नियम उक्तः । उक्तमेखलाभावे कुशादिमयी वा मेखला ग्राह्या । तथाच यमः—'एतासामप्यभावे तु कुशाश्मन्तकबल्वजैः । मेखला त्रिवृता कार्या ग्रन्थिनैकेन वा त्रिवृत्' इति । मनुः—'मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला' इति । आचार्योऽपि—'त्रिवृता मेखला कार्या त्रिशरं स्यात्समावृता । तद्ग्रन्थयस्त्रयः कार्याः पञ्च वा सप्त वा पुनः ॥ वेदत्रयेणावृतोऽहमिति मन्येत स द्विजः । तद्ग्रन्थयस्तदङ्गानि तद्रहस्यानि संस्मरेत्' इति ॥ ❀ ॥ अथ दण्डलक्षणम् । अत्र गृह्यम्—'तेषां दण्डाः पालाशो ब्राह्मणस्यौदुम्बरः क्षत्रियस्य बैल्वो वैश्यस्य केशसंमितो ब्राह्मणस्य ललाटसंमितः क्षत्रियस्य घ्राणसंमितो वैश्यस्य सर्वे वा सर्वेषाम्' इति । अस्यार्थः—तेषां ब्राह्मणक्षत्रियविशां पालाशौदुम्बरबैल्वाः क्रमेण मूर्धललाटघ्राणप्रमाणाः सत्वचोऽनग्निदूषिता नृणामनुद्वेजका दण्डा भवन्तीत्यर्थः । तदाह मनुः—'ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः । अनुद्वेगकरा नृणां सत्वचोऽनग्निदूषिताः' इति । सर्वे वा सर्वेषां उक्ताश्चानुक्ताश्च दण्डा भवन्ति । तथाच गौतमः—'य-

ब्रियाः सर्वेषाम्' इति । आपस्तम्बस्तु—'अवार्क्षी दण्डा इत्यवर्णसंयोगेनैक उपदिशन्ति'इत्याह ।

अथोपवीतलक्षणम् । तत्र प्रथमं निर्माणप्रकारो निरूप्यते । देवलः—'ग्रामान्निष्क्रम्य संख्याय षण्णवत्यङ्गुलीषु तत् । तावत्त्रिगुणितं सूत्रं प्रक्षाल्याब्लिङ्गकैस्त्रिभिः ॥—आपोहिष्ठादयोऽब्लिङ्गकाः । देवागारेऽथवा गोष्ठे नद्यां वान्यत्र वा शुचौ ॥ सावित्र्या त्रिगुणं कुर्यान्नवसूत्रं तु तद्भवेत् । बिल्वाश्वत्थादियज्ञार्हवृक्षेष्वन्यतमस्य तु । वभीयात्सहि जीवंतु (?) पितृभ्यो नम इत्यथ ॥ ग्रन्थावेष्टितव्यं स्यात्पितॄणां तृप्तिदं हि तत् ॥ [ त्रिस्ताडयेत्करतले देवानां तृप्तिदं हि तत् ]। सव्ये मृदं गृहीत्वासिंस्थापयेद्भूरिति त्रुवन् ॥ पत्रं पुष्पं फलं वापि व्याहृतिभिः प्रतिक्षिपेत् । अभिमन्त्र्याथ भूरग्निश्चेति सूक्तत्रयं त्रिभिः' ॥ तत्र मन्त्रः—'भूरग्निश्च पृथिवीं च मां च । त्रींश्च लोकान्संवत्सरं च । प्रजापतिस्त्वासादयतु । तया देवतयाङ्गिरस्वद्ध्रुवासीद ॥ भुवो वायुं चान्तरिक्षं च मां च । त्रींश्च लोकान्संवत्सरं च । प्रजापतिस्त्वासादयतु । तया देवतयाङ्गिरस्वद्ध्रुवासीद ॥ स्वरादित्यं च दिवं च मां च । त्रींश्च लोकान्संवत्सरं च । प्रजापतिस्त्वासादयतु । तया देवतयाङ्गिरस्वद्ध्रुवासीद' ॥ इति । 'हरिब्रह्मेश्वरेभ्यश्च प्रणम्य विदधात्यथ । यज्ञोपवीतमित्यादि व्याहृत्या वापि धारयेत्' ॥ प्रतितन्तु देवताभेदमाह स एव—'ओंकारः प्रथमस्तन्तुर्द्वितीयोऽग्निस्तथैव च । तृतीयो भगदैवत्यश्चतुर्थः सोमदैवतः ॥ पञ्चमः पितृदैवत्यः षष्ठश्चैव प्रजापतिः । सप्तमो वसुदैवत्यो धर्मश्चाष्टम एव च ॥ नवमः सर्वदैवत्य इत्येता नव देवताः' इति । आह पितामहः—'य एतन्नाभिजानाति ब्रह्मसूत्रसमुद्भवम् । वेदोक्तं निष्फलं तस्य स्नानदानजपादिकम् ॥ ब्राह्मणो यो न जानाति ब्रह्मसूत्रस्य संस्थितिम् । महान्तं वहते भारं पशुर्गौरिव सर्वदा' इति । स्मृतिसारे—'यज्ञा-

न्यः परमात्मा य उच्यते चैव होतृभिः । उपवीतं ततोऽस्येदं तस्माद्यज्ञोपवीतकम्' इति । आचार्यस्तु—'यो ज्ञातृज्ञेययोरैक्यमविज्ञानन्द्विजोत्तमः । न त्यजेदात्मनः सूत्रं ब्राह्मं ब्रह्मविनिर्मितम् ॥ सिसृक्षुरेक एवाग्रे समासीनः शिवः स्वयम् । दृष्ट्वा गुणमयीं मायां सूत्ररूपामिनाकरोत् ॥ तया तदात्मकं विष्णुं दृष्ट्वा पालं दिवौकसाम् । स्वयं ब्रह्माभवद्रुद्रो रुद्रस्तस्य क्षयाय सः ॥ ज्ञानात्मकेन हरिणा ब्रह्मेत्थमिन्धितेऽव्यये । तत्सूत्रमुपवीतत्वाद्ब्रह्मसूत्रमिति स्मृतम् ॥ यज्ञेन चोपवीतत्वाद्यज्ञसूत्रं विदुर्बुधाः । तदाज्ञया कृतवान् ब्रह्मणा ब्रह्मसूत्रकम् ॥ तानल्लोकास्त्रयो वेदास्त्रयो देवास्त्रयोऽग्नयः । शिवसृष्टास्त्रयो वर्णास्त्रिवृत्सूत्रं समाश्रयन् ॥ तद्ग्रन्थिमाश्रयत्नागरिमानो नादसंयुतः । तद्ग्रन्थ्यग्रं च सावित्री वेदमाता शिवाज्ञया ॥ एवं द्वादशदेवत्यं ब्रह्मसूत्रं द्विजन्मनाम् । ब्रह्माग्रे कल्पयामास वेदार्हाणामनुत्तमम् ॥ येनांसे धृतमात्रेण ब्रह्मसूत्रेण ते द्विजाः । भवन्ति ब्राह्मणा नाम वेदार्हाश्च त्रयस्त्विह ॥ यावत्प्रभृति यस्यांसे ब्रह्मसूत्रं द्विजस्य तु । गुरुः प्रतिष्ठापयति कालप्रभृति संयतः ॥ तावत्प्रभृति तस्यैव पिताचार्यः स उच्यते । माता च तस्य सावित्री द्वितीयं जन्म चोच्यते ॥ आकटेस्तत्प्रमाणं स्यादीर्घतन्तुस्थितं तथा । कनिष्ठाङ्गुलवत्स्थूलं तदर्धं वा त्रिवृच्छुभम् ॥ आयुर्हरत्यतिह्रस्वमतिदीर्घं तपोहरम् । यशोहरमतिस्थूलमतिसूक्ष्मं धनापहम् ॥ पवित्रं परमं शुक्लमायुष्यं च श्रियावहम् । ओजस्यं ब्रह्मवर्चस्यं ब्रह्मसूत्रं यथोदितम्' इति ॥ कात्यायनः—'पृष्ठदेशे च नाभ्यां च धृतं यद्विन्दते कटिम् । तद्धार्यमुपवीतं स्यान्नातिलम्बं न चोच्छ्रितम्' इति ॥ वसिष्ठः—'नाभेरूर्ध्वमनायुष्यमधोनाभेस्तपःक्षयः । तस्मान्नाभिसमं कुर्यादुपवीतं विचक्षणः'

पाठा—१ स्यधाम्न । २ भवात्मनि शिवे । ३ शुक्लमायुष्यं ।

इति । वर्णभेदेन द्रव्यभेदमाह मनुः—'कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत्। शणसूत्रमयं राज्ञो वैश्यस्याविकसूत्रजम्' इति । त्रिसूत्रमयमिति यावत् । देवलस्तु—'कार्पासक्षौमगोवालशणवल्कतृणादिकम् । सदा संभावितं धार्यमुपवीतं द्विजातिभिः ॥ कार्पासकं ममादद्यान्छुचिक्षेत्रविशोधितम् । त्रिवृतं तु तया नार्या ब्राह्मण्या सूत्रकं कृतम्' इति । भृगुः—'त्रिवृदूर्ध्ववृतं कार्यं तन्तुत्रयमधोवृतम् । त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते' इति ॥ ॥ उपवीतधारणसंख्यामाह स एव—'उपवीतं बटोरेकं द्वे तथेतरयोः स्मृते । एकमेव यतीनां स्यादिति शास्त्रस्य निश्चयः' इति । गृहस्थस्य नित्योपवीतविषयमेतत् बहुषु कामश्रवणात् । तथाह देवलः—'बहूनि वायुष्कामस्य' इति । 'ब्रह्मसूत्रेऽपसव्येंऽसे स्थिते यज्ञोपवीतिता । प्राचीनावीतिता सव्ये कण्ठस्थे च निवीतता' इति । तत्र श्रुतिः—'दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतमेतदेव विपरीतं प्राचीनावीतं संवीतं मानुषम्' इति । स्मृतिसारे—'छेदे विनाशे वा स्नातः कन्यया निर्मितं शुभम् । विधवाद्याभिरथवा सूत्रं गृह्णीत वै शुचि' इति ॥ इत्युपवीतलक्षणम् । इति संभारसंभरणम् ॥

अथापरेद्युःकृत्यम् । तत्र कारिका—'कृतस्नानमलंकुर्यादाशिषो वाचयेदथ । भुक्तभोज्यस्य शिरसो वपनं स्नानमेव च ॥ एवंभूतं कुमारं तमवस्थाप्याग्निके ततः । ज्योतिःशास्त्रविदुक्ते तु मुहूर्ते शोभने ततः ॥ आज्यसंस्कारपर्यन्तमुपलेपादिपूर्ववत् । परिधानं भवेदस्य वाससैवाहतेन तु ॥ भवेत्प्रावरणं वासः कृष्णाजिनमथापि वा । एवंभूतं कुमारं तं कुर्याद्यज्ञोपवीतिनम् ॥ आचा-

पाठा०—१ त्रिवृतस्तुतया ।

न्तमुत्तरेणाग्यं यज्ञपात्राणि चानयेत् । अन्तरेणाग्निमात्मानं दक्षिणे तूपवेशयेत् ॥ बर्हिरास्तरणादि स्यात्स्रुवसंमार्जनान्तकम् । समन्वारब्ध एतस्मिन्ब्रह्मचारिण्यथेतरः ॥ कुर्यादाघारपर्यन्तं चौलोक्ताज्याहुतीरपि । अत्राज्यभागौ नैवेद्याविल्युक्तं पूर्वमेव तु ॥ अग्नेरुत्तरतस्तिष्ठेदाचार्यः प्राङ्मुखस्ततः । अकुर्वन्नात्मनोऽग्नेश्च व्यवायं गच्छतीतरः ॥ आचार्यस्य पुरस्तात्तु तिष्ठेत्प्रत्यङ्मुखस्ततः । अन्यवायस्तु संस्कारकर्मस्वग्निकुमारयोः ॥ ब्रह्मचारिण आचार्यः पूरयेदद्भिरञ्जलिम् । आचार्यस्याञ्जलिं त्वन्यः पूरयेद्वै ततो गुरुः ॥ तत्सवितुर्वृणीत्यस्य निनीयाञ्जलमञ्जलौ । अवक्षारयतीत्यर्थः स्वेन पूर्णं तमञ्जलिम् ॥ देवस्यत्वेति गृह्णीयात्पाणिं साङ्गुष्ठमस्य तु । असौस्थानेऽस्य नाम स्यादेवमुत्तरयोरपि' इति ॥ जयन्तस्त्वाह—'असाविति पदस्थाने संबुद्ध्या चास्य निर्दिशेत् । आभिवादनिकं नाम नतु सांव्यवहारिकम्' इति । अप्पूरणादि तद्वत्स्यादन्यो मन्त्रः करग्रहे । सविताते हस्तमित्यप्पूरणादि तथा भवेत् ॥ हस्तग्रहे तु मन्त्रोऽयमग्निराचार्य इत्यथ । आचार्यो देवसवितरित्युक्त्वा रविमीक्षयेत् ॥ कस्येति परिदायैनं प्रजाधिपतये ततः । युवासुवर्चेशः कुर्यात्प्राङ्मुखं दक्षिणावृतम् ॥ अस्योपर्यंसयोः स्वस्य पाणी कृत्वा हृदि स्पृशेत् । तं धीरासोऽर्थतः कुर्याद्ब्रह्मचार्यूहनेक्षणे ॥ पर्यूहनमथैतदुत्तरार्धमिति ब्रुवन् । अत्र पर्यूहनं नास्तीत्याह हेतुं च वृत्तिकृत् ॥ तूष्णीं समिधमादध्यादग्नौ प्रादेशसंमिताम् । एतयर्चाथवा दध्यादग्नये समिधं तिति ॥ स्पृष्ट्वाग्निं तेजसामेति त्रिःसंमार्ष्टि ततो मुखम् । प्रक्षाल्य हस्तमनलमुपस्पृश्यावमार्ष्ट्यथ ॥ प्रक्षाल्य पूर्ववत्स्पृष्ट्वा तृतीयमवमार्ष्ट्यथ । ओष्ठौ विलोमकौ कृत्वा संवृतौ तन्निमार्जनम् ॥ उपस्थाय मयीत्यादि षड्भिर्मन्त्रैरतः परम् । जान्वाच्य दक्षिणं पादावाचार्यस्योपगृह्य च ॥ नाम्नाभिवादनीयेन शिरः स्वस्यावनम्य च । अधीहीत्यादिकं प्रैषं ब्रह्मचारी

व्रतीत्यथ ॥ ब्रह्मचारिण आचार्यः परिधानीयवाससा । पाणिभ्यामात्मनस्तस्य पाणी गृह्णात्यतः परम् ॥ ॐभूर्भुवःस्वःपूर्वां तु सावित्रीं वाचयेदथ । पादंपादं च सावित्र्याः स्वयमुक्त्वाथ वाचयेत् ॥ ततस्त्वर्धर्चमर्धर्चं सर्वां तामथ वाचयेत् । एवं वक्तुमशक्तश्चेत्तं यथाशक्ति वाचयेत् ॥ स्थापयेद्बह्नसमीपे तु ममेत्यूर्ध्वाङ्गुलिं करम् । आबध्य मेखलां दद्याद्दण्डं चालोच्य मानतः ॥ आदिशेद्ब्रह्मचर्यं च सांप्रतं ब्रह्मचार्यसि । अपोशानेति मूत्रादावुक्तमाचमनं कुरु ॥ कर्म कुर्विति संध्यादि विहितौपासनादिकम् । दिवा मा स्वाप्सीरित्यस्य दिवा निद्रां न कुर्विति ॥ आचार्याधीन इत्यस्य मयानुज्ञात एव सन् । अशान यद्वा कर्मान्यत्सर्वं च मदनुज्ञया ॥ मन्त्रराशिमधीष्व सं ब्राह्मणानि समाहितः । प्रैषार्थमेवमुक्त्वाथ कालमेकं च निर्दिशेत् ॥ परिषेचनपर्यन्तं कुर्यात्स्विष्टकृदादिकम्' इति ॥ इदमत्र गृह्यम्—'अलंकृतं कुमारं कुशलीकृतशिरसं (भुक्तवन्त)महतेन वाससा संवीतम्' इति । अस्यार्थः—अत्र कुमाराधिकारे पुनः कुमारवचनं उपनीतपूर्वस्य पुनरुपनयनशङ्का माभूदिति व्याख्यातुम् । कुशलीकरणं वपनम् । यथाशिपो राचयेत् । ततो भोज्यं तु भुक्तवतः कुमारस्य शिरसो वपनं स्नानं च भवेदिति ॥ अत्र गृह्यम्—'समन्वारब्धे हुतोत्तरतोऽग्नेः प्राङ्मुख आचार्योऽवतिष्ठते पुरस्तात्प्रत्यङ्मुख इतरः अपामञ्जली पूरयित्वा तत्सवितुर्वृणीमह इति पूर्णेनास्य पूर्णमवक्षारयत्रप आसिच्य—देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसाविति तस्य पाणिना पाणिं साङ्गुष्ठं गृह्णीयात्—सविता ते हस्तमग्रभीदसाविति द्वितीयं अग्निराचार्यस्तवासाविति तृतीयं आदित्यमीक्षयेत्—देवसवितरेष ते ब्रह्मचारी तं गोपाय समामृतेत्याचार्यः—कस्य ब्रह्मचार्यसि प्राणस्य ब्रह्मचार्यसि कस्त्वाकमुपनयते काय त्वा परिददामीति—युवासुवासाः परिवीत आगादि-

स्वर्धर्चेनैनं प्रदक्षिणमावर्तयेत् तस्याध्यंसौ पाणी कृत्वा हृदयदेशमस्यालभेतोत्तरेण अग्निं परिसमुह्य ब्रह्मचारी तूष्णीं समिधमादध्यात्तूष्णीं वै प्राजापत्यं प्राजापत्यो ब्रह्मचारी भवतीति विज्ञायते। मन्त्रेण हैके–अग्नये समिधमाहार्षं बृहते जातवेदसे। तया त्वमग्ने वर्धस्व समिधा ब्रह्मणा वयं स्वाहेति स समिधमाधायाग्निमुपस्पृश्य मुखं निमार्ष्टि त्रिस्तेजसा मा समनज्मीति तेजसा ह्येवात्मानं समनक्तीति विज्ञायते। मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु। मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु। मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु। यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासं। यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासं। यत्ते अग्ने हरस्तेनाहं हरस्वी भूयासं। इत्युपस्थाय जान्वाच्योपसंगृह्य ब्रूयादधीहि भोः सावित्रीं भोअनुब्रूहीति तस्य वाससा पाणिभ्यां च पाणी संगृह्य सावित्रीमन्वाह पच्छोर्धर्चशः सर्वां यथाशक्ति वाचयीत हृदयदेशेऽस्योर्ध्वाङ्गुलिं पाणिमुपदधाति–मम व्रते हृदयं ते दधामि मम चित्तमनु चित्तं ते अस्तु। मम वाचमेकव्रतो जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम्। इति मेखलामाबध्य दण्डं प्रदाय ब्रह्मचर्यमादिशेत्–ब्रह्मचार्यस्यपोशान कर्म कुरु दिवा मास्वाप्सीराचार्याधीनो वेदमधीष्वेति द्वादशवर्षाणि वेदब्रह्मचर्यं ग्रहणान्तं वा सायंप्रातर्भिक्षेत सायं प्रातःसमिधमादध्यात्' इति॥ अस्यार्थः—आज्यस्य बर्हिष्यासादनान्तं कृत्वा समन्वारब्धे ब्रह्मचारिणि इध्माधानाद्याघारान्तं कृत्वा पूर्वोक्ताज्याहुतीर्हुत्वोत्तरतोऽग्नेः प्राङ्मुख आचार्योऽवतिष्ठते। ब्रह्मचारी तु तीर्थेन प्रविश्य आचार्यस्य दक्षिणत उपविशेत्। तीर्थं नाम प्रणीतानां पश्चिमो देशः। सर्वत्र तीर्थेनैव प्रविश्य कर्म कुर्यात्। आचार्यस्य पुरस्तात्प्रत्यङ्मुखो ब्रह्मचारी अवतिष्ठते। अपामुभयोरञ्जली पूरयित्वा स्वस्य पूर्णेनाञ्जलिनास्य पूर्णमञ्जलिमवधारयति–तत्सवितुर्वृणीमह इति मन्त्रेण। ब्रह्मचा-

रिणोऽञ्जलावात्मनोऽञ्जलिमवक्षारयतीत्यर्थः । ततो देवस्येति मन्त्रेण तस्य पाणिं साङ्गुष्ठं गृह्णीयात् । आचार्योऽञ्जलिमर्थादन्यः पूरयति । अत्रासिच्येति वचनं कथम् । आचार्योऽवक्षारणं कुर्यान्न कुमार इत्येवमर्थम् । इतरथा पूर्णेनास्य पूर्णमवक्षारयतीत्युक्ते कस्य कस्याञ्जलिमवक्षारयतीति संदेहः स्यात् । आसिच्येति तूच्यमानत्वात्प्रत्ययस्य 'समानकर्तृकयोः पूर्वकाले' इति समानकर्तृविहितत्वाद्यः पाणिं गृह्णाति सोऽवसिञ्चेदित्यवगम्यते । तेनाचार्योऽवक्षारयतीति सिद्धम् । असावित्यस्य स्थाने संबुद्ध्या ब्रह्मचारिनाम ब्रूयात् । द्वितीयं तृतीयमिति संख्यावचनं प्रथमहस्तग्रहणप्रतिपादितापःपूरणाद्यञ्जल्योरवक्षारणादिक्रमविशिष्टधर्मप्राप्त्यर्थम् । हस्तग्रहेतु मन्त्रभेद इति सूत्रकाराभिप्रायः । आचार्यस्ततो ब्रह्मचारिणमादित्यमीक्षयेन्मन्त्रेण । आचार्यग्रहणं ज्ञापनार्थं अन्यत्रेक्षणे ब्रह्मचारिणो मन्त्रो नाचार्यस्येति । तेनादित्यमीक्षयेन्मित्रस्य त्वा चक्षुषा प्रतीक्षे इत्यत्र ब्रह्मचारिणो मन्त्रः सिद्धः । कस्येति । जपेदिति शेषः । मन्त्रलिङ्गात् । प्रजापतये ब्रह्मचारी प्रदीयते तेनाचार्यस्यायं मन्त्रः । युवेत्यर्धर्चेनैनं ब्रह्मचारिणं प्रदक्षिणमावर्तयेत् । एनमिति वचनं कथम् । आवर्तयितुर्मन्त्रः स्यान्नावर्त्यमानो ब्रूयात्कुमार इत्येवमर्थम् । अर्धर्चग्रहणमृङ्निवृत्त्यर्थम् । इतरथा 'ऋचं पादग्रहणे' इति ऋक् स्यात् । तस्येति । अधीत्युपरिभागे । ब्रह्मचारिणोंऽसयोरुपरि स्वस्य पाणी कृत्वा तस्य हृदयसमीपं स्पृशेदुत्तरार्धर्चेन । अग्निमिति । अत्र परिसमूहनवचनमनर्थकम् । संस्कृतत्वादग्नेः । उच्यते—सायंप्रातःसमिदाधाने परिसमूहनपर्युक्षणे यथा स्यातामिति परिसमूहनवचनम् । अयन्तु परिसमूहनाद्यहस्तेन तस्मिन्नेवाग्नौ ब्रह्मचारी तूष्णीं समिधमादध्यात् । ब्रह्मचारिवचनमाचार्यनिवृत्त्यर्थम् । यस्मात् यत्प्राजापत्यं तत्तूष्णीम् । ब्रह्मचारीच प्राजापत्य इति श्रूयते तस्मात्तूष्णीं समिधमादध्यादिति । अत्र श्रुतिरपि—'यत्तूष्णीं तत्प्राजापत्यं'

इति। मन्त्रेणेति। एके मन्त्रेण समिदाधानमिच्छन्ति। इशब्दोऽभिमतलक्षणापनार्थः। अनेन पूर्वस्य श्रुत्याकृष्टलेप्युभयोस्तुल्यत्वं सिद्धम्। ब्रह्मचारी समिधमाधायाग्निमुपस्पृश्य मुखं निमार्ष्टि मन्त्रेण त्रिः। मन्त्रावृत्तिरुक्ता। सग्रहणं समिधो वा जपेद्वेत्यत्र वक्ष्यमाणविधिर्माभूत्। समिद्ग्रहणमुभयोरपि पक्षयोरुत्तरो विधिर्यथा स्यादिति। आधायग्रहणं सायंप्रातः समिधमादध्यादित्यत्रापि यथा स्यात्। श्रुत्याकर्षः फ़पम्। अग्न्युपस्पर्शनमपि त्रिः स्यादिति। मयीति। उपस्थानं नाम मन्त्रार्थस्मरणपूर्वकं प्रणतियुक्तमुपस्थानम्। एवं षड्भिर्मन्त्रैरुपस्थाय दक्षिणं जान्वाच्य विधिवदुपसंगृह्य आचार्यं ब्रूयादधीहीति प्रैषेण। तथेति। तस्य ब्रह्मचारिणः परिहितेन वाससा प्रावरणस्यानित्यत्वात्स्वस्य पाणिभ्यां तस्य पाणी गृहीत्वा सावित्रीमन्वाह। यथेति। स्वयं पादंपादमुक्त्वा तेन वाचयति। यदि ब्रह्मचारी पादंपादं वक्तुं न शक्नोति ततस्तेन यथाशक्ति वाचयीत। एवमर्धर्चशः। एवं सर्वाम्। हृदयमिति। ब्रह्मचारिणो हृदयसमीपे स्वस्य पाणिमूर्ध्वाङ्गुलिमुपदधाति स्थापयति मन्त्रेण। मेखलामिति। ततो मेखलामाबध्य दण्डं प्रदाय ब्रह्मचर्यमादिशेत्। इत्थमादिशेदित्याह—ब्रह्मचारीति। इदानीं ब्रह्मचार्यसि। अतः अपोशान—मूत्रपुरीषादौ शास्त्रविहितमाचमनं कुर्वित्यर्थः। कर्म कुरु—यच्छास्त्रविहितं कर्म संध्योपासनादि। दिवा मा स्वाप्सीरिति दिवाशयनप्रतिषेधः। आचार्याधीनो नित्यं भव। वेदमधीष्व वेदाध्ययनं कुरु। द्वादशेति। वेदस्य ब्रह्मचर्यं वेदब्रह्मचर्यम्। वेदग्रहणं कथम्। वेदमात्रस्यायं कालनियमः स्यादिति। मन्त्रब्राह्मणयोर्वेदनामधेयम्। तेन महानाम्न्यादीनां व्रतानामूर्ध्वं द्वादशवर्षेभ्यस्त्रयः संवत्सराः स्युः। एवंच कृतोपनयनप्रभृति षोडशे वर्षे गोदानं सिद्धम्। वेदग्रहणादयमर्थो लब्धः। एवमेके। अन्ये तु जन्मप्रभृति षोडशे वर्षे गोदानम्। महानाम्न्यादीनां च व्रतानां द्वादश-

वर्षपर्यन्तमपीच्छन्ति महानाम्न्यादीनामपि वेदैकदेशत्वादिति। पूर्वस्मिन्पक्षे यदा संवत्सरं व्रतचर्या तदा सप्तदशे गोदानं स्यात् । तस्मादयमेव पक्षः श्रेयान् । वेदग्रहणं कथम् । एकैकस्य वेदस्य द्वादशवर्षाणि वेदब्रह्मचर्यं स्यादिति। तेन द्वयोश्चतुर्विंशतिः त्रयाणां षट्त्रिंशत् चतुर्णामष्टाचत्वारिंशत् । ग्रहणान्तं वेति वेदग्रहणान्तं वा ब्रह्मचर्यं भवति प्रागूर्ध्वं वा द्वादशभ्यः। एवं ब्रुवता त्रिविधं स्नानं प्रदर्शितं भवति—विद्यास्नानं व्रतस्नानं विद्याव्रतस्नानमिति । यस्तु प्राग्द्वादशवर्षेभ्यो वेदमधीत्य स्नाति स विद्यास्नातकः। यः पुनर्द्वादशवर्षाणि ब्रह्मचर्यं कृत्वाऽनधीतवेदः स्नाति स व्रतस्नातकः । यस्तु पुनर्द्वादशवर्षाणि ब्रह्मचर्यं कृत्वा अधीतवेदः स्नाति स विद्याव्रतस्नातकः। ननु 'विद्यान्ते गुरुमर्थेन निमन्त्र्य स्नानमि'ति वक्ष्यति अतः कथं व्रतस्नानस्य संभवः । उच्यते—विद्यान्त इति न विद्यापरिसमाप्तौ स्नानं चोद्यते किंतर्हि विद्याया अन्ते न मध्ये। तेन व्रतस्नातकोऽपि मध्यमुत्सृज्यान्तमारण्यकमधीत्य स्नायात् । रहस्ये चारण्यकं प्राधान्येन स्नाननिमित्तं चोद्यते 'नेदमनधीयन्स्नातको भवती'त्यादिना। ततः स्विष्टकृदादिहोमशेषं समापयेदिति ॥ ॥अत्राचार्यः स्मृतिरूपेणाह—'कालादि पूर्वमुदितं यथोपनयने द्विजाः । विशेषं तत्र वक्ष्यामि विकल्पस्य च निर्णये ॥ संस्कृताज्यं यथान्यायं बर्हिषि स्थाप्य पश्चिमे । भुवसंमार्जनं कृत्वा कुर्याद्यज्ञोपवीतिनम् ॥ ऋष्यादि सर्वं विज्ञाय तन्त्रविन्मन्त्रसूत्रयोः । यज्ञोपवीतमन्त्रेण कुर्याद्यज्ञोपवीतिनम् ॥ ब्रह्मा स्याद्यज्ञसूत्रस्य मुनिर्गाथत्रमीरितम् । छन्दः प्रजापतिर्देव ओंकारोऽप्यथवा त्रिवृत् ॥ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ एतेन वह्वृचोऽप्यग्नेरुदक्तिष्ठन्तमर्भकम् । प्राङ्मुखं प्राङ्मुखस्तिष्ठन्कुर्याद्यज्ञोपवीतिनम् ॥ अत्र यज्ञोपवीतधारणानन्तरं मेखलाजिनदण्डधारणपूर्वकं होममाह स एव—'आचार्येणाजिनादीनि दातव्यानि स्थितस्य वै । ब्रह्मसूत्रप्रदानान्ते प्राङ्मुखस्य स्थितस्य तु ॥ आबध्य मेखलां दद्यादजिनं

दण्डमेव च । सम्यगाचमयित्वा तमन्तरेणाभ्यवायतः ॥ आगत्य प्राङ्मुखासीनं स्पृशन्होमं समाचरेत् । तद्धर्मलक्षितेनैव व्रतिना हूयतेऽनलः ॥ गृह्यते चापि सावित्री तथाऽऽयं च दीयते । संधार्यंते चाममासेर्दण्डादि ब्रह्मचारिणा ॥ आदेशकालक्षरणमुक्तं गृहे मयैव तत् । तावत्प्रभृति न त्याज्यान्येतानीत्यासमापितः ॥ व्रती स्याद्व्रतिनो नित्यमित्याकाङ्क्षितशेषतः । तस्मात्सूत्रप्रदानेन ग्राह्याण्येतानि धीमता' इति ॥ अत्राचार्यः स्वयं गृह्ये हृदयस्पर्शनानन्तरं मेखलादण्डधारणमुक्तवान्, सएव च स्मृतिरूपेण यज्ञोपवीतधारणानन्तरं होमात्पूर्वं मेखलाजिनदण्डधारणमुक्तवान् । अत्रैककर्तृकयोः कल्पस्मृत्योः प्रमाणभूतयोर्विरोधे सति काल्पविकल्पो द्रष्टव्यः । तथाच सएव परिभाषायामाह—'तत्रानुक्तं विशेषं च विकल्पं च समासतः' इति । अत्र न्यायविद आहुः—'गर्भव्याख्याविकल्पानां द्वयमिष्टं प्रयोजनम् । पूर्वत्रापरितोषो वा विषयव्याप्तिरेव वा' इति ॥ अथाञ्जलिक्षारणादौ कारणमाह सएव—'शुचित्वसिद्धये तस्य साविरीग्रहणे गुरुः । अभिमन्त्र्य यथा वारि सिञ्चत्येव तदञ्जलौ ॥ एवं त्रिवारं शिष्यस्य हस्तं गृह्णाति देशिकः । संबोध्य पावकं तावत्साक्षात्कृत्य गुरुस्तदा ॥ हस्तं गृह्णाति शिष्यस्य मन्त्रैः शिष्यत्वसिद्धये । सूर्यात्मा देशिको भूत्वा पावकात्मा च संयतः ॥ शिष्योसीति च संबोध्य शृण्वन्तमिति निर्दिशेत् ॥ कर्मसाक्षिणमादित्यं तर्पयेतां यथोक्तवत् ॥ सर्वव्रतानां भगवान्सूर्योऽधिपतिरीश्वरः । कालकर्मगुणानां च तस्मात्तं तर्पयेत्तदा ॥ ततो व्रतानां पतये ददाति रवये वटुम् । रवेः संमाननार्थाय रक्षार्थं तद्वटोरपि ॥ असामर्थ्यात्समाहर्तुमात्मनस्तं गुरुः पुनः । ददाति मन्त्रवद्ब्रह्म प्रजानां पतये पुनः ॥ प्रजापतये

पाठा०—१ तद्धर्मरहितेनैव । २ स्वासीनस्य गुरुः ।

मूर्धाय द्वाभ्यां दत्त इति स्मरन् । गृहीत्वैवांसयोः शिष्यं समालभ्यात्मसात्करोत् ॥ कुर्वन्त्येवात्मसात्सन्तः सर्वान्पूर्वमुखस्थितान् । तस्मात्पूर्वमुखं कृत्वा गृह्णीयाच्छिष्यमेव तम् ॥ गुरोरग्रे: प्रधानलात्प्रागग्नौ जुहुयाद्बुधः । ततो गुरुं नमस्कुर्यादधीष्वेत्यभिवाञ्छितम् ॥ नापृष्टः कस्यचिद्ब्रूयादिति शास्त्रविदां मतम् । तस्माद्विचार्य ब्रूहीति पृच्छेदाचार्यमादरात्' इति ॥ अत्र सावित्रीग्रहणे ब्रह्माञ्जलिकरणमुक्तं तेनैव—'आदौ वेदान्विनिष्पन्नान्स्वमुखेभ्यश्चतुर्मुखः । गृहीतवान्स्वपाणिभ्यां यथोपस्थे निधाय तौ ॥ तथा भृग्वादयः सर्वे येन्ये विप्राश्च सत्तमाः । तावत्प्रभृति कुर्वन्ति वेदस्वाध्यायकर्मणि ॥ उत्तानं वामपाणिं तु प्राङ्मुखं दक्षिणं तथा । पाण्योः पृष्ठं दृढं कुर्यादङ्गुलीभिः परस्परम् ॥ अङ्गुष्ठौ च दृढीकृत्य क्रियते या तथाञ्जलिः । सा ब्रह्मणा कृतत्वात्प्राग्ब्रह्माञ्जलिरिति स्मृता ॥ वेदारम्भे विशेषेण समाप्तौ च प्रशस्यते । अध्ययने च कार्या स्यात्सावित्र्या ग्रहणे भृशम्' इति ॥ अनन्तरं कर्तव्यमाह सएव—'सावित्र्यास्तु प्रदानान्ते दद्यात्तस्मै व्रतान्गुरुः । तद्वद्व्यर्धाङ्गुलिं हस्तं कृत्वा दक्षिणमात्मनः ॥ सावित्रीग्रहणे कल्पो व्रतसंधारणाद्गुरोः । भवेत्तु नान्यथा कल्पः शिष्यः प्रागकृतव्रतः ॥ वेदमाता द्विजैः शक्या यथावच्चरितव्रतैः । सर्वं तस्माद्गुरुस्तस्मै ददाति व्रतमात्मनः' इति ॥ अत्राजिनदण्डधारणे कारणमाह सएव—'व्रतिनां ब्रह्मसिद्ध्यर्थं मृगाजिनमिहेष्यते । मेखला च पवित्रं च रक्षा शुद्ध्यर्थमेव च ॥ अदान्तं दमयित्वा मां मार्गे संस्थापयन्स्वयम् । दण्डः करे स्थितो यस्मात्तस्माद्रक्ष यतो भयम् ॥ इति नित्यं स विमृशन्पश्यन्दण्डं करे स्थितम् । स्वधर्मं न त्यजेद्धीमान्विधर्माणि न चाश्रयेत् ॥ अदान्तं दमयन्दण्डो मार्गे संस्थापयेन्नरान् । चतुराश्रमिणां हस्ते करोति वसतिं सदा ॥ विधर्मं त्यजतां नित्यं स्वधर्मं चरतामिह । दण्डो भोगाय रक्षायै स्वर्गाय च

भवेदिह ॥ स्वधर्मं त्यजतां नित्यं परधर्मप्रवर्तिनाम् । दण्डो नाशाय भवति नरकायासुरायच ॥ असत्कर्मकृतां दण्डः समूर्ध्येव पतिष्यति । सत्कर्म चरतां नित्यं योगक्षेमाय कल्पते ॥ चतुर्णामाश्रमाणां च दण्डधारणमिष्यते । त एते नियता नित्यं संयताः स्युः प्रयत्नतः ॥ द्वितीयजन्मनः सिद्ध्यै वाससा व्रियते द्विजः । गर्भस्योल्वणरूपेण तस्मात्तत्क्रियते सदा ॥ ऊर्ध्वं निष्क्रमणं यावत्तावज्जन्मास्य वै यथा । तथा यज्ञोपवीतस्य धारणं वै द्विजन्मनाम् ॥ तस्मात्तावद्द्विजानां तु चिह्नान्येतानि भागशः' इति । अत्राचार्योक्ताभिवादनप्रकारं ब्रह्मचारिधर्मे कथयिष्यामः ॥

अत्र भगवान्—'अपरेद्युः कृतस्नानभूषणस्वस्तिवाचनम् । कृतकौतुकबन्धं च कुमारं कृतभोजनम् । उप्तोत्तमाङ्गं भूयोपि स्नातमात्मसमीपतः ॥ संनिधाप्य गुरुः पुण्ये मुहूर्ते पुरतस्तनम् । तत्रं कृत्वाज्यसंस्कारपर्यन्तमवधानतः ॥ अथोत्थाय गुरुर्वेदेः पश्चात्स्थित्वा तु माणवम् । प्राङ्मुखं समवस्थाप्य परिधाप्यैकमम्बरम् ॥ अथास्य दक्षिणकरं किंचिदूर्ध्वं प्रसारितम् । स्थापयित्वा द्वितीयेन वाससा वाऽजिनेन वा ॥ अवगुण्ठ्य ततस्तस्य करस्याग्रेऽवगुण्ठिते । निक्षिप्य ब्रह्मसूत्रं तु वितस्त्याधः प्रसार्य च ॥ वामांसे स्थापयित्वैव तथा कृष्णमृगाजिनम् । शिरोवगुण्ठमुपरि निक्षिप्योपनिधाय च ॥ ततः शास्त्रोक्तविधिना यत्नेनाचमयेदपः । आचान्तवन्तमाज्यादियज्ञाङ्गादुत्तरेण तम् ॥ नीत्वा माणवमाचार्यो वह्निं चात्मानमन्तरा । गमयित्वात्मनः पार्श्वे दक्षिणे चोपवेश्य तम् । परिध्याधानमारभ्यानूयाजस्थापनावधि ॥ तत्रं कृत्वा ततस्तेन संस्पृष्टः पाणिना गुरुः । इध्माधानादिकं शेषमाज्यभागाहुतीर्विना ॥

पाठा०—१ गर्भस्योल्वस्वरूपेण । २ वितस्त्याय प्रसार्य ।

पुरस्ताच्चममाचार्यः प्रधानाहुतिमाचरेत् ॥ अग्नआयूंषिपवेत्याद्यैर्श्चौलहोमः कृतः पुरा ॥ तैरेव मन्त्रैरत्रापि जुहुयाचानुसरन् । हुत्वै-वमुत्थायाचार्यो वह्नेरुत्तरतोऽन्तिके ॥ प्रदेशे प्राङ्मुखस्तिष्ठेच्छिष्योप्युत्थाय वह्निना । व्यवधानं परिहरन्गत्वाचार्यस्य पूर्वतः ॥ आचार्याभिमुखः स्थित्वा घटयेत्स्वयमञ्जलिम् । निदधाति तमप्यन्यो वारिणा पूरयेत्ततः ॥ तत्सवितुर्वृणीमहे वयमित्याद्यृचानया । शिष्याञ्जलौ स्वाञ्जलिस्थमवक्षार्योदकं गुरुः ॥ शिष्याञ्जलिगताश्चापोऽवक्षार्य स्वेन पाणिना ॥ देवस्यत्वेति गृह्णामीत्यन्तं यजुरुदीर्य तु ॥ शर्मान्तं नाम संबुद्ध्या निर्दिश्य च बटोः पुनः । साङ्गुष्ठं दक्षिणं पाणिं गृह्णीयात्स्वेन पाणिना । एवमेव पुनः कुर्यादञ्जल्योः पूरणादिकम् । हस्तग्रहणपर्यन्तं कर्म हस्तपरिग्रहे । तत्तन्मन्त्रैस्तु सवितेत्यादि स्यादितरत्समम् ॥ पुनश्च पूर्ववत्कुर्यादञ्जल्योः पूरणादिकम् । मन्त्रस्त्वग्निराचार्यस्तवेत्यादिः परिग्रहे । विद्यतेऽतोऽन्यदखिलं तन्त्रं पूर्ववदाचरेत् ॥ मन्त्रेण देवसवितरेष तेत्यादिना गुरुः । आदित्यमीक्षयेच्छिष्यमथोभावपि पूर्ववत् ॥ तिष्ठतामुत्तरेणाग्निमन्योन्याभिमुखौ ततः । धात्रे परिददाम्येनमिति संकल्पपूर्वकम् । कस्यब्रह्मादिकं मन्त्रं ददाम्यन्तं गुरुर्जपेत् ॥ युवासुवासा इत्याद्यं मन्त्रार्धर्चमुदीर्य तम् । प्रदक्षिणमुपावर्त्य प्रापयेत्प्राङ्मुखं बटुम् ॥ अस्योपरि तदंसाभ्यां पाणी कृत्वात्मनो गुरुः । तंधीरासः कवय उन्नयन्तीत्याद्यमुत्तरम् । अर्धर्चमुक्त्वोरोदेशं हस्ताभ्यां युगपत्स्पृशेत् ॥ ततः पूर्ववदासीत गुरुः शिष्योपि चात्मना । व्यवधानं परिहरन्वमेगैत्वान्तिकं गुरोः ॥ आसित्वा दक्षिणे तस्य वह्निं परिसमुह्य च । तूष्णीं समिधमादध्यात्प्राङ्मुखो यदि वाग्नये ॥ इत्यादिकं खिलं मन्त्रं स्वाहेत्यन्तमुदीर्य तु । आदध्यादेवमाधाय

---

पाठा०—१ प्रक्षाल्य स्वेन । २ रुदीर्य तत् ।

कुर्यात् । तथाह संग्रहकारः—'विवाहे वारुणी जिह्वा मध्यमा यज्ञकर्मसु । उत्तरा चोपनयने दक्षिणा पितृकर्मसु ॥
प्राचीना सर्वकामेषु आग्नेयी शान्तिकर्मसु । ऐशानी चोग्रकार्येषु एतद्धोमस्य लक्षणम्' इति ॥ ❀ ॥ अथ यज्ञोपवी-
तधारणमौञ्जीबन्धनमन्त्रान्माणवकेन वाचयेदित्याह बोधायनः—'भुक्तवन्तं वापितशिरसं स्नातं बद्धशिखं यज्ञोपवीतं
प्रतिमुञ्चन्वाचयति यज्ञोपवीतं परममित्यादि' इति ॥ ❀ ॥ मौञ्जीबन्धने मन्त्रमाहापस्तम्बः—'अथैतां मौञ्जीं मेखलां
त्रिवृतां त्रिःप्रदक्षिणमुत्तराभ्यां परिवीयति' । उत्तराभ्यां इयं दुरुक्तेति ऋग्भ्याम् । बोधायनोपि—'अथैतां मौञ्जीमेखलां
त्रिवृतां त्रिःप्रदक्षिणं परिव्ययन्वाचयति मौर्वीज्यां राजन्यं आवीसूत्रं वैश्यं सर्वानेव वा मौञ्जी इयं दुरुक्तात्परिबाधमाना
शर्म वरूथं पुनती न आगात् । प्राणापानाभ्यां बलमाभरन्ती प्रिया देवानां सुभगा मेखलेयम् ॥ ऋतस्य गोप्त्री
तपसः परस्पी घ्नती रक्षः सहमाना अरातीः । सा नः समन्तमनुपरीहि भद्रया भर्तारस्ते मेखले मा रिषाम ॥ इति ग्रन्थिं करोति
प्राणानां ग्रन्थिरसि मा विस्रंस इति नाभिदेशे' इति ॥ आश्वलायनाचार्यैस्तु—'त्रिवृता मेखला कार्या त्रिवारं स्यात्समावृता ।
तद्ग्रन्थयस्त्रयः कार्याः पञ्च वा सप्त वा पुनः ॥ वेदत्रयेणावृतोऽहमिति मन्येत स द्विजः । तद्ग्रन्थयस्तदङ्गानि तद्रहस्यानि संस्मरेत्'
इति ॥ इति होमप्रकरणम् ॥❀॥ अथ भिक्षाचरणम् । तत्र कारिका—'अप्रत्याख्यायिनं पूर्वं याचेद्भिक्षां भवानिति । भवतीति
युवत्याश्चेदप्रत्याख्यायिनी यदि ॥ भिक्षाद्यत्र समालब्धं गुरवे तन्निवेदयेत् । अहःशेषं ततस्तिष्ठेत्सायंसंध्यामुपास्य च' इति ॥ इद-
मत्र गृह्यम्—'अप्रत्याख्यायिनमग्रे भिक्षेताऽप्रत्याख्यायिनीं वा भवान्भिक्षां ददात्वित्यनुप्रवचनीयमिति वा तदाचार्याय वेदयीत

तिष्ठेदहःशेषम्' इति । अस्यार्थः—अयं नियमोऽनुप्रवचनीयभैक्षे । कुतः । अनुप्रवचनीये मन्त्रान्भिक्षां ददात्विति भैक्षमन्त्रात् । स्त्री-भिक्षाचेदुभयत्रमन्त्रे भवती ददात्विति ब्रूयात्तल्लब्धमाचार्याय निवेद्य तस्मिन्नहनि तच्छिष्टं तावन्तं कालं तिष्ठेदासनादि न कुर्यात् ॥ भिक्षाप्रकारस्तत्रैवोक्तः—'भवत्पूर्वां ब्राह्मणो भिक्षां याचेत भवन्मध्यां राजन्यो भवदन्त्यां वैश्यः' इति ॥ अत्र मनुः—'भव-त्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः । भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम्' इति ॥ ॥ अत्राचार्यः स्मृतिरूपेणाह—'अ-प्रत्याख्यायिनीं नारीमप्रत्याख्यायिनं नरम् । ब्रह्मौदनार्थं विप्रार्थं सुशुद्धान्याचयेत्तदा ॥ पात्रे गृहीत्वा संपाद्य भिक्षामाहृत्य तत्स्व-यम् । निवेद्य गुरवे दत्त्वा भैक्षं श्रुत्वा समापयेत् ॥ आचारान्संविनिर्दिश्य भवेदाचार्यतो गुरोः । भैक्षेण भेपयेत्तस्माच्छिष्यं गृहो-क्तकर्मणा ॥ दिनशेषं नयेत्तिष्ठन्नैवप्रभृति तु व्रती । सावित्र्यां संप्रवृत्त्यर्थं विण्मूत्रोत्सर्जनादृते' इति ॥ अत्र भगवान्—'ब्रह्म-चारी निशारम्भे प्रैन्छन्ब्रह्मौदनं चरुम् । द्विजान्भोजयितुं पश्चाद्द्रव्यं भिक्षेत चान्धवान् ॥ अप्रत्याख्यायिनः पुंसः स्त्रियो या तादृशीः पुनः । भिक्षेत पात्रहस्तः सन्प्राप्य प्राप्य तदन्तिकम् ॥ अग्रे भिक्षेत जननीमप्रत्याख्यायिनी च या । पश्चात्पितरमन्येऽपि ये च स्युर्बा-न्धवास्ततः ॥ अत्र प्रकारो भिक्षामित्युक्त्वा पूर्वं ततः परम् । भवान्ददात्विति ब्रूयात्पुरुषं प्रति भिक्षणे । स्त्रियं तु भिक्षां भवती ददात्वित्यभियाचयेत् । लब्धं विज्ञाप्य गुरवे तत्पार्श्वे सन्निधाय च । तत्संनिधावचपलस्तिष्ठेदादिवसक्षयात्' इति ॥ इति भिक्षाचरणम् ॥ ॥ॐ॥ अथोपनयनदिने माध्याह्नसंध्यानिर्णयः । तत्र कारिका—'कर्म कुर्विति सन्ध्यादि विहितोपासनं कुरु । दिवा मास्वाप्सी-

पाठा०—१ पर्क ब्रह्मौदनम् ।

रित्यस्य दिवा निद्रां न कुर्विति'। अत्र संध्याशब्देन कालत्रयकर्तव्यसन्ध्योच्यते। अतः कालप्राप्तं माध्यंदिनसंध्यादिकं कुरु । दिवा
निद्रां न कुर्विति प्रैषार्थः । तथाच जैमिनिः–'यावद्ब्रह्मोपदेशं तु तावत्संध्यादिकं न च । ततो मध्याह्नसंध्यादि सर्वं कर्म समाचरेत्'
इति । यत्तु वचनान्तरम्—'उपायनेऽह्नि कर्तव्यं सायंसंधेरुपासनम् । आरभेद्ब्रह्मयज्ञं तु मध्याह्ने तु परेऽहनि' इति, तदेतच्छाखा
न्तरविषयम् । ब्रह्मयज्ञस्य प्रतिप्रसवस्मृत्यभावादपराह्णप्रभृति सावित्र्येव कर्तव्यम् । तथाच सएव–'अनुपाकृतवेदस्य कर्तव्यो ब्रह्मय-
ज्ञकः । वेदस्थाने तु सावित्री गृह्यते तत्समा भवेत्' । अत्र वृद्धाचारतो व्यवस्था द्रष्टव्या । इत्युपनयनदिने माध्याह्निकसंध्यानिर्णयः ॥

अथानुप्रवचनीयहोमः । तत्र कारिका—'पूर्णपात्रनिधानान्तमुपलेपादि पूर्ववत् । विप्राणां भोजनायालं तूष्णीं निर्वाप्य या-
चितम् । तूष्णीं प्रोक्ष्यावघातादिश्रपणान्तं करोत्यथ । आचार्याय शृतःस्थालीपाकस्त्विति निवेदयेत् ॥ अन्वारब्धो गुरुः कुर्यादाघा-
रान्तमतःपरम् । अत्राज्यभागौ नैवेष्टावित्युक्तं पूर्वमेव तु ॥ चर्वाहुतित्रयं हुत्वा सदसस्पतिमित्यृचा । ऋचा तत्सवितुस्तद्वद्-
षिभ्य इति मन्त्रतः ॥ कुर्यात्स्विष्टकृदाद्यन्नेनान्येन द्विजभोजनम् । अस्याशक्तौ करोत्यन्यः श्रपणान्तमिति स्थितिः ॥ द्विजान्भुक्त-
वतो वेदसमाप्तिं वाचयेदथ । क्षारादिवर्ज्यमश्नीयाद्ब्रह्मचारी दिनत्रयम् । शयीताधश्चतुर्थेऽह्नि मेधाजननमाचरेत् ॥ यद्वा द्वादशरात्रं
साद्धृतमब्दमथापि वा । तदा तदन्त एवेदं मेधाजननमाचरेत्' इति । इदमत्र गृह्यम्—'अस्तमिते ब्रह्मौदनमनुप्रवचनीयं श्रपयि-
त्वाचार्याय वेदयीताचार्यः समन्वारब्धे जुहुयात्सदसस्पतिमद्भुतमिति सावित्र्या द्वितीयं यद्यत्किंचात ऊर्ध्वमनूक्तं स्यादृषिभ्यस्तृतीयं
सौविष्टकृतं चतुर्थं ब्राह्मणान्भोजयित्वा वेदसमाप्तिं वाचयीतातऊर्ध्वमक्षारालवणाशी ब्रह्मचार्यधःशायी त्रिरात्रं द्वादशरात्रं संवत्सरं

वा चरितव्रताय मेधाजननं करोति' इति । अस्यार्थः—ब्रह्मभोजनार्थमोदनं ब्रह्मौदनम् । ब्रह्मशब्दो ब्राह्मणवाचकः । "ब्रह्म-
स्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः' इत्यभिधानात् । तेन ब्राह्मणभोजनविधानमस्य मानत एव चरोर्भवतीति । अनुप्रवचननिमि-
त्तमनुप्रवचनीयम् । पाकयज्ञविधानेन ब्रह्मचार्यनुप्रवचनीयं श्रपयित्वाचार्याय निवेदयेत्—शृतः स्थालीपाक इति । ततः समन्वा-
रब्धे ब्रह्मचारिणि इध्माधानाद्याघारान्तं कृत्वा अनया जुहुयात्। सावित्र्येति तत्सवितुर्वरेण्यमित्येषा प्रसिद्धा । द्वितीयाग्रहणमुत्तरा-
र्थम् । यत्किंचात ऊर्ध्वमित्यादि । अत्र सावित्र्यनुक्तेतिकृत्वा सावित्र्या द्वितीयं जुहोति । अत ऊर्ध्वमपि महानाम्न्यादिव्रतेषु व्यापणान्ते
ऽनुप्रवचनीयहोमः कार्यः । तत्र सावित्र्याः स्थाने महानाम्नीभ्यःस्वाहा महाव्रतायस्वाहा उपनिषदेस्वाहा इत्येवं द्वितीयं जुहोति-
अन्यत्समानमिति । द्वितीयग्रहणं महानाम्न्यादिनामधेयेन होमार्थम् । इतरथा मन्त्रेण होमे क्रियमाणे प्रतिमन्त्रं स्वाहाकारः प्राप्तः
स्यात्स च प्रदानार्थ इतिकृत्वा अनेका आहुतयः स्युस्ततश्चोत्तरासां द्वितीयत्वं न स्यात्तस्माद्द्वितीयग्रहणम् । ऋषिभ्यस्तृतीयमिति ।
तृतीयवचनमृषिभ्य इत्यस्य विधायकत्वं निरस्य मन्त्रत्वज्ञापनार्थं तेन ऋषिभ्यः स्वाहेति जुहोति । संख्यावचनं नियमार्थं चतुर्थमेव
न षष्ठमिति । तेनात्राज्यभागौ न भवतः तयोः सतोरिदं हि षष्ठं स्यादिति । तत्रश्च सदसस्पतिमित्यृचा प्रथमाहुतिः तत्सवितुरिति
द्वितीया ऋषिभ्यःस्वाहेति तृतीया स्विष्टकृच्चतुर्थी । ततः प्रायश्चित्तादिहोमशेषः । संस्थाजपान्तं कृत्वा ततो चरुरवशिष्टान्नेन ब्रा-
ह्मणान्गुरुं च भोजयित्वा वेदसमाप्तिं भवन्तो ब्रुवन्त्विति वाचयेत् । तेच वेदसमाप्तिरस्त्विति ब्रूयुः । अत ऊर्ध्वमित्यवधिवचनमितः-
प्रागक्षारलवणभोजनादिनियमो माभूदिति । तेन शुक्रव्रत उपनयनमित्यपि सूच्यते । ब्रह्मचारिवचनमाचार्यनिवृत्त्यर्थम् । चरितव्र-

संस्कारत्र.
उपनयनं.

॥२३

तायेतिवचनं व्रतस्य मेधाजननेन संबन्धार्थम् । तेन यत्रोपनयने मेधाजननमस्ति तत्रैव व्रतचर्यानुप्रवचनीयहोमाविति सिद्धम् । पुनरुपनयने तु मेधाजननाभावाद्व्रतचर्यानुप्रवचनीयावावर्तेते इति ॥ अत्राचार्यः स्मृतिरूपेणाप्याह—'भैक्षं लब्धं दिवा यचत्स्थालीपाकं निरुप्य च । हुत्वा द्विजान्भोजयित्वा भुञ्जीयाच्च द्विजः स्वयम् ॥ उपास्य विधिवत्सन्ध्यां हुत्वाहुत्वाहुती निशि ।—हुत्वाहुत्वेति वीप्सावचनं नित्यभूतमग्निं हुत्वा अनुप्रवचनीयं जुहुयादित्यर्थम् । अधःशयीत स्वपंश्च व्रती स्याद्वत्सरावधि ॥ द्वादशाहं त्रिरात्रं वा तदन्ते गुरुणात्मनः । कारयेद्विधिना कर्म मेधाजननसंज्ञितम्' इति ॥ अत्र भगवान्—'सायंसंध्याविधिं कृत्वा अथोपनयनानले । आधाय समिधं पूर्वं ततोऽन्वाधानपूर्वकम् ॥ पूर्णपात्रनिधानान्तं तन्त्रं कृत्वा पुरस्तनम् । ततो लब्धं च यद्भैक्षं द्विजान्भोजयितुं तथा ॥ होमं च कर्तुं पर्याप्तं पृथक्कृत्य निरुप्य च । चरुं पचेत्सर्वथैव पक्तुं स्थाल्यां न शक्नुयात् ॥ तदा तदर्धं तण्डुः क्षिप्तत्कृत्यमाचरेत् । अथ विज्ञापयेच्छिष्यः शृतो ब्रह्मौदनश्चरुः ॥ अनुप्रवचनीयो वेत्याचार्यस्तदनन्तरम् । आज्यसंस्कारमारभ्यानूयाजस्थापनावधि । तन्त्रं कृत्वाथ शिष्येण स्पृष्टः शेषं पुरस्तनम् ॥ इध्माधानादिकं तन्त्रमाज्यभागद्वयं विना । ततोऽवदानधर्मेणावदाय च हविः शुचि ॥ सदसस्पतिमद्भुतं प्रियमित्याद्यृचाहुतिम् । अनन्तरं तु सावित्र्या द्वितीयाहुतिमाचरेत् ॥ पश्चादृषिभ्यःस्वाहेति तृतीयाहुतिमाचरेत् । चतुर्थं स्विष्टकृद्धोमं कृत्वोर्ध्वं तन्त्रमाचरेत् ॥ होमावशिष्टमन्नं च ब्राह्मणान्भोजयेदथ । सुकरान्निर्द्विजैर्वेदसमाप्तिं वाचयेदपि ॥ ब्रूयाद्विजान्गुरुर्वेदसमाप्तिं वदतेति तान् । समाप्तिरस्त्विति ब्रूयुस्तेपि वेदपदात्परम् ॥ अत ऊर्ध्वं हविष्याशी त्रिरात्रं ब्रह्मचर्यवान् । अधःशायी च वर्तेत गुरोश्चित्तं प्रसादयेत् ॥ एवं द्वादशरात्रं वा वर्तेताब्दमथापि वा ।

शक्त्या चापेक्षया कल्पः स्याद्व्रते ब्रह्मचारिणः ॥ एवं कृतव्रतस्यास्य चतुर्थे दिवसे गुरुः । त्रयोदशे वाब्दान्ते वा मेधाजननमाचरेत्' इति । इत्यनुप्रवचनीयहोमः ॥

अथोपनयनमन्त्रार्थः कथ्यते । तत्र वस्त्रपरिधाने युवंवस्त्राणीति—हे मित्रावरुणा मित्रावरुणौ, युवं युवां पीवसा पीवसानि अच्छिद्राणि वस्त्राणि आच्छादनयोग्यानि वासांसि वसाथे आच्छादयथः । यद्वा पीवसा स्थूलेन प्रभूतेन तेजसा वस्त्राणि दधाथे अवच्छिन्नानि वस्त्रस्थानीयानि तानि तेजांसि धारयेथ इत्यर्थः । किंच युवोः युवयोः सर्गाः सृष्टयः अच्छिद्राः अच्छिन्नाः मन्तवः मननीयाश्च । हः चकारार्थः । युवां विश्वा विश्वानि सर्वाणि अनृतानि असत्यानि पापानि अवातिरतं नाशयतम् । मित्रावरुणा मित्रावरुणौ ऋतेन सत्यभूतेन तत्साधनेन यज्ञेन वा सचेथे संगच्छेथे ॥ ॥ यज्ञोपवीतमन्त्रो ब्रह्मोपनिषदि दृश्यते । यज्ञोपवीतमिति—यज्ञस्य यज्ञस्वरूपस्य विष्णोः परमात्मनः उप समीपे वीतं विविधमागतं जीवस्वरूपं परममुत्कृष्टं पवित्रं सर्वपावनं प्रजापतेः प्रजानां पालयितुः संबन्धीति शेषः । यत्सर्वव्यवहारकारणत्वेन प्रसिद्धं सहजं देहेन्द्रियादिभिः सहोत्पन्नं पुरस्तात् पूर्वं अनादीति यावत् । आयुष्यं आयुष्यवत् अग्र्यं श्रेष्ठम् शुभ्रं उज्ज्वलं कर्तृत्वादिवियुक्तमित्यर्थः । एवंविधं त्वं प्रतिमुञ्च अविद्यादिभ्यो मोचय । यदि चैतन्यो जीवभावस्तिष्ठति तस्य मोक्षं कुरु । यस्मादिदं यज्ञोपवीतं हृदये त्रैवर्णिकैर्धार्यमाणं तस्मात्कार्पासमूत्रमपि बलं वीर्यवत् श्रौतस्मार्तकर्मानुष्ठानफलप्रदानसामर्थ्यवत् अस्तु भवतु । तेजः ब्रह्मवर्चसं भूयात् ॥ एतदुक्तं भवति—याद्यमपि यज्ञोपवीतं यज्ञोपवीतसामीप्यादेवंरूपं कर्तृत्वादिविमुक्तं मोक्षयोग्यं हृदयकमलस्थं देशकालपरिच्छेदशून्यं चैतन्यैकरसे वर्त-

मानं मुख्यं यज्ञोपवीतं भवतीति॥ ॥ अग्नआयूंषिपवस इत्यादयस्त्रयो मन्त्राः प्रजापतेनत्वदेतानीति च चौले व्याख्याताः ॥ तत्सवितुर्वृणीमह इति—स्तोतारो वयं भगस्य भजनीयस्य देवस्य द्योतनात्मकस्य सवितुः भोजनं भोगयोग्यं अतएव श्रेष्ठं प्रशस्यं सर्वधातमं सर्वेषां धातृतमं सर्वभोगप्रदमित्यर्थः । तुरं शत्रूणां हिंसकं धनेन शत्रुहननस्य शक्यत्वात् । एतादृशं यद्धनं धीमहि धारयामः उपभोगं करवामः तद्धनं वृणीमहे प्रार्थयामहे ॥ देवस्यत्वेति—देवस्य सवितुः प्रसवे अनुज्ञाने सति त्वां तवहस्तं अश्विनोर्बाहुभ्यां अश्विदेवतास्वरूपस्य मम बाहुभ्यां पूष्णो हस्ताभ्यां पूषस्वरूपस्य च मम हस्ताभ्यां गृह्णामि । असाविति संबुद्ध्या माणवकनामग्रहणम् ॥ ॥ सविता ते इति—सवितृरूपोऽहं ते तव हस्तं गृह्णामि । असौ यज्ञदत्तः ॥ ॥ अग्निरिति—आचार्यस्थानीयोऽग्निः तव हस्तं गृह्णातीति शेषः ॥ ॥ देव सवितरिति—देव द्योतनात्मक, सवितः सर्वेषामुत्पादक, एष ब्रह्मचारी ते रक्ष्यः । अतस्त्वं गोपाय । स मामृत मरणं मागात् ॥ ॥ कस्य ब्रह्मचार्यसीति—कस्य ब्रह्मणः ब्रह्मचार्यसि । प्राणस्य आत्मनः ब्रह्मचार्यसि । कः ब्रह्मा कं ब्रह्मरूपं त्वामुपनयते मम कुलं प्रापयति । अतः काय ब्रह्मणे त्वा त्वां परिददामि ॥ ॥ युवासुवासा इति—युवा ब्रह्मचारिधर्मेण आत्मना सह मिश्रितः सुवासाः धौतवासाः कृष्णाजिनादिना परिवीतः सन् ब्रह्मचर्याश्रममागात् गच्छति । सउ सच जायमानः द्वितीयं जन्म गच्छन् श्रेयान् विद्यादिना प्रशस्तो भवति । तं कुमारं धीरासः धीराः व्यवस्थितप्रज्ञाः कवयो मेधाविनः मनसा स्वाध्यः सुष्ठु ध्यायन्तः देवयन्तः देवान्यष्टुमिच्छन्तः उन्नयन्ति उच्छ्रितं कुर्वन्ति ॥ ॥ अग्नये समिधमिति—अहं बृहते महते जातवेदसे जातधनाय जातप्रज्ञाय वा अग्नये समिधमाहार्षं आहरम् । भो अग्ने,

त्वं तया समिधा वर्धस्व दीप्यस्व । वयं ब्रह्मणा वेदेन वर्धिषीमहि । स्वाहाशब्दः प्रदानार्थः ॥ ॥ तेजसा मेति—हे अग्ने, यत् ते तेजः तेन तेजसा मा मां समनज्मि संयुक्तं करोमि ॥ ॥ मयि मेधामिति—मयीति पञ्चभिर्यजुर्भिरुपस्थीयमानोऽग्निः मयि मेधां प्रज्ञां तेजश्च दधातु । इन्द्रश्च मयि मेधादिकं इन्द्रियं च दधातु । सूर्यश्च मयि मेधादिकं भ्राजो दीप्तिं च दधातु । हे अग्ने, यत्ते तव संबन्धि तेजः तेन अहं तेजस्वी भूयासं मम तेजोपि तादृशमस्तु । एतेनोत्तरे व्याख्याते ॥ ॥ विभूतिधारणे मन्त्रः मानस्तोके इति—हे रुद्र, नः अस्माकं तोके पुत्रादिविषये, तनये पौत्रादौ, आयौ पुत्रपौत्रव्यतिरिक्तोऽस्मदीयो यो यो मनुष्यस्तस्मिन्, गोषु पश्वादिषु, अश्वेषु मा रीरिषः हिंसां मा कृथाः । हे रुद्र, त्वं वीरान् शूरान् नोऽस्मदीयान् भामितः क्रुद्धः सन् मावधीः माहिंसीः । वयं च हविष्मन्तः सन्तः सदमित् सर्वदैव त्वा त्वां हवामहे आह्वयामः ॥ ॥ त्र्यायुषमिति—यद्रुद्रस्य जमदग्नेः त्र्यायुषं त्रिवारमपमृत्युमपहरत्र्यायुषमित्युच्यते । तथा कश्यपस्य अगस्त्यस्य देवानां च अपमृत्युं परिहरद्यद्रुद्रस्य त्र्यायुषमिति प्रसिद्धं तद्रुद्रस्य मे ममापि अपमृत्युं परिहरतु । तं परिहृत्य शतायुषं साधिकशतवर्षजीवनकारणं अस्तु भवतु ॥ ॥ अधीहिभोरिति—भो आचार्य, सावित्रीं अधीहि अधीष्व । भो आचार्य, अधीत्य मामनुब्रूहि इति माणवको ब्रूयात् ॥ ॥ तत्सवितुरिति—यः सविता नः अस्माकं धियः धर्मादिविषयबुद्धीः प्रचोदयात् प्रेरयेत् तद्वरेण्यं वरणीयं देवस्य सवितुः भर्गः पापभञ्जनं तेजोमयं रूपं वयं धीमहि ध्यायामः ॥ ॥ मम व्रत इति—हे माणवक, मम व्रते वेदोक्तव्यापारे ते हृदयं व्यापारं दधामि स्थापयामि । मद्व्यापारस्त्वद्व्यापारो यथा भवति तथा करोमि । मम चित्तं मन्मनः ते चित्तमनु अनुसरदस्तु । एवं एकव्रतः एकसं-

कल्पस्त्वं मम वाचं जुषस्व सेवस्व । इत्थं बृहस्पतिः सा त्वां मह्यं नियुनक्तु मद्वशे स्थापयतु ॥ ॥ इयं दुरुक्तादिति—इयं मौञ्जी दुरुक्तात् विभक्तिव्यत्ययः दुरुक्तानि परिबाधमाना सर्वतो नाशयन्ती वरूथं वरणीयं शर्म गृहं पुनती शोधयन्ती नः अस्मान् आगात् आगच्छतु । प्राणापानाभ्यां बलं सामर्थ्यं आभरन्ती आहरन्ती देवानां प्रिया इयं मेखला सुभगा सौभाग्ययुक्ता भवतु ॥ ॥ ऋतस्य गोप्त्रीति—ऋतस्य सत्यस्य यज्ञस्य वा गोप्त्री रक्षित्री तपसः परस्पी पातेरेतद्रूपम् तपसः प्रकर्षेण पात्री रक्षित्री सती रक्षः रक्षसां हननं कुर्वती अरातीः शत्रुजातीः सहमाना अभिभवन्ती एवंभूता या सा त्वं नः अस्मान् समन्तं अनुपरीहि आनुपूर्व्येण परिगच्छ । हे मेखले, भद्रया मङ्गलया त्वया रक्षिताः ते भर्तारः त्वां बिभ्राणाः वयं मा रिषाम हिंसिता माभूम ॥ ॥ अनुप्रवचनीये । सदसस्पतिमिति—सदो यज्ञगृहं तस्य पतिं अद्भुतं प्रभावेण महान्तं इन्द्रस्य प्रियं काम्यं सर्वेषां कमनीयं एवंविधमग्निं सनिं धनं मेधां प्रज्ञां च अयाशिषं याचे ॥ ॥ सावित्री व्याख्याता ॥ सौविष्टकृतमप्यग्निमुखे व्याख्यातम् ॥ इति मन्त्रार्थः ॥

अथोपनयनप्रयोगः ॥ प्रागुक्ते काले उपनिनीषुराचार्यः पूर्वेद्युर्वटोः परिधानार्थं शुक्लमीषद्धौतं नवं सदशं परेणाहृतं वस्त्रमुत्तरीयार्थं, पूर्वोक्तलक्षणं काषायं वस्त्रं च कृष्णाजिनं वा, पूर्वोक्तविधानेन कृतं यज्ञोपवीतं, तथा मुञ्जतृणनिर्मितां मेखलां, पालाशमव्रणमृजुं सौम्यदर्शनं वटोः केशसंमितं साग्रं दण्डं, कौपीनं, त्रिवृतं तद्बन्धनसूत्रं, भिक्षापात्रं, जलपात्रं च संपाद्य कुमारेण सह भद्रासने उपविश्य प्राणानायम्य देशकालौ निर्दिश्य । ततः स्वस्योपनेतृत्वाधिकारसिद्ध्यर्थं कृच्छ्रत्रयमाचर्य द्वादशसहस्रगायत्रीं

चाभ्यस्य कुमारेणापि कामचारकामवादकामभक्षणादिदोषापनोदार्थं कृच्छ्रत्रयं कारयित्वा [ यथा कुमारः—अशेषे हे परिषत्, मदीयां विज्ञापनामवधार्य मया समर्पितामिमां दक्षिणां स्वीकृत्य मम जननीस्तन्यपानशूद्रास्तन्यपानसजातीयविजातीयसहचरक्रीडासंलापानियतमूत्रपुरीषोत्सर्जनतत्कालशौचाभावप्रभृतीनामपाकरणार्थं पूर्वसंस्कारकालातिक्रमदोषापनोदनार्थं च प्रायश्चित्तं निश्चित्योक्त्वा मामनुगृहाणेति वदेत् । परिषदपि दक्षिणां गृहीत्वा तच्छक्तितारतम्येन प्रतिनिमित्तं पादकृच्छ्राद्यन्यतममुपदिश्य कारयेत् ] ममास्य कुमारस्य द्विजत्वसिद्धिद्वारा श्रीप० उपनयनाख्यं कर्म करिष्ये । तदङ्गभूतस्वस्तिवाचनमङ्कुरार्पणं ग्रहयज्ञं नान्दीश्राद्धं च प्रागुक्तविधिना संकल्पपूर्वकं विदधीत ॥ ॥ अथापरेद्युराचार्यः कृतनित्यक्रियः कृतमङ्गलस्नानं कुमारमलंकृत्याशिषो वाचयित्वा प्राणानायम्य देशकालौ संकीर्त्य मम कुमारस्य द्विजत्वसिद्ध्या गायत्र्युपदेशं कर्तुं तत्प्राच्याङ्गभूतं वपनादिकर्म करिष्यामीति संकल्प्य पूर्वोक्तवत्कौतुकबन्धनमारभ्य मात्रासह भोज्यान्नं भोजयित्वा वपनस्नाने च कारयित्वा बद्धशिखमलंकृतं कुमारं मौहूर्तिकाभिहिते प्रागुक्तवत्सर्वानुकूले मुहूर्ते स्वसमीपमानीय [ मङ्गलपद्यपाठपूर्वकं ] मुखं सम्यङ्निरीक्षेत ॥ तत्रोपलेपनाद्यग्निप्रतिष्ठान्तं कर्म प्रागुक्तविधिना विधाय समिद्द्वयमादाय देशकालौ संकीर्त्यास्य कुमारस्य क्रियमाण उपनयनहोमाख्ये कर्मणि देवतापरिग्रहार्थमन्वाधानं करिष्ये । अस्मिन्नन्वाहितेऽग्नावित्याद्याघारावाज्येनेत्यन्तमुक्त्वा अग्निपवमानं ३त्रिः प्रजापतिं चाज्येन शेषेण स्विष्टकृतमित्यादि सद्यो यक्ष्य इत्यन्तमुक्त्वा व्याहृत्याद्याधायोद्देशत्यागौ कृत्वा परिसमूहनाद्याज्यसंस्कारान्तं प्रागुक्तवत्कुर्यात् । अथाचार्य उत्था-

ग्नेः पश्चादवस्थाय कुमारं प्राङ्मुखमवस्थाप्य कौपीनार्थं त्रिवृतं कार्पाससूत्रमावध्य कौपीनं धारयित्वा द्वितीयजन्मसिद्ध्यर्थमुल्बप्रतिनिधिभूतमहतं शुक्लं वासः काषायं वा परिधाप्य अन्येन शुक्लवस्त्रेण कृष्णाजिनेन वा प्रावारयेत् । तत्र मन्त्रः—युवंवस्त्राणि दीर्घतमा मित्रावरुणौ त्रिष्टुप् वासोधारणेवि० । युवं वस्त्राणि पीवसा वसाथे युवोरच्छिद्रा मन्तवो ह सर्गाः । अवातिरतमनृतानि विश्व ऋतेन मित्रावरुणा सचेथे ॥ इति मन्त्रेण वस्त्रं धारयित्वा । ततो द्विजत्वसिद्ध्यर्थं यज्ञोपवीतं समन्त्रं धारयेत् । यज्ञोपवीतमित्यस्य परब्रह्मपरमात्मा त्रिष्टुप् यज्ञोपवीतधारणेवि० । यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ इति मन्त्रं वाचयित्वा तद्दक्षिणबाहुमुद्धार्योपवीतं धारयित्वा । [तथा मित्रस्य चक्षुर्वामदेवोऽजिनं त्रिष्टुप् । अजिनधारणेवि० । मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरं समिद्धम् । अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधस्व ॥] इत्यजिनं धारयित्वा । कुमारमात्मनोऽग्नेश्च मध्येन यज्ञपात्रोत्तरभागं गमयित्वा तत्र विधिवदाचमय्य पुनस्तीर्थेन तथैवानीय स्वदक्षिणत उपवेश्य बर्हिरास्तरणाद्याघारान्तं कृत्वा ब्रह्मचारिणा दक्षिणहस्तेन स्पृष्टः सन् । अग्नआयूंषीति तिसृणां शतं वैखानसा अग्निः पवमानो गायत्री । उपनयनप्रधानाज्यहोमेवि० । अग्नआयूंषि० १ । अग्निर्ऋषिः० २ । अग्ने पवस्व० ३ । अग्नयेपवमानायेदं० । प्रजापतेहिरण्यगर्भः प्रजापतिस्त्रिष्टुप् । उपनयनप्र० । प्रजापते न त्वदेता० । प्रजापतय इदं० ४ । इति चोलोक्तैश्चतुर्भिर्मन्त्रैरुत्तरभागे चतस्र आज्याहुतीर्हुत्वोद्देशत्यागौ कृत्वा । अथाचार्य उत्तरतोऽग्नेः प्राङ्मुखस्तिष्ठेत् । कुमारोऽप्यग्न्याचार्ययोर्मध्येन गत्वाचा-

पाठा०—१ गायत्र्या दशकृत्वो मन्त्रिताभिरद्भिः प्रोक्षितमुपवीतं धारयेत् ।

र्येस्य पुरस्तादभिमुखस्तिष्ठेत् । तत आचार्यः संयतात्मा सूर्यात्मा पावकात्माच सन् कुमारस्य शुचित्वसिद्ध्यर्थं सवितृदेवतातुष्ट्यर्थं चाञ्जलिक्षारणं कुर्यात् । तत्रायं क्रमः—जलपात्रोदकेन शिष्याञ्जलिमापूर्य स्वस्याञ्जलिमन्येन पूरयित्वा । तत्सवितुर्वृणीमह इत्यस्य श्यावाश्वः सवितानुष्टुप् । अवक्षारणेवि० । तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् । श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि ॥ अनेन मन्त्रेण स्वाञ्जलिस्थोदकं शिष्याञ्जल्युदके आसिच्य तज्जलं कुमाराञ्जलिनैवावक्षारयेत् । तत आचार्यः शिष्यत्वसिद्ध्यर्थं वटोर्हस्तं गृह्णीयात् । तत्र मन्त्रः—देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यमुकशर्मन् इति कुमारस्याभिवादनिकं नाम शर्मान्तं संबुद्ध्या निर्दिश्य दक्षिणपाणिना कुमारस्य साङ्गुष्ठं दक्षिणपाणिं गृहीत्वा पुनरपि पूर्ववत्पूरयित्वावक्षारयेत् । अत्र सविता ते हस्तमग्रभीत् अमुकशर्मन् इति पूर्ववत्नाम निर्दिश्य हस्तं गृह्णीयात् । पुनः पूर्ववत्पूरयित्वावक्षारयेत् । अग्निराचार्यस्तव अमुकशर्मन् इति पूर्ववन्नाम निर्दिश्य हस्तं गृह्णीयात् । ततः संरक्षणार्थं व्रतपतय आदित्याय वटुं ददामीति मनसा स्मरन्दद्यात् । तत्रायं क्रमः—ब्रह्मचारिणासह निष्क्रम्य—देव सवितरेष ते ब्रह्मचारी तं गोपाय स मामृतेत्युचार्य ब्रह्मचारिणमादित्यमीक्षयेत् । ततस्तावुभावपि पूर्ववदुत्तरतोऽग्नेरन्योन्याभिमुखौ तिष्ठेताम् । अथाचार्यः कस्य ब्रह्मचार्यसि प्राणस्य ब्रह्मचार्यसि कस्त्वाकमुपनयते काय त्वा परिददामि इति मन्त्रं जपन्कुमारं प्रजापतये मनसा समर्प्य । युवासुवासा इत्यर्धर्चमुच्चरन्प्रदक्षिणं तमावर्त्य । युवासुवासा इत्यस्य कौशिको विश्वामित्रो यूपस्त्रिष्टुप् । पूर्वार्धर्चस्य कुमारप्रदक्षिणावर्तने उत्तरार्धर्चस्य पाणिभ्यां वटुहृदयालम्भने वि० । युवा सुवासाः परिवीत आगात्स उ श्रेयान्भवति जायमानः । इत्यावर्त्य स्ववशं कर्तुं वटुं मन्त्रवद्गृह्णीयात् । यथा—कुमारांसयोरु-

परि प्रपाणी गमयित्वा । तं धीरासः कवय उन्नयन्ति स्वाध्यो३ मनसा देवयन्तः । इत्युत्तरमर्धर्चमुच्चार्य तद्धृदयदेशं सकृत्पाणिभ्यां स्पृशेत् । ततः पूर्वनदाचार्यः कुमारमात्मानमग्निं चान्तरेणानीय प्रत्यगग्नेः स्वयमासित्वा स्वस्य दक्षिणतस्तमुपवेशयेत् । अथ कुमारः परिसमूहनपर्युक्षणे कृत्वा । अग्नये समिधमित्यस्य हिरण्यगर्भोऽग्निस्त्रिष्टुप् । समिदाधाने वि० । अग्नये समिधमाहार्षं बृहते जातवेदसे । यथा त्वमग्ने समिधा समिध्यस एवमहं आयुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो भूयासं स्वाहा । इत्यनेन मन्त्रेण समिधमाधाय अग्नय इदं० इत्युद्देशत्यागौ कृत्वा । ततोऽग्निं दक्षिणपाणिना स्पृष्ट्वा । तेजसा मा समनज्मि । इति मन्त्रेण संवृतोष्ठद्वयमुखमवाङ्निमृज्य पाणिं प्रक्षाल्य पुनरप्येवमेव स्पृष्ट्वा तेनैव मन्त्रेण मुखमनमृज्य पुनश्च तथैव कृत्वा । ततस्तिष्ठन्प्रणतिमुद्रां कृत्वा । मयिमेधामिति षण्णां हिरण्यगर्भोऽग्निरिन्द्रः सूर्यः पूर्वत्रयाणामासुरीगायत्रीछन्दः उत्तरत्रयाणामासुरीभुरिग्गायत्रीछन्दः । अग्न्युपस्थाने विनियोगः । मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु । मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु । मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु । यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासम् । यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासम् । यत्ते अग्ने हरस्तेनाहं हरस्वी भूयासम् ॥ इति षण्मन्त्रैरग्निमुपस्थाय । मानस्तोक इत्यस्य कुत्सो रुद्रो जगती । विभूतिग्रहणे वि० । मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ इत्यनेन भस्मादाय यथाचारं । त्र्यायुषं जमदग्नेः ललाटे । कश्यपस्य त्र्यायुषं कण्ठे । अगस्त्यस्य त्र्यायुषं नाभौ । यद्देवानां त्र्यायुषं दक्षिणांसे । तन्मे
८१० अस्तु त्र्यायुषं वामांसे । सर्वमस्तु शतायुषं शिरसि । इति धृत्वा [ पुनः परिसमूहनपर्युक्षणे कृत्वा कृताञ्जलिस्तिष्ठन् ॐ च मे

स्वरश्च मे यज्ञोप च ते नमश्च। यच्चे न्यूनं तस्मै त उपयचेतिरिक्तं तस्मै ते नमः। अग्नयेनमः ॐस्वस्ति। श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम्। आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन॥ इत्युपस्थाय।] आचार्याभिमुखो भूत्वा दक्षिणं जानुं भूतले निधाय पाणिभ्यां यथासव्यदक्षिणं श्रोत्रे संस्पृश्य व्यत्यस्तपाणिर्भूत्वा आचार्यस्य सव्यदक्षिणपादौ जानुप्रभृति पादपर्यन्तं स्पृष्ट्वा अमुकगोत्रोऽमुकशर्माहं भो अभिवादये इत्यभिवादनिकं नामोच्चारयन्शिरोवनतिपूर्वकमभिवाद्य। आचार्येण आयुष्मान्भव सौम्यदेवदत्त ३ इति प्रागुक्ताशीर्वादो विनयावनतो भूत्वा सान्निध्या उपदेशं वाञ्छन् अधीहि भोः सावित्रीं भो अनुब्रूहि इत्याचार्यं प्रत्युक्त्वा वामपाणिमुत्तानीकृत्य दक्षिणपाणिं न्यञ्चुखीकृत्य संधाय पाणिपृष्ठमङ्गुलीश्चाङ्गुष्ठौ च दृढीकृत्य कृतब्रह्माञ्जलिं दक्षिणाङ्के निक्षिप्य तत्पार्श्वत आसीत। अथाचार्यस्तदञ्जलिं तत्परिधानीयवाससा आच्छाद्य स्वपाणिभ्यां तदञ्जलिं परिगृह्य प्रणवव्याहृतिपूर्वकं सावित्रीं प्रथमं पादशः स्वयमुक्त्वा वाचयेत् ततोऽर्धर्चशस्ततः सर्वाम्। एवं ग्रहणाशक्तौ यथाशक्ति स्वयमुक्त्वा वाचयेत्। प्रणवस्य परब्रह्मऋषिः परमात्मादेवता दैवीगायत्रीछन्दः व्याहृतिमन्त्रस्य प्रजापतिः प्रजापतिर्दैवीबृहती गायत्र्या विश्वामित्रः सविता गायत्री। उपनयनेवि०। ॐभूर्भुवःस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। एवंनिः। प्रावेपामेत्यस्याक्षऋषिः सोमो देवता त्रिष्टुपछन्दः मेखलाधारणेवि०। प्रावेपामा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृतानाः। सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छात्॥ इयं दुरुक्तात्परिबाधमाना शर्म वरूथं पुनती न आगात्। प्राणापानाभ्यां बलमाभरन्ती प्रिया देवानां सुभगा मेखलेयम्॥ इति मन्त्रं माणवकेन वाचयन् निःपरिनीय। ऋतस्य गोप्त्री तपसः परस्पी घ्नती

रक्षः सहमाना अरातीः । सा नः समन्तमनुपरीहि भद्रया भर्तारस्ते मेखले मा रिषाम ॥ इति परिवीतां मेखलामनुमन्त्रयित्वा । प्राणानां ग्रन्थिरसि मा विस्रंसीः । इति मन्त्रं वाचयन् नाभिप्रदेशे ग्रन्थित्रयं कुर्यात् । ततो वटुः सरहस्याङ्गसहितवेदत्रयेणावृतोऽहमिति भावयेत् । ततो माणवकाय तूष्णीं दण्डं दद्यात्। माणवकस्तु दण्डं गृहीत्वा—अदान्तं दमयित्वा मां मार्गे संस्थापयन्स्वयम् । दण्डः करे स्थितो यस्मात्तस्माद्रक्ष यतो भयम् । इति मन्त्रार्थविमर्शपूर्वकं मन्त्रमुच्चारयेत् । तत आचार्यः कुमारस्य कर्तव्यमाचारमादिशेत् । तत्रायं क्रमः—इदानीं ब्रह्मचार्यसि । एतत्प्रभृति मूत्रोत्सर्जनादौ शुद्ध्यर्थमाचमनं कुरु । संध्योपासनादि विहितं कर्म कुरु । दिवा निद्रां मा कुरु । आचार्यभूतास्मदनुज्ञया मन्त्रराशिमधीष्व । सायं प्रातर्भिक्षस्व । सायंप्रातः समिधमाधेहि । द्वादशवर्षाणि वेदग्रहणान्तं वा ब्रह्मचर्यं कुरु । इति निर्दिश्य । ततः स्विष्टकृदादि होमशेषं समाप्याग्निमा मेधाजननादग्निरक्षन् तत्रैव सायंप्रातःसमिद्धोमं कुर्यात् । ततो ब्रह्मचारी अनुप्रवचनीयहोमार्थं ब्राह्मणभोजनार्थं च तण्डुलभिक्षां याचेत् । तत्रायं क्रमः—भिक्षापात्रमादाय प्रथमं मातरं भवती भिक्षां ददातु । ततः पितरं भवान्भिक्षां ददातु । इति मन्त्रमुच्चरन्नेवं मातृष्वसारं स्वभगिनीमन्यानपि बान्धवांश्चाप्रत्याख्यायिनो याचयित्वा तद्याचितद्रव्यमाचार्याय निवेद्य । माध्याह्निकसंध्यां विधिवदुपास्य गुरुसंनिधावचापलस्तिष्ठन्नहःशेषं मौनीभवन्नीत्वा वन्दितसायंसंध्योऽग्नेरन्तिकमागत्यासीनः प्राणानायम्य सायं समिदा-

---

पाठा—१ प्रयोगरत्ने दण्डदाने मन्त्र उक्तः । स्वस्तिन इत्यस्य स्वस्त्यात्रेयो विश्वेदेवास्त्रिष्टुप् । दण्डदानेवि० । स्वस्तिना मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः । स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना ॥ इति ।

धानं करिष्य इति संकल्प्य तस्मिन्नग्नौ परिसमूहनपर्युक्षणे कृत्वा प्रागुक्तवत्समिधमाधाय त्रिर्मुखमवमृज्य प्रागुक्तपञ्चमन्त्रैरग्निमुपस्थाय मानस्तोक इत्यादिना भस्मादाय पूर्ववत्तत्स्थानेषु धृत्वा पुनः परिसमूहनपर्युक्षणे कृत्वा ओंचम इत्यादिनोपतिष्ठेत् ॥

अनुप्रवचनीयहोमः । अथ स्वासीनः पुनः प्राणानायम्य उपनयनाङ्गभूतमनुप्रवचनीयहोमं करिष्ये इति संकल्प्य । अद्य-करिष्यमाणेऽनुप्रवचनीयहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये । अस्मिन्नन्वाहितेऽग्नावित्याद्याधारावाज्येनेत्यन्तमुक्त्वा । सदसस्पतिं सवितारं ऋषीन् एताः प्रधानदेवताश्चरुद्रव्येण शेषेणाग्निंस्विष्टकृतमित्यादि सद्यो यक्ष्य इत्यन्तमुक्त्वा भूर्भुवःस्वःस्वाहेति समिद्द्वयमभ्याधाय परिसमूहनादिप्रणीताप्रणयनान्तं कृत्वा भिक्षाद्रव्यं चतुरश्चतुरो मुष्टींस्तूष्णीं देवतात्रयस्य विप्रभोजनस्य च पर्याप्तं निरुप्य प्रोक्ष्यावहत्य त्रिःफलीकृत्य प्रक्षाल्य श्रपयित्वा शृतः स्थालीपाक इत्याचार्याय निवेदयेत् । बटोरेवं करणाशक्तौ तद्बन्धुनान्येन वा कारयेत् । एवमाचार्यो ब्रह्मचारिणा निवेदितस्तेन पाणिना स्पृष्टः सन्नाघारान्तं कर्म कृत्वाऽवदानधर्मेणावदाय । सदसस्पतिमित्यस्य मेधातिथिः सदसस्पतिर्गायत्री । अनुप्रवचनीयप्रधान० । सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषं स्वाहा । सदसस्पतय इदं० । तत्सवितुरित्यस्य विश्वामित्रः सविता गायत्री । तत्सवितुर्वरेण्यं० । सवित्र इदं० । ऋषिभ्यःस्वाहा ऋषिभ्य इदं० इति यथाक्रमं हुत्वा स्विष्टकृदादिहोमशेषं समाप्य तदवशिष्टान्नेन त्र्यवरान्ब्राह्मणान्भोजयित्वा तैर्वेदसमाप्तिं वाचयीत । ततो ब्रह्मचारी अक्षारालवणमन्नं भुक्त्वाधः शयीत । एवं मेधाजननपर्यन्तं गुरुं प्रसादयन्वर्तेत । एष प्रयोगः स्वस्वकालकृतपूर्वसंस्कारसंस्कृतविषयः । असंस्कृतविषयस्तूच्यते ॥

गर्भाधानाद्यतीतसंस्कारप्रायश्चित्तम् ॥ उपनयनात्पूर्वदिवसे वटुनासह मङ्गलस्नातः प्राणानायम्य तिथ्यादिसंकीर्त्य ममकुमारस्य गर्भाधानपुंसवनसीमन्तविष्णुबलिजातकर्मनामकरणनिष्क्रमणान्नप्राशनचौलकर्मान्तानां नवसंस्काराणां कालातिपत्तिदोषप्रायश्चित्तद्वारा श्रीप० प्रायश्चित्तहोमं करिष्ये इति संकल्प्य उपलेपनाद्याज्यसंस्कृत्याघारान्तं कृत्वा अतीतकर्मसंख्यया भूर्भुवः स्वः स्वाहेति मन्त्रेणाज्याहुतीर्हुत्वा स्विष्टकृदादिहोमशेषं समाप्य चौलव्यतिरिक्तानां कर्मणां प्रमादादकृतानां प्रत्येकं पादकृच्छ्रं चौलस्यार्धकृच्छ्रं, बुद्धिपूर्वाकरणे तु चौलव्यतिरिक्तानां प्रत्येकमर्धकृच्छ्रं चौलस्यैककृच्छ्रं वटुना कारयेत्। अशक्तौ तु प्रत्याम्नायत्वेनोक्तगोदान–गहसतिलहोम–दशसहस्रगायत्रीजप–द्वादशब्राह्मणभोजनादिष्वन्यतमप्रायश्चित्तं कारयित्वा अतीतानि जातकर्मादीनि कृत्वा पूर्वोक्तप्रकारेणोपनयनतन्त्रं समाचरेत्। उपनयनकर्मणासह चौलकरणपक्षे पूर्वेद्युः संस्कारद्वयं संकीर्त्य युगपत्स्वस्तिवाचनग्रहयज्ञनान्दीश्राद्धादीनि कृत्वा परेद्युर्मङ्गलस्नानादि व्रीह्यादिपात्रचतुष्टयदानान्तं पूर्वोक्तवच्चौलप्रयोगं कृत्वा पुनस्तिथ्यादिकं संकीर्त्य उपनयनसंकल्पाद्यनुप्रवचनीयहोमान्तं सर्वं कुर्यात् ॥ इति नृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे उपनयनप्रयोगः ॥

अथ मेधाजननम् ॥ लक्ष्मीनृसिंहभजनं मेधाजननं जनेषु संयननम्। वर्धनमपुनर्भवनं निर्भरदुरितप्रसङ्गनिर्दहनम् ॥
अथ मेधाजननविधिरभिधीयते। तत्र तावत्कारणमुक्तं संग्रहे—'वेदग्रहणसामर्थ्ययुक्तमेधा तु जायते। येन तन्मेधाजननं कर्मोपदिशति स्वयम्' इति ॥ मेधास्वरूपमाहाश्वलायनाचार्यः—'या सावित्री जगद्धात्री सैव मेधास्वरूपिणी। मेधाप्रसिद्धये पूज्या विद्यासिद्धिमभीप्सता' इति। तत्र कारिका—'आग्नेयी दक्षिणा प्रत्यग्दक्षिणा निन्दिता दिशः। अनिन्दितायामन्यस्यां

पलाशं शाखवर्जितम् ॥ तदभावे सशाखं वा कुशस्तम्बमथापि वा । त्रिःप्रदक्षिणमुक्षन्तमम्भः कुम्भेन तं बटुम् ॥ आचार्यो वाचयेन्मन्त्रं सुश्रवः सुश्रवा इति । तत्रैव मेखलादीनि व्युदस्यान्यानि धारयेत्' इति ॥ इदमत्र गृह्यम्—'अनिन्दितायां दिश्येकमूलं पलाशं कुशस्तम्बं वा पलाशापचारे प्रदक्षिणमुदकुम्भेन त्रिःपरिषिञ्चन्तं वाचयति—सुश्रवः सुश्रवा असि यथा त्वं सुश्रवः सुश्रवा असेवं मां सुश्रवः सौश्रवसं कुरु । यथा त्वं देवानां यज्ञस्य निधिपोऽस्येवमहं मनुष्याणां वेदस्य निधिपो भूयासम्' इति । अस्यार्थः—इदं मेधाजननं तिस्रो दिशो निन्दिताः दक्षिणा प्राग्दक्षिणा प्रत्यग्दक्षिणेति । अन्याः सर्वा अनिन्दिताः । तस्यां दिश्येकमूलं पलाशं । कुशस्तम्बं वा पलाशाभावे । प्रदक्षिणमुदकुम्भेन त्रिःपरिषिञ्चन्तं ब्रह्मचारिणं वाचयति—सुश्रव इति मन्त्रम् । एकमूलमेकशाखमित्यर्थः । पुनः पलाशग्रहणमनेकमूलस्याप्युपलक्षणम् । तस्याप्यभावे कुशस्तम्बं परिषिञ्चेदिति ॥ अत्राचार्यः स्मृतिरूपेणाह—'कुर्यात्त्रिमेखलां वेदिं सर्वतो द्वादशाङ्गुलाम् । शुचौ प्रागुत्तरे भागे तस्यां मेधां समर्चयेत् ॥ पलाशशाखां तन्मध्ये पत्राङ्कुरसमन्विताम् । आर्द्रं वाथ कुशस्तम्बं समूलं स्थापयेद्गुरुः ॥ मेधामावाह्य मतिमान्मेधायै नम इत्यथ । गन्धपुष्पाक्षतैः सम्यग्धूपदीपादिभिः पुरा ॥ इष्ट्वा निवेदयेदन्नं सक्तुमिश्रं सयावकम्[1] । समोदकं निवेद्यान्नं पुनश्चाभ्यर्च्य पूर्ववत् ॥ प्रणम्य तस्यै मेधायै व्रती निःसारयेज्जलम् । उच्चरन्सुश्रवोमन्त्रं जलं गृह्य प्रदक्षिणम् । संश्राव्य तां नमस्कृत्य तथा कुर्यात्पुनः पुनः ॥ एवं त्रिवारमावर्त्य दण्डाजिनकमण्डलून् । वेद्यां निक्षिप्य च स्नात्वा वाससी च विनिक्षिपेत् ॥ मेखलां चोपवीतं च धृतान्यानि विनिक्षिपेत् । वाससी

पाठा०—1 सलजवम् ।

ते न्यगुरौ मेधाजननकर्मणि ॥ दद्याचावस्त्रभूत्येन कौपीनेन प्रवर्तयेत् । पुण्याहवाचनं कृत्वा ब्राह्मणांश्चापि भोजयेत् ॥ तमाव-हति मा मेधा मेधाजननकर्मणः । तत्कर्तव्यं प्रयत्नेन व्रतस्य च समाप्तये' इति ॥ अत्र भगवान्—'स्ववासापेक्षयाग्नेयीं दिशं याम्यां न नैर्ऋतिम् । वर्जयित्वा दिशो निन्द्यास्तिस्रोऽन्यस्यां दिशि स्थितम् ॥ पलाशं प्राप्य तत्रास्य मेधाजननमाचरेत् । तत्रैक-मूलमित्येव पलाशस्य विशेषणात् ॥ मूलप्रभृत्येनोद्धृतशाखाभेदसमन्वितम् । सर्वथा यस्यकस्यापि पलाशस्य त्वसंभवे ॥ कुशस्तम्ब-मुपागम्य तं कुम्भमितराणि च । प्रदक्षिणं त्रिःपरितः सिञ्चन्तं ब्रह्मचारिणम् । वाचयेन्मन्त्रमाचार्यः सुश्रवः सुश्रवा असि ॥ इ-त्येवमादिकं भूयागमन्तमवधानतः । प्रतिप्रदक्षिणं मन्त्रमप्यभ्यावर्त्य वाचयेत् ॥ ततः पूर्वधृतं वस्त्रमेखलाजिनं वटुः । पलाशमूले संन्यस्य नवान्यन्यानि धारयेत् ॥ गृहान्प्रतीयाद्दुर्नाधैः समस्तैर्बन्धुभिः सह । पथि स्वस्त्ययनान्मन्त्रान्वदेयुर्बान्धवाः सह ॥ अग्रतोऽस्य नयेयुर्मे वारिधारां च संततम् । ततः गन्धमङ्गलैर्दीपैः पूर्णकुम्भादिभिर्युतः । प्रापयेद्गृहमाचार्यः पुण्याहं वाचयेद्द्विजैः' इति ॥

अथैतन्मन्त्रार्थः । सुश्रवः सुश्रवा असीति—भो सुश्रवः पलाश, त्वं सुश्रवा असि शोभनस्य ब्रह्मवादस्य श्रोताऽसि । त्वं यथा सुश्रवा असि एवं मां सौश्रवसं शोभनस्य ब्रह्मवादस्य श्रोतारं सुकीर्तिं वा कुरु । यथा त्वं देवानां संबन्धिनो यज्ञस्य निधिपोऽसि एवमहं मनुष्याणां संबन्धिनो वेदस्य निधिपो भूयासम् इति ॥

अथ मेधाजननप्रयोगः ॥ प्रागुक्तक्रमेण चरितव्रतस्य ब्रह्मचारिणो मेधासिध्यर्थं आचार्यश्चतुर्थदिवसे मेधाजननं कर्म कु-र्यात् । तत्रायं क्रमः—प्रत्यगायत्योदक्प्रागुदक्पूर्वान्यतमस्यां दिशि ग्रामाद्वर्जितं पलाशं तदभावे मशाखं वा तदभावे कुशस्तम्बं

वा तदभावे स्वगृहस्यैशानभागे सर्वतो द्वादशाङ्गुलां त्रिमेखलां वेदिं कृत्वा तस्यां पलाशाङ्कुरसमन्वितामार्द्रां पलाशशाखां समूलाग्रकुशस्तम्बं वा प्रतिष्ठाप्य ब्रह्मचारिणान्वारब्धः संकल्पपूर्वकं पूजां कुर्यात् । तत्रायं क्रमः—तिथ्यादिकं संकीर्त्य मम कुमारस्योपनयनव्रतसमाप्तिवेदग्रहणसामर्थ्यलक्षणमेधासिद्धिद्वारा श्रीप० मेधापरनामकसावित्रीपूजां करिष्य इति संकल्प्य तत्र मेधायैनम इति नाममन्त्रेणावाहनाद्युपचारान्कृत्वा यावकसक्तुमोदकमिश्रमन्नं निवेद्य पुनश्च पूर्ववदभ्यर्च्य ब्रह्मचारिणा प्रणमय्य एवं शुद्धजलपात्रोदकेन—सुश्रवः सुश्रवा असि यथा त्वं सुश्रवः सुश्रवा असेवं मां सुश्रवः सौश्रवसं कुरु । यथा त्वं देवानां यज्ञस्य निधिपोस्येवमहं मनुष्याणां वेदस्य निधिपो भूयासम्' इति मन्त्रं वाचयन्बटुना प्रदक्षिणं कुर्वता जलसेचनं कारयित्वा प्रणमय्य एवंपुनर्द्विवारं कारयेत् । ततो ब्रह्मचारी स्नात्वा नवान्यज्ञोपवीताजिनमेखलादण्डान्पूर्ववत्समन्त्रं धृत्वा पुराणानि वेद्यां विसृज्य पूर्वधृतवाससी गुरवेदत्त्वाविधिवत्स्वस्तिवाचनंकृत्वा ब्राह्मणान्भोजयेत् ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे मेधाजननम् ॥

अथ पुनरुपनयनम् ॥ अंहःसंहतिहननं पुनरुपनयनं परेऽनुमन्यन्ते । लक्ष्मीनृसिंहमननं मन्येऽहं हन्त नित्यमानन्दम् ॥ अथ पुनरुपनयनविधिरभिधीयते । तत्र कारिका—'वेदान्तरमधीत्यैव ऋग्वेदं येत्वधीयते । उपनीतिरियं तेषामलंकरणवर्जिता ॥ तदेतदुपनीतस्य प्रायश्चित्तमिदं भवेत् । कृताकृतं च वपनं मेधाजननमेव च ॥ मेधाजननसद्भावे व्रतचर्या भवेदिह । अनुप्रवचनीयश्च तदभावे द्वयं नच ॥ परिदानं न कार्यं स्यात्रिमित्तानन्तरं त्विदम् । पूर्वस्या वाचयेत्स्थाने तत्सवितुर्वृणीमहे ॥ मिश्रेणास्यं द्विमात्रायाचार्यायात्मतुष्टये । भणितोऽत्र विशेषोऽयं समानमितरद्भवेत्' इति ॥ इदमत्र गृह्यम्—'अ-

नुपेतपूर्वस्याथोपेतपूर्वस्य कृताकृतं केशवपनं मेधाजननं चानिरुक्तं परिदानं कालश्च तत्सवितुर्वृणीमह इति सावित्रीम्' इति । अ-
स्यार्थः—एतदुपनयनविधानमनुपेतपूर्वस्य । उत्तरविवक्षयेदमारभ्यते । अथानन्तरमुपेतपूर्वस्य विशेषं वक्ष्यामः । कृताकृतमिति
वर्तते । परिदानमनुक्तमिति । न भवतीत्यर्थः । कालश्चोदगयनादिर्निरुक्तः । पूर्वस्याः सावित्र्याः स्थाने एनां सावित्रीं प्रयु-
ञ्जीत । प्रायश्चित्तत्वेन पुनरुपनयनप्राप्तौ एवं कुर्यादिति । अथोपेतपूर्वस्येत्यत्र हरदत्तस्तु—'अथानन्तरं वेदान्तरे उपेतपूर्वो य
इमं वेदमध्येतुमिच्छति तस्योपनयने विशेषो वक्ष्यते' एवं ब्रुवन्नेतज्ज्ञापयति तेन प्रकारेण प्रतिवेदमुपनयनं कर्तव्यमिति । अन्येतु
सकृत्कृतमुपनयनं सर्ववेदार्थमिति मन्यन्ते । तथाहापस्तम्बः—'सर्वेभ्यो वेदेभ्यः सावित्र्यनूच्यत इति हि ब्राह्मणम्' इति ॥
प्रतानार्यः स्मृतिरूपेणाह—'अघमर्षणां सामगानामृचमध्येतुमिच्छताम् । क्रिया स्यात्परिदानान्ता दीक्षादि न विधीयते ॥ ब्र-
ह्मौदनं च मेधावी दीक्षा च न विधीयते । ऋचमध्येतुकामानां दीक्षामिच्छन्ति केचन ॥ कृता क्रियास्तु दानान्ता द्विजानामन्य-
वेदिनाम् । ब्रह्मौदनमेतं न स्यात्सावित्र्याः स्थान इष्यते ॥ पुनर्मार्जनसावित्री ऋषिस्थाने व्रताभिधा । उत्तरायणकालादिनियतिर्न
विधीयते ॥ निष्कृत्यर्थोपनयने चालंकारश्च सुव्रत' इति ॥ यदाह भगवान्—'यो वेदान्तरमध्येतुं तत्सूत्रविधिना ततः । कृतो-
पनयनोऽधीत्य तं वेदं सकलं द्विजः ॥ द्वितीयमिममृग्वेदमध्येतुमभिवाञ्छया । एतद्गृह्योक्तविधिना पुनरप्युपनीयते ॥ केशानां
वपनं तस्य न क्रियेत क्रियेत वा । मेधाजननकर्मापि विज्ञेयं च कृताकृतम् । कर्तव्यपक्षाश्रयणे मेधाजननकर्मणः । ब्रह्मौदनस्य हो-

पाठा०—१ प्रताना तु ।

मस्य त्रिरात्रादिव्रतं तथा। कस्य ब्रह्मादिमन्त्रेण परिदानं च नेष्यते। तथोदगयनादिश्च कालो नापेक्ष्यतेऽत्र तु ॥ तत्सवितुर्वृणीमहे वयमित्येनमादिका। ऋक्सावित्री परिग्राह्या यद्यदन्यत्समीरितम् ॥ अन्योपनयने तत्तदलंकारविवर्जितम्। इहापि सर्वं कुर्वीतेत्युपनीतः पुनर्भवेत्' इति ॥ ❀ ॥ अथ पुनरुपनयनस्य निमित्तान्तराण्युच्यन्ते पराशरप्रायश्चित्तकाण्डे—'अजिनं मेखला दण्डो भैक्षचर्या व्रतानि च। निवर्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि' इति। आह मनुः—'अज्ञानात्प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च। पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः' इति। विष्णुरपि—'विड्वराहग्रामकुक्कुटगोमांसभक्षणेषु सर्वेष्वेषु द्विजातीनां प्रायश्चित्तान्ते पुनःसंस्कारं कुर्यात्' इति। शातातपस्तु—'लशुनं गृञ्जनं जग्ध्वा पलाण्डुं च तथा शुनाम्। उष्ट्रमानुषकेभाश्वरासभीक्षीरभोजनात् ॥ उपानयं पुनः कुर्यात्तप्तकृच्छ्रं चरेन्मुहुः' इति। यमोपि—'भूसुरो मद्यपाने च कृते गोभक्षणेऽपि वा। तप्तकृच्छ्रपरिक्लिष्टो मौञ्जीहोमेन शुध्यति' इति। अन्यच्च—'चण्डालान्नं द्विजो भुक्त्वा सम्यक्चान्द्रायणं चरेत्। बुद्धिपूर्वं तु कृच्छ्राब्दं पुनःसंस्कारमर्हति' इति। संग्रहे—'जीवन्यदि समागच्छेद्घृतकुम्भे निमज्य च। उद्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत्' इति। स्मृतिचन्द्रिकायां बोधायनस्तु—'सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः। अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति' ॥—प्रत्यन्तो म्लेच्छदेशः। 'प्रत्यन्तो म्लेच्छदेशः स्यात्' इत्यभिधानात्। हिमवत्कौशिकां विन्ध्यं पारं पश्चस्य पश्चिमम्। तीर्थयात्रां विना गत्वा पुनःसंस्कारमर्हति' इति। आदित्यपुराणेपि—'सौराष्ट्रसिन्धुसौवीरानावन्त्यं दक्षिणापथम्। एतान्देशान्द्विजो गत्वा पुनःसंस्कारमर्हति ॥ विण्मूत्रभक्षशुद्ध्यर्थं प्राजापत्यं समाचरेत्। पञ्चगव्यं च कुर्वीत स्नात्वा पीत्वा शुचिर्भवेत्'

इति । एतच प्राजापत्यं चरित्वा पश्चात्पञ्चगव्येन स्नानं कृत्वा पञ्चगव्यं प्राश्य शुद्धो भवतीति । एतत्पुनःसंस्कारात्प्रागेव कर्तव्यम् । 'प्रायश्चित्तान्ते पुनःसंस्कारं कुर्यात्' इति विष्णुवचनात् ॥ तथा विशेषमाह कश्यपः—'चीर्णप्रायश्चित्ताः प्राच्यामुदीच्यां वा दिशि गत्वा यत्र ग्रामपशूनां शब्दो न श्रूयते तस्मिन्देशेऽग्निं प्रज्वाल्य ब्रह्मासनमास्तीर्य प्राक्प्रणीतेन विधिना पुनःसंस्कारमर्हन्ति' इति । पराशरस्तु—'अजिनं मेखलां दण्डो भैक्षचर्यव्रतानि च । निवर्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि' इत्याह । अत्राजिनादिवद्वपनमपि निवर्तते । तदाह विष्णुः—'सर्वेष्वेतेषु द्विजातीनां प्रायश्चित्तान्ते भूयःसंस्कारं कुर्याद्वपनदण्डमेखलाभैक्षचर्यव्रतानि पुनःसंस्कारकर्मणि वर्जनीयानि व्रतानि सौम्यप्राजापत्यादीनि महानाम्न्यादीनि वा इति ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे पुनरुपनयनम् ॥

अथ ब्रह्मचारिधर्माः ॥ स ब्रह्मचारिधर्मैः स खलु भवेदेव गृहिषु गण्यतरः । स तु यतिपतिषु वरेण्यो यो भवति नृसिंह भवति यद्भक्तिः ॥ अथ ब्रह्मचारिधर्मा निरूप्यन्ते । तत्र मनुः—'उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः । आचारमग्निकार्यं च संध्योपासनमेव च' इति । यमस्तु—'मेखलामजिनं दण्डमुपवीतं च नित्यशः । कौपीनं कटिसूत्रं च ब्रह्मचारी तु धारयेत् ॥ अग्नीन्धनं भैक्षचर्यमधःशय्यां गुरोर्हितम् । आसमावर्तनात्कुर्यात्कृतोपनयनो द्विजः' इति ॥ अत्रोपाकरणपर्यन्तं गायत्र्या ब्रह्मयज्ञः कर्तव्य इत्याह कारिका—'उपाकरणपर्यन्तं सावित्र्या ब्रह्मयज्ञकम्' इति ॥ आश्वलायनाचार्यस्तु—'अञ्जनाभ्यञ्जनक्षौद्रगन्धपुष्पाक्षतान्व्रती । वर्जयेत्पादुकच्छत्रयानोष्णीषरथादिकान् ॥ न शयीतान्तरिक्षे तु नाशुचौ न

परं:मह । नचासीत न नग्नश्च नालीकं विभृयाद्व्रती ॥—नालीकं नारिकेलकमण्डलुम् । मनसापि नचोल्लङ्घ्या गुरोराज्ञा कथं-चन । गुरुवद्गुरुपत्नीषु तत्पुत्रादिषु सर्वदा ॥ प्रत्यक्षे वा परोक्षे वा चरेत प्रथमाश्रमी । वेदोदितव्रतादन्यान्व्रतान्सर्वान्न संचरेत् ॥ न स्नायात्सर्वतीर्थेषु न भुञ्जीयादितस्ततः । भैक्षमाहृत्य भुञ्जीयात्सायं प्रातर्गुरौ वसन् । तदाज्ञया त्रिषवणं स्नायीत च सदा शुचिः ॥ व्रती नोपवसेज्जातु पित्रोः संस्थितयोर्ऋते । देवर्षिपितृपूजां च कुर्याद्वा गुर्वनुज्ञया ॥ अच्छिन्नान्धारयेन्नित्यं दण्डाजि-नकमण्डलून् । यज्ञसूत्रपवित्रे च मेखलां च गुरौ वसन् ॥ छिन्नेष्वेतेषु संगृह्य नवान्यन्यानि च द्विजः । विधिना सुप्रशस्तेषां छिन्नान्यप्सु विनिक्षिपेत् ॥ छिन्नेष्वेतेषु दुष्टेषु प्राङ्नान्याधारणात्त्यजेत् । त्यागात्प्राग्विभृयादन्यत्प्रायश्चित्तीयते त्यजन् ॥—प्राङ्ना-न्याधारणादिति अन्येषां नवानां आधारणादिति ज्ञेयम् ॥ त्यक्त्वैवांश्चरतामेषां दिनमात्रं द्विजन्मनाम् । कृच्छ्रेण तेषां शुद्धिः स्या-न्नान्यथा ब्रह्मचारिणाम्' इति ॥ अत्र विशेषमाह भरद्वाजः—'कृष्णसारङ्गबस्तानामजिनं क्रमशः स्मृतम् । विप्रक्षत्रियवैश्यानां बटूनां धारणाय च ॥ सव्योपवीतमानेन कृत्वा सव्योक्तकर्मणि । उपवीतं यथाशोभमुपवीतेन धारयेत् ॥ निर्लोमं प्राक्तनं दुष्टं प्राणिभिर्मूषिकादिभिः । उपयुक्तं धृतं दग्धमधार्यमजिनं स्मृतम् ॥ यज्ञोपवीतं संधार्यमजिनेन सहानिशम् । विनाजिनं न संधार्यं जानता ब्रह्मचारिणा' इति । आश्वलायनाचार्यस्तु—'प्रमादाद्वाथवा स्वप्ने विसर्गे रेतसो द्विजः । व्रती शुध्यति कृच्छ्रेण त्रिरात्रो-पोषणेन वा ॥ स्वेच्छया त्यजतो रेतो मैथुनं वा प्रकुर्वतः । प्राजापत्येन चीर्णेन जपेन च शुचिर्भवेत् ॥ भुक्त्वा तु मृतकाद्यन्नं मत्वा त्रिमद्यहं जपेत् । अमत्वा तु दिनं जप्त्वा तदा गर्भान्पुरोदितान् ॥ न शावसूतके स्नातां मातापित्रोर्मृतेर्ऋते । व्रतिनश्चोत्स-

चालोकः श्राद्धान्नं न न शस्यते ॥ न भक्षयेच्च ताम्बूलमथ मैथुनमेव च । वर्जयेल्लशुनं लाजान्मापापूपादिकान्व्रती ॥ चरित्वा चतुरो वेदांस्त्रीन्द्वावेकमथापि वा ॥ तर्पयेद्दक्षिणाभिस्तु गुरुं भक्त्या विचक्षणः । अन्नं पित्रादिबन्धुभ्यः समाहृत्याथवा परात् ॥ राजभ्यो वा गुरुं सम्यक्तोपयेत्साधको व्रती ।—व्रतान्तरे संस्थितयोः पित्रोः कुर्यात्तदीरितः । आसमाप्य क्रियाः सर्वाः शिरः संवत्सरावधि । तयोः पितृत्वे संप्राप्ते पश्चादेव समापयेत् ॥ तद्व्रतं व्रतवान्विप्रो विधिवद्गुरुचोदितः ॥ गुर्वाज्ञा व्रतिभिः कार्या पूजाभक्तिपुरस्कृतैः' इति ॥ याज्ञवल्क्योऽपि—'मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम् । दर्पणालोकनाश्लीलपरिवादांश्च वर्जयेत्' ॥ मनुरपि—'वर्जयेन्मधु मांसं च गन्धमाल्यरसस्त्रियः । शुक्तानि चैव सर्वाणि प्राणिनां चैव हिंसनम् ॥ अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम् । कामं क्रोधं च लोभं च नर्तनं गीतवादनम् । द्यूतं च जनवादं च परिवादं तथानृतम् ॥ स्त्रीणां च प्रेक्षणालम्भमुपघातं परस्य च । एकः शयीत सर्वत्र न रेतः स्कन्दयेत्क्वचित्' इति ॥ यमः—'खट्वासनं च शयनं वर्जयेद्दन्तधावनम् । स्वप्नदेकः कुशेष्वेव न रेतः स्कन्दयेत्क्वचित्' ॥ कौर्मे—'नादर्शं चैव वीक्षेत नाचरेद्दन्तधावनम् । गुरूच्छिष्टं भेषजार्थं प्रयुञ्जीत न कामतः । एतच्च व्याधिमाद्विषये वेदितव्यं नचान्यथा' इति ॥ ❀ ॥ वैद्योपदिष्टं मधुमांसादिकं तु गुरोरुच्छिष्टं कृत्वा प्राश्नीयात् । तथाच वसिष्ठः—'चरेद्व्याधी यथाकामं गुरोरुच्छिष्टं कृत्वा भेषजार्थं सर्वं प्राश्नीयादि'ति । व्याधिमत्ता न भवतीत्यर्थः । तथाच बृहस्पतिः—'अष्टौ तान्यव्रतघ्नानि आपो मूलं घृतं पयः । हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्' ॥ उच्छिष्टं गुरुव्यतिरिक्तस्य वर्ज्यम् । तथाह वसिष्ठः—'उच्छिष्टमगुरोरभोज्यम्' इति । अगुरोरभोज्यमित्यनेन गुरोरुच्छिष्टं भोज्यमिति सू-

नितम् ॥ आपस्तम्बस्तु—'पितुर्ज्येष्ठभ्रातुश्चोच्छिष्टं भोज्यम्' इति । गुरुपुत्राद्युच्छिष्टं न भोक्तव्यम् । तदाह मनुः—'उन्मर्दनं तु गात्राणां स्नापनोच्छिष्टभोजने । न कुर्याद्गुरुपुत्रस्य पादयोश्चावनेजनम् ॥ अभ्यञ्जनं स्नापनं च गात्रोत्सादनमेव च । गुरुपत्न्या न कार्याणि केशानां च प्रसाधनम्' इति ॥ ❀ ॥ मातापित्रोर्विपत्तावपि ब्रह्मचारिणः शावाशौचं नेत्याह स्मृतिचन्द्रिकायां संवर्तः—'मातुर्गुरौ विपन्ने तु ब्रह्मचार्यपि यः सुतः । सव्रतश्चापि कुर्वीत अग्निपिण्डोदकक्रियाम् ॥ तेनाशौचं न कर्तव्यं संध्या चैव न लुम्पति । अग्निकार्यं च कर्तव्यं सायंप्रातश्च नित्यशः' इति । कात्यायनोपि—'न त्यजेत्सूतके कर्म ब्रह्मचारी स्वयं क्वचित्' इति ॥❀॥ अथ भिक्षाचरणम् ॥ तत्र व्यासः—'ब्राह्मणक्षत्रियविशश्चरेयुर्भैक्षमन्वहम् । सजातीयगृहेष्वेव सार्ववर्णिकमेव वा ॥'—सार्ववर्णिकमापद्विषयम् । अतएव भविष्यत्पुराणे दर्शितम्—'चातुर्वर्ण्यं चरेद्भैक्षमलाभे कुरुनन्दन' इति ॥❀॥ आपद्यपि न शूद्रपक्वान्नं गृह्णीयात् । तदाहाङ्गिराः—'आममेवाददीतासादवृत्तावेकरात्रकम् । आमं पूयति संस्कारे धर्मं तेभ्यः प्रयच्छताम् ॥ तस्मादामं ग्रहीतव्यं शूद्रादप्यङ्गिरोऽब्रवीत्' इति । एतदप्यापद्विषयम् ॥ ❀ ॥ शूद्रान्नोपजीवने दोषमाह पराशरः—'यस्तु वेदमधीयानः शूद्रान्नमुपजीवति । शूद्रो वेदफलं याति शूद्रत्वं सोऽधिगच्छति' इति । अन्यच—'शूद्रान्नेनोदरस्थेन ब्राह्मणो म्रियते यदि । त्रिकालज्ञो वेदवेदी धर्मज्ञोऽथ षडङ्गवित् ॥ चतुर्वेद्यपि यो विप्रः स प्रेतो जायते नरः' इति ॥❀॥ अनापद्यपि सजातीयेभ्यः प्रशस्तेभ्य एव भैक्षमाहरेत् । तदाह मनुः—'वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मणि । ब्रह्मचार्याहरेद्भैक्षं गृहिभ्यः प्रयतोऽन्वहम्' इति । उक्तेषु केषुचिदपवादमाह सएव—'गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु । अलाभे त्वन्यगेहानां पूर्वं

पूर्वं परिश्रयेत् ॥ सर्वं वापि चरेद्ग्रामं पूर्वोक्तानामसंभवे । नियम्य प्रयतो वाचमभिशस्तांस्तु वर्जयेत् ॥ तच्च भैक्षं भोजनपर्याप्तमेव कर्तव्यम् । तदाह यमः—'आहारमात्रादधिकं न क्वचिद्भैक्षमाहरेत् । युज्यते स्तेयदोषेण कामतोऽधिकमाहरन् ॥ उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान् । आहरेद्यावदर्थानि भैक्षं चाहरहश्चरेत्' इति ॥ ❀ ॥ निषिद्धभैक्षमाहात्रिः—'हस्तदत्ता तु या भिक्षा लवणं व्यञ्जनानि च । भुक्त्वा ह्यशुचितां यान्ति दाता स्वर्गं न गच्छति ॥ माधूकरीयमादाय ब्राह्मणेभ्यः प्रयच्छति । स याति नरकं घोरं भोक्ता भुञ्जति किल्बिषम् ॥ तस्मान्नोपहरेद्भैक्षमतिरिक्तं कदाचन' इति ॥ स्मृतिसंग्रहे—'ब्रह्मचारी तु भैक्षान्नमुच्छिष्टं न समाचरेत् । अशक्तौ निखनेद्भूमावप्सु वापि प्रवेशयेत्' ॥ आहृतं भैक्षं गुरवे निवेद्य भुञ्जीत । तथाच गौतमः—'निवेद्य गुरवे भिक्षां भुञ्जीतासंनिधौ गुरोः । तद्भार्यापुत्रसब्रह्मचारिभ्य इति चान्वहम्' ॥ याज्ञवल्क्योपि—'कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया । आपोशनक्रियापूर्वं संस्कृत्यान्नमकुत्सयन्' ॥ ❀ ॥ संस्काराश्च हारीतेन दर्शिताः—'भैक्षमेन हि पर्यग्निकृतमादित्यदर्शितं गुरवे निवेदितमनुज्ञातममृतसंमितं प्राहुर्यदश्नाति ब्रह्मचारी ब्रह्मसिद्धिमवाप्नोति' इति ॥ ❀ ॥ एकान्ननिषेधमाह मनुः—'भैक्षेण वर्तयेन्नित्यं नैकान्नाशी भवेद्व्रती । भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता ॥ व्रते वा देवदैवत्ये पित्र्ये कर्मण्यमक्षयन् । काममभ्यर्थितोऽश्नीयाद्व्रतमस्य न लुप्यते' ॥ अकरणे प्रत्यवायमाह मनुः—'अकृत्वा भैक्षचरणमसमिध्य च पावकम् । अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत्' इति ॥ इति भिक्षाचरणविचारः ॥

अथाग्निकार्यम् । तत्र कारिका—'अग्निकार्यं च भिक्षायाः प्रागूर्ध्वं वा तदिष्यते । पर्यूहनोक्षणे स्नातामादावन्ते च क-

र्मणः' ॥ मनुरपि—'दूरादाहृत्य समिधः संनिदध्याद्विहायसि । सायं प्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः' । विहायसि अन्तरिक्षे ॥❀॥ समिदाहरणमाह बैजवापः—'पुरास्तमयात्प्रागुदीचीं दिशं गत्वा अहिंसन्नारण्यान्समिधमाहरेदार्द्रामन्नाद्यकामः शुष्कां ब्रह्मवर्चसकाम उभयीमुभयकामः' इति ॥ ❀ ॥ समिल्लक्षणमाह कात्यायनः—'नाङ्गुष्ठादधिका कार्या समित्स्थूलतया क्वचित् । न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥ प्रादेशान्नाधिकन्यूना तथा न स्याद्विशाखिका । नातिपर्वा नातियमा होमेषु तु विजानता ॥ विशीर्णा विदला ह्रस्वा वक्रा ससुषिरा कृशा । दीर्घा स्थूला घुणैर्दष्टा कर्मसिद्धिविनाशिका' इति ॥ समिन्नियम उक्तो वायुपुराणे—'पालाश्यः समिधः कार्याः खादिर्यस्तदलाभतः । शमीरोहितकाश्वत्थास्तदलाभेर्कवेतसौ' इति ॥❀॥ अग्निकार्याकरणे प्रत्यवायमाह हारीतः—'पुरा जग्राह वै मृत्युर्हिंसयन्ब्रह्मचारिणम् । अग्निस्तं मोचयामास तस्मात्परिचरेद्धि तम् ॥ ब्रह्मचारी यदा त्वग्नावादध्यात्समिधो नहि । गृह्णीयात्तं तदा मृत्युरादध्यात्समिधस्ततः' इति ॥ ❀ ॥ अग्निकार्याकरणप्रायश्चित्तमुक्तमृग्विधाने—'मानस्तोके जपेन्मन्त्रं शतसंख्यं शिवालये । अग्निकार्यं विना भुङ्क्ते न पापं ब्रह्मचारिणः' इति ॥ इत्यग्निकार्यविधिः ॥ ❀ ॥ अथाभिवादनविधिः । तत्र कालमाह यमः—'ततोऽभिवादयेद्वृद्धानग्निकार्यादनन्तरम्' इति ॥ तत्प्रकारमाहाचार्यः—'वामं वामेन संस्पृश्य दक्षिणेन तु दक्षिणम् । हस्तेन कर्णं हस्ताभ्यां गुरूणामभिवादनम् ॥ वामोपरि करं कृत्वा दक्षिणं नाम चोच्चरेत् । जानुप्रभृति पादान्तमारभ्यापदयोर्नयेत्' इति ॥ एतच्च प्रत्युत्थाय कर्तव्यम् । तदाहापस्तम्बः—'ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आगते । प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते' ॥ विष्णुः—'शिष्याणामाशिषं दद्यात्पा-

दोपग्रहणे गुरुः । स्पृष्ट्वा कर्णौ च विदुषां मूर्धानं त्वेकपाणिना' ॥ अत्रिः—'दक्षिणं पाणिमुद्धृत्य प्रकाममभिवादयेत् । श्रोत्रियेभ्योऽञ्जलिः कार्यः पादोपग्रहणं गुरोः' ॥ अत्र ब्राह्मणसमवायेऽभिवादनप्रकारमाह मनुः—'लौकिकं वैदिकं वापि तथाध्यात्मिकमेव वा । आददीत यतो ज्ञानं तं पूर्वमभिवादयेत् ॥ नामधेयस्य ये केचिदभिवादं न जानते । तान्प्राज्ञोऽहमिति ब्रूयात्स्त्रियः सर्वास्तथैव च' इति ॥ ॥ यः पुनर्जानन्नप्याशिषं न करोति तस्य दोषो भविष्यपुराणे दर्शितः—'अभिवादे कृते यस्तु न करोत्यभिवादनम् । आशिषं वा न कुरुते स याति नरकं ध्रुवम्' इति ॥ तस्य फलविशेषमाह मनुः—'अभिवादनशीलस्य नित्यं वृद्धोपसेविनः । चत्वारि तस्य वर्धन्ते आयुः प्रज्ञा यशो बलम्' इति ॥ इत्यभिवादनविधिः ॥ ❀ ॥ अथ ब्रह्मचर्यकालमाह याज्ञवल्क्यः—'प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा । ग्रहणान्तिकमित्येके केशान्तं चैव षोडशे ॥—केशान्तं गौदानिकम् । वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् । अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्' इति ॥ इत्युपकुर्वाणधर्माः ॥

अथ नैष्ठिकधर्माः ॥ निष्ठुरा निष्ठिता येन येन श्रेष्ठाः प्रतिष्ठिताः । सुरज्येष्ठादिकं ज्येष्ठं श्रीश्रेष्ठं तमुपाश्रये ॥ अथ नैष्ठिकधर्मा उच्यन्ते । तत्र याज्ञवल्क्यः—'नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसंनिधौ । तदभावेऽस्य जनयेत्पत्न्यां वैश्वानरेऽपि वा' इति । मनुरपि—'यदि त्वात्यन्तिकं वासं रोचयेत गुरोः कुले । युक्तः परिचरेदेनमाशरीरविमोक्षणात् ॥ आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते । गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत् ॥ एतेष्वविद्यमानेषु स्थानासनविहारवान् । प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मनः ॥ स्थानासनविहारवान् कालविहाराश्रयणेन स्थानोपवेशगमनवानित्यर्थः । एतच्च सद्वृत्तब्राह्मणगुर्वादि-

विषयम् । तदुक्तं तेनैव—'ब्राह्मणे च गुरौ शिष्ये नासमाप्त्यन्तिकं चरेत् । ब्राह्मणे चाप्यनूचाने काङ्क्षन्मतिमनुत्तमाम्' इति । वसिष्ठोऽपि—'ब्रह्मचर्यं चरेद्धीमानाशरीरविमोक्षणात् । आचार्ये तु खलु प्रेते अग्निं परिचरेत्स्वयम्' ॥—संयतवाक् चतुर्थषष्ठाष्टमकालभैक्ष्याशी गुर्वधीनो बद्धाञ्जलिशिरो गुरुं गच्छन्तमनुगच्छेदासीनमुपतिष्ठेच्छयानश्चेदासीताहूताध्यायी सर्वलब्धनिवेदी सद्वानयनदन्तप्रक्षालनाभ्यञ्जनरजो ध्यानासनशीलस्त्रिरह्नोऽभ्युपेयादपः इति । अहनि त्रिषवणस्नायी स्यादित्यर्थः ॥ ग्रन्थान्तरेतु—'ब्रह्मसूत्राक्षमालादण्डकौपीनकुण्डिकामौञ्जीमेखलाधारणं सकृद्भोजनमसकृदवगाहनमुभयकालमग्निहोत्रसंध्योपासनमलुप्तलोमकेशनखस्रग्गन्धमाल्यस्नेहाभ्यञ्जनवेषालंकारछत्रोपानद्वाहनारोहणाध्यापनचिकित्साज्योतिषलक्षणवास्तुविद्यामङ्गलपौष्टिकशान्तिकगान्धर्वसंबन्धशिल्परञ्जनकारकर्मवेदमक्षौद्रव्यसनधान्यपरिच्छेदनशास्त्रद्यूतव्यवहारपरिहासप्रणयकुहकविस्मापनविडम्बनविवादोत्सुकपरिनिंदनारोदनपादोद्वर्तनं चैतानि वर्ज्यानि ॥ दक्षस्त्वग्निकार्यविधिमाह—'यज्ञियां समिधमाहृत्य संमार्जनोपलेपनोद्धोधनसमूहनसमिन्धनपर्यग्निकरणपरिक्रमोपस्थापनहोमस्तोत्रनमस्कारादिभिरग्निं परिचरेन्नाग्निमधितिष्ठेन्न पद्भ्यां कर्षेन्न मुखेनोपधमेत्सापशामिं च युगपद्धारयेन्नाजीर्णभुक्तो नातिथिभ्यो दद्यान्नेन्धनान्यभ्यादध्यान्न निष्ठीवेद्द्विविधहविर्धानहविःशेषैराग्नेयैरहरहरग्निमिन्धेदामध्य गच्छेदाहृत्य निवेदयेत्' इति ॥ एवमुपकुर्वतः फलमाह मनुः—'आसमाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम् । स गच्छत्यञ्जसा विप्रो ब्रह्मणः सद्म शाश्वतम्' ॥ याज्ञवल्क्योऽपि—'अनेन विधिना देहं साधयन्विजितेन्द्रियः । ब्रह्मलोकमवाप्नोति न (देही) चेहाजायते पुनः' ॥ इति नैष्ठिकधर्माः ॥

व्रतोपहतिप्रायश्चित्तम् । एवमुपकुर्वतो नैष्ठिकस्य च धर्मानुक्त्वा तयोर्व्रतोपहतौ विशेषप्रायश्चित्तं संगृह्योच्यते । तत्र शातातपः—'ब्रह्मचारी तु योऽश्नीयान्मधु मांसं तथैव च । प्राजापत्यं चरेत्कृच्छ्रं मौञ्जीहोमेन शुध्यति ॥ भिक्षाशनमकृत्वा यः स्वस्थो ह्येकान्नमश्नुते । अस्नात्वा चैव यो भुङ्क्ते गायत्र्यष्टशतं जपेत् ॥ दिवा स्वपिति यः स्वस्थो ब्रह्मचारी कथंचन । स्नात्वा सूर्यं समभ्यर्च्य गायत्र्यष्टशतं जपेत् ॥ सूतकान्नं नवश्राद्धं मासिकान्नं तथैव च । ब्रह्मचारी तु योऽश्नीयात्त्रिरात्रेणैव शुध्यति' इति । ऋग्विधाने—'एकोद्दिष्टे ब्रह्मचारी प्रजपेद्द्युभिरक्तुभिः । पादं भुङ्क्ते लक्षसंख्यां मुच्यते किल्बिषात्ततः ॥ अरिष्टैर्मिर्जयेत्पादं षोडशे भोजयेद्यदि । पश्चायुतं ब्रह्मचारी जले वा कल्मषं नहि ॥ तन्नोमित्रो जपेत्पादं वृषोत्सर्गे च भोजयेत् । शिवालये ब्रह्मचारी त्र्ययुतं चेन्न दुष्कृतम् ॥ अग्नओजिष्ठपादं च न्यूने भुङ्क्ते जले यदा । त्र्ययुतं चेद्ब्रह्मचारी तदा पापात्प्रमुच्यते ॥ अदितिः प्रजपेत्पादं सपिण्डीं भोजयेद्यदा । अयुतं च ब्रह्मचारी नरकान्मुच्यते तदा ॥ घर्मासमन्तान्मन्त्रं च शतवारं यदा तदा । व्रतलोपे ब्रह्मचारी भुक्तिकाले न किल्बिषम्' इति ॥ ॥ पराशरप्रायश्चित्तकाण्डे बृहद्यमस्तु—'मासिकादिषु योऽश्नीयादसमाप्तव्रतो द्विजः । त्रिरात्रमुपवासोऽत्र प्रायश्चित्तं विधीयते ॥ प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति' । इदमज्ञानविषयम् ॥ ॥ ज्ञानपूर्वके तु स एवाह—'मधु मांसं च योऽश्नीयाच्छ्राद्धं सूतकमेव वा । प्राजापत्यं चरेत्कृच्छ्रं व्रतशेषं समापयेत्' इति ॥ ❀ ॥ अनृतप्रायश्चित्तमाह गर्गः—'त्रिरात्रमेकरात्रं वा ब्रह्मचर्यानृते चरेत्' इति ॥ ❀ ॥ स्त्रीसङ्गदोषप्रायश्चित्तमाह याज्ञवल्क्यः—'अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितम् । गर्दभं समुपालभ्य नैर्ऋतं स विशुध्यति' इति ॥ मनुरपि—'अवकीर्णी तु कामेन

गर्दभेन चतुष्पथे । स्थालीपाकविधानेन यजेत्तं निर्ऋतीं दिशम्' इति ॥ शातातपस्तु—'ब्रह्मचारी तु यो गच्छेत्स्त्रियं कामेन पीडितः । प्राजापत्यं चरेन्नित्यमब्दमेकमतन्द्रितः ॥ निर्वपेच्च पुरोडाशं ब्रह्मचारी तु पर्वणि । मन्त्रैः शाकलहोमीयैस्त्वाज्यं च होमयेत् ॥ ❀ ॥ मैथुनमष्टाङ्गमित्याह दक्षः—'ब्रह्मचर्यं सदा रक्षेदष्टधा धारणं पृथक् । स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥ एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् ॥ नष्टं भवतीति शेषः । न ध्यातव्यं न गन्तव्यं न श्रोतव्यं कथंचन । एतैः सर्वैः सुनिष्पन्नो यतिर्भवति नान्यथा' इति ॥ ❀ ॥ शुना दष्टस्य प्रायश्चित्तमाह पराशरः—'ब्रह्मचारी शुना दष्टस्त्र्यहं सायं पयः पिबेत् । गृहस्थस्तु द्विरात्रं वाप्येकाहं वाग्निहोत्रवान् ॥ नाभेरूर्ध्वं तु दष्टस्य तदेतद्द्विगुणं भवेत् । स्यादेतत्त्रिगुणं वक्त्रे मस्तके च चतुर्गुणम्' इति ॥ ❀ ॥ एतत्प्रायश्चित्तं नैष्ठिकेन द्विगुणं कर्तव्यमित्याह हारीतः—'उपकुर्वस्तु यः कुर्यात्कामतोऽकामतोऽपि वा । तदेतद्द्विगुणं कुर्याद्ब्रह्मचारी तु नैष्ठिकः' इति ॥ शातातपस्तु—'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः । प्रायश्चित्तं न तस्यास्ति येन शुद्धो भवेत्तु सः' इति ॥ ❀ ॥ नैर्ऋतयागः । स्मृत्यर्थसारे—'व्रतोपकुर्वाणो नैष्ठिकश्च त्रैवर्णिकब्रह्मचारी स्त्रियं गत्वाऽवकीर्णी भवति । तत्र गुरुतल्पे तत्समे च गुरुतल्पप्रायश्चित्तमुक्तम् । ततोऽन्यस्त्रियं गत्वा सनिर्ऋतिदैवतेनैकाक्षगर्दभेन रक्षोदैवतेन वा शुनारण्येन चतुष्पथे रात्रौ लौकिकाग्नौ आश्वलायनगृह्योक्तपशुतन्त्रेणेष्ट्वाऽजिनमूर्ध्वबालं परिधाय त्रिषवणस्नायी लोहितपात्रं सकर्माचक्षाणः सप्तगृहभैक्षाशी नैवाराशी वत्स-

पाठा०—१ एवं मैथुनमष्टाङ्गं । २ चर्यं अष्टा आह प्रजापतिः ।

रेण शुद्धेत । पश्चादशक्तौ पाकयज्ञतन्त्रेण निर्ऋतिं निरुप्य पक्त्वा—कामाय स्वाहा निर्ऋत्यै स्वाहा रक्षोभ्यः स्वाहा इति हुत्वा होमशेषं समाप्य अब्दव्रतं चरित्वा शुद्धेत् । इदं वार्षिकव्रतं अश्रोत्रियब्राह्मणपत्न्यां क्षत्रियपत्न्यां वैश्यपत्न्यां वा ज्ञेयम् । गुणवत्यां क्षत्रियायां श्रोत्रियपत्न्यां द्विवार्षिकम् । गुणवत्यां श्रोत्रियब्राह्मणपत्न्यां त्रैवार्षिकम् । अमत्यावकीर्णी वार्षिकस्थाने ब्रह्महत्याव्रतं षण्मासं चीरवासाश्चरेत् । अत्यन्तव्यभिचारिकासु शूद्रभार्यासु सचेलं स्नात्वोदकुम्भं दद्यात् । वैश्यायां चतुर्थकालाहारो ब्राह्मणान्भोजयेत् यवसभारं च गोभ्यो दद्यात् । क्षत्रियायां त्रिरात्रोपोषितो घृतकुम्भं दद्यात् । ब्राह्मण्यां षड्रात्रोपोषितो गां दद्यात् । स्त्रीसङ्गं विना मत्या रेतो विसृज्य नैर्ऋतयज्ञमात्रं कुर्यात् । दिवास्वप्ने चैवम् ॥❀॥ कृच्छ्रचान्द्रायणादिष्वधितिष्ठतो ब्रह्मचारिणो रेतःस्कन्दनं चेत्तमेव नैर्ऋतयागः । स्वप्ने रेतःस्कन्दने ब्रह्मचारी स्नात्वार्कमभ्यर्च्य पुनर्मामैत्विन्द्रियमित्यादृचौ त्रिर्जपेत् । ब्रह्मचारीत्वनातुरो गुरुतरकार्यव्यग्रतया सप्तरात्रं गुरुशुश्रूषादेर्भैक्षस्याग्निकार्यस्य वा लोपे—कामावकीर्णोऽस्म्यवकीर्णोऽसि कामकामाय स्वाहा । कामाभिद्रुग्धोऽस्म्यभिद्रुग्धोऽसि कामकामाय स्वाहा इत्याज्याहुती हुत्वा—सं मासिञ्चन्तु मरुतः समिन्द्रः सं बृहस्पतिः । सं मायमग्निः सिञ्चत्वायुषा च बलेन च इत्यनेनाग्निमुपतिष्ठेत । अव्यग्रतया लोपेऽवकीर्णिव्रतम् ॥❀॥ उपनयनानन्तरं व्रतमध्ये यज्ञोपवीतनाशे वस्त्रं वा सूत्रान्तरं वा धृत्वा—मनोज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳसमिमं दधातु । बृहस्पतिस्तनुतामिमं नो विश्वेदेवा इह मादयन्ताम् ॥ त्रयस्त्रिꣳशत्तन्तवो ये वितत्निरे य इमं यज्ञꣳस्वधया ददन्ते । तेषां छिन्नं प्रत्येतद्दधामि स्वाहा घर्मो देवाँ अप्येतु ॥ इत्येताभ्यां मनोलिङ्गकाभ्यां द्वे । त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः ॥ यद्वो वयं प्रमिनाम व्रतानि

विदुषी देवा अनिंदुरागाः । अग्निष्टद्विश्वमापृणाति विद्वान्येभिर्देवोऽक्रतुभिः कल्पयाति ॥ इत्येताभ्यां व्रतलिङ्गकाभ्यां च द्वे । एवं चनस आज्याहुतीर्हुत्वा यज्ञोपवीतं विधिवद्धारयेत् ॥❀॥ असङ्क्षेभोजनेऽभ्युदितेऽस्तमिते शयाने दिवास्वप्ने नग्नस्त्रीदर्शने नग्नस्नापे श्मशानाक्रमणे द्रुमाद्यारोहणे पूजातिक्रमणेऽग्निकार्यलोपे चैतैर्मन्त्रैरेव जुहुयात् । मणिवासोगवादीनां प्रतिग्रहे गायत्र्या अष्टोत्तरसहस्रं जपेत् । श्वानरजंगमऋक्षनद्दीपशुसरीसृपादिप्राणिवधे कूष्माण्डहोमः । यज्ञोपवीतं विना यज्ञोपवीतमन्यथा धृत्वा वा विण्मूत्रोत्सर्जने दिवाभोजने वा गायत्र्या अष्टोत्तरसहस्रेण नवप्राणायामैश्च शुद्धिः । उदकपाने त्रिःप्राणायामाः । नक्तं भक्षणे पट्प्राणायामाः । यज्ञोपवीतमेखलाजिनदण्डानां लोपे गुर्वनुज्ञातो व्याहृतिहोमं पट्प्राणायामांश्च कृत्वा पुनर्यथोक्तवद्धारयेत् । जीर्णानि संत्यज्याप्सु निक्षिपेत् । संध्याग्निकार्यलोपे स्नात्वा गायत्र्या अष्टोत्तरसहस्रजपः । भिक्षाटनमकृत्वा स्वस्थश्चैकान्नाशनेऽष्टोत्तरसहस्रजपः । गुरुशुश्रूषादिलोपेऽष्टोत्तरशतजपः । मद्यमेध्यमांसादिभक्षणे कृच्छ्रम् । अभ्यासे द्विगुणं पुनःसंस्कारश्च । वैद्यार्थे गुरूच्छिष्टं मध्वादि भक्षयेत् । ततो नीरुजो हंसः शुचिषदित्यादित्यमुपतिष्ठेत । गुरोरनुज्ञाविघातादिप्रतिकूलमाचर्यमाणः पुनर्यत्नेन गुरुं प्रसाद्य पादकृच्छ्रं कुर्यादिति ॥ इति ब्रह्मचारिणो विशेषप्रायश्चित्तानि । साधारणानि तु प्रायश्चित्तकाण्डे वक्ष्यन्ते ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे ब्रह्मचारिधर्मप्रकरणम् ॥

अथोपनयनप्रतिबन्धे निर्णयः ।—'नान्दीश्राद्धे कृते पश्चादुल्कापाताग्निवृष्टिषु । सूतकादिनिमित्तेषु न कुर्यान्मौञ्जिबन्धनम्' ॥ प्रचेताः—'यस्य माङ्गलिकं कार्यं तस्य माता रजस्वला । तदा न तत्प्रकर्तव्यमायुःक्षयकरं हि तत्' ॥ ज्योतिःसारे—

'उद्वाहव्रतचूडासु माता यदि रजस्वला । तदा न मङ्गलं कार्यं शुद्धौ कार्यं शुभेप्सुभिः ॥ प्रारम्भात्प्राग्विवाहस्य माता यदि रजस्वला । निवृत्तिस्तस्य कर्तव्या सहस्रश्रुतिचोदनात् ॥ नान्दीश्राद्धे कृते पश्चाद्वटोर्माता रजस्वला । मौञ्जीबन्धं न कुर्वीत गार्ग्यस्य मतं यथा' ॥ प्रयोगसारावल्यां गार्ग्यः—'मातृणां भोजनात्पूर्वं माताऽस्पृश्या भवेद्यदि । तदा कर्म न कुर्वीत यावद्भोजनसंगता' इति ॥ षट्त्रिंशन्मते—'माता सहैव भुञ्जीयादूर्ध्वं माता रजस्वला । व्रतबन्धः प्रशस्तः स्यादित्याह भगवान्यमः ॥ नान्दीश्राद्धे कृते पश्चात्कन्यामाता रजस्वला । कन्यादानं पिता कुर्यादित्याङ्गिरसभाषितम् ॥ नान्दीश्राद्धे कृते यस्य भवेद्भार्या रजस्वला । विवाहे नैव दोषः स्याद्दोषः स्यान्मौञ्जिबन्धने' ॥ आचार्यः—'करोत्यन्यस्य चेद्यस्तु व्रतबन्धं विनौरसम् । भार्या तस्य न दोषः स्याद्गुर्विणी वा रजस्वला ॥ धर्मार्थं कुरुते विप्रो मौञ्जीबन्धनमेव च । न दोषो गर्भरजसोरित्याह स्मृतिसंग्रहः ॥ अथोपनयनादौ तु मुहूर्तात्पूर्वतश्च । माता सहैव भुञ्जीयाद्विवाहे भार्यया सह' ॥ इत्युपनयनप्रतिबन्धविषयो निर्णयः ॥

अथोपाकरणप्रकरणम् ॥ भगवन्तमादिदेवं भजत प्रह्लादभाग्यपरिपाकम् । सगुणयति सत्क्रियौघं स्मरणमुपाकर्म वेदमिव यस्य ॥ अथोपाकरणविधिरभिधीयते ॥ तत्र कारिका—'अध्यायानामुपाकर्म श्रावण्यां श्रवणेन तु । तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते ॥ अप्रादुर्भूतौषधयस्तस्मिन्मासे तु न भवन्ति चेत् । तदा भाद्रपदे मासि श्रवणेन करोति तत्' इति । इदमत्र सूत्रम्—'अथातोऽध्यायोपाकरणमोषधीनां प्रादुर्भावे श्रवणेन श्रावणस्य पञ्चम्यां हस्तेन वा' इति । अस्यार्थः—अध्यायानामध्यायस्तस्योपाकरणं प्रारम्भो येन कर्मणा तदध्यायोपाकरणम् । अथशब्दो हेत्वर्थः । तस्माद्ब्रह्मयज्ञो नित्यः । अध्या-

योपाकरणं ब्रूम इति। तस्य कालमाह—ओषधीनामिति। श्रावणस्य मासस्य श्रवणेन कर्तव्यम्। ओषधीनां प्रादुर्भाव इति वचनं यदा श्रावणमासे प्रादुर्भावो न स्यात्तदा भाद्रपदे श्रवणेन कर्तव्यमित्येवमर्थम्। त्वपकर्षे कर्मोपकर्षशङ्कैव नास्ति। यदा भाद्रपद उत्कर्षो भवति तदापि कर्मोत्कर्षाशङ्का नैव कार्या। 'तद्वार्षिकमित्याचक्षत' इति वक्ष्यमाणसमाख्याबलात्। वर्षासु क्रियत इति वार्षिकम्। श्रावणभाद्रपदौ हि वर्षर्तुः। श्रावणे प्रादुर्भावाभावे कर्माकरणाशङ्काप्यनेनैव निरस्ता। श्रवणेनेति श्रावणेन युक्ते काल इत्यर्थः। 'नक्षत्रेण युक्तः कालः' इत्यणि 'लुबविशेषे' इत्यस्य लुप्। 'नक्षत्रे च लुपि' इति तस्य सप्तम्यर्थे तृतीया। नक्षत्रशब्देषु सर्वत्रैवं योज्यम्। पञ्चम्यामिति। अत्रापि श्रावणस्येति संबध्यते। मध्यगतस्य विशेषाभावात्प्रयोजनव[चन]त्वाच्च। श्रावणस्य मासस्य पञ्चमी यदा हस्तेन युज्यते तदा वेत्यर्थः। एवंच कालत्रयमुक्तं भवति' इति॥ अत्र भगवान्—'अथातः श्रावणे मासि श्रवणर्क्षयुते दिने। श्रावण्यां श्रावणे मासि पञ्चम्यां हस्तसंयुते॥ दिवसे विदधीतैवदुपाकर्म यथोदितम्। अध्यायोपाकृतिं कुर्यात्तत्रोपासनवह्निना' इति॥ अत्रोक्तश्रवणनक्षत्रे खण्डे विशेषमाह व्यासः—'धनिष्ठासंयुते कुर्याच्छ्रावण्यां कर्म यद्भवेत्। तत्कर्म सफलं ज्ञेयमुपाकरणसंज्ञितम्॥ श्रवणेन तु तत्कर्म ह्युत्तराषाढसंयुते। संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति' इति। अत्र याज्ञवल्क्यादिभिः केवलायाः श्रावण्याः पञ्चम्याश्च यद्ग्रहणं कृतं तदन्यशाखिविषयम्। तदुक्तं स्मृतिमहार्णवे—'यदि स्याच्छ्रावणं पर्व ग्रहसंक्रान्तिदूषितम्। स्यादुपाकरणं शुक्लपञ्चम्यां श्रवणस्य तु'॥ एतच्च वाजसनेयिविषयम्। तथाच तत्रैव—'संक्रान्तिर्ग्रहणं चापि पौर्णमास्यां यदा भवेत्। उपाकृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिः' इत्यादि। अत्र

विशेषमाह गर्गः—'पर्वण्यौदयिके कुर्युः श्रावण्यां तैत्तिरीयकाः । बह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रान्तिवर्जिते' इति । ( उदयव्यापि पर्वैन विष्णुर्क्षं घटिकाद्वयम् ।। तत्कर्म सफलं ज्ञेयं तस्य पुण्यं त्वनन्तकम् )।। अत्र कालविशेषमाह वृद्धमनुः—'अत्रार्धरात्रादर्वाक्चेद्ग्रहः संक्रम एव वा । नोपाकर्म तदा कुर्याच्छ्रावण्यां श्रवणेन वा' इति ।। कात्यायनोऽपि—'अर्धरात्रादधस्ताच्चेत्संक्रान्तिर्ग्रहणं तदा । उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत्' इति ।। भृगुस्तु—'मृते राजनि राष्ट्रे वा परचक्रादिपीडिते । अनुसयीजेऽनावृष्ट्यां नोपाकुर्याद्विचक्षणः' इति । वसिष्ठोऽपि—'अनुसयीजे नृपतौ विनष्टे सुते मृते राष्ट्रसमाकुले च । उत्सर्जनोपाकरणे न कार्ये ग्रस्तेन्दुसूर्ये गुरुरस्तयाते' । गुरुर्गुराविल्यर्थः । यत्तु वचनम्—'वेदोपाकरणे प्राप्ते कुलीरस्थे दिवाकरे । उपाकर्म न कर्तव्यं कर्तव्यं सिंहयुक्तके' इति । एतद्देशान्तरविषयम् । तथाच बृहस्पतिः—'नर्मदोत्तरदेशे तु कर्तव्यं सिंहयुक्तके । कर्कटे संस्थिते भानावुपाकुर्यात्तु दक्षिणे' इति । एतत्सर्वं विचार्य श्रावणभाद्रपदयोरन्यतरस्मिन्नुक्तदिने कर्तव्यम् । तदुक्तं स्मृत्यन्तरे—'श्रवणादौ घटिकाचतुष्टयाभिजिन्नक्षत्रांशवर्जं वा । श्रवणखण्डे सति—'धनिष्ठासंयुतं ग्राह्यं नोत्तराषाढसंयुतम्' इति । हस्तनक्षत्रं वा प्रयोगपर्याप्तं ग्राह्यम् । मृतकादिविघ्नसंभवे औषध्युत्पत्त्यभावे च श्रावणभाद्रपदयोरेकस्मिन्दिने ग्रहसंक्रान्तिवर्जिते कार्यम् । कर्मणो न लोपो नोत्कर्षश्च' इति । ( अत्र विशेषमाह ऋष्यशृङ्गः—'दशहरासु नोत्कर्षश्चतसृषु युगादिषु । उपाकर्म महापष्ठ्योरेतदिष्टं वृषादिषु' ।। अन्यदपि—'उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणाम् । अभिषेकेऽब्दवृद्धौ च नैवोत्कर्षो युगादिषु' । इति ) यत्तु सायणीये

पाठा०—1 परसंक्रान्तिपीडिते ।

व्यासवचनम्—'श्रावणस्य तु मासस्य पौर्णमास्यां द्विजन्मनाम्। आषाढ्यां प्रौष्ठपद्यां वा वेदोपाकरणं स्मृतम्' इति। तदेतच्छाखान्तरविषयम्। आश्वलायनानां तु 'बह्वार्षिकमित्याचक्षते'इति गृह्योक्तसमाख्याबलात्तेषां वर्षर्तावेवोपाकर्म कर्तव्यमिति। यत्पुनर्मनुवचनम्—'शुक्रे मूढेऽप्युपाकृत्य विद्यावित्तविनाशनम्। आयुः क्षयमवाप्नोति तस्मात्तत्कर्म वर्जयेत्' इति॥ कश्यपोपि—'गुरुशुक्रतिरोधानं वर्जयेच्छ्रुतिचोदनात्। इत्याह भगवानत्रिः श्रावणं तु विशेषतः' इति। एतत्प्रथमोपाकर्मविषयम्। तथोक्तं संग्रहे—'गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्धकेऽपि वा। तथाधिमाससंसर्पमलमासादिषु द्विज॥ प्रथमोपाकृतिर्न स्यात्कृतं कर्म विनाशकृत्' इति। स्मृतिसारसमुच्चयेपि—'यज्ञोपनीतं कर्तव्यं श्रावणे गुरुशुक्रयोः। मौढ्येऽपि वार्धके बाल्ये नित्यवत्कर्म चोदितम्'॥ स्मृतिभास्करेपि—'चण्डांशोर्मण्डले प्राप्तौ यदि शुक्रबृहस्पती। सर्वकर्मनिवृत्तिः स्यान्नित्यं नैमित्तिकं विना'॥ स्मृत्यन्तरेपि—'नित्ये नैमित्तिके जप्ये होमे यज्ञक्रियासु च। उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते' इति॥❀॥ एतदधिमासे न कर्तव्यमित्याह चन्द्रिकायां ज्योतिःपराशरः—'उपाकर्म तथोत्सर्गप्रसवाहोत्सवाष्टकाः। मासवृद्धौ परे कार्या वर्जयित्वा तु पैतृकम्' इति। उत्तरे मासि कार्या इत्यर्थः। प्रसवाहोत्सवशब्देन जातेष्टिरत्र गृह्यते। एतच्च मध्याह्नादूर्ध्वमेव कर्तव्यम्। तथाचोक्तं हेमाद्रौ—'उपाकर्मापराह्णे स्यादुत्सर्गः प्रातरेव तु' इति। गोभिलोपि—'अध्यायानामुपाकर्म कुर्यात्कालेऽपराह्णके। पूर्वाह्णे तु विसर्गः स्यादिति वेदविदो विदुः' इति। एवमुक्तप्रकारेण कालं विज्ञाय कर्म कर्तव्यम्॥ तत्र कारिका—'कर्मद्वयमिदं केचिच्छ्रौतिकाग्नौ प्रकुर्वते। आज्यसंस्कारपर्यन्तमुपलेपादि पूर्ववत्॥ आज्येन दधिसक्तूनां पर्यग्निकरणं भवेत्। उत्पूतयाग्रमाज्यं चेत्तेषां त्रिः

प्रोक्षणं भवेत् ॥ इध्माभिघारणान्तं स्यादाज्यस्योद्वासनादिकम् । अन्वारब्धो गुरुः शिष्यैः स्वयमेव न सन्ति चेत् ॥ कुर्वीताथाज्यभागान्तमिध्माधानादि पूर्ववत् । इहाज्यभागौ नित्यौ स्तस्तथैवोत्सर्जनेऽपि तौ ॥ हुत्वाज्यं नवभिर्मन्त्रैः सावित्र्याद्यैस्ततः परम् । हुत्वाऽवदानधर्मेण तान्सक्तून्दधिसंयुतान् ॥ हुत्वाग्निमीळ इत्याद्यैर्मन्त्रैर्विंशतिभिः क्रमात् ॥ शाकलानां समानीव इत्यृचान्त्याहुतिर्भवेत् । बाष्कलानां तु तच्छंयोरित्यृचान्त्याहुतिर्भवेत् ॥ अथ स्विष्टकृतं हुत्वा दधिसक्तुभिरेव च । दधिसक्तून्स्वयं शिष्याः प्राश्याचम्य ततः परम् ॥ परिस्तरणदर्भैस्तैरन्तर्दधति तेऽञ्जलीन् । अन्येन सेचयित्वापस्ताभिः कुर्वन्ति मार्जनम् ॥ पश्चादग्नेस्तु दर्भेषु प्रागग्रेषूपविश्य च । आसिच्यापः शरावादौ दर्भांस्तत्र निधाय च ॥ प्रागग्रदर्भगर्भांस्ते कुर्युर्ब्रह्माञ्जलीनथ । सव्याहृतिं जपन्त्युच्चैः सावित्रीं ब्रह्मयज्ञवत् ॥ त्रिरभ्यसेयुरोंकारं व्याहृतीश्चात्र कर्मणि । अग्निमीळ इदं सूक्तमनुवाकमथापि वा । आरभेत ऋचं वापि स्वध्याप्यान्वाचयेद्गुरुः । प्रायश्चित्तादि सकलं होमशेषं समापयेत् ॥ अनध्यायान्स्मृतौ सिद्धान्परिहृत्य स्वधीयते । यस्त्वपूर्वमधीतेऽसौ प्रारभेत शुभेऽहनि ॥ समावृत्तोऽप्यधीयानो मधुमांसादि वर्जयेत् । ऋतुस्नातोपगमनं समावृत्तस्य मन्वते ॥ अत आरभ्य षण्मासानियमेन स्वधीयते' इति । अत्र ब्रह्मयज्ञवदित्यतिदेशादभ्यासो गायत्र्याः पच्छोऽर्धर्चशोऽनवानमिति क्रमेण भवति । तथा ब्रह्मयज्ञखण्डे वृत्तिकृता तृतीयवचनमुपाकरणेऽपि पच्छोऽर्धर्चशोऽनवानं त्रिर्ब्रूयादित्येवमर्थमिति समर्थित'मिति । इदमत्र गृह्यम्—'आज्यभागौ हुत्वाज्याहुतीर्जुहुयात्—सावित्र्यै ब्रह्मणे श्रद्धायै मेधायै प्रज्ञायै धारणायै सदसस्पतयेऽनुमतये छन्दोभ्य ऋषिभ्यः स्वाहेत्यथ दधिसक्तूञ्जुहोत्यग्निमीळे पुरोहितमित्येका कुषुम्भकस्तदब्रवीदावदंस्त्वं शकुने भद्रमावद गृणाना जमदग्निना धामन्ते विश्वमधिश्रितं

गन्नानो यज्ञं यज्ञियाः सुशमि यो नः स्वो अरणः प्रतिचक्ष्व विचक्ष्वाग्ने याहि मरुत्सखा यत्ते राजच्छृतं हविरिति द्वृचाः समानीव आहूतिरित्येका तच्छंयोरावृणीमह इत्येकाध्येष्यमाणोऽध्याप्यैरन्वारब्ध एताभ्यो देवताभ्यो हुत्वा सौविष्टकृतं हुत्वा दधिसक्तून्प्राश्य ततो मार्जनमपरेणाग्निं प्राक्कूलेषु दर्भेषूपविश्योदपात्रे दर्भान्कृत्वा ब्रह्माञ्जलिकृतो जपेदोंपूर्वा व्याहृतीः सावित्रीं च त्रिरभ्यस्य वेदादिमारभेत्तथोत्सर्गे षण्मासानधीयीत समावृत्तो ब्रह्मचारिकल्पेन यथान्यायमितरे जायोपेयेत्येके प्राजापत्यं तद्वार्षिकमित्येतदाचक्षते' इति । अस्यार्थः—आज्येति । आज्यभागवचनं नित्यार्थम् । द्रव्यानादेशादेवाज्ये सिद्धे आज्याहुतिवचनमुत्सर्गेप्येतानाज्येनैव जुहुयान्नान्येनेत्येवमर्थम् परिस्तरणविकल्पस्यासंभवात् । जुहुयादितिवचनात्स्वाहाकारान्ताः सावित्र्यैस्वाहेति नवाज्याहुतीर्जुहुयात् । अथेति दधिसक्तून् दधिमिश्रान्सक्तूनित्यर्थः । मन्त्रानाह—अग्नीति । एकाग्रहणं कुसुम्भकादिवद्‌द्वृचनिवृत्त्यर्थम् । कुसुम्भकादयो नव द्वृचाः । समानीव इत्यत्रैकाग्रहणं द्वृचानन्तरमियमेवैका न वक्ष्यमाणेत्येवमर्थम् । तच्छंयोरित्यत्र चैकाग्रहणं द्वृचानन्तरमियमेवैका न पूर्वेत्येवमर्थम् । एवमनयोर्विकल्पः । शाकलसमाम्नायस्य बाष्कलसमाम्नायस्य चेदमेव सूत्रं गृह्यं चेत्यध्येतृप्रसिद्धम् । तत्र शाकलानां समानीव इत्येषा भवति तत्संहितान्त्यत्वात् । बाष्कलानां तु तच्छंयोरित्येषा भवति तत्संहितान्त्यत्वादित्येवं विनिवेशो युक्त इति । अध्याप्यैः अध्यापयितव्यैरित्यर्थः । अध्याप्यैरन्वारब्ध इत्येतावतैव सिद्धे अध्येष्यमाण इति वचनमध्याप्याभावेऽप्यध्येष्यमाणः स्वयमेव कुर्यादित्येवमर्थम् । 'वर्षासु छन्दांस्युपाकृत्याधीयीरन्'इति श्रुतेः । पञ्चम्यां हस्तेन वाऽध्येष्यमाणोऽध्याप्यैरन्वारब्ध आज्यभागौ हुत्वा । आज्याहुतीर्जुहुयादित्येव वक्तव्ये एताभ्यो देवताभ्यो हुत्वेति वचनं सावित्र्यादीनां नवानां अग्निमीळे इत्यादि

निंशतेश्च देवताग्रहणेन ग्रहणार्थम् । किंतर्हि एताभ्यो देवताभ्योऽन्नेन हुत्वा एता देवता इत्यत्र स्विष्टकृद्वचनं व्याख्यातं प्राक् । दधिसक्तुवचनमाज्यनिवृत्त्यर्थम्। परिस्तरणैरञ्जलिमन्तर्धायाप आसेचयते तन्मार्जनम् । प्राशनादि वेदारम्भणान्तं शिष्याणामपि कार्यम्। पश्चादग्नेः प्रागग्रेषूपविशन्ति । तत्र शरावादापुदकमासिच्य तत्र दर्भान्निदध्यात् । ततो ब्रह्माञ्जलिकृतो जपेत् । स्वयं शिष्यैः सह भन्ति चेत् । जपतिचोदनायां गृह्यकर्मण्युपांशुत्वमनित्यमिति ज्ञापयिष्यामः । तस्मादुच्चैरेव जपेत् । अध्यापनविरोधाच्च । ॐभूर्भुवः इत्यादि पूर्वमोंकारं ततस्तिस्रो व्याहृतीः समस्तास्ततः सावित्रीमेतत्त्रयं त्रिरभ्यस्य वेदादिमग्निमीळे इत्यारभ्य सूक्तमनुवाकं वा आरभेत । चशब्दः प्रणवव्याहृतीनामभ्यासार्थः । अथ सर्वप्रायश्चित्तादि समापयेत् । तथोत्सर्गे। अत्र एतेनेत्यभावान्न कृत्स्नकर्मातिदेशः । वेदारम्भणमात्रमतिदिश्यते । एताभ्यो देवताभ्योऽन्नेन हुत्वेति च प्रधानहोमः । तेन प्राशनमार्जने उत्सर्जने न भवत इति सिद्धम् । षण्मासानधीयीतेतिवचनमुपाकृत्य नियमेन षण्मासानधीयीत नोपरमेदित्येवमर्थम् । समावृत्तो ब्रह्मचारिकल्पेन ब्रह्मचारिधर्मेणेत्यर्थः । स्वाध्यायकाले ये विहिता धर्मा मधुमांसस्त्रीगमनखट्वाशयनदिवाशयनादिवर्जनादयस्तैर्युक्तोऽधीयीत । समावृत्तस्य मेखलादयस्तु न भवन्ति अस्वाध्यायधर्मत्वात्।यथान्यायमितरे। इतरे ब्रह्मचारिण इत्यर्थः। अस्मिन्नध्ययने ब्रह्मचारिणामपि प्रवृत्त्यर्थमिदम् । इतरथा समावृत्तानामेवेति शङ्का स्यात् । जायोपेयेत्येके। समावृत्तो जायां गच्छेदित्येक आहुः । ऋतावेव गच्छेन्नानृताविताह । प्राजापत्यं तत् । तद्गमनं प्रजापतित्वसिद्ध्यै कार्यम् । प्रजोत्पत्त्यर्थमित्यर्थः । तदर्थं कार्यं नानृताविस्यर्थः । ऋतुगमनं सर्वथा कार्यमेवेति तेषामभिप्रायः । अकरणे दोषश्रवणात् ।—‘ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति ।

घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः’ इति । आर्षिकमेतदाचक्षते एतदुपाकरणमित्यर्थः । आचक्षत इति ब्रुवन् वैदिकीयं संज्ञा न पारिभाषिकीति दर्शयति । अन्वर्थसंज्ञा चेयमिति दर्शितं प्रागिति । अत्र भगवान्—‘कृत्वा पुरस्तनं तन्त्रं प्रणीतासादनावधि । आज्यसंस्कारपर्यन्तात्तुवाजस्थापनावधि ॥ तन्त्रं कृत्वा ततोऽध्याप्यैरन्वारब्धः समाचरेत् । इध्माधानादिकं कुर्यात्पुरस्तात् यथाविधि ॥ आज्यभागाविहावश्यं होतव्यौ न कृताकृतौ । सावित्र्यै ब्रह्मण इति प्रक्रम्य पठितैः क्रमात् ॥ कुर्यान्मन्त्रैश्चतुर्थ्यन्तैः पूर्वमाज्याहुतीर्नव । अथावदाय जुहुयाद्दधिसक्तून्सुवादितः ॥ अग्निमीळे पुरोहितं यज्ञस्येति ऋचैकया । कुसुम्भकस्तदित्यार्धर्गृत्सोर्कनिर्गमिर्द्वैः ॥ या ऋचोऽष्टादशाम्नाता नवमण्डलगोचराः । ताभिः सर्वाभिरेकैकामुच्चार्य जुहुयात्क्रमात् ॥ कुसुम्भकस्तदत्रनीत्यमग्नेद्युभिरेव च । आवदंस्त्वं च सोमस्य गृणाना जमदग्निना ॥ तांवग्ने सदमिचाथ धामन्ते विश्वमित्यपि । अबोध्यमिध्म गन्तानस्त्वंह्यग्ने प्रथमस्तथा ॥ योनस्तोऽग्निनरः पश्चात्प्रतिचक्ष्व विचक्ष्वच । माचिदन्यद्विशंसत आग्ने याहि मरुत्सखा ॥ स्वादिष्ठयामदिष्ठया यत्तेराजञ्छृतं हविः । अग्नेबृहन्नित्येताभिर्ऋग्भिरष्टादशाहुतीः ॥ क्रमेणानेन विधिवद्विधाय दधिसक्तुभिः । शाकल्यवाष्कलाचार्यसंहिताद्वितयान्तिमे ॥ ऋचौ समानीव इति तच्छंयोरिति ये श्रुते । ताभ्यां यथाक्रमं हुत्वा स्विष्टकृद्धोममाचरेत् ॥ दधिसक्तून्स्वयं प्राश्य शिष्यांश्चापि ततः परम् । प्राशयेदप आचम्य कुर्युः सर्वेऽपि मार्जनम् ॥ परिस्तरणदर्भाणामधस्तान्निहितेऽञ्जलौ । अपामासेचनं यत्तन्मार्जनं संप्रचक्षते ॥ ततोऽग्नेः पश्चिमे देशे प्राक्कूलकुशसंयुते । कृत्वा ब्रह्माञ्जलिं पूर्वमासीत प्राङ्मुखो गुरुः ॥ ब्रह्माञ्जल्यन्तराविष्टदर्भाग्राप्युदभाजने । निदर्धीताथ शिष्याश्च तथासीरन्यथा गुरुः ॥ जपित्वा सकृदोंपूर्वाः

गमन्ता व्याहृतीर्गुरुः । प्रणवाद्यां च सावित्रीं सकृदुच्चारयेत्ततः । पश्चाद्वेदादिमारभ्य अध्यायं सूक्तमेव वा । ऋचं वाधीत्य तत्सर्वं शिष्यानध्यापयेत्ततः ॥ अनूयाजप्रहरणादुपरिष्टाच्चनं विधिम् । यथोक्तमाचरेदेव उपाकर्मविधिं क्रमात्' इति । इदमपि कर्माभ्युदयिकश्राद्धपूर्वकं कुर्यात् । वृद्धिश्राद्धप्रकरणे षोडशकर्मसंस्काराः श्रवणाकर्मादयश्च श्रौतानि वृद्धिश्राद्धविषय इत्याहुरिति वृत्तिकृता नारायणेनोक्तत्वात् ॥ अथाचार्यः स्मृतिरूपेणाह—'कार्यमभ्युदयश्राद्धं श्रौते स्मार्ते च कर्मणि' इति । स्मृतिभास्करे बृहत्प्रचेता अपि—'भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्ण एव तु । ब्राह्मणान्भोजयेत्तत्र पितॄनुद्दिश्य देवताः' इति । एतत्प्रकारस्तु वृद्धिश्राद्धप्रकरणेऽस्माभिरुक्तः । अत्रेतिकर्तव्यताविशेष उक्तो भविष्योत्तरपुराणे—'संप्राप्ते श्रावणस्यास्य पौर्णमास्यामिनोदये । स्नानं कुर्वीत मतिमाञ्छ्रुतिस्मृतिविधानतः ॥ ततो देवान्पितॄंश्चैव तर्पयेत्प्रथमाम्भसा । उपाकर्मणि चैवोक्तमृषीणां चैव तर्पणम् ॥ कुर्वीत ब्राह्मणः श्राद्धं वेदानुद्दिश्य शक्तितः' इति । कार्ष्णाजिनिस्तु—'उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च । ऋषीन्दर्भमयान्कृत्वा पूजयेत्तर्पयेत्ततः' इति । बोधायनोऽपि—'पूजयित्वा यथाशक्ति तर्पयेच्च समुद्धरन् । गौतमादीनृषीन्स्थाप्य कृत्वा दर्भमयान्पुनः । पूजयित्वा यथाशक्ति तर्पयेदंशमुद्धरन्' इति । स्मृतिभास्करे व्यासस्तु—'विष्टरं सप्तभिर्दर्भैर्द्वादशाङ्गुलदैर्घिकम् । चतुरङ्गुलमग्रं स्याद्ग्रन्थिरेकाङ्गुलिस्तथा ॥ प्रदक्षिणक्रमं कृत्वा ऋषीनावाह्य पूजयेत् । ऋषीणामर्चनं सर्वं कर्तव्यं च निवीतिना ॥ आसनं पाद्यमर्घ्यं च स्नानं पञ्चामृतैः पृथक् । वस्त्रोपवीतगन्धांश्च पुष्पाण्याभरणानि च ॥ धूपदीपबलीन्दत्त्वा नत्वा स्तुत्वाक्षतोदकैः । तर्पयित्वा यथान्यायं गृह्योक्तविधिना ततः ॥ एताभ्यः सर्पिषा हुत्वा सक्तुभिर्व्रीहिभिः कृतैः । गायत्र्या तिलहोमं तु कुर्याद्व्याहृतिभिश्च

ना' इति । अत्र सक्तुप्राशनानन्तरं यज्ञोपवीतहोमं कृत्वा विप्रेभ्योऽपि दत्त्वा स्वयं च धारयेत् । तथाच कार्ष्णाजिनिः—'वेदारम्भणतः पूर्वं सक्तुप्राशनतः परम् । नवयज्ञोपवीतानि दद्याद्वै धारयेत्ततः' इति । एतद्दानधारणं होमस्योपलक्षणार्थम् । तथाच गालवः—'कृत्वा यज्ञोपवीतानि नवानि वसुधाधिप । हुत्वाग्नौ गुरवे दत्त्वा पितृभ्यो धारयेत्स्वयम्' । सत्यव्रतोपि—'यज्ञोपवीतानि नवानि कृत्वा तदुक्तमन्त्रेण हुनेद्यथाग्नौ । स्वयं च देवात्मपितृभ्य इत्थं दद्यात्स्वयं धार्यमिति प्रसिद्धम्' । तस्य फलमुक्तं वायुपुराणे—'उपाकर्मणि विप्रेभ्यो दद्याद्यज्ञोपवीतकम् । आयुष्मान्जायते तेन कर्मणा मानवो भुवि' इति । वेदोपाकरणविषये विशेषमाह व्यासः—'दर्भासनो दर्भकरः प्राङ्मुखो वाप्युदङ्मुखः । उपक्रमेत वेदान्वा वेदौ वा वेदमेव वा ॥ प्रणवं प्राक् प्रयुञ्जीत व्याहृतीः प्रणवं ततः । पच्छोऽर्धर्चशः शिरसा सावित्रीमनुवाच्य च ॥ उपक्रमेत्ततो मन्त्रानादौ च ब्राह्मणं ततः । तथोपनिषदं कल्पं रहस्यान्यपि शक्तितः ॥ अधीत्य प्रणवं चोक्त्वा भूमिं स्पृष्ट्वा जलं स्पृशेत् । नमस्कृत्वा ततो देवानृषींश्चैव गुरूनपि' इति । अत्र नित्याध्ययने विशेषमाह मनुः—'अतः परं तु छन्दांसि शुक्ले तु नियतः पठेत् । वेदाङ्गानि रहस्यं च कृष्णपक्षे तु संपठेत्' । कूर्मपुराणे—'छन्दांस्यूर्ध्वं रहस्यं च शुक्लपक्षे तु वै द्विजः । वेदाङ्गानि पुराणानि कृष्णपक्षे तु मानवः' इति । अत्र ब्रह्मचारिविषये विशेष उक्तः कालादर्शे—'मौञ्जीयज्ञोपवीते च नवदण्डं च धारयेत् । कटिसूत्रं चैव नवं नववस्त्रं च धारयेत्' इति । ग्रन्थान्तरे—'दण्डाजिनोपवीतानि मेखलां कटिसूत्रकम् । धृत्वोपाकरणं कृत्वा ततः स्वाध्यायमाचरेत् ॥ पुराणानि विसृज्याथ पुनः पुनरुपक्रमेत्' इति ॥ स्मृतिभास्करे व्यासः—'उपवीतं नवं वस्त्रं कटिसूत्रं च मेखलाम् । धारयेदजिनं दण्डं

कारम्भ.
संस्कारस्य. करणं.
उपाकरणं.

पुराणान्यप्सु निक्षिपेत्'। एतदुपाकर्म गृहस्थस्यावश्यकमित्याह व्यासः—'वेदव्रतानि कृत्वैव विप्रो यद्युद्वहेत्तदा। अधीधीत गृहस्थोपि नियमाद्ब्रह्मचारिवत्' इति। एतद्वनस्थानामुपलक्षणार्थम्। तथाच गोभिलः—'उपाकर्मोत्सर्जनं च वनस्थानामपी-प्यते। धारणाध्यापनाङ्गत्वाद्गृहिणां ब्रह्मचारिणाम्' इति। अस्य फलमाह कात्यायनः—'प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिन-त्पन्नं। श्रियते छन्दसां तेन पुनराप्यायनं भवेत्॥ अयातयामैश्छन्दोभिर्यत्कर्म क्रियते द्विजैः। क्रीडमानैरपि सदा तत्तेषां सिद्धि-कारणम्' इति। उपाकरणाकरणे प्रत्यवायमाह सएव—'उत्सर्जनं च वेदानामुपाकरणकर्म च। अकृत्वा वेदजप्येन फलं नाप्नोति मानवः' इति।

अथास्मिन्कर्मणि विनियुक्तमन्त्राणामर्थः कथ्यते॥ अग्निमीळ इति—अग्निमहमीळे 'ईड स्तुतौ' स्तौमि। पुरोहितं पूर्वस्यां दिश्याहवनीयात्मना निहितं। यज्ञस्य देवम् दीव्यतिरैश्वर्यकर्मा ईश्वरं। न केवलं देवमेव किं तर्हि यज्ञस्य ऋत्विजं होतारं च 'अग्निर्वै देवानां होता' होता आह्वाता। यद्वा अग्निः देवानां होता तदधिष्ठाता होता इत्युच्यते। रत्नधातमं अतिशयेन रत्नानां धातारम्॥ ॥ कुषुम्भक इति—'कुषुम्भः क्षेप' इति कस्कादिषु पठ्यते। तमांसि कुषुम्यति क्षिपतीति कुषुम्भकः। 'एतुल्ल' इति एतुल्ल मका-रच्छान्दसः। गिरेर्न्द्यगिरेः प्रवर्तमानकः। स्वार्थिकः कः। उपनेयं कुषुम्भकस्तदब्रवीत्। किं तत्। वृश्चिकस्य विषकीटकस्य विषं अरसं निर्वीर्यमिति। अतश्च हे वृश्चिक, ते तव विषं अरसं निर्वीर्यमकिंचित्करं भवतीति॥ ॥ त्वमग्ने द्युभिरिति—हे अग्ने, द्युभिः दीप्तिभिः इत्थंभूतस्त्वमेव। त्वमाशुशुक्षणिः आशु शुचा दीप्त्या क्षणिः क्षीणयिता तमसां। त्वमेव चाद्भ्यो जायसे वैद्युतात्मना।

त्वमेवाश्मनः परि पञ्चम्यर्थानुवादी। अश्मान्तरेण घृष्यमाणादश्मनः त्वं जायसे उत्पद्यसे। दृश्यते च 'योऽश्मनोरन्तरग्निं जजाने'ति त्वमेव वनेभ्योऽपि दावरूपेण जायसे। त्वमेव ओषधीभ्यः शरवंशादिभ्यो जायसे। एवं त्वं ततस्ततो जायसे नृणां नृपते इत्येतावानेवार्थः। शुचिर्दीप्तः॥ ॥ आवदंस्त्वमिति—हे शकुने, आवदन् आभिमुख्येन वदन् त्वं भद्रं कल्याणमावद। अथवा तूष्णीं निःशब्दमासीनः नोऽस्माकमुपरि सुमतिं शोभनां मतिं अनुग्रहात्मिकां बुद्धिं, अथवा सुमतिं शोभनां स्तुतिं चिकिद्धि जानीहि। कर्करिर्यथा कर्करिः क्रकराख्यः पक्षी स यथा वदति तथा यस्त्वमुत्पतन्वदसि। वयं च ते प्रसादाद्विदथे यज्ञे बृहत् महार्थं स्तोत्रं शस्त्रं च सुवीराः सुपुत्रा भूत्वा वदेम वदितुं लभेमहि॥ ॥ सोमस्यमेति—हे अग्ने, त्वं मा मां सोमस्य सोमयागस्य तरसे वृद्धिं वक्षि वह प्राणय। यथा मे सोमयागः ऋद्धिं वहति तथा कुरु। वह्निं हविषां वोढारं आहवनीयादिमग्निं चकृधि लोडर्थे लिट्। कुरु। ऋरदेवतारूपोऽग्निः प्रार्थ्यते। विदथे यज्ञे यजध्यै यष्टुं यागकृत्यै वह्निं कुरु। अहं च दीद्यत् दीप्यमानो भूत्वा देवां अच्छ अच्छेत्यभीत्यर्थे। देवानभि देवानुद्दिश्य अद्रिं ग्रावाणं युञ्जे युनज्मि लोडर्थे लट्। अभिषवे व्यापारयामि। हे अग्ने, त्वं च शमाये शं सुखं आप्यते प्राप्यते येन तत्र यज्ञे तन्वं स्वदीयां तनुं त्वं जुषस्व। अन्तर्भावितण्यर्थः। जोषय अस्माभिर्दत्तैर्हविर्भिः प्रीणय॥ ॥ गृणानेति—जमदग्निनाम्ना ऋषिणा गृणाना। व्यत्ययेनायं कर्मणि कर्तृप्रत्ययः। गीर्यमाणौ स्तूयमानौ युवां हे मित्रावरुणौ, ऋतस्य योनौ यज्ञस्य स्थाने वेद्याख्ये सीदतं उपविशतम्। उपविश्य च सोमं पातं पिबतं। ऋतावृधा ऋतस्य गतस्य पृष्ठुदकस्य वृधा वर्धयितारौ॥ ॥ त्वां ह्यग्न इति—हे अग्ने, मदमित् सदैव देवासो देवाः समन्वयः। मन्युरिति

क्रोधनाम। इहतु चित्तविकारसाम्यादभिनिवेशे द्रष्टव्यः । साभिनिवेशाः तान् 'पयान्तो भूत्वा देवमरतिं 'ऋ गतौ' हविर्भिर्हीला देवान्प्रति गन्तारं न्येरिरे नैर्ऋतवन्तः प्रवर्तितवन्तः। हि प्रसिद्धौ। एवमेतत्प्रसिद्धं 'विश्वेदेवाः शास्तनमा यथेह'इत्यादौ। इतिप्रकारे । उक्तप्रकारेण कृत्वा क्रतुना कर्मणा हविर्धानलक्षणेन न्येरिरे । अमर्त्यं अमरणधर्माणं आदेवमागतं आदेवं देवत्वं प्राप्तं च । 'जन जनने' अन्तर्भावितण्यर्थः लोण्मध्यमपुरुषवचनव्यत्ययः । जनत प्रचेतसं प्रकृष्टज्ञानं च जनत। नचैकमेवालं किंतर्हि विश्वमादेवं जनत प्रचेतसं। विश्वमिति विशेषेण विवक्षया पुनर्वचनम् ॥ ॥ धामन्त इति—हे सूर्य, ते तव धामन् धामनि स्थाने मण्डलाख्ये विश्वं भुवनं उदकनामैतत् उदकमधिश्रितं । अधिः सप्तम्यर्थानुवादी । रश्मिभिराहृत्य स्थापितं श्रितं भवति । तथा अन्तः-समुद्रे समुद्र इत्यन्तरिक्षनाम । अन्तरिक्षस्य मध्ये रश्मिभिर्मेघेषु विसृष्टं श्रुतं भवति । तथा आयुषि आयवो मनुष्याः तस्यैव सकारउपजनः षष्ठ्यर्थे सप्तमी जातावेकवचनम् । आयूनां मनुष्याणां हृदि हृदयसमीपवर्तिन्युदरे अन्तः श्रितं मेघैर्विसृष्टं मनुष्यैः पानीयादिरूपेणोपयुक्तं तत्र श्रितं भवति । एवं मेघोदकस्य गतिस्त्वदायत्ता । वयं च त्वत्प्रसादात्तामाभपाभनीके समूहे । संग्राममनामैतत् । समिथे संकुले य ऊर्मिस्तरङ्गस्तं मधुमन्तं मधुस्वादुयुक्तं ते उक्तेन प्रकारेण भूतं अश्याम अश्नुवीमहि प्राप्नवाम ॥ ॥ अबोध्यग्निरिति—अर्थैकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ । सोऽग्निरबोधि योऽग्निर्बोध्यते उद्दीप्यते समिधा पालाश्या आहुतिधारणार्थं जनानाम् । विभक्तिव्यत्ययः । जनैरग्निहोतृभिः । कदा । आयतीमुपासं प्रत्युपस्युदितायां धेनुमिव यथा धेनुमायतीं प्रति वत्सो बुध्यते तद्वत्तस्याग्नेर्भानवः रश्मयः नाकमच्छ स्वर्गं प्रसिस्रते प्रसरन्ति । प्रशब्दः पादपूरणे द्विर्वचनम् । अत्र दृष्टान्तः ।

यद्वा उज्जिहानाः यथा उपसं यद्वा इति महन्नाम उज्जिहाना इति पक्षिनाम। 'ओहाङ्गतौ' उज्जिहते उत्पतन्ति प्रवयेति शाखाभिधानम्। यथा वृक्षस्योच्चां शाखां महान्तः पक्षिणः प्रसरन्ति प्रसर्पन्ति तद्वत्॥ ❀ ॥ गन्ता न इति—हे यज्ञियाः यज्ञार्हाः मरुतः, नः अस्माकं यज्ञं गन्त। केवलोऽपि गच्छतिराङ्पूर्वस्यार्थे द्रष्टव्यः। आगच्छत। सुशमि शमीति कर्मनाम क्रियाविशेषणम्। इदं शोभनं गतिकर्म यथा भवति तथा आगत। आगत्य च श्रोत शृणुत इवं स्तुतिं अरक्ष एवया मरुत्। उभयत्र पष्ठ्या लुक्। युष्माभिरेव यज्ञादपनीता रक्षसः एव मरुतो यज्ञमागन्तेति एवया मरुत् मरक्षः रक्षोरहितः अतश्चागन्तेति वा। किंच ज्येष्ठासो न पर्वतासः यथा अतिशयेन वृद्धाः हिमवदादयः पर्वता उद्धृताः व्योमनि एवं यूयं तस्य हृदये वर्तमानस्य शत्रोः रयिं निर्देशः(?)। तस्य मम शत्रोः प्रचेतसः प्रकृष्टज्ञानस्य मद्धन्योर्वा यज्ञस्य दुर्धर्तवः दुर्धराः स्यात भवत। निन्दः निन्दिताः मम शत्रुमाक्रम्य तस्य पर्वतवद्दुर्धराभूताः स्यात भवतेति॥ ॥ त्वंह्यग्न इति—'अग्निर्वै देवानां मनोता तस्मिन्हि तेषां मनांस्योतानि' इति हि ब्राह्मणं। ओतानीति वेञ् 'तन्तुसंताने' इति आङ्पूर्वस्य रूपम्। देवानां मनांसि यस्मिन्नाभिमुख्येन संततानि सततं मनसा देवैर्हविरानयनार्थिभिः ध्यातः स मनोता मनोतशब्दस्याप्छान्दसः स्त्रीत्वं च। हे मनोतारूप त्वं, अस्याः धियः अस्य कर्मणः श्रौतस्मार्तलक्षणस्य प्रथमो होता अभवः। त्वयाधिष्ठितो मानुषो होता प्रवर्तते। त्वं सीं सींशब्द एवार्थे। त्वमेव च हे वृषन् वर्षितः, 'अग्नौ प्रास्ताहुतिः सम्य'गिति न्यायेन अकृणोः करोषि। दुष्टरीतु दुष्टरं दुरभिभवं सहः बलं विश्वस्मै सहसे। पष्ठ्यर्थे चतुर्थी। सहशब्दे च मतुपो लुक्। सर्वस्य सहस्वतो रक्षःप्रभृतेः सहध्यै अभिभवाय बलवतः॥ यो नः स्व इति—यः पुरुषः नोऽस्मान् स्वः ज्ञातिः अरणः

अस्माभ्यरणो रममाणः अम्रियमाणः यश्च निष्ट्यः स्वेभ्यो निर्गतः परं जिघांसति तं स्वं परं च सर्वे देवाः धूर्वन्तु हिंसन्तु ब्रह्म मन्त्रः । मम तु वर्म तनुत्राणं अन्तरं व्यवधायकं च भवतु । ब्रह्मरूपेण वर्मणा वेष्टितं मा शत्रवो हिंसिषुः ॥ ॥ अग्निं नर इति—ऋलिजो मनुष्याः दीधितिभिः रश्मिभिः स्वाङ्गुलिगताभिः अरण्योः अरणीभ्यां हस्तच्युती । तृतीयैकवचनस्य पूर्वसवर्णः । हस्तच्युत्या हस्तयोर्गतागतरूपेण व्यापारेण जनयन्त जनयन्ति । प्रशस्तं अङ्गुलिभिराकर्षणं रज्ज्वा अन्तौ गृहीत्वा हस्तयोर्गतागतरूपेण व्यापारेणारणिभ्यां प्रशस्तमग्निं जनयन्त । किंच दूरेदृशमाहवनीयम् । स हि गार्हपत्यो दूरे दृश्यते । गृहपतिं गार्हपत्यं अथर्युं दक्षिणाग्निं । दृश्यतेचाप्यथर्वेति दक्षिणाग्नौ प्रवासोपस्थाने दक्षिणमथर्वपितुं मे गोपायेति कण्वादिरयं मन्त्रः ॥ ॥ प्रतिचक्ष्वेति—हे सोम, प्रतिचक्ष्व प्रतिब्रूहि रक्षांसि भर्त्सय । विचक्ष्व विरूपं च ब्रूहि कुटिलानि वचनानि । इन्द्रश्च हे सोम त्वं च जागृतम् । रक्षोभ्यो वधं वधसाधनं वज्रमस्तं क्षिपतम् । अशनिं च यातुमद्भ्यः यातवो रक्षःस्वचान्तरजायतः तद्वद्भ्यस्तैर्युक्तेभ्यो रक्षोभ्यस्तानुद्दिश्य वधमशनिमस्यतमिति ॥ ॥ माचिदन्यदिति—ऋत्विजो ब्रुवते । चिच्छब्द एवार्थे । मयि चान्यत्किंचिदपि विशंसत । विधर्यासर्यानुवादे । शंसनं वचनमात्रं । नच स्तुतिरेव अन्यत्किंचिदपि वोचत । हे सखायः ऋत्विजः, मा रिषण्यत रिष्यतिहिंसाकर्मा । इन्द्रस्य अन्यत्र व्यापारेणात्मानं मा हिंसिष्ट । हिंसा च तत्रैव लिप्यते । तर्हि किं कुर्मः । इन्द्रमित्स्तोता इन्द्रमेव स्तुत वृषणं वर्षितारं सचा सह सर्वे संभूय सुते सोमे । उद्गातॄन्प्रत्येतदुक्तं । स्तुतिर्हि तेषां कर्म । अथ होतारं प्रति । वीप्सालोपो

पाठा०—१ कण्वादिरगन्त' ।

द्रष्टव्यः । मुहुस्तया उक्थानि शस्त्राणि शंसत ॥ ॥ आग्ने याहीति—हे अग्ने, मरुत्सखा मरुत् सखा यस्य स त्वं आयाहि । रुद्रेभिः रुद्रपुत्रैः मरुद्भिः सह सोमपीतये सोमपानाय आयाहि । सोभर्याः सोभरेर्मम सुष्टुतिमुप शोभनायाः स्तुतेरनन्तरं पीत्वा च मादयस्वात्मानं सर्वात्मानं स्वर्णरे । स्वःशब्दः सर्वपर्यायः । सर्वे नराः ऋत्विग्यजमाना अस्मिन्निति स्वर्णरो यज्ञस्तस्मिन् ॥ ॥ स्वादिष्ठयेति—स्वादिष्ठया अतिशयेन स्वाद्यया मदिष्ठया अतिशयेन मदकर्या धारया पवस्व शुद्धं कुरु । सोमः लतात्मकः, इन्द्राय पातवे इन्द्रस्य पानार्थं सुतः अस्माभिः अभिषुतः सन् ॥ ॥ यत्ते राजन्निति—कश्यपो हि दुर्भिक्षे वृत्तिकर्शितो यया कयाच विधया वर्तित्वा सुभिक्षे प्राप्ते सोमेनायष्ट । तस्य सोमो नाम राजा पापवृत्तादजिजीवदिति तं कश्यपः प्रार्थयते । हे राजन् सोम, यत्ते अस्माभिः शृतं हविः पायसौदनेन परिवेषयन्त्या कयाचिदित्यापस्तम्बः तदभिप्रायमेतत् । तेन हविषा नोऽस्मान् अभिरक्ष । त्वत्प्रसादाद्यथारातीव । अरातिशब्दः शत्रुत्ववाचकः शत्रुभाववानिति मत्वर्थोऽनुसंधेयः । अरातित्ववान् अरातिरित्यर्थः । नः अस्मान् मा तारीत् मातिक्रामत् । मोच मा उच्चपादपूरणः । मोच नः अस्माकं 'रुजार्थानां भाववचनाना'मिति कर्मणि षष्ठी । किंचन किमपि रोगजातं नागमत् 'अम रोगे' रुग्णतां माकार्षीत् । हे इन्द्र, 'इन्दी क्लेदने' क्लेदतः सोमोऽभिरक्षतु क्लेदयेति इन्द्रादीनामर्थाय परिस्रव परितः क्षर । अस्माकं पापवृत्तिं माजीगणः ॥ ॥ अग्ने बृहन्निति—अर्थानुगुण्याद्द्वितीये पादे व्याख्यारभ्यते । तमसो रात्रेर्निर्जगन्वान् निष्क्रान्तः रात्रावनुपशान्तः । ततो निर्गतोऽग्निर्ज्योतिषा स्वेन तेजसा युक्तः उपसामग्रे उदये षद्मूला अगात् गार्हपत्यात्प्रणीत आहवनीयदेशमागमत् । आगत्य च बृहत् ऊर्ध्वो अस्थात् प्रज्वलितः ज्वालास-

रूपेणोर्ध्वस्तिष्ठति। स्थिता च कर्मार्थं जातः समिद्धः स्वङ्गः शोभनाङ्गः भानुना स्वेन तेजसा रुशतात्यन्तदीप्तेन विश्वा विश्वानि सद्मानि यज्ञगृहाणि अग्राः। पुरुषव्यत्ययः। अग्रात् पूरयति य एवं करोति तस्मै स्वाहा॥ ॥ समानी व इति—आकूतिरभिप्रायः। वो युष्माकमाकूतिः समानी अस्तु। परस्परतो विभिन्नाभिप्राया माभूत्। वो हृदयान्यन्तःकरणानि समानानि सन्तु यदेकस्य हृदयं संकल्पयति तदेवान्यस्य संकल्पयतु। मन इत्यात्मा तदपि वः समानमस्तु यादृश एकस्यात्मा तादृश एवान्यस्यास्तु यथा सति वः युष्माकं सर्वमेव सुसह सुष्ठु सहैव असति स्यात्र किंचित्पृथक् तथा वः आकूत्यादयः समानाः सन्तु। इयं शाकलकानामन्त्या। बाष्कलानां तच्छंयोरिति—शंयोर्ममार्थाय तद्वयं आवृणीमहे। किंतद्गातुं यज्ञाय। षष्ठ्यर्थे चतुर्थी। यस्य गातुं गमनं प्राप्तुं गातुं यज्ञपतये यज्ञपतेश्च मम स्वर्गे गमनाय। किंच दैवी देवैः कृता स्वस्तिरविनाशिता नोऽस्तु। मानुषेभ्यश्च नः स्वस्तिरस्तु। देवाश्च मनुष्याश्च स्वस्ति नः दिशन्तु। इदं च भेषजं सर्वस्य भेषजभूतं अस्माभिः कृतं कर्मोर्ध्वं जिगातु देवान्प्रति गच्छतु। नोऽस्माकं संबन्धिने द्विपदे पुत्रपौत्रादिकाय शमस्तु। चतुष्पदे च गवादिकाय शमस्तु। इति मन्त्रार्थः॥

अथोपाकरणप्रयोगः॥ आचार्यः प्रागुक्तलक्षणे काले उपाकर्मकरिष्यमाणो नवोपनीतशिष्यादिभिः सह स्नात्वा कृतनित्यक्रियो मध्याह्नादुपरि बहिः शुचौ देशे गृहे वा प्राणानायम्य देशकालौ संकीर्त्य एषां नवब्रह्मचारिणां वेदग्रहणाधिकारसिद्धिद्वारा, मम इतरेषां चोत्सृष्टानां वेदानां पुनर्ग्रहणपूर्वकमाप्यायनद्वारा श्रीपरमे० उपाकरणाख्यं कर्म करिष्ये इति संकल्प्य। तदङ्गस्वस्तिवाचनं नान्दीश्राद्धं च संकल्पपूर्वकं पूर्वोक्तविधिना कारयेत्। जीवत्पितृकस्य तत्पित्रैव कार्यम्। ततः स्वयं निवीतीभूत्वा

गौतमादिमहर्षीनर्चयेत् । तत्कर्मस्तूत्सर्जनप्रयोगे वक्ष्यते । ततः उपवीतीभूत्वा समिद्द्वयमादाय पुनर्देशकालौ निर्दिश्य अस्मिन्नुपाकरणहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये अस्मिन्नन्वाहितेऽग्नावित्यादि चक्षुषी आज्येनेत्यन्तमुक्त्वा । सावित्रीं ब्रह्माणं श्रद्धां मेधां प्रज्ञां धारणां सदसस्पतिं अनुमतिं छन्दांस्यृषीन् एताः प्रधानदेवता आज्येन । अग्निं अप्तृणमूर्यान् अग्निं शकुन्तं अग्निं मित्रावरुणौ अग्निं अपः अग्निं मरुतः अग्निं विश्वान्देवान् अग्निं इन्द्रासोमौ इन्द्रं अग्रामरुतः पवमानसोमं पवमानसोमं अग्निं संज्ञानं एताः प्रधानदेवताः दधिसक्तुद्रव्येण शेषेणाग्निंस्विष्टकृतमिध्मसंनहनेन रुद्रं यज्ञोपवीतेन परमात्मानं अयासमग्निमित्यादि सद्योयक्ष्य इत्यन्तमुक्त्वा समिद्द्वयमग्नावाधायोद्देशत्यागौ कृत्वा परिसमूहनाद्याज्ये दर्भाग्रद्वयक्षेपणान्तं कृत्वा श्रवणाकर्मोक्तखण्डरीत्या व्रीहितण्डुलैर्यवगोधूमैर्वा कृतपिष्टरूपसक्तून्सुद्रपात्रे निक्षिप्य गोदध्ना संयोज्य तत्पात्रमग्निसमीपे संस्थाप्याज्येन सह दधिसक्तूनां पर्यग्निकरणं कृत्वाज्योद्वासनाद्याज्यभागान्तं कृत्वा । सावित्र्यैस्वाहा सावित्र्याइदं० ब्रह्मणेस्वाहा ब्रह्मणइदं० । श्रद्धायैस्वाहा श्रद्धायाइदं० । मेधायैस्वाहा मेधायाइदं० । प्रज्ञायैस्वाहा प्रज्ञायाइदं । धारणायैस्वाहा धारणायाइदं० । सदसस्पतयेस्वाहा सदसस्पतयइदं० । अनुमतयेस्वाहा अनुमतयइदं० । छन्दोभ्यऋषिभ्यःस्वाहा छन्दोभ्यऋषिभ्यइदं इति नवाहुतीराज्येन हुत्वा यथालिङ्गमुद्दिश्य त्यक्त्वा । अन्नदानधर्मेण दधिसक्तूनदायाग्न्यादिविंशतिदेवताभ्यो जुहुयात् । तत्र मन्त्राः—अग्निमीळे वैश्वामित्रो मधुच्छन्दा अग्निर्गायत्री । उपाकरणप्रधानदधिसक्तुहोमेवि० । अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमं स्वाहा ॥ अग्नय इदं० ॥ १ ॥ कुम्भकमदगस्त्योऽप्तृणसूर्योऽनुष्टुप् । उपा० । कुषुम्भकस्तदब्रवीद्गिरेः प्रवर्तमानकः । वृश्चिकस्यारसं विषमरसं वृश्चिक ते विषं

स्वाहा । अमृणमृर्येभ्यइदं० ॥ २ ॥ त्वमग्ने शौनको गृत्समदोऽग्निर्जगती उपा० । त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मन-स्परि । त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिःस्वाहा । अग्नयइदं० ॥ ३ ॥ आवदन्गृत्समदः शकुन्तो जगती उपा० । आवदंस्त्वं शकुने भद्रमावद तूष्णीमासीनः सुमतिं चिकिद्धि नः । यदुत्पतन्वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः स्वाहा । शकुन्तायेदं० ॥ ४ ॥ सोमस्य मा गाथिनो विश्वामित्रोऽग्निस्त्रिष्टुप् उपा० । सोमस्य मा तवसं वक्ष्यग्ने वह्निं चकर्थ विदथे यजध्यै । देवाँअच्छा दीद्यद्युञ्जे अद्रिं शमाये अग्ने तन्वं जुषस्व स्वाहा । अग्नयइदं० ॥ ५ ॥ गृणानाभार्गवो जमदग्निर्मित्रावरुणौ गायत्री उपा० । गृणाना जमदग्निना योनावृतस्य सीदतम् । पातं सोममृतावृधा स्वाहा । मित्रावरुणाभ्यामिदं० ॥ ६ ॥ त्वांह्यग्ने गोतमो वामदेवोऽग्निरग्नी उपा० । त्वां ह्यग्ने सदमित्समन्यवो देवासो देवमरतिं न्येरिर इति क्रत्वान्येरिरे । अमर्त्यं यजत मर्त्येष्वा देवमादेवं जनत प्रचेतसं विश्वमादेवं जनत प्रचेतसंस्वाहा । अग्नयइदं० ॥ ७ ॥ धामन्ते गोतमो वामदेव आपोजगती उपा० । धामन्ते विश्वं भुवनमधिश्रितमन्तः समुद्रे हृद्य १ न्तरायुषि । अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिं स्वाहा । अ-द्भ्यइदं० ॥ ८ ॥ अबोध्यात्रेयो बुधगविष्ठिरावग्निस्त्रिष्टुप् उपा० । अबोध्यग्निः समिधा जनानां प्रतिधेनुमिवायतीमुषासम् । यह्वा इव प्रवयामुज्जिहानाः प्रभानवः सिस्रते नाकमच्छ स्वाहा । अग्नयइदं० ॥ ९ ॥ गन्ता न आत्रेय एवयामरुन्मरुतोतिजगती उपा० । गन्तानो यज्ञं यज्ञियाः सुशमि श्रोता हवमरक्ष एवया मरुत् । ज्येष्ठासो न पर्वतासो व्योमनि यूयं तस्य प्रचेतसः स्यात दुर्धर्तवो निदःस्वाहा । मरुद्भ्यइदं० ॥ १० ॥ त्वं ह्यग्ने बार्हस्पत्यो भारद्वाजोऽग्निस्त्रिष्टुप् उपा० । त्वं ह्यग्ने प्रथमो मनोतास्याधियो अभवो

दस्म होता । तंर्गा वृषन्नश्छणोर्दुष्टरीतु महो विश्वस्मै सहंसे सहंध्यैस्वाहा । अग्नयइदं० ॥ ११ ॥ यो नः स्वः पायुर्भारद्वाजो विश्वे-
देवा अनुष्टुप् उपा० । यो नः स्वो अरणो यश्च निष्ट्यो जिघांसति । देवास्तं सर्वे धूर्वन्तु ब्रह्मवर्म ममान्तरं स्वाहा । विश्वेभ्योदेवे-
भ्यइदं० ॥ १२ ॥ अग्निंनरो मैत्रावरुणिर्वसिष्ठोग्निर्विराट् उपा० । अग्निं नरो दीधितिभिरुरण्योर्हस्तच्युती जनयन्त प्रशस्तम् । दूरे
दृशं गृहपतिमथर्युं स्वाहा । अग्नयइदं० ॥ १३ ॥ प्रतिचक्ष्वमैत्रावरुणिर्वसिष्ठ इन्द्रासोमावनुष्टुप् उपा० । प्रतिचक्ष्व विचक्ष्वेन्द्रश्च
सोम जागृतम् । रक्षोभ्यो वधमस्यतमशनिं यातुमद्भ्यःस्वाहा । इन्द्रासोमाभ्यामिदं० ॥ १४ ॥ माचिल्काण्वः प्रगाथ इन्द्रो बृहती
उपा० । माचिदन्यद्विशंसत सखायो मा रिषण्यत । इन्द्रमित्स्तोता वृषणं सचा सुते मुहुरुक्था च शंसतस्वाहा । इन्द्रायेदं० ॥१५॥
आग्ने याहि काण्वः सौभरिरग्निमरुतोऽनुष्टुप् उपा० । आग्ने याहि मरुत्सखा रुद्रेभिः सोमपीतये । सोभर्या उप सुष्टुतिं मादयस्व
स्वर्णरे स्वाहा । अग्नामरुद्भ्यइदं०॥१६॥स्वादिष्ठया मधुच्छन्दाः पवमानः सोमो गायत्री उपा०। स्वादिष्ठया मदिष्ठया पवस्व सोम धा-
रया । इन्द्राय पातवे सुतःस्वाहा । पवमानायसोमायेदं० ॥ १७ ॥ यत्ते राजन्मारीचः कश्यपः पवमानः सोमः पंक्तिः उपा० ।
यत्ते राजञ्छृतं हविस्तेन सोमाभिरक्ष नः । अराती वा मा नस्तारीन्मोचनः किंचना ममदिन्द्रायेन्दो परिस्रव स्वाहा । पवमानाय-
सोमायेदं० ॥ १८ ॥ अग्नेबृहन्नात्यस्त्रितोग्निस्त्रिष्टुप् उपा० । अग्ने बृहन्नुषसामूर्ध्वो अस्थान्निर्जगन्वान्तमसो ज्योतिषागात् । अग्नि-
र्भानुना रुशता स्वङ्ग आजातो विश्वा सद्मान्यप्राःस्वाहा । अग्नयइदं० ॥ १९ ॥ समानीवः संवननः संज्ञानमनुष्टुप् उपा० । समानी
व आकूतिः समाना हृदयानि वः । समानमस्तु वो मनो यथा वः सुसहासति स्वाहा । संज्ञानायेदं० ॥ २० ॥ एतैर्विंशतिमन्त्रै-

राहुतीर्हुत्वोद्दिश्यत्यक्त्वा दधिसक्तुशेषेण स्विष्टकृतं हुत्वा । रुद्राय स्वाहारुद्रायेदं० रक्षुंग्रहत्य । तत आचार्यः शिष्याश्चासनादन्य-
त्र दधिसक्तून्प्राश्याचम्य पूर्ववदुपविश्य यज्ञोपवीतहोमदानधारणानि कुर्युः । तत्रायं क्रमः—यज्ञोपवीतमित्यस्य परब्रह्मपरमात्मा
त्रिष्टुप् यज्ञोपवीतहोमे० । अनेन मन्त्रेणाचार्यो यज्ञोपवीतं हुत्वा परमात्मन इदं नममेत्युद्दिश्य त्यक्त्वा । प्राचीनावीती अग्निमुपाक-
र्मणि मम समस्तपितृप्रीत्यर्थं यज्ञोपवीतदानं करिष्य इति संकल्प्य पितृपितामहप्रपितामहेभ्यः सपत्नीकेभ्यः मातामहमातृपिता-
महमातृप्रपितामहेभ्यः सपत्नीकेभ्यः पितृव्यादिसर्वपितृभ्यः सपत्नीकेभ्यो यज्ञोपवीतं स्वधानममेति प्रत्येकं दद्यात् । जीवत्पिता
चेदाभ्युदयिकप्रकरणोक्तमातृमातामहवर्गाभ्यां दद्यात् । मातरि जीवन्त्यां मातामहायैव दद्यात् । एवं दानकाले प्रतिग्रहमकुर्व-
न्दत्त्वा स्वयं च तन्मन्त्रेण धारयेत् एवमितरे । तत आचार्योऽस्मिन्काले ब्रह्मचारिणा क्रमेण नवकटिसूत्रकौपीनवस्त्रयज्ञोपवीताजिन-
मेखलादण्डांश्च धारयित्वा पुराणानि जले निक्षिपेत् । तत आचार्यः इतरेचोत्तरपरिस्तरणदर्भाणामधस्तादञ्जलिं निधाय अन्येनापः
सेचयित्वा ताभिरद्भिर्मार्जयेयुः । ततः सर्वैः सहाचार्यैः प्रत्यगग्नेः प्रागग्रमास्तीर्णेषु दर्भेषूपविश्य शरावाद्युदकपात्रे दर्भान्निक्षिप्य
दर्भगर्भब्रह्माञ्जलिं कृत्वा पूर्वमोंकारं ततः समस्तव्याहृतिं गायत्रीं पच्छोऽर्धर्चशोऽनवानमुच्चैस्त्रिरुच्चारयन् शिष्यानपि तथा वाच-
यित्वा । विद्युदसीतिमन्त्रस्य अग्निर्ऋषिः वरुणो देवता त्रिष्टुप्छन्दः । विद्युदसि विद्य मे पाप्मानमृतात्सत्यमुपैमि । ॐशिरः चक्षुषी ना-
सिके श्रोत्रे हृदयमालभ्य प्रणवस्य परब्रह्मऋषिः परमात्मा देवता दैवीगायत्रीच्छन्दः । व्याहृतीनां परमेष्ठीप्रजापतिः प्रजापतिर्बृ-
हती । गायत्र्या विश्वामित्रः सविता गायत्री उपाकरणेवि० । ॐभूर्भुवः स्वः तत्सवितुर्वरेण्यं०इति गायत्री पच्छोऽर्धर्चशः सर्वामिति

ज्जिज्ञासा। अग्निमीळे पुरोहितं० इति सूक्तं। अग्निर्वै देवानामवमो विष्णुः परमः इति ब्राह्मणम्। एष पन्था एतत्कर्म। अथातः संहिताया उपनिषत्। विदामघवन्विदा। महाव्रतस्य पञ्चविंशति सामिधेन्यः इति पञ्चारण्यकम्। इषे त्वोर्जे त्वा इति यजुरादिम्। अग्न आयाहि वीतये इति सामादिम्। शंनो देवीरभिष्टये इत्यथर्वणादिम्। अथैतस्य समाम्नायस्य इति सूत्रम्। समाम्नायः समाम्नातः इति निरुक्तम्। मयरसतजभनलगसमितम् इति छन्दः। गौः। ग्मा। इति निघण्टुम्। पञ्चसंवत्सरमयं इति ज्यौतिषम्। अथ शिक्षां प्रवक्ष्यामि इति शिक्षाम्। वृद्धिरादैच् इति व्याकरणं। यदिन्द्रो दाशराज्ञे०। योगीश्वरं याज्ञवल्क्यम्। नारायणं नमस्कृत्य। अथातो धर्मजिज्ञासा इति पूर्वमीमांसासूत्रं अथातो ब्रह्मजिज्ञासेत्युत्तरमीमांसासूत्रं च क्रमाद्ब्रुवन्वाचयित्वा तच्छंयोरावृणीमहे०नमो ब्रह्मणइति परिधानीयां निर्वाचयित्वा यथाचारं शिष्यैः सहोत्थाय संज्ञानमुशनावदत् ओमित्युक्त्वा वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागाम् उपाकृता वै वेदा इत्युच्चार्य पुनः शिष्यैः सहोपविश्य भूमिं स्पृष्ट्वा जलं संस्पृश्य अग्निं गौतमादिसप्तर्षीनाचार्यादीन्नमस्कृत्य प्रायश्चित्तादि होमशेषं समाप्य कर्मेश्वरार्पणं कृत्वा वेदानुद्दिश्य ब्राह्मणान्भोजयेत् ॥ इति श्रीमन्नृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे उपाकरणप्रकरणम् ॥

अथाध्ययनविधिः ॥ अव्यादव्याजकृपया सोऽयं व्याजनृकेसरी। यन्नामनिगमाधीतिरर्थितार्थसमर्थिनी ॥ अथेदानीमध्ययनविधिरभिधीयते ॥ तत्र तावद्वेदप्रशंसामाह याज्ञवल्क्यः—'यज्ञानां तपसां चैव शुभानां चैव कर्मणाम्। वेद एव द्विजातीनां निःश्रेयसकरः परः ॥ य यं क्रतुमधीयीत तस्य तस्याप्नुयात्फलम्' इति। स्मृतिसारसमुच्चये—'वेदो यस्य शरीरस्थो

न स पापेन लिप्यते । वेदात्मा स तु विज्ञेयः शरीरं किं प्रयोजनम् ॥ वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः । तावन्ति हरिनामानि कीर्तितानि न संशयः ॥ यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् । स वै दुर्ब्राह्मणो नाम सर्वकर्मबहिष्कृतः ॥ नित्यं नैमित्तिकं काम्यं यच्चान्यत्कर्म वैदिकम् । अनधीतस्य विप्रस्य सर्वं भवति निष्फलम् ॥ अनधीतो द्विजो यस्तु शास्त्राणि च बहून्यपि । शृणोति ब्राह्मणो नाशे नरकं स प्रपद्यते ॥ तेन द्विजत्वसिद्ध्यर्थं व्रात्यत्वस्य निवृत्तये । कर्माधिकारसिद्ध्यर्थं किंचिद्वा वेदमभ्यसेत् ॥ नाधीतवेदो यो विप्र आचारेभ्यः प्रवर्तते । न चात्र फलमाप्नोति यथा शूद्रस्तथैव सः ॥ आचारनष्टं धर्मिष्ठमपि विष्णुपरायणम् । त्यजेदन्त्यजवच्छीघ्रं तं कदाचन नालपेत् ॥ तस्यान्नपाननिष्ठस्तु त्रिरात्रव्रतमाचरेत् । ततः कर्माणि कुर्वीत स्वाचारत्वप्रसिद्धये ॥ अनधीतस्य विप्रस्य पुत्रो वाध्ययनान्वितः । शूद्रपुत्रः स विज्ञेयो न वेदफलमश्नुते ॥ अनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः'॥ श्रुतिरपि—'यस्तित्याज सखिविद'मिति। 'अनभ्यासाच्च वेदानामाचारस्य च लङ्घनात् । आलस्यादन्यदोषाच्च मृत्युर्विप्राञ्जिघांसति' इति। तस्माद्ब्राह्मणेन वेदोऽध्येतव्यः ॥ मनुस्तु अब्राह्मणादप्यध्येतव्यमित्याह—'अब्राह्मणादध्ययनमापत्काले विधीयते । अनुव्रज्यापि शुश्रूषा यावदध्ययनं गुरोः' इति ॥ तस्य वेदस्य स्वरूपमाह वसिष्ठः—'पारंपर्यागतो येषां वेदः सपरिबृंहिणः । तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथा ॥ यः स्वशाखां परित्यज्य पारक्याभधिगच्छति । स शूद्रवद्बहिष्कार्यः सर्वकर्मसु साधुभिः ॥ न जातु परशाखोक्तं बुधः कर्म समाचरेत् । आचरन्परशाखोक्तं शाखारण्डः प्रकीर्तितः ॥ स्वीयशाखोज्झिता येन ब्रह्म तेनोज्झितं परम् । ब्रह्महैव स विज्ञेयः सद्भिर्नित्यं विगर्हितः ॥ अधीत्य

शाखामात्मीयां प्रयत्नतः पठेत् । यच्छाखीयैस्तु संस्कारैः संस्कृतो ब्राह्मणो भवेत् । तच्छाखाध्ययनं कुर्यान्न तेन पतितो भवेत्' इति । अत्र शाखाध्ययनं धर्मशास्त्रादीनामुपलक्षणार्थम् । तथाच व्यासः—'धर्मशास्त्रं तु विज्ञेयं शब्दशास्त्रं तथैव च । पुराणानीतिहासमाद्यं तद्व्याख्यानानि यानि च । महात्मनां च चरितं श्रोतव्यं नित्यमेव हि' इति ॥ एतदध्ययनमुपाकर्म कृत्वा कर्तव्यमित्याहाचार्यः—'नभोमासे नभस्ये वा समुपाकृत्य शास्त्रवत् । द्विजश्छन्दांस्यधीयीत मासान्पञ्चार्धसंयुतान्' इति । शास्त्रवत् पूर्वोक्तगृह्यवत् ॥

अथ तिथ्यादिनिर्णयः । अत्रोपाकृतवेदादिप्रारम्भे तिथ्यादिविशेष उच्यते । श्रीधरीये—'रिक्ताष्टमीपञ्चदशी निषिद्धा त्रयोदशी सप्तमिका च मध्या । विद्यागमे वित्सितमन्त्रिणां स्युर्वारोदया मध्यममिन्दुभान्वोः' । चतुर्थीनवमीचतुर्दश्यो रिक्ताः शेषाः प्रसिद्धाः । एताः पञ्च तिथयो विद्यारम्भे निषिद्धाः । त्रयोदशीसप्तम्यौ मध्यमे । शिष्टाः शुभावहा इति वाक्यशेषः ॥ तथाच बृहस्पतिः—'प्रथमा च द्वितीया च तृतीया पञ्चमी तथा । दशमी द्वादशी चैव एकादश्यः सुपूजिताः' इति । त्रयोदशीसप्तम्योर्विशेषमाह—'त्रयोदशी सप्तमी च कदाचिच्छुभदे तिथी । यदा चन्द्रो गुर्वांशस्थो बुधजीवसितेक्षितः' इति ॥ अथ वाराः—वित्सितमन्त्रिणामिति । वित् बुधः । सितः शुक्रः । मन्त्री गुरुः । एषां त्रयाणां वारवर्गोदयाः शस्ताः । इन्दुभान्वोर्वारोदया मध्यमाः । अन्येषां वारोदया वर्ज्या इति वाक्यशेषः । तथाह बृहस्पतिः—'वारवर्गोदया वर्ज्या दर्शनं चार्किभौमयोः । मध्यमौ रविशीतांश्वोः शेषाणामुत्तमाः स्मृताः' इति । चन्द्रभान्वोस्तु वारोदयाः कालविशेषग्राह्या इत्याह वसिष्ठः—'दि-

संस्कारप्र. अध्ययन.

वसांशोदया वर्ज्या यत्नेन कुजसौरयोः । श्रेष्ठाः शुक्रज्ञजीवानां मध्यमाश्चन्द्रसूर्ययोः ॥ रविवारे च पूर्वाह्णे विद्यारम्भो विधीयते । चन्द्रवारेऽपराह्णे च विद्या गुर्वी विधीयते । रात्रौ तु वर्जयेन्नित्यं संध्ययोश्च विशेषतः' इति । किंच–विद्यागमे विदिसितमन्त्रिणां स्यु'रित्यत्र प्रशस्तत्वेन पठितस्य बुधस्य वारादयो विघ्नकरा इत्याह मार्कण्डेयः—'चन्द्रे च चन्द्रतनये च भृशं च सर्वे विघ्नो भवेदवनिजे रविजे विनाशः' इति ॥ अत्र निषिद्धेष्वपि वारेषु विद्याविशेषारम्भे ग्राह्यतामाह नृसिंहः—'सर्वे वेदाश्च शास्त्राणि चाक्षरं सूर्यवासरे । कामशास्त्रं महातन्त्रं रोगघ्नं वेदमेव च ॥ अङ्गशास्त्रं भिषक्शास्त्रं चान्द्रेह्नि सततं लभेत् । शूद्रशास्त्रं कुलघ्नं च रणवादाग्निशास्त्रकम् । अस्त्रशस्त्रप्रयोगं च कुजवारांशकोदये ॥ योगशास्त्रं महातन्त्रमद्वैतब्रह्मनैष्ठिकम् । गीतं वाद्यं च नृत्यं च कामशास्त्रं च सौम्यके ॥ सर्ववेदान्षडङ्गानि जीववारे समारभेत् । मङ्गलं नृत्यवादित्रं श्रीकामं श्रीप्रतिष्ठितम् ॥ पूजाङ्गवेदवे-दार्थमारभेच्छुक्रवासरे । शुभं वाप्यशुभं वापि न स्मरेच्छास्त्रमर्कजे ॥ विद्यारम्भो यदि स्यात्तु मन्दवारांशकोदये । पुराणमपि नाशाय नराणां तु न संशयः' इति ॥ अथ नक्षत्राणि विधीयन्ते—'हस्ताश्वयुक्श्रवणतिष्यसमीरमित्रचित्रादितित्रिपुरजिन्मृग-लाञ्छनेषु । शस्तोत्तराकमलसंभवपौष्णभेषु मध्या श्रुतिस्मृतिसमावगतिर्द्विजानाम्' । हस्तादिषु दशसु मृगशीर्षान्तेषु नक्षत्रेषु श्रुति-स्मृत्याद्यवगतिः शस्ता । स्युत्तरारोहिणीरेवतीषु मध्यमा । तथाह बृहस्पतिः—'ताराश्वतस्रः सौम्याद्या विद्यारम्भे चतुर्मुख ॥ त्रीण्युत्तराणि पौष्णं च रोहिणी मध्यमानि च । शेषाणि भानि वर्ज्यानि विद्यारम्भे शुभेप्सुभिः' इति । अत्र विद्याशब्दो वेदविद्या-स्वेव वर्तते । विद्याविशेषारम्भे नक्षत्रान्तरविधानात् । तथाच बृहस्पतिः—'प्रत्येकमेकतो वक्ष्ये यत्रारेऽवहितः शृणु ।

मेर्यादिनटशास्त्रेषु नाट्ये सामुद्रिकाह्वये ॥ कौटिल्यक्षुरिकादाने वेदशान्तिक आरभेत् । मल्ले महानसे खड्गे कृते तुरगवारणे ॥ शास्त्राभ्यासे विरोधे च रौद्रतिष्योत्तरात्रयः । पौष्णश्रवणरोहिण्यः सौम्यनायू च शोभनाः ॥ मैत्रं कुक्कुटशास्त्रे स्यादायुर्वेदे गजाश्वयोः । तयोरारोहणे चैव पूषभानि शुभानि च ॥ अश्विनी चाश्वविद्यायां गजविद्यासु शोभनम् । त्वाष्ट्रं चित्रकविद्यासु स्वाती मैत्रपुनर्वसू ॥ गजानां जन्मभं सौम्यं पुमान्पुष्ये परेऽङ्गना । हयानां वारुणाश्विन्यौ स्त्रीपुंसोर्जन्मभे वरे ॥ अर्थशास्त्रेषु वैश्वाद्यत्रितयं पौष्णमेव च । अश्विनी रोहिणी सौम्यं पुष्यं हस्तादिपञ्चकम् ॥ ज्योतिराद्यङ्गशास्त्राणां स्वाती हस्तपुनर्वसू । पौष्णं तिष्याश्विनी मूलवारुणाः स्युः सुपूजिताः ॥ वारुणं योगशास्त्रेषु समरेष्विन्द्रभं शुभम् । हस्तस्वात्यश्विसौम्याः स्युरायुर्वेदे सुपूजिताः ॥ वासवो रेवती सौम्या रोहिणी तिष्यमैत्रभम् । पुनर्वसुश्च हस्तश्च शब्दशास्त्रे सुपूजिताः ॥ गणिते रेवती हस्तमैत्रतिष्यार्द्रवासवाः । ज्योतिःशास्त्रे निमित्ते च रोहिणीवारुणौ शुभौ ॥ आदित्यवैष्णवस्वातीतिष्यहस्ताश्विवारुणाः । त्रीण्युत्तरा रोहिणी च ह्यर्थशास्त्रे सुपूजिताः ॥ नक्षविद्यासु सर्वाणि नक्षत्राणि शुभानि च । शिवागमे शुभान्याहुः क्षिप्रमिश्राणि तान्यपि ॥ ततो विष्णागमे शास्त्रे वारः साधारणः स्मृतः । विषशास्त्रमृतायोगा वारनक्षत्रपूजिताः ॥ सर्वे शंसन्ति मुख्यत्वं वृत्रारे ब्रह्मणा पुरा । ध्रुवाणि सर्वशास्त्रेषु सर्वसाधारणान्यपि ॥ मृदूनि सर्वविद्यासु सर्वज्ञानेषु तान्यपि । वैष्णवं सुप्रशंसन्ति मायाचौर्यादिकैतवे । शंसन्ति सर्वभान्याहुर्ज्योतिःशास्त्राविरोधतः' इति ॥ ॥ अथ लग्नानि विधीयन्ते—'वेदारम्भे द्विस्वभावा विशिष्टा मध्याः प्रोक्ता ये चरा राशयश्च । शुद्धो राशिः सप्तमश्चन्द्रवारे कुर्यात्प्राज्ञः सर्वविद्यासमासिम्' ॥ मिथुनकन्याधनुर्मीना द्विस्वभावाः एते राशयो वेदविद्यारम्भेषु

प्रशस्ताः । मेषकर्कटतुलामकराश्चरा राशयो मध्यमाः । अवशिष्टाः स्थिरा वर्ज्या इति । तथाह बृहस्पतिः—'चरस्थिरद्विस्वभावा
मध्यमाधमपूजिताः । शुभयुक्तेषु दृष्टेषु सर्वे पूज्यतमा ग्रहाः' इति । राशिः लग्नस्य सप्तमो राशिः शुद्धः पापैः शुभैश्च रहितः शुभः
स्यात् ॥ ॥ अथ लग्नगोचरमाह । तथाच बृहस्पतिः—'त्रिषडायगताः पापास्त्रिकोणे कण्टके शुभाः । विद्यारम्भेषु पूज्याः
स्युः पञ्चमे पापवर्जिते ॥ कण्टके केन्द्रे । सप्तमस्थाः शुभाः सर्वे पूज्याः पापविवर्जिताः । विशेषादुदिताः सौम्याः पापसं-
योगवर्जिताः' इति । ग्रन्थान्तरे—'न कोऽपि सप्तमे पूज्यः शुभः क्रूरोऽपि वा यदि । लग्नात्सप्तमराशौ तु वर्जनीयो विशेषतः'
इति ॥❀॥ अथ प्रारम्भतिथिविधिप्रसङ्गात्परिसमाप्तिविधिमप्याह—चन्द्रवार इति । सर्वविद्यानां समापनं चन्द्रवारेऽपराह्णे
कुर्यात् । तथाह वसिष्ठः—'पूर्वाह्णे वाथ मध्याह्ने विद्यारम्भो विशिष्यते । अपराह्णे चन्द्रवारे विद्यामुक्तिर्विधीयते' इति ॥ ❀ ॥
अथ सारस्वतयोगः । तत्र बृहस्पतिः—'विद्यारम्भेषु सर्वेषु शस्तं सारस्वतं तदा । तस्मात्प्रवक्ष्यते सम्यग्योगः सारस्वताह्वयः ॥
हस्ते बुधांशके युक्ता यदि भान्विन्दुसोमजाः । सोमवारे रवौ लग्ने योगः सारस्वतो भवेत् ॥ हस्ते बुधांशकस्थौ चेद्बुधेन्दू लग्नगौ
तदा । बुधवारे मुहूर्तेऽह्नि योगः सारस्वताह्वयः ॥ अत्युच्चस्थे बुधे लग्ने पार्थोनान्त्यत्रिभागके । भानौ तत्सौम्यवारेण योगो वागीश्व-
राह्वयः ॥ पार्थो नाम कन्या । इन्द्वर्कज्ञदिने वारनाथे लग्ने बुधांशके । हस्तर्क्षे च मता ह्येते योगाः सारस्वताह्वयाः ॥ वर्गोत्तमस्थे
वै लग्ने जीवे चोभयराशिगे । गुरुशुक्रबुधाः केन्द्रे योगः सारस्वताह्वयः' इति ॥ ❀ ॥ अथ विद्यारम्भप्रकार उच्यते । मुहूर्त-
संग्रहे—'सरस्वतीं च संपूज्य गणनाथं तथैवच । गुरुपूजां ततः कृत्वा विद्याः सर्वाः समारभेत्' । स्मृत्यर्थसारे—'उदगयने शुक्लपक्षे

शुभेहनि स्वाध्यायं प्रारभेरन् पूर्वाह्णे गणेशं सरस्वतीं गरुत्मन्तमिष्टदेवतां गुरुं च संपूज्य ब्रह्मचारी विप्रसुवासिनीरभ्यर्च्याशिषो गृहीत्वा ब्रह्मयज्ञवद्दर्भान्धारयमाणः प्रणवव्याहृतिसहितां सावित्रीमुक्त्वा प्रणवपूर्वकं स्वाध्यायं प्रारभ्य किंचिदधीत्य प्रणवेन विरामोऽस्त्वित्युक्त्वा भूमिं स्पृष्ट्वा गुरुवृद्धाननमेयुः । ततोऽपरेद्युःप्रभृति प्रत्यहं गणेशादीन् गुरुं च नत्वा प्रणवेन प्रारम्भं समाप्तिं च कुर्यादि'ति ॥❀॥ अत्राध्ययननिमित्तेन कर्तव्यमाह लघुव्यासः—'ऋक्सामयप्यधीयीत मार्गेणोक्तेन धर्मतः । नत्वेव चतुरो वेदाननध्याये कदाचन' इति ॥❀॥ तत्र नियमा उक्ताः स्मृतिमञ्जर्याम्—'अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः । ब्रह्मारम्भेऽवसाने च प्रणमेद्विधिवद्गुरुम् ॥ कुशानास्तीर्य पूर्वाग्रानासीत प्राङ्मुखो गुरुः । तस्य दक्षिणतः शिष्य उपविष्ट उदङ्मुखः ॥ ॐकारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः । त्रिपदा चैव गायत्री विज्ञेया ब्रह्मणो मुखम् ॥ ब्रह्मणो मुखं वेदारम्भ इत्यर्थः ।—ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा । स्रवत्यनोंकृतं पूर्वं परस्ताच्च विशीर्यते ॥ तत्राधीयीत वेदं तु वीक्षमाणो गुरोर्मुखम् । ऋचमर्धर्चमथवा पादं पदार्धमेव वा ॥ गृह्णाति योऽननुज्ञातः पुरस्तात्परतो द्विजः । स ब्रह्मस्तेयकृत्प्रोक्तो नरकं प्रतिपद्यते ॥ अनध्यायेष्वधीतं यच्च शूद्रस्य संनिधौ । प्रतिग्रहनिमित्तं च नरकाय तदुच्यते' इति ॥ कूर्मपुराणे व्यासः—'एवं दण्डादिभिर्युक्तः शौचाचारसमन्वितः । आहूतोऽध्ययनं कुर्याद्वीक्षमाणो गुरोर्मुखम् ॥ नित्यमुद्यतपाणिः स्यात्संध्याचारसुसंयतः । आस्यतामिति चोक्तः सन्नासीताभिमुखो गुरोः ॥ प्रतिश्रवणसंभाषे शयानो न समाचरेत् । आसने च न भुञ्जीत न तिष्ठन्न पराङ्मुखः ॥ नीचशय्यासनं चास्य सर्वदा गुरुसंनिधौ । गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत् ॥ नोदाहरेदस्य नाम परोक्षमपि केवलम् । नचै-

वास्यानुकुर्वीत गतिभाषे न चेष्टितम् ॥ गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते । कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥
दूरस्थो नार्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः । नचैवास्योत्तरं ब्रूयात्स्थिते नासीत संनिधौ ॥ उदकुम्भं कुशान्पुष्पं समिधोऽप्याहरे-
त्सदा । मार्जनं लेपनं नित्यमङ्गणानां समाचरेत् ॥ नास्य निर्माल्यशयने पादुकोपानहावपि । आक्रामेदासनं चास्य छायादीन्वै
कदाचन ॥ आहरेद्दन्तकाष्ठादींल्लब्धं चास्मै निवेदयेत् । अनापृच्छ्य न गन्तव्यं भवेत्प्रियहिते रतः ॥ न पादौ सारयेदस्य संनि-
धाने कदाचन । जृम्भितं हसितं चैव कण्ठप्रावरणं तथा ॥ वर्जयेत्संनिधौ नित्यमवस्फोटनमेव च । कामं लोभं भयं निद्रां गी-
तवादित्रनर्तनम् ॥ द्यूतं जनपरीवादं स्त्रीप्रेक्षालम्भनादिकम् । परोपघातं पैशुन्यं प्रयत्नेन विवर्जयेत् ॥ उदकुम्भं सुमनसो गोश-
कृन्मृत्तिकां कुशान् । आहरेद्यावदर्थानि भैक्षं चाहरहश्चरेत् ॥ घृतं च लवणं सर्वं वर्ज्यं पर्युषितं च यत् । अनृत्यदर्शी सततं भवे-
द्गीतादिनिःस्पृहः ॥ नादर्शं चैव वीक्षेत नाचरेद्दन्तधावनम् । एकान्तमशुचिस्त्रीभिः शूद्राद्यैरपि भाषणम् ॥ आचम्य संयतो
नित्यमधीयीत ह्युदङ्मुखः । उपसंगृह्य तत्पादौ वीक्ष्यमाणो गुरोर्मुखम् ॥ अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत् । प्राक्कू-
लेषु समासीनः पवित्रैश्चैव पावितः ॥ प्राणायामैस्त्रिभिः पूतस्तत ओंकारमारभेत् । ब्रह्मणः प्रणवं कुर्यादन्ते च विधिवद्द्विजः ॥
कुर्यादध्ययनं नित्यं ब्रह्माञ्जलिकृतः स्थिरः । सर्वेषामेव भूतानां वेदश्चक्षुः सनातनम् । अधीयीताप्यृचं नित्यं ब्राह्मण्याच्च्यव-
तेऽन्यथा ॥ श्लेष्मातकस्य छायायां शाल्मलेर्मधुकस्य च । कदाचिदपि नाध्यायः कोविदारकपित्थयोः ॥ अन्तःशवगते ग्रामे
वृषलस्य च संनिधौ । अनध्याये रुद्यमाने समवाये जनस्य च ॥ यावद्देहेऽनुलिप्तस्य स्नेहो गन्धस्य तिष्ठति । विप्रस्य विदुषो देहे

तावद्ब्रह्म न कीर्तयेत्' इति ॥ यमोपि—'ओंकारं प्रथमं कृत्वा ततो ब्रह्म प्रवर्तयेत् । ओंकारं च पुनः कृत्वा भूमिं स्पृष्ट्वा विरामयेत् । अन्यथा विपरीतं स्याद्ब्रह्म तत्रात्र संशयः' इति ॥ आश्वलायनाचार्योपि—'दक्षान्तर्जानुरासीत भूमावभिमुखो गुरोः । कम्पयेन्न शिरः किंचिन्न क्रुद्धो न च मत्सरी । गुरुणापि सहासीत शिलाफलकनौषु च । सहसैव समुत्तिष्ठेद्गुरोरागमने द्विजः' ॥ स्मृतिसंग्रहे—'न वान्तो न विरिक्तश्च नाजीर्णी न चतुष्पथे । न पीठन्यस्तपादश्च न देवायतने तथा ॥ न रथ्यायां नोदकान्ते कुर्यादध्ययनं द्विजः । नाधीयीत श्मशानान्ते ग्रामान्ते गोव्रजे तथा । वसित्वा मैथुनं वासः श्राद्धिकं प्रतिगृह्य च' ॥ मनुः—'शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम् । नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव च ॥ न विवादे न कलहे न सेवायां न संगरे । उदके मध्यरात्रे च विण्मूत्रे च विसर्जिते ॥ उच्छिष्टे श्राद्धभुक्तौ च मनसापि न चिन्तयेत्' ॥ स्मृतिसारे—'सर्वकुत्सितगन्धेषु परिवेषे सभासु च । अभ्यङ्गे स्नानकाले च महास्वेदेऽतिकम्पने ॥ गोविप्ररोदने सर्वश्राद्धेषु श्राद्धपङ्क्तिषु । श्मशाने शूद्रसंपर्के चाण्डालादिनिदर्शने । रोदने व्याकुले देशे जपस्थाने महालये । महोत्पातेषु च तथा स्वाध्यायं वर्जयेद्बुधः' ॥ धर्मोद्द्योते—'फलान्यपस्तिलान्भक्ष्यान्यदन्यच्छ्राद्धिकं भवेत् । प्रतिगृह्याप्यनध्याय इति बोधायनोऽब्रवीत्' ॥ यमः—'आगतं चातिथिं दृष्ट्वा नाधीयीतैव बुद्धिमान् । अभ्यनुज्ञापिते तस्मिन्नध्येतव्यं प्रयत्नतः ॥ गुरुं चैवाप्युपासीत स्वाध्यायार्थं समाहितः । आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत् ॥ शौचाचारवता तत्र कार्यं शुश्रूषणं गुरोः । व्रतानि चरता ग्राह्यो वेदश्च कृतबुद्धिना' ॥ आह नारदः—'योऽहेरिव गणाद्भीतः सन्मानान्मरणादिव । राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति ॥ द्यूतं पुस्तकशुश्रूषा नाटकासक्तिरेव

च । स्त्रियस्तन्द्री च निद्रा च विद्याविघ्नकराणि षट् ॥ पुस्तकप्रत्ययाधीतं नाधीतं गुरुसंनिधौ । राजते न सभामध्ये जारगर्भ इव स्त्रियाः' ॥ मनुः—'नाविस्पष्टमधीयीत न शूद्रजनसंनिधौ । न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत्' ॥*॥ शूद्रान्नमपि निषिद्धमित्याह पराशरः—'शूद्रान्नरसपुष्टस्य ह्यधीयानस्य नित्यशः। जपतो जुह्वतो चापि गतिरूर्ध्वा न विद्यते' इति ॥*॥ अत्रार्थज्ञानपर्यन्तमध्ययनं कर्तव्यमित्याह व्यासः—'न वेदपाठमात्रेण संतुष्टो वै भवेद्द्विजः । पाठमात्रावसायी तु पङ्के गौरिव सीदति ॥ मन्त्रार्थज्ञो जपञ्जप्यं तथैवाध्ययनं द्विजः । स्वर्गलोकमवाप्नोति नरकं तु विपर्यये ॥ योऽधीत्य विधिवद्वेदं वेदार्थं न विचारयेत् । स मान्वयः शूद्रसमः पात्रतां न प्रपद्यते ॥ वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य चैव हि । अजानतोर्थं तत्सर्वं तुषाणां रुण्डनं यथा ॥ यथा पशुर्भारवाही न तस्य लभते फलम् । द्विजस्तथार्थानभिज्ञो न वेदफलमश्नुते ॥ वेदशास्त्रार्थतत्त्वज्ञो यत्र कुत्राश्रमे वसेत् । इहैव लोके तिष्ठन्स ब्रह्मलोकाय कल्पते' इति ॥ धर्मसारसुधानिधौ—'तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः । वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना' इति ॥*॥ अथ कृत्स्नवेदाध्ययनं कर्तुमशक्तस्यैकदेशाध्ययनमप्यनुजानाति पराशरः—'अग्निकार्यात्परिभ्रष्टाः संध्योपासनवर्जिताः । वेदांश्चैवानधीयानाः सर्वे ते वृषलाः स्मृताः ॥ तस्माद्वृषलभीतेन ब्राह्मणेन विशेषतः । अध्येतव्योऽप्येकदेशो यदि सर्वो न शक्यते' इति ॥

अत्र मन्दमत्यादिदोषादध्ययने अशक्तश्चेत्तस्य कर्मविपाकरूपजपाद्युच्यन्ते ऋग्विधाने—'वागिन्द्रियप्रमूढस्तु यो विद्वान्न विजायते । इन्द्रियार्थान्यथावद्वा यो न वेत्ति कथंचन ॥ विद्या चाधिगता यस्य प्रणश्येत पुनः पुनः । तस्सर्परीरिति

जपन्निर्यां संप्रतिपद्यते ॥ एषद्रप्सो जपेन्मन्त्रं शतवारं दिनेदिने । भ्रान्तिबुद्धिर्न शास्त्रेषु याथातथ्यं हि दृश्यते ॥ यातेकाकुजपेन्मन्त्रं शतवारं दिने दिने । विपरीतं च शास्त्रेषु यथार्थं दृश्यते तदा ॥ सुतः सोमो जपेन्मन्त्रं शतवारं दिनेदिने । अन्यथार्थं च शास्त्रेषु यथार्थं दृश्यते तदा ॥ कयानश्चित्रमन्त्रं च शतवारं दिनेदिने । व्यासोक्तस्तु पुराणार्थो यथार्थं दृश्यते तदा ॥ अहेळमानोमन्त्रं च दिनंप्रति जपेच्छतम् । शास्त्रेषु संशयो नास्ति विश्वासः सर्वथा भवेत् ॥ प्रत्यसै प्रजपेन्मन्त्रं शतवारं दिनेदिने । महद्वाक्येषु विश्वासो ह्यविश्वासो न सर्वथा ॥ य एभेनं जपेन्मन्त्रं शतवारं दिनेदिने । स्मृत्यर्थेनान्यथाबुद्धिर्यथार्थं पश्यति द्विजः ॥ ओष्ठापिधानामन्त्रं न जपेद्दश दिनं प्रति । वाग्देवी मातृका तस्य जिह्वाग्रे वर्तते सदा ॥ ओष्ठामन्त्रेण जुहुयाद्धियाश्रीस्तत्कुले स्थिते । त्रिमधुं नाष्टगाहस्रं प्रतिवर्षं तु फाल्गुने ॥ भद्रामित्रो जपेन्मन्त्रं शतवारं दिनेदिने । अविद्या न स्पृशेत्तस्यं विद्यया सह तिष्ठति ॥ अहंमनुर्जपेन्मन्त्रं शतं धात्र्या दिनं प्रति । त्रिकालज्ञानसिद्धिं च सर्वथा लभते द्विजः' इति । इति मन्दमतिप्रायश्चित्तम् ॥

अथ गुरुकुलवासप्रकारः । एवमधीयानस्य गुरुकुलवृत्तिप्रकार उच्यते । तत्र व्यासः—'जघन्यशायी पूर्वं स्यादुत्थायी गुरुवेश्मनि । यच्च शिष्येण कर्तव्यं यच्च दासेन वा पुनः ॥ कृत्यमित्येव तत्सर्वं कृत्वा तिष्ठेत्तु पार्श्वतः । किंकरः सर्वकारी च सर्वकर्मसु कोविदः ॥ अभुक्तवति नाश्नीयादपीतवति नो पिबेत् । न तिष्ठति तथासीत नासुप्ते प्रस्वपेत्तथा' ॥ विश्वामित्रः—'तच्चाचार्यपुत्रयोश्चैव वृद्धानां कर्मशालिनाम् । शुश्रूषा सर्वदा कार्या पण्मासादिभिरेव च' ॥ आह याज्ञवल्क्यः—'गुरूणामध्यधिक्षेपो वेदनिन्दा सुहृद्वधः । ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम्' इति ॥ आचार्यः—'आक्रोशप्रेक्षणादीनि गुरौ कृत्वा ततो व्रती ।

कृत्वा तदीरितान्सर्वान्यत्नाच्छीघ्रं प्रसादयेत्' ॥ पाराशरप्रायश्चित्तकाण्डे तु—'गुरुं संकृत्य हुंकृत्य विप्रं निर्जित्य वादतः । अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः' ॥❀॥ तस्य प्रायश्चित्तमाह बोधायनः—'वादेन ब्राह्मणं जित्वा प्रायश्चित्तविधित्सया । त्रिरात्रोपोषितः स्नात्वा प्रणिपत्य क्षमापयेत्' इति ॥ ❀ ॥ शुश्रूषायाः फलमाहतुर्देवलबोधायनौ—'यथा खनन्खनित्रेण नरो वार्यधिगच्छति । एवं गुरुगतां विद्यां शुश्रूषुरधिगच्छति' इति ॥ अकरणे दोषमाह यमः—'यथान्नं विषसंयुक्तं विषं चान्नेन संयुतम् । तादृशं स्यादशुश्रूषोर्ब्रह्माधीतं न संशयः' इति ॥ अत्रोपायान्तरमाह नारदः—'गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थं नोपलभ्यते' इति । इत्यधीयानस्य धर्माः ॥ ❀ ॥ अथाध्यापकधर्माः । तत्र यमः—'सततं प्रातरुत्थाय दन्तधावनपूर्वकम् । स्नात्वा हुत्वाथ शिष्येभ्यः कुर्यादध्ययनं नरः' ॥ मनुरपि—'अध्येष्यमाणस्तु गुरोर्नित्यं कालमतन्द्रितः । अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति वाचयेत् ॥ ❀ ॥ अत्र शिक्षाप्रकारमाह स एव मनुः—'भार्या पुत्रश्च दासश्च शिष्यो भ्राता च सोदरः । प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा' ॥ आह गौतमः—'अशक्तौ रज्जुवेणुदलाभ्यां तनुतनुभ्या'मिति । ताडयेदिति शेषः । तच्च शिरसि न कार्यं ॥ तथाच मनुः—'पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथंचन । अतोऽन्यत्र प्रहरता प्राप्तः स्याच्चोरकिल्बिषम्'॥ हस्तादिना निघ्नन्राज्ञः शास्य इत्याह गौतमः—'हस्तादिना निघ्नन् राज्ञा शास्यत' इति ॥ एवमाचारसंपन्नशिष्यस्य ज्ञानाप्रदाने विशेषः कूर्मपुराणे—'एवमाचारसंपन्नमात्मवन्तमदाम्भिकम् । वेदमध्यापयेद्धर्मं पुराणाङ्गानि नित्यशः ॥ संवत्सरोषिते शिष्ये गुरुर्ज्ञानमनिर्दिशन् । हरते दुष्कृतं तस्य शिष्यस्य वसतो गुरुः' इति ॥ अत्र विशेष-

माह लघुव्यासः—'वेदविप्लावनाद्येन वरं मौनं समाश्रितम् । वेदविप्लावनाद्विप्रो नरकं यात्यधोमुखम् ॥ ❀ ॥ वेदविप्लावनस्य लक्षणं विष्णुक्तमाह यमः—'योऽर्थार्थी मां द्विजो दद्यात्पठेच्चैवाविधानतः । अनध्याये च तत्प्राहुर्वेदविप्लावनं बुधाः' इति ॥ याज्ञवल्क्यः—'कृतज्ञोऽद्रोहिमेधावी शुचिः कल्योऽनसूयकः । अध्याप्य धर्मतः साधुः शक्त्या प्रज्ञानवित्सदः' । कल्यो नीरोगः । अनसूयकः दोषानाविष्करणशीलः । ननु अर्थदोऽध्याप्य इति न संगच्छते भृतकाध्ययनाध्यापनयोः प्रायश्चित्तस्मरणात् । तथा च पाराशरप्रायश्चित्तकाण्डे हारीतः—'भृतकाध्यापनं कृत्वा भृतकाध्ययनं तथा । अनुयोगप्रदानेन त्रीन्पक्षांस्तु पिबेदिति ॥ याचकमिति शेषः । मैवम् । भृतिसंकल्पपूर्वकमध्यापनं प्रतिषिद्धं नेतरत् । तस्य भृतिहेतुत्वेनाविरोधात् । अतएव मनुः—'धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा । तत्र विद्या न वक्तव्या उप्तं बीजमिवोषरे' । यमोऽपि—'धर्मार्थौ यत्र न स्यातां न शुश्रूषाधनागमौ । विद्यया सह मर्तव्यं न विद्यामूषरे वपेत्' इति ॥ ❀ ॥ मनुस्तु ज्ञानदोऽध्याप्य इत्याह—'आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः । आप्तः शक्तोऽर्थदः साधुस्स्वध्याप्यः स्यात्तु धर्मतः इति ॥❀॥ असूयकादयो नाध्याप्या इत्याह विशेष—विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेहमस्मि । असूयकायानृजवेऽयताय न मां ब्रूया वीर्यवती तथा स्या'मिति । विष्णुस्तु—'नापरीक्षितं याजयेन्नाध्यापयेन्नोपनयेत् । अधर्मेण च यः प्राह पश्चाद्धर्मेण पृच्छति । तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति' इति ॥

---

पाठा.—१ योऽर्थी धीमान्द्विजो । २ भृतकाध्ययनभृतकाध्यापनयोः ।

अत्राध्ययने वर्णोच्चारप्रकार उच्यते पाणिनीयशिक्षायाम्—'अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा। शास्त्रानुपूर्वं तद्विद्याद्यथोक्तं लोकवेदयोः॥ प्रसिद्धमपि शब्दार्थमविज्ञातमबुद्धिभिः। पुनर्व्यक्तीकरिष्यामि वाच उच्चारणे विधिम्॥ त्रिःषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः। प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयंभुवा॥ स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः। यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः॥ अनुस्वारो विसर्गश्च ≍क≍पौ चापि पराश्रितौ। दुःस्पृष्टश्चेति विज्ञेयो लृकारः प्लुत एव च॥१॥ आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया। मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥ मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्। प्रातःसवनयोगं तं छन्दो गायत्रमाश्रितम्॥ कण्ठे माध्यंदिनयुगं मध्यमं त्रैष्टुभानुगम्। तारं तार्तीयसवनं शीर्षण्यं जागतानुगम्॥ सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः। वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृतः॥ स्वरतः कालतः स्थानात्प्रयत्नानुप्रदानतः। इति वर्णविदः प्राहुर्निपुणं तन्निबोधत॥२॥ उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः। ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि॥ उदात्ते निषादगान्धारावनुदात्त ऋषभधैवतौ। स्वरितप्रभवा ह्येते षड्जमध्यमपञ्चमाः॥ अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च॥ ओभावश्च विवृत्तिश्च शषसा रेफ एव च। जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः॥ यद्योभावप्रसंधानमुकारादिपरं पदम्। स्वरान्तं तादृशं विद्याद्यदन्यद्व्यक्तमूष्मणः॥३॥ हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम्। औरस्यं तं विजानीयात्कण्ठ्यमाहुरसंयुतम्॥ कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू। स्युर्मूर्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः॥ जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः। एऐ तु कण्ठतालव्या ओऔ

कण्ठोष्ठजौ स्मृतौ ॥ अर्धमात्रा तु कण्ठ्या स्यादेकारैकारयोर्भवेत् । ओकारौकारयोर्मात्रा तयोर्विवृतसंवृतम् ॥ संवृतं मात्रिकं ज्ञेयं विवृतं तु द्विमात्रिकम् । घोषा वा संवृताः सर्वे अघोषा विवृताः स्मृताः ॥ ४ ॥ स्वराणामूष्मणां चैव विवृतं करणं स्मृतम् । तेभ्योपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥ अनुस्वारयमानां च नासिका स्थानमुच्यते । अयोगवाहा विज्ञेया आश्रयस्थानभागिनः ॥ अलाबुवीणानिर्घोषो दन्त्यमूल्यस्वरानतु । अनुस्वारस्तु कर्तव्यो नित्यं होः शषसेषु च ॥ अनुस्वारे विवृत्त्यां तु विरामे चाक्षरद्वये । द्विरोष्ठ्यौ तु विगृह्णीयाद्यत्रौकारवकारयोः । व्याघ्री यथा हरेत्पुत्रान्दंष्ट्राभ्यां न च पीडयेत् । भीता पतनभेदाभ्यां तद्वद्वर्णान्प्रयोजयेत् ॥५॥ यथा सौराष्ट्रिका नारी तक्रँ इत्यभिभाषते । एवं रङ्गाः प्रयोक्तव्याः खेअराँ इव खेदया ॥ रङ्गवर्णं प्रयुञ्जीरन्नो ग्रसेत्पूर्वमक्षरम् । दीर्घस्वरं विप्रयुञ्जीयात्पश्चान्नासिक्यमाचरेत् ॥ हृदये चैकमात्रस्त्वर्धमात्रस्तु मूर्धनि । नासिकायां तथार्धं च रङ्गस्यैवं द्विमात्रता ॥ हृदयादुत्करे तिष्ठन्कांस्येन समनुस्वरन् । मार्दवं च द्विमात्रं च जघन्वाँ इति निदर्शनम् ॥ मध्ये तु कम्पयेत्कम्पमुभौ पार्श्वौ समौ भवेत् । सरङ्गं कम्पयेत्कम्पं रथीवेति निदर्शनम् ॥ एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः । सम्यग्वर्णप्रयोगेन ब्रह्मलोके महीयते ॥ गीती शीघ्री शिरःकम्पी यथालिखितपाठकः । अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥ माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः । धैर्यं लयसमर्थं च षडेते पाठकागुणाः ॥ ६ ॥ शङ्कितं भीतमुद्घृष्टमव्यक्तमनुनासिकम् । काकस्वरं शिरसिगतं तथा स्थानविवर्जितम् ॥ उपांशु दष्टं त्वरितं निरस्तं विलम्बितं गद्गदितं प्रगीतम् । निष्पीडितं ग्रस्तपदाक्षरं च वदेन्न दीनं नतु सानुनास्यम् । प्रातः पठेन्नित्यमुरःस्थितेन स्वरेण शार्दूलरुतोपमेन । मध्यंदिने कण्ठगतेन चैव

चक्राह्वसंकूजितसंनिमेन । तारं तु विद्यात्सवनं तृतीयं शिरोगतं तच्च सदा प्रयोज्यम् । मयूरहंसान्यभृतस्वराणां तुल्येन नादेन
शिरःस्थितेन ॥ ७ ॥ अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलः स्मृताः । शेषाः स्पृष्टा हलः प्रोक्ता निबोधानुप्रदानतः । यमोनु-
नासिकानह्नौ नादिनो हझषः स्मृताः । ईषन्नादा यणो जश्च श्वासिनस्तु खफादयः । ईषच्छ्वासांश्चरो विद्याद्गोर्धामैतत्प्रचक्षते ।
दाक्षीपुत्रः पाणिनिना येनेदं व्यापितं भुवि ॥ छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते । ज्योतिषामयनं चक्षु-
र्निरुक्तं श्रोत्रमुच्यते ॥ शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् । तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥ ८ ॥ उदा-
त्तमाख्याति वृषोऽङ्गुलीनां प्रदेशिनीमूलनिविष्टमूर्धा । उपान्तमध्ये स्वरितं धृतं च कनिष्ठिकायामनुदात्तमेव ॥ उदात्तं प्रदेशिनीं
विद्यात्प्रचयं मध्यतोऽङ्गुलिम् । निहतं तु कनिष्ठिक्यां स्वरितोपकनिष्ठिकाम् ॥ अन्तोदात्तमाद्युदात्तमुदात्तमनुदात्तं नीचस्वरितम् ।
मध्योदात्तं स्वरितं द्व्युदात्तं त्र्युदात्तमिति नवपदशय्या ॥ अग्निः सोमः प्रवो वीर्यं हविषां स्वर्बृहस्पतिरिन्द्राबृहस्पती । अग्निरित्य-
न्तोदात्तं सोम इत्याद्युदात्तं प्रेत्युदात्तं वहत्यनुदात्तं वीर्यं नीचस्वरितम् ॥ हविषां मध्योदात्तं स्वरिति स्वरितम् । बृहस्पतिरिति
द्व्युदात्तमिन्द्राबृहस्पती इति त्र्युदात्तम् ॥ अनुदात्तो हृदि ज्ञेयो मूर्ध्न्युदात्त उदाहृतः । स्वरितः कर्णमूलीयः सर्वास्ये प्रचयः स्मृतः
॥ ९ ॥ चाषस्तु वदते मात्रां द्विमात्रं त्वेव वायसः । शिखी रौति त्रिमात्रं तु नकुलस्त्वर्धमात्रकम् ॥ कुतीर्थादागतं दग्धमपवर्णं
न भक्षितम् । न तस्य पाठे मोक्षोऽस्ति पापाहेरिव किल्बिषात् ॥ सुतीर्थादागतं व्यक्तं स्वाम्नाय्यं सुव्यवस्थितम् । सुस्वरेण सुवक्त्रेण
प्रयुक्तं ब्रह्म राजते ॥ मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः

स्वतोऽपराधात् ॥ अक्षरं हनायुष्यं विस्वरं व्याधिपीडितम् । अक्षता शस्त्ररूपेण वज्रं पतति मस्तके ॥ हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् । ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति ॥ हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम् । ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते ॥ १० ॥ शंकरः शांकरीं प्रादाद्दाक्षीपुत्राय धीमते । वाङ्मयेभ्यः समाहृत्य देवीं वाचमिति स्थितिः ॥ येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ येन धौता गिरः पुंसां विमलैः शब्दवारिभिः । तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥ अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः ॥ त्रिनयनमभिमुखनिःसृतामिमां य इह पठेत्प्रयतश्च सदा द्विजः । स भवति धनधान्यपशुपुत्रकीर्तिमानतुलं च सुखं समश्नुते दिवीति दिवीत्योम् ॥ अथ शिक्षामात्मोदात्तश्च हकारं स्वराणां यथागीत्यचोस्पृष्टोदात्तं चापस्तु शंकर एकादश ॥ इत्यध्यापकधर्माः ॥

अथानध्यायाः । तत्र कारिका—'अनध्यायान्स्मृतौ सिद्धान्परिहृत्य त्वधीयते' इति । आचार्योऽपि—'नाध्यापयेदनध्याये नाधीयीत च सत्तमः । द्विविधौ चाप्यनध्यायौ स्मृतौ वैदिकतान्त्रिकौ ॥ अष्टम्योश्च चतुर्दश्योः पंचदश्योश्च सूतके । शावे प्रतिपदोर्येन भवेत्तत्र महोत्सवे ॥ रोगे युद्धे विवादे च धूले पथि निशीथके । नाधीयीताशुचिश्चापि नाक्षातश्च न तन्द्रितः ॥ उपाकर्मणि चोत्सर्गे ग्रहणे चन्द्रसूर्ययोः । त्रिरात्रं स्यादनध्यायो मृते नृपगुरावपि ॥ फाल्गुन्यां पौर्णमास्यादि चैत्र्यां च त्र्यहमिष्यते । अनध्यायस्तथाषाढ्यां श्रावण्यां कार्तिके तथा ॥ तथैव मार्गशीर्षस्य पौर्णमास्यां न संचरेत् । अशन्याः पतने कंपे भूमेर्दाहे पुरस्य च ॥ मृगश्वसर्पमार्जारनकुलादेश्च दन्तिनः । अन्तरागमने चोष्ट्रखराणां च त्र्यहं स्मृतम् ॥ पताकातोरणादर्शरथयान-

जलाग्निनाम् । मूकोन्मत्तादिशूद्राणां चान्तरा गमने त्र्यहम् ॥ नारीणामपि सर्वासां गवां चैवान्तरागमे । अहोरात्रमनध्यायो गर्जने रात्रिसंभवे ॥ भूगर्जने च रात्रौ वाऽपररात्रे दिनं स्मृतम् । दिनं तूभयसंध्यायामनश्वानां चान्तरागमे ॥ पक्षिमण्डूकगोधासु नराणां चान्तरागमे । दिने दिवसशेषस्य रात्र्यां रात्र्याश्च तद्भवेत् ॥ श्वसृगालखरोष्ट्राणां श्रोत्रियागमनेऽध्वनि । आचार्यशिष्ययोर्मध्ये अन्तरालं त्यजेत्क्षितिम् ॥ ह्यरत्निमात्रं सञ्छिन्द्य आरान्नेदिष्ठकोऽथवा । तात्कालिको ह्यनध्यायस्ताम्बूलस्य च भक्षणे ॥ श्राद्धे निमन्त्रितो यस्तु भुक्त्वा नाध्ययनं चरेत् । करिष्यंश्च तथा विप्रः प्राग्विप्राणां विसर्जनात् ॥ एते प्रोक्तास्त्वनध्याया वैदिकास्तान्त्रिकास्तथा । प्रवर्तन्तेऽष्टमीद्वन्द्वैश्चतुर्दश्याश्च केवलैः ॥ विषुवद्वितये चैत्रमयनद्वितये तथा । न पठेत्पाठयेद्धीमान्पुराणान्यपि सत्तमः ॥ अष्टम्यां च चतुर्दश्यां यावदस्तमितो रविः । दिनशेषमनध्यायं वैदिकं परिकीर्तितम् ॥ तयोर्दिते दिवारात्रौ तत्कालश्रुदिते तयोः । प्रतिपद्यां च संक्रान्तौ तत्कालमखिलासु च ॥ नभोनभस्ययोः कृष्णे मासयोस्त्रिदिनं स्मृतम् । न सप्तम्यामधीयीत त्रयोदश्यां तथोभयोः ॥ सदा त्रयोदशी यावत्प्राङ्निशीथात्तिथिर्भवेत् । प्राक्तदह्नोऽपराह्णान्तादधीयीत न च द्विजः । सप्तम्यां च त्रयोदश्यामर्धरात्र्यूननाडिका । प्रदोषमत्र कुर्वीत तृतीया नवनाडिका ॥ अष्टम्यां च चतुर्दश्यां प्रतिपद्यां च वर्जयेत् । धर्मशास्त्रं पुराणं च शास्त्रं तात्कालिकं बुधः ॥ विमिश्रितासु कुर्वीत सप्तम्यादिषु यत्नतः । पुराणाभ्यसनादीनि पञ्चदश्योश्च वा न वा ॥ अमावास्याप्रतिपदोर्न स्मर्तव्यं कदाचन । नान्तरागमने दोषः पुराणादिषु विद्यते । न शस्यते च तत्काले धृतं प्राश्याथवाऽभ्यसेत्' इति । स्मृतिचन्द्रिकायां तु—'नीयमानं शवं दृष्ट्वा महीस्थं वा द्विजोत्तमः । अकालगर्जनादौ च पर्वस्वाशौचकादिषु ॥ अनध्यायं बुधः

कुर्यादुपरागादिकेष्वपि' इति । हारीतोपि—'प्रतिपत्सु चतुर्दश्योरष्टम्यां पर्वणोर्द्वयोः । श्वोनध्याये च शर्वर्यां नाधीयीत कदाचन' । स्मृत्यन्तरे—'प्रदोषे तु त्रयोदश्यां नाध्येयं प्रतिपत्स्वपि' इति ॥ ❀ ॥ अथ प्रदोषनिर्णयः—'षष्ठी च द्वादशी चैव अर्धरात्रून्ननाडिका । प्रदोषे नत्वधीयीत तृतीया नवनाडिका' । अर्धरात्रोननाडिका अर्धरात्राद्धटिकयैकयोनेत्यर्थः । अत्र नैमित्तिकप्रदोषमाहापस्तम्बः—'श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीते'ति । प्रदोषः पूर्वरात्रः । तथाच गर्गः—'अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा । यावन्मासे पूर्वरात्रे नाधीयीत कदाचन' इति । नारदः—'अयने विषुवे चैव शयने बोधने हरेः । अनध्यायस्तु कर्तव्यो मन्वादिषु युगादिषु' इति ॥❀॥ मन्वादयो मत्स्यपुराणेऽभिहिताः—'आश्वयुक्शुक्लनवमी कार्तिकी द्वादशी सिता । तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥ फाल्गुनस्य त्वमावास्या पौषस्यैकादशी सिता । आषाढस्यापि दशमी माघमासस्य सप्तमी ॥ श्रावणस्याष्टमी कृष्णा आषाढस्यापि पूर्णिमा । कार्तिकी फाल्गुनी चैत्री ज्यैष्ठे पञ्चदशी सिता । मन्वन्तरादयश्चैते दत्तस्याक्षयकारकाः' ॥❀॥ युगादयो विष्णुपुराणे दर्शिताः—'वैशाखमासस्य सिता तृतीया नवम्यसौ कार्तिकशुक्लपक्षे । नभस्यमासस्य च कृष्णपक्षे त्रयोदशी पञ्चदशी च माघे ॥ उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम् । अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिषु ॥ मार्गशीर्षे तथा पौषे माघमासे तथैव च । फाल्गुने मासि राजेन्द्र कृष्णपक्षे च सप्तमी ॥ अष्टमी नवमी चैव ज्ञेयास्तिस्रोऽष्टका इति' । गौतमस्तु—'कार्तिकीफाल्गुन्याषाढीपौर्णमासीतितिस्रोऽष्टकास्तत्र त्रिरात्रम्' इति । मत्स्यपुराणे—'मेधाकामस्त्रयोदश्यां सप्तम्यां च विशेषतः । चतुर्थ्यां च प्रदोषेषु न स्मरेन्न च कीर्तयेत्' ॥❀॥ खण्डतिथिविषये निर्णय

संस्कारप्र०
अनध्या०

उच्यते स्मृतिरत्नावल्याम्—'चतुर्दश्यां यदा पर्व प्रागस्ताद्दृश्यते रवेः । अनध्यायं प्रकुर्वीत त्रयोदश्यां तु धर्मवित् ॥ असितथे-दनध्यायस्तत्राप्येके न कुर्वते । संदेहेपि त्वनध्यायं मन्यन्ते च द्विजोत्तमाः' इति ॥ तत्प्रमाणमुक्तं स्मृतिसारे—'उदयेऽस्तमये वापि मुहूर्तत्रयगामि यत् । तद्दिनं तदहोरात्रमनध्यायं विदुर्बुधाः' इति ॥ ❀ ॥ नैमित्तिकानध्यायानाह मनुः—'विद्युत्स्तनितवर्षेषु महोल्कानां च संप्लवे । आकालिकमनध्यायमेतेषु मनुरब्रवीत्' ॥ स्तनितं मेघगर्जितम् ॥ स्मृतिरत्नावल्यां तु—'अनूराधर्क्षमारभ्य षोडशर्क्षेषु भास्करः । यावच्चरति वै तावदकालं मुनयो विदुः ॥ कालवृष्टौ तु तत्कालमकालेषु त्रिरात्रकम् । अतिमात्राथवा वृष्टि-र्नाधीयीत दिनत्रयम् । तयोस्तु द्विदिनं चैव वृष्टिमात्रे दिनं स्मृतम् ॥ मेषे च वृषभे चैव तृणाग्राच्च्यवते जलम् । अत ऊर्ध्वं द्वि-पादे तु तृणप्रच्यवनं स्मृतम् ॥ एतदाकालिकं विद्याच्छेषं तात्कालिकं विदुः' । तृणप्रच्यवनं तृणप्रवाहः । उल्कायां चाकालि-कमेव । तथाचापस्तम्बः—'उल्कायामभ्युत्पाते च सर्वासां विद्यानामाकालिकम्' इति ॥ मनुः—'चोरैरुपप्लुते ग्रामे संभ्रमे चाप्य-कालिके । आकालिकमनध्यायं विद्यात्सर्वाद्भुतेषु च' ॥ अद्भुतेषु रुधिरादिवृष्टिष्विति यावत् ॥ ❀ ॥ तथाच वसिष्ठः—उपलरुधिरपांसु-वर्षेष्वाकालिकम्' इति ॥ यदा तु विद्युदादित्रयं युगपदुत्पद्यते तदा त्र्यहमनध्यायमाह गौतमः—'वर्षविद्युत्स्तनयित्नुसंनिपाते त्र्यहमनध्यायः' ॥ स्मृत्यन्तरेपि—'विद्युद्गर्जितवृष्टीनां संनिपातो यदा भवेत् । कालवृष्टौ च तत्कालमकाले तु त्रिरात्रकम्' इति । आपस्तम्बोपि—'विद्युत्स्तनयित्नूनां वृष्टेश्च संनिपाते त्र्यहमनध्यायः' । भरद्वाजोऽपि—'अभ्युत्पाते च वर्षे च ग्रामेऽनध्ययनं भवेत् । आकालिकं त्रिरात्रं तु सविद्युत्स्तनयित्नुके ॥ प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिस्वने । सज्योतिः स्यादनध्यायः शेषे

रात्रौ यथा दिवा'। प्रातःसंध्यायां निमित्तोत्पादे सज्योतिर्यावच्चावदेवानध्यायः। अपरस्यां तु यावन्नक्षत्राणि तावदेव। शेषे इतर-रात्रौ यथा दिवानध्यायस्तथा रात्रावपीत्यर्थः॥ हारीतस्तु—'सायंसंध्यास्तनिते रात्रौ नाधीयीरन् प्रातःसंध्यास्तनिते त्वहोरात्रम्' इति। मनुः—'निर्घाते भूमिचलने ज्योतिषां चोपसर्जने। एतानाकालिकान्विद्यादनध्यायानृतावपि॥ निर्घात आन्तरालिको ध्वनिविशेषः। ज्योतिषां चोपसर्जनं चन्द्रसूर्ययोः परिवेषः। आपस्तम्बोपि—'संध्यागर्जितनिर्घातभूकम्पोल्कानिपातने। समाप्य वेदं द्युनिशमहोरात्रं ततः पठेत्'। द्युनिशमहोरात्रम्। मनुः—'प्रतिगृह्य द्विजो वेदानेकोद्दिष्टस्य केतनम्। त्र्यहं तु वर्जयेद्ब्रह्म राहो राज्ञश्च सूतके'। केतनं निमन्त्रणम्। शङ्खोपि—'राहुदर्शने शक्रध्वजपतने आचार्यपतने त्रिरात्रम्'इति। वसिष्ठोपि—'आ-चार्यशिष्यपुत्रभार्यास्वहोरात्रमृत्विग्बन्धुषु च'इति। एतेषु मृतेष्वित्यर्थः। कूर्मपुराणेपि—'समानविद्ये तु मृते तथा सब्रह्मचारिणि। आचार्ये संस्थिते वापि त्रिरात्रं क्षपणं स्मृतम्'। याज्ञवल्क्यः—'त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु। उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये तथा॥ संध्यागर्जितनिर्घातभूकम्पोल्कानिपातने। समाप्य वेदं द्युनिशमारण्यकमधीत्य च॥ पशुमण्डूकनकुला-श्वाहिमार्जारमूषकैः। कृतान्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये' इति॥❀॥ अत्र पशुमण्डूकादीनां योपिदन्तरागमने प्रायश्चित्त-विशेष उक्तो पराशरप्रायश्चित्तकाण्डे यमेन—'सर्पस्य नकुलस्याथ अजामार्जारयोस्तथा। मूषकस्य तथोष्ट्रस्य मण्डूकस्य च यो-षितः॥ कुक्कुटस्य शुनोऽश्वस्य खरस्य च। अन्तरागमने सद्यः प्रायश्चित्तमिदं शृणु॥ त्रिरात्रमुपवासश्च त्रिरात्रं चाभिषेच-नम्। ग्रामान्तरं वा गन्तव्यं जानुभ्यां नात्र संशयः' इति॥❀॥ अथ तात्कालिकाः—'शब्दोग्रगर्दभोलूकसामवीणादिनिस्वने।

अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ॥ देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे । भुक्त्वार्द्रपाणिरम्भोन्तरर्धरात्रेऽतिमारुते ॥ पांसुवर्षे दिशां दाहे संध्यानीहारभीतिषु । धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥ खरोष्ट्रयानहस्त्यश्वगृध्रोरोहिणके ध्वके । सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदुः' इति ॥ ❀ ॥ एवमुक्तानध्यायकालपठने दोष उक्तः कूर्मपुराणे—'छिद्राण्येतानि विप्राणां येऽनध्यायाः प्रकीर्तिताः । हिंसन्ति राक्षसास्तेषु तस्मादेतान्विवर्जयेत्' । स्मृतिसारेपि—'अनध्यायेष्वध्ययनं प्रज्ञामायुः प्रजां श्रियम् । ब्रह्मबीजं स्वकं तेजो निकृन्तति यमः स्वयम्' इति । इत्यनध्यायाः ॥ ❀ ॥ अथानध्यायापवादः । तत्र मनुः—'वेदोपाकरणे चैव स्वाध्याये चैव नैत्यके । न निरोधस्त्वनध्यायो होमतन्त्रजपेषु च' । वेदोपाकरणानि अङ्गानि । स्मृतिरत्नावल्याम्—'अल्पं जपेदनध्याये पर्वण्यल्पतरं जपेत् । नित्ये जपे तथाङ्गे च क्रतौ पारायणेऽपि च ॥ नानध्यायोऽस्ति वेदानां ग्रहणे ग्राहणे स्मृतः । देवतार्चनमन्त्राणां नानध्यायः स्मृतस्तथा ॥ नानध्याये जपेद्वेदान्रुद्रांश्चैव विशेषतः । पौरुषं पावमानं च गृहीतनियमाद्दते' इति । स्मृत्यर्थसारे—'चतुर्दश्यष्टमीपर्वप्रतिपद्वर्जितेषु तु । वेदाङ्गन्यायमीमांसाधर्मशास्त्राणि चाभ्यसेत्' । धर्मोद्योते—'सौराणां रुद्रमन्त्राणां पैतृकाणां च नैत्यके । जपहोमादिकार्येषु नानध्यायो न काम्यके' । कूर्मपुराणेपि—'नैत्यके नास्त्यनध्यायः संध्योपासन एव च । उपाकर्मणि चोत्सर्गे होममन्त्रेषु चैव हि ॥ एकामृचमथैकां वा यजुः सामाथवा पुनः । अष्टकास्वप्यधीयीत मारुते चातिवायति ॥ अनध्यायश्च नाङ्गेषु नेतिहासपुराणयोः । न धर्मशास्त्रेष्वन्येषु सर्वाण्येतानि वर्जयेत् ॥ एष धर्मः समासेन कीर्तितो ब्रह्मचारिणाम् । ब्रह्मणाभिहितः पूर्वमृषीणां भावितात्मनाम् ॥ अधीयीत सदाकालं ब्रह्मविद्यां समाहितः ।

गायित्री शतरुद्रीयं वेदान्तांश्च विशेषतः ॥ अभ्यसेत्सततं युक्तो भस्मस्नानपरायणः' इत्यनध्यायापवादः ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे अनध्यायविधिप्रकरणम् ॥

अथोत्सर्जनप्रकरणम् । नमस्तस्मै नृसिंहाय यत्परिग्रहभूः पुमान् । जगद्गृहीतः संत्यक्तो यदुत्सर्जनभूः पुनः ॥ अथेदानीमध्ययनोत्सर्जनविधिरभिधीयते । तत्र कारिका—'अध्यायोत्सर्जनं माघ्यां पौर्णमास्यां विधीयते । ग्रामाद्बहिर्विविक्ते स्यादुपलेपादि पूर्ववत् ॥ गृह्यपकं समीपेऽग्नेर्निधायाज्यमधिश्रयेत् । संस्कार्यं सक्तुवचान्नं शान्तिकर्मणि चात्र च । नवाज्याहुतिपर्यन्तमुपाकरणवद्भवेत् । जुहोति गृह्यसिद्धान्नमुपाकरणवत्ततः ॥ अन्नेन स्विष्टकृद्धोमो न स्तः प्राशनमार्जने । वेदाद्यारम्भणं कृत्वा शिष्टं कर्म समापयेत् ॥ अथ तीरमपां गत्वा स्नात्वाचम्य यथाविधि । सावित्र्याद्या नवाभ्याद्या देवतास्तर्पयेदथ ॥ सावित्रीं तर्पयाम्यग्निं तर्पयामीति तर्पयेत् । जयन्तस्त्वग्निमीळादिमन्त्रैस्तर्पणमब्रवीत् ॥ ब्रह्मयज्ञाङ्गमुक्तं यत्तर्पणं स्यादिहापि च । अत आरभ्य षण्मासान्षडङ्गानि त्वधीयते । शुक्ले वेदमधीयानः कृष्णेऽङ्गानीति केचन । कर्मद्वयमिदं केचिल्लौकिकाग्नौ प्रकुर्वते' इति । इदमत्र गृह्यम्—'मध्यमाष्टकायामेताभ्यो देवताभ्योऽन्नेन हुत्वा सौविष्टकृतं हुत्वापोऽभ्यवयन्त्येता एव देवतास्तर्पयन्त्याचार्यानृषीन्पितृंश्चैतदुत्सर्जनम्' इति । अस्यार्थः—मध्यमाष्टकाग्रहणं षण्मासोपलक्षणार्थम् । तेन तस्याः समीपे माघ्यां पौर्णमास्यामित्यर्थः । शास्त्रान्तरे चैव दृश्यते एताभ्यो हुत्वा सावित्र्यादिभ्य आज्यमिति अग्निमीळादिभ्योऽन्नेन हुत्वा । स्थालीपाकग्रहणमकृत्वाऽन्नेनेति यदब्रवीत् तेन गृह्यसिद्धान्नं प्राप्तमिति दर्शयति । ततः स्विष्टकृत्ततो वेदारम्भणं ततो होमशेषं समाप्य अपोऽभ्यवयन्ति । अवगाहन्त इत्यर्थः । एता एव देवता

इत्यादि । स्नात्वा सावित्र्याद्या नव अभ्याद्याश्च विंशतिर्देवतास्तर्पयन्तीत्यर्थः । ऋग्देवता आदिश्य तर्पयेयुः । द्वितीयान्तं तर्पयामीत्येकोनत्रिंशद्वाभ्यानि कृत्वा तर्पयेयुः । आचार्यानित्यादि । यच्च ब्रह्मयज्ञाङ्गं तर्पणमुक्तं तदङ्गत्वेनापि कार्यमित्यर्थः । चशब्दो देवतातर्पणसमुच्चयार्थः । तेन प्रजापत्याद्या अपि तर्प्याः । देवतास्तर्पयतीत्यत्र देवताग्रहणमत्रापि तर्पणार्थम् । क्रमश्च तत्रैवोक्तः । एतदुत्सर्जनमित्यस्यैवं संज्ञा । ततः षण्मासान्षडङ्गान्यधीयीत । षण्मासानधीयीतेत्यारभ्य एवमन्ता धर्मग्रहणाध्ययन एवेत्याहुरेके । अन्येऽविशेषेणेत्याहुरिति ॥ अत्र स्मृतिरूपेणाहाचार्यः—'समाप्य पौर्णमास्यां तु छन्दांस्युत्सृज्य शास्त्रवित्। अङ्गानि धर्मशास्त्राणि पुराणानि समभ्यसेत्' इति ॥ अत्र भगवान्—'पौर्णमासी तु या माघी तस्यामुत्सर्जनं भवेत् । तत्र ग्रामाद्बहिर्भूते शुचौ देशे मनोरमे ॥ विविक्ते स्थण्डिलं कृत्वा तत्रोल्लेखनपूर्वकम् । पुरस्तन्त्रं विधायाज्यसंस्कारान्तं यथाविधि ॥ पश्चादन्नं गृहे पक्वं पृथक्कृत्वान्यभाजने । तत्र समावधित्रिस्य तनस्त्वमभिघार्य च ॥ उत्तरत्रावतार्याग्नेः पुनरप्यभिघार्य च । प्रत्यगग्नेर्निधायाज्यभाजनस्य समीपतः ॥ ततः परिध्याधानादि तन्त्रशेषं समाचरेत् । कृत्वोपाकर्मवदिहाप्याज्यभागावविस्मरन् । सावित्र्यादिनवभ्यश्च विधायाज्याहुतीर्नव ॥ ततोऽग्निं जुहुयादग्निभिरग्निमीळे पुरोहितम् । इत्याद्याभिरुपाकर्मविहिताभिर्यथाक्रमम् ॥ तर्पयित्वाथ पित्रादीन्पितॄनपि च तर्पयेत् । स्वयं च कुर्याच्छिष्यांश्च कारयेत्तर्पणं त्विदम् । इत्युत्सर्जननामेदं कर्माचार्यसमीरितम्' इति ॥ अत्राध्ययनविषये आह मनुः—'अतः परं तु छन्दांसि शुक्लेषु नियतः पठेत् । वेदाङ्गानि रहस्यं च कृष्णपक्षेषु संपठेत्' । कूर्मपुराणेपि—'छन्दांस्यूर्ध्वं रहस्यं च शुक्लपक्षेषु वै द्विजः । वेदाङ्गानि पुराणानि कृष्णपक्षेषु मानवः' इति । यत्तु मनुराह—'पौषे तु

छन्दगां कुर्याद्बहिरुत्सर्जनं द्विजः । माघमासस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि' इति । याज्ञवल्क्योपि—'पौषमासस्य रोहिण्यामष्टकायामथापि वा । जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्द्विजः' । तदेतच्छाखान्तरविषयम् । आश्वलायनानां स्वगृह्ये षण्मासान्तं विहितत्वात् ॥ ❀॥ उक्तकालालाभेऽनुकल्पकालमाह स्मृतिसारसमुच्चयकारः—'उत्सर्जनं पौषमासे उपाकर्मदिनेपि वा' इति ॥❀॥ उत्सर्जने पर्जन्यसूक्तजपविचारः—'अत्र केचित्पर्जन्यजपं कुर्वन्ति तदनुपपन्नम् । उत्सर्जनाङ्गत्वेन तथा वचनादर्शनात् । वेदानुत्सृज्य उपाकर्मविना वेदोच्चारणस्यानधिकाराच्च । तर्हि—'समाप्य पौर्णमास्यां तु छन्दांस्युत्सृज्य शास्त्रवित् । अङ्गानि धर्मशास्त्राणि पुराणानि समभ्यसेत्' । इत्याचार्यवचनेनार्थादुत्सर्जनोपाकर्मणोर्मध्ये षण्मासपर्यन्तमनध्यायत्वेन स्वाध्यायपठनस्य निषेधावगमात् । तर्हि संध्यावन्दनादौ वेदमन्त्रोच्चारणेऽप्यनधिकारः स्यादितिचेत् । न । अनध्यायेपि नित्यकर्मोक्तमन्त्रपठनस्य निषेधाभावात् । तथाचोक्तं मनुना—'वेदोपकरणे चैव स्वाध्याये चैव नैत्यके । न विरोधोऽस्त्यनध्याये होममन्त्रजपेषु च' इति । वेदोपकरणानि वेदाङ्गानि । अस्तुनाम नित्यकर्मणामनुज्ञातत्वादावश्यकत्वेन कर्तव्यश्राद्धादिनिमित्तककर्मसु । उपद्रवपरिहारत्वेन कर्तव्यराक्षोघ्नेष्ट्यादिकाम्यकर्मसु वेदमन्त्रोच्चारणे नाधिकारः स्यादितिचेन्न । तेषु कर्मसु शास्त्रपूर्वकत्वेन वेदमन्त्रोच्चारणाधिकारसिद्धेः । अत्र तु पर्जन्यजपे तथाविधशास्त्रादर्शनात्तन्न कर्तव्यमित्यलमतिप्रसङ्गेन ॥

अथोत्सर्जनप्रयोगः ॥ आचार्यः प्रागुक्तदिने उपाकर्मदिने वा पूर्वाह्णे ग्रामाद्बहिर्विविक्ते समे देशे शिष्यैः सह स्वासीनः प्राणानायम्य देशकालौ कथयित्वा । मम शिष्याणां चाधीतवेदानामाप्यायनद्वारा श्रीपरमेश्वरप्रीत्यर्थमधीतानां छन्दसामुत्सर्ज-

नाख्यं कर्म करिष्य इति संकल्प्य तदङ्गस्वस्तिवाचनं विधिवद्विदध्यात् । उपाकर्मदिने एवोत्सर्जनकरणपक्षे उत्सर्जनोपाकरणाख्ये कर्मणी करिष्य इति संकल्प्य तदङ्गस्वस्तिवाचनं विधाय ऋषीनर्चयेत् । तत्रायं क्रमः—द्वादशाङ्गुलप्रमाणकान्सप्त दर्भान्गृहीत्वा अग्रतश्चतुरङ्गुलं विहाय मध्ये एकाङ्गुलप्रमाणं प्रदक्षिणं ग्रन्थिं कृत्वा तत्कूर्चमैशानभागे शुद्धवस्त्रोपरि निधाय शिक्यादिभिः सह निवीतीभूत्वा तत्र गौतमादिसप्तऋषीनावाह्य षोडशोपचारैरभ्यर्च्य तेषामर्घ्यं दद्यात् । तत उपवीती पूर्ववदुपलेपाद्यग्निप्रतिष्ठापनान्तं कर्म कृत्वा समिद्द्वयमादाय पुनर्देशकालौ निर्दिश्य अस्मिन्नुत्सर्जनहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये । अस्मिन्नन्वाहितेऽग्नावित्यादिचक्षुषी आज्येनेत्यन्तमुक्त्वा । सावित्रीं ब्रह्माणं श्रद्धां मेधां प्रज्ञां धारणां सदसस्पतिं अनुमतिं छन्दांस्यृषीनाज्येन । अग्निं अप्तूणसूर्यान् अग्निं शकुन्तं अग्निं मित्रावरुणौ अग्निं अपः अग्निं मरुतः अग्निं विश्वान्देवान् अग्निं इन्द्रासोमौ इन्द्रं अग्नामरुतः पवमानसोमं पवमानसोमं अग्निं संज्ञानं एताश्चरुद्रव्येण । शेषेणस्विष्टकृतमित्यादिसद्योयक्ष्य इत्यन्तमुक्त्वा समिद्द्वयमग्नावाधायोद्देशत्यागौ कृत्वा परिसमूहनाद्याज्ये दर्भाग्रद्वयप्रक्षेपणान्तं कृत्वा सिद्धान्नमग्निसमीपे निधाय तेनैव सहाज्यं त्रिःपर्यग्निकृत्वाज्योद्वासनादिस्रुवसंमार्जनान्तं कृत्वान्नं पात्रान्तरे पृथक्कृत्याग्नावधिश्रित्य स्रुवेणाभिघार्योदगुद्वास्याज्यादक्षिणतो बर्हिष्यासाद्य पुनरभिघारणाद्याज्यभागान्तं कृत्वा । सावित्र्यैस्वाहा ब्रह्मणेस्वाहा श्रद्धायैस्वाहा मेधायैस्वाहा प्रज्ञायैस्वाहा धारणायैस्वाहा सदसस्पतयेस्वाहा अनुमतयेस्वाहा छन्दोभ्यऋषिभ्यःस्वाहा इति नवाहुतीराज्येन हुत्वा यथालिङ्गमुद्दिश्य त्यक्त्वा । अव-

पाठा०—१ उपलब्धेष्वखिलपारिजातकोशेष्वत्र कुसुमऋइति मन्त्रे सूर्यं अगस्त्य सूर्योनुष्टुप् सूर्यायेद इति, तथा योनः स्व इति मन्त्रे च विश्वेदेवस्थाने वर्माणं पायुर्वर्मानुष्टुप् वर्मणइद इति पाठ उपलभ्यते तथैव चाव्यवहितप्रथमन्तोपाकरणेपि तत्र सदसत्सद्भिरूहनीयम् ।

दानधर्मेण चरुमनदाय अभ्यादिर्विंशतिदेवताभ्यो जुहुयात्। तत्र मन्त्राः—अग्निमीळेमधुच्छन्दा अग्निर्गायत्री उत्सर्जनप्रधानचरु-होमेरि० ॥ कुशुम्भकस्तदगस्त्योऽमृणमूर्धाअनुष्टुप्। समग्नेगृत्समदोऽग्निर्जगती। आवदन् गृत्समदः शकुन्तो जगती। सोमस्समा-विश्वामित्रोऽग्निस्त्रिष्टुप्। गृणानाभार्गवो जमदग्निर्मित्रावरुणौ गायत्री। संह्यग्ने बार्हस्पत्यो भारद्वाजोग्निरष्टी। आमन्ते गौतमो वामदेव आपो जगती। अबोध्याग्नेयो बुधगविष्ठिरावग्निस्त्रिष्टुप्। गन्तान एवयामरुन्मारुतोतिजगती। संह्यग्नेबार्हस्पत्यो भरद्वा-जोऽग्निस्त्रिष्टुप्। यो नःस्वः पायुर्भारद्वाजो विश्वेदेवा अनुष्टुप्। अग्निनरो मैत्रावरुणिर्वसिष्ठोग्निर्विराट्। प्रतिचक्ष्वमैत्रावरुणिर्वसिष्ठइ-न्द्रासोमावनुष्टुप्। माचित्काण्वः प्रगाथ इन्द्रो बृहती। आग्नेयाहिकाण्वःसौभरिरग्निमरुतोऽनुष्टुप्। स्वादिष्ठयामधुच्छन्दाः पवमा-नःसोमो गायत्री। यत्रेराजन्मारीचः कश्यपः पवमानःसोमःपंक्तिः। अग्नेबृहद्वाप्यस्त्रितोग्निस्त्रिष्टुप्। समानीवः संवननः संज्ञा-नमनुष्टुप्। एतैर्विंशतिमन्त्रैर्हुत्वा स्विष्टकृतं हुत्वोदिश्य त्यक्त्वा सर्वैः सह प्रत्यगग्नेः प्रागग्रमास्तीर्णेषु दर्भेषूपविश्य शरावाद्युदकपात्रे दर्भान्निक्षिप्य दर्भगर्भमद्धाञ्जलिं कृत्वा पूर्वमोंकारं गायत्रीं पच्छोर्धर्चशोऽनवानमुच्चैः त्रिरुच्चरन् शिष्यानपि तथा वाचयित्वा अग्नि-मीळइतिसूक्तं। इषेत्वोर्जेत्वेति यजुरादिं। अग्नआयाहिवीतय इति सामादिं। शंनोदेवीरभिष्टय इत्यथर्वादिं। अग्निर्वैदेवानामिति ब्राह्म-णादिं। अथ महाव्रतं। एष पन्था एतत्कर्म। अथातः संहिताया उपनिषत्। विदामघवन्विदा महाव्रतस्य पंचविंशतिं सामिधेन्यः इति पञ्चारण्यकम्। अथैतस्य समाम्नायस्येति सूत्रम्। समाम्नायः समाम्नातः इति निरुक्तम्। मयरसतजभनलगसंमितं इति छन्दः। गौः ग्मा इति निघण्टुम्। पञ्चसंवत्सरमिति ज्योतिषम्। अथ शिक्षां प्रवक्ष्यामीति शिक्षाम्। वृद्धिरादैच् इति व्याकरणम्।

यदिन्द्रो दशरात्रे। योगीश्वरं याज्ञवल्क्यम्। नारायणं नमस्कृत्य। अथातो धर्मजिज्ञासेति पूर्वमीमांसासूत्रं। अथातो ब्रह्मजिज्ञासेत्युत्तरमीमांसासूत्रं च क्रमाद्धुवन्वाचयित्वा। तच्छंयोरावृणीमहे इत्यृचम्। नमोब्रह्मण इति परिधानीयां त्रिर्वाचयित्वा। अथाचार्यः शिष्यैः महोत्थाय संज्ञानमुशना वदत् ओमित्युक्त्वा उत्सृष्टा वै वेदाः इत्युचार्य पुनः शिष्यैः सहोपविश्य भूमिं स्पृष्ट्वा जलं संस्पृश्याग्निं गौतमादिमहर्ष्यांचार्यादींश्च नमस्कृत्य प्रायश्चित्तादिहोमशेषं समाप्योदकतीरं गत्वा स्नात्वाचम्य सावित्र्यादिदेवतास्तर्पयेत्। तत्रायं क्रमः—निवीतीभूत्वा सावित्रीं तर्पयामि ब्रह्माणं० श्रद्धां० मेधां० प्रज्ञां० धारणां० सदसस्पतिं० अनुमतिं० छन्दांस्यृषीन्० ॥ अग्निं तर्पयामि अप्नुणमूर्धानं० अग्निं० प्रकुन्तं० अग्निं० मित्रावरुणौ० अग्निं०अपः०अग्निं० मरुतः० अग्निं० विश्वान्देवान्० अग्निं० इन्द्राग्नोमौ० इन्द्रं० अग्रामरुतः० पवमानसोमं० पवमानसोमं० अग्निं० संज्ञानं० ॥ इति क्रमेण तर्पयित्वा ब्रह्मयमाज्ञदेवर्ष्याचार्यपितॄन्कृत्वासंतर्प्याचम्य कर्मेश्वरार्पणं कृत्वा वेदानुद्दिश्य ब्राह्मणान्भोजयेत् ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे उत्सर्जनप्रकरणम् ॥

महानाम्न्यादिव्रतत्रयप्रकरणम् ॥ नमो लक्ष्मीसनाथाय नरपञ्चाननात्मने। यस्यासीद्देवतासंघपालनं परमव्रतम् ॥ अथेदानीं महानाम्न्यादिव्रतत्रयविधिरभिधीयते। तत्राहाश्वलायनाचार्यः—'प्रथमं स्यान्महानाम्नी द्वितीयं स्यान्महाव्रतम्। तृतीयं स्यादुपनिषद्गोदानाख्यं ततः परम्। क्रिया व्रतानां कार्याः स्युर्यथाप्रोक्तं महा द्विजैः' इति। तत्र तावत्तिथिनिर्णय उच्यते श्रीधरीये नृसिंहेन—'तिथिनक्षत्रवारांशवर्गोदयनिरीक्षणम्। चौलवत्सर्वमाख्यातं सगोदानव्रतेषु च ॥ व्रतानां चरणं लेवं

कृत्वा स्नानं समाचरेत् । द्विजानां व्रतबन्धस्तु स्वाध्यायेषु प्रशस्यते ॥ रिक्ताविष्टिविवर्जेषु महानाम्निकमेव च । चूडाकर्मवदन्यस्य व्रतबन्धस्य कालिकम्' ॥ महानाम्निकमित्यनेन महाव्रतोपनिषद्व्रतगोदानव्रतानि गृह्यन्त इति । कारिका—'महानाम्न्यादि कर्तव्यं तत्तत्काले व्रतत्रयम् । उक्तकाले ददाम्यन्तं वापनाद्युपनीतिवत् ॥ नवां मौञ्जीं नवं दण्डं दद्यात्स्विष्टकृदाद्यथ । संवत्सरं चरेदेवं पूर्णेऽब्दे तूत्तरायणे ॥ शुक्लपक्षे बहिर्ग्रामाद्विविक्ते देशमेत्य च । पूर्णपात्रनिधानान्तमुपलेपादि पूर्ववत् ॥ स्वस्थालं भुक्तये तूष्णीं निरूप्य प्रोक्ष्य तत्र च । तिलानोप्य पचेत्पक्वमाचार्याय निवेदयेत् ॥ पृच्छति व्रतलोपांस्तु दत्ते प्रतिवचस्त्वथ । बहवो व्रतलोपाश्चे-त्पुनरावर्तयेद्व्रतम् ॥ लोपेऽप्यापत्प्रयुक्तेषु पुनरावर्तयेद्व्रतम् । तेनान्वारब्ध आचार्य इध्माधानादि पूर्ववत् ॥ हुत्वाऽऽज्यभावग्निरित्यादि मन्त्रैश्चर्ताहुतीरथ ॥ ततः स्विष्टकृतोऽर्चयेच्छेषं भूमौ निधाय च । एतमित्याद्यशानान्तमाह प्रैषमतः परम् ॥ भुक्तवन्तं तमाचान्तं जलपूर्णाञ्जलिं ततः । तं व्रतानां व्रतेत्यादि भुक्तवन्तं दिवाकरम् ॥ उपस्थाप्याथ कुर्वीत मीलिताक्षश्च वाग्यतः । त्रिःप्रदक्षिण-मावेष्ट्य वाससा समुखं शिरः ॥ उपलैकरात्रमित्यादि प्रैषं स्विष्टकृदाद्यथ । आवश्यकेभ्य इतरच्छयनासनभोजनम् ॥ अकुर्वन्नेक-रात्रं तु ब्रह्मचारी नयेदथ । परेशान्यां निधायास्याद्युदगग्रेस्तृणेषु तु ॥ ईशानाग्रेपूपविशेद्वीक्षमाणस्तु तां दिशम् ।—परः अन्यो ब्रह्मचारी अस्तादीत्यनादिग्रन्देनोदकपूर्णकमण्डल्वश्मवत्सतर्यौ गृह्यन्ते ।—शिष्योऽपि समुखं प्रक्षाल्याभ्याचार्यौ प्रदक्षिणम् । कृत्वा-चार्यस्य संगृह्य पादौ तेषु तृणेषु तु ॥ ईक्षमाणो दिशं प्रत्यग्दक्षिणामुपविश्य च । स्वेन पृष्ठेन तत्पृष्ठं संदधाति ततः परम् ॥ मनसा च महानाम्नीर्भोऽनुब्रूहीति वं गुरुम् । पृच्छेत्तदहरूत्पन्नान्व्रतलोपांस्ततो गुरुः ॥ स्वयं संमीलनं कुर्वन्महानाम्नीर्न्रचो गुरुः ।

निःपुरीषपदान्युक्त्वा तस्योष्णीषं विमोचयेत् ॥ ईक्षयेदर्कमीक्षन्तं मित्रस्येति द्वयेन तु । मसंभारा दिशो वीक्ष्य मित्रस्य त्व इतित्वथ ॥ मित्रस्येति तृतीयेन पुनरादित्यमीक्षयेत् । उक्त्वा चापइत्येत्यादि मन्त्रान्भूमिमुपस्पृशेत् ॥ अनुप्रवचनीयश्च कार्योऽयं भेद उच्यते । महानाम्नीभ्यः स्वाहेति साविघ्याः स्थान इष्यते ॥ महानाम्नीव्रतं प्रोक्तं महाव्रतमथोच्यते । पूर्ववद्व्रत आदिष्टे संवत्सरमिदं चरेत् ॥ पूर्णे संवत्सरे देशे विविक्त उपविश्य च । आचार्यः श्रावयेदेतन्महाव्रतमतः परम् ॥ अनुप्रवचनीयान्तं कुर्यादर्केक्षणादिकम् । महाव्रतायस्वाहेति साविघ्याः स्थान इष्यते ॥ पूर्ववद्व्रत आदिष्टे चरेदब्दमिदं व्रतम् । श्रावयित्वोपनिषदमादित्याद्येक्षणादिकम् ॥ अत्रोपनिषदेस्वाहा साविघ्याः स्थान इष्यते' इति ॥ इदमत्र गृह्यम्—'एतेन वापनादिपरिदानान्तं व्रतादेशनं व्याख्यातम्' इति । अस्यार्थः—व्रतादेशनं यदस्माभिर्व्याख्यातं संवत्सरान्तमं चारयित्वा व्रतमनुयुज्य इति संवत्सरमादिशेदिति च तत्राप्येतेन प्रकारेण वापनादि परिदानान्तं कर्म कार्यमित्यर्थः । वापनादिग्रहणमलंकारनिवृत्त्यर्थम् । काय त्वा परिददामीत्येतत्परिदानम् । परिदानान्तवचनमुपरितनतन्त्रनिवृत्त्यर्थम् । इदमत्र सूत्रम्—'एतद्विदं ब्रह्मचारिणमनिराकृतिनं संवत्सरावमं चारयित्वा व्रतमनुयुज्याशुक्रोशिने मनूथादुत्तरमहर्महानाम्नीरत्र उदगयने पूर्वपक्षे श्रोष्यन्वहिर्ग्रामात्स्थालीपाकं तिलमिश्रं श्रपयित्वाचार्याय वेदयीत विदिते व्रतसंशयान्पृष्ट्वा लघुमात्रावेदापरकारिताः स्युरन्यारब्धे जुहुयात् । अयाववमिश्वरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः । तस्मै जुहोमि हविषा घृतेन मादेवानां मोमुहद्भागधेयं मो अस्माकं मोमुहद्भागधेयं स्वाहा । या तिरश्ची निपद्यतेहं विधरणीइति । तां त्वा घृतस्य धारया यजे संराधनीमहं स्वाहा । यस्मै त्वा काम कामाय वयं सम्राड्यजामहे । तमस्मभ्यं कामं दत्वाथेदं त्वं घृतं पिब स्वाहा । अयं नो अग्नि-

वैरिंवः कृणोत्त्वयं मृधः पुर एतु प्रभिन्दन्। अयं शत्रूञ्जयतु जर्हृषाणोऽयं वाजं जयतु वाजसातौस्वाहा। अयंमुल्लैचानुमत्यैच स्वाहा। प्रद्रावेस्वाहा। व्याहृतिभिश्च पृथक्हुत्वाऽहैतं स्थालीपाकं सर्वमशानेति भुक्तवन्तमपामञ्जलिपूर्णमादित्यमुपस्थापयेत्। त्वं व्रतानां व्रतपतिरसि व्रतं चरिष्यामि तच्छकेयं तेन शकेयं तेन राध्यासमिति समाप्य संमील्य वाचं यच्छेत् कालममिसमीक्षमाणो यदा समेप्यादाचार्येणैकरात्रमध्यायोपपादनात्रिरात्रं वा नित्याध्यायेन तमेव कालममिसमीक्षमाण आचार्योऽहतेन वाससा त्रिःप्रदक्षिणं शिरः समुरं वेष्टयिताऽहैतं कालमेवंभूतोऽस्वपन्भवेति तं कालमस्वपन्नासीतानुवक्ष्यमाणोऽपराजितायां दिश्यग्निं प्रतिष्ठाप्यासिमुदकमण्डलुमश्मानमित्युत्तरतोऽग्नेः कृत्वा वत्सतरीं प्रत्यगुदगसंश्रवणे बध्वा पश्चादग्नेराचार्यस्तृणेपूपविशेदपराजितां दिशमभिसमीक्षमाणो ब्रह्मचारी लेपान्परिमृज्य प्रदक्षिणमग्निमाचार्यं च कृत्वोपसंगृह्य पश्चादाचार्यस्योपविशेत्तृणेष्वेव प्रत्यग्दक्षिणाममिसमीक्षमाणः पृष्ठेन पृष्ठं संधाय ब्रूयान्महानाम्नीर्भो अनुब्रूहीति पुनः स्पृष्ट्वानुक्रोशने संमील्यैवानुब्रूयात्सपुरीषपदाखिरन्त्योष्णीपमादित्यमीक्षयेन्मित्रस्य त्वा चक्षुषा प्रतीक्षे मित्रस्य त्वा चक्षुषा समीक्षे मित्रस्य त्वा चक्षुषानुवीक्ष इति दिशः ससम्भाराः पुनरादित्यं। मित्रस्य त्वा चक्षुषा प्रति पश्यामि योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तं चक्षुषोर्हैतीकेच्छत्विति भूमिमुपस्पृशेत्। अग्न इळो नमइळो नमऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो नमो वो अस्तु देवेभ्यः शिवा नः शंतमा भव सुमृळीका सरस्वती मा ते व्योम संदृशि। भद्रं कर्णेभिः शृणुयाम देवाः शं न इन्द्राग्नी भवतामवोभिः स्तुषे जनं सुव्रतं नव्यसीभिः कयानश्चित्र आभुवदिति तिस्रः स्योनापृथिविभवेति समाप्य ममानं संभारवर्जमेष द्वयोः स्वाध्यायधर्म आचार्यदेवकः फाल्गुनाद्याः श्रावणान्ता अनधीतपूर्वा-

णामध्यायस्तैष्याद्यधीतपूर्वाणामधीतपूर्वाणामिति ॥ अस्यार्थः—एतदिति । अग्रे यान्येतानि महाव्रतवर्जितानि तत्पर्यन्तान्यनुक्रान्तान्यहानि तानि मन्त्रब्राह्मणसूत्राध्ययनेन तदर्थज्ञानेन च विदित्वा तेषामह्नामेकाहाहीनसत्राणां सत्राभावं च यो वेद स एवैतद्विदित्युच्यते । ब्रह्मचारिग्रहणं यो ब्रह्मचारी विद्यां समाप्य स्नानं कर्तुं न शक्नोति पश्चाद्द्वादशपर्वाण्यध्ययनं कुर्वन्नपि न किंचिद्गृहीतुं शक्नोति तमपि ब्रह्मचारिणमनेतद्विदमपि एतानि व्रतानि ग्राहयित्वा एतान्वेदभागानध्याप्याश्रमं स्वसामर्थ्यानुगुणं प्रवेष्टुं शिक्षेतेत्येवमर्थम् । अनिराकृतिनमनुत्सृष्टाध्ययनं एवंविधं ब्रह्मचारिणं व्रतं ग्राहयित्वा संवत्सरावमकालं चारयित्वा तस्मै ब्रह्मचारिणेऽनुक्रोशिने सर्वभूतदयावते आत्मगुणयुक्ताय उत्तरमहर्महानाम्नीर्ब्रूयात् । प्रथमं ब्रूयादित्यर्थः । अहरधिकारे पुनरहर्ग्रहणस्येदं प्रयोजनं तदहर्विधायकं वेदभागानामर्थावगमपर्यन्तमनुष्ठानयोग्यं ग्राहयितव्यमिति । उत्तरमहरितिवचनात्पूर्वमहरधिकं दर्शितम् । उत्तरशब्दस्य पूर्वापेक्षत्वादेव प्राप्ते इदमहर्महानाम्नीरग्र इति महाव्रतानुवचनात्पूर्वं महानाम्नीभ्यो व्रतादेशनादिश्रावणान्तं कृत्वा अनन्तरसंवत्सरे महाव्रतं ग्राहयितव्यं ततोऽनन्तरे संवत्सरे उपनिषदिति क्रमः । महानाम्न्यो नाम ऋचः । उदगिति । उदगयने शुक्लपक्षे गुरुमुखान्महानाम्नीः श्रोष्यन् ब्रह्मचारी ग्रामाद्बहिर्निष्क्रम्य शुचौ देशे होष्यन्धर्मेण पार्वणीयेन विधानेन तिलमिश्रं स्थालीपाकं नवभ्यो देवताभ्यस्तूष्णीं निर्वापप्रोक्षणे कृत्वा श्रपयेत् । तत्र आचार्याय वेदयीत विज्ञापयेत् । विदिते शृतः स्थालीपाक इत्यवगते व्रतसंशयान्व्रतापराधान्पृच्छेत् । ते हि पृष्टाः लघुमात्रात्कारणात्प्रवृत्तिनिमित्तादापदा कारिताश्चेदप्रायश्चित्तिरित्यादिभिर्जुहुयात् । न प्रायश्चित्तान्तरं कर्तव्यम् । लघुमात्रानेदिति पाठे लघुमात्रा चेत् भवति व्रतापराध इत्यर्थः । अथचेत्कामकृता महान्तश्च व्रतापराधाः

गुरुक्रमाणं प्रशिक्षारणं बुद्धिपूर्वं वा करोत्यपराधान् तदनुरूपं प्रायश्चित्तं कारयित्वा पुनर्व्रतमादिश्य ततः संवत्सरे पूर्णे एव श्राव-येत्। विदितइति वचनं श्रुतः स्थालीपाक इति विदितएव व्रतसंशये प्रश्नप्रवृत्त्यर्थम्। अन्वासीनेन ब्रह्मचारिणान्वारब्ध आचार्यो जुहुयात्। अग्नावसिरित्येवमादिभिरेव पठितैर्मन्त्रैर्व्याहृतिभिश्च। पृथगिति समस्तव्याहृतिनिवृत्त्यर्थम्। हुत्वेतिवचनमेतैर्मन्त्रैर्हुत्वा स्विष्टकृतेऽवदाय तमहुत्वैव निधाय ब्रूयात्संप्रैषमित्येवमर्थम्। एतं स्थालीपाकं सर्वमशानेत्ययं संप्रैषः। अशान भुंक्ष्वेत्यर्थः। ततश्शेषं सर्वमश्नीयात् ब्रह्मचारी। भुक्तवन्तमिति वचनान्न केवलमशने संप्रैष एव किंत्वशनमपि कर्तव्यमेवेत्येवमर्थम्। उपस्थापयेदिति उपतिष्ठस्वादित्यमिति ब्रूयादित्यर्थम्। ततो ब्रह्मचार्यद्भिः पूर्णाञ्जलिर्मन्त्रेणादित्यमुपतिष्ठेत्। समाप्यवचमुप-स्थानमन्त्रं समाप्यानन्तरमक्षिणी संमील्य वाचं यच्छेत् न कालविक्षेपं कुर्यादित्येवमर्थम्। वाग्यमनं कुर्वन्नस्मिन्नेव काले आचार्येण सह समवायीभवेत् तं कालं मनसा ध्यायन्वाग्यमनं कुर्यात्। अयं काल इत्याह एकरात्रमिति। एकरात्रं कालमेवासीत। तदनन्तरे दिवसे आचार्येणसह समवायं गमिष्यामीति ध्यायेत्। कुतः। अध्यायोपपादनात्। अध्यायः स्वाध्यायः महानाम्नीमन्त्र इत्यर्थः। तस्योपपादनात्। उपपादनं अन्यमुपेत्य तस्य स्वाध्यायस्य पादनं शिष्यमुपादायाध्यापनमित्यर्थः। एतदुक्तं भवति—एकरात्राध्यायेन महानाम्नीरध्येतुं शक्नोति स एकरात्रमध्ययनाद्वाग्यमनं कुर्यादिति। त्रिरात्रं वा नित्याध्यायेन त्रिरात्रं चैवमासीत। यो नित्या-ध्यायेनाध्येतुं शक्नोति आध्यायोऽध्ययनं नित्यं संततं वा। एतदुक्तं भवति—यो बहुभिरेवाहोभिरध्येतुं शक्नोति स त्रिरात्रमेवा-सित्वा चतुर्थेऽहन्याचार्येण समवायं गच्छेदित्यर्थः। यः कालो ब्रह्मचारिणा संकल्पितस्तमेव कालं प्रतिपद्यमान आचार्योऽहतेन

वाससा ब्रह्मचारिणः शिरो मुखेन सहितं त्रिःप्रदक्षिणं वेष्टयित्वा बद्ध्वा यथा न तद्वासः पतति तथोपायं कृत्वा ब्रूयात् । एतं कालमिति संकल्पितप्रदर्शनार्थत्वात् एकरात्रकालमेवंभूतोऽस्वपन् त्रिरात्रकालमिति वेति तं कालमस्वपन्नासीत । यः संकल्पितकाल स्तस्मिन्काले सर्वदा अस्वपन्भवेद्ब्रह्मचारी । ततो गुरुः स्विष्टकृदादिहोमशेषं समापयेत् । अनुवक्ष्यमाणः बद्ध्वा आचार्याय वेदयी- तेति शेषः । एकरात्रपक्षे द्वितीये त्रिरात्रपक्षे चतुर्थे दिवसे आचार्येऽनुवक्ष्यति सति बहिर्ग्रामादपराजितायां दिशि शुचौ देशे शि- ष्यस्य ब्रह्मचारी उल्लेखनादि कृत्वाग्निं प्रतिष्ठाप्य तस्योत्तरतोऽश्मादीन्निधाय तस्यैव प्रत्यगुदग्यो देशस्तस्मिन्वत्सतरीं बध्वा । अस्रंश्र- वण इति यस्मिन्देशे महानाम्न्याः शब्दं सम्यक् शृणोति वत्सतरीं तस्मिन्नेव बध्नीयादित्यर्थः । एतावत्कर्म ब्रह्मचारी कश्चित्करोति । एतावति कृते आचार्याय वेदयीत । तत आचार्योऽग्नेः पश्चात्प्रागग्रेषु तृणेषु तां दिशमभिमुखं समीक्षमाणः सन्नुपविशेदिति । ब्रह्म- चारी ईक्षमाणः ब्रह्मचारी मुखमनान्शरीरगवांश्च लेपान्शोधयित्वा अग्निमाचार्यं च प्रदक्षिणीकृत्य गुरुमभिवाद्य तस्य पृष्ठतस्तस्यै- वासनदर्भाणां मूलेष्वेव नैर्ऋतीं दिशमभिमुखीक्षमाण उपविशेत् । पृष्ठेन पृष्ठं संधाय ब्रूयान्महानाम्नीर्भो अनुब्रूहीति । पृष्ठं नाम शरीरस्य बहिःप्रदेशः । ब्रह्मचारी स्वपृष्ठदेशेन आचार्यस्य पृष्ठदेशं संधाय मनसैव मन्त्रं ब्रूयात् महानाम्नीर्भो अनुब्रूहीति । पुनः—पदाविः । तस्मिन्नपि काले आचार्यः पुनर्व्रतसंशयान्पृष्ट्वाऽनुक्रोशिनेऽनुतापिने श्रद्दधानाय संमील्यैवाक्षिणी अनुब्रूयात् । सपुरीषपदाः पुरीषपदैः एवाहेवैवाद्याग्ने इत्यादिभिर्नवपदैः सहिता महानाम्नीर्विदामघवन्विदागातुमित्येवमाद्यास्तृतीयारण्यक- स्यान्ते समाम्नाताः पुनर्नवर्चः नवपुरीषपदान्विताः सर्वास्त्रिरनूच्य। अथ शिष्यस्योष्णीषं विमुञ्चेदित्यर्थः । व्रतलोपे पूर्ववत्प्रायश्चित्तं

कारयितव्यम् । आदि—समीक्षे । समीक्षे इत्यत्र इतिकाराध्याहारेण सूत्रच्छेदः । तथाचाभ्यां मन्त्राभ्यां ब्रह्मचारिणमीक्षयेदित्यर्थः । गतश्च शिष्यत्वयः । गुरुरादित्यमुपतिष्ठस्व आदित्यमीक्षस्व सर्वमशानेत्यादित्रैपं ब्रूयात् । मित्र—भाराः। असिप्रभृतिसंभारैः सहिता दिशः ससंभाराः । मित्रस्येत्यनेन मन्त्रेण ब्रह्मचारी ईक्षेत । पुनः—ऋच्छति । गुरुणा पुनरादित्यमीक्षस्वेत्युक्ते मित्रस्यत्वा चक्षुपेत्यनेन मन्त्रेण पुनरादित्यमीक्षेत ब्रह्मचारीत्यर्थः । किमिमे मन्त्राः आचार्यस्य उत शिष्यस्य उतोभयोरित्याशङ्क्याह । 'ईक्षणेके दिशां मन्त्रा ब्रह्मचारिण एव लिं'ति । भूमिं वेति गतः । समा—वर्जं । यदिदं महानाम्न्यध्ययनं सविधिकमुक्तं तत्समाप्योत्तरयोरपि महाव्रतोपनिषदाख्ययोर्व्रतमनुयुज्य श्रावणान्तरं महानाम्नीव्रतेन समानरूपं कर्तव्यम् । अयमेतयोर्विशेषः पूर्वस्मात् संभारवर्जमिति । संभारो नाम श्रोष्यन्बहिर्ग्रामादित्यारभ्य मित्रस्यत्वा चक्षुपेत्येवमन्तं तद्वर्जयित्वेत्यर्थः । एतदुक्तं भवति—महाव्रतोपनिषदाख्ययोर्व्रतमनुयुज्य संवत्सरादूर्ध्वमुदगयने पूर्वपक्षे ग्रामाद्बहिर्गत्वा श्रवणान्तमेव कर्तव्यं नान्यद्धोमादीति । एष धर्मः एषएव महाव्रतोपनिषद्व्रतयोर्वेदभागयोरध्ययनविधिः । व्रतमनुयुज्य संवत्सरावमं चारयित्वोदगयने पूर्वपक्षे ग्रामाद्बहिर्गत्वाचार्यसकाशात्त्रिः श्रुत्वानुप्रवचनीयं च कृत्वा ततोऽध्ययनं कर्तव्यमिति । एतदनयोरध्ययने संपादनीयमित्यर्थः । आचार्य—यदेकः । अयमपि विशेषो महाव्रतोपनिषदोरध्ययने भवति । यद्येकोऽधीयीत शिष्यस्तदाचार्यस्तद्धूत्वाधीयत । यथाचार्योऽपराजितां दिशमभिसमीक्षमाणो ब्रूयात् । एवमेकश्चेच्छिष्यस्तामेव दिशमभिमुखोऽधीयीत । यदि द्वौ बहवो वा तदा नायं नियम आदरणीयः । अतएवैतच्चापत्ते एको द्वौ बहवो वाधीयीरन्निति । अध्ययन एवायं नियमः श्रवणे लेकदेश एव । व्रतादेशनादेरनुप्रवचनीयान्तस्य संस्कारस्य तन्त्रसिद्धौ प्रमाणाभावात्काण्डनन्यनध्यायः ॥ एषां महानाम्न्यादीनामध्ययनकाल उच्यते—श्रावणमात्र एव कृत्वा पूर्वमन-

धीतवन्तो ये तेषामयं कालः । फाल्गुनमासमारभ्य श्रावण्याः पौर्णमास्या यः कालः स तेषामध्ययनकालः ।—तैष्या—अपूर्वाणां । येऽधीतपूर्वाः तस्मिन्कालेऽधीयीरन् तैषीपूर्णमासी पूर्वावधिः श्रावणीपूर्णमासी परावधिर्यस्य कालस्य स काल इत्यर्थः इति ॥ अत्राचार्यः स्मृतिरूपेणाप्याह—'सर्वत्र वपनं शस्तं तद्व्रतेषूपनीतिवत् । वापनादिप्रदानान्तं कृत्वा कर्म व्रतेषु च ॥ तद्व्रतं वर्षमात्रं च चरस्वेति विनिर्दिशेत् । चरिष्यामीति शिष्यस्तु व्रतं नाम्नीव्रते गुरुः ॥ दिवा ब्रह्मौदनं कृत्वा चरेत्संवत्सरं व्रतम् । देवतायतनं गत्वा नदीतीरमथापि वा ॥ क्षेत्रं वनं वा तद्ब्राह्मं प्रथमं श्रावयेद्व्रतम् । उक्ताश्चैता महानाम्न्याः क्रियाः सम्यञ्चयापि न' इति ॥ ॥ कृसरान्नकरणे कारणमाह स एव—'प्रोक्षणान्ते तिलान्क्षिप्त्वा तण्डुलैः श्रपयेच्चरुम् । तृप्यन्ति कृसरान्नेन महानाम्न्युक्तदेवताः' इति ॥ ॥ सर्वहविःशेषभोजने कारणमाह स एव—'आत्मनो यत्तु पर्याप्तं हविः संश्रपयेद्द्विजः । तावदेव महानाम्न्यां भुक्त्वा तत्र न शेषयेत् ॥ व्रतिनो भुक्तशिष्टान्नं भोक्तुं नार्हति कश्चन । सुशुद्धत्वाद्यतस्तस्मात्सर्वमश्नाति हि स्वयम्' इति ॥ ॥ अञ्जलिसेचने कारणमाह स एव—'रवेर्व्रतपतेस्तुष्ट्यै व्रतस्य परिपूर्तये । भुक्त्वापामञ्जलिं पूर्णं शिष्यः सिञ्चति मन्त्रवत् ॥ गुरुश्च तत्सह ब्रूयान्मन्त्रं भानोः कृताञ्जलिः । संमीलनं वाग्यमनं शिष्यः कुर्यात्ततः परम्' इति ॥ ॥ संमीलनादौ कारणमाह स एव—'अलोक्यालोकनेनासीदभाष्याणां च भाषणात् । तद्दोषस्यापनुत्त्यर्थं मौनं संमीलनं भवेत् ॥ कर्तव्यत्वान्महानाम्न्यां मौनसार्द्धं द्विजातिनः । दुष्टदर्शनवर्जत्वादशक्तत्वाच्च वत्सरम् ॥ एकरात्रं त्रिरात्रं वा यथोक्तत्वप्रसिद्धये । तस्मात्संमीलनं कार्यं तथा वाग्यमनं तदा' ॥ ॥ ससुप्तशिरोवेष्टने कारणमाह स एव—'व्रतादेशाहःप्रभृति श्रवणान्तं यदा शुचिः । कण्ठादूर्ध्वं समाश्रित्य

वसन्ति व्रतिनं सुराः ॥ केशान्वसन्ति वसवो रुद्राः श्रोत्रे च चक्षुषी । आदित्या नासिका द्वारे वषट्कारश्च तत्तथा ॥ व्रतिनो गायत्रं तोयं पातुकामा इमे सुराः । त्रयस्त्रिंशद्गमन्त्यत्र महानाम्न्याः प्रभावतः ॥ तेषां संत्राणनार्थाय वेदत्रयमनुस्मरन् । अहते-नाम्बरेण विर्वेष्टयेत्प्रमुखं शिरः । दर्शनाद्द्विजानां च दुष्टानामिह विभ्यति ॥ वस्वादयः सुरास्तस्माच्छिरसो वेष्टनं भवेत् । शुश्रूषा-सिद्ध्यै तस्य गुरोरादौ महर्षयः । आत्मनो यापनार्थं च चक्रिरेऽनुग्रहं महत्' ॥ ॥ संमीलनादौ फलविशेषमाह सएव—'संमी-लनं वाग्यमनमुष्णीषेण च वेष्टनम् । एकरात्रं त्रिरात्रं वा तद्व्रतान्ते चरेदिति ॥ सुराणां मानवृद्ध्यर्थं तथा कुर्वन्ति हि द्विजाः । व्रतस्य श्रवणेनैव देवानां स प्रियो भवेत् । तथा संवत्सरं सर्वमशक्तत्वात्प्रवर्तितुम् । त्रिरात्रं चैकरात्रं वा यत्तत्कार्यमिति स्थितिः । एवंभूतोऽल्पकालं भवेति गुरुणोदितः' इति ॥ ॥ अथानन्तरकर्तव्यमाह सएव—'संध्यात्रयं यथाभूतः कुर्यान्नान्यत्तु किंचन । एकरात्रं त्रिरात्रं वा नयेदुपविशन्द्विजः ॥ न शयीत नचोत्तिष्ठेदते संध्यार्थमादृतः । अर्धरात्र्यां व्यतीतायां संध्यामात्रमुपास्य च । तथाभूतस्तदा नैव कुर्यात्स्नानादिकाः क्रियाः' इति ॥ ॥ वत्सतरीबन्धने कारणमाह सएव—'रक्तां वत्सतरीं तावत्सुस्वरूपां त्रिहायनीम् । वायव्यां दिशि बध्नीत महानाम्न्या असंश्रवे ॥ श्रेष्ठत्वात्तु पशूनां सा रक्ता वत्सतरी मता । देवानां सुप्रियत्वात्तु गुरूपसाभिगद्यते ॥ योगिनो मुनयः शान्ताः पिशङ्गा ऊर्ध्वरेतसः ॥ शुद्धामाश्रित्य तां वस्तुमिच्छन्त्येवासमाप्तितः ॥ पश्चिमो-दस्समुद्रेषु गिरिर्नाम्ना प्रभञ्जनः । प्रभञ्जनाश्रयः श्रीमान्वसत्यमरसंश्रयः ॥ नानाश्चर्याश्रमे तस्मिन्वायुः पुरवरोत्तमे । जगत्प्राणो

पाठा०—१ वर्धनते ।

यमस्येव भुवनाह्लादकारकः ॥ तस्मिन्वसन्ति मुनयो योगसिद्धा महौजसः । योगशास्त्रप्रणेतारः पिशङ्गा नाम योगिनः ॥ तेषां कथितवानादौ वायुर्वायव्यमुत्तमम् । पुराणं शिवदं साक्षाच्छिवमाहात्म्यसूचकम् ॥ तेपि श्रोतुं महानाम्नीव्रतिनं द्रष्टुमेव च । आयास्यन्ति महात्मानस्तद्दीताद्ध्र्वरेतसः ॥ विश्रामार्थं प्रवध्नाति तेषां वत्सतरीं द्विजः । वस्यां दिशि व्रते तस्मिन् तस्यामश्रवणे तदा ॥ अथान्यत्वान्महानाम्न्याः स्त्रीभिश्चापि तथा तदा । असंभवे वां प्रभाति शुभ्रां वत्सतरीं द्विजः ॥ नेच्छन्ति वामृते वस्तु किंचिदन्यद्धिासनम् । सुशुद्धत्वाद्वायुभूतास्ते शुद्धा ब्रह्मचारिणः ॥ तामन्ते गुरवे दद्याद्वत्साभावे सितापि च । दूरस्थिता अपि श्रुत्वा तस्य दास्यन्ति वाञ्छितं' इति ॥ ॥ महानाम्नीपठनकाले गुरुशिष्ययोरन्योन्यपृष्ठभागसंधाने कारणमाह स एव—'ततोऽपराजिताशायां विधायाग्निं यथाविधि । पर्युक्षणान्तं तत्प्रत्यक्तृणेषूपविशेद्गुरुः ॥ मुखवासः समुत्सार्य मुखं प्रक्षाल्य वारिणा । अग्निं प्रदक्षिणीकृत्य गुरुं चैनाभिवादयेत् ॥ पृष्ठेन पृष्ठं संधाय गुरोरात्मन एव च । ईक्षन्नुपविशेदाशां राक्षसीं संयतः स्थितः ॥ सुप्रिया च प्रतिष्ठा च देवानामपराजिता । आशां तामसुरा घोरा यतन्ते हर्तुमोजसा ॥ सुप्रिया च प्रतिष्ठा च दैत्यानां नैर्ऋती च दिक् । तामीक्षमाण आसीत संशृण्वानो गुरूदितम् । देवाश्च ऋषयश्चास्यां दिश्येते निरसन्ति हि । श्रोतुकामा महानाम्नीर्भीताः संचकितास्तथा ॥ तेषां संत्राणनार्थाय असुराणां तथैव च । तेनाग्निना दहन्नीक्षन्नासीताशां च नैर्ऋतीम् ॥ मृतकल्पा न कुप्यन्ति निश्चेष्टा व्रतिनेक्षिताः । निर्वीर्या बाधितुं देवा न शक्ताः स्युः सुरेतराः ॥ देवान्प्रागुत्तराशास्थानीक्षन्संश्रावयेद्गुरुः । मानयन्निव तान्भक्त्या तत्तृप्त्यै प्रियतस्तदा ॥ अन्तरेण समायातुं केचिदिच्छन्ति राक्षसाः । तावत्तद्व्रतलब्धर्थमन्तरा गुरुशिष्ययोः । तेषां निरसनार्थाय सं-

धीपीतात्र पश्चिमान्' इति ॥ ॥ व्रतलोपप्रश्नादौ कारणमाह सएव—'वसिता व्रतपूर्वस्य व्रतिनो नान्यथा कृतम् । ख्यापनादनुतापेन दोषः संधीयते कृतः ॥ यस्मात्तस्मात्स्वगुरुणा पृष्टे लोपेन तप्यते । रवेः सर्वात्मकत्वात्तु ते च पश्चिमतः स्थिताः॥ असुरा दिवि भूमौ न विचरन्ति स्वमायया । एवं ज्ञात्वा चरेत्कर्म कारणानीह विचमः ॥ श्रौतान्स्मार्तांश्च मिश्रांश्च कुर्यात्तत्फलसिद्धये । रहस्यमम्भद्गुरोक्तं पञ्चविंशतिकर्मणाम्' इति । उक्तमिति शेषः ॥ अत्र हविःश्रपणे विशेषमाह सएव—'हविरेकार्थपर्याप्तं विहितं तत्र कर्मणि । मर्त्यौदने तु विहितं हविः सम्यक् द्विपूरुषम्' इति ॥ अत्र भगवान्—'अथोदगयने शुक्लपक्षे शोभनतारके । वेदव्रतानि चत्वारि विदधीत यथाविधि ॥ तेषामाद्यं महानाम्नीश्रवणं तदनन्तरम् । महाव्रतं ततः पश्चाद्वेदुपनिषद्व्रतम् ॥ ततो गोदानमित्येवं कार्याण्येतान्यनुक्रमात् । तत्रादितो महानाम्नीश्रवणे विधिरुच्यते ॥ तत्र प्रथममाचार्यः शिष्याय व्रतमादिशेत् । कर्मोपनयने प्रोक्तं यत्पूर्वं वपनादिकम् ॥ परिदानान्तमेतत्तु व्रतादेशनमीरितम् । तस्य व्रतस्यानुष्ठानं पूर्णवत्सरमादिशेत् ॥ ततः संवत्सरे पूर्णे संप्राप्ते चोत्तरायणे । पूर्वपक्षे प्रशस्ते च नक्षत्रेऽसौ गुरोर्मुखात् ॥ ऋचः श्रोष्यन्महानाम्नीर्ग्रामान्निष्क्रम्य शोभने । शुद्धदेशे चरुं पक्त्वा आचार्याय निवेदयेत् ॥ व्रतलोपानथाचार्यः शिष्यं पृच्छेत्स चेद्वदेत् ॥ शिष्यो मया महान्लोपो व्रते तु कृत इत्यथ ॥ आचार्यस्तदुपक्रान्तं तत्रावस्थासमन्वितम् । कर्ममध्ये तु तस्यैव व्रतलोपनिमित्तकम्॥ प्रायश्चित्तं विधायैवं कारयित्वोचितं तथा । ततोऽस्य परिशुद्धस्य पुनरारभ्य पूर्ववत् ॥ वत्सरं व्रतमादिश्य तथैवानुष्ठितं व्रतम् । बुध्वा चास्मै महानाम्नीरनुब्रूयाद्यथाविधि ॥ यद्यसौ गुरुणा पृष्टो व्रतलोपं वदेन्मया । व्रतलोपः कृतोऽल्पस्तु स चापत्कारणादिति ॥ तदा तमनुगृह्यैनमाचार्यः

कल्पितं च तम् । व्रतलोपमनादृत्य शेषं प्रक्रान्तकर्मणः ॥ अनुष्ठाय महानाम्नीरनुवक्तुं कृतोद्यमः । आज्यसंस्कारपर्यन्तानूयाज-स्थापनावधि ॥ कर्म कृत्वाथ संस्पृष्टस्तेनेध्माधानपूर्वकम् । शेषं कृत्वा पुरस्तत्रमवदाय पुनश्चरोः ॥ अत्रावग्निश्चरत्यार्थैर्मन्त्रैर्हुत्वा पलाहुती: । ततो व्याहृतिभिर्व्यस्तरूपाभिस्तिस्र आहुतीः ॥ कृत्वा ततोऽवदायान्नं किंचित्स्विष्टकृते स्रुचि । तन्निधायानलात्प्रत्य-क्समास्तीर्णे तु बर्हिषि ॥ ततः शिष्यं गुरुर्ब्रूयाद्धुतशिष्टमिमं चरुम् । सर्वं भुंक्ष्वेति भुञ्जीत सोऽप्यशेषं चरुं शनैः॥भुक्तवन्तमपां पूर्ण-मञ्जलिं दधतं स्थितम् । तमुपस्थापयेच्छिष्यं त्वं व्रतानां व्रतादिना ॥ मन्त्रेण तेन राध्यासमित्यन्तेन दिवाकरम् । ब्रूयात्स्वयं च तन्मन्त्रं गुरुः शिष्यं च वाचयेत् ॥ उपस्थाप्यैवमादित्यं सादयेद्ब्रह्मचार्यथ । नेत्रे निमील्य वाचं च नियच्छेदवधानतः ॥ आचार्योऽप्यथ शिष्यस्य वामशङ्खप्रदेशतः । आरभ्य नववस्त्रेण मुखयुक्तं च तच्छिरः ॥ वामशङ्खप्रदेशो ललाटवामभागः । 'शङ्खौ निधौ ललाटास्थि कम्बौ' इत्यभिधानात् । प्रदक्षिणं त्रिरावेष्ट्य वदेच्चैनमिदं वचः । एकरात्रं त्रिरात्रं वा त्वमेवंभूतवेषयुक् ॥ आसीनः स्वापहीनश्च ममाभ्याशे वसेरिति । शक्त्यपेक्षो विकल्पः स्यात्कालयोर्ब्रह्मचारिणः ॥ गुरुस्तमनुशिष्यैवं ततः स्विष्टकृदादिकम् । उपरिष्टात्तनं तन्त्रमाचरेच्च यथाविधि ॥ ततः शिष्योऽपि कर्तव्यमितरद्भोजनादिकम् । अकुर्वाणो गुरोः पार्श्वे इत्युक्त्वासीत वाग्यतः ॥ अपरेद्युश्चतुर्थे वा दिवसे प्रयतो गुरुः । अनुवक्ष्यन्महानाम्नीः स्वागारापेक्षया दिशम् ॥ पूर्वोत्तरामनुप्राप्ते देशे ग्रामाद्बहिर्भवेत् । शुद्धे देवालये तत्र कृत्वा स्थण्डिलमादितः ॥ असिमश्मानमापूर्णसलिलं च कमण्डलुम् । न्यस्य वत्सतरीं बध्वा तस्याग्नेः प्रत्यगुत्तरे ॥ ततोऽग्नेः प्रत्यगास्तीर्य दर्भान्प्रागुत्तराग्रकान् ॥ तेष्वासीत गुरुः पश्यन्प्रागुदीचीं दिशं ततः ॥ शिष्योऽपि उपलेपादीन्प्रमृज्या-

नम्य चोदकम् । कृत्वा गुरोश्च वह्नेश्च प्रदक्षिणमथो गुरुम् ॥ अभिवाद्य गुरोः प्रत्यग्दक्षिणे तस्य पृष्ठतः । तस्यैवासनदर्भाणां मूलेष्वेव च नैर्ऋतिम् ॥ विलोक्य दिशमासित्वा ततः पृष्ठेन चात्मनः । आचार्यस्य च संयोज्य वचनं मनसा ततः ॥ उदीरयेन्महानाम्नीभिर्वा अन्विलेवमादिकम् । ब्रूहीत्यन्तमथाचार्यो ज्ञात्वा कालप्रमाणतः ॥ वचनं तेन शिष्येण प्रोक्तमभ्युक्षणादिकम् । पृष्ट्वा च व्रतलोपानामेनं गौरवलाघवम् ॥ अल्पेन व्रतलोपेन संतप्तं चानुकंप्य च । तृतीयारण्यकस्यान्ते समाम्नातास्तु या ऋचः ॥ विदामघवन्विदागातुमित्युपक्रमसंयुताः । ता महानाम्न्य इत्युक्ताः पुरीषपदसंज्ञकैः ॥ एवाह्येवादिभिः सार्धं संमीलितविलोचनः । त्रिरन्वाध शिष्यस्य मूर्ध्नि वासो विवेष्टितम् ॥ उन्मुच्य स्वयमाचार्यो मित्रस्य त्वादिमन्त्रतः । मन्त्रद्वयेन शिष्यं तमादित्यमीक्षयेत् ॥ अथाश्मादमप्रभृतिभिः संभारैः सहिता दिशः । मित्रस्यत्वादिकं मन्त्रमृच्छलित्येवमन्तकम् ॥ वाचयित्वा पुनश्चार्कमीक्षयेदथ तावुभौ । जपित्वा मन्त्रसंघातं क्रमेणाप्रइत्यादिकम् ॥ भवइत्येवमन्त्रान्तं संस्पृशेतां च भूतले । अथ शिष्यस्तमाचार्यमनुज्ञाप्य यथापुरम् ॥ अनुप्रवचनीयार्थं भिक्षित्वा गुरवे च तत् । भिक्षालब्धं निवेद्यास्मै चरुं पक्त्वा यथाविधि ॥ आवेदयेच्च तत्पक्वं चरुं तस्मै यथापुरा । गुरुश्चाथाज्यसंस्कारमुपक्रम्य यथोदितम् ॥ अन्वाजनिधानान्तं तन्त्रं कृत्वा ततः परम् । इध्माधानादि शिष्येण स्पृष्टः कृत्वा पुरस्तनम् ॥ तन्त्रशेषं यथान्यायमवदाय चरुं ततः । चतस्रोऽप्याहुतीः कुर्याद्यथा व्रतौदनं पुरा ॥ व्रतौदनवदत्रापि होममन्त्राः स्युरत्र तु । महानाम्नीभ्य इत्येष द्वितीयो मन्त्र इष्यते ॥ अथोपरिष्टात्तन्त्रं च यथाविधि समापयेत् । महाव्रतेऽपि प्रथमं व्रता-

पाठा०—१ श्रोकुनन्यथणादिरम् । २ नभिवीक्षयेत् । ३ मन्त्रान्मरमथ ।

देशनमाचरेत् । पूर्णेऽब्दे विजने शुद्धे देशे ग्रामाद्बहिर्भवेत् । प्राक्कूलदर्भेष्वासीनं प्राङ्मुखं संयतं गुरुम् ॥ शिष्योऽभिवाद्य प्रथमं श्रोतुकामो महाव्रतम् । भो इत्युक्त्वा प्रथमत आचार्यं तदनन्तरम् ॥ अनुब्रूहीति वचनं याचित्वा तत्समीपतः । आसीत प्राङ्मुखः शान्तः प्राक्कूले दर्भसंस्तरे ॥ प्रार्थितस्त्रिरनुब्रूयादाचार्योऽथ महाव्रतम् । इन्द्रोपक्रमसंयुक्तां प्रथमारण्यकश्रुतिम् ॥ मित्रसत्वादिभिर्मन्त्रैः पूर्ववच्चार्कमीक्षयेत् । जपित्वा मन्त्रसंघातमुभावग्नइळादिकम् ॥ गुरुशिष्यौ स्पृशेतां वै यथापूर्वं महीतलम् । अनुप्रवचनीयं च पूर्ववज्जुहुयादथ ॥ महाव्रतायस्वाहेति द्वितीयो मन्त्र इष्यते । व्रतादेशनपूर्वं यत्कृतं कर्म महाव्रते ॥ सकलं तदनुष्ठेयं तथैवोपनिषद्व्रते । अत्रोपनिषदं भोस्त्वमनुब्रूहीति याचितः ॥ आचार्योऽथात इत्याद्यां तृतीयारण्यकश्रुतिम् । त्रिरनूच्योपनिषदं पूर्ववच्चार्कमीक्षयेत् ॥ अत्रोपनिषदेस्वाहेत्यनुप्रवचनीयके । द्वितीयो होममन्त्रः स्यादन्यत्सर्वं यथापुरा' ॥ अत्र मौञ्जीदण्डादिषु विशेष उच्यते पराशरेण—'यद्यस्य विहितं कर्म यत्सूत्रं या च मेखला । यो दण्डो यच्च वसनं तत्तदस्य व्रतेष्वपि' इति ॥ अत्र संवत्सरमध्ये व्रतलोपे प्रायश्चित्तमाहात्रिः—'पिता भ्राता परो वापि प्राजापत्यत्रयं चरेत् । महापभाप्सु संस्नाप्य पाहिनोअग्नआहुतीः । पञ्चभिरिदमज्ञातव्रतलोपे कृते सति' इति ॥

अथेदानीं महानाम्न्युक्तमन्त्राणामर्थः कथ्यते ॥ ॥ अग्नावग्निरिति । ऋषीणां पुत्रः भृग्वादीनां पुत्रस्तैराहितः अधिराजः अधिकं दीप्तः एष देवतात्मकोऽग्निः अग्नौ अङ्गारात्मके प्रविष्टश्चरति तस्मै देवाय अग्नये घृतेन घृतलक्षणेन हविषा जुहोमि । कर्मणि तृतीया । घृतलक्षणं हविर्ददामि । अग्निश्च देवानां भागधेयं यो यस्य भागः तं मा मोमुहत् मुग्धं माकार्षीत् विविक्तमेव ददातु । मो अस्माकमित्यत्र मा उ अस्माकमिति पदच्छेदः । उ इवार्थे । अस्माकं च देवैर्दत्तं भागधेयं मामोमुहत् विविक्तमेव ददातु ॥

॥ या तिरश्चीति—संराधनीनाम वाग्देवता सा भूरित्यन्ये। हे संराधनि, या त्वं तिरश्ची तिर्यग्भूतासती निपद्यते। पुरुषव्यत्ययः। निपद्यसे शेषे अहं विधरणी सर्वभूतस्य विधारयित्रीत्यनया बुद्ध्या इति भूमिपक्षे। वाक्पक्षे तु विधारणं निवारणं होमविघ्नकारिणां निवारयित्रीत्यनया बुद्ध्या तेषामप्रवेशाय यज्ञगृहद्वारदेशे तिर्यग्भूता शेषे संराधनी गां त्वा घृतस्य धारया उपस्तरणाभिघारणरूपया संराधनीमहं यजे॥ ॥ यस्मै त्वा काम कामायेति—हे सम्राट् संदीप्तकाम, कामोऽभिलापः अभिलपितकामाथिप, हविषा यस्मै कामाय यस्याभिलपितस्य सिद्धये वयं त्वा त्वां यजामहे तं काममस्मभ्यं दत्त्वा अथ अनन्तरं इदं घृतमुपस्तरणाभिघारणलक्षणं चरुणा संपृक्तं पिब॥ ॥ अयं नो अग्निरिति—अयमग्निर्नो अस्माकं वरिवः धनं कृणोतु ददातु। अयमेनाग्निर्मृधः संग्रामकारिणः शत्रून्प्रभिन्दन्प्रकर्षेण विदारयन् अस्माकं पुरः एतु अग्रे गच्छतु। अयमेव च शत्रूनस्मदीयान्जयतु। जर्हृषाणः अत्यर्थं हृष्यमाणः। अयमेव च वाजसातौ संग्रामे शत्रूणां वाजमन्नं धनं वा जयतु जित्वाऽस्मभ्यं ददातु॥ ॥ असूयन्त्या इति। असूयन्ती चानुमती च मध्यमस्थाने देवते ताभ्यां स्वाहा। प्रदात्रे स्वाहा। प्रदाता इन्द्रः अभ्युदयेष्टौ दर्शनात्। प्रदातृत्वगुणविशिष्टायेन्द्राय स्वाहा॥ ॥ त्वं व्रतानां व्रतपतिरिति—हे आदित्य, त्वं सर्वेषां व्रतानां व्रतपतिः पालयिता असि भवसि। त्वत्प्रसादान्महानाम्नीरध्येतुमिदं व्रतं चरिष्यामि। तच्छकेयं तदनुष्ठातुं शक्नुयाम्। तेन चानुष्ठितेन शकेयं महानाम्नीरध्येतुं शक्नुयाम्। तेन चाधीतेन वेदभागेन राध्यासं सिद्धार्थो भूयासम्॥ ॥ मित्रस्येति—हे मित्र आदित्य, मित्रस्य मित्रभावितस्य मम चक्षुषा अहं प्रतीक्षे अभिमुखं पश्यामि। एतेनोत्तरं यजुर्व्याख्यातम्। समीक्षे सम्यगीक्षणं करोमि॥ ॥ मित्रस्य च इति—

हे दिशः, मित्रस्य मम चक्षुषा समीक्षामहे। सर्वाणि भूतानि मित्रस्य चक्षुषा समीक्षन्ताम्। ... हे दिशः, मित्रस्य मम चक्षुषा ससंभाराः वो युष्मान् अनुवीक्षेऽनुपश्यामि। मित्रस्य त्वा चक्षुषा प्रतिपश्यामि। हे आदित्य, त्वां मित्रस्य मित्रभावितस्य मम चक्षुषा प्रतिपश्यामि। योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तं चक्षुषो हेती ऋच्छत्विति। अस्मदीयं हेविरायुधं चक्षुषोर्गोलकयोः प्रदेशे ऋच्छतु प्राप्नोतु। भूमिमुपस्पृशेत् ॥ ॥ अग्न इळेति—हे अग्ने, त्वत्प्रसादादिळा भूमिर्मे भूयादित्यध्याहारः। नमस्ते इळा मे भूयादित्यादरार्थमिदम्। मन्त्रकृद्भ्यो मन्त्रद्रष्टृभ्यः मन्त्रपतिभ्यः मन्त्राणामध्ययनाध्यापनद्वारेण पालयितृभ्य ऋषिभ्यो नमः। देवेभ्यो नमो वोस्तु। हे सरस्वति, सरांसि अस्यां सन्तीति सरोवती। सकारश्छान्दसः। सरस्वती तस्याः संबोधनं हे सरस्वति, सुमृळीका सुष्ठु दापयितृस्वभावा त्वं नोऽस्मभ्यं शंतमा अतिशयेन सुखकरी भव। वयं च ते तव संदृशि। पञ्चम्यर्थे सप्तमी। संदृशः संदर्शनात् मा व्योम। विपूर्वस्यावतेर्गत्यर्थस्य लङि उत्तमबहुवचने रूपमिदम्। ओकारश्छान्दसः। विगता माभूम सर्वदा तव संदर्शनमेवास्तु ॥ ॥ भद्रं कर्णेभिरिति—हे देवाः, वयं कर्णेभिः 'बहुलं छन्दसी'ति भिस ऐस्भावः। कर्णैः श्रोत्रेन्द्रियैः भद्रमेव शृणुयाम। अक्षभिः 'छन्दस्यपि दृश्यते' इत्यनङ्। अक्षभिः चक्षुरिन्द्रियैः भद्रमेव पश्येम। हे यजत्राः यागेन यष्टव्याः, युष्मान् तुष्टुवांसः स्तुवन्तो वयं स्थिरैः दृढैरङ्गैः करचरणादिभिरवयवैस्तनूभिः शरीरैः समुपेताः सन्तः देवहितं देवेन प्रजापतिना मनुष्येभ्यो हितं दत्तं षोडशाधिकशतं वर्षाणामजीविषदिति छान्दोग्यदर्शनात् षोडशाधिकशतमायुः तद्व्यशेम व्यश्नुवीमहि ॥ ॥ शं न इन्द्राग्नी इति—इन्द्राग्नी नोऽस्मभ्यं अवोभिः रक्षणैः शं भवतां सुखकरौ स्याताम्। रातहव्या यजमानेन दत्तहव्यौ इन्द्रावरुणा इन्द्रावरुणौ च नोऽस्मभ्यं शं शान्त्यै भवेताम्। इन्द्रासोमावपि नः शं शान्त्यै सुविताय कल्याणाय

च भवेताम्। शं शान्त्यै शंयोः सुखाय च। पुनरुक्तिरादरार्था । अथवा शं शमनहेतुकं सुखं योः त्रिपययोगनिमित्तकं सुखमित्यपुनरुक्तिः। तस्मै भवेताम्। इन्द्रापूषणा इन्द्रापूषणावपि वाजसातौ अन्नादिलाभे शं भवेताम्॥ ॥ स्तुषे जनमिति—हे मदीयान्तरात्मन्, सं जनं वृष्टिद्वारेण सर्वस्य जनयितारं 'अग्नौ प्रास्ताहुतिः सम्यक्'इत्यादिदर्शनात् । सुव्रतं सुकर्माणं सुसंकल्पं वा य एवंविधमग्निं नव्यसीभिः अन्यैरप्रयुक्तपूर्वाभिर्गीर्भिःस्तुतिलक्षणाभिर्वाग्भिः। लोडर्थे लट्। स्तुहि पुरुषव्यत्ययो वा। अन्तरात्मभूतोऽहं स्तुषे स्तौमि। न केवलमग्निं स्तौमि किंतु सुम्नयन्ता सुम्नमिति सुखनाम । सुखं भक्तेभ्य इच्छन्तौ मित्रावरुणावपि स्तौमि। सुक्षत्रासः क्षत्रं धनं बलं वा सुधनाः सुबला वा वरुणो मित्रोऽग्निश्च ते त्रयः आगमन्तु मदीयं यज्ञमागच्छन्तु । आगत्य च इहैव यज्ञे स्थिताः सन्तः अस्माभिः कृतं स्तोत्रं श्रुवन्तु शृण्वन्तु॥ ॥ कया नश्चित्र इति—वामदेव आगमनविलम्बनादिन्द्रं प्रति परिदेवयते। चित्रः चायनीयः सदावृधः भक्तानां सदा वर्धयिता स्वयं वा सदावृधः सदावर्धमानः सुखस्तुल्यत्वेन सदा बन्धुः एवं विलम्बमानः सन् कया ऊत्या केन संतर्पणेन नः अस्मान् आभुवत् अभिमुखीभवेत्। शचिष्ठया। शचीशब्दः प्रज्ञानपर्यायेषु पठितः। प्रज्ञावत्तमया प्रज्ञानसहितमनुष्ठीयमानया वृता वर्तनया च अभिमुखो भवेत्॥ ॥ कस्त्वेति—इयमपि परिदेवनैव। मंहिष्ठः पूजनीयः सत्यः सत्यभूतः मदानां मदयितॄणां मध्ये एको मदकरः अन्धसः सोमस्य रसः दृढाचित् दृढान्यपि वसु वसूनि शत्रूणां धनानि आरुजे आसमन्ताद्भुङ्क्ते। हे इन्द्र, त्वां मत्सत् मादयेत्॥ ॥ अभीषु ण इति—अभि सु इत्युपसर्गयोः भवासीत्यनेन संबन्धः। हे इन्द्र, जरितॄणां स्तोतॄणां अतएव सखीनां नोऽस्माकं शतसंख्याकैः ऊतिभिः पालनैः अ-

विता रक्षिता अमिसु भवासि आभिमुख्येन सुष्ठु भव ॥ ॥ स्योना पृथिवीति—हे पृथिवि, त्वं स्योना सुखकरी भव । अनृक्षरा ऋक्षराः कण्टकपाषाणादयः ते न विद्यन्ते यस्यां सा अनृक्षरा निवेशनी नृणां संवेशनयोग्या त्वं नोऽस्माकं सप्रथः प्रथनं प्रख्यातिः तद्युक्तं शर्म सुखं यच्छ प्रयच्छ ॥ इति मन्त्रार्थः ॥

अथ महानाम्नीप्रयोगः ॥ जन्मप्रभृति त्रयोदशे वर्षे प्रागुक्तोदगयनादिकाले महानाम्नीव्रतं कुर्यात् । तत्रायं क्रमः—पूर्वेद्युराचार्यो ब्रह्मचारिणा सह सुस्नातः कृतनित्यक्रियः प्राणानायम्य तिथ्यादिसंकीर्त्य इमं ब्रह्मचारिणं महानाम्नीरध्यापयिष्यमाणस्तदादौ महानाम्नीव्रतसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं होमं कर्तुं तदङ्गस्वस्तिवाचनाङ्कुरार्पणग्रहयज्ञाभ्युदयिकश्राद्धानि करिष्य इति संकल्प्य पूर्वोक्तव्रतानि कृत्वा परेद्युर्वपनस्नाने च कारयित्वा बद्धशिखं ब्रह्मचारिणं प्रागुक्तवत्सर्वानुकूले मुहूर्ते स्वस्य दक्षिणत उपवेश्य विधिवत्कौतुकसूत्रमाबध्य संकल्पपूर्वकमुपलेपनाद्यग्निप्रतिष्ठापनान्तं कर्म प्रागुक्तविधिना विधाय समिद्द्वयमादाय तिथ्यादिकमुच्चार्य अस्य ब्रह्मचारिणो महानाम्नीव्रताङ्गभूतं होमं कर्तुं देवतापरिग्रहार्थमन्वाधानं करिष्ये । अस्मिन्नन्वाहितेऽग्नावित्याद्याघारावाज्येनेत्यन्तमुक्त्वा । त्रिरग्निं पवमानं प्रजापतिं चाज्येन शेषेण स्विष्टकृतमित्यादि सद्योयक्ष्य इत्यन्तमुक्त्वा व्याहृत्याग्नावाधायोद्देशत्यागौ कृत्वा परिसमूहनाद्याज्यसंस्कारपर्यन्तं प्रागुक्तवत्कुर्यात् । अथाचार्य उत्थायाग्नेः पश्चादवस्थाय ब्रह्मचारिणं प्राङ्मुखमवस्थाप्य कौपीनार्थं त्रिवृतं कार्पाससूत्रमाबध्य कौपीनं धारयित्वा युवं वस्त्राणीति मन्त्रावृत्त्याऽहतं शुक्लवासः परिधाप्यान्येन काषायवस्त्रेण प्रावृणुयात् । ततो यज्ञोपवीतं समन्त्रं धारयित्वा । तत आत्मनोऽग्नेश्च मध्येन यज्ञपात्रोत्तरभागं गमयित्वा तत्र तं विधिवदा-

नमग्य पूर्ववदानीयोपवेश्य ततो नर्हिष्याज्यासादनाद्यलंकरणान्तं कर्म कृत्वा ब्रह्मचारिणा दक्षिणहस्तेन स्पृष्टः सन्नाघारान्तं कृत्वाज्यभागवर्जमग्नआयूंषीत्यादिभिश्चतुर्भिर्मन्त्रैश्चतस्र आज्याहुतीर्जुहुयात्। एषामृषिच्छन्दोदेवताश्चौल एवोक्ताः। अनन्तरमाचार्य उत्तरतोऽग्नेः प्राङ्मुखस्तिष्ठेत् ब्रह्मचार्यप्याचार्याग्न्योर्मध्ये गत्वाचार्यस्य पुरस्तादभिमुखस्तिष्ठेत्। तत आचार्यः संयतात्मा सूर्यात्मा पावकात्मा सन् तस्य शुचित्वसिद्ध्यर्थं सवितृदेवताप्रीत्यर्थमञ्जलिक्षारणं कुर्यात्। तत्रायं क्रमः—जलपात्रोदकेन शिष्याञ्जलिमापूर्य ततः स्वस्याञ्जलिमन्येन पूरयित्वा तत्सवितुर्वृणीमह इत्यस्य श्यावाश्वः सविता त्रिष्टुप्। अनेन मन्त्रेण स्वाञ्जलिस्थोदकं शिष्याञ्जल्युदके आसिच्य तज्जलं बटोरञ्जलिनैवावक्षारयेत्। तत आचार्यो बटोर्हस्तग्रहणं कुर्यात्। तत्र मन्त्रः—देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यां हस्तं गृह्णाम्यमुकशर्मन्निति बटोराभिवादनिकं नाम शर्मान्तं संबुद्ध्या यजुरन्ते निर्दिश्य दक्षिणेन पाणिना बटोः साङ्गुष्ठं दक्षिणं पाणिं गृहीत्वा। पुनरपि पूर्ववदुदकपूरणादिकृत्वा। सविता ते हस्तमग्रभीदिति मन्त्रान्ते पूर्ववद्बटु-नाम निर्दिश्य हस्तं गृहीत्वा। पुनरपि पूर्ववत्पूरयित्वा अग्निराचार्यस्तवेति मन्त्रान्ते पूर्ववत्तन्नाम निर्दिश्य हस्तं गृह्णीयात्। ततो बटोः संरक्षणार्थं व्रतपतये आदित्याय बटुं ददामीति मनसा सन्दध्यात्। तत्रायं क्रमः—ब्रह्मचारिणा सह निष्क्रम्य—देव सवितरेष ते ब्रह्मचारी तं गोपाय स मामृतेत्युच्चार्य ब्रह्मचारिणमादित्यमीक्षयेत्। ततस्तावुभावपि पूर्ववदुत्तरतोऽग्नेरन्योन्याभिमुखौ तिष्ठेताम्। तत आचार्यः कस्य ब्रह्मचार्यसि प्राणस्य ब्रह्मचार्यसि कस्त्वाकमुपनयते काय त्वा परिददामीति मन्त्रं जपन् बटुं प्रजापतये रक्षणार्थं मनसा समर्प्य पूर्ववदुपविश्य इयंदुरुक्तादिति मन्त्रेण मेखलामाबध्य पूर्ववत् अदान्तंमन्त्रेण दण्डं प्रदाय पुराणानि

यज्ञोपवीतादीनि जले निक्षिप्य स्विष्टकृदादिहोमशेषं समापयेत् ॥ अनन्तरं गुरुर्महानाम्नीव्रतं संवत्सरं चरेति ब्रह्मचारिणंप्रति वदेत् । स चरिष्यामीत्युक्त्वा संवत्सरपर्यन्तं केशश्मश्रुलोमनखधारणभिक्षाचरणादिव्रतं पूर्ववच्चरेत् । ततः पूर्णे संवत्सरे उत्तरायणे शुक्लपक्षे ब्रह्मचारी गुरुस्सुतान्महानाम्नीः श्रोष्यन् ग्रामाद्बहिर्विविक्तं शुचिदेशं देवालयादिकं गच्छेत् । तत्र गुरुस्तिथ्यादिकं संकीर्त्य अस्य ब्रह्मचारिणो महानाम्नीश्रवणाङ्गभूतव्रतपरिपूर्तिद्वारा श्रीपर० तदङ्गहोमं कर्तुमुपलेपनादिकर्म करिष्य इति संकल्प्य स्थण्डिलोल्लेखनाग्निप्रतिष्ठापनान्तं कर्म कृत्वा । पुनस्तिथ्यादिकं संकीर्त्यास्मिन्होमे देवतापरिग्रहार्थमन्वाधानं करिष्य इत्यादि चक्षुषी आज्येनेत्यन्तमुक्त्वा अग्निं संराधनीं कामं अग्निमनुयन्तीमनुमतिं प्रदातारं अग्निं वायुं सूर्यं कृसरान्नद्रव्येण शेषेण स्विष्टकृतमित्यादि सद्योयक्ष्य इत्यन्वाधाय परिसमूहनादिपूर्णपात्रनिधानान्तं कर्म कुर्यात् । ततो ब्रह्मचारी स्थालीपाकविधानेन होमायात्मभोजनाय च पर्याप्तांस्तण्डुलानन्नभ्यो देवताभ्यस्तूष्णीं निरुप्य तथैव प्रोक्ष्य महानाम्नीदेवताप्रीत्यर्थं तत्र तिलान्निक्षिप्य श्रपयित्वाचार्याय शृतः स्थालीपाक इति विज्ञापयीत । तत आचार्यो ब्रह्मचारिणं व्रतलोपान्पृच्छेत् । ततो ब्रह्मचारिणा व्रतलोपे उच्यमाने तस्य गौरवलाघवं विचार्य गुरु चेद्ग्रोक्तप्रायश्चित्तं कारयित्वा पुनः संवत्सरं व्रतमादिशेत् । लघु चेत्प्रायश्चित्तमेव कारयित्वा शुचिभूतेनान्वारब्ध आचार्य आज्यसंस्काराद्याज्यभागान्तं कृत्वा अवदानधर्मेण चरुमवदाय अग्नाविश्चरति प्रविष्ट इत्यादिभिरेकश्रुत्योक्तैः षण्मन्त्रैर्व्यस्ताभिर्व्याहृतिभिश्च नवाहुतीर्जुहुयात् । तत्र मन्त्राः—अग्नाविश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः । तस्मै जुहोमि हविषा घृतेन मा देवानां मोमुहद्भागधेयं मो अस्माकं मोमुहद्भागधेयं स्वाहा । अग्नय इदं० । या तिरश्ची निपद्यतेऽहं विधरणी

इति । तां त्वा घृतस्य धारया यजे संराधनीमहं स्वाहा । संराधन्या इदं० । यस्मै त्वा काम कामाय वयं सम्राड्यजामहे । तम-स्मभ्यं कामं दत्त्वाथेदं त्वं घृतं पिब स्वाहा । कामायेदं०। अयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् । अयं शत्रूञ्जयतु जर्हृषाणोऽयं वाजं जयतु वाजसातौ स्वाहा । अग्नय इदं०। अमूयन्त्यै चानुमत्यै स्वाहा । अमूयन्त्यैचानुमत्या इदं । प्रदात्रे स्वाहा प्रदात्र इदं० । भूःस्वाहा अग्नय इदं० । भुवः स्वाहा वायव इदं० । स्वः स्वाहा सूर्यायेदं नममेति नवमन्त्रैर्हुत्वा स्विष्टकृदर्थं स्रुचि चरुमवदाय तां बर्हिषि निधाय ब्रह्मचारिणमेतं स्थालीपाकं सर्वमशानेति प्रैषं ब्रूयात् । सच सर्वं चरुमश्नीयात्। आचार्यो भुक्तवन्तं ब्रह्मचारिणं प्रति व्रतपतिमादित्यं व्रतपरिपूर्तये उपतिष्ठस्वेति प्रैषं ब्रूयात् । ततो ब्रह्मचार्यञ्जलिः पूर्णाञ्जलिं त्वं व्रतानां व्रतपतिरसि व्रतं चरिष्यामि तच्छकेयं तेन शकेयं तेन राध्यासमिति मन्त्रेणादित्यमुपतिष्ठमानः सिञ्चेत् । ततः आचार्योऽनेन मन्त्रेण कृताञ्जलि-मादित्यमुपस्थापयेत्। तत आचार्योऽनालोक्यालोकनासंभाष्यसंभाषणदोषनिवृत्त्यर्थं ब्रह्मचारिणाक्षिसंमीलनं वाग्यमनं च कारयित्वा त्रयस्त्रिंशद्देवताप्रीत्यर्थं वेदत्रयमनुस्मरन् अहतेन वाससा ब्रह्मचारिणो मुखसहितं शिरो वामकर्णप्रदेशमारभ्य त्रिःप्रदक्षिणं वेष्टयित्वा यथा न तद्वासः पतति तथा बध्वा एकरात्रं त्रिरात्रं वा एकभूतोऽस्वपन्भवेति प्रैषमुक्त्वा स्विष्टकृदादिहोमशेषं समापयेत् । ब्रह्म-चारी तत्रस्थं कर्तव्यं संध्यावन्दनादितरत्स्नानभोजनादिकर्म कुर्वाणस्तं कालं नयेत् । तत एकरात्रनयनपक्षे द्वितीयदिवसे त्रिरा-त्रनयनपक्षे चतुर्थदिवसे ग्रामाद्बहिरपराजितायां दिशि स्त्रीसंचाररहिते शुचौ देशे अन्यो ब्रह्मचारी अग्निस्थण्डिलादुत्तरतोऽसिं क-मण्डलुमश्मानं च निधाय तत्रत्यमुदग्देशे महानाम्नीसंश्रवणस्थले पिशङ्गनाम्नां योगिनामाश्रमार्थं रम्यां रक्तवर्णां द्विहायनीं वत्सतरीं

तदसंभवे श्वेतां वा गध्याचार्याय निवेदयेत् । तत आचार्यः स्थण्डिलोल्लेखनादि पर्युक्षणान्तमग्निप्रतिष्ठापनं कृत्वा तत्पश्चिमे प्रागग्रेषु तृणेष्वैशानस्थान्देवान्संमानयन्निव तदभिमुख उपविशेत् । ततः शिष्यो वेष्टितवस्त्रं किंचित्प्रसार्य मुखं प्रक्षाल्य कण्ठस्नानं कृत्वा आचम्य अग्निमाचार्यं च प्रदक्षिणीकृत्य गुरुमभिवाद्य तत्सैवासनदर्भमूलेष्वेव नैर्ऋतिस्थानात् राक्षसान्निरीक्षणेन निर्दहन् तदभिमुख उपविश्य रक्षसामन्तरागमननिर्हरणार्थं सपृष्ठमाचार्यपृष्ठेन सह संधाय मनसा महानाम्नीर्भो अनुब्रूहीति गुरुं ब्रूयात् । ततो गुरुः कालप्रमाणेन तदुक्तं शेषं ज्ञात्वा पुनस्तदहरुत्पन्नव्रतलोपान्पृष्ट्वाऽनुतापिने श्रद्दधानाय शिष्याय स्वयमक्षिणी संमील्य ॥ विदा मघवन्विदा गातुमनुशंसिषो दिशः । शिक्षा शचीनां पते पूर्वीणां पुरूवसो ॥ आभिष्ट्वमभिष्टिभिः प्रचेतन प्रचेतय । इन्द्रद्युम्नायन इष एवाहि शक्रः ॥ राये वाजाय वज्रिवः शविष्ठ वज्रिन्नृञ्जसे । मंहिष्ठ वज्रिन्नृञ्जस आयाहि पिब मत्स्व ॥ विदा रायः सुवीर्यं भुवो वाजानां पतिर्वशाँअनु । मंहिष्ठ वज्रिन्नृञ्जसे यः शविष्ठः शूराणाम् ॥ यो मंहिष्ठो मघोनां चिकित्वो अभिनो नय । इन्द्रो विदे तमु स्तुषे वशीहि शक्रः ॥ तमूतये हवामहे जेतारमपराजितम् । स नः पर्षदतिद्विषः क्रतुश्छन्द ऋतं बृहत् ॥ इन्द्रं धनस्य सातये हवामहे जेतारमपराजितम् । स नः पर्षदतिद्विषः स नः पर्षदतिस्त्रिधः ॥ पूर्वस्य यत्ते अद्रिवः सुम्न आधेहि नो वसो । पूर्तिः शविष्ठ शस्यत ईशे हि शक्रः ॥ नूनं तन्नव्यं सन्यसे प्रभोजनस्य वृत्रहन् । समन्येषु ब्रवामहै शूरो यो गोषु गच्छति सखा सुशेवो अद्वयाः ॥ एवा ह्येवैवाह्यग्ना३इ । एवा ह्येवैवाहीन्द्र३म् । एवा ह्येवैवाहि विष्णा३उ । एवाह्येवैवाहि पूषा३न् । एवाह्येवैवाहि देवाः । एवाहि शक्रो वशीहि शक्रो वशाँअनु । आयो मन्याय मन्यव उपो मन्याय मन्यवे उपेहि विश्वथ ॥ विदामघवन्विदो३म् ॥ विदामघवन्नि-

ष्ट्याया नवस्रक्त एवाखेवैचाखया इत्यादि नव पुरीषपदानि च त्रिवारं ब्रूयात् । शिष्योपि त्रिवारं पठेत् । ततः शिष्यस्य शिरोवेष्टनमुन्मुच्यादित्यमीक्षस्वेति वदेत् । ततो ब्रह्मचारी मित्रस्य त्वा चक्षुषा प्रतीक्षे मित्रस्य त्वा चक्षुषा समीक्षे इति मन्त्रद्वयेनादित्यावेक्षणं कुर्यात् । ततोऽश्मादिसंभारैः सहिता दिशो मित्रस्य त्वा चक्षुषानुवीक्ष इति मन्त्रेणेक्षेत् । पुनरादित्यमीक्षस्वेत्युक्ते मित्रस्य त्वा चक्षुषा प्रतिपश्यामि योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तं चक्षुषोर्हेती ऋच्छत्विति मन्त्रेणादित्यमीक्षेत । ततोऽग्नइळेत्याद्यष्टभिर्मन्त्रैर्भुवमुपस्पृशेत् । तत्र मन्त्राः—अग्नइळा नमइळा नमऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो नमो वो अस्तु देवेभ्यः शिवा नः शंतमा भव सुमृळीका सरस्वती मा ते व्योम संदृशि । भद्रंकर्णेइत्यस्य राहूगणो गोतमो विश्वेदेवास्त्रिष्टुप् । शं इन्द्राग्नीत्यस्य वसिष्ठो विश्वेदेवास्त्रिष्टुप् । स्तुषेजनमित्यस्य ऋजिश्वो विश्वेदेवास्त्रिष्टुप् । कयानश्चित्र इति तृचस्य वामदेव इन्द्रो गायत्री । स्योनापृथिवीत्यस्य मेधातिथिर्भूमिर्गायत्री एतैर्मन्त्रैर्भूमिस्पर्शनं कृत्वा वत्सतरीं गुरवे दत्वा अनुप्रवचनीयहोमार्थं पूर्ववत्तण्डुलान्भिक्षित्वा गुरवे निवेद्य दिवैव ब्रह्मौदनहोमं कुर्यात् । तत्रायं क्रमः—देशकालौ निर्दिश्य मम महानाम्न्यध्ययनाङ्गभूतमनुप्रवचनीयहोमं करिष्य इति संकल्प्य उल्लेखनाद्यग्निप्रतिष्ठापनान्तं कृत्वा पुनर्देशकालौ निर्दिश्य अस्मिन्ननुप्रवचनीयहोमे देवतापरिग्रहार्थमन्वाधानं करिष्य इत्याद्याधारावाज्येनेत्यन्तमुक्त्वा सदसस्पतिं महानाम्नीः ऋषीन् प्रधानदेवताश्चरुद्रव्येण शेषेण स्विष्टकृतमित्यादि सद्यो यक्ष्य इत्यन्तमुक्त्वा समिद्द्वयमग्नावाधायोद्देशत्यागौ कृत्वा परिसमूहनादिपूर्णपात्रनिधानान्तं कृत्वा तत्रैक्ष्यतण्डुलांश्चतुरश्चतुरो मुष्टींस्तूष्णीं देवतात्रयस्य विप्रद्वयभोजनाय च निरुप्य तथैव प्रोक्ष्य श्रपयित्वा शृतोऽनुप्रवचनीय इत्याचार्याय निवेदयेत् । ततः शिष्येण सह दक्षिणेन पाणिनान्वारब्ध आचार्य

आज्यसंस्काराद्याघारान्तं कृत्वाज्यभागवर्जमवदानधर्मेण चरुमवदाय सदसस्पतिमद्भुतमिति मन्त्रेण प्रथमाहुतिं महानाम्नीभ्यः-स्वाहेति द्वितीयां ऋषिभ्यः स्वाहेति तृतीयामेव माहुतीर्हुत्वा स्विष्टकृदादिहोमशेषं समाप्य कर्मान्ते कर्तव्यं स्वस्तिवाचनं पूर्ववत्कृत्वा ब्राह्मणान्भोजयित्वा वेदसमाप्तिरस्त्विति भवन्तो ब्रुवन्त्विति वदेत् । तेपि वेदसमाप्तिरस्त्वितिमतिब्रूयुरिति । इति महानाम्नीव्रतम् ॥

अथ महाव्रतप्रयोगः—आचार्यः पूर्ववदुदगयनादिकाले स्वस्तिवाचनादिहोमशेषसमाप्तिपर्यन्तं महानाम्नीव्रतवत्कृत्वा संवत्सरपर्यन्तं महाव्रतमाचरेति ब्रह्मचारिणं प्रति प्रैषमुक्त्वा तेन संवत्सरव्रते आचरिते ग्रामाद्बहिर्गत्वा शुचौ देशे प्रागग्रेषु दर्भेषु प्राङ्मुख उपविश्य शिष्येण विधिवदभिवादनपूर्वकं महाव्रतं भो अनुब्रूहीति याचनिकवृत्त्योक्तस्तं ब्रह्मचारिणं प्राङ्मुख उपविश्य अथ महाव्रतमित्याद्यारण्यकं त्रिर्ब्रूयात् । अथ महाव्रतम् । इन्द्रो वै वृत्रं हत्वा महानभवद्यन्महानभवत्तन्महाव्रतस्य महाव्रतत्वम् । द्वे एतस्याह्न आज्ये कुर्यादिति हैक आहुरेकमिति त्वेव स्थितम् । प्रवो देवायाग्नय इति राद्धिकामः । विशोविशो वो अतिथिमिति पुष्टिकामः । पुष्टिर्वै विशः पुष्टिमान्भवतीति । अतिथिमिति पदं भवति नैतत्कुर्यादित्याहुरीश्वरोऽतिथिरेवेति चरितोः । तदुहस्माह कुर्यादेव यो वै भवति यः श्रेष्ठतामश्नुते स वा अतिथिर्भवति । नवा असन्तमातिथ्यायाद्रियन्ते । तस्मादु काममेव तत्कुर्यात् । यद्येतत्कुर्यादागन्म वृत्रहन्तममित्येतं तृचं प्रथमं कुर्यात् । एतद्वा अहरीप्सन्तः संवत्सरमासते त आगच्छन्ति । त एतेऽनुष्टुप्शीर्षाणस्त्रयस्तृचा भवन्ति । ब्रह्म वै गायत्री वागनुष्टुप् ब्रह्मणैवैतद्वाचं संदधाति ॥ अबोध्यग्निः समिधा जनानामिति कीर्तिकामः । होता जनिष्ट चेतन इति प्रजापशुकामः ॥ ततो ब्रह्मचारी तथैव त्रिवारमुक्त्वा पूर्ववन्मन्त्रद्वयेनादित्यावेक्षणं कुर्यात् । ततो गुरुशिष्या-

यमइत्यादिभिर्मन्त्रैर्भूमिमुपस्पृशेताम् । ततः शिष्यस्तु दिवा ब्रह्मौदनं पक्त्वा आचार्याय निवेदयेत् । ततः आचार्यो महाना-म्नीभ्यःस्वाहेत्यस्य स्थाने महाव्रताय स्वाहेति योजयित्वा सर्वमनुप्रवचनीयं कुर्यात् । आचार्याभावे शिष्यः स्वयमेव महाव्रताध्यय-नादिकं कुर्यात् ॥ इति महाव्रतप्रयोगः ॥

अथोपनिषद्व्रतप्रयोगः । आचार्यः पूर्ववत्स्वस्तिवाचनादिहोमशेषसमाप्तिपर्यन्तं कृत्वा संवत्सरपर्यन्तमुपनिषद्व्रतमाचरेति शि-ष्यंप्रत्युक्त्वा शिष्यस्तदा संवत्सरं व्रतं चरित्वा ग्रामाद्बहिर्गत्वा। अथातः संहिताया उपनिषत्। पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । वायुः संहितेति माण्डूकेयः । आकाशः संहितेत्यस्य माक्षव्यो वेदयांचक्रे । सहाविपरिहृतोमेऽनेन मेऽस्य पुत्रे न समगादिति । ममाने नैतत्परिहृतो मेन इत्यागस्त्यः। समानं ह्येतद्भवति वायुश्चाकाशश्च । इत्यधिदैवतमथाध्यात्मम् । वाक्पूर्वरूपम् । मन उत्तर-रूपम् । प्राणः संहितेति शूरवीरो माण्डूकेयः । अथ हास्य पुत्र आह ज्येष्ठो मनः पूर्वरूपम् । वागुत्तररूपम् । मनसा वा अग्रे संक-ल्पयत्यथ वाचा व्याहरति तस्मान्मन एव पूर्वरूपम् । वागुत्तररूपम् । प्राणस्त्वेव संहितेति । समानमेनयोरत्र पितुश्च पुत्रस्य च । स एषोऽश्वरथः पुष्टिवाहनो मनोवाक्प्राणसंहतः । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति। इति नु माण्डूकेयानां । इत्यारण्यकं पूर्ववद्ब्रूयात् । ततो ब्रह्मचारी तथैव त्रिवारमुक्त्वा मित्रस्यत्वेत्यादिमन्त्र-द्वयेनादित्यावेक्षणं कुर्यात् । ततो गुरुशिष्यावयइद्येत्यादिभिर्मन्त्रैर्भूमिं स्पृशेताम् । ततः शिष्यस्तु दिवा ब्रह्मौदनं श्रपयित्वा आ-चार्याय निवेदयेत्। तत आचार्यो महाव्रताय स्वाहेति स्थाने उपनिषदे स्वाहेति योजयित्वा सर्वमनुप्रवचनीयं कुर्यात् । आचार्याभावे

शिष्यः स्वयमेवाध्ययनादिकं कुर्यादिति । इत्युपनिषद्व्रतप्रयोगः ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे महानाम्न्यादिव्रतत्रयप्रकरणम् ॥

अथ गौदानिकव्रतप्रकरणम् ॥ गौदानिकं सर्वसुपर्वसेव्यं खर्वीकृताखर्वसुरारिवर्गम् । लक्ष्मीपतिं पर्वसुधांशुवक्त्रं समुच्यते कूटहरिं प्रणम्य ॥ अथ गौदानिकव्रतमभिधीयते । तत्र कारिका—'गोदानं चौलवत्कार्यं षोडशेऽब्दे तदुच्यते । अङ्कोपवेशनं नास्ति श्मश्रूणां मुण्डनं भवेत् ॥ अदितिः श्मश्रूणि वपत्वाप उन्दन्तु वर्चसे । पिञ्जूलादिनिधानान्तं श्मश्रुपक्षे भवेदिह ॥ निमार्जने विशेषोऽयं श्मश्रूणीति शिरोमुखम् । शासने नापितस्यायं विशेषः प्रैष उच्यते ॥ केशश्मश्रुलोमनखान्युदक्संस्थानि कुर्विति । स्नात्वा च वाग्यतस्तिष्ठन्नहःशेषं नयेदथ ॥ आदित्येऽस्तमिते वाचं विसृजेतान्तिके गुरोः । अहं वरं ददामीति दद्याद्गोमिथुनं ततः ॥ श्वःपूर्ववद्व्रतादेशः संवत्सरमिदं चरेत् । व्रतेष्वेतेषु सर्वेषु प्रसिद्धं केशधारणम्' इति । इदमत्र गृह्यम्—'एतेन गोदानं षोडशे वर्षे केशशब्दे तु श्मश्रुशब्दान्कारयेच्छ्मश्रूणीहोन्दति शुन्धि शिरो मुखं मास्यायुः प्रमोषीरिति केशश्मश्रुलोमनखान्युदक्संस्थानि कुर्विति संप्रेष्यत्याप्लुत्य वाग्यतः स्थित्वाहःशेषमाचार्यसकाशे वाचं विसृजेत वरं ददामीति गोमिथुनं दक्षिणा संवत्सरमादिशेत्' इति । अस्यार्थः—एतेन गोदानं व्याख्यातमिति शेषः । एतेनेति कृत्स्नोपदेशः । तत्र विशेषमाह । षोडशे वर्षे । तृतीयस्यापवादः । अत्र मातुरुपस्थोपवेशनं न भवत्यबालत्वात् । केशशब्दे त्विति जात्येकवचनम् । श्मश्रुशब्दानिति व्यक्तिपरो निर्देशः । तेन त्रयः शब्दाः—अदितिः केशान्वपतु, यथा वपसि केशान्, दक्षिणे केशपक्षे, इति त्रिषु श्मश्रुशब्दः कार्यः । मन्त्रग-

न्तस्य तृतीयस्य केशशब्दस्याभावाद्विधिगतस्य ग्रहणम् । तेन दक्षिणश्मश्रुपक्ष इति साधितं भवति । श्मश्रूणीहोन्दतीति शिरउन्द-
नस्यापवादः । शुन्धीति क्षुरधारानिमार्जनेयं विशेषः । केश—प्यति । शीतोष्णाभिरद्भिरवर्धं कुर्वाणोऽक्षुण्वन्कुशली केशश्मश्रुलोम-
नखान्युदक्संस्थानि कुर्विति नापितानुशासनम् । आप्लु—मीति । तत आप्लुत्य स्नात्वेत्यर्थः । वाग्यत इत्यमन्त्रयन् । शिखेति उप-
वेशनप्रतिषेधः । एवमहःशेषं स्थित्वास्तमिते आचार्यसमीपे वरं ददामीति वाचं विसृजेत । वरद्रव्यमाह । गोमिथुनं दक्षिणा ।
ननु भिक्षुरयं कथं गोमिथुनसंभवः । उच्यते । यथास्य प्रावरणादिसंभवस्तथैतस्यापि । संव—शेत् । एवं गोदानं कृत्वा संवत्सरव्रत-
मादिशति वक्ष्यमाणेन विधिना रात्रौ व्रतादेशनानुपपत्तेरपरेद्युः कार्यमिति । अत्र भगवान्—'गौदानं नाम यत्प्रोक्तं चतुर्थं
व्रतमस्य तु । महानाम्न्यादिभिः सार्धं पौर्वापर्यं तु विद्यते ॥ अबालत्वाञ्जनन्यङ्क्ते निवेशोऽप्यस्य नेष्यते । केशशब्दोक्तिदेशेषु श्मश्रु-
शब्दमुदीरयेत् ॥ श्मश्रूणामेव सेकोऽत्र न केशानामितीरितम् । केशान्वपत्वित्यत्रापि श्मश्रूणीति समीरयेत् ॥ केशपक्षे च कर्तव्यं
श्मश्रुपक्षे समाचरेत् । क्षुराभिमर्शने मन्त्रे यत्क्षुरेणादिकेष्वपि ॥ श्मश्रूणि शुन्धीत्युक्त्वाथ शिरोमुखमुदीरयेत् । यः शीतोष्णाभिरि-
त्यादिमन्त्रो नापितशासनः ॥ तत्र केशश्मश्रुलोमनखानीति पदात्परम् । उदक्संस्थानि कुशलीकुर्वित्येतमुदीरयेत् ॥ ततः स्नाते
समीपस्थे तस्मिन्स्विष्टकृदादिकम् । उपरिष्टात्तनं तन्त्रमाचार्यस्तु समापयेत् ॥ शिष्यः स्नात्वा ततो वाचं नियम्या दिवसक्षयात् ।
तिष्ठेदस्तमिते सूर्ये गुरोरन्तिकमागतः ॥ वरं ददामीत्युक्त्वा च गोवृषौ गुरवे दिशेत् । असंभवे गोवृषयोर्भिक्षित्वा वा गुरोर्दि-
शेत् ॥ उत्तरेद्युर्गुरुस्तस्य वत्सरं व्रतमादिशेत् । सर्वासु व्रतचर्यासु प्रसिद्धं केशधारणम्' इति । स्मृतिसंग्रहे—'जाताधिकाराद्गोदानं

जन्माद्यब्दे तु षोडशे । चौलेन च समाख्यातं विधान्ते तत्र वै भवेत् ॥ गोदानं नाम यत्प्रोक्तं चतुर्थं व्रतमस्य तु । महानाम्न्या-दिभिः सार्धं पौर्वापर्यं तु विद्यते ॥ आसित्वा पश्चिमां संध्यामाचार्यस्य समीपतः । अहं वरं ददामीति वाचमेतामुदीरयेत्' इति ॥

अथ प्रयोगः । जन्मप्रभृति षोडशे वर्षे उदगयने शुक्लपक्षे चौलप्रकरणोक्ततिथ्यादिषु गोदानं नाम कर्म कुर्यात् । तत्रायं क्रमः—पूर्वेद्युराचार्यः कृतनित्यक्रियः कृतस्नानं ब्रह्मचारिणं सदक्षिणत उपवेश्य प्राणानायम्य तिथ्यादि संकीर्त्यास्य ब्रह्मचा-रिणो गोदानव्रतं कर्तुं तदङ्गभूतस्वस्तिवाचनाङ्कुरार्पणग्रहयज्ञाभ्युदयिकानि करिष्य इति प्रत्येकं संकल्प्य पूर्वोक्तप्रकारक्रमेण तानि कृत्वा परेद्युः कृतनित्यक्रियः कृतनित्यक्रियं ब्रह्मचारिणं पूर्ववदुपवेश्य कौतुकमानय्य पूर्वोक्तमुहूर्ते प्रागुक्तवदुपलेपाद्यग्निप्रतिष्ठाप-नान्तं कर्म कृत्वा पुनर्देशकालौ निर्दिश्य मया क्रियमाणे गोदानहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये । शेषं चौलवत्कृत्वा । ततो ब्रह्मचारिहःशेषं मौनीभवन्नीत्वा वन्दितसायंसंध्यो गुरोरन्तिकं गत्वा वरं ददामीति वाचं विसृज्य तस्मा अनड्वाहं गां च द-क्षिणात्वेन याचयित्वा दद्यात् । ततः परेद्युः संवत्सरपर्यन्तं गोदानव्रतमाचरेत्याचार्योक्तो ब्रह्मचारी संवत्सरपर्यन्तं केशश्मश्रूणि धृत्वा पूर्वोक्तब्रह्मचारिनियमेन गुरुसमीपे व्रतं चरित्वा कर्मान्ते कर्तव्यं स्वस्तिवाचनं पूर्ववत्कुर्यात् । इति श्रीनृसिंहीये प्रयोगपारि-जाते षोडशकर्मकाण्डे गोदानव्रतप्रकरणम् ॥

अथ समावर्तनप्रकरणम् ॥ रमेश तव भावनं निखिलकर्मसंभावनं पदाब्जयुगसेवनं सकलसौख्यसंसेवनम् । गुणेषु परिवर्धनं भवतु कीर्तिसंवर्धनं नृसिंह मम वर्तनं तव कथासमावर्तनम् ॥ अथ समावर्तनविधिरभिधीयते । तत्र ता-

यत्कालविशेषमाह कारिकाकारः—'वेदव्रतानि वा पारं नीत्वा ह्युभयमेव वा । व्रतपक्षे तु शब्दार्थमारण्याध्ययने कृते ॥ विद्यान्ते गुरुमाहाहं कमर्थं करवाणि ते । यमर्थमाह तं कृत्वा ततोऽनुज्ञामवाप्य च' इति । इदमत्र गृह्यम्—'विद्यान्ते गुरुमर्थेन निमन्त्र्य कृतानुज्ञस्य वा स्नानम्' इति । अस्यार्थस्तु वृत्तिकृता नारायणेनोपनयनप्रकरणे ब्रह्मचर्यकालोपदेशने स्पष्टीकृतः ॥ अत्र स्मृतिरूपेणाहाचार्यः—'पठित्वा चतुरो वेदांस्त्रीन्द्वौ चैकमथापि वा । तोषवेद्दक्षिणाभिस्तु गुरुं भक्त्या विचक्षणः ॥ धनं पित्रादिबन्धुभ्यः समाहृत्याथवा परात् । राजभ्यो वा गुरुं सम्यक्तोषयेत्स्नातको व्रती' इति । अत्र भगवान्—'अधीत्य वेदशास्त्राणि कृत्वा वेदव्रतानि च । चत्वारि गुरवे दत्त्वा यथाशक्ति च दक्षिणाम् ॥ ततस्तेनाभ्यनुज्ञातः समावर्तनमाचरेत्' इति । संग्रहकारोऽपि—'आहरिष्यामि कं तेऽर्थं भवतो वचनादिह । यथोक्तं हि करिष्यामि कृतार्थः स्यां गृहे त्विति ॥ तेनोक्तं च तथा कृत्वा स्नानं शिष्यः समाचरेत् । अलमर्थेन मे वत्स त्वद्गुणैरसि तोषितः । गृहाय त्वनुजानामीत्यनुज्ञातोऽपि वा चरेत्' इति । याज्ञवल्क्योऽपि—'गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया' इति । कूर्मपुराणेऽपि—'वेदं वेदौ तथा वेदान्वेदान्वा चतुरो द्विजः । अधीत्य चाधिगम्यार्थं ततः स्नायाद्द्विजोत्तमः' इति ॥ ❀ ॥ अत्र गुरवे दातव्यो वरो मनुना दर्शितः—'अपूर्वं गुरवे किंचिदुपकुर्वीत धर्मवित् । स्नास्यंस्तु गुरुणाज्ञप्तः शक्त्या गुर्वर्थमाहरेत् ॥ क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमन्ततः । धान्यं वासांसि शाकं वा गुरवे प्रीतिमाहरेत्' इति । अयं वरो गुरुप्रीत्यर्थो न तु विद्यानिष्क्रयार्थः । वेदाक्षरस्य मूल्यासंभवात् ॥ तथाच छन्दोगश्रुतिः—'यद्यप्यस्मा इमामद्भिः परिगृहीतां धनेन पूर्णां दद्यादेतदेव ततो भूयः' इति । तापनीय-

श्रुतिरपि—'गवद्वीपवती भूमिर्दक्षिणार्थं न कल्पते' इति । हारीतोपि—'एकमप्यक्षरं यत्तु गुरुः शिष्ये निवेदयेत् । पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा तनृणी भवेत्' इति ॥ अथ समावर्तनार्थं संपाद्यद्रव्याण्याह कारिकाकारः—'आचार्यायात्मने चैव मण्यादीन्युपकल्पयेत् । आचार्यायैव कल्प्यानि न लभेतोभयोर्यदि ॥ कुर्वीत स्वयमेवैतत्समावर्तनसंज्ञकम् । स्नात्वोदगयनाद्युक्त-मुक्तस्वस्त्ययनः स्वयम्' इति । इदमत्र गृह्यम्—'अथैतान्युपकल्पयीत समावर्तमानो मणिं कुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रजमुन्मर्दनमनुलेपनाञ्जनमुष्णीषमित्यात्मने चाचार्याय च यद्युभयोर्न विन्देताचार्यायैव' इति । अस्यार्थः—उपकल्पयीतेति शब्दोऽयं छान्दसः । समावर्त्यमानः समावर्तनं नाम संस्कारः तेन संस्क्रियमाण इत्यर्थः । अहते वाससी आच्छाद्येत्याद्युत्तरत्र वि-नियोगादेवोपकल्पने सिद्धे उपकल्पनवचनमात्मने चाचार्याय चैतान्येकादश द्रव्याण्युपकल्पयेदिति विधानार्थम् । यद्युभयोर्न विन्देत तदाचार्यायैव केवलायोपकल्पयेदिति । अत्राचार्यः—'आत्मने गुरवे च स्यादलाभे गुरवेऽपि वा । मण्याद्युष्णीषपर्यन्तं द्रव्याणामुपकल्पनम्' इति । भगवानपि—'स समावर्त्यमानस्तु पूर्वमेवोपकल्पयेत् । मण्याद्युष्णीषपर्यन्तान्संभारान्सकलानपि ॥ गोदानेनातिदिष्टत्वात्कर्मणोऽस्योत्तरायणे । पूर्वपक्षादियोगं च प्रतीक्ष्य ह्येतदाचरेत्' इति । पूर्वपक्षादीत्यादिशब्देन तिथ्यादयो गृ-ह्यन्ते ॥ ॥ अथ तिथ्यादिनिर्णयः ॥ श्रीधरीये—'वागीशादितिसौम्यपौष्णदिनकृन्मित्रोत्तरारोहिणीगोविन्देषु शशाङ्कभानु-गुरुविच्छुक्रांशवारादिषु । रिक्तां पर्व तथाष्टमीं प्रतिपदं मेषं च कीटं हरिं हित्वा शुद्धियुतेऽष्टमे ह्नि विमले कुर्यात्समावर्तनम्' ॥ वागीशः पुष्यः । आदित्यः पुनर्वसुः । सौम्यं मृगशीर्षं । पौष्णं रेवती । दिनकृद्धस्तः । मित्रोऽनूराधा । उत्तरास्त्र्युत्तराणि । रोहिणी

प्रसिद्धा। गोविन्दः श्रवणः। एतान्येकादशर्क्षाणि विहितानि। तथाह वसिष्ठः—'आदित्यसौम्यसावित्रमैत्रतिष्योत्तरात्रयम्। पौष्णश्रवणरोहिण्यः श्रेष्ठाः स्युः स्नानकर्मणि'। नृसिंहश्चाह—'त्रीण्युत्तराणि मैत्रेन्दुरोहिण्यादित्यपुष्यभाः। हस्तश्रवणपौष्णाश्च स्नानकर्मणि पूजिताः' इति॥ अथ वारांशकादय उच्यन्ते—शशाङ्केति। शशाङ्कश्चन्द्रः। भानुरादित्यः। गुरुर्बृहस्पतिः। वित् बुधः। शुक्रः प्रसिद्धः। एतेषां वारांशादिषु समावर्तनं कार्यम्। तथाच देवरातः—'सौम्यानामंशवारेषु शुभाः शेषेषु वर्जिताः' इति॥ अथ तिथयो विधीयन्ते—रिक्तेति। रिक्तास्तिथयश्चतुर्थीनवमीचतुर्दश्यः। पर्व अमावास्यापौर्णमास्यौ। अष्टमी प्रतिपच्च प्रसिद्धे। एताश्च हित्वा शिष्टास्तिथयः स्नाने विहिताः। तथाह देवरातः—'विच्छिद्रासु विरिक्तासु तिथिषु स्नानमाचरेत्' इति। अथ राशिविधिमाह—मेषं च कीटं हरिं हित्वेति। मेषवृश्चिकसिंहांस्त्यक्त्वा शिष्टा राशयः स्नाने शुभदाः। तथाह देवरातः—'नक्रगोयमकन्याश्च तौलिमीनौ सुपूजिताः। शुभयुक्ता यदि स्युस्ते शेषेषु स्नानमाचरेत्' इति। अथ लग्नगोचरमाह—शुद्धियुतेऽष्टम इति। लग्नस्याष्टमे राशौ सर्वग्रहरहिते सति। अह्नि विमले पूर्वाह्णे मध्याह्ने वेति। तथाह देवरातः—'आयारिभ्रातृगाः पापाः शुभाः केन्द्रत्रिकोणगाः। अशुभाश्च शुभाश्चैव अष्टमे वर्जिताः सदा॥ स्नानं मध्याह्नकाले तु होरायां प्रारभेच्छुभे। पूर्वाह्णे तदभावे तु कुर्यात्स्नानं यथाविधि' इति।—[भौमभानुजयोर्वारे नक्षत्रे च व्रतोदिते। अत्र व्रतोक्तकालनियमो नास्ति]॥ इति तिथ्यादिनिर्णयः॥ ॥ एवं तिथ्यादीन्विचार्य तत्र कर्तव्यविधिमाह कारिकाकारः—'प्रागुदीचीं दिशं गच्छेत्तस्यां वै यज्ञियस्य तु। शाखामीशानगां तस्याश्छित्त्वा प्रादेशसंमिताम्॥ आहृत्य समिधं भूमेरन्यत्र निदधाति

ताम् । दत्त्वा गां भोजयेद्विप्रान्गोदानोक्तं करोत्यथ ॥ स्नात्वा वाग्यत इत्यादि न कार्यमिह कर्मणि । पदान्यूह्यानि वक्ष्यत्र वाच्यं त्रायस्व मामिति ॥ मा मां हिंसीरिति ब्रूयाद्यथासमिति चापरम् । तेन म आयुपेत्येवमूह्यं मन्त्रद्वयेऽपि च ॥ मा म आयुरिति सन्यत्सर्वं गोदानवद्भवेत् । अत्राज्यभागौ नैवेष्टावित्युक्तं पूर्वमेव तु ॥ करञ्जबीजं यत्रैकं पिष्टेनोन्मृज्य तेन तु ॥ शीतोष्णैः स्नात आचान्तो वह्नेर्गत्वान्तिकं पुनः ॥ युवमित्यनया वस्त्रे आच्छाद्यावर्तयेच्चिमाम् । मन्त्रावृत्तिरियं दृष्टा वृत्तौ नारायणस्य तु ॥ आचम्य चाश्मनस्तेज इत्यङ्क्यात्सव्यमीक्षणम् । एतेनैव तु मन्त्रेण पश्चाद्दक्षिणमीक्षणम् ॥ कुण्डले चात्मनस्तेज इति श्रोत्रमलंकुरु । अनेनैव तु मन्त्रेण पश्चात्सव्यमलंकुरु ॥ कुङ्कुमाद्यनुलिप्ताभ्यां पाणिभ्यां पूर्वमाननम् । अनुलिप्य तदाङ्गानि पश्चात्प्रक्षालयेत्करौ ॥ अनातोऽसीति मन्त्रेण बध्नाति शिरसि स्रजम् । सकृदुक्तेन मन्त्रेण देवानामित्युपानहौ । आस्थाय छत्रमादद्याद्दिवश्छन्नासिमन्त्रतः । गृहीत्वा वैणवं दण्डं वेणुरक्षादिमन्त्रतः ॥ आयुष्यमिति सूक्तेन मणिं कण्ठे प्रबध्य च । सुवर्णमय इष्टोऽत्र मणिरित्याह वृत्तिकृत् ॥ नवाम्बरेण संवेष्ट्य शिरोऽथोपानहौ त्यजेत् । आहृत्य समिधं तिष्ठन्नग्नावाधाय मन्त्रतः ॥ स्मृतं च म इति ब्रूयादस्मृतं च म इत्यथ । तस्योपरि वदेत्तन्म उभयत्रमित्यपि ॥ द्वादशाप्येवमेवोक्त्वा यथापाठमथो परम् । मन्त्रेणैवं विधेनाग्नावाहितायां समिध्यथ ॥ उपविश्य दद्याद्ध्याद्न्याः प्रादेशसंमिताः । अत्रोपवेशनं प्राह वृत्तिकारः सहेतुकम् ॥ समाप्ते दशभिः कुर्वन्स्वाहाकारमृगन्ततः । परिषेचनपर्यन्तं कुर्यात्स्विष्टकृदादिकम्' इति । इदमत्र गृह्यम्—'समिधं त्वाहरेदपराजितायां दिशि यज्ञियस्य वृक्षस्याद्रांमन्नाद्यकामः पुष्टिकामस्तेजस्कामो वा ब्रह्मवर्चसकाम उपयातामुभयीमुभयकामो वोपरि समिधं कृत्वा गामन्नं च ब्राह्मणेभ्यः प्रदाय गौदानिकं कर्म

कुर्वीत आत्मनि मन्त्रान्संनमयेदेकक्रीतकेन शीतोष्णाभिरद्भिः स्नात्वा युवं वस्त्राणि पीवसा वसाथ इत्यहतेन वाससाऽऽच्छाद्याऽश्मनस्ते-जोसि चक्षुर्मे पाहीति चक्षुषी आञ्जयीत अश्मनस्तेजोसि श्रोत्रं मे पाहीति कुण्डले आबध्नीत—अनुलेपनेन पाणी प्रलिप्य मुखमग्रे ब्राह्मणोऽनुलिम्पेत् बाहू राजन्य उदरं वैश्य उपस्थं स्त्र्यूरू सरणजीविनोऽनार्तास्यनार्तोहं भूयासमिति स्रजमपि बध्नीत न मालोक्तां मालेति चेद्ब्रूयुः स्रगित्यभिधापयीत देवानां प्रतिष्ठे स्थः सर्वतो मा पातमित्युपानहावास्थाय दिवश्छन्नासीति छत्रमादत्ते वेणुरसि वानस्पत्योसि सर्वतो मा पाहीति वैणवं दण्डमायुष्यमिति सूक्तेन सुवर्णमणिं कण्ठे प्रतिमुच्योष्णीषं कृत्वा तिष्ठन्समिधमादध्यात् । स्मृतं निन्दा च विद्या च श्रद्धा प्रज्ञा च पञ्चमी । इष्टं दत्तमधीतं च कृतं सत्यं श्रुतं व्रतम् । यदग्ने सेन्द्रस्य सप्रजापतिकस्य सऋषिकस्य सऋषिराजन्यस्य सपितृकस्य सपितृराजन्यस्य समनुष्यस्य समनुष्यराजन्यस्य साकाशस्य सातीकाशस्य सानूकाशस्य सप्रतीकाशस्य सदेवमनुष्यस्य सगन्धर्वाप्सरस्कस्य सहारण्यैश्च पशुभिर्ग्राम्यैश्च यन्म आत्मन आत्मनि व्रतं तन्मे सर्वव्रतमिदमहमग्ने सर्वव्रतो भवामि स्वाहेति ममाग्ने वर्च इति प्रत्यृचं समिधोऽभ्यादध्यादि'ति । अस्यार्थः—समिधंत्विति । यज्ञार्हस्य वृक्षस्य याऽपराजितादिक् पूर्वोत्तरा ततो गृहीत्वा समिधमाहरेत् । यज्ञियस्येति वचनं होमार्थेयं समिदिति ज्ञापयितुम् । तेन तिष्ठन्समिधमादध्यादित्यत्र इमां समिधमादध्यादिति सिद्धम् । आर्द्रामित्यादि स्पष्टम् । ब्रह्मेत्यादि । उपवातां शुष्कामित्यर्थः । उभयीमित्येको भाग आर्द्रः अपरः शुष्क इत्यर्थः । उपरि समिधमित्यादि । आहुतां समिधं उपरि निदध्यान्न भूमौ । ततो ब्राह्मणेभ्यो गां दक्षिणां च दद्यात् । कर्माङ्गत्वेन भोजनं देयम् । ततो गोदानोक्तं कर्मेहापि कुर्यात् । कर्मग्रहणं कर्मैव कुर्यान्नाप्लुत्य वाग्यत इत्यादिनियमाः

कार्या इत्येवमर्थम्। इदं कर्म स्वयमेव करोति। समावर्त्यमान इत्यधिकाराद्द्विवचनाच्चेति। आत्मनि-येत्। मन्त्रानात्मवाचकान्कुर्यादिति। ऊह्यानि ब्रूमः। ओषधे त्रायस्व मां स्वधिते मा माहिंसीः। पवतेदमायुष्मान्जरदष्टिर्यथासं। तेन म आयुष इत्यत्र शिरोमुखं मा म आयुः प्रमोषीरिति। एकं-कृत्वा। करञ्जफलस्य यत्रैकं बीजं तदेकबीजकं तत्पेषयित्वा तेनोन्मर्दनं कारयेदिति शेषः। शीतोष्णाभिरद्भिः स्नात्वा युवंवस्त्राणिपीवसावसाथे इत्यहते वाससी आच्छाद्य। अश्मनस्तेजोसीति चक्षुषी आञ्जयीत। प्रतिनेत्रं मन्त्रावृत्तिरुक्ता द्विवचनस्य देवतापरत्वात्। सव्यं पूर्वमाञ्जयीत ततो दक्षिणं। 'सव्यं हि पूर्वं मनुष्या आञ्जते' इति श्रुतेः। प्रतिचक्षुर्मन्त्रावृत्तिः। अश्मनस्तेजोसि श्रोत्रं मे पाहीति कुण्डले आबध्नीत। स्वर्णकुण्डले इत्यर्थः। अत्र दक्षिणं पूर्वं पश्चात्सव्यं मन्त्रावृत्तिरुक्ता। अनुलेपनेन पाणी प्रलिप्य मुखमग्रे ब्राह्मणोऽनुलिम्पेत पश्चादपरं गात्रम्। कुतः। अग्रवचनात्। अनुलेपनं कुङ्कुमादि। बाहू राजन्यः अग्रेऽनुलिम्पेत्। उदरं वैश्यः अग्रेऽनुलिम्पेत्। उपस्थं स्त्री अग्रेऽनुलिम्पेत्। ऊरू सरणजीविनः अग्रेऽनुलिम्पेयुः। ये सरणेन शीघ्रगमनेन जीवन्ति दूतास्ते अग्र ऊरूः अनुलिम्पन्तीति हरदत्तः। अयं विधिः सार्वत्रिकः स्त्रीविधानात्। अनार्तेति मन्त्रेण स्रजमपि बध्नीत। अपिनह्येत् पिनद्धां कुर्यात्। न मालोक्तां मालाशब्दोक्तां स्रजं नापिनह्येत्। यद्येनां मालेति ब्रूयुः तत्र स्रगित्यभिधापयीताबध्नीत। देवानां प्रतिष्ठे स्थ इति मन्त्रेणोपानहावास्थाय उपानहौ चर्ममय्यौ ते आतिष्ठेत। असकृन्मन्त्रः द्विवचनयुक्तत्वान्मन्त्रस्य। ततश्छत्रमादत्ते वेणुरसीत्यादिना। आयुष्यमिति सूक्तेन मणिं कण्ठे प्रतिमुच्योष्णीषं कृत्वा तिष्ठन्त्समिधमादध्यादित्युत्तरेण संबन्धः। सूक्तेनेति सूक्तग्रहणमायुष्यमित्येतावान्मन्त्र इति निवृत्त्यर्थम्। कुतः। शङ्कावाक्यस्य परिपूर्ण-

तात् । आयुष्यमिति । आयुष्कामीयमित्यर्थः । तेन नेजमेष इत्यस्य खिलत्वादिति सूक्तग्रहणं सिद्धम् । मणिः सुवर्णमयः । उष्णीषं कृत्वा अहतेन वाससा शिरो वेष्टयेदित्यर्थः । तिष्ठन्—दध्यात् । तिष्ठद्ग्रहणमन्यत्रासीनस्य कर्माणि भवन्तीति ज्ञापनार्थम् । स्मृतं च मे अस्मृतं च मे तन्म उभयव्रतमिति द्वादशार्ध्यवसेवोक्त्वा ततो यदश्न इत्यादि यथासूत्रमित्येवमुपदिशन्ति । उपानहौ विसृज्य समिदाधानं कार्यम् । तथाच गौतमः—'सोपानत्क आसनाभिवादननमस्कारान्वर्जयेत्' इति देवतानमस्कारस्यापि तत्प्रतिषेधः किंपुनर्होमादीनाम् । समास्वेवर्चि इत्यत्रखिलस्यापि ग्रहणं भवति । अथैतस्य समाम्नायस्येत्यत्र समाम्नायग्रहणस्य वितानविशेषणत्वात् । समाम्नायस्य वितान इति कुतः । एतत्सूत्रे खिलानां पाठादिह च प्रतीकग्रहणात् । तस्मादशभिर्होम इति सिद्धम् । प्रत्यृचमिति व्याख्यातम् । ऋगन्ते स्वाहाकारं कुर्वन्नादध्यादित्यर्थः । आदध्यादिति प्रकृतेपि पुनरादध्यादिति वचनं पूर्वस्याधिकारनिवृत्त्यर्थम् । तेनोपविश्यादध्यान्न तिष्ठन्निति ॥ स्विष्टकृदादिहोमशेषं समापयेदिति ॥ अत्र भगवान्—'मन्त्रान्संनमयेदात्मनीत्युक्ते तत्र कर्मणि । कुर्वीत स्वयमेवेदं कर्माचार्यानपेक्षकः ॥ विधायाभ्युदयश्राद्धं पूर्वेद्युरपरेहनि । प्रातः समिधमाधाय कृतस्वस्त्ययनो द्विजैः ॥ यस्य यज्ञियवृक्षस्य स्ववासापेक्षया स्थितिः । प्रागुदीच्यां दिशि भवेत्तस्य च प्रागुदग्भवेत् ॥ या शाखा तद्वयामेकां छित्त्वा समिधमाहरेत् । योऽन्नाद्यकामः पुष्ट्यर्थी तेजस्कामोऽपि वा भवेत् ॥ आर्द्रां स छिन्द्यात्समिधं यस्त्विच्छेद्ब्रह्मवर्चसम् । शुष्कां छिन्द्यात्स समिधं यस्य तूभयकामता ॥ सत्वर्धशुष्कां समिधमाहरेदुभयेच्छया । आसामन्यतमां हुत्वा समिधं कामयोगतः ॥ भूस्पर्शवर्जिते देशे निधायोपरि कुत्रचित् । दत्त्वान्नं गां च विप्रेभ्यः कर्म गौदानिकं चरेत् ॥ तत्रोपलेपनाद्याज्य-

भागवज्ञे धुरस्तनम् । तन्त्रं कृत्वाथ गोदानं प्रकृतं चौलकर्मणि ॥ यथोपदिष्टं यत्कर्म तथापि स्वयमाचरेत् । केशशब्दे श्मश्रुश-ब्दानित्यादीनवधानतः ॥ एनमित्यस्य शब्दस्य स्थाने मामिति निर्दिशेत् । यद्यस्येत्यभिधातव्ये ममेत्येवमुदीरयेत् ॥ यथासदिति वाक्यं च यथासमिति निर्दिशेत्। तथाप्युत्यादिकं कर्म गोदानिकमपीह तु ॥ अनुष्ठेयमिति प्राहुराचार्याः कल्पकोविदाः । करञ्जेनै-कबीजेन संपिष्टेन फलेन तु ॥ उन्मृज्याङ्गं ततः स्नायान्मिश्रैः शीतोष्णवारिभिः । स्नात्वा चैवाग्निपार्श्वस्थो युवंवस्त्राणि पीवसा ॥ इत्याद्यसकृदुच्चार्य ततो वस्त्रयुगं नवम् । वसित्वोदकमाचम्य गृहीत्वा पाणिनाञ्जनम् ॥ अश्मनस्तेज इत्याद्यं मन्त्रं पाहीति संस्थि-तम् । उक्त्वाथ वाममञ्जीत नेत्रं पश्चात्तु दक्षिणम् ॥ तेनैव मन्त्रेणाञ्जीत ततः कर्णौ तु दक्षिणे । श्रोत्रं मे पाहिपर्यन्तमश्मनस्तेज-आदिकम् । मन्त्रमुक्त्वा क्रमाद्बध्या मणिनद्धं तु कुण्डलम् । अथानुलेपनालिप्तपाणिभ्यां प्रथमं मुखम् ॥ अनुलिप्येतराण्यङ्गान्यनुलि-म्पेत्तु पश्चिमम् ॥ ततोऽनार्तोस्यनार्तोऽहं भूयासमिति मन्त्रतः ॥ स्रजं च मूर्ध्नि बध्नीयान्नतु मालेति तां वदेत् । तां स्रजं चेत्प्र-मादेन ब्रूयुर्मालेति केचन ॥ तदैव तां स्रगित्येवमभिधाय द्विजोत्तमः । ततो मूर्ध्नि च बध्नीयात्स्रजं तामवधानतः ॥ ये देवानां प्रतिष्ठेस्थ इत्यादि खिलसंभवम् । मन्त्रं तं सकृदुच्चार्य अध्यारोहेदुपानहौ ॥ पूर्वं दक्षिणपादेन समारोहेदुपानहम् । पश्चात्सव्येन पादेन समारोहेदिति क्रमः ॥ ततश्छत्रं दिवश्छादयसीति मन्त्रेण धारयेत् । वेणुरस्यादिमन्त्रेण वैणवं दण्डमुद्वहेत् ॥ मूक्तमायुष्यमित्याद्यं खि-लोद्भवमुदीर्य तु । ग्रीवायां मणिमाबध्यान्मूर्धानं नववाससा ॥ आवेष्ट्य पश्चात्पादाभ्यामुन्मुच्योपानहौ स्थितः । या पूर्वं यज्ञिया-द्वृक्षाच्छिन्नैका समिदाहृता ॥ विन्यस्तोपरिदेशे तामादाय समिधं करे । स्मृतमित्यादिकं मन्त्रं गृह्ये स्वाहान्तमीरितम् ॥ उच्चार्य

पक्षाशादध्यादन्वैनं प्रक्रियेष्यताम् । स्मृतं निन्दा च विद्या चेत्यादिमन्त्रकमोदितान् ॥ शब्दान्द्वादश संस्मृत्य मनसा प्राक् ततः परम् । स्मृतं च मे अस्मृतं च मे तन्म उभयव्रतम् ॥ इत्युच्चार्यैवमेवोक्त्वा निन्दाद्यपि यथाक्रमम् । ततो यदग्ने सेन्द्रस्येत्याद्यं मन्त्रं यथोदितम् ॥ व्रतो भवामि स्वाहेति पर्यन्तं समुदीर्य च । पश्चात्समिधमादध्यात्तिष्ठन्नग्नौ विधानतः ॥ ममाग्नेवर्च इत्याद्यं नवर्चमिह दैविकम् । दधमीमृचमर्वाञ्चमिन्द्रमित्यादिकां क्रमात् ॥ उच्चार्य प्रत्यृचं तिष्ठन्नादध्यात्समिधो दश । अत्र प्रत्यृचमित्युक्तेः स्वाहाकारात्पुरैव तु ॥ ऋगन्ते समिधं क्षिप्त्वा पश्चात्स्वाहेत्युदीरयेत् । उपविश्य ततः कृत्वा स्विष्टकृद्धोमपूर्वकम् । उपरिप्राशनं तत्रं पुण्याहं वाचयेत्ततः' इति ॥ इति होमविधिः ॥ ॥ ततः कर्तव्यमुच्यते । तत्र कारिका—'ततः संकल्पयेन्नक्तं न स्नामीत्युत्तराण्यपि' इति । इदमत्र सूत्रम्—'तस्यैतानि व्रतानि भवन्ति न नक्तं स्नायान्न नग्नः स्नायान्न नग्नः शयीत न नग्नां स्त्रियमीक्षेतान्यत्र मैथुनाद्वर्षति न धावेन्न वृक्षमारोहेन्न कूपमवरोहेन्न बाहुभ्यां नदीं तरेन्न संशयमभ्यापद्येत' इति । अस्यार्थः—उपदेशादेव व्रते सिद्धे इदं वचनं नक्तं न स्नामीत्येवं संकल्पयेदित्येवमर्थम् । ततश्च नग्नो न स्नामीत्येवमेवोत्तरत्र योज्यम् । तथाच संग्रहे—'एतानि वक्ष्यमाणानि शास्त्रतो नियतव्रतः । आशरीरं व्रतानीह स्नातकस्य भवन्ति च ॥ स्वजायामपि नग्नां तु नेक्षेतान्यत्र मैथुनात् । नचान्यत्र प्रसङ्गोऽस्ति मातृतुल्याः परस्त्रियः ॥ अन्यांश्च प्राणसंशयान्नाभ्यापद्येत । अर्थसंशयाभ्यापादने न दोषः । यस्मादित्थं श्रूयत इत्यर्थः । वर्षति न धावेदिति प्रतिषेधः प्राणसंशयत्वज्ञापनार्थः । अत्र भगवान्—'न स्नायान्नक्तमित्याद्यं विहितं स्नातकव्रतम् । तत्तत्संकल्प्य पूर्वं तु विधिना सुखमाचरेत्' इति । एतत्समावर्तनं पूर्वोक्तमहानाम्न्यादिव्रत-

चतुष्टयस्य लोपपक्षे शुभेदिने तानि प्रायश्चित्तपूर्वकं तस्मिन्नेव दिवसे कृत्वा कर्तव्यम् । अधिकारिणा कर्तव्यत्वाद्वचनाच्च । तत्र भगवान् शौनकः—'व्रतानि विधिवत्कृत्वा स्वशाखाध्ययनं चरेत् । अकृत्वाभ्यस्यते येन स पापी विधिघातकः ॥ प्रत्येकं कृच्छ्रमेकैकं चरित्वाज्याहुतीः शतम् । हुत्वा चैव तु गायत्र्या स्नायादित्याह शौनकः' इति । व्यासोऽपि—'वेदव्रतानि कृत्वैव तथैवारण्यकव्रतम् । स्वशाखाविहितं सर्वं कृत्वा वेदमुपक्रमेत् ॥ अकृत्वेमानि सर्वाणि वेदो ह्यभ्यस्यते यदि । प्रायश्चित्तानि कृत्वैव व्रतान्यपि तथा क्रमेत् ॥ गौदानिकं व्रतं कृत्वा समावर्तनमाचरेत्' इति ॥ ॥ एतत्प्रायश्चित्तमाह देवलः—'कालातिक्रमणे कुर्यात्प्रायश्चित्तं विधानतः । कृच्छ्रं द्वादशरात्रं तु हुत्वा चाज्याहुतीः शतम् ॥ अष्टाविंशतिमष्टौ वा क्रमात्कुर्याद्व्रतानि हि । व्यत्यये यावदभ्यस्तं वेदं तावत्पुनः पठेत्' इति । यत्तु मनुनोक्तम्—'वेदोदितानां नित्यानां कर्मणां समतिक्रमे । स्नातकव्रतलोपे तु प्रायश्चित्तमभोजनम्' इति, तत्तु बुद्धिपूर्वविषयम् ॥ इति व्रतलोपप्रायश्चित्तम् ॥

अथ ब्रह्मचारिव्रतलोपप्रायश्चित्तम् ॥ एतत्सर्वं शौचादिधर्मलोपप्रायश्चित्ते सति कर्तव्यं, 'शुचिना कर्म कर्तव्य'मिति वचनात् । तत्र बोधायनः—'अत्र शौचाचमनसंध्यानन्दनदर्भभिक्षाग्निकार्यराहित्यशूद्रादिस्पर्शननिन्दितगृहान्नभोजनाभक्ष्यभक्षणपर्युषितभोजनकौपीनकटिसूत्रयज्ञोपवीतमेखलादण्डाजिनविरहदिवास्वापछत्रधारणपादुकाद्यारोहणवनमालाधारणोद्वर्तनानुलेपनाञ्जनजलक्रीडाद्यूतनृत्यगीतवाद्याद्यभिरतिपाखण्डादिसंभाषणब्रह्मचर्यव्रतलोपादिसकलदोषपरिहारार्थं ब्रह्मचारी कृच्छ्रत्रयं चरित्वा महाव्याहृतिहोमं कुर्यात् । तत्र प्रथमं व्यस्तसमस्तव्याहृतिभिश्चतस्र आज्याहुतीर्हुत्वा महाव्याहृतिहोमः कार्यः ॥ भूरग्नये च पृथिव्यै च

महतेच स्वाहा। अग्नये पृथिव्यै महत इदं०। ॐभुवो वायवे चान्तरिक्षाय च महते च स्वाहा। वायवेन्तरिक्षाय महत इदं०। सुव-रादित्याय च दिवे च महते च स्वाहा। आदित्याय दिवे महत इदं०। ॐभूर्भुवः सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा। चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यो महत इदं०। ॐपाहि नो अग्नएनसे स्वाहा अग्नय एनस इदं०। ॐपाहिनो विश्ववेदसे स्वाहा। विश्ववेदसइदं०। ॐयज्ञं पाहि विभावसो स्वाहा विभावसव इदं०। ॐसर्वं पाहि शतक्रतो स्वाहा शतक्रतव इदं०। ॐपुनरूर्जा निवर्तस्व पुनरग्न इषा-युषा। पुनर्नः पाहि विश्वतः स्वाहा। अग्नय इदं०। ॐसह रय्या निवर्तस्वाग्ने पिन्वस्व धारया। विश्वप्स्न्या विश्वतस्परि स्वाहा। अग्नय इदं०। पुनर्व्याहृतिभिर्हुनेदिति। एतदल्पधर्मलोपे प्रायश्चित्तम्॥ ॥ धर्मलोपबाहुल्ये प्रायश्चित्तविशेषमाह ऋग्विधान-कारः शौनकः—'ततो धिया जपेन्मन्त्रं लक्षं चैव शिवालये। ब्रह्मचारिणो धर्मं च न्यूनं चेत्पूर्णमेव हि' इति। इति ब्रह्मचारि-धर्मलोपे प्रायश्चित्तम्॥ ॥ एवंविधस्य समावर्तनस्य फलमाह गृह्यकारः—'महद्वै भूतं स्नातको भवतीति विज्ञायते' इति। अस्यार्थः—स्नातको हि महद्भूतं श्रूयते। कथं पुनः स्नातकस्य महत्त्वम्। उच्यते—'एतैश्चापि मनुष्यैश्च तिर्यग्योनिभिरेव च। गृहस्थः सेव्यते यस्मात्तस्माच्छ्रेष्ठो गृहाश्रमी' इति स्मृतेः 'यः स्नातकः स भवति महान्' इति श्रुतेः। 'पृथिव्यादिपञ्चकवदुप-कारान्करोति यत्। देवा मनुष्याः पितरः सर्वे चैनं समाश्रिताः। विद्या विद्यार्थिनश्चापि शिष्याः शुश्रूषकास्तथा॥ आहुर्हि वेद-विज्ञानपूर्वं मन्वादयोपि च। स्नातकस्यैव माहात्म्यं महाभूतमयं यतः॥ यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः। तथा गृह-स्थमाश्रित्य सर्वे जीवन्ति भिक्षुकाः' इति स्मृत्यन्तराच्च॥

अथास्मिन्कर्मणि विनियुक्तमन्त्राणामर्थः कथ्यते ॥ अत्र आयुर्धूपीत्यादयस्त्रयो मन्त्राः प्रजापतेनत्वदिति च चौले व्याख्याताः । युवं वस्त्राणीति—मन्त्र उपनयने व्याख्यातः ॥ नेत्राञ्जने अश्मनस्तेजोसीति । हे अञ्जन, त्वं अश्मनः पात्ररूपस्य पाषाणस्य संबन्धि तेजः सारोसि । त्वं मे चक्षुः पाहि । चक्षुरित्येकवचनं द्वयोरप्युपलक्षणम् । चक्षुषी पाहि रक्ष ॥ ॥ कुण्डलधारणे । अश्मनस्तेजोसीति । हे कुण्डल मणिरूप, शिलायास्तेजः सारोसि । तत्त्वं मे श्रोत्रं श्रोत्रे पाहि रक्ष ॥ ॥ स्रक्धारणे । अनातास्यनाताहं भूयासमिति । हे स्रक्, त्वं अनार्ता असि अदुःखितासि । अहमपि त्वद्धारणादनार्तः सुखी भूयासम् ॥ ॥ उपानदारोहणे । देवानां प्रतिष्ठे स्थः सर्वतो मा पातमिति । हे उपानहौ, युवां देवानां स्थानं गन्तुं प्रतिष्ठे प्रस्थानसाधनभूते स्थः भवथः । ते युवां सर्वतः कण्टकादिभ्यः मा मां पातं रक्षतम् ॥ ॥ छत्रधारणे । दिवश्छद्मासीति—हे छत्र, दिवः आकाशस्य संबन्धिनः आतपवर्षादेः । छद्मासि आच्छादनमसि ॥ ॥ दण्डधारणे । वेणुरसि वानस्पत्योसि सर्वतो मा पाहीति—हे दण्ड, त्वं वेणुरसि तद्विकारो वैणवोसि । वानस्पत्यः वनस्पतिसंबन्ध्यसि । सर्वतो गोसर्पादिभ्यो मा मां पाहि रक्ष ॥ ॥ कण्ठे हिरण्यमणिधारणे । आयुष्यमिति सूक्तम्—आयुष्यं आयुषो निमित्तं वर्चस्यं वर्चसो निमित्तं रायस्पोषं धनस्य पोषयितृ औद्भिदं उद्भिद्य जायत इत्युद्भिदं उद्भिदमेवौद्भिदं वर्चस्वदीप्तिमत् एवंभूतमिदं हिरण्यं जैत्राय जयाय मम इमां तनुं आविशतात् आविशतु असानलंकरोतु ॥ ॥ उच्चैर्वाजीति—उच्चैर्भूता वाजिनो यत्र तदुच्चैर्वाजि उच्चैर्भूतानामश्वानां प्रापयितृ । पृतनाषाट् पृतनां शत्रुसेनां सहते अभिभवतीति पृतनाषाट् । सभासाहं सभाभिभवितृ । धनंजयं धनानां जेतृ । तदिदं हिरण्यमेवंभूतं । न चैतावत् किंतु सर्वाः

समस्ताः समग्राः संपूर्णा ऋद्धयः अन्नस्त्रधनादिसमृद्धयः अस्मिन् हिरण्ये समाहिताः प्रतिष्ठिताः ॥ ॥ शुनमहमिति—अहं हिरण्यस्य शुनं सुखनामैतत् सुखकरं नाम सुवर्णं काञ्चनमित्यादिकं जग्रभ जग्राह । लोडर्थे लिट् । 'हृग्रहोर्भश्छन्दसि' इति भः । अहं गृह्णामि उच्चारयामि । पितुर्नामेव यथा पुत्रः पितुर्नामैव स्नेहात्पुनःपुनः कीर्तयति तद्वत् । तेन मणिरूपेण मां सूर्यत्वचं सूर्यवदुज्ज्वलत्वं च अकरं अकरवम् । तथा पूरुषु मनुष्येषु मां प्रियमकरवम् । हिरण्यधारणाद्धि पुमान्दीप्यते लोकप्रियश्च भवति ॥ ॥ सम्राजं चेति—हे इन्द्र, या च मे ध्रुवा अनपायिनी अभिष्टिः पुत्रपश्वादिविषया प्रार्थना या च राष्ट्रस्य मुखे लक्ष्मीः तया अभिष्ट्या लक्ष्म्या च मां सम्राजं सम्यक् दीप्तः सम्राट् तं विराजं विविधं दीप्तो विराट् तं च । आधिपत्यस्यावान्तरविशेषवाचकौ सम्राड्विराडिति शब्दौ । साम्राज्यं भौज्यमित्यादौ दर्शनात् । संसृज संयोजय ॥ ॥ अग्नेः प्रजातमिति—अग्नेः परिप्रजातं सर्वतो निर्गतं यद्धिरण्यं तत् मर्त्येष्वमृतं अधिजज्ञे । इह मर्त्यानां हिरण्यस्यामृतत्वं आनन्दाविर्भावहेतुत्वात् । 'अमृतं हि वै हिरण्यम्' इति श्रुतेश्च । अमुत्रापि अमृतत्वहेतुत्वाद्धिरण्यममृतम् । 'हिरण्यदा अमृतत्वं भजन्ते' इति श्रुतेः । एवमुक्तलक्षणमेतद्धिरण्यं यो वेद तत्त्वतो यो जानाति स इत् स एव एनदर्हति अस्य योग्यः । एतद्यो बिभर्ति तस्य जरामृत्युर्भवति जरानाशो भवति । हिरण्यालंकारवान्पुरुषो जराक्रान्तोपि लोके युवेव भवति ॥ ॥ यद्वेद राजेति—यद्धिरण्यं वरुणादयो विदन्ति तद्धिरण्यं मे मम वर्चसे आयुषे च भवतु ॥ ॥ न तद्रक्षांसीति—रक्षांसि तद्धिरण्यं प्रति न चरन्ति । पिशाचाश्च न चरन्ति । यदेतद्धिरण्यं देवानां प्रथमजं ओजो हि दाक्षायणं दाक्षायणी नाम गौरी तत्संबन्धि तया प्रथमं धृतत्वात् । एतादृशं हिरण्यं यो बिभर्ति स देवेषु

मध्ये आत्मनः दीर्घमायुः कृणुते । मनुष्येषु मध्ये तद्यो निभर्ति स एवात्मनो दीर्घायुः कृणुते ॥ आयुष्यमिति पूर्वस्यामृच्युक्तत्वात् ॥ ॥ यदाबध्नन्निति—दाक्षायणास्तद्गोत्रजाः सुमनस्यमानाः । भृशादिरयम् । सुमनायमानाः सन्तः शतानीकाय शतानीकनाम्ने महाजितपुनस्तस्य रक्षणार्थं तदङ्गेष्वित्यध्याहर्तव्यम् । तदङ्गेषु तद्धिरण्यमाबध्नन् आबद्धवन्तः तत् शतशारदाय शतसंवत्सर जीवनाय मे अङ्गेषु आबध्नामि । अथ बन्धने सति आयुष्मान् जरदष्टिः जीर्णावस्थां प्राप्तः असत् आस ॥ ॥ घृतादुल्लुप्तमिति—घृतादुरु घनादपि महत् तस्य हिरण्यलभ्यत्वात् लुप्तं भासकं 'लुप भासने' इत्यस्माद्धातोः क्तप्रत्ययः । अथवा घृतादुर्लुप्तमिति पाठे घृतादपि लुप्तं दीप्तं मधुमत् मध्वादिसंपादकं । धनेन मध्वादीनां संपादयितुं शक्यत्वात् । धनंजयं शत्रूणां धनानां जेतृ धरुणं धार्यं धारयिष्णु सर्वस्य धारणशीलं एवंभूतं सुवर्णं हे सुवर्ण, सपत्नान् मम शत्रून् मत्तो निकृष्टांश्च कृण्वत् कुर्वत् वृणक्षि घृणक्षि । वधकर्मायं वृणक्षि । पिबं शम्बरमित्यादौ तथादर्शनात् । लोडर्थे लङ् हल्ङ्यादिलोपः । 'बहुलं छन्दस्यमाङ्योगेपि' इत्यडभावः । जहीत्यर्थः । महते सौभगाय सौभाग्याय सं मां मम कण्ठे आरोह ॥ ॥ प्रियं मा कुर्विति—हे सुवर्ण, देवेषु द्योतमानेषु मध्ये त्वद्धारणाद्दानाद्वा मा मां प्रियं स्नेहपात्रं कुरु । तथा राजसु मध्ये मां प्रियं कुरु । विश्वेषु भूतेषु मां प्रियं कुरु । गोत्रेष्विति पाठे मत्संबन्धिकुलेषु च मां प्रियं कुरु । त्वदीयया रुचा कान्त्या मयि रुचं धेहि निधेहि ॥ ॥ अर्वाञ्चमिति—अमुतः अमुष्माद्दिवः अर्वाञ्चमभिमुखमिन्द्रं हवामहे आह्वयामः । यो गोजित् पणिभिरपहृतानां दैवगवीनां जेता धनजित् शत्रुधनानां जेता अश्वजित् अश्वानां जेता हे हरिवः हरिद्वर्णाश्ववन् इन्द्र, नोऽस्माकं इमं यज्ञं विहवे विविधाह्वाने सति जुषस्व । अ-

क्षिन्यन्ते सा तां मेदिनं हूयमानानां समिदादीनां रसो मेदः तद्धन्तं कुर्मः ॥ ॥ तिष्ठन्समिधमादध्यादित्यत्र मन्त्रः—स्मृतं निन्दा च विद्या च श्रद्धा प्रज्ञा च पञ्चमी । इष्टं दत्तमधीतं च कृतं सत्यं श्रुतं व्रतम् ॥ स्मृतं च म इति—स्मृतं सद्वस्तुस्मरणम् अस्मृतं सद्वस्तुस्मरणाभावः । मे मम तदुभयव्रतं भवतु । निन्दा असच्छास्त्रादिषु अनिन्दा सच्छास्त्रादिषु । तन्म इत्यादि समानम् । विद्या वेदितव्यस्य ज्ञानम् अविद्या अवेदितव्यविषयमज्ञानम् । श्रद्धा कर्तव्यविषया भक्तिः अश्रद्धा निषिद्धविषयेऽनादरः । प्रज्ञा प्रकृष्टं ज्ञानमात्मविषयम् अप्रज्ञा तद्विपरीतस्फुरणम् । इष्टं यागो देवपूजा च अनिष्टं तदन्यथाकरणम् । दत्तं पात्रे दानं अदत्तं अपात्रेष्वदानम् । अधीतं गुरुमुखादध्ययनं अनधीतं इतरेभ्यः पुस्तकादिना वाध्ययनम् । कृतं विहितानुष्ठानं अकृतमविहितानलुष्ठानम् । सत्यं यथादृष्टार्थं असत्यं प्राणात्ययादिविषये अन्यथावचनम् । श्रुतं सच्छास्त्रश्रवणम् अश्रुतमसच्छास्त्रायश्रवणम् । व्रतं वेदोक्तानुष्ठानेषु नियमः अव्रतं तदन्येष्वनियमः ॥ यदग्ने सेन्द्रस्येति—अग्नेश्छान्दसो विसर्जनीयस्य लोपः । सेन्द्रस्येत्याद्यग्निविशेषणम् । इन्द्रादिसहितस्याग्नेः । 'समग्ने व्रतपा असी'त्यादिषु दृष्टं यद्व्रतं तन्म इत्यादि योजना । तत्रेन्द्रस्य व्रतं देवानां प्रीणनम् । प्रजापतेर्व्रतं सस्रष्टजगद्धितचिन्तनम् । ऋषीणां व्रतं तपःसहत्वम् । ऋषिराजन्या वसिष्ठादयः तेषामपि तत्रैव प्रकर्षः । पितॄणां व्रतं नियतभोक्तृत्वं पितरः श्राद्धादिषु दत्तमेव भुञ्जते । पितृराजन्यो यमः तस्य व्रतं समत्वम् । समनुष्यस्य मनुष्याणां व्रतं स्वस्वजातिविहितधर्मानुवर्तनम् । मनुष्यराजन्यः राष्ट्राधिपतिः राजन्यस्य व्रतं प्रजापरिपालनमेव । साकाशस्य आकाशस्य व्रतं अवकाशदानम् । अतीकाशादयः आकाशस्यावान्तरभेदाः । तेषां भेदानामप्यवकाशप्रदानमेव व्रतम् ।

अथवा आकाशाभावे अग्नेः पाद्त्वाभावात् । सातीकाशस्य अतीकाशा गवाक्षादयो गृहेषु तत्सहितस्य । सानूकाशस्य अवान्तरगवाक्षसहितस्य । सप्रतीकाशस्य प्रतीकाशसदृशस्य आत्मसहिताभ्यन्तरसहितस्य । आहवनीयादिमूर्तिभेदविवक्षयेदं विशेषणम् । सदेवमनुष्येत्यादिविशेषणचतुष्टयं स्पष्टम् । द्विविधपशुसाहित्यं हविर्विवक्षया । एवमिन्द्रादिभिः सहितस्याग्नेः यद्व्रतं यच्च मे आत्मन आत्मनि व्रतं अयाचितव्रतं आचार्येण प्रेषितस्य तदुपयोगिनोऽर्थान्तराहरणादि तत्सर्वं व्रतं एवमहं सर्वव्रत उक्तैः सव्रतस्तद्वान् भवामि । हे अग्ने, तुभ्यं स्वाहा । परसमिदाधानं तदेवंभूतस्य मम भवत्वितीदंशब्दार्थः ॥ ॥ दशसमिदाधाने । ममाग्न इति । हे अग्ने, विहवेषु विविधमाहूयन्ते येषु शूरा इति विहवाः संग्रामाः । अथवा विविधं यागार्थं देवा आहूयन्ते येष्विति विहवा यज्ञास्तेषु विहवेषु संग्रामेषु यज्ञेषु वा वर्चो दीप्तिः त्वदनुग्रहान्ममास्तु । वयं तु त्वा इन्धानास्त्वां समिद्भिर्दीपयन्तो वयं च त्वां तव तन्वं शरीरं पुषेम हविर्भिर्वर्धयेम । अपिच चतस्रः प्रदिशः प्रकृष्टा दिशः । लाक्षणिकप्रयोगोयं मञ्चाः क्रोशन्तीतिवत् । तत्रस्था जनाः मह्यं मदर्थं नमन्तां प्रह्वीभूता भवन्तु । वयं च अध्यक्षेण ईश्वरेण त्वया पृतना पृतनां जयेम जेतुं समर्था भवेम ॥ ॥ मम देवा इति—इन्द्रवन्तः इन्द्रेण सहिता मरुतो विष्णुरग्निश्च एते सर्वे देवाः विहवे संग्रामे यज्ञे वा मम सन्तु ममैव साधका भवन्तु । तथा मम अन्तरिक्षं उरुलोकं लोक्यतेऽनेनेति लोकः प्रकाशः बहुप्रकाशमस्तु । अपिच अस्मिन्कामे कामयितव्ये फले निमित्तभूते सति वातो वायुः मह्यं पवतां अनुगुणं प्रवातु ॥ ॥ मयि देवा इति—देवाः सर्वे मयि द्रविणं आयजन्तामाभिमुख्येनागमयन्तु । मह्यं ददत्वित्यर्थः । अपिच आशीः आशंसनीयं यज्ञफलं मयि अस्तु । देवानां हूतिर्ह्वानं अस्मिन्निति दे-

वहूतिर्यज्ञः स मय्यस्तु । अपिच दैव्याः देवानां संबन्धिनो दैव्याः होतारः साधु होमनिष्पादकाः मदीया ऋत्विजः पूर्वेऽन्यदीयऋत्विग्भ्यः प्रथमभाविताः सन्तः वनुपन्त देवान्संभजन्तु । वयं च तन्वा शरीरेण अरिष्टा अहिंसिताः सुवीराश्च स्याम भवेम ॥ ॥ मह्यं यजन्त्विति—हे ऋत्विजः, मम संबन्धीनि यानि हव्या हवींषि चरुपुरोडाशादीनि सन्ति तैर्हविर्भिः मह्यं मदर्थं यजन्तु यागं कुर्वन्तु । तथा मे मनस आकूतिः संकल्पनमभीष्टप्रार्थनं सा सत्या यथार्थास्तु । कतमच्चन किमपि एनः पापं अहं मानिगां मायासिषम् । अपिच हे विश्वेदेवासः सर्वे देवा नोऽस्माकं अधिवोचत विवादादिषु पक्षपातेन ब्रूत ॥ ॥ दैवीः षळुर्वीरिति—हे षळुर्वीः षट्संख्याकाः उर्वीः उर्व्यः देव्यः एताश्चान्यत्राम्नायन्ते 'पण्मोर्वीरंहसस्पाति'ति मन्त्रे । उरु बहु विस्तीर्णं धनं नोऽस्माकं कृणोत कुरुत । हे विश्वेदेवासः सर्वे देवाः, यूयं च इहास्मिन्धने प्राप्तव्ये वीरयध्वं विक्रमयत । यथा वयं तद्धनं लभेमहि तथा वीर्यवन्तो यूयं प्रयतध्वम् । अपिच वयं प्रजया पुत्रादिरूपया माहास्महि मापरित्यज्येमहि । तनूभिः शरीरैश्च मापरित्यजेमहि । अस्मान्कदाचिदपि पुत्रादयः शरीरादयश्च मापरित्याक्षुः । तथा हे राजन्स्वामिन् सोम, द्विषते । षष्ठ्यर्थे चतुर्थी । अप्रीतिं कुर्वतः शत्रोः मा रधाम यथा मा वशं प्राप्नुयाम तथा त्वं कुरु ॥ ॥ अग्ने मन्युमिति—हे अग्ने, परेषां शत्रूणां मन्युं क्रोधं प्रतिनुदन् प्रतिमुखं प्रेरयन् तिरस्कुर्वन् अदब्धः केनाप्यहिंसितः गोपाः गोपायिता ईदृशस्त्वं नोऽस्मान् परिपाहि परितः सर्वतो रक्ष । प्रत्यञ्चः प्रतिनिवर्तमानास्ते शत्रवः निगुतः गुद अव्यक्ते शब्दे अव्यक्तं शब्दं नितरां कुर्वन्तः पुनर्यन्तु स्वकीयं स्थानं गच्छन्तु । अपिच प्रबुधां प्रबुध्यमानानां एषां शत्रूणां चित्तं ज्ञानसाधनं मनः अमा सह युगपदेव विनेशत् विनश्यतु । प्रत्ये-

कामिप्रायेणैकवचनम् ॥   ॥ धाता धातृणामिति—भुवनस्य कृत्स्नस्य भूतजातस्य धातृणां स्रष्टॄणामपि धाता स्रष्टा प्रजापतिः पालयिता च इन्द्रः त्रातारं सर्वेभ्यो रक्षितारं अभिमातिषाहं अभिमातीनां शत्रूणां साहं सोढारं अभिभवितारं तं देवं इन्द्रं अविताराऽवा स्तौमीति शेषः । उभा उभौ अश्विना अश्विनौ बृहस्पतिश्च एतत्प्रमुखाः सर्वे देवाः अनुष्ठीयमानमिमं यज्ञं यजमानं च न्यर्थान्निकृष्टार्थात्पापात् पान्तु रक्षन्तु ॥   ॥ उरुव्यचा न इति—उरुव्यचाः विस्तीर्णव्यापनः महिषो महान् पुरुहूतो बहुभिर्यजमानैराहूतः पुरुक्षुः पुरु बहून् शत्रून् क्षिणोति नाशयतीति पुरुक्षुः । यद्वा बहुभिः शस्यमानः स्तूयमानः ईदृश इन्द्रः । अस्मिन् हवे यज्ञे हूयन्तेऽस्मिन्हवींषीति हवो यज्ञः तस्मिन्नोऽस्मभ्यं शर्म सुखं यंसत् यच्छतु ददातु । हे हर्यश्व हरिद्वर्णोऽश्वो यस्य स हर्यश्वः तस्य संबोधनं हे हर्यश्व इन्द्र, स त्वं नोऽस्माकं प्रजायै । द्वितीयार्थे चतुर्थी । प्रजां पुत्रपौत्रादिकां मृळय सुखय । नः अस्मान् मा रीरिषः मा हिंसीः । मा च पराक्षाः अस्मान्मा परित्याक्षीः ॥ ॥ ये नः सपत्ना इति—नोऽस्माकं ये सपत्नाः शत्रवः ते अप भवन्तु अपकृष्टा भवन्तु । तान्सपत्नान् इन्द्राग्निभ्यां हविषा स्तुत्या च प्रसन्नाभ्यां अनुगृहीता वयं अपबाधामहे निकृष्टतरं विनाशयामः । किंच वसवो रुद्रा आदित्याश्च मा मां उपरि स्पृशं उन्नतपदस्य संस्प्रष्टारं सर्वेभ्यः श्रेष्ठं अक्रन् कुर्वन्तु । तथा उग्रमुदीर्णं चलं चेत्तार सर्वस्य ज्ञातारं अधिराजं सर्वेषामधीश्वर च मां अक्रन्कुर्वन्तु ॥ ॥ अर्वाञ्चमिन्द्रमिति पूर्वमायुष्यसूक्तान्ते व्याख्यातम् ॥ इति समावर्तनमन्त्रार्थः ॥

---

पाठा०—१ समावर्तनान्तर्गतमन्त्रविचनमन्त्राणामर्थश्चूडाकर्मणि विवृतस्ततो ज्ञेय ।

अथ समावर्तनप्रयोगः ॥ आचरितपूर्वोक्तब्रह्मचारिनियमचतुष्टयो ब्रह्मचारी पूर्वोक्ततिथ्यादिष्वाचार्यगृहे समावर्तनं कुर्यात् । ब्रह्मचारिनियमव्रतचतुष्टयलोपपक्षे प्रायश्चित्तं कृत्वा शुद्धात्मा सन्निदं कर्म कुर्यात् । तत्रायं क्रमः—पूर्वेद्युस्तिथ्यादिकं संकीर्त्य मम शौचाचमनादिसर्वब्रह्मचारिनियमलोपपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं होमपूर्वकं कृच्छ्रत्रयमाचरिष्ये इति संकल्प्य । [पर्षदग्रे दक्षिणां स्थाप्य अशेषे हे परिषत्, मदीयां विज्ञापनामवधार्य मया समर्पितामिमां दक्षिणां स्वीकृत्य ममोपनयनकाले आचार्योपदिष्टानां यथोक्तशौचाचमनकालत्रयसंध्यावन्दनसावित्रीजपाऽग्निकार्यमातृपितृभ्रातृमातुलाचार्याद्यभिवादनभिक्षान्नभोजनगुरूपासनवेदाध्ययनदण्डाजिनधारणादिपूर्वपूर्वसंस्कारकालातिक्रमणदोषपरिहारार्थं नृत्तदर्शनगीतश्रवणशूद्रस्पर्शचण्डालादिसंभाषणपादुकारोहणसहभोजनोच्छिष्टभोजनपर्युषितान्नभोजनादिनिषिद्धाचरणादिदोषपरिहारार्थं प्रायश्चित्तं निश्चित्य मामनुगृहाणेति वदेत् । परिषदपि दक्षिणां गृहीत्वा प्रतिनिमित्तं पादकृच्छ्रमाचरेति वदेत् । ] लौकिकाग्निं प्रतिष्ठाप्याज्यहोमधर्मेणान्वाधानपूर्वकं पूर्वोक्ताष्टादशाज्याहुतीर्हुत्वा कृच्छ्रत्याम्नायलेन कल्पितगोदान–सहस्रतिलहोम–दशसहस्रगायत्रीजपादिष्वन्यतमं चरित्वा होमशेषं समापयेत् । महानाम्न्यादिव्रतलोपपक्षे शुभे दिने प्रत्येकं गायत्र्या शतसंख्याज्याहुतीर्हुत्वा एककृच्छ्रं चरित्वा तद्दिने महानाम्नीव्रतं कृत्वैवं महाव्रतादिव्रतत्रयं च कृत्वा गुरवे दक्षिणां दत्वा तेनानुज्ञातो मण्याद्युष्णीषपर्यन्तान्येकादशद्रव्याण्यात्मने चाचार्याय च संभृत्य परेद्युः समावर्तनं कुर्यात् । तत्रायं क्रमः—ब्रह्मचारी कृतनित्यक्रियः प्राणानायम्य देशकालौ संकीर्त्य मम गृहस्थाद्याश्रमान्तरप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं समावर्तनकर्म करिष्य इति संकल्प्य । तदङ्गभूतं स्वस्तिवाचनाङ्कुरार्पणग्रहयज्ञाभ्युदयिकानि संकल्पपूर्वकं कृत्वा

प्रागुक्तलक्षणां समिधमाहृत्योपरि निधाय ब्रह्मचर्यव्रतसंपूर्त्यर्थं ब्राह्मणाय गां दत्त्वा द्विजान्भोजयित्वा विधिवत्कौतुकमाबध्य पूर्वोक्तमुहूर्ते प्रागुक्तनदुपलेपनाद्यग्निप्रतिष्ठापनान्तं कर्म कृत्वा । पुनर्देशकालौ निर्दिश्य मया क्रियमाणे समावर्तनहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये । अस्मिन्नन्वाहितेऽग्नावित्याद्याघारान्ताज्येनेत्यन्तमुक्त्वाग्निं पवमानमग्निं पवमानमग्निं पवमानं प्रजापतिं चैताः प्रधानदेवता आज्येन अग्निमूर्ध्वसमिधा विश्वान्देवान्दशसमिद्भिः शेषेण स्विष्टकृतमित्यादि सद्यो यक्ष्य इत्यन्तमुक्त्वा समिद्द्वयमग्नावाधाय परिसमूहनादि पूर्णपात्रनिधानान्तं पुरस्तनं तन्त्रमनुष्ठाय । उदगग्नेरास्तीर्णेषु दर्भेषु व्रीहियवमाषतिलैः पृथक्पृथक्पूरितानि भवानि चत्वारि शरावाणि क्रमेणैकैकशः प्राक्संस्थमासादयेयुः । ततः प्रत्यगग्नेरासीनस्य कर्तुर्दक्षिणतो माता प्राङ्मुख्यासीत । ततः कर्ता मातुः पुरस्तादग्नेः पश्चादानडुहशकृच्छरावं शमीपर्णशरावं च निदध्यात् । ततो ब्रह्मैकविंशतिकुशाङ्कुरान्दधानो मातुर्दक्षिणतो निषदेत् । ततो ब्रह्मचारी पुरस्तनं तन्त्रमाघारान्तं कृत्वा । अग्न आयूंषीत्यादिभिश्चतुर्भिर्मन्त्रैराज्याहुतीर्हुत्वा सर्वत्रोद्देशत्यागं कुर्यात् । ततो ब्रह्मा शीतमुष्णं चोभे वारिणी पात्राभ्यां पृथगानीय वटोः पश्चिमदेशे स्थित्वा तदुदकद्वयमन्यस्मिन्पात्रे पाणिभ्यामुष्णेन वाय उदकेनेहीति मन्त्रेण युगपन्निनीय तदेकदेशं गृहीत्वा नवनीतेन दध्ना वा मिश्रयित्वा वटोर्वामश्मश्रुप्रदेशमारभ्य प्रदक्षिणं । अदितिः श्मश्रूणि वपत्वाप उन्दन्तु वर्चसे इति मन्त्रं प्रतिच्छेदनमावर्तयंस्त्रिवारं श्मश्रूण्येव छेदयित्वा स्वहस्तस्थितेष्वेकविंशतिकुशाङ्कुरेषु त्रीनङ्कुरानादाय दक्षिणश्मश्रुभागं ब्रह्मचार्यभिमुखं पश्चिमाग्रं निदध्यात् । तदा ब्रह्मचारी । ओषधे त्रायस्व मां । इति जपेत् । ततो ब्रह्मा तेष्वङ्कुरेषु ताम्रमयं क्षुरं निदध्यात् । तदा ब्रह्मचारी । स्वधिते मा मा हिंसीः । येनावपत्सविता क्षुरेण

सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदंममायुष्मान्जरदष्टिर्यथासम् । इति जपेत् । ततो ब्रह्मा ब्रह्मचारिणा येनाव-पदिति मन्त्रमुच्चारयन् सश्मश्रुकान्कुशाङ्कुरांश्छित्वा तान्प्रागग्रान्कृत्वा शरावाच्छमीपर्णान्यादाय तैः सहैकीकृत्य मातुः करे दद्यात् । सा च माता तानि श्मश्रूणि शमीपर्णकुशाङ्कुरानानडुहे गोमये निदध्यात् । एवं द्वितीयादिछेदनेषु कुशाङ्कुरत्रयनिधानादि समन्त्रं कर्तव्यम् । विशेषस्तु । येनधातेतिमन्त्रेण तेनम इत्यूहितेन द्वितीयच्छेदनम् । येनभूयश्चरात्र्यामितिमन्त्रेण तेनम इत्यूहितेन तृतीयम् । चतुर्थे तु येनावपद्येनधाता येनभूयश्चेति त्रयोपि मन्त्राः । एवं दक्षिणश्मश्रुभागे चत्वारि छेदनानि कृत्वा उत्तरश्मश्रुभागेऽप्यनया रीत्या त्रीणि छेदनान्यादित आरभ्य मन्त्रत्रयेण कृत्वा । क्षुरधारां । यत्क्षुरेण मर्चयता सुपेशसा वप्ता वपसि श्मश्रूणि । शुन्धि शिरो मुखं माम आयुः प्रमोषीः । इत्यग्रत आरभ्य आमूलमवमृज्य नापितमाहूय शीतोष्णाभिरद्भिरन्तर्थं कुर्वाणोऽक्षुण्वन्कुशली केशश्मश्रुलोमनखान्युदक्संस्थानि कुर्विति प्रैषेणानुशास्य तत्प्रेपार्थं चावचोध्य । तेन नापितेन पूर्वसेकावशिष्टाभिः शीतोष्णाभिरद्भिरग्रपाणिनार्द्रीकृत्य केशश्मश्रुलोमनखान्युदक्संस्थानि वापयित्वा तच्च व्रीह्यादिपात्रचतुष्टयं नापिताय दद्यात् । ततः करञ्जबीजपिष्टेन शरीरमुद्वर्त्य शीतोष्णैरुदकैः स्नात्वा द्विराचम्य पुनर्वह्नेरन्तिकं गत्वा एकं वस्त्रं समन्त्रं परिधायान्यद्वस्त्रं प्रावृणुयात् । तत्र मन्त्रः—युवं वस्त्राणीत्यस्यौचथ्यो दीर्घतमा मित्रावरुणौ त्रिष्टुप् । युवं वस्त्राणि० । ततो द्विराचम्य पाणिनाऽञ्जनमादाय । अश्मनस्तेजोसि चक्षुर्मे पाहि । इत्यनेन मन्त्रावृत्त्या सव्यदक्षिणचक्षुषी क्रमेणाङ्क्त्वा । तथैव । अश्मनस्तेजोसि श्रोत्रं मे पाहि । इत्यनेन कुण्डलाभ्यां दक्षिणसव्ये श्रोत्रे अलंकृत्य । कुङ्कुमाद्यनुलिप्ताभ्यां पाणिभ्यां पूर्वं मुखमनुलिप्य पश्चादितराङ्गान्यनु-

लिप्य करौ प्रक्षाल्य । अनार्तास्मनार्तोहं भूयासम् । इत्यनेन शिरसि स्रजं बध्वा । देवानां प्रतिष्ठे स्थः सर्वतो मा पातम् । इति मन्त्रेण चर्ममय्यावुपानहौ दक्षिणसव्याभ्यां पादाभ्यामारुह्य । दिवच्छन्नासि । इति मन्त्रेण छत्रं धृत्वा । वेणुरसि वानस्पत्योसि सर्वतो मा पाहि । इति मन्त्रेण वैणवं दण्डं गृहीत्वा । आयुष्यमिति सूक्तेन सुवर्णमणिं कण्ठे बध्नीयात् । आयुष्यमिति सूक्तस्य सनकसनन्दनसनातनादय ऋषयः हिरण्यं देवता आद्याश्चतस्रोऽनुष्टुभः पञ्चमी त्रिष्टुप् षष्ठ्यनुष्टुप् सप्तम्यतिशक्करी अष्टमीनवम्यौ त्रिष्टुभौ दशम्यनुष्टुप् एकादशी जगती । कण्ठे मणिधारणे विनियोगः । आयुष्यं वर्चस्यं रायस्पोषमौद्भिदम् । इदं हिरण्यं वर्चस्व जैत्रायाविशतादिमाम् ॥ उच्चैर्वाजि पृतनाषाट् सभासाहं धनंजयम् ॥ सर्वाः समग्रा ऋद्धयो हिरण्येऽस्मिन्समाहिताः ॥ शुनमहं हिरण्यस्य पितुर्नामेव जग्रभ ॥ तेन मां सूर्यत्वचमकरं पुरुषु प्रियम् ॥ सम्राजं च विराजं चाभिष्टिर्या च मे ध्रुवा ॥ लक्ष्मी राष्ट्रस्य या मुखे तया मामिन्द्र संसृज ॥ अग्नेः प्रजातं परि यद्धिरण्यममृतं जज्ञे अधि मर्त्येषु ॥ य एनद्वेद स इदेनदर्हति जरा मृत्युर्भवति यो बिभर्ति ॥ १ ॥ यद्वेद राजा वरुणो यदु देवी सरस्वती ॥ इन्द्रो यद्वृत्रहा वेद तन्मे वर्चस आयुषे ॥ न तद्रक्षांसि न पिशाचास्तरन्ति देवानामोजः प्रथमजं ह्येतत् ॥ यो बिभर्ति दाक्षायणा हिरण्यं स देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः ॥ यदाबध्नन्दाक्षायणा हिरण्यं शतानीकाय सुमनस्यमानाः ॥ तन्न आबध्नामि शतशारदायायुष्मान् जरदष्टिर्यथासत् ॥ घृतादुल्लुप्तं मधुमत्सुवर्णं धनंजयं धरुणं धारयिष्णु ॥ ऋणक्सपत्नादधरांश्च कृण्वदारोह मां महते सौभगाय ॥ प्रियं मा कुरु देवेषु प्रियं राजसु मा कुरु ॥ प्रियं विश्वेषु गोप्त्रेषु मयि धेहि रुचा रुचम् ॥ अग्निर्येन विराजति सूर्यो येन विराजति ॥ विराज्येन विराजति

तेनास्मान् ब्रह्मणस्पते विराज समिधं कुरु ॥ इति । अनन्तरमुष्णीषेण प्रादक्षिण्येन शिरः संवेष्ट्य । उपानहौ संत्यज्य उपरिनिहितां समिधं गृहीत्वा तिष्ठन्नेव स्मृतंचम इत्यादीन्स्वाहान्तान्मन्त्रानुस्वाग्नावादध्यात् । स्मृतं चमइत्यस्य प्रजापतिर्ऋषिः अग्निर्देवता अतिधृतिश्छन्दः । समिदाधाने० । स्मृतं च मे अस्मृतं च मे तन्म उभयव्रतं । निन्दा च मे अनिन्दा च मे त० । विद्या च मे अविद्या च मे त० । श्रद्धा च मे अश्रद्धा च मे त० । प्रज्ञा च मे अप्रज्ञा च मे त० । इष्टं च मे अनिष्टं च मे त० । दत्तं च मे अदत्तं च मे त० । अधीतं च मे अनधीतं च मे त० । कृतं च मे अकृतं च मे त० । सत्यं च मे असत्यं च मे त० । श्रुतं च मे अश्रुतं च मे त० । व्रतं च मे अव्रतं च मे त० । यदग्ने सेन्द्रस्य सप्रजापतिकस्य सऋषिकस्य सऋषिराजन्यस्य सपितृकस्य सपितृराजन्यस्य समनुष्यस्य समनुष्यराजन्यस्य साकाशस्य सातीकाशस्य सानूकाशस्य सप्रतीकाशस्य सदेवमनुष्यस्य सगन्धर्वाप्सरस्कस्य सहारण्यैश्च पशुभिर्ग्राम्यैश्च यन्म आत्मन आत्मनि व्रतं तन्मे सर्वव्रतमिदमहमग्ने सर्वव्रतो भवामिस्वाहा । अग्नयइदं नममेत्युद्दिश्यत्यजेत् । अथोपविश्यान्याः प्रादेशसंमिता दश समिधो ममाग्नेवर्च इत्यनेन सूक्तेन प्रत्यृचमृगन्तेऽभ्यादध्यात् । ममाग्नेवर्च इति दशर्चस्य सूक्तस्य विहव्यो विश्वेदेवास्त्रिष्टुप् अन्त्या जगती समिदाधाने विनियोगः ॥ ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम ॥ मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेमस्वाहा ॥ विश्वेभ्योदेवेभ्यइदंनमम ॥१॥ एवमग्रेपि सर्वत्र ॥ मम देवा विहवे सन्तु सर्व इन्द्रवन्तो मरुतो विष्णुरग्निः ॥ ममान्तरिक्षमुरुलोकमस्तु मह्यं वातः पवतां कामे अस्मिन्स्वाहा ॥२॥ मयि देवा द्रविणमायजन्तां मय्याशीरस्तु मयि देवहूतिः ॥ दैव्या होतारोवनुषन्त पूर्वेऽरिष्टाः स्याम तन्वा सुवीराःस्वाहा ॥ ३ ॥ मह्यं यजन्तु मम यानि हव्याकूतिः सत्या मनसो मे अस्तु ॥

एनो मानिर्गा कतमच्च नाहं विश्वेदेवासो अधिवोचता नःस्वाहा ॥ ४ ॥ देवीः पळुर्वीरुरु नः कृणोत विश्वेदेवास इह वीरयध्वम् ॥ मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोमराजन्स्वाहा ॥ ५ ॥ अग्ने मन्युं प्रतिनुदन्परेषामदब्धो गोपाः परि पाहि नस्त्वम् ॥ प्रत्यञ्चो यन्तु निगुतः पुनस्तेऽमैषां चित्तं प्रबुधां विनेशत्स्वाहा ॥ ६ ॥ धाता धातॄणां भुवनस्य यस्पतिर्देवं त्रातारमभिमातिषाहम् ॥ इमं यज्ञमश्विनोभा बृहस्पतिर्देवाः पान्तु यजमानं न्यर्थात्स्वाहा ॥ ७ ॥ उरुव्यचा नो महिषः शर्म यंसदस्मिन्हवे पुरुहूतः पुरुक्षु ॥ स नः प्रजायै हर्यश्व मृळयेन्द्र मा नो रीरिषो मा परादाःस्वाहा ॥ ८ ॥ ये नः सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामव बाधामहे तान् ॥ वसवो रुद्रा आदित्या उपरि स्पृशं मोग्रं चेत्तारमधिराजमक्रन्स्वाहा ॥ ९ ॥ अर्वाञ्चमिन्द्रममुतो हवामहे यो गोजिद्धनजिदश्वजिद्यः ॥ इमं नो यज्ञं विहवे जुषस्वास्य कुर्मो हरिवो मेदिनं त्वास्वाहा ॥१०॥ इति दशऋचः। ततः स्विष्टकृदादिहोमशेषं समापयेत् । ततः स्नातको नक्तं नग्नश्च न स्नामि । नग्नां स्त्रियं नेक्षे । वर्षति न धावामि । वृक्षं नारोहामि । कूपं नावरोहामि । प्राणसंशयान्नाभ्यापद्येय इत्येवं संकल्पयेत् । ततः कौपीनं मेखलां च विसृज्य कर्मान्ते कर्तव्यं स्वस्तिवाचनं पूर्ववत्कुर्यात् ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे समावर्तनप्रकरणम् ॥

अथ गुरुकुलनिवृत्तिप्रकारः॥ अथावसरप्राप्तस्नातकधर्मा निरूप्यन्ते । तत्र तावद्गुरुकुलनिवृत्तिप्रकारमाह कारिकाकारः—'अथ शिष्यः समावृत्तो नामोपांशु गुरोर्वदेत् । उच्चैरूर्ध्वं वदेन्नाम्ना इदंस्थाने समाश्रमम् ॥ हे देवदत्त गार्हस्थ्यं वत्स्यामो भो इति त्वथ । उपांशु जपति प्राणापानयोरिति वै ततः ॥ आमन्द्रैरित्यृचं चाथ गुरुश्चैतौ जपेदिह । ओंप्रागित्यादिकं मन्त्रं ज-

पित्राचार्य एव तु । सूक्तेन च महित्रीणामवोऽस्त्वित्यनुमन्त्र्य तम् । वत्सस्वेत्यनुजानीयादनुज्ञातो यदा पथि ॥ गच्छञ्शृणोति वाक्यानि पक्षिणामप्रियाणि तु । जपेत्कनिक्रदत्सूक्तं देवीं वाचमृचं तथा ॥ शिवादेरप्रियं श्रुत्वा स्तुहि श्रुतमृचं जपेत् । यस्या दिशोऽथवा यस्मात्पुरुषाद्वाग्रतोऽपि वा ॥ बिभेत्युभयतो दीप्तमुल्मुकं तां दिशं क्षिपेत् । मन्त्रेणाभयमित्यादि नैतदुल्मुकमस्यति ॥ सर्वतो भयमुत्पन्नं न च ज्ञातमतो नरात् । अन्यतो वेति लोकाथावापारान्तं करोत्यथ ॥ पृथिव्याद्यष्टभिर्मन्त्रैर्हुत्वाष्टाज्याहुतीरथ । स्थित्वैशान्यां जपेत्स्वस्ति नो मिमीतां तु सप्त वै ॥ षडृचो जपति तन्या यत इन्द्र भयामहे । ततश्च स्विष्टकृद्धर्जं होमशेषं समापयेत्' इति । इदमत्र गृह्यम्—'गुरवे प्रवक्ष्यमाणो नाम प्रब्रुवीतेदं वत्स्यामो भो इत्युच्चैरूर्ध्वं नाम्नः प्राणापानयोरुपांश्वित्यामन्द्रैरिन्द्रहरीभिरिति चातो वृद्धो जपति प्राणापानयोरुरुव्यचास्तया प्रपद्ये देवाय सवित्रे परिददामीत्यृचं च समाप्यैतो आऽऽ स्वस्तीति जपित्वा महित्रीणामित्यनुमन्त्र्यैवमतिसृष्टस्य न कुतश्चिद्भयं भवतीति विज्ञायते वयसाममनोज्ञा वाचः श्रुत्वा कनिक्रदज्जनुषं प्रब्रुवाण इति सूक्तं जपेद्देवीं वाचमजनयन्त देवा इति च स्तुहि श्रुतं गर्तसदं युवानमिति मृगस्य यस्या दिशो बिभीयाद्यस्माद्वा तां दिशमुल्मुकमुभयतःप्रदीप्तं प्रत्यस्येन्मध्यं वा प्रसव्यमालोड्याभयं मित्रावरुणा मह्यमस्त्वर्चिषा शत्रून्दहन्तं प्रतीत्य माप्रज्ञातारं माप्रतिष्ठां विन्दन्तु मिथो विन्दाना उभयं मृत्युमिति संसृष्टं धनमुभयं समाकृतमिति मन्थं न्यञ्चं करोति ॥ सर्वतोभयादनाज्ञातादष्टावाज्याहुतीर्जुहुयात्पृथिवी वृता साग्निना वृता तया वृतया वर्त्र्या यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । अन्तरिक्षं वृतं तद्वायुना वृतं तेन वृतेन वर्त्रेण यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । द्यौर्वृता सादित्येन वृता तया वृ[illegible]ता वर्त्र्या यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । दिशो वृतास्ताश्चन्द्रमसा वृतास्ताभिर्वृताभिर्वर्त्रीभिर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । आपो वृतास्ता वरुणेन वृतास्ताभिर्वृताभिर्वर्त्रीभिर्यस्माद्भयाद्बिभेमि तद्वारये-

स्वाहा। यज्ञा वृतास्ताः प्राणेन वृतास्ताभिर्वृताभि०। वेदा वृतास्ते छन्दोभिर्वृतास्तैर्वृतैर्वर्त्रयेसाद्भयाद्बिभेमि०। सर्वं वृतं तद्ब्रह्मणा वृतं तेन वृतेन वर्त्रेण यस्माद्भ०। इति। अथापराजितायां दिश्यवस्थाय स्वस्त्यात्रेयं जपति यतइन्द्र भयामह इति सूक्तशेष'मिति। अस्यार्थः—गुरव इति। समावृत्तः सन् विसृक्ष्यमाणः शिष्यो गुरोर्नाम ब्रूयात् देवदत्तेति। गुरव इति चतुर्थी पञ्चम्यर्थे। यथा तथा स्यादिति इदं च वत्स्यामो भो इति। तत्र एवं प्रब्रुवीत इदंशब्दस्य स्थाने आश्रमं निर्दिशेत्। देवदत्त गार्हस्थ्यं वत्स्यामो भो इति। उच्चैरूर्ध्वं नाम्न इति। नाम्न ऊर्ध्वमुच्चैर्ब्रूयात्। गुरुनाम तु उपांश्वेव ब्रूयादित्यर्थः। प्राणापानयोरुपांश्विति। ततः प्राणापानयोरुत्क्रमणा इति मन्त्रं उपांशु ब्रूयाच्छिष्य इत्यर्थः। ननूत्तरत्र वक्ष्यति वृद्धो जपतीति। तस्मादाचार्यस्योपांशुत्वद्वत्तस्याप्युपांश्वेव भविष्यत्यत्र उपांश्विति न वाच्यम्। उच्यते—जपतिचोदनायामुपांशुत्वमनित्यमिति ज्ञापनार्थमिदम्। तेन वेदारम्भणे उच्चैःप्रयोगसिद्धिः। अथवा उच्चैरधिकारनिवृत्त्यर्थमिदम्। वेदारम्भणेतूच्चैस्त्वे कारणमन्यदप्युक्तमेव। आमन्द्रैरिन्द्र हरिभिरिति। एतांचोपांशु ब्रूयाच्छिष्यः। अतो वृद्धो जपति इत्यादि। अतो वृद्ध आचार्यो जपत्येतौ मन्त्रौ। अतो वृद्धो जपतीति वचनात्पूर्वं शिष्योप्येतौ जपतीति विज्ञायते। ऋचंचेति। आमन्द्रैरित्येतामित्यर्थः। समाप्योमित्यादि। अतिसृजेदिति शेषः। समानवचनमाचार्य एव ओंप्रागिति मन्त्रं जपेदित्येवमर्थम्। जपित्वा महित्रीणामिति सूक्तेन शिष्यमनुमन्त्र्य वत्स्यथेत्यतिसृजेत्। एवमतिसृष्टस्य न कुतश्चिद्भयं भवतीति विज्ञायत इति प्रशंसेयं श्रुतिमूलत्वदर्शनार्था। वया—रौति। वयसामित्यादि। वयांसि पक्षिणः। अमनोज्ञा अप्रियाः। स्तुहि श्रुतमित्यादि। मृगस्याऽमनोज्ञा वाचः श्रुत्वा एतां जपेत्। यस्या दिशो विभीयाद्यस्माद्वा विभीयात्पुरुषा-

द्ग्रामादन्यतोपि वा तां दिशं प्रत्युभयतःप्रदीप्तमुल्मुकं प्रत्यस्येदभयमित्यनेन। मन्थं वा प्रसव्यमालोड्य तां दिशमभिमुखं न्यञ्चं कुर्यात्संसृष्टमित्यनेन। मन्थं न्यञ्चमेव कुर्यान्न प्रत्यस्येदित्येवमर्थं पुनर्मन्थग्रहणम्। सर्वतो—स्वाहेति। सर्वतोदिग्भ्यो भयमुत्पद्यते नच ज्ञायतेऽस्मात्पुरुषादिति तत्सर्वतोभयमज्ञातं तस्माद्यदि बिभीयात्ततो लौकिकाग्नावष्टावाज्याहुतीर्जुहुयात् पृथिवीवृतेत्याद्यैः। अष्टौवचनमाज्यभागस्विष्टकन्निवृत्त्यर्थम्। आज्याहुतिवचनं परिस्तरणविकल्पार्थम्। अथापराजितायां दिश्यवस्थाय स्वस्त्यात्रेयं जपति। यत इन्द्र भयामहे इति च सूक्तशेषं। स्वस्त्यात्रेयमिति स्वस्तिनो मिमीतामिति सूक्तमखिलम्। ततः सर्वप्रायश्चित्तादि समापयेत्। एवमतिसृष्टस्य न कुतश्चिद्भयं भवतीत्युक्तम्। तत्र यद्यमनोज्ञा वाचः शृणुयाद्भयं वाप्युत्पद्यते तदैवं कुर्यादिति सर्वमिदमतिसृष्टविषयमिति। इति गुरुकुलात्प्रयाणविधिः॥

अथ स्नातकधर्माः। तत्र नित्यविधिमाह कारिकाकारः—'दास्यन्ति मधुपर्कं ये तत्रैतां रजनीं वसेत्'। इदमत्र गृह्यम्—'यत्रैनं पूजयिष्यन्तो भवन्ति तत्रैतां रात्रिं वसेत्' इति। अस्यार्थः—यत्रात्मानं मधुपर्केण पूजयिष्यन्ति तत्रैतां रात्रिं वसेत्। कुत एतत्। स्नातकायोपस्थितायेतिवचनान्मधुपर्केण पूजनं लब्धमिति॥ अत्र भगवान्—'समावृत्तमिमं यस्मिन्पूजयिष्यन्ति बान्धवाः। मधुपर्कप्रदानाद्यैस्तद्गृहे तां निशां वसेत्' इति। अत्र स्मृतिरूपेण विशेषमाहाचार्यः—'स्नातैवं विधिना काले मासमात्रमपि द्विजः। अनाश्रमी न तिष्ठेत सुस्वस्थः प्रयतात्मवान्॥ निःस्वो रोगार्दितो भीतस्त्वापन्नोन्यैश्च कारणैः। स्नातकः प्रयतो वह्निं न त्यजेदिति वै श्रुतिः॥ नित्यदा ब्रह्मचारी स्याच्चतुर्यज्ञपरायणः। जापी तीर्थरतो वा स्यात्स्नातको लौल्यव-

र्जितः ॥ श्राद्धे निमन्त्रितो गच्छेत्कुर्यात्पद्कर्म च द्विजः । येन केनाप्युपायेन व्रतचर्या न लोपयेत् ॥ शकलान्जुहुयात्प्रातस्तन्मन्त्रैः कार्यमेव च । कुर्याद्यज्ञान्विधिप्रोक्तान्स्नातको ननु यज्ञभाक्' इति । अत्र वर्हि न त्यजेदित्युक्तत्वात् शकलान्जुहुयात्प्रातरित्युक्तत्वाच्च प्रातःकाले संध्यावन्दनानन्तरमग्निकार्यं कृत्वा शकलान्हुत्वा सायंकालेऽप्यग्निकार्यं कर्तव्यमिति सूचितम् । अग्निकार्यविधेरस्मदीयगृह्येऽनुक्तत्वात्, अनुक्तमविरुद्धमन्यतो ग्राह्यमिति न्यायात् बोधायनोक्तिर्लिख्यते । तथाच—स एष उपनयनात्प्रभृति व्याहृतिभिः समिद्भिरेव हूयत आसमावर्तमानासमावर्तनप्रभृत्याज्येन व्याहृतिभिर्जुहुयात् आपाणिग्रहणात् पाणिग्रहणप्रभृति व्रीहिभिर्यवैर्वा हस्तेनैकेनाहुतीर्जुहोती'ति ॥ ❀ ॥ अथ शकलहोममन्त्रास्तैत्तिरीयारण्यके श्रूयन्ते । देवकृतस्यैनसोऽवयजनमसि स्वाहा । मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा । पितृकृतस्यैनसोऽवयजनमसि स्वाहा आत्मकृतस्यैनसोऽवयजनमसि स्वाहा । अन्यकृतस्यैनसोऽवयजनमसि स्वाहा । यद्दिवा च नक्तं चैनश्चकृम तस्यावयजनमसि स्वाहा । यत्स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा । यद्विद्वा२ सश्चाविद्वा२ सश्चैनश्चकृम तस्यावयजनमसि स्वाहा । एनस एनसोऽवयजनमसि स्वाहा । यद्वो देवाश्चकृम जिह्वया गुरु मनसो वा प्रयुती देवहेळनम् । अरा वायो नोऽअभिदुच्छुनायते तस्मिन्तदेनो वसवो निधेतन स्वाहा । इति ॥ ॥ तत्र स्नातकेन वैश्वदेवः कार्य इत्याह शौनकः—'वैश्वदेवं गृहस्थस्य प्रातरारम्भणं भवेत् । स्नातकेनापि तत्कार्यं पृथक्पाको गृहे यदि' इति ॥ पुनरन्ये धर्माः कूर्मपुराणे दर्शिताः—'यज्ञोपवीतद्वितयं सोदकं च कमण्डलुम् । छत्रं चोष्णीषममलं पादुके चाप्युपानहौ ॥ रौक्मे च कुण्डले

वेणुं कृत्तकेशनखः शुचिः। स्वाध्याये नित्ययुक्तः स्याद्बहिर्माल्यं चै धारयेत् ॥ शुक्लाम्बरधरो नित्यं सुगन्धः प्रियदर्शनः। न जीर्ण-मलवद्वासा भवेत्तु विभवे सति। न रक्तमुल्बणं चान्यधृतं वासो न कन्धिकाम्' इति। स्मृत्यन्तरे तु—'स्नातः समुद्वहेत्कन्यां प्रव्रजेद्वा तदिच्छतः। वनस्थो वा भवेद्विप्रः सुखस्थो विधिना शुचिः ॥ अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः। आश्रमेण विना तिष्ठन्प्रायश्चित्तीयते हि सः' इति ॥ ❀ ॥ अत्रविवाहार्थं काम्यजप उच्यते ऋग्विधाने—'सुपुम भजपेत्सूक्तमथ सम्यक् शिवालये। न्ययुतं तु जपेत्कन्यां षण्मासाल्लभते नरः' इति।

अस्मिन्कर्मणि विनियुक्तमन्त्राणामर्थः कथ्यते। तत्र मन्त्ररूपं वाक्यं इदं वत्स्यामो भो इति। हे देवदत्त इतीदमुपांशु, आश्रमं वत्स्यामः इत्युच्चैः। वत्स्यामइत्येकस्मिन्नपि बहुवचनम्। अतः प्राणापानयोरित्यादिकं मन्त्रमुपांशु शिष्यो वदेज्जपेत्। प्राणापानयोरुरुव्यचाः तया प्रपद्ये देवाय सवित्रे परिददामीति। हे सवितः, निमित्तभूतेन त्वया प्राणापानयोर्विषययोरुरुव्यचा उरु महत् व्यचा व्यापनं व्याप्तिर्यस्य स उरुव्यचाः। प्राणापानयोर्योगस्य जीवनहेतुत्वाद्दीर्घायुष्यप्राप्तिरित्यर्थः। तादृशोऽहं त्वां प्रपद्ये प्रपन्नोऽसि। अतएव च सवित्रे प्रेरयित्रे देवाय तुभ्यं परिददामि। मामिति शेषः। मां त्वदधीनं करोमीत्यर्थः। ततः आमन्द्रैरिति जपेत्। आमन्द्रैरिति। हे इन्द्र, मन्द्रैः स्थिरगामिभिः मदयितृभिर्वा मयूररोमभिः मयूररोमसदृशरोमयुक्तैः हरिभिरश्वैरुपेतस्त्वमायाहि यज्ञं प्रत्यागच्छ। केचिदपि जनास्त्वा त्वां मानियमन् मा नियच्छन्तु आगमनप्रतिबन्धं मा कुर्वन्तु। प्रतिबन्धे दृष्टान्तः। यथा पाशिनः पाशहस्ताः विगच्छन्तं पक्षिणं नियच्छन्ति तद्वदत्र। अत्र तु इवार्थः। किंच धन्वे। यथा पान्थाः धन्व धन्विनं

पाठा—१ न दर्शयेत्।

अभिक्रन्देरन् तं शीघ्रमभिगच्छन्ति । वा यथा पान्थाः धन्व मरुदेशं शीघ्रमतीत्य गच्छन्ति तद्वत् गमनप्रतिबन्धकारिणो व्यतीत्य शीघ्रमिहागच्छ । एतैर्मन्त्रैर्गुरुरपि जपित्वा ॐ श्राद्धस्वस्तीति जपेत् । ॐमित्यनुज्ञा गमनस्य । प्रागिति दिशामुपलक्षणम् । प्रागादिषु दिक्षु ते स्वस्तीति ब्रूयात् ॥ ॥ गच्छतः शिष्यस्यानुमन्त्रणे महित्रीणामिति सूक्तम् । महित्रीणामिति—त्रीणां त्रयाणां मित्रस्यार्यम्णो वरुणस्य च द्युक्षं दीप्तं अतएव दुराधर्षं अन्यैर्धर्षितुं बाधितुमशक्यं महि महत् अवो रक्षणमस्माकमस्तु ॥ नहीति—एतेषां अमान्न गृहेष्वपि तेषां वरुणमित्रार्यम्णां तदनुगृहीतानां स्तोतॄणां वा अघशंसः अघमनर्थमाशंसमानः रिपुः शत्रुः । नहीशे न विनाशयितुमीष्टे । अध्वसु मार्गेषु यत्र यत्र पुरुषा निवार्यन्ते तेषु स्थानेषु शत्रुं निवारयितुं नेष्टे ॥ यस्मै पुत्रास इति—अदितेः अदीनायाः देवमातुः पुत्रासः पौत्रादयः यस्मै मर्त्याय मनुष्याय स्तोत्रे अजस्रं अविच्छिन्नं ज्योतिः तेजः जीवसे जीवितुं प्रयच्छन्ति तस्य शत्रुर्नास्तीत्यर्थः ॥ कनिक्रददिति—कनिक्रदत् पुनःपुनः शब्दायमानः जनुषं जनिष्यमाणमर्थं प्रब्रुवाणः सूचयन् कपिञ्जलः अरितेव कर्णधार इव नावं कर्णधारो यथा नावं प्रेरयति तद्वद्वाचं इयर्ति प्रेरयति । हे शकुने कपिञ्जल, त्वं सुमङ्गलः प्रहृष्टकल्याणश्च भवासि । पञ्चमो लकारः । भव । किंच काचिदभिभाः अभिभवः । त्वा त्वां विश्वा सर्वासु दिक्षु मा विदत् मा प्राप्नोतु ॥ मा त्वा श्येन इति—हे शकुने, त्वा त्वां श्येनः प्रबलः पक्षिविशेषः मोद्वधीत् मा हिंसीत् । सुपर्णः गरुत्मान् त्वां मोद्वधीत् । तथा इषुमान्बाणवान्वीरः शूरः अस्ता अस्त्राणां क्षेप्ता धन्वी त्वां मा विदत् माजानात् । किंच पित्र्यां प्रदिशमनु दक्षिणस्यां दिशीत्यर्थः । कनिक्रदत् शब्दं कुर्वन् सुमङ्गलः त्वं भद्रवादी कल्याणवादीसन् इह अस्मद्विषये मङ्गलं

वद सूचय ॥ अवक्रन्देति—हे शकुने कपिञ्जल, त्वं सुमङ्गलो भद्रवादी च सन् गृहाणां दक्षिणतः दक्षिणस्यां दिशि अवक्रन्द शब्दं कुरु। दक्षिणतः शब्दायमानः शकुन्तो मङ्गलसूचको भव। नोऽस्माकं स्तेनः तस्करः मेशत मेशिष्ट माघशंसः अनर्थशंसकोपि मेशिष्ट। वयं च सुवीराः शोभनपुत्राः सन्तः विदथे यज्ञे बृहत् मन्त्रजातं वदेम उच्चारयाम। स्तुत्यर्थमिति शेषः ॥ ॥ प्रदक्षिणिदिति—शकुन्तयः कपिञ्जलाः ऋतुथा काले वयोऽन्नं वदन्तः सूचयन्तो भवन्तः कारवः स्तोतारइव स्तोतारो यथा प्रदक्षिणित् प्रदक्षिणमभिगृणन्ति तद्वत् प्रदक्षिणं नः प्रियमेवाभिगृणन्ति अभिवदति। लोडर्थे लट्। अभिवदन्तु। किंच सामगा इव यथा सामगाः गानं च स्तोभश्चेत्युभे वाचौ वदन्ति। अथवा गायत्रं च त्रैष्टुभं चेत्युभे सामगानं यथा वदति तथा शकुन्तमपि वदतु अनु राजति च शृण्वतस्तद्वदनुरक्तान्करोति ॥ ॥ उद्गातेवेति—हे शकुने, उद्गातेव यथोद्गाता साम गायति तथा त्वं साम स्तोत्रं गायसि गानस्वरं करोषि। ब्रह्मपुत्र इव यथा ब्राह्मणः छन्दांसि शास्त्राणि सवनेषु शंसति तथा काले त्वमपि शंससि सुस्वरं करोषि। वृषेव वाजी सेचनसमर्थोऽश्वः शिशुमतीर्वडवाः अपीत्य अभिगम्य यथा शब्दं करोति तथा त्वमपि वदसि। तस्मात्कारणात् हे शकुने, नः अस्माकं सर्वतः भद्रं आवद हे शकुने विश्वतः सर्वतः नः अस्माकं पुण्यं चावद ॥ ॥ आवदंस्त्वमिति—हे शकुने, आवदन् शब्दं कुर्वन् त्वं भद्रमावद तूष्णीमासीनः तूष्णीं तिष्ठन्नपि नोऽस्माकं सुमतिं शोभनमतिं चिकिद्धि बध्यस्व। यत् उत्पतन्वदसि तदा कर्करिर्यथा कर्करिर्वाद्यविशेषः। कर्करिरिव वदसि। सुवीराः शोभनपुत्राः वयं विदथे यज्ञे बृहत्सूक्तजातं वदेम उच्चारयाम। तुभ्यमिति शेषः ॥ ॥ देवीं वाचमिति—देवाः आध्यात्मिकाः देवीं वाचं अजनयन्त उत्पादितवन्तः। तां वाचं वि-

श्वरूपाः सर्वरूपाः व्यक्तवाचश्च पशवो वदन्ति तत्पूर्वकत्वाद्वाक्प्रवृत्तेः । मन्द्रा मदनीया स्तुत्या हर्षयित्री सा वाग्देवी वृष्टिप्रदानेन नोऽस्मभ्यमिषमन्नं ऊर्जं पयोघृतादिरसं दुहाना क्षरन्ती धेनुर्भूत्वा अस्माभिः सुष्टुता सम्यक् अस्मानैतु आगच्छतु वर्षणायोद्युक्ता भवतु ॥ ॥ शिवादेरप्रियवचने । स्तुहि श्रुतमिति—हे मदीय स्तोतः, श्रुतं प्रख्यातं गर्तसदं गर्तो रथः तत्र सीदन्तं युवानं नित्यतरुणं मृगंन भीमं सिंहवद्भयंकरं उपहत्नुमुपेत्य हन्तारं उग्रं शत्रूणां निष्ठुरं एवंविधं रुद्रं स्तुहि । हे रुद्र, अस्माभिः स्तवानः स्तूयमानः सन् जरित्रे स्तोत्रे मृळय सुखय । ते त्वदीयाः सेना अस्मदन्यं अस्मद्व्यतिरिक्तं पुरुषं वा निवपन्तु ॥ ॥ उल्मुकप्रत्यसने मन्त्रः—अभयं मित्रावरुणा मह्यमस्त्वर्चिषा शत्रून् दहतं प्रतीत्य मा ज्ञातारं मा प्रतिष्ठां विन्दन्तु मिथो भिन्दाना उपयन्तु । अस्यार्थः—मित्रावरुणा हे मित्रावरुणौ, मह्यमभयमस्तु भयं माभूयात् । युवां च शत्रून्प्रतीत्य अभिमुखं गत्वा आर्चिषा प्रदीप्तोल्मुकाग्नेरर्चिषा दहतं भस्मीकुरुतम् । युवाभ्यां दह्यमानास्ते मा ज्ञातारं । जानातिरत्र ज्ञानपूर्वप्रतीकारे वर्तते । ज्ञात्वा प्रतिकर्तारं मा विन्दन्तु प्रतिष्ठां च माविन्दन्तु । मिथः परस्परं भिन्दानाः वध्यघातकभावमाचरन्तः मृत्युमुपयन्तु ॥ ॥ सर्वतो भये उत्पन्ने पृथिवीवृतेत्याद्या अष्टावाज्यहोममन्त्राः । तत्र प्रथमः पृथिवी वृतेति—पृथिवी वृता । वृञ् वरणे वृणोतीति वृता कर्तरि क्तः । सर्वत्र व्याप्ता सा अग्निना वृता सेविता अग्नेस्तस्या अधिपतित्वात् । वर्त्र्या वारयित्र्या वृतया तया यस्माद्भयाद्भयहेतोरहं बिभेमि तन्निमित्तं भयं वारयामि । एतेनोत्तरमन्त्रा व्याख्याताः ॥ अन्तरिक्षं वृतमिति—वायुरत्र मध्यमस्थानः अन्तरिक्षमधितिष्ठति वायोरन्तरिक्षाधिपतित्वात् वर्त्रेण वर्तयित्रा । अन्यत्पूर्ववत् ॥ द्यौर्वृतादित्येनेति—आदित्यो दिवोऽधिष्ठाता । अथवा

आदित्यस्य द्यौरधिष्ठात्री । अन्यत्पूर्ववत् ॥ दिशो वृतास्ता इति—अपां वरुणोधिष्ठाता । अन्यत्पूर्ववत् ॥ प्रजा वृतास्ता इति—प्रजाः प्राणिनः तासां प्राणोधिष्ठाता । शेषं पूर्ववत् ॥ वेदा वृता इति—गायत्र्यादीनि छन्दांसि तैर्वेदा वृताः । वंत्रैर्वारयितृभिः । अन्यद्व्याख्यातम् ॥ सर्वं वृतमिति—ब्रह्मणा जगत्कारणेन परब्रह्मणा । अन्यद्व्याख्यातम् ॥ स्विष्टैशान्यां जपेत् । स्वस्ति नो मिमीतामिति—अश्विना अश्विनौ नोऽस्मभ्यं स्वस्ति अविनाशि क्षेमं मिमीतां कुर्वाताम् । भगश्च स्वस्ति क्षेमं मिमीताम् । तथा अदितिर्देवी स्वस्ति मिमीताम् । अनर्वणः प्रत्यश्चः पूषा असुरः असून्प्राणान्रातीत्यसुरः प्राणानां दाता सन् स्वस्ति दधातु । नोऽस्मभ्यं द्यावापृथिवी द्यावापृथिव्यावपि सुचेतुना शोभनेन प्रज्ञानेन विशिष्टं स्वस्ति मिमीताम् ॥ ॥ स्वस्तये वायुमिति—वयं स्वस्तये क्षेमाय वायुं उपब्रवामहै स्तुमः । भुवनस्य पतिः पालकः सर्वलोकजीवनस्य सोमायत्तत्वात् तं सोमं स्वस्ति स्वस्तये स्तुमः । सर्वगणं बृहस्पतिं स्वस्तये स्तुमः । आदित्यासः आदित्याः अदितेः पुत्राः सर्वे देवाः अरुणादयो द्वादश भानवो नोऽस्माकं स्वस्तये भवन्तु ॥ ॥ विश्वेदेवास इति—विश्वेदेवाः सर्वे देवाः नोऽस्मान् अद्य यागदिने स्वस्तये क्षेमाय अवन्तु । वैश्वानरः विश्वं एनं नयतीति वैश्वानरः वसुः सर्वस्य वासयिताग्निः 'अयमेवाग्निर्वैश्वानर इति शाकपूणिः' इति यास्कः । सोपि स्वस्तये अवतु । देवा ऋभवोपि स्वस्तये अवन्तु । रुद्रो दुःखानां द्रावयिता 'अशुभोद्द्रावको रुद्रः' इत्युक्तेः देवोपि अंहसः पातु नः अस्मान् स्वस्ति क्षेमाय पातु ॥ ॥ स्वस्ति मित्रावरुणेति—हे मित्रावरुणा मित्रावरुणौ अहोरात्राभिमानिनौ 'अहर्वै मित्रो रात्रिर्वरुणः' इति ब्राह्मणम् । स्वस्ति कुरुतम् । पथ्ये पन्था अन्तरिक्षमार्गः तत्र हिता पथ्या तन्मार्गाभिमानिनी एतादृशी रेवती धन-

वति देवि, स्वस्ति कृधि। इन्द्रश्चाग्निश्च प्रत्येकं नोऽस्मभ्यं स्वस्ति कुरु। हे अदिते देवि, नः अस्मभ्यं स्वस्ति कृधि॥ ॥ स्वस्ति पन्थामनुचरेमेति—वयं पन्थां पन्थानं स्वस्ति क्षेममनुचरेम। सूर्याचन्द्रमसाविव। तौ यथा निरालम्बे मार्गे राक्षसादिभिरनुपद्रुतौ संचरतस्तद्वत्। किंच प्रवसन्तो वयं पुनर्ददता अभिमतं वस्तु पुनः पुनः दात्रा अघ्नता कालविलम्बनकोपेन अहिंसता जानता सरता मदीयश्चिरकालगतः कोऽयमिति संदेहमकुर्वता उक्तलक्षणेन बन्धुजनेन संगमेमहि संगच्छेमहि॥ ॥ स्वस्त्ययनमिति—तार्क्ष्यं तृक्षपुत्रं गरुत्मन्तं। तं कीदृशं। स्वस्त्ययनं क्षेमप्राप्तिहेतुं अरिष्टनेमिं रिष्टा हिंसाः तद्विपरीता अरिष्टाः तेषां नेमिं रक्षकं यथा रथचक्रस्य नेमिः तद्वदिदं महद्भूतं प्रभावतः प्रमाणतश्च महद्भूतं वायसं पक्षिणं देवतानां मध्ये इन्द्रसखं इन्द्रस्य प्रियं असुरघ्नं रक्षसां हन्तारं वृहद्यशः महाकीर्तिमन्तं। तत्र तत्र लिङ्गव्यत्ययश्छान्दसः। समस्तु संग्रामेषु प्रयाणेषु वा एवंविधं गरुत्मन्तं नावमिवारुहेम आश्रिता भवेम॥ ॥ अंहोमुचमिति—अंहोमुचमिति तन्नामानमृषिं आङ्गिरसं वृहस्पतिं गयं च। गयमित्येतन्नामानमात्रेयं तार्क्ष्यं गरुत्मन्तं एतानृषीन्स्वस्ति कर्माविघ्नार्थं। प्रयतपाणिः उपलक्षणमेतत्। सर्वैरिन्द्रियैर्नियतोऽहं मनसा वाचा शरणं प्रपद्ये प्रत्येकं प्रपन्नोऽस्मि। अतः कारणान्नोऽस्माकं संबाधेषु बाधास्थलेषु स्वस्ति क्षेममस्तु अभयं चास्तु॥ ॥ यत इन्द्रेति—हे इन्द्र, यतो हिंसकात् वयं भयामहे ततो नोऽस्मभ्यमभयं कुरु। हे मघवन्, शग्धि यदि शक्तो भवसि नोऽस्मभ्यमभयं कर्तुं तत् तर्हि भवतस्तव ऊतिभिः त्वदीयैः रक्षणैः विद्विषो नोऽस्मद्द्वेष्टॄन् विमृधः अस्मद्धिंसकांश्च जहि॥ ॥ त्वं हि राधस्पत इति—हे राधस्पते धनस्वामिन्निन्द्र, त्वं हि महो महतो राधसः धनस्य क्षयस्य गृहनामैतत्। गृहस्य च वर्धयितासि

स्तु। यस्य राधसो गृहस्य विधतः परिचरतः यजमानस्य हे मघवन्, तं तादृशं त्वां गिर्वणः गीर्भिः सुतावन्तः अभिषुतसोमाः सन्तः हवामहे आह्वयामः ॥ ॥ इन्द्रस्पळुतेति—अयमिन्द्रः स्पट्। स्पर्शयतिर्ज्ञानकर्मा। सर्वस्य ज्ञाता वृत्रहा वृत्रस्य हन्ता परस्पाः परं पालयिता नोऽस्माकं वरेण्यः वरणीयः स इन्द्रो नोऽस्मान्पुत्रानिव स्थिरः सन् चरमं पुत्रमिव चरमं पुत्रं यथा माता रक्षति तद्वत् रक्षिषत् रक्षतु। मध्यमं मध्यमपुत्रमिव च रक्षतु। नः अस्मान् पुरः पुरस्तात्पश्चात्पातु ॥ ॥ त्वं नः पश्चादिति—हे इन्द्र, त्वं नोऽस्मत् पश्चाद्भागात् अधरादधरभागात्। एतदुपरिभागस्योपलक्षणम्। उपरिभागादुत्तरादुत्तरभागात् पुरतः पूर्वभागात् किं बहुना विश्वतः सर्वस्मात्प्रदेशान्निपाहि। हे इन्द्र, दैव्यं भयं अस्मादस्मत्तः आरे दूरे कृणुहि कुरु। तथा अदेवीः आसुरीः हेतीः आयुधानि आरे दूरे प्रणुहि ॥ ॥ अद्याद्येति—हे इन्द्र, त्वं नोऽस्मभ्यं अद्याद्य अस्मिन्दिने जीवनपर्याप्तं दत्वा श्वः श्वः द्वितीयेऽहनि परे तृतीयेऽहनि च जीवनपर्याप्तं धनं दत्वा रास्व रक्षस्व। हे सत्पते सतां पालक, विश्वा च अहा सर्वाण्यप्यहानि सर्वेष्वप्यहःसु जरितृन्स्तोतृन् रक्षिषः रक्षसि। तथा दिवा नक्तं च नोऽस्मान्रक्षिषः रक्ष ॥ ॥ प्रभङ्गीति—अयं मघवेन्द्रः प्रभङ्गी प्रभञ्जनशीलः अतएव शूरः तुवीमघः प्रभूतधनः संमिश्वः सम्यङ्मिश्रयिता शत्रूणां वीर्याय वीर्यकरणाय। कमिति पादपूरणम्। एवं महानुभावो भवति। हे इन्द्र, ते उभा उभावपि बाहू वृषणा वर्षकौ कामानां वर्षकौ हे शतक्रतो बहुयज्ञ, या यत् वज्रायुधं निमिमिक्षतुः परिगृहीतवन्तौ। इति मन्त्रार्थः ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे स्नातकधर्मनिरूपणम् ॥

अथ विवाहप्रकरणम् ॥ तुलोभयान्ते गतयोर्हि वस्तुनोरधः पतेद्यद्गुरुतां भजेदिति । न्यस्तमेतन्मम देशिके मतं यदूर्ध्वगामी गुरु तद्भजेऽहम् ॥ अञ्चामि पञ्चवदनं करिवरदमनस्य यस्य तूद्वाहे । रत्नानि रत्नसनिजान्ययलनीराजनाः स्म राजन्ते ॥ अपिच—प्रत्यर्थिप्रथमानदैत्यमुकुटालंकाररत्नाङ्कुरद्योतद्योसरिदम्बुपूरपरितः प्रक्षालिताङ्घ्रिद्वयः । क्षौमोल्लासितदीप्तकीर्तिहरणो धाटीषु कोटीष्वपि श्रीलक्ष्मीनरसिंहदेव भजसे वैवाहिकीं प्रक्रियाम् ॥ अथेदानीं कृतसार्थावबोधवेदाध्ययनब्रह्मचर्येण ब्रह्मचारिणा ऋष्यृणापाकरणानन्तरं क्रमप्राप्तदेवपित्रृणापाकरणस्य कर्तव्यत्वात्तत्राधिकारपरिप्रापको विवाहविधिरभिधीयते ॥ श्रूयते हि यथा क्रमः—'ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी' इति । अत्र मनुः—'गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि । उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्' ॥ दक्षः—'वेदानधीत्य यत्नेन पाठतो ज्ञानतस्तथा । समावर्तनपूर्वं तु लक्षण्यां स्त्रियमुद्वहेत् ॥ अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः । आश्रमेण विना तिष्ठन्प्रायश्चित्तीयते हि सः ॥ जपे होमे तथा दाने स्वाध्याये वा रतः सदा । नासौ फलमवाप्नोति कुर्वाणोऽप्याश्रमच्युतः' इति ॥ ॥ अथ कुलविचारः । अत्र प्रथमं तावत्प्राधान्येन कुलं परीक्षेयम् । तत्र सूत्रम्—'कुलमग्रे परीक्षेत ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात्' इति । अत्राग्रवचनं समग्रेषु वधूवरगुणेषु सत्स्वपि कुलमेव प्रधानमिति कथयितुं कुलपरीक्षणमाह ये मातृत इति । ये मातृतः पञ्च विद्यादिमन्तः पुरुषाः, ये च पितृतः पञ्चेति कुलं परीक्षेत । यत्र विद्यया तपसा सत्कर्मभिः श्रुतिस्मृतिविहितमनुष्ठानैमनुतिष्ठन्तो मातृतः पञ्च पितृतः पञ्च पुरुषा विद्यन्ते तत्कुलमिति

रात्तु। तस्य राधसो गृहस्य विधतः परिचरतः यजमानस्य हे मघवन्, तं तादृशं त्वां गिर्वणः गीर्भिः सुतावन्तः अभिषुतसोमाः सन्तः हवामहे आह्वयामः ॥ ॥ इन्द्रस्पळुतेति—अयमिन्द्रः स्पट्। स्पशर्यतिर्ज्ञानकर्मा। सर्वस्य ज्ञाता वृत्रहा वृत्रस्य हन्ता परस्याः परं पालयिता नोऽस्माकं वरेण्यः वरणीयः स इन्द्रो नोऽस्मान्पुत्रानिव स्थिरः सन् चरमं पुत्रमिव चरमं पुत्रं यथा माता रक्षति तद्वत् रक्षिषत् रक्षतु। मध्यमं मध्यमपुत्रमिव च रक्षतु। नः अस्मान् पुरः पुरस्तात्पश्चात्पातु ॥ ॥ त्वं नः पश्चादिति—हे इन्द्र, त्वं नोऽस्मत् पश्चाद्भागात् अधरादधरभागात्। एतदुपरिभागस्योपलक्षणम्। उपरिभागादुत्तरादुत्तरभागात् पुरतः पूर्वभागात् किं बहुना विश्वतः सर्वस्मात्प्रदेशान्निपाहि। हे इन्द्र, दैव्यं भयं अस्मादस्मत्तः आरे दूरे कृणुहि कुरु। तथा अदेवीः आसुरीः हेतीः आयुधानि आरे दूरे प्रणुहि ॥ ॥ अद्याद्येति—हे इन्द्र, त्वं नोऽस्मभ्यं अद्याद्य अस्मिन्दिने जीवनपर्याप्तं दत्वा श्वः श्वः द्वितीयेऽहनि परे तृतीयेऽहनि च जीवनपर्याप्तं धनं दत्वा रास्व रक्षस्व। हे सत्पते सतां पालक, विश्वा च अहा सर्वाण्यप्यहानि सर्वेष्वप्यहःसु जरितॄन्स्तोतॄन् रक्षिषः रक्षसि। तथा दिवा नक्तं च नोऽस्मान्रक्षिषः रक्ष ॥ ॥ प्रभङ्गीति—अयं मघवेन्द्रः प्रभङ्गी प्रभञ्जनशीलः अतएव शूरः तुवीमघः प्रभूतधनः संमिश्लः सम्यङ्मिश्रयिता शत्रूणां वीर्याय वीर्यकरणाय। कमिति पादपूरणम्। एवं महानुभावो भवति। हे इन्द्र, ते उभा उभावपि बाहू वृषणा वर्षकौ कामानां वर्षकौ हे शतक्रतो बहुयज्ञ, या यत् वज्रायुधं निमिमिक्षतुः परिगृहीतवन्तौ। इति मन्त्रार्थः ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे स्नातकधर्मनिरूपणम् ॥

अथ विवाहप्रकरणम् ॥ तुलोभयान्ते गतयोर्हि वस्तुनोरधः पतेद्यद्गुरुतां भजेदिति । व्यत्यस्तमेतन्मम देशिके मतं यदूर्ध्वगामी गुरु तद्भजेऽहम् ॥ अश्नामि पञ्चवदनं करिवरदमनस्य यस्य तूद्वाहे । रत्नानि रत्नखनिजान्ययत्ननीराजनाः स राजन्ते ॥ अपिच—प्रत्यर्थिप्रथमानदैत्यमुकुटालंकाररत्नाङ्कुरद्योतद्योसरिदम्बुपूरपरितः प्रक्षालिताङ्घ्रिद्वयः । क्षौमोल्लासितदीप्तकीर्तिहरणो धाटीषु कोटीष्वपि श्रीलक्ष्मीनरसिंहदेव भजसे वैवाहिकीं प्रक्रियाम् ॥ अथेदानीं कृतसाधीतवेदाध्ययनब्रह्मचर्येण ब्रह्मचारिणा ऋष्यृणापाकरणानन्तरं क्रमप्राप्तदेवपित्रृणापाकरणस्य कर्तव्यत्वात्तत्राधिकारपरिप्रापको विवाहविधिरभिधीयते ॥ श्रूयते हि यथा क्रमः—'ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी' इति । अत्र मनुः—'गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि । उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्' ॥ दक्षः—'वेदानधीत्य यत्नेन पाठतो ज्ञानतस्तथा । समावर्तनपूर्वं तु लक्षण्यां स्त्रियमुद्वहेत् ॥ अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः । आश्रमेण विना तिष्ठन्प्रायश्चित्तीयते हि सः ॥ जपे होमे तथा दाने स्वाध्याये वा रतः सदा । नासौ फलमवाप्नोति कुर्वाणोऽप्याश्रमच्युतः' इति ॥ ॥ अथ कुलविचारः । अत्र प्रथमं तावत्प्राधान्येन कुलं परीक्षेयम् । तत्र गृह्यम्—'कुलमग्रे परीक्षेत ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात्' इति । अत्राग्रवचनं समग्रेषु वधूवरगुणेषु सत्स्वपि कुलमेव प्रधानमिति कथयितुं कुलपरीक्षणमाह ये मातृत इति । ये मातृतः पञ्च विद्यादिमन्तः पुरुषाः, ये च पितृतः पञ्चेति कुलं परीक्षेत । यत्र विद्यया तपसा सत्कर्मभिः श्रुतिस्मृतिविहितमनुष्ठानैमनुतिष्ठन्तो मातृतः पञ्च पितृतः पञ्च पुरुषा विद्यन्ते तत्कुलमिति

यथा पुरस्ताद्दार्शपेये कर्मण्युक्तमसामिरिति शेषः। एवंच दशपुरुषशुद्धि कुलमित्युक्तं भवतीति ॥ अत्र भगवाञ्छौनकः—'लब्धाभ्यनुज्ञो गुरुतो द्विजो लक्षणसंयुताम् । बुद्धिशीलगुणोपेतां कन्यकामन्यगोत्रजाम् । आत्मनोऽवरवर्णां च विवहेद्विधिपूर्वकम्' इति । मनुस्तु—'उत्तमैरुत्तमो नित्यं संबन्धानाचरेत्सह । निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत्' इति ॥ उत्तमानाह स एव—विशुद्धाः कर्मभिश्चैव श्रुतिस्मृतिनिदर्शितैः । अविप्लुतब्रह्मचर्यमहाकुलसमन्विताः ॥ संतुष्टाः सज्जनहिताः साधवः समदर्शिनः । लोभरागद्वेषामर्षमानमोहविवर्जिताः ॥ अक्रोधनाः सुप्रसादाः कार्याः संबन्धिनः सदा' इति ॥ अधमानाह—'ये स्तेनाः पिशुनाः क्लीबा ये वा नास्तिकबुद्धयः । विकर्मणा च जीवन्तो विकृताकृतयस्तथा ॥ प्रवृद्धवैराः क्रूरैश्च राजकिल्बिषिणस्तथा । ब्रह्मस्वादननिन्द्याश्च कदर्याश्च विगर्हिताः ॥ अप्रज्ञा येषु वंशेषु स्त्रीप्रजाप्रसुवस्तथा । पतितास्यश्च सुराप्यश्च तांश्च यत्नेन वर्जयेत् ॥ महान्त्यपि समृद्धानि गोजाविधनधान्यतः । स्त्रीसंबन्धे दशैतानि सुतरां परिवर्जयेत् ॥ हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम् । क्षयामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च' इति ॥ हीनक्रियं विहितक्रियारहितम् । निष्पुरुषं स्त्रीमात्रपरिशेषम् । निश्छन्दः स्वाध्यायहीनम् । रोमशं सर्वावयवसंरूढरोमकम् । अर्शसं अर्शोरोगवत् । अन्यानि प्रसिद्धानि ॥ यमोपि—'चतुर्दशकुलानीमान्यपि धार्याणि निर्दिशेत् । अनार्षेयं ब्राह्मणानामृत्विजां चैव वर्जयेत् ॥ अत्युच्चकमतिह्रस्वमतिवर्णं च वर्जयेत् । हीनाङ्गमतिरिक्ताङ्गमामयाविकुलानि च । श्वित्रिकुष्ठिकुलादीनां कुर्याद्धि परिवर्जनम् । सदाकामकुलं वर्ज्यं रोमशानां च यत्कुलम् । अपस्मारिकुलं यच्च

पाठा०—१ अवरवर्णां । २ नास्तिकवृत्तय । ३ कुलानि । ४ विप्रकुष्ठि ।

पाण्डुरोगकुलं भवेत्' इति । एतच्च हीनक्रियादिवर्जनं तथाविपत्परिहारार्थम् । 'कुलानुरूपाः प्रजाः संभवन्ती'ति हारीतवचनात् ॥ अत्र व्यासः—'मातुलान्भजते पुत्रः कन्यका भजते पितॄन् । यथाशीला भवेन्माता तथाशीला भवेन्नृप' ॥ मनुरपि—'पितुर्वा भजते शीलं मातुर्वोभयमेव वा । न कथंचन दुर्योनिः प्रकृतिं स्वां नियच्छति' इति ॥ विष्णुः—'अर्थं पित्रा परीक्षेत मात्रा कन्यां परीक्षयेत् । तृणाद्भूमिं परीक्षेत आचारेण कुलं तथा' ॥ ॥ कुलापकर्षकारणमाह मनुः—'शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः । गोभिरश्वैश्च यानैश्च कृष्यारम्भोपसेवया ॥ अयाज्ययाजनैश्चैव नास्तिक्येन च कर्मणा । कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः' ॥ ॥ इत्थमादौ कुलं परीक्ष्य ततो लक्षणानि परीक्षितव्यानि । अपरीक्ष्य विवाहे दोषश्रवणात् । तदुक्तं बोधायनेन—'वर्जयेत्सर्वथाभूष्णुरशुभा लक्षणैश्च याः । भर्तुरायुर्हरन्त्येता आलस्यादपरीक्षिताः' इति ॥ ॥ अथ कन्यापरीक्षणम् । इदमत्र रहस्यम्—'बुद्धिरूपशीललक्षणसंपन्नामरोगामुपयच्छेत' इति । शास्त्राविरुद्धदृष्टादृष्टसाधनोहापोहकुशलादिर्बुद्धिर्यत्र वरस्य मनो रमते तद्रूपम् । तदाहापस्तम्बः—'यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिः' इति ॥ ॥ लक्षणानि तु बाह्याभ्यन्तरभेदेन द्विविधानि भवन्ति । तत्र बाह्यान्याह शातातपः—'हंसस्वनां मेघवर्णां मधुपिङ्गललोचनाम् । तादृशीं वरयेत्कन्यां गृहस्थः सुखमेधते ॥ मृगाक्षी मृगगुल्फा च मृगग्रीवा मृगोदरी । हंसरम्यगतिर्नारी राजपत्नी भविष्यति ॥ मृदुभाषा च या नारी मृदुपादतला सती । नारी कुमुदवर्णाभा राजपत्नी भविष्यति' । मनुः—'अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम् । तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत्स्त्रियम् ॥ नोद्वहेत्कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् । नालोमिकां नाति-

अनेन पुनर्भूत्वनिवर्तते ॥ तथाच काश्यपः—'सप्त पौनर्भवाः कन्या वर्जयिता कुलाधमाः । वाचादत्ता मनोदत्ता कृतकौतुकमङ्गला ॥ उदकस्पर्शिता या च या च पाणिगृहीतिका । अग्निं परिगता या च पुनर्भूप्रसवा च या । इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत्' ॥ बौधायनोपि—'वाग्दत्ता मनोदत्ताऽग्निं परिगता सप्तमं पदं नीता गृहीतगर्भा प्रसूता चेति सप्तविधा पुनर्भूस्तां गृहीत्वा न प्रजां न धर्मं विन्देदि'ति ॥ २ कान्तां—वरचक्षुर्मनसोराह्लादकारिणी कान्ता । ३ असपिण्डां—समान एकः पिण्डो यस्याः सा सपिण्डा । सपिण्डा न भवतीत्यसपिण्डा । सपिण्डता च सप्तपुरुषपर्यवसायिनी । तत्रैकः पिण्डदः त्रयः पिण्डभाजः पितृपितामहप्रपितामहाः । त्रयो लेपभाजो वृद्धप्रपितामहादयः ॥ तथाच मत्स्यपुराणे—'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्' इति । एतदुक्तं भवति—सप्तानां पुरुषाणामेकपिण्डक्रियानुप्रवेशः सापिण्ड्यहेतुः । तथाच देवदत्तस्य स्वकीयैः पित्रादिभिः षड्भिः सह सापिण्ड्यमिति । नन्वेवं सति भ्रातृपितृव्यादिभिः सह सापिण्ड्यं न स्यात् । परिगणने तेष्वनन्तर्भावात् । मैवम् । उद्देश्यदेवतैक्येन क्रियैक्यस्यात्राविवक्षितत्वात् । देवदत्तकर्तृकक्रियायां ये देवतात्वेनानुप्रविशन्ति तेषां मध्ये यः कोपि भ्रातृपितृकक्रियामप्यनुप्रविशतीत्यस्ति तैः सह सापिण्ड्यम् । एवंच तन्नारीणामपि भर्तृकर्तृकपिण्डदानक्रियायां सहकर्तृकत्वात्सापिण्ड्यमिति । तदिदं निर्वापसापिण्ड्यम् । अपरे पुनरवयवसापिण्ड्यमाहुः । तथाहि—समान एकः पिण्डो देहाद्यवयवो येषां ते सपिण्डाः । तत्र पुत्रस्य साक्षात्पितृदेहावयवान्वयेन पित्रा सह सापिण्ड्यं तथा पितामहादिभिरपि पितृद्वारेण तच्छरीरावयवान्वयात् । एवं साक्षान्मातृशरीरावयवान्वयेन मात्रा

मातामहादिभिरपि मातृद्वारेण तच्छरीरावयवान्वयात् । तथा पितृपितृव्यपितृष्वस्रादिभिरपि पितामहदेहावयवान्वयात् । तथा पत्न्या सह पत्न्या एकशरीरारम्भकतया । एवं भ्रातृभार्याणामप्येकशरीरारब्धैः स्वस्वपतिभिः सहैकशरीरारम्भकत्वेन । एवं तत्र साक्षात्परम्परया वा एकशरीरान्वयेन सापिण्ड्यं योजनीयम् । उक्तं द्विविधसापिण्ड्यं यस्यां नास्ति सेयमसपिण्डा तामुद्वहेत् । नन्वेवं सति न क्वाप्युद्वाहः संभवेत्, सर्वत्र सापिण्ड्यस्य कथंचिद्योजयितुं शक्यत्वात् । विधातृशरीरावयवानुवृत्तेर्दुष्परिहरत्वात् । 'बहु स्यां प्रजायेये'ति श्रुतेः । नैष दोषः । अविशेषेण प्राप्तस्य सापिण्ड्यस्य सप्तसु पञ्चसु च पुरुषेषु संकुचितत्वेन तत ऊर्ध्वं सापिण्ड्यनिवृत्तेः । तथाच याज्ञवल्क्यः—'पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा' इति । अस्यार्थः—मातृपक्षे पञ्चमात् पितृपक्षे सप्तमात्पुरुषादूर्ध्वं सापिण्ड्यं निवर्तत इत्यध्याहृत्य योजनीयम्' इति । एवंच मनुगौतमपराशरवचनान्यप्येवमेव योजनीयानि । तत्र 'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते' इति मनुवचनं, 'सापिण्ड्यनिवृत्तिः सप्तमे पञ्चमे चे'ति गौतमवचनं, उभयत्रापि पञ्चमे सप्तमेनेति सपिण्डता निवर्तत इति योजना । 'पञ्चमीं मातृपक्षे तु पितृपक्षे तु सप्तमीम् । गृहस्थ उद्वहेत्कन्यां न्यायेन विधिना नृपः' इति । अत्र पञ्चमीमित्यभ्याहर्तव्यम् । अन्यथा पञ्चमात्सप्तमादूर्ध्वमिति वचनविरोधात् । 'पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया । क्रियापरा अपि हि ते सर्वे ते शूद्रतां गताः' इति मरीचिवचनविरोधाच्च । अतएव विष्णुः—'सप्तमात्पञ्चमाद्वा यः कन्यकामुद्वहेद्द्विजः । गुरुतल्पी स विज्ञेयः सगोत्रां चैनमुद्वहन्' इति । एतदुक्तं भवति—पितृपक्षे कूटस्थमारभ्य तत्पुत्रादिपरिगणनायां

पाठा०—इति पराशरवचने ।

1सूर्यसमप्रभा । विशालनेत्रा रक्तोष्ठी सा कन्या लभते सुखम् ॥ अङ्कुशं कुण्डलं चक्रं यस्याः पाणितले भवेत् । पुत्रं प्रसूयते नारी नरेन्द्रं सुभगं सुतम् ॥ यस्याः पाणितले रेखा प्राकारं तोरणं तथा । अपि दासकुले जाता राजपत्नी भविष्यति ॥ यस्याश्च कुञ्चिताः केशा मुखं च परिमण्डलम् । नाभिश्च दक्षिणावर्ता सा नारी प्रीतिभाग्भवेत् ॥ दीर्घाङ्गुलिश्च या नारी दीर्घकेशी च या भवेत् । दीर्घमायुरवाप्नोति धनधान्यविवर्धनम् ॥ पद्मेन्दीवरमाला च पूर्णकुम्भं च तोरणम् । यस्याः करतले छत्रं राजपत्नी भविष्यति ॥ कृष्णश्यामा च या नारी गौरवर्णा समप्रभा । स्निग्धाङ्गी स्निग्धनयना सा कन्या लभते सुखम् ॥ यस्याः स्निग्धौ समौ पादौ धरण्यां सुप्रतिष्ठितौ । पादौ लक्षणसंयुक्तौ नारी सा सुखमेधते' इति ॥ ॥ अथ पद्मिन्यादिलक्षणम् । पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा । चतस्रो जातयः स्त्रीणां पद्मिनीं चोत्तमां विदुः ॥ नीलोत्पलदलश्यामा स्निग्धा चम्पकसुप्रभा । वर्णद्वयेन संयुक्ता सा कन्या पद्मिनी भवेत् ॥ स्निग्धा चम्पकगौरा या नीलोत्पलदलप्रभा । सुगन्धा च विशालाक्षी निद्रा-भोजनदुर्लभा ॥ पूर्वोक्तलक्षणैर्युक्ता सा कन्या पद्मिनी भवेत् । गीतालापयुता चित्रविद्या या कोकिलस्वरा । क्षाममध्या स्निग्ध-नेत्रा स्वल्पाहारा च चित्रिणी ॥ चलद्दाना क्रोधपरा व्यग्राकारा च शङ्खिनी ॥ विशालकर्णा स्वल्पाक्षी स्थूलदेहा पृथुस्तना । बह्वाशी बहुनिद्रा च क्रोधशीला च हस्तिनी ॥ उत्तमा पद्मिनी चैव मध्यमा चित्रिणी तथा । शङ्खिनी चाधमा प्रोक्ता हस्तिनी चाधमाधमा' इति ॥ स्मृतिमञ्जर्यामपि—'विशालनेत्रां सुमुखीं रक्तसूक्ष्मनखाङ्गुलिम् । तनुमध्यां गुरुश्रोणिं निम्ननाभिं सुजङ्घि-

पाठा०—1 लभते सुखम् ।

काम् ॥ महाकुलसमुद्भूतां सर्वावयवसुन्दरीम् । आयुक्तां सुशीलां च सुपाद्यामुद्वहेत्स्त्रियम् ॥ ॥ महाकुललक्षणमभिहितम्—'पुत्रपौत्रामित्रवृद्धिश्च श्रुताध्ययनसंपदः । पशुधान्यादिसंपत्तिः पितृभ्यां पञ्चपूरुषाः ॥ एतैर्गुणैश्च संयुक्तं तन्महाकुलमुच्यते । एवं सुलक्षणं ज्ञात्वा पुमान्नारीं समुद्वहेत्' इति ॥

अथ नक्षत्रविशेषोत्पन्नकन्याया लक्षणमुच्यते वसिष्ठेन—'सुरेशताराजनिता धवाग्रजं द्विदैवताराजनिता तु देवरम् । नैर्ऋत्यमोद्भूतसुतः सुता वा तदाद्यपादे श्वशुरं निहन्ति ॥ तदन्त्यपादे जनिता निहन्ति सैवोत्क्रमेणाहिभवा कलत्रम्' इति । गृह्यपरिशिष्टे—'अथोपयमनं लक्षण्यो वरो लक्षणवतीं कन्यां यवीयसीमसपिण्डामसगोत्रजामविरुद्धसंबन्धामुपयच्छेत पितृतः सप्तपूरुषं सापिण्ड्यं मातृतः पञ्चपूरुषं भृगुवत्साङ्गिरसश्च प्रवरे व्यधिकयोगे सगोत्रा एकर्षियोग इतरे दम्पत्योर्मिथः पितृमातृ-साम्ये विरुद्धसंबन्धो यथा भार्यास्वसुर्दुहिता पितृव्यपत्नीस्वसा चेति । केचिन्मातृगोत्रजां च वर्जयित्वा तदपत्यमसगोत्रं हि स्यादि'ति ॥ याज्ञवल्क्योपि—'१ अनन्यपूर्विकां २ कान्तां ३ असपिण्डां ४ यवीयसीम् । ५ अरोगिणीं ६ भ्रातृमतीं ७ असमानार्षगोत्रजाम्' इति । अस्यार्थः—१ अनन्यपूर्विकां—या दानेनोपभोगेन वा पुरुषान्तरपूर्विका न भवति सानन्यपूर्विका ।

पाठा०—१ ग्रन्थान्तराद्वरलक्षणम्—अन्धो मूक क्रियाहीनस्त्वपस्मारी नपुंसक । दूरस्थ पतित कुष्ठी दीर्घरोग्यधनो न सत् ॥ अथ कन्यालक्षणम्—सुदर्शा सुरूपा तनुकृत्तदशना सुस्तनाम्बुरुहका कृष्णभ्रूनेत्रकेशा स्थिरसद्गुरत्वा दीर्घनेत्रा विरोमा । तन्वोष्ठी स्वल्पभाला लघुललितगमा पाणिजङ्घोदरका सा कन्योद्वाहिता चेद्बहुसुतसुतवित्तायुरारोग्यदा स्यात् । इत्यङ्गनालक्षणम् ।

सप्तमादूर्ध्वं वरवध्वोर्विवाहो न दुष्यति । मातृपक्षे कूटस्थमारभ्य तत्पुत्रादिपरिगणनायां वरवध्वोर्माता चेत्पञ्चमी भवति तदा तयोः सापिण्ड्यनिवृत्तेर्विवाहो न दोषायेति । नन्वसपिण्डामिति न वक्तव्यम् । असमानार्षगोत्रजामित्यनेनैव विवाहनिषेधसिद्धेः । सत्यम् । तथापि—यासपिण्डा भवति सैवोद्वाहकर्मणि प्रशस्तेति वक्तुमुक्तम् । तथाच मनुः—'असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने' इति । अस्यार्थः—मातुरसपिण्डा या पितुरसगोत्रा चकारादसपिण्डा च सा मिथुनसाध्ये दारकर्मणि द्विजातीनां प्रशस्ता परिणतय इत्यर्थः । नन्वत्र मातृग्रहणमनर्थकम् । पितृगोत्रसापिण्ड्ययोर्निषेधेनैव मातृगोत्रसापिण्ड्यनिषेधसिद्धेः पृथक्सपिण्डगोत्रयोरभावात् । 'एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके । स्वगोत्रात्पतते नारी विवाहे सप्तमे पदे' इति वचनात् । उच्यते—गान्धर्वादिविवाहेषु कन्याप्रदानाभावेन पितृगोत्रसापिण्ड्ययोरनिवृत्तेः । तथाच मार्कण्डेयपुराणे—'ब्राह्मादिषु विवाहेषु यातूढा कन्यका भवेत् । भर्तृगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया ॥ गान्धर्वादिविवाहेषु पितृगोत्रेण धर्मवत्' इति । एवंच 'स्वगोत्राद्भ्रश्यते नारी'त्यत्र प्रचाचेदिति द्रष्टव्यम् । अन्यथा गान्धर्वादिविवाहेष्वपि सप्तपदानुक्रमणसद्भावेनोक्तव्यवस्थाभावप्रसङ्गात् । तदुक्तं गृह्यपरिशिष्टे—'गान्धर्वासुरपैशाचा विवाहा राक्षसाश्च ये । पूर्वं परिणयात्तेषां पश्चाद्धोमो विधीयते' इति ॥ ॥ पितृमात्रात्मबान्धवाः पाराशरेण दर्शिताः—'पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः । पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥ मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः । मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥ आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः । आत्ममातुलपुत्राश्च विज्ञेया

आत्मसान्धनाः' इति ॥ ॥ मातुलकन्यापरिणयनविचारः ॥ एतेन मातुलसुताविवाहविषयोपि विवादः परास्तः । तथाहि तन्निषेधवचनानि । 'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव द्विजश्चान्द्रायणं चरेत्' इत्यादीनि शातातपादीनां वचनानि गान्धर्वादिविवाहोढाजातविषयाणि । तत्र सापिण्ड्यनिवृत्तेरभावात् । मातुलसुताविवाहानुग्राहकश्रुतिस्मृतिसदाचारा ब्राह्मादिविवाहोढाजातविषयाः । तत्र सापिण्ड्यनिवृत्तेः । श्रुतिस्तु—'आयाहीन्द्र पथिभिरीळितेभिर्यज्ञमिमं नो भागधेयं जुषस्व । तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव' इति ॥ अस्यार्थः—हे इन्द्र, पथिभिरीळितेभिः स्तुतैर्मार्गैर्नोऽस्माकमिमं यज्ञमायाहि । आगत्य चास्माभिर्दीयमानं भागधेयं जुषस्व सेवस्व । अतएव यजमानाः तृप्तां आज्यादिना संस्कृतां वपां अवदानाख्यां तामुद्दिश्य जहुस्त्यक्तवन्तः । तत्र दृष्टान्तद्वयम् । यथा मातुलस्य योषा दुहिता दौहित्रस्य भागो भजनीया परिणेतुं योग्या, यथाच पैतृष्वसेयी पौत्रस्य भागो भजनीया परिणेतुं तथा अयं ते तव भागो वपाख्य इति ॥ तथा वाजसनेयकेपि—'तस्मात्समानादेव पुरुषादत्ता चाद्यश्च जायते । तर्हि तृतीये संगच्छावहै चतुर्थे संगच्छावहै' इति । अस्यार्थः—समानादेकस्मात्पुरुषात् अत्ता भोक्ता भार्यापि अद्यश्च भागो भार्यालक्षणश्च जायते जायापतिर्जायत इति यत्त इति । नन्वेकस्मादुत्पन्नयोर्जायापतित्वेन भ्रातृभगिन्योरेव जायापतित्वमुक्तं स्यादित्याशङ्क्याह—तर्हि तृतीये पुरुषे इत्यादि । अनेन दौहित्रपौत्रयोर्मातुलदुहितृपैतृष्वसेयीपरिणयनमुक्तं भवति । तयोः कूटस्थमारभ्य तृतीयत्वात् ॥ संगच्छावहै विवहावहै इत्यर्थः । यद्यप्ययमर्थवादस्तथापि

पाठा०—१ अनन्तृतीये ।

मानान्तरविरोधाभावात्स्वार्थे प्रमाणम्। विरोधवचनानां मातृसापिण्ड्यविषयत्वस्य वर्णितत्वात्। तस्मादविरुद्धार्थवादेनानूदितत्वात् तृतीये संगच्छावहा इत्यत्रापूर्वार्थत्वेन मातुलसुतां विवहेदिति विधिः कल्प्यते। तस्माच्छ्रुत्याद्यनुगृहीतोऽयं विवाहः॥ स्मृतावपि षट्त्रिंशन्मते—'तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा। विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः' इति। चतुर्विंशतिमते—'तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि। विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः' इति॥ ॥ अत्र कलियुगे मातृगोत्रायाः मातृसपिण्डायाश्च परिणयने निषेध उक्तः पराशरेण। तत्र युगधर्मे ब्रह्मपुराणवचनम्—'दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः। गोत्रान्मातुः सपिण्डात्तु विवाहो गोवधस्तथा। नराश्वमेधौ मद्यं च कलौ वर्ज्यां द्विजातिभिः' इति॥ ४ यवीयसीम्—वयसा वपुषा च न्यूना यवीयसी। तच्च न्यूनत्वं कन्याविवाहकालकथने कथयिष्यामः। ५ अरोगिणीम्—अचिकित्स्यराजयक्ष्मादिरोगरहिताम्॥ ६ भ्रातृमतीम्—ज्येष्ठः कनिष्ठो वा भ्राता विद्यते यस्याः सा भ्रातृमती। अनेन पुत्रिकाशङ्का व्युदस्यते॥ ॥ पुत्रिकाकरणविचारः॥ अतएव मनुः—'यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता। नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया'॥ यस्याः पिता पुत्रिकाकरणाभिप्रायवान्नवेति न ज्ञायते तां नोपयच्छेत्। एतत्तु नैव शङ्क्यम्। तामभ्रातृकामप्युपयच्छेतेत्यभिप्रायः। न विज्ञायेत वा पितेत्युक्तेर्वरेण सह संप्रतिपत्तिं विनापि पितुः संकल्पमात्रात्कन्या पुत्रिका भवतीति द्रष्टव्यम्। तथाच गौतमः—'अभिसंधिमात्रात्पुत्रिकेत्येषां तत्संशयं नोपयच्छेदभ्रातृकामपि'।

पाठा०—१ त्रिकेत्येकेषा तत्संशये।

मनुरपि—'अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् । यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम्' इति वरेण सह संप्रतिपत्तौ तु पुत्रिकाकरणं स्पष्टमेव विज्ञायते । सा च संप्रतिपत्तिर्वसिष्ठेन दर्शिता—'अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् । अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति' ॥ अयमेव तद्दानमन्त्रः । अस्याश्च पुत्रिकाया गान्धर्वादाविव स्वपित्रादिभिः सह सापिण्ड्य(स)गोत्रानिवृत्तिः । अतएव लौगाक्षिः—'मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाम् । कुर्वीत पुत्रिकापुत्र एवमाह प्रजापतिः' इति । तदेवमभिहितं पुत्रिकामाशङ्कमानः पुत्रार्थी भ्रातृमतीमेवोपयच्छेतेति ॥७असमानार्षगोत्रजामिति । ऋषेरिदमार्षं प्रवरः । गोत्रप्रवर्तकस्य मुनेर्व्यावर्तको मुनिगण इत्यर्थः। तद्यथा गोत्रप्रवर्तकस्य भरद्वाजस्य व्यावर्तकावङ्गिरोबृहस्पती । अतएवाङ्गिरसबार्हस्पत्यभारद्वाजगोत्रमिति प्रयुञ्जते । एवमन्यत्राप्युदाहार्यम् । गोत्रं तु वंशपरम्पराप्रसिद्धम् । यस्या वध्वा वरेण सह प्रवरैक्यं गोत्रैक्यं च नास्ति सा वधूर्विवाहमर्हति । क्वचिद्गोत्रभेदेऽपि प्रवरैक्यमस्ति । यथा—याज्ञवल्क्यवाधूलमौनमौकानां भिन्नगोत्राणां भार्गववैतहव्यसावेतसेति प्रवरस्यैक्यात्, अतस्तत्र विवाहप्रसक्तौ तद्व्यवच्छेदायासमानार्षेत्युक्तम् ॥ क्वचित्प्रवरभेदेऽपि गोत्रैक्यम् । यथा—आङ्गिरसाम्बरीषयौवनाश्वेति । मान्धात्रम्बरीषयौवनाश्वेत्यत्राङ्गिरसमान्धातृप्रवरभेदेऽपि यौवनाश्वगोत्रमेकम् । अतस्तत्र विवाहो माभूदित्यसमानगोत्रग्रहणम् ॥

गोत्रप्रवरनिर्णयः । अत्र विशेषमाह सूत्रकारः—'एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते । तावत्समानगोत्रत्वमन्यत्र भृग्वङ्गिरसां गणात्' इति । गोत्रप्रवर्तकाश्च प्राधान्येनाष्टौ मुनयः । तेचागस्त्याष्टमाः सप्तर्षयः । तथाच बोधायनः—'१ विश्वामित्रो २ जम-

दमि३र्भरद्वाजोऽथ ४ गौतमः । ५ अत्रि६र्वसिष्ठः ७ कश्यप इत्येते सप्तऋषयः । सप्तर्षीणा ८ मगस्त्याष्टमानां यदपत्यं तद्गोत्र-मित्याचक्षते' इति॥ अत्र संग्रहकारोऽष्टादशगणानाह—'१ जामदग्न्यो २ वीतहव्यो ३ वैन्यो ४ गृत्समदाह्वयः । ५ वाध्र्यश्वो ६ गौतमाख्योपि ७ भरद्वाजाह्वयः ८ कपिः ॥ ९ हारीतः १० कण्वो ११ मौद्गल्यो १२ विरूपो १३विष्णुवर्धकः । १४ अत्रि-१५ र्विश्वामित्रकश्च १६ वसिष्ठः १७ कश्यपाह्वयः । १८ अगस्त्यश्चेति मुनयो ह्यष्टादशगणाः स्मृताः' ॥ १ जामदग्न्यः—'जामदग्न्यश्चवत्सश्च श्रीवत्सश्च्यवनाह्वयः । आप्नवानौर्वसावर्णिर्जीवन्तो देवरातकः ॥ वीतशौर्यश्च शाखाख्यो वैरोहितवटाह्वयः । मन्दूप्राचीनयोग्यः स्यादार्ष्टिषेणस्तनूपकः ॥ एतानि भार्गवाख्यानि दशसप्तोत्तराणि च । जामदग्न्यगणे तस्मिन्न विवाहः परस्परम्' ॥ २ वीतहव्यः—'वीतहव्या मौनमौकायनि वाधूलसंज्ञकाः । सावेदश्च षडेतानि भार्गवाख्यान्वये गणाः । वीतहव्यस्य चान्योन्यं न कार्यं पाणिपीडनम्' ॥ ३ वैन्यः—'वैन्यः पार्थश्च गोत्रे द्वे भवतो भार्गवाह्वकौ । एष वैन्यगणस्तत्र ह्यन्योन्यं न करग्रहः' ॥ ४ गृत्समदः—'उभे गोत्रे गृत्समदः शौनको भार्गवाह्वयः । गणे गृत्समदे तस्मिन्नान्योन्यं पाणिपीडनम्' ॥ ५ वाध्र्यश्वः—'वाध्र्यश्वो मित्रगुप्तो वै गोत्रे भार्गवनामकः । वाध्र्यश्वस्य गणस्तस्मिन्नुद्वाहो न परस्परम् ॥ जामदग्न्यादयः पञ्च गणा भृगुगणाः स्मृताः । नचाप्येषां गणानां तु विवाहः स्यात्परस्परम्' ॥ ६ गौतमः—'गौतमोऽयास्य औचथ्यः कक्षीवानौशिजस्तथा । बृहदुक्थो वामदेवो गोत्राणीमानि सप्त च । गौतमस्य गणस्तस्मिन्विवाहो न परस्परम्' । ७ भरद्वाजः—

पाठा०—१ गणो गृत्समदस्तस्मिन् ।

'भरद्वाजः कुशस्तमिवेश्य ऊर्जो यमः कतः । शैशिरः क्षीरशृङ्गश्च वन्दनश्च बृहस्पतिः । सर्वः स्तम्बः कपिर्मतिवचसो गार्ग्य-शैन्यकौ । भरद्वाजगणाः सप्तदश गोत्रमिति स्मृतम् । तस्मिन्परस्परं कार्यं न कन्यापाणिपीडनम् ॥ ८ कपिः—'कपिश्च महदक्षीय कश्यपस्त्रीणि केवलम् । अयं कपिगणोऽन्योन्यं तस्मिन्नहि करग्रहः' ॥ ९ हारीतः—'हारीतो यौवनाश्वश्च मान्धाता कुत्स-नामकः । पिङ्गलः शङ्खदर्भौ च मौमश्च्यवननामकः । अम्बरीषो दशैतानि हारीतस्य दश स्मृताः । तस्मिन्परस्परं पाणिग्रहणं नहि शोभनम्' ॥ १० कण्वः—'कण्वोऽजमीढ इत्येवं गोत्रे कण्वगणः स्मृतः । तस्मिन्परस्परं पाणिग्रहणं नहि शोभनम्' ॥ ११ मौद्गल्यः—'मौद्गल्यतार्क्ष्यभार्म्याश्वास्त्रीणि गोत्राण्यमूनि हि । मौद्गल्यस्य गणस्तत्र न मिथः पाणिपीडनम्' ॥ १२ विरूपः—'विरूपोऽष्टादंष्ट्रिनामा पृषदश्वश्च मौद्गलः । चत्वारीमानि गोत्राणि विरूपस्य गणः स्मृतः । परस्परं विवाहोऽस्मिन्न विधेय इती-रितः' ॥ १३ विष्णुवृद्धः—'विष्णुवृद्धः पौरुकुत्स्यस्त्रसदस्युः क्रतुस्तथा । मपणो भद्रणाख्यश्च बादरायणसंज्ञकः । सात्यकाम्यौ-पतित्सौ न गविः सात्यकितालुकी । नितुंदश्चेति गोत्राणि त्रयोदशमितानि च । विष्णुवृद्धगणस्तस्मिन विवाहः परस्परम् । गौतमादिगणा अष्टौ यस्तथाङ्गिरसां गणः । तेष्वप्येषां गणानां तु विवाहः स्यात्परस्परम्' ॥ १४ अत्रिः—'तदेतद्गोत्रनवकम-त्रिश्यापार्चनानसः । श्यावाश्वो वामरथ्यश्च गविष्ठिरधनंजयौ । सुमङ्गलिस्तिथिर्बीजवापश्चात्रिगणो ह्ययम् । आत्रेयाख्यो विवाहाख्यं न विधेयं मिथः शुभम्' ॥ १५ विश्वामित्रः—'विश्वामित्रो देवरातो मधुस्तन्तुश्च औल्हकिः । बालुकिश्चकितोलकौ याज्ञव-ल्यश्च नारदः । बृहदग्निः कालवमी शवलिर्वेद्रुरौहितौ । शालंकायनसावर्ण्यौ कामकायनपूरणौ । शालावतोऽग्निदेवश्च दमनः

शौनकोऽष्टकः । आद्यो मधुच्छन्दसश्च देवरातधनंजयौ । शुनः कतः शैशिरश्च वारिधापोऽघमर्षणः । मनुः पनश्च धूम्राख्यो जठरस्तेकर्मेन्यकः । एकोनचत्वारिंशद्धै विश्वामित्रगणः स्मृतः। मिथो नैते विवाह्याः स्युः सगोत्राः कथिता यतः' ॥ १६ वसिष्ठः—'वसिष्ठ इन्द्रप्रमद आभरद्वसुसंकृती । पराशरः पूतिमाषो मैत्रावरुणशक्तिकौ । उपमन्युश्च कौण्डिण्यो गौरवीतस्तथैव च । एकादश वसिष्ठाः स्युर्न विवाह्याः परस्परम्' ॥ १७ काश्यपः—'काश्यपश्च तथा वत्सरश्च नैध्रुवसंकृती । पूतिमापश्च रैभ्यश्च तथा शाण्डिल्यशाण्डिलौ । देवलश्चासितश्चैते दश काश्यपसंज्ञिताः' ॥ १८ अगस्त्यः—'अगस्त्यदार्ढ्यच्युतकाविध्मवाहस्तथैव च । त्रयोऽगस्त्या मिथो नैते विवाह्याः स्युः कदाचन । विश्वामित्रा जामदग्न्या देवरातविवर्जिताः । परस्पर विवाह्याः स्युः सर्वेनेति विनिश्चयः ॥

पाठा०—१ अष्टत्रिंशच्च गोत्राणि विश्वामित्रगणस्मृत । एकस्मिन्नपि चान्योन्य न कुर्यात्पाणिपीडनम् ॥ २ कौण्डिन्य पूतिमापश्च गौरिवीत पराशर । मैत्रावरुणिसविषश्च उपमन्युगन स्मृत । एकादश वसिष्ठस्य गोत्राण्यस्मिन दोषह ॥ ३ काश्यपो रेभरैभी च शाण्डिल्यौ देवलोहित । सांकृति पूतिमापश्च वत्सरो नैध्रुवो दश । गोत्राणि कश्यपगणास्तस्मान्योन्य न दोषह ॥ ४ त्रीण्यगस्त्यो वीतवाहो दार्ढच्युत इति स्मृत । एषोऽगस्त्यगणस्तस्मिन विवाह परस्परम् ॥ जमदग्निगणस्यापि विश्वामित्रगणस्य च । न देवरातगोत्रेण विवाह स्यात्परस्परम् ॥ भरद्वाजगणस्यापि विश्वामित्रगणस्य च । कतशैशिरशुनेव नान्योन्य पाणिपीडनम् ॥ काश्यपेयगणस्यापि वासिष्ठस्य गणस्य च । संकृतिपूतिमाषाभ्यां विवाहो न परस्परम् ॥ आत्रेयस्य गणस्यापि विश्वामित्रगणस्य च । परस्परं न कुर्वीत पाणिपीडनसत्क्रियाम् ॥ अमासयोराद्यैश्च भ्रातरो राजचारय । साराश्च राजसाश्चैव वाहवसदनन्तरम् ॥ तथाधाशुमय (?)प्रोक्ता सैंदध्यो राजसेनक । श्वापुलिंगश्च लौगाक्षिस्तथैवाशरदम्बक । एते मनोदस प्रातर्वैजिश्च निधि कश्यपा । गायत्रीयोनिसत्र धावजीकस्य प्रवर्तका । अहर्वसिष्ठता रात्री कश्यपत्वमपि स्वयम् । तेषा गोत्रद्वय मुक्त्वा वासिष्ठकाश्यपं तथा । सर्वत्रापि विवाह्या स्युरिति वेदविदो विदु ॥

अथ वरलक्षणम् । तत्र गृह्यम्—'बुद्धिमते कन्यां प्रयच्छेत्' इति । अत्र बुद्धिमते इति कुलादीनामुपलक्षणार्थम् । तत्र चन्द्रिकायां विष्णुः—'ब्राह्मणस्य कुलं ग्राह्यं न वेदाः सपदक्रमाः । कन्यादाने तथा श्राद्धे न विद्या तत्र कारणम्' इति । कन्यादाने ब्राह्मणस्य कुलप्राधान्यप्रतिपादनपरमिदं वचनं नतु लक्षणान्तरनिषेधपरम् । अतएव यमः—'कुलं च शीलं च वयश्च रूपं विद्यां च वित्तं च सनाथतां च । एतान्गुणान्सप्त समीक्ष्य देया कन्या बुधैः शेषमचिन्तनीयम्' इति । लैङ्गेपि—'दातव्या श्रोत्रियायैव ब्राह्मणाय तपस्विने । साक्षादधीतवेदाय विधिना ब्रह्मचारिणे' । अत्र ब्रह्मचारिण इत्यस्यायमर्थः—अस्खलितब्रह्मचर्येणैव प्रथमविवाहः कार्यः । ब्रह्मचर्यस्खलिते 'यो ब्रह्मचारी स्त्रियमुपेयात्स गर्दभं पशुमालभेते'त्यादिना विहितं प्रायश्चित्तं कृत्वा कन्यामुद्वहेदिति । तदिदमभिसंधायाह याज्ञवल्क्यः—'अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्' इति ॥ ॥

अथ सामुद्रिकलक्षणम् । समुद्रस्तु सर्वलक्षणपरीक्षातः प्रागायुःपरीक्षा कर्तव्येत्याह—'पूर्वमायुः परीक्षेत पश्चाल्लक्षणमादिशेत् । आयुर्हीननराणां च लक्षणैः किं प्रयोजनम् ॥ वामभागे तु नारीणां दक्षिणे पुरुषस्य तु । निर्दिष्टलक्षणैस्तेषां समुद्रवचनं यथा ॥ पञ्चदीर्घं चतुर्ह्रस्वं पञ्चसूक्ष्मं षडुन्नतम् । सप्तरक्तं त्रिगम्भीरं त्रिविस्तीर्णं प्रशस्यते ॥ बाहुनेत्रान्तरे चैव जानुर्नासा तथैवच । स्तनयोरन्तरं चैव पञ्चदीर्घं प्रशस्यते ॥ ग्रीवा प्रजननं पृष्ठं ह्रस्वं जङ्घे च शोभने । ह्रस्वानि यस्य चत्वारि पूजामाप्नोति नित्यशः ॥ सूक्ष्माण्यङ्गुलिपर्वाणि दन्तकेशनखत्वचः । पञ्च सूक्ष्माणि येषां स्युस्ते नरा दीर्घजीविनः ॥ कक्षः कुक्षिश्च घ्राणश्च स्कन्धवक्षोलला-

पाठा०—१ न च वेदा पदक्रमा । २ 'कुक्षिश्च वक्षश्च घ्राणस्कन्धललाटका' ।

टिकाः । एतत्सर्वं विनिर्दिष्टमुन्नतं षट् प्रशस्यते ॥ नेत्रान्तं रक्तपादं च ह्यधरोष्ठं च तालुकम् । जिह्वा नखाश्च ते सप्त रक्तवर्णाः शुभावहाः ॥ स्वरः सत्त्वं च नाभिश्च त्रिगम्भीरं प्रशस्यते । उरः शिरो ललाटं च त्रिविस्तीर्णं प्रशस्यते ॥ मुखमर्धं शरीरस्य सर्वं वा मुखमुच्यते । तत्रापि चक्षुषी श्रेष्ठे घ्राणं तु तदनन्तरम् । वर्णात्परतरः स्नेहः स्नेहात्परतरः स्वरः । स्वरात्परतरं सत्त्वं सत्त्वे सर्वं प्रतिष्ठितम् ॥ उरोविशालो धनधान्यभोगी शिरोविशालो नृपपुङ्गवः स्यात् । कटीविशालो बहुपुत्रभोगी विशालपादस्तु धनी सुखी स्यात् ॥ चक्षुःस्नेहेन सौभाग्यं दन्तस्नेहेन भोजनम् । त्वचः स्नेहेन शय्या स्यात्पादस्नेहेन वाहनम् ॥ अकर्मकठिनौ हस्तौ पादौ चाध्वनि कोमलौ । यस्य हस्तौ च पादौ च तस्य राज्यं विनिर्दिशेत् ॥ दीर्घलिङ्गे तु दारिद्र्यं स्थूललिङ्गे च निर्धनम् । कृशलिङ्गे तु सौभाग्यं ह्रस्वलिङ्गे तु भूपतिः ॥ कनिष्ठाङ्गुलिदेशे तु रेखा गच्छति मध्यमा । अविच्छिन्ना तु रेखा स्यादशीत्यायुर्विनिर्दिशेत् ॥ अनामिकापर्वमतिक्रमेच्चेत्कनिष्ठिका वर्षशतं च जीवी । समे त्वशीतिर्विषमे तु सप्ततिर्यवार्धहीने खलु षष्टिमादिशेत् ॥ अङ्गुष्ठोदरमध्यस्थो यवो यस्य विराजते । उत्पन्नभोज्यभोगी तु स नरः सुखभाग्भवेत् ॥ रेखाभिर्बहुभिः क्लेशमल्पाभिर्धनहीनताम् । रक्ताभिर्धनमाप्नोति कृष्णाभिर्दुःखितो भवेत् ॥ अतिमेधोऽतिकीर्तिश्च विक्रमी च सुखी तथा । अतिस्निग्धा च दृष्टिः स्यात्स नरोऽल्पायुषो भवेत् ॥ अङ्कुशं कुण्डलं चक्रं यस्य पाणितले भवेत् । तस्य राज्यं विनिर्दिष्टं समुद्रवचनं यथा ॥ मत्स्ये शतं विजानीयान्मकरे तु सहस्रकम् ॥ पद्मे कोटिं विजानीयाच्छङ्खे कोटिसहस्रकम् ॥ अतिकृष्णमतिश्वेतमतिरक्तं तथैव च । इत्थं वर्णेन रोगी च नारदस्य वचो यथा' इति ॥ ॥ उत्पलपरिमले पादादिलक्षणमाह वराहमिहिरः—'अस्वेदिनौ मृदुतरौ कमलो-

दराभौ श्लिष्टाङ्गुली रुचिरपार्ष्णिनखौ सुपार्ष्णी। उष्णौ शिराविरहितौ च निगूढगुल्फौ कूर्मोन्नतौ च चरणौ मनुजेश्वरस्य' ॥ अस्यार्थः—श्लिष्टाङ्गुली अविरलाङ्गुली। रुचिराः पार्ष्णिनखा ययोः। कूर्मपृष्ठवदुन्नतोपरिभागौ एवंविधौ पादौ नरस्य राज्यप्रदाविर्त्यर्थः। 'शूर्पाकारविरूक्षपाण्डुरनखौ वक्रौ शिरासंततौ संशुष्कौ विरलाङ्गुली च चरणौ दारिद्र्यदुःखप्रदौ। मार्गायोत्कटिकौ कषायसदृशौ वंशस्य विच्छित्तिदौ ब्रह्मघ्नौ परिदग्धमृत्तिकवलौ पीतावगम्यारतौ' इति। अस्यार्थः—शूर्पाकारावग्रविस्तीर्णौ भुजारुक्षिग्धौ उत्कटिकौ मध्यादुन्नतौ मार्गायासकरौ दग्धमृत्तिकावद्विवर्णकान्तिमत्तरौ ब्रह्मवधादिपातकातिपातकौ अगम्यस्त्रीगमने च पीतावितीति ॥ ॥ अत्राङ्गुलिलक्षणमाह समुद्रः—'अङ्गुष्ठौ पृथुलौ येषां ते नरा भाग्यवर्जिताः। कृशातिविकृताङ्गुष्ठा नराश्चेद्गमनशीलिनः। चिपिटैर्विकृतैर्भग्नैररङ्गुष्ठैरतिनिन्दिताः ॥ यस्य प्रदेशिनी दीर्घा अङ्गुष्ठं समतिक्रमेत्। स्त्रीभोगं लभते नित्यं पुरुषो नात्र संशयः ॥ कनिष्ठायां तु दीर्घायां सुवर्णस्य तु भागिनः। विकृतैः स्फुटितैः स्थूलैर्नरैर्दारिद्र्यभागिनः ॥ ब्रह्महत्याः प्रकुर्वन्ति पुरुषा हरितैर्नखैः। सूक्ष्मैरुपचितैस्ताम्रैर्नखैर्भूपतयो मताः' इति ॥ ॥ अथ जङ्घालक्षणमाह वराहमिहिरः—'अविरलतनुरूक्षरोमजङ्घा द्विरदकरप्रतिमैर्वरोरुभिश्च। उपचितसमजानवश्च भूपा धनरहितास्तु शृगालतुल्यजङ्घाः' इति ॥ ॥ अथ बाहुलक्षणम्—'विपुलावत्युच्छ्रितांसौ श्लिष्टौ तौ वर्तुलौ च करौ। करिकरसदृक्षरूपावाजानुविलम्बितौ समौ पीनौ ॥ बाहू पृथ्वीशानामधनानां रोमशौ ह्रस्वौ' इति ॥ अथ ललाटलक्षणम्—'रेखाः पञ्च ललाटे तु स्त्रियो वा पुरुषस्य वा। शतवर्षाणि संजीवेदैश्वर्यं चाधिगच्छति ॥ अशीतिस्तु चतूरेखास्तिसृभिः सप्ततिर्भवेत्। द्वाभ्यां षष्टिर्विनिर्दिष्टा चत्वारिंशत्तथैकया ॥ अरेखेन ललाटेन

निशदायुर्भवेदिति ॥ त्रिशूलसदृशं वापि ललाटे यस्य दृश्यते । श्रीवत्सं स्वस्तिकाद्यं वा स भोगैश्वर्यभाग्भवेत्' इति ॥ ॥ अथ शिरोलक्षणम्—'पटमूर्धा ध्वानरुचिर्द्विमस्तकः पापकृद्धनैस्त्यक्तः । निम्नं तु शिरो महतां बहुनिम्नमनर्थकं भवति' इति ॥ ॥ अथ केशलक्षणम्—'एकैकभवैः स्निग्धैः कृष्णैराकुञ्चितैरभिन्नाग्रैः । मृदुभिर्नचातिबहुभिः केशैः सुखभाग्नरेन्द्रो वा' इति ॥ ॥ अथ सर्वगात्रलक्षणम्—'यद्यद्गात्रं रूक्षं मांसविहीनं शिरावनद्धं च । तत्तदनिष्टं प्रोक्तं विपरीतमतः शुभं सर्वम्' इति । याज्ञवल्क्यः—'एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः । यत्नात्परीक्षितः पुंस्त्वे युवा धीमाञ्जनप्रियः' इति ॥ ॥ पुंस्त्वपरीक्षाप्रकारमाह नारदः—'यस्याप्सु प्लवते बीजं ह्लादि मूत्रं च फेनिलम् । पुमान्स्याल्लक्षणैरेतैर्विपरीतस्तु पण्ढकः' । बीजं वीर्यम् ह्लादि ध्वनिमत् ॥ ॥ एतल्लक्षणपरीक्षणे कारणमाह स एव—'अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनो नराः । क्षेत्रं बीजवते देयं नाबीजः क्षेत्रमर्हति' इति ॥ अत्रान्यान्यपि वर्ज्यान्याह कात्यायनः—'उन्मत्तः पतितः कुष्ठी तथा पण्ढः सगोत्रजः । चक्षुःश्रोत्रविहीनश्च तथापस्मारदूषितः ॥ दूरस्थानामविद्यानां मोक्षमार्गानुसारिणाम् । शूराणां निर्धनानां च न देया कन्यका बुधैः' इति । वासिष्ठे—'अत्यासन्नेऽतिदूरे च अत्याढ्ये चातिदुर्बले । वृत्तिहीने च मूर्खे च षट्सु कन्या न दीयते' इति ॥ पराशरप्रायश्चित्तकाण्डे तु—'कन्यां यच्छति वृद्धाय नीचाय धनलिप्सया । कुरूपाय कुशीलाय स प्रेतो जायते नरः' ॥ ॥ कन्याशुल्कप्रायश्चित्तम्—अत्र दारिद्र्यादिना कन्यां शुल्केन यो ददाति तस्य प्रायश्चित्तमुच्यते ऋग्विधाने—'महत्सोमवर्गं च लक्षं पेद्विष्णुमन्दिरे । कन्याविक्रयदोषस्तु प्रणश्यति न संशयः' इति ॥

अथ परिवेत्रादिनिर्णय उच्यते । तत्र मनुः—'परिवित्तिः परिवेत्ता यया च परिविन्दति । ते सर्वे नरकं यान्ति दातृयाजकपञ्चमाः ॥ तेषां लक्षणमाह स एव—'दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते । परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः' । अग्रजे अनूढे स्थिते सतीत्यर्थः ॥ तथाच मनुः—'अग्रजे ब्रह्मचर्यस्थे योऽनुजो दारसंग्रहम् । कुरुते परिवेत्ता स परिवित्तिरग्रजो भवेत्' । अग्रजोऽत्र सोदर्यो विवक्षितः ॥ तथाच गर्गः—'सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रहम्' इति । सोदर्याभावे तु न दोषः ॥ तथाच शातातपः—'पितृव्यपुत्राः सापत्नाः परनारीसुतास्तथा । दाराग्निहोत्रसंयोगे न दोषः परिवेदने' । सापत्ना अन्यमातृजाः । परनारीसुताः क्षेत्रजादयः ॥ यमोपि—'पितृव्यपुत्रान्सापत्नान्परपुत्रांस्तथैव च । दाराग्निहोत्रधर्मेषु नाधर्मः परिविन्दतः' इति । परपुत्रा दत्तकक्रीतादयः ॥ गौतमोपि—'भिन्नोदरे दत्तके च पितृव्यतनयेऽग्रजे । दाराग्निहोत्रसंयोगे न दोषः परिवेदने' इति ॥ ॥ सोदरस्य विषयेपि क्वचित्परिवेदने दोषाभावमाह शातातपः—'क्लीबे देशान्तरस्थे च पतिते भिक्षुके तथा । योगशास्त्राभियुक्ते च न दोषः परिवेदने' । भिक्षुकः प्रव्रजितः । योगशास्त्राभियुक्तो विरक्तः ॥ जमदग्निरपि—'काणान्धबधिरव्यङ्गषण्ढकुष्ठादिपातके । पङ्गौ कुब्जे क्रियाहीने न दोषः परिवेदने' ॥ कात्यायनोपि—'देशान्तरस्थान्क्लीबांश्च वृषणांश्च सहोदरान् । वेश्यासंसक्तपतितशूद्रतुल्यातिरोगिणः ॥ जडमूकान्धबधिरकुब्जवामनखेलकान् । अतिवृद्धानभार्यांश्च कृषिसक्तान्परस्य च ॥ धनवृद्धिप्रसक्तांश्च कामतश्चारिणस्तथा । कुहकोन्मत्तचोरांश्च परिविन्दन्न दुष्यति' ॥ खेलको भग्नपादः । अभार्या नैष्ठिकब्रह्मचारिणः । कामतश्चारिणः स्वेच्छया विवाहानिच्छवः ॥ ॥ ज्येष्ठे देशान्तरगते कालप्रतीक्षामन्तरेण परिवेदने

दोषमाह वसिष्ठः—'अष्टौ द्वादश वर्षाणि ज्येष्ठभ्रातरमनिविष्टमप्रतीक्षमाणः प्रायश्चित्ती भवति' इति । अनिविष्टमकृतविवाहम् ॥ स्मृत्यन्तरे तु—'द्वादशैव तु वर्षाणि ज्यायान्धर्मार्थयोगतः । न्याय्यः प्रतीक्षितुं भ्रात्रा श्रूयमाणः पुनःपुनः' इति ॥ ॥ अप्रतीक्ष्यानाह कार्ष्णाजिनिः—'उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव च । राजयक्ष्मामयावी च न न्याय्यः स्यात्प्रतीक्षितुम्' इति ॥ ॥ भिन्नोदरविषयं संहितासारावल्यां गर्गेणोक्तम्—'एकमातृप्रसूतानां पुत्राणां परिवेदने । दोषः स्यात्सर्ववर्णेषु न दोषो भिन्नमातृषु' इति ॥ ॥ एकमातृप्रसूतानां स्त्रीणां क्वचित्परिवेदनेपि दोषाभावमाह वृद्धमनुः—'विवाहानधिकारः स्याज्ज्येष्ठकन्या स्थिता यदि । तदनुज्ञां विना वापि कनिष्ठामुद्वहेत्तदा । कालप्रतीक्षणं न स्याद्रजोदृष्टं न दोषभाक्' इति । अन्यत्सर्वं पुंपरिवेदनोक्तमनुसंधेयम् ॥ ॥ अत्र परिवेत्रादीनां प्रायश्चित्तं पाराशरप्रायश्चित्तकाण्डे—'परिवित्तिः परिवेत्ता यया च परिविद्यते । ते सर्वे नरकं यान्ति दातृयाजकपञ्चमाः ॥ द्वौ कृच्छ्रौ परिवित्तेस्तु कन्यायाः कृच्छ्र एव च । कृच्छ्रातिकृच्छ्रं दातुस्तु दत्ता चान्द्रायणं चरेत्' इति ॥ नचात्र परिवेत्तुः प्रायश्चित्तमनुक्तमिति शङ्कनीयम् । परिवित्तिशब्देन तस्याप्युपलक्षितत्वात् । अतएव यमः ॥ परिवित्तिपरिवेत्रोर्द्वयोः समं प्रायश्चित्तमाह—'कृच्छ्रौ द्वयोः परिवेत्रोः कन्यायाः कृच्छ्रमेव च । अतिकृच्छ्रं चरेद्दाता तथा चान्द्रायणं चरेत्' इति । प्रायश्चित्ताचरणानन्तरं परिवित्तेः कर्तव्यमाह वसिष्ठः—'परिविविन्नः कृच्छ्रातिकृच्छ्रं चरित्वा तस्मै दत्त्वा पुनर्विशेत् तु तामेवोपयच्छेतेति । तस्मै दत्त्वा ज्येष्ठाय निवेद्य पुनरुद्वहेत् ॥ कामित्यपेक्षायामाह—'तामेवो-

पाठाः—१ कृच्छ्रद्वय परिवेत्तु । २ कृच्छ्रातिकृच्छ्र दातुस्तु ।

पराच्छेनेति ॥ अयमेव न्यायो ज्येष्ठकनिष्ठयोराधानव्युत्क्रमे भगिन्योर्विवाहव्युत्क्रमे चानुसंधेयः ॥ अतएव गौतमः—'परिविन्नपरिवेत्तृपर्याहितपर्याधानाग्रेदिधिषूपतीनां संवत्सरं प्राकृतं ब्रह्मचर्य'मिति ॥ अग्रेदिधिषूपत्यादौ विशेषो वसिष्ठेनोक्तः—'अग्रेदिधिषूपतिः कृच्छ्रं द्वादशरात्रं चरित्वा निविशेत । तथा चोपयच्छेत दिधिषूपतिः कृच्छ्रातिकृच्छ्रं चरित्वा तस्मै दत्त्वा पुनर्निविशेते'ति ॥ अग्रेदिधिष्वादेर्लक्षणं देवलेनोक्तम्—'ज्येष्ठायां यद्यनूढायां कन्यायामूह्यतेऽनुजा । या साग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृता' इति । तत्राग्रेदिधिषूपतिर्द्वादशरात्रं कृच्छ्रं प्राजापत्यं चरित्वा ज्येष्ठायामन्येनोढायां पश्चात्तामेवोद्वहेत् । तां दिधिषूम् । दिधिषूपतिस्तु कृच्छ्रातिकृच्छ्रं चरित्वा स्वोढां ज्येष्ठां तस्मै कनीयसाः पूर्वोढ्रे दत्त्वाऽन्यामुद्वहेदि'ति । इति परिवेत्त्रादिनिर्णयः ॥

अथ विवाहकालः ॥ अथेदानीमेवंलक्षणलक्षितयोर्वधूवरयोर्विवाहकालप्रमाणमुच्यते । तत्र नारदः—'युग्मेऽब्दे जन्मतः स्त्रीणां प्रीतिदं पाणिपीडनम् । तच्च पुंसामयुग्मेऽब्दे व्यत्यये नाशनं तयोः' इति ॥ आचार्यस्तु—'कुलशीलवयोवृत्तरूपाढ्यां नग्निकां शुभाम् । विधिना तु वरः कन्यामुद्वहेदात्मनः समाम् ॥ सप्ताब्दा कन्यकानाम्नी शैशवी स्यात्शुभान्विता । गामप्रदानवर्षीयो विवहेद्विधिवत्पुमान् ॥ अष्टवर्षा भवेद्गौरी पुत्रपौत्रप्रवर्धिनी । पञ्चविंशतिवर्षीयस्तां कन्यामुद्वहेत्ततः ॥ रोहिणी नववर्षा स्याद्धनधान्यविवर्धिनी । तामुद्वहेत मतिमान्सर्वकामार्थसिद्धये ॥ ऊर्ध्वं दशाब्दाद्या कन्या प्राग्रजोदर्शनात्तु सा । गान्धारी

पाठा०—१ विवहेदुद्विमर । २ मुद्वहेत्तिज ।

स्यात्समुद्वाह्या चिरजीवितुमिच्छुना' इति ॥ यमः—'दद्याद्गुणवते कन्यां नग्निकामविशङ्कितः' इति ॥ गौतमोऽपि—'प्रयच्छेन्नग्निकां कन्यामृतुकालभयादिह । ऋतुमत्यां तु तिष्ठन्त्यां दोषः पितरमृच्छति' इति ॥ ॥ नग्निकालक्षणं स्मृतिभास्करे । तत्र पुराणम्—'यावन्न लज्जां जानाति कन्या पुरुषसंनिधौ । योन्यादीन्नावगूहेत तावद्भवति नग्निका' । संग्रहकारोऽपि—'यावच्चैलं न गृह्णाति यावत्क्रीडति पांसुभिः । यावद्दोषं न जानाति तावद्भवति नग्निका' इति । अमरसिंहस्तु—'गौरी तु नग्निकाऽनागतार्तवा'इत्याह । उल्लिखितमेवैतल्लिङ्गभट्टेन—मनसा विवाहं प्रतिगुरते प्रत्युद्गच्छतीति गौरी । 'गुरी उद्यमने' । लज्जते व्रीड्यतीति नग्निका । 'ओलस्जी व्रीडने' । अत्र नग्निकाशब्दो विरुद्धलक्षणया गौर्यां वर्तते । अनागतमार्तवमस्या इत्यनागतार्तवा । अनूढसप्तवर्षाधिकानां नामानीति । अतएव संवर्तः—'अष्टवर्षा भवेद्गौरी नवमे नग्निका भवेत् । दशमे कन्यका प्रोक्ता द्वादशे वृषली मता' इति । एवंच सत्येषां वचनानामेकवाक्यताङ्गीकृता । आरभ्य जननादर्वागार्तवात्सर्वकालयुक्ता नग्निका विवाह्या भवतीति संपद्यते । गौतम आह—'विवाह्या जननादूर्ध्वं चतुर्थाब्दात्परं स्त्रियः । आदशमाब्दपर्यन्तमारजोदर्शनात्पुरा'इति । 'चतुर्थे जननात्पूर्वं न विवाहेति केचन । गौरीव कन्यका भाति चूडादूर्ध्वमिह स्त्रियः'इति । तस्माच्चौलकालादूर्ध्वमारजोदर्शनात्तस्मिन्नालिशानामपि नग्निकानां चापि स्त्रीणां विवाह उक्तः—'विशुद्धवंशजां कन्यां सुभगां सुमनोरमाम् । शुद्धां यवीयसीं हृद्यामसमानार्षगोत्रजाम्' इति । विवहेदिति शेषः । कश्यपोऽपि—'पूर्वोक्तलक्षणोपेतां रोगदोषविवर्जिताम् । अष्टाब्दां विवहेत्तां तु त्र्यष्टाब्दो वा वरः शुभाम्' इति । भगवान्—'चतुर्हायनकन्यां तु विवहेत्षोडशाब्दकः । त्रिंशद्वर्षो द्वादशाब्दाकरग्रहणमिष्यते ॥

प्राग्द्वादशाब्दात्पुंसस्तु दशाब्दादिति चापरे । विवाहं न प्रशंसन्ति पुनरायुर्वृद्धिमिच्छवः ॥ विवाहं नैव दुष्यन्ति कलौ तु नियमादिहे'ति । द्वादशाब्दात्प्रागनरस्य विवाहनिषेधादिदं वचनमुक्तम् ॥ भरद्वाजगृह्ये—'विंशाब्दस्य च कर्तव्या सप्ताब्दा कन्यका शुभा । प्राग्विंशतेर्द्वादशाब्दादूर्ध्वं पञ्चसमिका स्त्रियम् ॥ वरस्तु विवहेत्प्राज्ञश्चतुर्विंशत्समस्तथा । हृद्यां तां नववर्षीया दशवर्षामथापि वा' इति ॥ यमोपि—'त्र्यष्टको विवहेत्प्राज्ञो ह्यष्टाब्दां विधिपूर्वकम् । चत्वारिंशत्समः कुर्याद्द्वादशाब्दां विशेषतः ॥ तत्प्राग्दशाब्दिका कन्यामायुःप्रज्ञाभिवृद्धये । विपरीतं न कर्तव्यं पुत्रार्थी नीरुजस्तथा' इति ॥ अत्र विशेषमाह हेमाद्रावत्रिः—'ब्रह्मचर्यं दीर्घकालं तदुक्तव्रतचारणम् । पुनर्विवाहश्च कलौ भर्तृनाशकरः स्त्रियाः ॥ न कुर्याच्च गवालम्भमश्वालम्भं च तत्कलौ' इति । दीर्घकालं ब्रह्मचर्यनियमादीनां निषेधात्स्त्रीणां द्वादशाब्दचतुर्दशाब्दपर्यन्तावधानकालेक्षणनिषेधादत ऊर्ध्वं रजस्वलेत्युक्त्या च स्त्रीणां चतुर्वर्षादूर्ध्वं द्वादशाब्दपर्यन्त तस्मिन्वालिशाया अपि विवाह उक्तः । अत्र किंचिद्दोषमाहापस्तम्बः—'सप्तपञ्चदशवर्षस्य विवाहस्तस्य योषितः । द्विनिवर्षाधिका न्यूनां वरा ता विवहेत्स्त्रियम्'इति ॥ अङ्गिरा अपि—'कन्यां वरसमां न्यूना विवहेद्द्विनिवर्षिकाम् । उक्तं तत्षोडशाब्दात्प्राग्विवाहमिदमुच्यते ॥ अपकृष्य व्रतान्सर्वान्कुर्वन्त्यस्य विचक्षणाः । तदिदं नादृत पूर्वराचार्यैः कालवीक्षणात् ॥ कलावनियमत्वेन कर्तव्यमिति चापरे' इति । वाढम् । इत्यादिवचनैर्वरस्य द्वादशाब्दात्प्रागेव विवाहो नादृतः । तदूर्ध्वं कर्तव्य एवेत्यलमतिप्रसङ्गेन ॥ 'सप्ताब्दा समकाला या न विवाह्या कदाचन । वरस्तु द्विनिवर्षादिन्यूनां कन्यां समुद्वहेत्' इति ॥ ॥ रजोदर्शनात्पर विवाहनिषेधवच्छैशवे तन्निषेधाभावात् । अत्र कश्चिद्विशेषोस्ति । अतिरात्रे षोडशिनं



२॥

गृह्णाति नातिरात्रे षोडशिनं गृह्णातीति ग्रहणाग्रहणयोरन्यतरानुष्ठाने क्रतुसिद्धिर्भवत्येव तथापि महायाससाध्यग्रहणानुष्ठानस्य कर्मभूयस्त्वात्फलभूयस्त्वम् इति न्यायेन षोडशिग्रहणानुष्ठानात्फलविशेषकल्पनाविधिवैयर्थ्यभयात्। तथात्रापि नग्निकाविवाहात् गौर्यादिविवाहे यथोत्तरं फलविशेषोस्त्येव। तावत्कालं कन्यारक्षणस्य महायाससाध्यत्वात्। अतएव गौर्यादिविवाहे यथोत्तरं फलविशेषमाह मरीचिः—'गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत्। कन्यां ददद्ब्रह्मलोकं रौरवं तु रजस्वलाम्' इति। इति विवाहकालाः ॥

अथ सोदराणां विवाहनिर्णयः ॥ अथेदानीमुक्तप्रमाणवयसोर्वधूवरयोर्विवाहस्तु तद्गृहे प्रथमतः कृतशुभकर्मकालप्रमाणं विचार्याऽनिषिद्धकाले कर्तव्य इति कृत्वा तत्कालनिर्णय उच्यते संहितासारावल्याम्—'एकमातृप्रसूतानामेकस्मिन्वत्सरे यदि। विवाहं नैव कुर्वीत कुर्वन्ति मुनयोऽन्यथा'। स्मृत्यन्तरेपि—'विवाहस्त्वेकजातानामेकस्मिन्नुदये कुले। नाशं करोत्येकवर्षे स्यादेका विधवा तयोः' इति। उदयो लग्नम् ॥ अथ देशव्यवस्थोच्यते—'एकोदराकरतलग्रहणं यदि स्यादेकोदरस्थवरयोः कुलनाशनं च। एकाब्दके तु विधवा भवतीह कन्या नद्यन्तरे तु शुभदं पृथुशैलरोधः। गिरिर्वापि महास्रोतो यं देशं व्यवधास्यति। तं पृथग्देशमित्याहुर्विवाहादिर्न दुष्यति ॥ नदीतटविभेदेन विवाहोपनयौ चरेत्। मासर्तुतिथिभेदांश्च तदुद्दिश्य न चिन्तयेत्' इति। यदाह गर्गः—'भ्रातृयुक्स्वसृयुग्मे च भ्रातृस्वसृयुगे तथा। न जातु मण्डनं कुर्यादेकस्मिन्मण्डपेहनि ॥ पुत्रीपरिणयादूर्ध्वं यावद्दिनचतुष्टयम्। पुम्यन्तरस्य कुर्वीत नोद्वाहमिति सूरयः' इति। एतद्वचनद्वयं भिन्नमातृविषयम् ॥ ॥

अथैकोदरप्रसूतानां मण्डनमुण्डननिर्णयः संहितासारावल्याम्—'न मण्डनान्मुण्डनमूर्ध्वमिष्टं न पुत्रयोर्मण्डनमेकवर्षे । न पुंविवाहोर्ध्वमृतुत्रयेऽपि विवाहकार्यं दुहितुश्च कुर्यात्'॥ वासिष्ठे—'न पुंविवाहोर्ध्वमृतुत्रयेऽपि विवाहकार्यं दुहितुश्च कुर्यात् । न मण्डनाच्चापि हि मुण्डनं च गोत्रैकतायां यदि नाब्दभेदः' । ( नारदः—'पुत्रोद्वाहात्परं पुत्रीविवाहोऽपि ऋतुत्रये । न तयोर्व्रतमुद्वाहान्मङ्गले नान्यमङ्गलम्) । गोत्रैकतायामिति विज्ञातसापिण्ड्ये द्रष्टव्यम् । तदुक्तं स्मृत्यन्तरे—'कुले ऋतुत्रयादर्वाक् मण्डनान्न तु मुण्डनम् । प्रवेशान्निर्गमो नेष्टो न चेष्टं मण्डनत्रयम् ॥ कुले ऋतुत्रयादर्वाङ् कुर्यान्मण्डनद्वयम् । मण्डनान्मुण्डनं चैव प्रवेशान्न तु निर्गमः ॥ पुत्रोद्वाहान्न पुत्रीविवाहोऽपि ऋतुत्रये । अब्दान्तरान्मुण्डनं च नैकदा मण्डनद्वयम्' ॥ ॥ एकदा शोभनद्वयं न कार्यमित्युच्यते मायणीये—'एकस्मिन् शोभने वृत्ते द्विशुभं नैव कारयेत् । यदि कुर्यात्प्रमादेन तत्र स्यादशुभं ध्रुवम् ॥ अब्दभेदे सति विवाहोपनयनयोरनिषेध उच्यते संहितासारावल्याम्—'फाल्गुने चैत्रमासे तु पुत्रोद्वाहोपनायने । भेदादब्दस्य कुर्वीत नर्तुत्रयविलम्बनम्' इति । इत्येकोदरादिविवाहोपनयननिर्णयः ॥ ॥ अथ प्रत्युद्वाहनिषेध उक्तो नारदेन—प्रत्युद्वाहो नैव कार्यो नैकस्मै दुहितृद्वयम् । नचैकजातयोः पुंसोरेकजन्ये तु कन्यके ॥ नैवं कदाचिदुद्वाहो नैकदा मुण्डनद्वयम्' इति । अन्यत्र—'नैकजन्ये तु कन्ये द्वे पुत्रयोरेकजन्ययोः । न पुत्रीद्वयमेकस्मै प्रदद्यात्तु कदाचन' ॥ ॥ अथ गुरुसूर्यबलम् । अथेदानीमुक्तगुणविशिष्टयोर्वधूवरयोर्विवाहकाले गुरुसूर्यबलस्य प्राधान्यात्तद्बलं वक्तुमादौ गुरुचारफलमाह श्रीपतिः—'यदि

पाठा०—नाब्द भेद ।

गुरुरतिचारोऽतीव संवत्सरान्ते भवति तदधिमासे सिंहसंस्थे च जीवे । अनुगतरविरास्ते नीचगे निर्जिते वा ह्युपनयनमनिष्टं यज्ञयात्राविवाहाः' इति ॥ ॥ तत्र सिंहस्थगुरुविषये लल्लः—'गुरुर्मघायां पुरुषं निहन्ति भाग्ये स्त्रियं हन्ति वदन्ति गर्गाः । सिंहस्य चान्त्योत्तरपादसंस्थस्तथा स जीवश्च सुतं निहन्ति ॥ ॥ अस्य देशव्यवस्थामाहागस्त्यः—'सिंहस्थिते देवगुरौ विवाहं नेच्छन्ति यात्रां यमुनातटान्ते । कलिङ्गवङ्गेष्वथ मागधेषु दोषः प्रयुक्तो न तथान्यदेशे'। तथाच गौतमः—'कण्ठीरवस्थे धिषणे विवाहं कुर्यान्न यात्राव्रतबन्धदीक्षाः । गोदावरीं चोत्तरतोहि दोषो गोदावरीदक्षिणतो न दोषः'। तत्र विशेषमाह देवलः—'व्रतबन्धनं प्रतिष्ठां विवाहमथ मन्दिरप्रवेशं च । यात्रां च याम्यदेशे कुर्यादार्ये न सिंहांशे'। आर्यो बृहस्पतिः ॥ ॥ अथ गुरुशुक्रास्तमयकालनिषेध उच्यते श्रीधरीये लल्लेन—'अस्तमिते भृगुतनये नारी म्रियते बृहस्पतौ पुरुषः । दंपत्योः सह मरणं पाणिग्रहणोदिते केतौ' । अत्र विशेषमाहागस्त्यः—'एको मूढो भवेदन्यः स्वोच्चमित्रांशगो यदि । स्वराशिमूर्तिगश्चैव मूढदोषो विनश्यति' । मूर्तिगो लग्नगः। बृहस्पतिस्तु—'यद्येकस्यापि मूढत्वे शुभकर्म न दोषकृत् । द्वयोर्मूढत्वमेवोक्तं दोषदं गुरुशुक्रयोः॥ द्विजन्मादिशुभे कार्ये शुक्रमौढ्यं न दोषदम् । त्रैवर्णिकानामेवोक्तं दोषदं गुरुशुक्रयोः ॥ क्षत्रियाणां विशेषेण भृत्यानां राजसेविनाम् । मौढ्यदोषं न पश्येत दीक्षाणामेव कारयेत्'॥ नारदः—'अतिपातिषु कार्येषु राज्ञां तत्कर्मकारिणाम् । विवाहादीनि कार्याणि मौढ्येऽपि गुरुशुक्रयोः ॥ शान्तिं कृत्वा तयोस्तद्वच्छक्रदेवेन्द्रमन्त्रिणोः। होमैर्दानैर्जपैर्वापि तयोरुदितमन्त्रकैः'इति ॥ तयोः समसप्तके निषेध उच्यते बृहस्पतिना—'यदा जीवसितौ चक्रे परस्परनिरीक्षितौ । सप्तमस्थौ तदा दोषो मूढत्वादतिरिच्यते' । अस्य देश-

विभाग उच्यते संग्रहे—'समदृष्टिर्गुरोः शुक्रे नर्मदोत्तरतो भवेत् । नर्मदायाम्यभागे तु समदृष्टिर्न विद्यते' इति ॥ ॥ तयोर्बालवृद्धत्वनिषेधः—'बालः शुक्रो हरेत्कन्यां क्षीणः शुक्रः पतिं हरेत् । बालो बृहस्पतिः पुंसां क्षीणस्त्रीणां न शोभनः' इति ॥ तत्र दिनसंख्यामाह नारदः—'पश्चात्प्रागुदितः शुक्रो दशत्रिदिवसाः शिशुः । वृद्धः पञ्चदिनं पक्षं गुरुः पक्षं तु सर्वतः' । लल्लोऽपि—'पश्चादभ्युदितो बालो दशाहं प्राग्दिनत्रयम् । पक्षं वृद्धस्तु पूर्वे च पञ्चाहं पश्चिमे स्थितः' इति ॥

अथ गोचरफलमुच्यते नारदेन—'कन्यकावरयोः सर्वे ग्रहाः शोभनतां गताः । यदि तत्रैव कर्तव्यो विवाहः शुभमिच्छता ॥ विशेषादमरेशस्य गुरौ यातेऽङ्गनाविधौ । शुभस्थानगते तस्मिंस्तत्र कर्तव्यतामियात् ॥ जन्मविक्रमतोयारिमृत्युकर्मव्यये गुरौ । वैधव्यं याति सा कन्या वरस्य विधिरीदृशः' ॥ विक्रमस्तृतीयः । मृत्युरष्टमः । तर्कः षष्ठः । व्ययो द्वादशः ॥ लल्लश्चाह—'द्वादशदशमचतुर्थे जन्मनि षष्ठेऽष्टमे तृतीये च । पाणिग्रहणे प्राप्ते जीवे वैधव्यमाप्नोति' । अत्र विशेषमाह श्रीपतिः—'सौम्ये स्वमित्रे स्वगृहे त्रिकोणे जीवे गते यद्युपनीतिकाले । शिशोः सहोत्थे चतुरस्रजन्म कर्मान्त्यषष्ठेऽपि शुभं वदन्ति' इति । बृहस्पतिश्चाह—'झषचापकुलीरस्थे जीवेऽप्यशुभगोचरे । अतिशोभनतां दद्याद्विवाहोपनयादिषु' इति ॥ ॥ तस्य शुभस्थानफलमुच्यते—'अस्तार्थपुत्रायतपःसु जीवे सौम्ये निजर्क्षे यदि संस्थिते वा । विवाहकाले रमयेव विष्णू रेमे स भार्यासहितः सदैव' । अस्तः सप्तमः । अर्थो द्वितीयः । पुत्रः पञ्चमः । तपो नवमम् ॥ अत्र बृहस्पतिना विशेष उक्तः—'कन्यकाजन्मलग्नेन्द्वोर्द्वादशाष्टमजन्मभाक् । (चतुर्थदशमे जीवो जन्मप्राप्तगतोऽशुभः) । अन्यत्र शुभदो जीवो गौरीवयसि सप्तमे ॥ सर्व-

त्रापि शुभं दद्याद्द्वादशाब्दात्परं गुरुः । पञ्चषष्ठाब्दयोरेव शुभगोचरता मता ॥ सप्ताब्दादष्टवर्षेषु स्वोच्चस्वर्क्षगतो यदि । अशुभेऽपि शुभं दद्याच्छुभदर्क्षेषु किं पुनः' ॥ दंपत्योर्गुरुसूर्यबलावश्यकत्वमाह गर्गः—'स्त्रीणां गुरुबलं श्रेष्ठं पुरुषाणां रवेर्बलम् । तयोश्चन्द्रबलं श्रेष्ठमिति गर्गेण निश्चितम्' ॥ बृहस्पतिस्तु—'पुंसो भानुस्त्रिषष्ठाये शनिभौमौ च शोभनौ । अन्यत्र शान्तिहोमेषु तेषां कृत्वा समारभेत् ॥ द्विजन्मकालवत्कृत्वा शान्तिं सर्वगते गुरौ । विवाहश्चापि कर्तव्यो गृहस्थाश्रमशोभनः' इति । नारदश्च—'विवाहे बलमावश्यं दंपत्योर्गुरुसूर्ययोः । न चेत्पूजां प्रकुर्वीत दुष्फलप्रदयोस्तयोः' इति । वासिष्ठे—'यद्यार्कगुर्वोरपि नैधनान्त्यजन्मादिदुःस्थानगयोर्द्वयोर्वा । एकस्य पूजामपि तत्र कृत्वा पाणिग्रहं कार्यमतः सुसम्यक्' इति ॥

अत्रापेक्षितबृहस्पतिशान्तिरभिधीयते शौनकेन—'कन्यकोद्वाहकाले तु आनुकूल्यं न विद्यते । ब्राह्मणस्योपनयने गुरोर्विधिरुदाहृतः ॥ सौवर्णेन गुरुं कृत्वा पीतवस्त्रेण वेष्टयेत् । ऐशाने धवलं कुम्भं धान्योपरि निधाय च ॥ दमनं मधुपुष्पं च तथा पालाशगर्भपान् । मांसीगुडूच्यपामार्गविलङ्गीशङ्खिनी वचा (वरा) ॥ सहदेवी हरिक्रान्ता सर्वौषधिशतावरी । हरिक्रान्ता विष्णुक्रान्ता । छलाग्यभागपर्यन्तं स्वशाखोक्तविधानतः ॥ ग्रहोक्तमण्डलेऽभ्यर्च्य पीतपुष्पाक्षतादिभिः । देवपूजोत्तरे काले ततः कुम्भानुमन्त्रणम् ॥ अश्वत्थसमिधश्चाज्यं पायसं सर्पिरन्वितम् । यवव्रीहितिलाः सार्धं मन्त्रेणैव बृहस्पतेः ॥ अष्टोत्तरशतं सर्वं होमशेषं समापयेत् । दारपूर्वगमेतस्य अभिषेकं समाचरेत् ॥ कुम्भाभिमन्त्रणोक्तैश्च समुद्रज्येष्ठमन्त्रतः । प्रतिमां कुम्भवस्त्रे च आचार्याय प्रदापयेत् ॥ ब्राह्मणान्भोजयेत्पश्चाच्छुभदः स्यान्न संशयः' इति । इति शौनकोक्तो बृहस्पतिशान्तिविधिः ॥

अथादित्यशान्तिविधिरभिधीयते तेनैव—'ब्राह्मणस्योपनयने नानुलोमो भवेद्रविः। तस्य शान्तिं प्रवक्ष्यामि मन्त्रौषधिविधानतः। अत्रोपनयनग्रहणं विवाहस्याप्युपलक्षणम्। उपनयनात्पूर्वेद्युः कृत्वा पुण्याहवाचनम्। गृहस्यैशानदिग्भागे गोमयेनोपलेपयेत्। कुङ्कुमेनोल्लिखेत्पद्मम् अष्टपत्रं सकेसरम्। सुवर्णेन रविं कृत्वा द्विभुजं पद्मधारिणम्॥ कृत्वाज्यभागपर्यन्तं तत्र कृत्वा तु पूजनम्। पूर्ववत् ग्रहयज्ञवत्॥ स्वशाखोक्तविधानेन आचार्यो होममाचरेत्। आकृष्णेनेति मन्त्रेण समिदाज्यचरून्हुनेत्॥ अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा। तिलव्रीहींश्च हुत्वाथ होमशेषं समापयेत्॥ दारपुत्रसमेतस्य अभिषेकं समाचरेत्। कुम्भाभिमन्त्रणोक्तैश्च समुद्रज्येष्ठमन्त्रकैः॥ ऋत्विग्भ्यो दक्षिणां दद्यादन्येभ्यश्च स्वशक्तितः। प्रतिमां वस्त्रकुम्भं च आचार्याय प्रदापयेत्॥ एवं यः कुरुते तस्य सूर्यो दोषान्विनाशयेत्' इति॥ इति शौनकोक्तादित्यशान्तिः॥

अथ विंशतिकूटनिर्णयः। तत्र कारिका—'यथोक्तलक्षणां कन्यामुक्ते काले समुद्वहेत्। स्यादाभ्युदयिकं श्राद्धं द्वितीये वक्ष्यते च तत्'। अस्यार्थः—यथोक्तलक्षणां पूर्वोक्तलक्षणैर्युक्तां ज्योतिःशास्त्रोक्तराशिकूटादिभिर्युतां तच्छास्त्रोक्तसकलदोषरहितशुभमुहूर्ते कन्यामुद्वहेदिति। यदाह भगवान्—'आत्मनः कन्यकायाश्च जन्मर्क्षानुगुणे शुभे। नक्षत्रे गुणसंपन्ने तिथिवारभसंयुते। पुण्ये मुहूर्ते कुर्वीत विवाहं विधिवद्द्विजः' इति॥ श्रीधरीये—'जन्मयोगशकुनादिविस्तरे गोचरेण शुभदे नृयोषितोः। संप्रदानसमये गुणान्विते पाणिपीडनविधिर्विधीयते'। अस्यार्थः—'जन्मयोगेति। दिनकूटादिविंशतिकूटान्विचार्य शकुनं संमृश्य शुभदे तिथ्यादियोगे गोचरेणान्विते संप्रदानकाले नृयोषितोर्विवाहविधिर्विधीयत इति॥ तत्र वसिष्ठः—'ज्ञातव्या विंशतिर्वर्गाः सम्यग्दै-

गविद् सदा' इति ॥ तच्छ्रवणप्रकारमाह बृहस्पतिः—'विवाहसमये प्राप्ते सुखासीनं शुभप्रदम् ॥ दैवज्ञं भक्तितो गत्वा संपूज्यादौ यथाबलम् ॥ उडुनी नामनी बोक्त्वा संपृच्छेत्मकृदेव तम्' इति ॥ कूटनामान्युच्यन्ते—'दिनं गणं च माहेन्द्रं स्त्रीदीर्घं योनिमेव च । राशी राश्यधिपो वश्यं रज्जुर्वेधाश्च ते दश । पुनश्च वर्णकूटं च नाडीकूटमतः परम् । पुनश्च भूतं लिङ्गं च जातिगोत्रगणास्तथा । योगिन्यायौ च दैवं च पुनर्दश विशेषतः' ॥ एतत्कूटविचारप्रकार उच्यते संग्रहे—'वरस्य जन्मना सार्धं नाम्ना विचिन्तयेत् । नतु नाम्ना वरस्य स्यादङ्गनाजन्मचिन्तनम् ॥ जन्मना जन्म योज्यं च नाम्ना नामैव योजयेत् । जन्मना नाम नो योज्यं पुंजन्म स्त्रीषु नाम च' ॥ ॥ अथ दिनकूटः—'कन्यादिनरऋक्षान्तं पर्याये नवसंख्यया । समतारा शुभं चैव दिनकूटः प्रशस्यते ॥ जन्मसंपद्विपत्क्षेमाः प्रत्यरः साधको वधः । मैत्रं परममैत्रं च जन्मर्क्षेषु पुनःपुनः । स्त्रियो वै जन्मतारायां विपत्प्रत्यरनैधनाः । पर्याये प्रथमे वर्ज्या द्वितीयाद्याश्चतुस्त्रयः । पादास्त्याज्यास्तृतीये तु सर्वास्ताराः सुशोभनाः' । बृहस्पतिः—'आद्यांशं विपदाख्यर्क्षे प्रत्यरे च चतुर्थकम् । वधाख्ये च तृतीयांशं विना शेषाः सुशोभनाः' । नारदः—'व्याधिं विपत्करं विद्याज्जन्मभाद्विपदि स्त्रियाः । प्रत्यरे पतिनाशः स्यात्प्रीतिनाशो धनक्षयः ॥ कर्मर्क्षाद्विपदाख्यर्क्षे कर्म किंचित्क्षयं व्रजेत् । प्रत्यरे चित्तदुःखं स्याद्वधर्क्षे व्याधिना हतिः ॥ आधानाद्विपदाख्यर्क्षे आरोग्यं लभते सदा । प्रत्यरे चक्रुरोगी स्याद्वधर्क्षे पुष्टिकृद्भवेत्' इति । अन्यापवादः संग्रहे—'स्त्रीदीर्घगणसद्भावे दिनं यदि न विद्यते । तथापि दिनमस्त्येव चन्द्रतारानलान्विते' ॥ अथैकराशिनक्षत्रनिर्णयः—'एकराशौ द्विनक्षत्रे पुंतारा प्रथमा भवेत् । अतीव शोभना प्रोक्ता स्त्रीतारा चेद्विनश्यति ॥ भवनद्वययुक्तर्क्षे

पूर्वे पुंसां शुभावहम्। पश्चाद्भागं तथा स्त्रीणां व्यत्ययस्तु विनाशकृत्' इति ॥ तत्र वर्ज्यनक्षत्राण्युक्तानि गर्गेण—'एकराशौ द्विनक्षत्रे कृत्तिकायाम्यतारके। धनिष्ठां शततारा च पुष्याश्लेषे च वर्जयेत्' इति ॥ एकनक्षत्रविषये भृगुः—'रोहिण्यार्द्रामघेन्द्राग्नीतिष्यश्रवणपौष्णभम्। उत्तरा प्रोष्ठपाच्चैव नक्षत्रेष्वैक्येऽपि शोभनाः'। कालनिर्णयेऽपि—'विशाखिकार्द्राश्रवणप्रजेशतिष्यान्त्यतरपूर्वमघाः प्रशस्ताः। स्त्रीपुंसतारैक्यपरिग्रहे तु शेषा विवर्ज्या इति संगिरन्ते' इति। अन्ये तु—'अजैकपान्मित्रवसुद्विदैवप्रभञ्जनान्त्यार्कभुजङ्गभानि। मुकुन्दजीवान्तकचक्रभानि शुभानि योषिन्नरजन्मभैक्ये' इति। एवंच सति भरणी रोहिणी आर्द्रा पुष्यः आश्लेषा मघा हस्तः स्वाती विशाखा अनुराधा ज्येष्ठा श्रवणः धनिष्ठा पूर्वाभाद्रा उत्तराभाद्रा रेवती एतेषु षोडशनक्षत्रेषु स्त्रीपुंसयोर्नक्षत्रैक्येऽपि शुभं भवतीत्यर्थः। अत्र विशेषमाह संग्रहे—'दंपत्योरेकनक्षत्रे भिन्नपादे शुभावहम्। दंपत्योरेकपादे तु वर्षान्ते मरणं ध्रुवम्' इति ॥ ॥ अथ वधवैनाशिकदुष्टताराः। तत्र श्रीधरीये नारदः—'अग्निसार्पौ वायुसार्पौ चित्राप्यौ मैत्रयाम्यौ। वसुयाम्यौ वारुणाम्बी वधवैनाशिके मृतिः ॥ इन्दुभाग्यार्कमूले नैधनं वधनाशिके। ज्येष्ठार्यम्णौ पौष्णरौद्रौ वैरं वधविनाशिके ॥ दुष्पुत्रत्वं शूर्पमघे शूर्पविष्णू सपत्नता। श्रोणाश्विन्योर्विशेषश्च वैधव्यं बुध्न्यसौम्ययोः'। शूर्पो विशाखा ॥ अथ वधवैनाशिके शुभतारा उच्यन्ते—'अर्यमार्द्रे भाग्यमैत्रे चित्रातिष्यौ सुखप्रदौ। हस्तादित्यौ वंशवृद्धिस्त्वाष्ट्राग्नी ज्येष्ठवारुणौ। अजपादौ वैश्वाजौ बहुपुत्रत्वमाप्नुयात्। अश्व्यादित्यौ मरुद्वैश्वौ स्त्रीप्रभूतिं समश्नुते ॥ पौष्णवैश्वे तु भोगः स्यात्संपन्मूलाजपादके। आप्यबुध्न्यौ च संप्रीतिः सौभाग्यं याम्यतिष्यके ॥ वधवैनाशयोगे तु फलं कौशिकचोदितम्'। नारदः—'वैनाशिकस्तु जन्मर्क्षा-

द्वात्रिंशर्क्षं विनाशदम् । अष्टाशीत्यंशकस्तत्र जन्मतस्तु विनाशदः' इति । माधवीये—'अष्टाशीतितमोंऽशो यस्मिन्जन्मादिगणनया भवति । वैनाशिकं तदृक्षं त्यजन्ति केचित्तमेवांशम्' इति । अस्यापवादमाह बृहस्पतिः—'जन्मकर्मर्क्षनाथौ द्वौ मिथो मित्रे यदा तदा । वैनाशिकांशकोद्भूतदोषो भङ्गत्वमाप्नुयात् ॥ जन्मकर्मर्क्षनाथौ द्वौ तदंशस्थौ यदा तदा । वैनाशिकांशकोद्भूतदोषो भङ्गत्वमाप्नुयात्' इति । अन्यच्च मतान्तरम्—'वैनाशांशस्थराशीशजन्मेशौ मित्रभावनौ । वैनाशिकांशजो दोषो विनाशमुपगच्छति' । माधवीये—'जन्मेशकर्मेश्वरमित्रभावः क्षिणोति वैनाशिकदोषमुग्रम्' । इति दिनकूटः ॥ ॥ अथ नाडीकूटः—'एवमुक्तनक्षत्रयोगे विपरीतेऽपि नाड्यानुकूल्ये शुभम्' इति । श्रीपतिराह—'भवनपतिसुहृत्त्वं स्यात्तथैकाधिपत्यं यदि भवनवशित्वं चेन्न षडष्टमेऽपि । शुभकृदिह विवाहोऽन्योन्यताराविशुद्धौ यदि खलु फणिचक्रे स्यान्न नाडीसमाजः' ॥ अथ नाड्या मुख्यत्वमुच्यते—'नाडीशुद्धिः कन्यकाकण्ठसूत्रं ज्ञेयं तस्माच्चिन्तयेत्पूर्वमेव' इति । सापि त्रेधा विभिद्यते । 'चतुस्त्रिद्व्यङ्घ्रिभोत्थाया कन्यायाः क्रमशोऽश्विभात् । वह्निभादिन्दुभान्नाडी त्रिचतुःपञ्च पर्वसु ॥ त्रिरंकपक्षे गणयेद्भसंख्यया चत्वारि पक्षे अभिजिद्युतानि । उभौ च आरोहनरोहिणी तथावरोहि पञ्चाङ्गुलिवर्जितं च' इति । तत्फलम्—'सा मध्यनाडी पुरुषं निहन्ति तत्पार्श्वनाडी खलु कन्यकां च । आसन्नपर्यायसमागता चेद्वर्षेण साप्यन्तरिता त्रिवर्षैः' इति ॥ तत्र देशविभाग उच्यते—'चतुर्नाडी तु वाह्लीके पाञ्चाले पञ्चनाडिका । त्रिनाडी सर्वदेशेषु वर्जनीया विचक्षणैः' ॥ अस्यापवादः—

पाठा०—१ बृहत्क त्रिरंशनाडी मध्यदक्षिणवामत । त्रिप्राणा तु विशेषेण मध्यनाडीं विवर्जयेत् । निधन मध्यनाड्या च दम्पत्योर्नैव पार्श्वयो । आसन्नाया नस्मन्तरितायां न दोषमुद्वादे । पर्याये प्रथमासन्ना द्वितीये पार्श्वमेव च । तृतीये तु व्यवहिता चतुर्थे च शुभावहा । इति ।

'नाडीवियोगे यदि चेद्विवाहः करोति वैधव्ययुतां च कन्याम् । स एव माहेन्द्रदिनादियुक्तो राशीशयोनीसहितो न दोषः' । इति नाडीकूटः ॥ ॥ अथ गणकूटः—'अश्वी मृगशिरो हस्तः स्वाती पुष्यपुनर्वसू । मैत्रश्रवणरेवत्य एते देवगणाः स्मृताः ॥ भरणी रोहिणी चैव आर्द्रा पूर्वात्रयं तथा । त्रीण्युत्तराणि विज्ञेया मानुषाः परिकीर्तिताः ॥ ज्येष्ठामूलमघाश्लेषाविशाखात्वाष्ट्र-वारुणाः । कृत्तिका च धनिष्ठा च राक्षसास्तु प्रकीर्तिताः ॥ स्वगणं चोत्तमं विद्यान्मध्यमं दैवमानुषम् । अधमं राक्षसं दैवं मृत्युर्मानुषराक्षसम्' इति ॥ अस्यापवादः—'ग्रहमैत्रं च राशिश्च विद्यते नियतं यदि । न गणाभावजनितो दोषः कश्चन विद्यते' । इति गणकूटः ॥ ॥ अथ माहेन्द्रकूटः । गर्गः—'वध्वादीनां चतुःसप्त दशमश्च त्रयोदशः । षोडशैकोनविंशश्च द्वाविंशः पञ्चविंशतिः । एते माहेन्द्रकूटाश्च विवाहे कीर्तिता बुधैः' । अस्यापवादः—'ग्रहमैत्री च रज्जुश्च स्यातां सज्जनसंमतौ । माहेन्द्रदोषो नास्तीति वाक्यमिन्द्रपुरोधसः' । इति माहेन्द्रकूटः ॥ ॥ अथ स्त्रीदीर्घकूटः—'स्त्रीणां नक्षत्रमारभ्य पुंनक्षत्रं प्रगण्यते । त्रयोदशादूर्ध्वमृक्षं स्त्रीदीर्घं बहुलं भवेत्' । अस्यापवादः—'स्त्रीदीर्घे यदि वोद्वाहे स्त्रीनाशो भवति ध्रुवम् । स दोषो नास्ति यद्यस्ति राशीशग्रहमित्रता' । इति स्त्रीदीर्घकूटः ॥ ॥ अथ योनिकूटः । श्रीपतिः—'अश्वेभाजफणिद्वयं श्वयुगं (?)पशुश्चोपस्तथा मूषकः श्वाखुर्गौः क्रमशस्ततोपि महिषी व्याघ्री तथा सौरिभः । व्याघ्रैणौ मृगमण्डलौ कपिरथो वभ्रुद्वयं वानरः सिंहाश्वी मृगराट्पशुश्च करिणी योनिस्तु भानामियम्' । अस्यार्थः—अश्विशतभिषजौ अश्वौ । भरणीरेवत्यौ गजौ । पुष्यकृत्तिके मेषाजौ । मृगशीर्षरोहिण्यौ सर्पौ । मूलार्द्रे श्वानौ । पुनर्वस्वाश्लेषे मार्जारौ । मघापूर्वाफल्गुन्यौ मूषकौ । उत्तरोत्तराभाद्रपदे गावौ ।

स्वातीहस्तौ महिष्यौ। चित्राविशाखे व्याघ्रौ। ज्येष्ठानुराधे हरिणौ। पूर्वाषाढाश्रवणे वानरौ। उत्तराषाढाभिजितौ नकुलौ। पूर्वाभाद्रपदाधनिष्ठे सिंहौ। पूर्वमुक्ताः पुरुषाः। पश्चादुक्ताः स्त्रियः॥ तेषां वैरवर्गं उच्यते—'गोव्याघ्रं गजसिंहमश्वमहिषं श्वैणं च बभ्रूरगं वैरं वानरमेषकं च सुमहत्तद्वद्बिडालोन्दुरु। लोकानां व्यवहारतोऽन्यदपि च ज्ञात्वा प्रयत्नादिदं दंपत्योर्नृपभृत्ययोरपि सदा वर्ज्यं शुभस्यार्थिभिः'। 'अस्य फलम्—'एकयोन्यां शुभं विद्याद्भिन्नयोन्यां तु मध्यमम्। अधमं शत्रुयोन्यां स्यादुक्ता लोके वदेद्बुधः'। बृहस्पतिः—'एकयोनिषु संपत्त्यै दंपत्योः संगमः सदा। भिन्नयोनिषु मध्यः स्यादरिभावो न चेत्तयोः॥ अरिभावे कृतोद्वाहः शीघ्रं मरणमाप्नुयात्। उदासीने कृतं कर्म समत्वं धनपुत्रके॥ महारियोनिषु कृतं कुलक्षयकरं भवेत्'। अस्यापवादः—'योनेरभेदेनोद्वाहः कार्यः स तु वियोगदः। राशिर्नैश्यं च यद्यस्ति कारयेन्नतु दोषभाक्'। इति योनिकूटः॥ ॥ अथ राशिकूट उच्यते। श्रीधरीये—'एकराशौ सदा प्रीतिरैश्वर्यं समसप्तके। द्विर्द्वादशे तु वैधव्यं त्रिकोणे तु प्रजाक्षयः॥ षष्ठाष्टके वियोगश्च मरणं कलहस्तथा। त्रिभवे सौख्यसंपत्तिश्चतुर्थदशमे शुभम्॥ चतुर्थदशमं चैव त्रिभवं समसप्तकम्। दंपत्योः शुभकृन्नूनं यद्यपि ग्रहशत्रुता॥ द्विर्द्वादशे च मृत्युः स्यादायुर्द्वादशकाद्विके। तृतीयैकादशे दुःखं सुखमेकादशत्रिके॥ चतुर्थदशमे निःस्वं धनं दशचतुर्थके। पञ्चमे नवमे हानिः सौभाग्यं नवपञ्चमे॥ षष्ठाष्टके पुत्रनाशः पुत्रलाभोऽष्टषष्ठके। समसप्ते च माङ्गल्यमेकराशौ तु संपदः'॥ बृहस्पतिः—'एकादशत्रये चैव दशमे च चतुर्थके। मध्यमो दंपतीयोगो मित्रभावेतिशोभनः। वध्यराशौ विद्यमाने योगोयं शोभनो भवः' इति। अत्र ग्राह्यद्विर्द्वादशः—'द्विर्द्वादशाः शुभा ज्ञेया मीनादौ युग्मरा-

शिषु । मेषाद्ययुग्मराशौ तु निधनं स्यान संशयः ॥ द्विर्द्वादशेऽप्यदोषः स्यादंशकादूरतः स्त्रियाः । धूत्र्यंशोऽत्यष्टिरशो वा पुंसोंऽशः पञ्चकाशकात् । धृतिरष्टादशः । अत्यष्टिः सप्तदशः । 'पञ्चमनवमे शुभदौ मेषहरी कर्किवृश्चिकौ प्रोक्तौ । समसप्तकेऽप्यशुभदौ घटसिंहौ पाणिपीडने कथितौ' ॥ अन्यच्च—'मकरे कर्कटे चैव कुम्भे सिंहे तथैव च । परस्परं सप्तमे च वैधव्यं च विनिर्दिशेत्' इति॥ अत्रापवाद उच्यते श्रीधरीये—'द्विर्द्वादशे पञ्चनवर्क्षयोगे षष्ठाष्टके राक्षसयोपिद्दक्षे। एकाधिपत्ये उभयोश्च मैत्रे विवाहयोगं शुभदं वदन्ति' ॥ अन्यत्र—'रज्जुस्त्रिकोणस्त्रीदीर्घद्विर्द्वादशषडष्टसु । राशीशैक्य च तन्मैत्रं दंपत्योस्तत्सुखावहम् । राश्यधिपे तु मित्रत्व तन्मित्रांशौ प्रशस्यते । षष्ठाष्टकेऽपि शुभदं विवाहे गर्गसंमतम्' ॥ श्रीधरीये—'मित्रत्वभावेऽपि विवाहयोगे, शुभं तु षष्ठाष्टकमुच्यते न । मेषेण कन्या धनुषा कलुवान् तौल्या तिमिः कुम्भभृता कुलीरः ॥ सिंहेन नक्रो नृयुगेन कौर्पिः षष्ठाष्टके चापि शुभाय योगः' । कौर्पिर्वृश्चिकः । नारदोऽपि—'मित्रषष्ठाष्टके मेषकन्ययोर्धटमीनयोः । चापोक्षयोर्नृयुकीटभयोः कुम्भकुलीरयोः । पञ्चास्यमृगयोः स्त्रीणा जन्मराशेः शुभप्रदः' । संग्रहेऽपि—'कन्याझषवृषवृश्चिककर्कटमकराः शुभावहाः प्रोक्ताः । खैःखैरष्टमभवनैरेभिर्दिधीत सुप्रीतिम्' । इति राशिकूटः ॥ ॥ अथ ग्रहमैत्रीकूटः । श्रीधरीये—'मेषवृश्चिकपतिर्महीसुतो भार्गवो वृषतुलाधरेश्वरः । बोधनस्तु मिथुनाङ्गनापतिर्भास्करिर्मकरकुम्भनायकः ॥ सिंहकर्कटकयोरिनोडुपौ मीनधन्विपतिरिन्द्रपूजितः । अंशका नवनव व्यवस्थिताः शौनकादिमुनिभिः प्रकीर्तिताः ॥ शत्रू मन्दसितौ समः शशिसुतो मित्राणि शेषा रवेस्तीक्ष्णांशुर्हिमरश्मिजश्च सुहृदौ शेषाः समाः शीतगोः । जीवेन्दूष्णकराः कुजस्य सुहृदो ज्ञोऽरिः सितार्की समौ मित्रे सूर्यसितौ बुधस्य हिमगुः शत्रुः

समाश्चापरे ॥ सूर्येः सौम्यसितावरी रविसुतो मध्यः परे बान्धवाः सौम्यार्को सुहृदौ समौ कुजगुरू शुक्रस्य शेषावरी । शुक्रज्ञौ सुहृदौ समः सुरगुरुः सौरस्य चान्येऽरयो ये प्रोक्ताः सुहृदस्त्रिकोणभवनात्तेऽमी मया कीर्तिताः' । बृहस्पतिरपि—'गुरुर्गुरुज्ञौ शुक्रज्ञौ व्यर्का व्यारश्च चीन्द्विनाः । व्यर्केन्द्ववनिजाः सर्वे सुहृदो रिपवः परे ॥ उत्तमो मित्रवर्गः स्यात्सममित्रं तु मध्यमम् । कनिष्ठः समवर्गः स्याद्वैरवर्गस्तु मारणः ॥ कलहः शत्रुमित्रत्वे वियोगः समशत्रुतः । जन्मनक्षत्रभागेशमित्रता चेच्छुभं तयोः' । बृहस्पतिः—'स्त्रीपुंसोर्जन्मनक्षत्रे विभागाधीशयोरपि ॥ वश्यभावे सर्वसंपत्साधको योग उत्तमः ॥ दंपत्योर्जन्मलग्नाभ्यां यौ ग्रहावधिपौ मतौ । तयोः परस्परं मैत्रं सर्वसंपदुपस्थिता ॥ औदासीन्ये मध्यमं स्यादरिभावे न शोभनम् । अरिभावकृतोद्वाहः शीघ्रं मरणमाप्नुयात् । उदासीने कृतं कर्म समस्तं धनपुत्रके' ॥ अस्यापवादमाह—'विवाहमाहुर्ग्रहमैत्रशून्यं वियोगदं ग्रहयमेव भूयः । स्त्रीदीर्घनाडीसहितः सरज्जुः सराशिकश्चेत्सततं शुभाढ्यः' । अन्यच्च—'स्त्रीदूरे समसप्ते च सहजाये सुहृत्तदा । शत्रुः समं समं मित्रं मित्रं हि परमं शुभम्' । इति ग्रहमैत्रीकूटः ॥ ॥ अथ वश्यकूटः । श्रीधरीये—'मेषे वृश्चिकसिंहौ च वृषे कर्कटकस्तुला । मिथुने कन्यकावश्यं कर्कटे चापवृश्चिकौ ॥ सिंहे वश्यं तुला चैव युवत्यां मीनको यमः । तौल्यां वश्यं मृगश्चैव वृश्चिके कन्यकर्कटौ ॥ चापे मीनमिदं वश्यं मकरे मेषकुम्भकौ । कुम्भे मेषमिदं वश्यं मीने च मकरस्तथा' ॥ गर्गः—'सिंहाली कर्किजूकौ च कन्यावृश्चिककार्मुकौ । तुलामीनयमौ नक्रकन्ये कर्कटकस्तिमिः ॥ मेषकुंभावजो नक्रो मेषादेर्वश्यराशयः । एतानि वश्यकूटानि दंपत्योः सुखसंपदे' । ग्रन्थान्तरेपि—'विहाय सिंहं खलु मीनजानां वश्यं भवत्येकमलिं विहाय । सर्वे विधेया गजराजशत्रोरन्यस्य विद्यादपि

लोकसिद्धान्' ॥ अस्य फलं चार्हस्पत्ये—'एवं वश्यसमायोगे स्त्रीराशेः पुरुषस्य भे। वश्ययोगः शुभः प्रोक्तो दंपत्योः शुभदः स्मृतः ॥ वश्यराशौ तु दंपत्योः प्रेमभङ्गो न जायते। स्वामिदर्शनकाले च वश्यारूढोदयः शुभः ॥ स्वामिराशेर्गृहे चापि वश्यराशिः शुभावहः। वश्यराशिप्रकारोऽयं पुरा पद्मासनोदितः' इति। इति वश्यकूटः ॥ ॥ अथ रज्जुकूटः—'अश्विन्यादिचतुष्टयं क्रमवशात्पूर्वं कनिष्ठादिकं न्यसेदङ्गुलिपर्वमूर्धनि नभसेभ्यः परं तारकम्। आरोहाक्रमणेऽवरोहणविधिं कुर्यात्क्रमोऽयं वरः पादोरूदरकण्ठमूर्धविषया रज्जोरिमा रज्जवः' ॥ अस्य फलम्—'पादरज्जौ प्रयाणं स्यादूरुरज्जौ धनक्षयः। उदरे पुत्रहानिः स्यात्कण्ठरज्जुः पतिं हरेत्। दंपत्योर्मरणायैव शिरोरज्जुरिति स्मृतः' इति। अस्यापवादः—'रज्जोरभावे यदि चेद्विवाहः क्रियेत सद्यः स वियोगदश्च। तथापि राशीशगणान्वितस्तु स्त्रीदीर्घनाडीसहिते न दोषदः ॥ अश्विसार्पौ मघाज्येष्ठे मूलान्त्ये पादरज्जुकाः। याम्यतिष्यौ भाग्यमित्रे जलशुभी च जानुकाः ॥ अम्यदित्युत्तरेन्द्राभी विश्वाजाङ्घ्री च नाभिकाः। मखेश्वरौ करस्वात्यौ मुकुन्दवरुणौ तथा ॥ स्युः कण्ठरज्जवश्चन्द्रगुचित्राः शिरोमिधाः' इति। इति रज्जुकूटः ॥ ॥ अथ वेधाकूटः—'अश्वियमाशिविरिञ्चा ज्येष्ठामैत्रद्विदैवपरमानाः। रुद्रादितिगुरुफणिनो नारायणवैश्वदेवजलमूलम् ॥ पित्र्यभगार्यमहस्ताः पौष्णोपान्त्यावजैकपादरुणाः। विध्यन्ति प्रतिपादं शशिरसुनिनात्तथान्योन्यम् ॥ मूर्ध्नि वेधः पतिं हन्याद्वाहुवेधश्च योषितम्। कुक्षिवेधः सुतं हन्यादूरुवेधश्च बान्धवान् ॥ पादवेधो धनं हन्यात्तस्मात्सर्वान्निवर्जयेत्' इति। इति वेधाकूटः ॥ ॥ अथ भूतकूटः—'अश्विन्याद्यास्तु पट्तारा: पुनर्वस्वादयश्च पट्। हस्तादिपञ्चकं चैव ज्येष्ठाद्यं पञ्चकं तथा। वस्वादिपञ्चकं भानां भूतकूटं धरादयः' इति। धरादयः पृथिव्या-

दिपश्चभूतानि । 'स्त्रीपुंसोर्जन्मनक्षत्रे एकभूते शुभावहः । धरातोयेऽतिसंपत्स्याच्चोयवाय्वोस्तु मध्यमः ॥ अधमं वायुभूम्योः स्यादग्नितोयेऽधमाधमः । शेषभूतेऽधमो योगः परस्परसमागमे ।। ज्ञेयानि भूतकूटानि दंपत्योस्तु विवाहके' । इति भूतकूटः ॥ ॥ अथ लिङ्गकूटः । गर्गः—'श्रवणाभिजिदादित्यहस्ततिष्याश्विनीयुताः । प्रोष्ठपादद्वयं चित्रापुंताराश्च प्रकीर्तिताः ॥ वारुणं सौम्यमूले च नपुंसकममादयाः । शेषाः स्त्रियः समाख्यातास्ताराः स्युर्गुरुणा मताः' । बृहस्पतिः—'सार्पाचतुष्कं रौद्रं च याम्यं साग्निकं जलम् । विश्वेन्दुवासवं पौष्णं स्त्रीलिङ्गं समुदाहृतम् ॥ सौम्यवारुणमूलानि नपुंसकाह्वयानि च । शेषाः पुंलिङ्गता याताः स्ताराः शृणु शचीपते ॥ स्त्रीनक्षत्रेऽङ्गनाजन्म पुंनक्षत्रे पुमान्यदि । स संयोगः शुभः प्रोक्तो देवेन्द्रगुरुणा मतः ॥ न शुभं विपरीते तु मध्यमं स्त्रीनपुंसकम् । पुंनपुंसकमेवं स्यात्सर्वत्र द्विकयोगतः' । इति लिङ्गकूटः ॥ ॥ अथ जातिकूटः—'अश्विनीरौद्रभाग्यादि पञ्च पञ्च च तारकाः । ततश्चतुश्चतुस्तारा जातयः षट् प्रकीर्तिताः ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैवानुलोमजाः । प्रतिलोमाश्च कथ्यन्ते पण्डितैर्जातयश्च षट् ॥ उत्तमः समजातिः स्यान्मध्यमस्त्वनुलोमजः । अधमः प्रतिलोमा स्याच्चण्डालोऽप्यधमाधमः' । इति जातिकूटः ॥ ॥ अथ वर्णकूटः—'कर्कमीनालयश्चिका विप्राः क्षत्राः सिंहधनुःक्रियाः । नक्रकन्यावृषा वैश्याः शूद्रास्तौलिघटीयमाः ॥ वर्णश्रेष्ठा च या नारी वर्णहीनस्तु यः पुमान् । विवाहमेतयोः कुर्यात्तस्य भार्या विनश्यति' । इति वर्णकूटः ॥ ॥ अथ गोत्रकूटः—'मरीचिगोत्रताराः स्युरश्विन्यादिचतुष्टयम् । वासिष्ठाः सौम्यताराद्या आश्लेषाद्यास्तथाङ्गिराः ॥ हस्ताद्यास्तु तथात्रिः स्यात्पुलस्त्यो मैत्रभादयः । पुलहश्चैव विश्वाद्या भृगुर्वरुणभादयः ॥ एवं गोत्रोत्थभाद्यास्तु भिन्नगोत्रे शुभं

भवेत् । सगोत्रे त्वशुभं विवाहोऽन्तसयोग उत्तमः ॥ वधूवरर्क्षे चैकपिंगोत्रस्थमशुभं भवेत् । भिन्नपिंगोत्रे शुभदं वरवध्वोर्विवाहके' ॥ इति गोत्रकूटः ॥ ॥ अथ पक्षिकूटः । वासिष्ठे—'भेरुण्डपिङ्गलककाकमुकुक्कुटानां बर्ही तथाश्विमुखभानि गणाश्च पञ्च । त्राणर्तुपट्छरशरैः क्रमशो विवाहे भिन्ने गणे कलह एकगणे प्रवृद्धिः' । इति पक्षिकूटः ॥ ॥ अथ योगिनीकूटः—'योगिनीना तु सप्तानामनीकः सप्ततुल्यकः । एकयोगिनि नक्षत्रे शुभं तारा यदि द्वयोः ॥ भिन्नयोगिनि ताराः स्युर्न शुभोऽयं विशेषतः' । इति योगिनीकूटः ॥ ॥ अथाऽऽयकूटः । गर्गः—'ध्वजस्य ताराः संप्रोक्ता अश्विन्यादिचतुष्टयम् । सौम्याद्यन्धिरथाश्नौ च सर्पाद्याश्च हरौ तथा ॥ हस्ताद्याः शुनि चैवं स्याद्रूपे चेन्द्राग्निपूर्वकाः । मूलाद्याः खरताराः स्युर्वैष्णवाद्या गजस्य च ॥ पूर्वाप्रोष्ठपदाद्याः स्युर्वायसस्य नितारकाः । मित्रायेऽतिशुभं विवादर्याये तु विनाशदः ॥ समाये सम एव स्याद्दंपत्योर्जन्मतारयोः' । स्ववर्गात्पञ्चमो रिपुरिति पूर्ववज्ज्ञेयम् ॥ वासिष्ठे तु—'आया ध्वजाद्याः क्रमशोऽश्विपूर्वा तान्यष्टभिर्भेश्च पुनः पुनः स्युः । त्रैवर्णिकं च त्रितयं च शिष्टं प्रक्षिप्य एषां खलु पञ्चमेन' । इत्यायकूटः ॥ ॥ अथ दैवकूटः—'तारेशदेवताद्वन्द्वे परस्परममित्रताम् । याते विनाशो दंपत्योर्मित्रतारा सुखं भवेत् ॥ दंपत्योर्मित्रतारा तु शुभदा चेद्विवाहके । देवासुरेशतारासु दंपत्योर्यदि तारके । विनाशः स्याद्द्वयोर्योगे मित्रे शेषे शुभावहम्' । इत्यादिदश राशिकूटाः ॥ ॥ अथ कूटफलम्—'आयुष्यं दिनशोभने शुभगणे वृद्धिश्च योनौ प्रियं माहेन्द्रं बहुपुत्रपौत्रफलदं स्त्रीदीर्घतः सत्सुतः । राशिः स्यात्कुलवृद्धिकृच्छुभफलं मैत्रे तु वश्ये रतिर्माङ्गल्यं बहुरज्जुके तथ मिथो वेधे फलं शोभनम्' । अवशिष्टानामष्टानां तत्तत्प्रकरणे फलान्युक्तानि तेषां मध्ये आवश्यककूटानाह वसिष्ठः—'राशिकूटवदधीशसु-

हृत्त्वं स्त्रीविदूरगणयोनिसुनाड्यः । दैवयोगवरगोत्रसमेताः पाणिपीडनविधौ परिचिन्त्याः' ॥ ॥ अथ जात्यनुसारकूटाः । गर्गः—'ग्रहमैत्रं द्विजातीनां क्षत्राणां गणकूटकम् । वैश्यानां राशिकूटं च शूद्राणां योनिरेव च ॥ वर्णकूटादिपट्पञ्च मालवैर्दाक्षिणात्यकैः । पञ्चचत्वारि चोदीच्यैर्गौडैर्गर्गादिसंमतम् । पञ्चषट्पञ्चचत्वारि तत्तद्दिक्षु प्रकीर्तिताः' इति । इति जात्यनुसारकूटनिर्णयः ॥

अथ शकुनविधिरुच्यते—'सुबन्धुभिः सुविद्वद्भिर्विचार्यैतान्पुनः पुनः । सम्यगालोच्य यत्नेन कुलवृद्धैः सुसंयतैः' ॥ एवं विंशतिकूटान् त्रिस्कन्धपरिज्ञातृज्योतिषज्ञैः स्वाप्तजनैः सम्यक्समचित्तैः कुलवृद्धैश्च सह सम्यग्विचार्य सम्यगालोचितवाक्यं निश्चित्य ततोऽन्तर्लक्षणज्ञानार्थं निमित्तदर्शनं कर्तव्यमिति । तथाचोक्तं संग्रहे—'मनोनुकूलं प्रथमं प्रसिद्धं लब्ध्वा तु पश्चाद्दश संपदश्च । ततो निमित्तं शकुनादिभिश्च संचिन्त्य पश्चाद्वर उद्वहेत्ताम्' इति । तस्मादाभ्यन्तरलक्षणज्ञानार्थं निमित्तं पश्येत् । तत्र गृह्यम्—'दुर्ज्ञेयानि लक्षणान्यष्टौ पिण्डान्कृत्वा ऋतमग्रे प्रथमं जज्ञ ऋते सत्यं प्रतिष्ठितम् । यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यतां यत्सत्यं तद्दृश्यताम् । इति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति क्षेत्राच्चेदुभयतःसस्याद्गृह्णीयादन्नवत्यस्याः प्रजा भविष्यतीति विद्याद्गोष्ठात्पशुमती वेदिपुरीषाद्ब्रह्मवर्चस्विन्यविदासिनो ह्रदात्सर्वसंपन्ना देवनात्कितवी चतुष्पथाद्द्विप्रव्राजिनी रिणाद्धन्या श्मशानात्पतिघ्नी' इति । अस्यार्थः—'उभयतःसस्यात् यस्मिन्क्षेत्रे प्रतिसंवत्सरं द्विवारं सस्यं निष्पद्यते तदुभयतःसस्यं क्षेत्रम् । तदुक्तम्—'सस्यं क्षेत्रे तु यत्र द्विर्निष्पन्नं प्रतिवत्सरम् । तदिहोभयतःसस्यशब्देनेति प्रचक्षते' इति । तस्मात्क्षेत्रात् । गोष्ठं गोस्थानम् । वेदीगताः पांसवो वेदिपुरीषमिति हरदत्तः । अपवृत्ते कर्मणि या वेदिस्तस्याः पुरीषमिति नारायणः । अविदा-

भवेत् । सगोत्रे त्वशुभं विद्याद्गोत्रसंयोग उत्तमः ॥ वधूवरर्क्षे चैकर्षिगोत्रस्थमशुभं भवेत् । भिन्नर्षिगोत्रे शुभदं वरवध्वोर्विवाहके' ॥ इति गोत्रकूटः ॥ ॥ अथ पक्षिकूटः । वासिष्ठे—'भेरुण्डपिङ्गलककाकखुकुक्कुटाना बर्हीं तथाश्विमुखमानि गणाश्च पञ्च । त्राणर्तुपट्छरशरैः क्रमशो विवाहे भिन्ने गणे कलह एकगणे प्रवृद्धिः' । इति पक्षिकूटः ॥ ॥ अथ योगिनीकूटः—'योगिनीनां तु सप्तानामनीकः सप्ततुल्यकः । एकयोगिनि नक्षत्रे शुभं तारा यदि द्वयोः ॥ भिन्नयोगिनि ताराः स्युर्न शुभोऽयं विशेषतः' । इति योगिनीकूटः ॥ ॥ अथाऽऽयकूटः । गर्गः—'ध्वजस्य ताराः संप्रोक्ता अश्विन्यादिचतुष्टयम् । सौम्याद्यन्धिरथाग्नौ च सर्पाद्याश्च हरौ तथा ॥ हस्तायाः शुनि चैवं स्याद्वृषे चेन्द्राग्निपूर्वकाः । मूलाद्याः खरताराः स्युर्वैष्णवाद्या गजस्य च ॥ पूर्वाप्रोष्ठपदाद्याः स्युर्वायसस्य त्रितारकाः । मित्रायेऽतिशुभं विद्यादर्थाये तु विनाशदः ॥ समाये सम एव स्याद्दंपत्योर्जन्मतारयोः' । स्ववर्गात्पञ्चमो रिपुरिति पूर्वनज्ञेयम् ॥ वासिष्ठे तु—'आद्या ध्वजाद्याः क्रमशोऽश्विपूर्वा तान्यष्टभिर्भैश्च पुनः पुनः स्युः । त्रैवर्णिके च त्रितयं च शिष्टं प्रद्वेष एषा खलु पञ्चमेन' । इत्यायकूटः ॥ ॥ अथ दैवकूटः—'तारेशदेवताद्वन्द्वे परस्परममित्रताम् । याते विनाशो दंपत्योर्मित्रतारा सुखं भवेत् ॥ दंपत्योर्मित्रतारा तु शुभदा चेद्विवाहके । देवासुरेशतारासु दंपत्योर्यदि तारके । विनाशः स्याद्द्वयोर्योगे मित्रे शेषे शुभावहम्' । इत्यादिदश राशिकूटाः ॥ ॥ अथ कूटफलम्—'आयुष्यं दिनशोभने शुभगणे वृद्धिश्च योनौ प्रियं माहेन्द्रं बहुपुत्रपौत्रफलदं स्त्रीदीर्घतः सत्सुतः । राशिः स्यात्कुलवृद्धिकृच्छुभफलं मैत्रे तु वश्ये रतिर्माङ्गल्यं बहुरज्जुके तथ मिथो वेधे फलं शोभनम्' । अत्रशिष्टानामष्टानां तत्तत्प्रकरणे फलान्युक्तानि तेषां मध्ये आवश्यककूटानाह वसिष्ठः—'राशिकूटतदधीशसु-

पिण्डेष्वेषु प्रथमवश्चत्वारः शुभसूचकाः । कन्यायाः परतश्चान्ये चत्वारोऽशुभसूचकाः ॥ क्षेत्रमृद्ग्रहणे तस्या बह्व्या संततिर्भवेत् । गोष्ठमृद्ग्रहणे तस्याः संसर्गः स्याद्गवादिभिः ॥ पशुभिः सुसमृद्धिः स्यात्संततिः स्वयमेव वा । ब्रह्मवर्चससंपन्ना वेदीमृद्ग्रहणे भवेत् ॥ सर्वसंपत्समृद्धिः स्यादशोष्यह्रदमृद्ग्रहे । द्यूतमृद्ग्रहणे धूर्ता प्रव्राजिनी चतुष्पथे ॥ उद्वाहाद्विरमत्येपा व्यभिचाररता भवेत् । दारिद्र्योत्पादिनी भर्तुर्भवेदिरिणमृद्ग्रहे । श्मशानमृद्ग्रहे भर्तुर्मृतिहेतुर्भवेदियम्' इति ॥

एतदष्टपिण्डनिमित्तलक्षणं परीक्षणं लौकिकविरुद्धमिति हृदि निधाय आदिशब्देन निमित्तान्तराण्यप्यनुजानात्याश्वलायनाचार्यः स्मृतिरूपेण—'पितृमातृभ्रातृमतीं सर्वलक्षणलक्षिताम् । उद्वहेदष्टपिण्डाद्यैः कन्यां सम्यक्परीक्षिताम्' इति । तस्माच्छ्रीविष्णुपुराणादिपुराणानि सम्यगभ्यर्च्य तत्कथामालोच्य पाणिग्रहणं कुर्यात् ॥ पुराणार्चननिरीक्षणादिलक्षणं शिवराघवसंवादोक्तमत्र प्रदर्श्यते । श्रीराम उवाच—'पुराणं वीक्ष्य विधिना परेण ब्रूत सत्तमाः । नेयदग्धानि हेतुं च विचार्य तदनन्तरम् ॥ किं पुराणं वीक्ष्यं साद्धर्जनीयं तथैव किम् । प्रशस्तः कीदृशः श्लोकस्तदन्यः कीदृशो भवेत् ॥ कीदृशेषु च कार्येषु कीदृशः पूजकस्तथा । पूजा च कीदृशी तज्ज्ञैः कार्या निर्णयदर्शने ॥ इति रामस्य वचनं श्रुत्वा ते द्विजसत्तमाः । न वक्तारो वयं राम रोचतां तु पुराणवित् ॥ पुराणजीवी पूजार्हः स्वशाखाध्ययनः शुचिः। मीमांसातत्त्वविज्ञानः श्रोत्रियो नान्यदूषितः ॥ देवेषु च समस्तेषु समदृष्टिः शिवे रतः । शतरुद्रियजापी च साग्निचित्रच याचकः ॥ यजुर्वेदी विशेषेण पूजयेत्पुस्तकं सुधीः । श्रीतालपत्रलिखितं देवलिप्यान्वितं शुभम् ॥ प्रतिपैचन्द्रवद्धाग्रयुगवत्प्रणवाक्षरम् । प्रागूर्ध्वरेखयोस्तस्य रेखयोरग्रयोजिता ॥ रेखैका तु भवेदेवमकारस्तस्य पार्श्वतः । शिरोभागमु-

पाठा०—१ भवेदम्लानिहेतुच । २ प्रतिपच्चन्द्रयुगवद्धाग्र ।

पकम्य मकोणाधःप्रलम्बिनी ॥ आकारः स हि विज्ञेयः पट्टिकादक्षरेखया। वामे पद्मकबिन्दुत्वादिकार इति कीर्तितः॥ तस्य वाम-गिरेखा लम्बिनी तदुदाहृता । तस्यां तु लम्बरेखा स्यादन्ते तु स्यास्लविनत्॥ उकारः सह विज्ञेयो लविनद्वयवच ऊ । एवमन्यानि मर्वाण्यप्यक्षराण्याह भारती ॥ लिप्यानयैव लिखितं पुराणं तु प्रशस्यते। ब्राह्मं पाद्मं वैष्णवं च मार्तण्डं नारदेरितम्॥ मार्कण्डेयमथाग्नेयं कौर्मं वामनमेव च । गारुडं लैङ्गमाग्न्यातं स्कान्दं मात्स्यं नृसिंहकम् ॥ तथैव चरितं राम पुराणं कापिलं तथा । वाराहं ब्रह्मवैवर्तं गरुडेषु प्रशस्यते ॥ लैङ्गं भागवतं दौर्गं भविष्योत्तरमेव च । भविष्यं चोपसंज्ञानि अन्यानि च विवर्जयेत् ॥ निमुच्य पुस्तके रज्जुं पीठे निक्षिप्य संस्कृते । धौतवस्त्रधरः स्नातः शुचिरक्रोधनोऽक्षरः ॥ आदावात्मानमभ्यर्च्य कृत्वा संकल्पमेव च । अङ्कुशं साक्षसूत्रं च पाशं पुस्तकमेव च ॥ धारयन्तीं सितां ध्यायेत्प्रसन्नास्या सरस्वतीम् । गोक्षीरसदृशाकारं त्रिनेत्रं वृषवाहनम् ॥ प्रसन्नवदनं शान्तं शुक्लाम्बरधरं शुभम् । हरिणं चाभयं चोर्ध्वबाहुयुग्मं किरीटिनम् ॥ व्याख्यामुद्रां दक्षहस्ते वामहस्ते वरप्रदम् । नानारत्नसुभूषाढ्यं गिरिजाक्रान्तवामगम् ॥ पद्मुभिर्मुनिभिर्मुख्यैः स्तूयमानपदाम्बुजम् । मूर्तिमद्भिस्तथा देवैः स्तूयमानं पुराणकैः । अन्यैः समस्त-लोकेश सदोवितपदाम्बुजम्। ध्यात्वैवं पूजकः सम्यगादौ पूजां समाचरेत् ॥ आपो वा इदमित्येव कलशस्याभिमन्त्रणम् । तस्थं जलं गृहीत्वा तु पात्रस्थमभिमन्त्रयेत् ॥ ॐ तद्ब्रह्मेति मन्त्रेण प्रशस्तं प्रणवेन तु । आत्मानं सर्वपात्राणि तत्र आवाहयेदिति ॥ यद्वागिति सूक्तेन भारत्याः षोडशार्चनम् । पुरुषसूक्तेन वा कुर्याद्गायत्र्या वा समर्चयेत् ॥ ॐ नमो भगवतेऽमुकपुराणायेति वार्चयेत् । काण्डादिति हि मन्त्रेण दूर्वामानीय पूजयेत् ॥ ॐ नमो भगवत्यै दूर्वायै इति ॥ मा लोकपालपूजा स्यादथ कन्यार्चनं भवेत् ।

वत्सरात्पञ्चमादूर्ध्वं दशवर्षादधः शुभा ॥ अनुत्पन्नर्तुर्वापि तां प्रयत्नेन पूजयेत् । गन्धपुष्पाक्षतैर्धूपदीपताम्बूलभूषणैः ॥ पाठयेदप्यमुं मन्त्रं पूजकः कन्यकामिमाम् । 'सत्यं ब्रूहि प्रियं ब्रूहि भगवति श्रीसरस्वति नमस्ते नमस्ते' इति । गायत्र्या च कुमार्याथ दूर्वायुग्मं तु कारयेत् ॥ संनिधौ पुस्तकस्याथ सहस्रपरमेत्यृचा । दूर्वायुग्मत्रयं दद्यात्तस्या हस्ते विचक्षणः ॥ सापि क्षिपेत्तत्र संधौ शलाकात्रयमत्र तु । विसृज्य तां पुनर्दद्यात्पुष्पाञ्जलिमतन्द्रितः ॥ आदाय पुस्तकं नत्वा देवीं ध्यायेत्समाहितः । विद्वद्भिः प्रेक्षणं कुर्याच्छिराभ्यां नम इत्यथ ॥ पत्रयोर्मध्यतः श्लोकः कार्यसिद्धेश्च सूचकः । पूर्वपत्रे समाप्तिः स्याच्छ्लोकस्य यदि राघव । पत्रान्तरे पठेच्छ्लोकं विविच्यार्थमुदीरयेत् ॥ शनैः शनैः पठेत्प्राज्ञो व्याख्याया च शनैः शनैः । त्वरेह तु न कर्तव्या कुप्यति त्वरया च गीः ॥ घटिकायां तु पादः स्यात्परा स्यात्तु ततोऽधिका । त्वरयेन्न च वक्तारं ज्ञातव्यांशमनु द्विजः ॥ निश्चित्य पाठं श्लोकस्य निश्चित्यार्थं च मानसे । प्रदीप्तं तु न वक्तव्यं विचिन्त्य रघुनन्दन ॥ यदि युक्तमयुक्तं वा श्लोकमन्यं पठेदसौ । पुस्तकस्थं स हित्वैव पूजकः सन्द्विजो यदि ॥ तत्तथैव हि विज्ञेयं विसंवादो न शस्यते । दैवागतो हि स श्लोको दैवं हि बलवत्तरम् ॥ उपश्रुतिषु यद्वाक्यं नापराधो द्विजस्य तु । विस्मयस्तत्र कर्तव्यो दैवस्य कुटिला गतिः ॥ पत्रद्वयविपर्यासे पत्रे चोत्तरचारिणि । तमादेशं तिरस्कृत्य द्वितीयं तु पठेदथ ॥ ततस्तृतीयं पात्यं स्यात्ततः कार्यविवेचनम् । अविसर्गान्तपूर्वार्धस्तवर्गेतरपञ्चमः ॥ स्तुतिलिङ्गर्जितः श्लोकः शकुनेषु प्रशस्यते । अध्यायानां समाप्तिश्च वृथा पत्रं वृथा लिपिः ॥ उक्तानुकथनं चैव स्तूयमानं तथैवच ॥ दग्धपत्रं नलिखितं संदिग्धा-

पाठा०—१ सदिग्धां वाचमेव च ।

धरमेनत्र । एतानि शकुने नित्यं वर्जनीयानि पण्डितैः ॥ प्रश्नोऽपि विविधो ज्ञेयो दीप्तशान्तप्रकारतः । दीप्तं तु द्विविधं ज्ञेयं क्षितिस्थितिविनाशयोः ॥ शान्तं च द्विविधं ज्ञेयं शान्तस्य स्थितिवृद्धितः । तत्र शान्तं प्रशस्तं स्याल्लक्षितं पूर्वलक्षणैः ॥ यस्यापि यादृशं योग्यं विचार्यं तादृशं बुधैः । श्रुतिनैराग्यपरयोः कार्यनाशः प्रकीर्तितः ॥ विसर्गान्ते तु पूर्वार्धे व्ययायासौ प्रकीर्तितः । संकल्पितान्यथाभावो ह्यध्यायस्य समापने ॥ काण्डादेश्च समाप्तौ तु सार्वत्कार्यविनाशनम् । पुराणस्य समाप्तौ तु तद्देशस्य विपर्ययः ॥ क्षुते पुस्तकपाते च आहते मस्तकादिके । वक्तावमाननं याति ततः शकुननाशनम् ॥ तस्मादेतादृशे दोषे शकुनं परिवर्जयेत् । उपमायां भवेद्राम कार्याभावो न वस्तुतः ॥ जयसंतानतोऽन्यत्र स्तुतिर्मध्यफलप्रदा । श्रुतिः प्रशस्ता कुत्रापि गुणवत्त्वादिनिर्णयः ॥ विवाहे चौपधादाने व्यवहारे कृषौ तथा । यथा यथा स्तुती राम विवादेपि न दूषणम् ॥ अयथार्था स्तुतिर्यत्र तत्र कार्यं न सिध्यति । अबुद्धार्थे तथा पद्ये पुराणस्यातिदाहने । पलायने देशबाधे व्याधिसंभव एव च ॥ चौराद्यभिभवेऽन्यस्मिन्घोरे कार्यविनाशनम् । शान्तः साद्यदि सत्प्रश्न इति प्राहुः पुराविदः ॥ श्रीरामः—अबुद्धार्थं कथं प्रश्नं पुराणज्ञो वदिष्यति । अनुज्ञातं श्रुतं सम्यक् श्रोतॄणामिति निश्चयः ॥ तदुदाह्रियतां पद्यमर्थश्चापि विचार्यताम् । भावबोधनमप्यत्र कर्तुमर्हसि पण्डित ॥ श्रीशंभुः-मधूनि मधुमत्ताय मधुर्मधुभुजं मधु । मधुनागमनादर्यं[1] विषाणि च विषाणि च ॥ अबुद्धार्थस्त्वयं श्लोकः शकुने न हि शस्यते । रोरुरूरेरोरोररीरीराररूररः ॥ एवं करोति शुद्धात्मा ब्राह्मणैर्भोक्षणोऽतिथिः । भावाबुद्धस्त्वयं श्लोकः शकुने न प्रशस्यते ॥ एवमा-

पाठा०—१ मधुनादर्यं ।

दीनि पद्यानि पुराणेषु रघूत्तम । सन्ति तेषां नच व्याख्या त्रिभिः पाठपरो भवेत् ॥ वक्तुः श्रोतुरवैगुण्यं व्रतेषु नियमेषु च । वेदत्रय पुराणानि चिन्त्यानि कथितं त्विति ॥ निरुक्तादिवशादर्थधीपर्वसु विचारतः । श्लोकार्थं प्रक्रियां चैव विचार्यं परमार्थतः ॥ यत्नांस्तत्र हि श्लोकः प्रक्रिया च ततो लघुः । दग्धपत्रं वृथायासो दग्धपत्रे विनाशनम् ॥ स्यादन्तरितनिर्वाह- पत्रे कार्यविघ्नता । शीर्णपत्रे व्ययः प्रोक्तः प्रणष्टलिपिके तथा ॥ वृथाक्षरे वृथायासः पुनरुक्तौ विसंपदः । उपमाने च तत्कार्यं सिद्धतीव न सिद्ध्यति ॥ विलम्बे नार्थसंसिद्धिरस्पष्टे चाक्षरे पुनः । कार्यसंशयमाप्नोति निर्दिष्टदिवसेष्विति ॥ नप्रत्ययान्निरीक्षेत पुराणं प्रत्ययं नृप । भुक्तोच्छिष्टस्तथा नैव निरीक्षेत पुराणकम् ॥ पूर्वस्य दिवसस्याथ रात्रौ पूजां विधाय च । प्रातःकाले परेद्युश्च शकुने रघुनन्दन ॥ प्रश्नानां वीक्षणं कार्यं सद्यस्कालमथापि वा । प्रक्रियादिविशेषेण विरोधं शकुने वदेत् ॥ शुभकार्येषु सर्वेषु प्रेतश्राद्धा- दिवर्णनम् । दण्डप्रणयनं शापो देशबाधा विपर्ययः ॥ रक्षसां दुष्टसत्वानां सर्वप्राणिविहिंसनम् । दहनादेश्च निर्माणं वमनं वपनं तथा ॥ हास्यो बीभत्सका रौद्रः स्वप्नमत्र तथा पुनः। घटादिघूर्णनं पीडा कलहो मरणं तथा ॥ समये मृतवार्ता च समक्षं बन्धुमार- णम् । क्रूराणामागमश्चापि महतां भङ्ग एवच ॥ दुर्वार्ताश्रवणं चाखुभुग्नादो द्रुमपातनम् । दारुकुड्यनिपातादि शोकवाक्श्रवणं तथा ॥ एवमाद्यास्तथा चान्याः प्रक्रियास्तु विवर्जयेत् । श्रेयःप्राप्तिविचारेषु राजस्तुष्टिः शुभावहा ॥ ग्रहाणामुभयोरेव शान्तिरप्य- तिशस्यते । किमत्र बहुनोक्तेन यद्योग्यं तद्विचारयेत् ॥ सर्वेषु च विचारेषु शुभकर्म विचारयेत् । सर्वेषु च पुराणेषु स्कान्दमत्र प्रशस्यते ॥ वैष्णवं केचिदिच्छन्ति रामायणमथापरे । स्तुत्यादिसर्वदोषाणां वैष्णवे नैन दुष्टता ॥ स्कान्दे रामायणे चैव दोषत्वमपि चाल्पतः ।

किंतु पूजयितुं शक्यं वैष्णवेनैव केनचित् ॥ सदाचारविहीनेन पूजितं यदि तत्फलम् । तदाऽशुभमितायाति शकुनं नैव सिध्यति ॥ मर्याचारममोपेते शाखादण्डे तथा युधः(?)' इति । तस्माच्छ्रीविष्णुपुराणस्य स्तुतिनिन्दादिदोषरहितत्वात्तत्पुराणं सदाचारयुक्तेन पुराणविद्ब्राह्मणेन पूर्वोक्तप्रकारेण सम्यगभ्यर्च्य शकुनमवलोक्य । तत्प्रश्नैरेव मनः संतोषयुक्तं चेत्तदैव कन्यां निश्चिनुयात् । इति पुराणार्चनविधिः ॥

लग्नविचारः । एवं शकुनं संमृश्य लग्नगुणं विचारयेत् । तथाच—'जन्मयोगशकुनादिविस्तरे गोचरेण शुभदे नृपोषितोः । संप्रदानगमये गुणान्विते पाणिपीडनविधिर्निधीयते' । अस्यार्थः—गुणान्विते विवाहलग्ने पाणिपीडनं विधेयम् । तत्र लग्नस्य अयनमासादिनिश्चयापेक्षत्वात्तन्निर्णय उच्यते । तत्र गृह्यम्—'उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः सार्वकालमेके विवाहम्' इति । श्रीधरीयेपि—'अर्के कर्कटकन्यकाघटधनुर्मुक्ते भृगौ मन्त्रिणि स्फीतज्योतिषि शीतरोचिषि बलोद्रिक्ते विरिक्ते तिथौ । रोहिण्युत्तररेवतीपितृमरुन्मित्रेन्दुहस्तासुरेष्वारार्कार्किजवासरादिरहितेषूद्वाहकर्मारभेत्' इति । अस्यार्थः—अर्के सूर्ये कर्कटकन्यकाघटधनुःसंज्ञराशिभिर्विमुक्ते मासि विवाहकर्मारभेदिति । तथोक्तं विधिरत्ने—'कन्याकुम्भकुलीरगे दिनकरे कुर्यान्न पाणिग्रहं शेषाणि प्रवराणि यानि नितरां मासानि पाणिग्रहे' इति । नारदस्तु—'माघफाल्गुनवैशाखज्येष्ठमासाः शुभावहाः । मध्यमः कार्तिको मार्गशीर्षको निन्दिताः परे ॥ न कदाचिद्दशर्क्षेषु भानोरार्द्राप्रवेशनात् । विवाहं देवतानां च प्रतिष्ठां चोपनायनम् ॥ अप्रबुद्धे हृषीकेशे यावत्तावन्न मङ्गलम् । उत्सवे वासुदेवस्य दिवसे नान्यमङ्गलम्' इति ॥

अथाद्यगर्भे ज्येष्ठमासनिषेधं श्रीपतिराह—'जन्ममासि नतु जन्मभे तथा नैव जन्मदिवसेपि कारयेत् । आद्यगर्भदुहितुः सुतस्य वा ज्येष्ठमासि नहि जातु मङ्गलम्' ॥रत्नकोशेप्युक्तम्—'जन्मर्क्षे जन्मदिवसे जन्ममासे शुभं त्यजेत् । ज्येष्ठमासाद्यगर्भस्य शुभं वर्ज्यं स्त्रिया अपि' इति। संग्रहे—'विवाहं चोपनयनं जन्ममासे विवर्जयेत् । विशेषाज्जन्मपक्षं तु वसिष्ठाद्यैरुदाहृतम्' इति । नारदस्तु—'जन्ममासे न जन्मर्क्षे न जन्मदिवसेपि च । नाद्यगर्भसुतस्यात्र दुहितुर्वा करग्रहः' । अन्यच्च—'न जन्मभे जन्मदिने गृहे वा कुर्याद्विवाहं नच जन्ममासे । ज्येष्ठर्क्षजज्येष्ठसुताङ्गनानां मिथो विशेषान्नतु शुक्लपक्षे ॥ क्षौरं विवाहं मृगयां साहसं युद्धमेव च । व्रतबन्धं च दीक्षां च तद्गजाश्वादिरोहणम् ॥ अध्वानं जलयानं च जन्ममासे विवर्जयेत् ॥ जन्ममासे तथा जन्मदिने जन्मत्रयेपि वा । हूणे वङ्गे त्यजेत्सर्वमन्यदेशे शुभावहम् ॥ अन्नप्राशनमुद्वाहं व्रतबन्धं च चौलकम् । जन्ममासे विवर्ज्यं स्यात्कलिङ्गे मागधे सदा ॥ मेषेऽर्के मागधे वर्ज्यमाषाढे दक्षिणे त्यजेत् । कर्तव्यं वङ्गदेशे तु मिथुनेनापि संयुतम् ॥ बर्बरे तु सदा वर्ज्यं फाल्गुनं निमिषान्वितम् । नान्यदेशे विवर्ज्यं स्याद्वसन्ते सर्वमङ्गलम् ॥ निमिषान्वितं मीनसंयुतम् । सर्वमङ्गलं कर्तव्यमिति शेषः ॥ फाल्गुने मीनसंयुक्ते त्यजेत्सर्वत्र शोभनम् । नर्मदादक्षिणे देशे विवाहादिशुमङ्गलम् ॥ जन्ममासे शुभं प्रोक्तं बहूनां संमतं त्विदम् ॥ ज्येष्ठर्क्षजज्येष्ठसुताङ्गनानां मिथोविशेषान्नतु शुक्लमासे । शुक्लमासे ज्येष्ठमासे । स्फीतज्योतिषि शीतरोचिषीत्यनेन शुक्लपक्षो लक्ष्यते । तस्मिन्ननुकूले सति विवाहः कर्तव्यः । तथोक्तम्—'उपनयनं विप्राणां गोदानविवाहमङ्गलादीनि । कुर्याद्बलवति चन्द्रे जीवे च रवौ च नियमेन' इति ॥

अथ चन्द्रताराबलम् । नारदः—'चन्द्रताराबलैर्युक्ते यदि पाणिग्रहो भवेत् । शुभलग्ने शुभैर्युक्ते तदा वृद्धिं विनिर्दिशेत्' ॥ शुक्लपक्षे चन्द्रबलप्राधान्यमाह श्रीपतिः—'शुक्लपक्षे शीतरश्मिर्बलीयान्न प्राधान्यं तारकायास्तु तत्र । शक्त्या युक्ते विद्यमाने नै कान्ते न सालस्यं योषितः क्वापि दृष्टम्' ॥ ॥ कृष्णपक्षे ताराबलप्राधान्यमाह स एव—'न खलु बहुलपक्षे शीतरश्मेः प्रभावः क्वचिदमितिहि तारावीर्यमार्यैः प्रधानम् । अतिविकलशरीरे प्रेयसि शोषिते वा प्रभवति खलु भर्तुः सर्वकार्येषु योषा' इति । संग्रहे तु—'शुक्लादावुपचयगे कृष्णादावपचयस्थिते चन्द्रे । द्वावप्यभीष्टफलदौ पक्षौ क्षीणां शशाङ्कबललाभात्' इति ॥ ❀ ॥ उपचयस्थानान्युच्यन्ते—'रिपुविक्रमभेपूरणभवभवनान्युपचयाभिधानानि' । रिपुः षष्ठम् । विक्रमस्तृतीयम् । भेपूरणं दशमम् । भवभवनमेकादशम् । शेषाण्यपचयस्थानानि । तथाच सत्याचार्यैः—'दशमैकादशषष्ठतृतीयसंज्ञानि लग्नजन्मभ्याम् । उपचयभवनानि स्युः शेषाण्यूक्षाण्यपचयानि' इति ॥ ॥ अथ ताराबललक्षणम्—'जन्मसंपद्विपत्क्षेमप्रत्यरः साधको वधः । मैत्रं परममैत्रं च जन्म चेति पुनः पुनः' इति । अत्र विपदादिनक्षत्रदोषापवादः—'बली कर्मगतश्चन्द्रो बलवच्छुभवीक्षितः । विपत्प्रत्यरयाधर्क्षैनिजन्मर्क्षोत्थदोषहा ॥ जन्मकर्मर्क्षनाथौ द्वौ मिथो मित्रे यदा तदा । वैनाशिकर्क्षसंभूतदोषा भङ्गं प्रयुस्तदा' ॥ संग्रहे—'जन्मर्क्षात्पूर्वनक्षत्रं सप्तविंशतिमं भवेत् । सर्वकर्मविनाशः स्याच्चन्द्रो व्ययगतो यदि ॥ सप्तविंशतिनक्षत्रमेकराशिसमन्वितम् । सर्वेषु शुभदं प्रोक्तं विवाहोपनयादिषु' । इति चन्द्रताराबलम् ॥ ॥ अथ लग्नगुण उच्यते नारदीये—'जामित्रशुद्धेकविंशन्महा-

पाठा:—१ शु पक्षौ । २ विकृतशरीरे ।

दोषविवर्जिते' इति ॥ ❀ ॥ अथैकविंशन्महादोषाः—'एकविंशतिदोषाणां नामरूपफलानि च । पितामहोक्तं संवीक्ष्य तानि वक्ष्ये समासतः ॥ पञ्चाङ्गशुद्धिरहितो दोषस्त्वाद्यः प्रकीर्तितः । उदयास्तशुद्धिहीनो द्वितीयः सूर्यसंक्रमः ॥ तृतीयः पापषड्वर्गो भृगुः षष्ठः कुजोऽष्टमः । गण्डान्तं कर्तरीरिःफषडष्टेन्दुश्च सग्रहः ॥ दंपत्योरष्टमं लग्नं राशिर्विषघटी तथा । दुर्मुहूर्तो वारदोषः खार्जूरिकसमांघ्रिभम् ॥ ग्रहणोत्पातभं क्रूरविद्धर्क्षं क्रूरसंयुतम् । कुनवांशो महापातो वैधृतिश्चैकविंशतिः' इति ॥

अथ पञ्चाङ्गलक्षणम्—'तिथिवारर्क्षयोगानां करणस्य च मेलनम् । पञ्चाङ्गमस्य या शुद्धिः पञ्चशुद्धिरुदाहृता ॥ यस्मिन्पञ्चाङ्गदोषोऽस्ति तस्मिंल्लग्नं निरर्थकम्' इति । पञ्चाङ्गफलं तु श्रीधराचार्यप्रदर्शितपथानुसारेण लिख्यते ॥ ॥ तत्र विधिरुच्यते—विरिक्ते तिथाविति । चतुर्थी नवमी चतुर्दशी च रिक्ताः तद्व्यतिरिक्ते तिथौ परिणेतव्यमिति । तथाह मनुः—'तिथयः शोभनाः सर्वाः प्रोक्ता रिक्ताविवर्जिताः' इति । वासिष्ठे तु—'शुक्लद्वितीयादित एव कृष्णपक्षे दशम्यन्तगताः शुभाः स्युः । तास्वष्टमस्कन्दगणेशदुर्गाचतुर्दशी चापि तिथिर्विवर्ज्या' इति ॥ विवाहपटले—'षष्ठी तथैव नवमी च चतुर्दशी च द्वादश्यथाष्टमतिथिश्च तथा चतुर्थी । आद्यत्रिभागमवशिष्य तु कृष्णपक्षे शेषास्तथा परिहृतास्तिथयो भवन्ति' । अन्यच्च—'द्विसोभयोश्च नवमीं च चतुर्दशीं च कृष्णसितामपि च पञ्चदशीं चतुर्थीम् । अन्येषु वै तिथिषु लग्नबलं विलोक्य कन्याप्रदानमपि वृद्धिदमाहुरन्ये' । विधिरत्नेऽपि—'पञ्चदश्यष्टमीरिक्तावर्ज्याश्चान्याः शुभाश्च ताः । केचित्कृष्णाष्टमीं प्राहुर्विवाहेषु वयोत्यये' । नृसिंहः—'रिक्तापर्वाष्टमीवर्ज्या पौर्णमासी शुभावहा' इति ॥ अथ वर्ज्यास्तिथ्यंशाः । बृहस्पतिस्तु—'घटिकाद्य-

मृग्रान्ते मासान्ते च दिनत्रयम् । वर्षान्ते वर्जयेत्पक्षं ग्रहणादिनसप्तकम् ॥ ऋक्षान्ते पुत्रनाशः स्यान्मासान्ते तु धनक्षयः । वर्षान्ते वर्गनाशः स्याद्ग्रहणे सर्वनाशनम्' । इति तिथिनिर्णयः ॥❀॥ अथ नक्षत्रविधिः—'रोहिण्युत्तररेवतीपितृमरुन्मित्रेन्दुहस्तासुरेषु' इति । आसुर मूलम् । शेषाणि प्रसिद्धानि । इत्येकादशनक्षत्रेषु पाणिग्रहणं कर्तव्यम् । तथाच बृहस्पतिः—'सौम्यपैतृकहस्ताश्च मैत्रमूलान्यथापरः । त्रीण्युत्तराणि पौष्णं च रोहिणी शोभनप्रदा । अन्याश्च सर्वा वर्ज्याः स्युस्ताराः पाणिग्रहे सदा' इति । श्रीपतिश्चाह—'मूलमैत्रमृगरोहिणीकरैः पौष्णमारुतमघोत्तरान्वितैः । निर्व्यथाभिरुडुभिर्मृगीदृशां पाणिपीडनविधिर्विधीयते' । निर्व्यथाभिः ग्रहानुपहताभिः ॥ ❀ ॥ उपहतिलक्षणमुच्यते बृहस्पतिना—'मुक्तं युक्तं ग्रहैर्येन काङ्क्षितं च निभं भवेत् । दग्धज्वालाः सधूमाः स्युः क्रमाद्दोषेषु दुस्तराः ॥ पापग्रहणस्थनक्षत्रपृष्ठे पूर्वेन द्वयं परम् । एतास्तारा विवर्ज्याः स्युः शुभकर्मणि सर्वदा ॥ असंख्याता ग्रहा नित्यं दुर्ज्ञेया भानुना सराः । अतएवार्कसंयुक्तं क्षेत्रं सर्वभ्रमाददम् ॥ दग्धक्रमेण यत्क्षेत्रं त्रिशता दिवसैस्तु तत् । पूर्वभावमवाप्नोति यथा वृक्षास्तु नीरदैः ॥ वत्सरेण तदर्धेन तस्मादर्धेन यान्ति ये । मन्दजीवकुजैर्दग्धा राशयः पूर्वजं गुणम् ॥ बुधेनाक्रान्तमं सद्यः प्रकृतिं याति वृक्षवत् । उत्पातैः पीडितास्ताराः षण्मासैः प्रकृतिं ययुः ॥ राहुकेतुविमुक्तं यद्ग्रहचक्रनिपीडितम् । वत्सरार्धेन शुध्येत ग्रहयुद्धहतं च भम् ॥ अप्रकाशग्रहैर्युक्तं सद्यो दोषाद्व्यपोहति । मुक्तं शुभग्रहैर्यत्तच्छुभतां त्रिदिनैर्नयेत् ॥ यस्मिन्मेऽस्तमयं यान्ति ग्रहास्तद्धं त्रिमासतः । शुद्धत्वमुपयातीति वज्रिन् पद्मासनोदितम् ॥ ग्रहनक्षत्रयोगेन यदुक्तो दोषसंचयः । तद्दिनं सर्वकार्येषु शुभेषु परिवर्जयेत् ॥ यदुक्तमिदमृक्षेषु तारासु च खगैर्युताः । चापल्यमपरादिस्ते दोषाः शोभन-

तामियुः' ॥ तदपवाद उक्तो वासिष्ठेन—'गन्तव्यधिष्ण्यं खलु मुक्तभं यत्खरैर्महोत्पातविदूषितं यत् । चन्द्रोपभोगादमलं तदानीं शुभेषु कार्येषु शुभप्रदं च' ॥ अन्यच्च—'चन्द्रशुक्रसमायोगादुड्डनि शुभतामियुः । विशेषाच्छुक्रसंयोगाद्ग्रहयुक्तबृहस्पतेः ॥ ग्रहयुक्ते तु नक्षत्रे तदैव यदि चन्द्रमाः । तयोर्मध्ये व्रजेत्पीडां दोषान्सर्वान्व्यपोहति' ॥ ॥ अथ जन्मनक्षत्रविचारः । अस्मिन्नानुकूल्यनक्षत्रविधिरुच्यते अर्णवे—'कन्यकाजन्मनक्षत्रे विवाहः शोभनो भवेत् । कर्माधानर्क्षयोश्चैव पुंसो वर्ज्यस्त्रिजन्मसु' इति । वृद्धगर्गः—'स्त्रीणां जन्मत्रयं श्रेष्ठं विवाहे च प्रशस्यते । पतिप्रिया च कल्याणी दीर्घायुश्च सुमङ्गला' । शातातपस्तु—'कर्माधानर्क्षयोः पुंसां विवाहे जन्मभं विना । कन्याया जन्मभं श्रेष्ठं विना चाधानकर्मभे' । अन्यच्च—'आधानकर्मर्क्षमतीव शस्तं वैवाहिके जन्मदिनं न पुंसाम्। तद्व्यत्यये श्रेष्ठमथाबलाया आधानभं श्रेष्ठमतीव शस्तम्' । लल्लस्तु—'आधानर्क्षं शुभं प्रोक्तं दंपत्योः परिणायने । कदाचित्कर्मभं पुंसां न कदाचित्तु जन्मभम् ॥ द्विदैवं[1] च जन्मऋक्षं द्वे तारे जन्मसंज्ञिते शुभदे । जन्मर्क्षोढा कन्या नहि खलु भर्तुः शुभा भवति ॥ प्रीतिं च जन्मतारा दंपत्योर्जनयति तरां तारा । फलमथ संज्ञासदृशं जनयति च शशाङ्कयुक्ता सा' । नृसिंहस्तु—'कर्माधानर्क्षयोः पुंसां योषितां जन्मभे तथा । विवाहः शुभदः प्रोक्तो बहूनां संमतं त्विदम्' । अत्र सर्वत्र वृद्धाचारतो व्यवस्थाश्रयणीया । इति नक्षत्रनिर्णयः ॥ ❀ ॥ अथ वारयोगकरणांशादयः—'आरार्कार्किजवासरादिरहितेष्वद्धादृक्कर्मारभेत्' इति । एतेषां वारांशांशोदयाश्च वर्जनीया इति । तदाह नृसिंहः—'बुधशुक्रेन्दुजेन्दूनां वारेषु शुभदं भवेत् ।

---

पाठा०—1 द्विदैवजन्मऋक्ष ।

शुभानामंशकं श्रेष्ठं वर्गादि च विनाह्के'। अत्राह लल्लः—'क्रूरग्रहदिनवारा न शोभनाः सौरिमपहाय। व्यतिपातविष्टिवैधृतिवर्ग्याः शुभदाः करणयोगाः' इति। बृहस्पतिः—'शकुन्यादिचतुर्ष्वेषु करणेष्वपि विष्टिषु। कुलिकेषु शुभं वर्ज्यमशुभान्येन कारयेत् ॥ गुणायुतैर्युतेऽन्यस्मिन्शकुन्यादिचतुष्टये। काले नेष्टं शुभं सर्वं कृतं सम्यग्विनश्यति' इति।

योगविशेषेण रविभौममन्दवाराणां विशेष उच्यते—'रविवारे शुभं सर्वं कर्तव्यं योगतः शुभे। योगाच्छुभे कुजे मन्दे कृष्युद्वाहादि कारयेत्' इति ॥ अथ तेषां योगा उच्यन्ते—'पौष्णोत्तराणि हस्तश्च मूलश्रवणसप्त भाः। सूर्यवारयुता योगा दोषहालाहलोद्धराः ॥ मित्राधिन्यर्यमा पूषा चाहिर्बुध्न्यश्च रोहिणी। भौमवासरेण संयुक्ता योगाः स्युर्दोषघस्मराः'। अहिर्बुध्न्य उत्तराभाद्रपदा। दोषघस्मराः दोषभक्षकाः। 'कृत्तिका रोहिणी स्वाती शततारार्किवारगाः। शुभयोगा महादोषकैरवादित्यवर्चसः' इति योगप्रकरणम् ॥

अथ प्रसङ्गायोगात्सर्ववारेषु शुभयोगानाह स एव—'बार्हस्पत्यं च सावित्रं नैर्ऋतं सूर्यवारगम्। सर्वेषु शुभकार्येषु शुभाः स्युः शुभदाः स्मृताः ॥ चित्राश्रवणसौम्याः स्युर्यदि शीतांशुवारगाः। इमे चापि सुधायोगाः सर्वशोभनशोभनाः ॥ भाद्रपादाश्विनी चैव रोहिणी चोत्तरात्रयः। कुजवारेण संयुक्ताः सुधायोगा दिवौकसाम् ॥ विशाखाग्निमैत्रनक्षत्रं बुधवारेण संयुतम्। पञ्चमीसप्तमीयुक्तं सुधायोगः प्रकीर्तितः ॥ पूर्वाषाढापुनर्वस्वो रेवतीसंयुतो यदि। गुरुवारः सुधायोगस्त्रयोदश्या समायुतः ॥ स्वातीशतभिषग्भाग्यसहितो यदि नन्दया। शुक्रवारः सुधायोगः सर्वकर्मणि दोषहा ॥ रोहिणीवसुवायव्याः शनिवारेण संयुताः।

भद्रया महिता योगाः शुभाख्याः शुभवृद्धिदाः ॥ एषु सर्वेषु योगेषु विवाहः शोभनप्रदः । दीर्घमाङ्गल्यसंपत्तिर्मोदते पुत्रवृद्धिभिः' । इति शुभयोगः ॥ ❀ ॥ अथैकेन श्लोकेन लग्नविधिमाह—'श्रेष्ठास्तौलियमाङ्गनाघटधनुर्गोकर्किकण्ठीरवा मध्याः सौम्ययुतास्तयोर्ध्ववदनाः सर्वे विवाहे हिताः । सौम्याः केन्द्रधनायपुत्रसहिताः पापास्त्रिषष्ठायगाः पूज्याः शुक्रगुरू स्मृतावशुभदौ शुद्धो भवेत्सप्तमः' इति । अस्यार्थः—तौलिस्तुला । यमो मिथुनम् । अङ्गना कन्या । एते शस्ताः । घटः कुम्भः । धनुः प्रसिद्धः । गौर्वृषः । कर्की प्रसिद्धः । कण्ठीरवः सिंहः । एते पञ्च मध्यमा इति ॥ वराहमिहिरेणापि—'क्रिये कुमारी परिरक्तचित्ता विहीनपुत्रा गवि गोपनी च । कुलद्वयानन्दकरी तृतीये कुलीरलग्ने कुलटा नृशंसा ॥ हरौ प्रसूता सकृदाश्रये पितुः पतिप्रिया च श्वशुरस्य पङ्के । तुलादिमेधार्थवती तुलाधरे तथाऽलिमे कर्दमबुद्धिरस्थिरा ॥ धनुषि कुलटा तत्पूर्वार्धे सतीत्यपरे जगुर्मृगघटलग्नेऽप्यन्यासक्ता जरामुपगच्छति' इति ॥ ॥ अथ लग्नप्रमाणम्—'मीने मेषे चतुर्नाड्यश्चतुः सार्धं वृषे घटे । पञ्चपादो मृगे युग्मे पञ्चार्धं धन्विकर्कटे ॥ पञ्चार्धं वृश्चिके सिंहे पञ्चपादस्तुलाङ्गना' इति । एतत्तु साधारणम् ॥ पम्पाक्षेत्रप्रदेशे तु मेषादीनां विघटिकारूपेण विशेष उक्तः—'मीने मेषे तु गावीरा वृषे कुम्भे तु खे नरा । मृगे युग्मे च गवडी कर्के चापे च भूनलः ॥ चौराङ्गा वृश्चिके सिंहे तुला कन्या च रूकला' (?) इति ॥ एवं राशिजं फलमुक्त्वा ग्रहजं फलमाह—'सौम्ययुतास्तयोर्ध्ववदनाः सर्वे विवाहे हिताः' इति । सर्वे राशयः शुभयुक्ता ऊर्ध्वमुखा यदि शुभदाः ॥ ऊर्ध्वाननलक्षणम्—'सूर्याधिष्ठितराश्युपक्रमतयाऽधस्तिर्यगूर्ध्वाननाः' इति । विश्वामित्रीये तु—'राशीनामपि सर्वेषां द्विपदा

अथ पुष्कलभाग उच्यते—'त्रिंशद्भागेषु दंपत्योरुद्वाहे शुभवर्धनात् । लग्नानां पुष्कलाख्यांशान्वक्ष्ये शास्त्रानुसारतः ॥ एकविंशांशको मेषे वृषभे च चतुर्दश । यमे सप्तदशांशः स्यात्सप्तमः कर्कटे मतः ॥ एकोनविंशः सिंहे च कन्यायामष्टमांशकः । चतुर्विंशस्तुलायां तु कौर्पे चैव चतुर्दशः । त्रयोविंशो धनुष्ये च मकरे तु चतुर्दशः । एकोनविंशकः कुंभे मीनेंऽशः सप्तमो भवेत् ॥ एतेंऽशाः शोभना ज्ञेयाः शुभकार्येषु सर्वदा । हितैषिभिर्ज्यौतिषिकैः सर्वशास्त्रार्थवेदिभिः' इति ॥ ॥ अथाभिजिद्भागानाह नारदः—'एकविंशतिमो भागो मेषस्याभिजिदुच्यते। वृषे चतुर्दशो भागो यमे सप्तदशांशकः ॥ भागोऽष्टमः कुलीरे स्यादृरेरष्टाद-शांशकः । कन्यायां वसुभागस्तु चतुर्विंशस्तु तौलिभे ॥ द्वादशो वृश्चिके भागश्चापे सप्तदशांशकः । अभिजिन्नाम भागः स्यादा-कोकेरे चतुर्दशः ॥ कुम्भे षड्विंशकांशः स्यान्मीने वसवंशको भवेत् । सर्वे दोषा विनश्यन्ति नात्र कार्या विचारणा' इति ॥ ॥ अथ भृगुषट्कदोषो नारदीये—'भृगुषट्काह्वयो दोषो लग्नात्षष्ठगते सिते। उच्चगे शुभसंयुक्ते तल्लग्नं सर्वथा त्यजेत्' इति ॥ ॥ अथ-कुजाष्टमदोषस्तत्रैव—'कुजाष्टमो महादोषो लग्नादष्टमगे कुजे । शुभत्रययुतं लग्नं त्यजेत्तत्तुङ्गके यदि' । शुभत्रययुतमिति शुभग्रहै-र्युक्तम् ॥ ॥ अथ गण्डान्तदोषस्तत्रैव—'पूर्णानन्दाख्ययोस्तिथ्योः संधिर्नाडीद्वयं सदा । गण्डान्तं मृत्युदं जन्मयात्रोद्वाह-व्रतादिषु' ॥ ॥ अथ नक्षत्रगण्डान्त उच्यते—'सार्पेन्द्रपौष्णनामान्त्यषोडशांशकसंधयः । तदग्रेष्वाद्यपादेषु पादगण्डान्त-संज्ञितम् ॥ उग्रं भसंधित्रितयं गण्डान्तं त्रितयं भवेत् । मृत्युप्रदं जन्मयानविवाहस्थापनादिषु' ॥ ॥ अथ लग्नगण्डान्तः—'कुलीरसिंहयोः कीटचापयोर्मीनमेषयोः । गण्डान्तमन्तरालं स्याद्घटिकार्धं मृतिप्रदम्' ॥ ॥ अथ कर्तरीदोषः ॥ नारदीये—

'लग्नाभिमुखयोः पापग्रहयोरुभयस्थयोः। सा कर्तरीति विज्ञेया दंपत्योर्गलकर्तरी' ॥ कर्तरीदोषदुष्टं यल्लग्नं तत्परिवर्जयेत्। अपि सौम्यग्रहैर्युक्तं गुणैः सर्वैः समन्वितम्'। ब्राह्मे—'लग्नस्थं पृष्ठाग्रहयोरसाध्वोः सा कर्तरी स्यादृजुवक्रगत्योः। तावेव शीघ्रौ यदि वक्रचारौ न कर्तरी चेति पितामहोक्तिः॥ यः कर्तरीनाम महान्स दोषो लग्नोद्भवानंशगुणान्समस्तान्। गुणान्निहन्ति प्रबलानशेषान्व्याघ्रो यथा गोसमितिं समस्ताम्' इति। बृहस्पतिस्तु—'क्रूरग्रहमध्यगते लग्ने चन्द्रेऽथवा करग्रहणे। ते यमसदनाभिमुखं गमनं वाञ्छन्ति कन्यायाः'। अस्यापवाद उच्यते—'पापयोः कर्तरीकर्त्रोर्नीचशत्रुगृहस्थयोः। यदा चास्तमयो वापि कर्तरी नैव दोषदा' इति॥ ॥ अथ रिःफषडष्टेन्दुदोषः। नारदीये—'षडष्टरिःफगे चन्द्रे लग्नाद्दोषः ससंज्ञितः। तल्लग्नं वर्जयेद्यत्नाज्जीवशुक्रसमन्वितम्॥ उच्चगे नीचगे वापि मित्रभे शत्रुराशिगे। अपि सर्वगुणोपेतं दंपत्योर्निधनप्रदम्'॥ ॥ अस्यापवादो वासिष्ठे—'जन्मेशमृत्युराशीशौ मिथो मित्रे यदा तदा। जन्माष्टमस्थचन्द्रोत्थो दोषो भङ्गत्वमाप्नुयात्'॥ ॥ अथ सग्रहदोषः। नारदीये—'शशाङ्के ग्रहसंयुक्ते दोषः सग्रहसंज्ञितः। तस्मिन्सग्रहदोषे तु विवाहं नैव कारयेत्॥ सूर्येण संयुते चन्द्रे दारिद्र्यं भवति ध्रुवम्। कुजेन मरणं व्याधिः सौम्येन त्वनपत्यता॥ दौर्भाग्यं गुरुणा युक्ते सापत्न्यं भार्गवेण तु। प्रव्रज्या सूर्यपुत्रेण राहुणा कलहः सदा॥ केतुना संयुते चन्द्रे नित्यं कष्टं दरिद्रता'। वासिष्ठे—'दारिद्र्यं रविणा कुजेन मरणं सौम्येन न स्युः प्रजा दौर्भाग्यं गुरुणा सितेन सहिते चन्द्रेथ सापत्न्यकम्। प्रव्रज्याऽर्कसुतेन सेन्दुजगुरौ वाञ्छन्ति केचिच्छुभं द्यार्येर्मृत्युरसद्ग्रहैः शशिसुतैर्दीर्घप्रवासः शुभैः'। नारदस्तु—'शुभग्रहयुते चन्द्रे स्वोच्चस्थे मित्रराशिगे। दोषाय न भवेल्लग्नं दंपत्योः श्रेयसे सदा॥ स्वक्षेत्रगः स्वोच्चगो वा मित्र-

राशयः शुभाः । तेषामपि तुलाराशिर्मिथुनं च प्रशस्यते' इति ॥ सा तु गुणयुक्ता चेद्ग्राह्येत्याह स एव—'युक्ता च ग्रहसंपत्त्या हीना नैषा प्रशस्यते । स्वगृहस्वगृहोच्चस्थैः सूरिसोमजभार्गवैः ॥ संयुक्ता वीक्षिता वापि नान्ययुक्ता न वीक्षिता । होरा बलवती आद्या तत्राप्यूर्ध्वमुखाः शुभाः' इति । विवाहपटलेऽप्युक्तम्—'कन्यातुलायमघटेषु विवाहकर्म श्रेष्ठं तदन्यभवनेष्वशुभावहं स्यात् । केचित्प्रशस्तमपि तेषु वदन्ति तज्ज्ञा बाहुल्यभाग्यवति तत्परभेषु योगात्' इति ॥ नारदस्तु अभिजिल्लग्ने विवाहः श्रेयानित्याह—'चतुर्थमभिजिल्लग्नमुदयर्क्षात्तु सप्तमम् । गोधूलिकं तदुभयं विवाहे पुत्रपौत्रदम् ॥ प्राच्यानां च कलिङ्गानां मुख्यं गोधूलिकं स्मृतम् । अभिजित्सर्वदेशेषु मुख्यं दोषविनाशकृत् ॥ मध्यंदिनगते भानौ मुहूर्तोऽभिजिदाह्वयः । नाशयत्यखिलं दोषं पिनाकी त्रिपुरं यथा' इति । अन्यच्च—'मध्यंदिनगते भानौ सकलं दोषसंचयम् । दहत्येवाभिजिल्लग्नं तूलराशिमिवानलः' इति । इति पञ्चाङ्गशुद्धिः ॥ ॥

अथोदयास्तशुद्धिरुच्यते श्रीधरीये नारदेन—'लग्नलग्नांशकौ स्वस्वपतिना वीक्षितौ युतौ । नो चेदन्योन्यपतिना शुभमित्रेण वा तथा ॥ वरस्य मृत्युः स्याच्चाभार्या सप्तमस्तोदयांशकौ । एवं तौ वीक्षितयुतौ मृत्युर्वध्वाः करग्रहे' । श्रीपतिस्तु—'उदयगतनवांशः स्वेशदृष्टो युतो वा न भवति यदि मृत्युः स्यात्तदानीं वरस्य । परिणयसमये चेदेवमस्तोदयांशः स्वपतिसहितदृष्टो मृत्युकारी च वध्वाः' । वासिष्ठेपि—'दृष्टोदयांशे निजपत्यदृष्टे वरस्य मृत्युस्तदसंयुते वा । अस्तांशकेऽप्येवमदृष्टयुक्ते स्वस्वामिना नाशमुपैति कन्या' ॥ बृहस्पतिस्तु—'उदयांशः स्वनाथेन मित्रसौम्येन वा पुनः । प्रेक्षितो वा तथास्तांशो दंपत्योः पुत्रपौत्रदः'

इत्युदयास्तशुद्धिः ॥ ॥ अथ संक्रान्तिदोषः । नारदीये—'त्याज्याः सूर्यस्य संक्रान्तेः पूर्वतः परतः सदा । विवाहादिषु कार्येषु नाड्यः षोडश षोडश' ॥ वासिष्ठे—'विषुवदयनयोर्दिवसत्रयं हरिपदे षडशीतिमुखेपि च । पूर्वतोपि परतोपि संक्रमात्पुण्यकालघटिकास्तु षोडश' । विषुवदिति मेषतुले । अयनमिति मकरकर्कटौ । हरिपद इति वृषसिंहवृश्चिककुम्भाः । षडशीतिमुख इति मिथुनकन्याधनुर्मीनाः । अस्य फलम्—'संक्रान्तिदोषेऽप्यचिरात्कृतो य उद्वाहपूर्वोऽखिलमङ्गलौघः । लाक्षासमूहो ज्वलदग्निमध्ये विलीयते यद्वदशेषकूटः' इति ॥ ॥ अथ षड्वर्गशुद्धिः नारदीये—'त्रिंशद्भागात्मकं लग्नं होरा तस्यार्धमुच्यते । लग्नत्रिभागो द्रेक्काणो नवांशोऽपि नवांशकः ॥ द्वादशांशो द्वादशांशस्त्रिंशांशस्त्रिंशदंशकः । सिंहेशोऽर्कः कुलीरेशः शशी भौमोऽजकीटयोः ॥ ज्ञो नृयुक्कन्ययोर्जीवो मीनधन्वोर्घटोक्षयोः । उशना कुंभझषयोः शनिर्मेशा नवांशपाः' । झषो मकरः ॥ ॥ तत्र नवांशगणनाक्रमः—'अजमृगतौलिचन्द्रभवनादिनवांशविधि'रिति ॥ 'मेषसिंहधनुष्वेष्वजादयस्तौलिकुम्भमिथुने तुलादयः । कन्यकावृषमृगे मृगादयो मीनकर्क्यलिषु कर्कटादयः ॥ अंशका नवनव व्यवस्थिता द्वादश प्रतिगृहं गृहादयः' इति ॥ ॥ अथ होरेशाः—'होरेऽर्केन्द्वोरोजराशौ समभे चन्द्रसूर्ययोः' इति ॥ ॥ अथ द्रेक्काणाधिपतयः—'स्युर्द्रेक्काणा लग्नपञ्चनवराशीश्वराः क्रमात्' ॥ ॥ अथ द्वादशांशेश्वराः—'आरभ्य लग्नराशेस्तु द्वादशांशेश्वराः क्रमात्' ॥ ॥ अथ त्रिंशांशकाधिपतयः—'कुजार्कीज्यज्ञशुक्राणां बाणेष्वष्टाद्रिमार्गणाः । भागाः स्युर्विषमे ते तु समराशौ विपर्ययात् । षड्वर्गः शुभदः श्रेष्ठो विवाहस्थापनादिषु' । इति षड्वर्गशुद्धिः ॥ ॥

पाठा०—१ मृगयो ।

क्षेत्रगतोऽपि वा । पापग्रहयुतश्चन्द्रः करोति मरणं तयोः' ॥ ॥ अथाष्टमलग्नदोषः । नारदीये—'दंपत्योरष्टमं लग्नमष्टमो राशिरेव वा । यदि लग्नगतः सोपि दंपत्योर्मरणप्रदः ॥ स्वराशिग्रहयुक्तं तु लग्नं वा शुभसंयुतम् । लग्नं विवर्जयेद्यत्नादंशान्तं तत्तदीश्वरात् ॥ दंपत्योर्द्वादशं लग्नं राशिर्वा यदि लग्नगः । अर्थहानिस्तयोर्यस्मात्तदंशस्वामिनं त्यजेत् ॥ जन्मराश्युद्गमं नैव जन्मलग्नोदयं शुभम् । तयोरुपचयस्थानं यदि लग्नगतं शुभम्' । 'वासिष्ठे—'यस्याष्टलग्ने तदधीश्वरे वा राशौ तदीशे च विलग्नगे वा । स मृत्युमाप्नोति यथा मनोजस्त्रिनेत्रभालाम्बकवह्निनेव' इति ॥ ॥ अन्यच्च—'जन्मोदयर्क्षान्निधने विलग्ने तदीश्वरेणोपगतेऽथवा स्यात् । कृतो विवाहो भयमृत्युकारी त्रातुं विधातापि न तं समर्थः' ॥ अस्यापवादो बार्हस्पत्य उक्तः—'जन्मेशाष्टमलग्नेशौ मिथो मित्रे व्यवस्थितौ । जन्मराश्यष्टमर्क्षोत्थदोषो नश्यति भावतः' । कालदीपे—'कर्तुः षष्ठं त्यजेल्लग्नं क्षौरोद्वाहगतीर्विना । मूर्तिं व्ययं च सर्वत्र एकमित्राधिपाद्दते' ॥ ॥ अथ विषघटिकादोष उच्यते नारदीये—'खमार्गणा वेदपक्षाः खरामा व्योमसागराः । वार्धिचन्द्रा रूपदस्राः खरामा व्योमराहवः ॥ द्विरामाः खाग्नयः शून्यदस्राः कुञ्जरभूमयः । रूपपक्षा व्योमदस्रा वेदचन्द्राश्चतुर्दश ॥ शून्यचन्द्रा वेदचन्द्राः षट्पक्षांशत्रयीकराः । शून्यदस्राः शून्यचन्द्राः शून्यचन्द्रा गजेन्दवः ॥ तर्कचन्द्रा वेदपक्षाः खरामाश्चाश्विभात्क्रमात् । एभ्यः पराश्चतस्रः स्युर्नाडिका विषसंज्ञिताः ॥ विवाहादिषु कार्येषु विषनाडीर्विवर्जयेत्' इति । अस्यार्थः—खमार्गणा इति । खमार्गणाः पञ्चाशत् । वेदपक्षाश्चतुर्विंशतिः । खरामास्त्रिंशत् । व्योमसागराश्चत्वारिंशत् ।

पाठ०—१ राशीशौ । २ षट्पञ्चवेदवाहव-१.

वार्धिचन्द्राश्चतुर्दश । रूपदस्रा एकविंशतिः । खरामास्त्रिंशत् । व्योमबाहवो विंशतिः । द्विरामा द्वात्रिंशत् । खाग्नयस्त्रिंशत् । शून्यदस्रा विंशतिः । कुञ्जरभूमयः अष्टादश । रूपपक्षा एकविंशतिः । व्योमदस्रा विंशतिः । वेदचन्द्राश्चतुर्दश । शून्यचन्द्रा दश । वेदचन्द्राश्चतुर्दश । पद्पञ्चाशत् षडब्धि रूपञ्चाशत् । त्र्यीकराश्चतुर्विंशतिः । शून्यदस्रा विंशतिः । शून्यचन्द्रा दश । गजेन्दवः अष्टादश । तर्कचन्द्राः षोडश । वेदपक्षाश्चतुर्विंशतिः । खरामास्त्रिंशत् । एभ्यः पराः स्युश्चतस्रो नाडिकाः विषसंज्ञिताः । केचिन्मूलनक्षत्रस्य विंशतिघटिकाभ्य ऊर्ध्वमपि चतस्रो घटिका वर्जनीया इत्याहुः ॥ ॥ अथ दुर्मुहूर्तदोषः । नारदीये— 'भास्करादिषु वारेषु ये मुहूर्ताश्च निन्दिताः । विवाहादिषु ते वर्ज्या अपि लक्षगुणैर्युताः' ॥ ॥ मुहूर्तनामानि श्रीपतिना दर्शितानि—'रुद्राहिमित्रपितरो वसुवारिविश्वे वेधा विधिः शतमखः पुरुहूतवह्नी । नक्तंचरेशवरुणार्यमयोनयश्च प्रोक्ता दिने दश च पञ्च तथा मुहूर्ताः ॥ निशामुहूर्ता गिरिशाजपादाहिर्बुध्न्यपूषाश्वियमाग्नयश्च । विधातृचन्द्रादितिजीवविष्णुतिग्मद्युतित्वाष्ट्रसमीरणाश्च' इति ॥ एतेषु त्रिंशन्मुहूर्तेषु वारविशेषेण वर्जनीयानाह स एव—'अर्यम्णोऽर्के तुहिनकिरणे राक्षसब्रह्मसंज्ञौ पित्राग्नेयौ क्षितिसुतदिने चन्द्रपुनेऽभिजिच्च । पित्र्यब्राह्मौ भृगुसुतदिने राक्षसाप्यौ च जीवे भौजंगाद्यौ सवितृतनये वर्जनीया मुहूर्ताः' ॥ ॥ अथ वारदोष उच्यते नारदीये—'निन्दिता वारदोषा ये सूर्यवारादिषु क्रमात् । अपि सर्वगुणोपेतास्ते वर्ज्याः शुभमङ्गले' ॥ ॥ वारदोपलक्षणं संग्रहे—'अहःप्रमाणं वसुधा विभज्य तद्वारपस्य प्रथमान्त्यभागौ । शेषाः षडंशाः क्रमशोऽपि

पाठा०—1 ग्लक्षणैर्युता ।

नेगाः शनेस्तु भागं कुलिकं वदन्ति ॥ शन्यंशः कुलिको ज्ञेयो गुर्वंशो यमघण्टकः । अर्धप्रहारः सौम्यांशो ह्यर्कांशः कालसंज्ञकः' । अस्यार्थः—वारस्याहःप्रमाणमष्टधा विभजेत् । तत्र प्रथमान्त्यभागौ वाराधिपस्यांशौ । शेषाः क्रमेण तत्तद्ग्रहांशा भवन्ति । यः शन्यंशः स कुलिको भवति । यो बृहस्पत्यंशः स यमघण्टको भवति । यः सौम्यांशः सोऽर्धप्रहरसंज्ञकः । यस्त्वादित्यांशः स कालसंज्ञको भवति ॥ ॥ एषां फलमुक्तं बार्हस्पत्ये—'निधनं प्रहरार्धे तु निःसत्त्वं यमघण्टके । कुलिके सर्वदोषः स्याद्रात्रावेते न दोषदाः' । वसिष्ठः—'निशासु वारप्रभवा हि दोषास्त्याज्याः सदा कौङ्कणसंज्ञदेशे' इति । दिवापि त्याज्यकालप्रमाणमाह संग्रहकारः—'अर्धप्रहरकादौ तु मध्यमे यमघण्टके। कुलिकेऽन्त्ये विवर्ज्याः स्युस्तिस्रो द्वे एकनाडिकाः' इति ॥ ॥ अथैकार्गलदोषः—एकार्गलसमाङ्घ्रिभमिति । अस्यार्थः—एकार्गलो नाम सूर्याचन्द्रमसोर्दृष्टिपातः । तत्समाङ्घ्रियुक्तं नक्षत्रं वर्जयेदिति शेषः । अथवा तत्समाङ्घ्रिं वर्जयेत् । तथाच नारदीये—'एकार्गलसमाङ्घ्रिश्च तत्र लग्नं विवर्जयेत् । अपि शुक्रेज्यसंयुक्तं विषसंयुक्तदुग्धवत्' । श्रीपतिश्च—'चक्रे तस्मिन्नेकरेखास्थितेन ज्ञेयं विद्धं नूनमृक्षं ग्रहेण । कैश्चित्तत्राप्युच्यते पादवेधो भानां चिन्त्यं चात्र लत्ताहतं च' इति ॥ एतत्स्वरूपस्य खार्जूरिकचक्रेण दर्शनीयत्वात्तल्लक्षणं तावदुच्यते—'एकामूर्ध्वंगतां त्रयोदश तथा तिर्यग्गताः स्थापयेद्रेखाश्चक्रमिदं बुधैरभिहितं खार्जूरिकं तत्र तु । व्याघातादिषु मूर्ध्नि भं तु कथितं तत्रैकरेखास्थयोः सूर्याचन्द्रमसोर्मिथो निगदितो दृक्पात एकार्गलः' इति ॥ व्याघातादिषु मूर्ध्निभमिति यदुक्तं तस्य विवरणमुच्यते—'व्याघातशूलपरिघव्यतिपातपूर्वगण्डातिगण्डकुलिशेषु सवैधृतेषु । आदित्यचन्द्रपितृसार्पभदस्रमूलमैत्राख्यपुष्यसुरवर्धकिभानि मूर्ध्नि' इति ।

अस्यार्थः—पूर्वो विष्कम्भः । कुलिशं वज्रः । सुरवर्धकिभं चित्रा । शेषाः प्रसिद्धाः । एतेषु पूर्वार्धोक्तेषु व्याघातादिषु नवसु योगेष्वन्यतमेन योगेन यथाक्रममपरार्धोक्तेषु पुनर्वस्वादिषु नवसु नक्षत्रेष्वन्यतमं नक्षत्रं योजयित्वा तन्नक्षत्रं मूर्ध्नि लेखनीयम् । तदारभ्य प्रादक्षिण्येन सर्वाणि नक्षत्राणि सर्वेषु रेखाग्रेषु लेखनीयानि । तत्र सूर्याचन्द्रमसौ एकरेखास्थौ यदा भवेतां तदा मिथस्तद्दृष्टिपातजनित एकार्गलदोषो भवेदिति ॥ ॥ अथ ग्रहणोत्पातदोषः । नारदीये—'ग्रहणोत्पातभं त्याज्यं मङ्गलेषु ऋतुत्रयम् । यावच्च राहुणा भुक्त्वा मुक्तं तद्दग्धकाष्ठवत्' ॥ ॥ ग्रहणात्पुरतः पश्चाच्च वर्ज्यदिवससंख्यामाह स एव—'उत्पातग्रहणादूर्ध्वं सप्ताहमखिलग्रहे । नाखिले त्रिदिनं नेष्टं नेष्टं तद्भमृतुत्रयम् ॥ ग्रस्तेऽस्ते त्रिदिनं पूर्वं पश्चाद्ग्रस्तोदये तथा । संध्यायां तु त्रित्रिदिनं निःशेषे सप्तसप्त च' । बृहस्पतिस्तु—'पश्चादेवोपरागे तु दोषः साप्तैव पूर्वतः । गृहदाहादयो दोषा यथा स्युर्दहनात्परम्' ॥ ॥ महोत्पातानाह स एव—'उल्कापाते महापाते महाशनिनिपातने । नभोशनिनिपाते च भूकम्पपरिवेषयोः ॥ ग्रामोत्पाते शिवाशब्दे दुर्निमित्ते न शोभनम् ॥ केतवो यत्र दृश्यन्ते सधूमाये पृथग्द्वयोः । ग्रहाणां ग्रहणे चैव वर्जयेद्दिनसप्तकम् ॥ युद्धे ग्रहाणामन्योन्यं निर्घाते वा कुकम्पने । महोत्पातयुतात्कालात्सप्तरात्रं शुभे त्यजेत्' इति ग्रहणोत्पातलक्षणम् ॥ ॥ अथ क्रूरविद्धनक्षत्रदोषः । नारदीये—'मङ्गलेषु त्यजेत्क्रूरविद्धभं क्रूरसंयुतम् । अपि लक्षं पञ्चगव्यं सुराबिन्दुयुतं यथा ॥ पादमेव शुभैर्विद्धमशुभैरेव कृत्स्नभम् । क्रूरविद्धयुतं धिष्ण्यं निखिलं नैव पादतः ॥ आद्येन्त्यं पदं नाप्यमन्त्येनाद्यं तु बाधते । द्वितीयेन तृतीयं स्यात्तृतीयेन द्वितीयकम्' ॥ क्रूरविद्धनक्षत्रस्वरूपस्य पञ्चशलाकाचक्रेण प्रदर्शनीयत्वात्तच्चक्रोद्धारक्रम उच्यते । तत्र श्रीपतिः—'ऊर्ध्वा

रेखाः पञ्च तिर्यक् स्थिताश्च द्वे द्वे रेखे कोणयोरत्र चक्रे । जयेद्धिष्ण्यं शंभुकोणे द्वितीये नाड्यां न्यसेद्दान्यतः साभिजिन्ति' । नाडी रेखा । अभिजित्स्थानमुच्यते—'अन्त्ये पादे वैश्वदेवाद्वयस्य विष्णोर्धिष्ण्यस्याद्यपादे चतस्रः । नाड्यो भुक्तिः साभिजित्संज्ञिता सा' तत्स्थे खेटे रोहिणीनां च वेधः' । अत्र श्रूयते—'अभिजिन्नाम नक्षत्रं उपरिष्टादषाढानां अधस्ताच्छ्रोणायै । देवासुराः संयत्ता आसन् । ते देवास्तस्मिन्नक्षत्रेऽभ्यजयन् । यदभ्यजयन् तदभिजितोऽभिजित्त्वमि'ति । तस्य फलम्—'वैधव्यं दिननायकस्य जगतीसूनोरपत्यक्षयः सौम्यस्यार्थपरिच्युतिः सुरगुरोर्हानिस्तथा दुःखकम् । प्रव्रज्यं भृगुजन्मनः पतिपरित्यागश्च सौरेः पुनर्नारीणां गणिकात्वमेव तमसः केतोश्च वेधा विधेः' ॥ ॥ अथ लत्तादोषः । अत्र लत्तादोषस्यापि परिहार्यत्वात्तत्प्रसङ्गात्तल्लक्षणमुच्यते । तत्र श्रीपतिः—'ऋक्षं द्वादशमुष्णरश्मिरवनीसूनुस्तृतीयं गुरुः षष्ठं चाष्टमकर्मजश्च पुरतो हन्ति स्फुटं लत्तया । पश्चात्सप्तममिन्दुजश्च नवमं राहुः सितः पञ्चमं द्वाविंशं परिपूर्णमूर्तिरुडुपः संताडयेन्नेतरत्' इति ॥ ॥ अथ कुनवांशदोषः—'तुलामिथुनकन्यांशा धनुराद्यर्धसंयुताः । एते नवांशाः शुभदा यदि नान्त्यांशकाः खलु ॥ अप्यन्त्यांशाः शुभतरा यदि वर्गोत्तमाह्वयाः । अन्ये नवांशा न ग्राह्या यतस्ते कुनवांशकाः ॥ कुनवांशः कुलग्नं यत्त्याज्यं सर्वगुणान्वितम्' ॥ ॥ अथ वर्गोत्तमांशाः । वराहमिहिरः—'वर्गोत्तमाश्चरगृहादिषु पूर्वमध्यात्पर्यन्तगाः शुभफला नवभागसंज्ञाः' इति । वसिष्ठोपि—'लग्नाय सर्वे खलु राशयश्च शुभेक्षिता वाथ युताः शुभाः स्युः । नवांशकास्तौलिनृयुग्युवत्याश्चापाद्यभागश्च शुभो न चान्ये' ॥ एतेषां फलमाह स एव—'द्विमर्त्यका मेषनवांशके स्याद्वृषांशके स्यात्पतिशीलयुक्ता । धनान्विता पुत्रवती

तृतीये कुलीरकांशे कुलटाप्यजस्रम् ॥ सिंहांशके सा पितृमन्दिरस्था कन्यांशके विचयुता सुशीला । तुलांशके सर्वगुणा सदा स्यात्कीटांशके निःस्वतरा विशीला ॥ चापांशकाद्ये शुभदा द्वितीये भागेऽन्यसक्ता मलिना गदाढ्या । निःस्वा मृगांशे विगुणा घटांशे विभर्तृका योगरता विशीर्णा । मीनांशके भर्तृसुतार्थहीना शुभग्रहैर्युक्तनिरोक्षितेपि' इति ॥ ॥ अथ महापातवैधृति-दोपः । नारदीये—'यस्मिन्दिने महापातस्तद्दिनं वर्जयेच्छुभे । अपि सर्वगुणोपेतं दंपत्योर्मृत्युदं यतः' । संग्रहे तु—'महापातस्य वैधृत्या यावत्कालं स्थितिर्भवेत् । तावत्कालं त्यजेत्पूर्वं तावत्कालं त्यजेत्परम्' ॥ बृहस्पतिरपि—'महागणितमार्गस्थो व्यतीपातोऽतिदोषदः । बलवद्गुणसंपन्नोऽप्यसौ कुलविनाशनः ॥ यन्नक्षत्रं पातमध्यस्य कालस्तन्नक्षत्रं वर्जनीयं समस्तम् । यावत्तावत्पातकालः पुरस्तात्पश्चाद्वर्ज्यं सर्वकार्येषु नूनम्' इति ॥ ॥ एते महादोषा अपरिहार्या इत्याह वसिष्ठः—'लग्नस्थजीवज्ञसितप्रजाता गुणाः परिज्ञातुमनीश्वरास्तत् । लग्नं महादोषविदूषितं यद्दुष्टं जनं बन्धुजना यथैव ॥ लग्नांशसौम्यग्रहवर्गजा ये गुणाः समस्ता न च रक्षितुं तत् । लग्नं महादोषविदूषितं यत्सिद्धार्थयज्ञा इव याथजूकम् ॥ मित्राधिमित्रोच्चगृहांशजाता गुणास्त्वशक्ताः परिरक्षितुं तत् । लग्नं महादोषविदूषितं यद्धर्मा यथा धर्मपरं द्विजेन्द्रम् ॥ वर्गोत्तमांशोद्भवचन्द्रजाता गुणाः समुद्धर्तुमिहासमर्थाः । लग्नं महादोषविदूषितं यदवाप्य सौम्यग्रहकेन्द्रजाताः ॥ धनत्रिकोणस्थशुभग्रहोत्था गुणा निरर्थास्तदवाप्य सर्वे । लग्नं महादोषविदूषितं यद्द्विजं यद्वद्पत्ययोगाः' । इत्येकविंशतिमहादोषप्रकरणम् ॥

अथैतेषां महादोषाणां मध्ये योगविशेषेण ग्रहगुणविशेषेण च केषांचिद्भङ्गा उच्यन्ते—'वर्गोत्तमगते लग्ने ये दोषा

न्यर्दसंभवाः । ते सर्वे विलयं यान्ति भीष्मे कुसरितो यथा ॥ लग्नांशे लग्नसंयुक्ते शुभांशे शुभवीक्षिते । समागतः शुभः सौम्यैर्दोषो नश्येत्स्वभावतः ॥ लग्नलग्नांशसंभूतान्बलवान्केन्द्रगो गुरुः । भस्मसात्कुरुते दोषानिन्धनानीव पावकः ॥ उच्चस्थो गुरुरेकोऽपि लग्नगो दोषसंचयम् । हन्ति पापान्हरिदिने उपवासव्रतं यथा' इति ॥ ॥ अथ दुर्लग्नादिदोषभङ्गः—'दुर्लग्नदुर्निमित्तोत्था दुर्मुहूर्तांशजाश्च ये । ते सर्वे विलयं यान्ति केन्द्रस्थाने बृहस्पतौ' ॥ ॥ बार्हस्पत्ये लग्नचन्द्रापवादः—'स्वगृहविधुगृहस्थः सौम्यभागस्थितो वा गुरुरुपचययातः स्वांशगो वा बलाढ्यः । अपि गुरुतरदोषा यान्ति नाशं यथैन श्रुतिरपि समधीता पापनाशाय दृष्टा ॥ उदयभवनतोऽरिस्थायगा दीप्तपापा निजगृहगतसौम्याः प्राणिनः कण्टकस्थाः । यदि शशिनि शुभस्थे कर्मणि प्रस्थिते वा निजमुदयगदोषं नाशयेच्छीतरश्मिः' । कण्टकस्थाः केन्द्रस्थाः ॥ ॥ अथ पापांशस्थितचन्द्रदोषभङ्गः—'लग्नात्केन्द्रे त्रिकोणे वा शुभः स्थाने बलान्वितः । पापांशेनोत्थदोषौघं विजहाति न संशयः ॥ स्ववर्गस्थः शुभः केन्द्रे त्रिकोणे वा स्वतुङ्गगः । विधौ पापांशगे दोषान्जहाति बलसंयुतः ॥ गुरुः स्वकीयवर्गस्थो बलवांल्लग्नकेन्द्रगः । पश्यन्सक्रूरशीतांशुस्तद्दोषं विलयं नयेत् ॥ क्रूरग्रहयुतश्चन्द्रः शुभांशे शुभकर्मकृत् । शुभदृष्टो यदा नाशं स पापोत्थं फलं नयेत्' ॥ ॥ अथ कर्तरीदोषभङ्गः—'यदि युजि सितपक्षे कृष्णपक्षे तथौजे शुभदिनयुततिथ्यां शोभनांशे विधौ च । गतवति बहुदोषाः कर्तरीत्यादयो ये लयमथ समियुस्ते पापवत्कञ्चुकर्तुः' ॥ ॥ अथ विष्टिभङ्गः—'दिवा परार्धजा विष्टिः पूर्वार्धस्था यदा निशि । तदा विष्टिः शुभायैव कमलागमभाषितम् ॥ एवं प्रतीपगत्यैव यामेऽपि शुभदा भवेत् । विष्टिलग्नाधिपैः सौम्यैर्निजांशे बलवान्यदि' इति ॥

अथ वारदोषभङ्गः—'पापग्रहोपि वारेशो लग्नान्त्यायारिवित्तगः । स्ववारकथितं दोषं न शुभो वा प्रयच्छति ॥ पापग्रहोपि वारेशो लग्नाद्दुश्चिक्यगः शुभान् । दद्यातपराजितो वज्री शुभकर्मणि वृत्रहन्' । दुश्चिक्यं तृतीयस्थानम् ॥ ॥ अथ कुलिकभङ्गः—'सौम्यग्रहेऽथ वारेशे बलाढ्ये लग्नगेऽथवा । कुलिकोदयदोषोऽत्र नास्तीति श्रुतिचोदितम्' इति ॥ ॥ अथ यमघण्टभङ्गः—'शुभांशे शुभकार्यस्थः शुभकेन्द्रे शुभेक्षितः । लग्नादुपचये चन्द्रो यमघण्टकनाशनः' इति ॥ अन्यच्च—'त्रिकोणे कण्टके वापि शुभस्तिष्ठेद्बलान्वितः । यमघण्टकदोषोऽपि नात्र स्याच्चन्द्रलग्नयोः ॥ शुभकर्मगते चन्द्रे शुभांशे शुभवीक्षिते । यमघण्टकसंभूतो दोषो नैवात्र विद्यते' ॥ ॥ अथ दुर्मुहूर्तादिदोषभङ्गः—'मुहूर्तपापपड्वर्गकुनवांशग्रहोत्थिताः । ये दोषास्तान्निहन्त्येव यत्रैकादशगः शशी' ॥ ॥ अथाब्दादिदोषभङ्गः—'अब्दायनर्तुमासोत्था ये दोषाः पक्षसंभवाः । ते सर्वे विलयं यान्ति केन्द्रसंस्थे बृहस्पतौ' इति ॥ ॥ अथ सर्वदोषभङ्ग उच्यते बार्हस्पत्ये—'चन्द्रादित्यौ शुभांशस्थौ बलाढ्यौ स्वोच्चगौ यदा । महादोषसमाख्याता दोषा भङ्गं ययुस्तदा' इति । अत्र दोषापवादविषये वृद्धाचारतो देशाचारतश्च व्यवस्था द्रष्टव्या ॥ ॥ अथ स्वल्पदोषनामानि बृहस्पतिः—'अथातः संप्रवक्ष्यामि दोषाणां रूपलक्षणम् । तथा तेषां बलं चैव यथोवाचाम्बुजासनः ॥ नाशयोगस्तथा मृत्युयोगो दग्धस्तथैव च । विषदग्धाग्नियोगाश्च ग्रहजन्मर्क्षमेव च ॥ शकटो ग्रहयोगश्च शनियोगो विषं तथा । गरयोगस्तथा पक्षच्छिद्रं नक्षत्रलङ्घनम् ॥ अपरो धीनिरोधश्च दिनमृत्युस्तथैव च । वारनक्षत्रयोगश्च काणान्धर्क्षं तथैव च ॥ विपलग्नाख्ययोगश्च पश्चार्कार्किस्तथैव च । मासशून्यस्तथा शून्यराशिर्दिग्दाह एव च ॥ रक्तस्थूणस्तथा पातो व्यतीपातस्तथैव च । दिवा ऋक्षप्रकाशश्च महाशूल-

स्तथैव च ॥ चन्द्रार्कयोगो भूकम्पः कण्टकः स्थूणसंज्ञकः । अदृश्यग्रहचारश्च ग्रहरश्मिस्तथैव च ॥ पापग्रहसुसंयुक्तराशिरित्येवमादयः । दोषाश्च गणिताः सर्वे गुणेभ्यो बलिनः कलौ ॥ तथापि दोषा नश्यन्ति स्वापवादैर्गुणैरपि । दोषा ये स्वापवादैस्तु स्वरूपाभावमाययुः । यथा पापा ययुः सर्वे प्रायश्चित्तैरभावताम्' इति ॥ नारदीये—'अनुक्ताः स्वल्पदोषाः स्युर्विद्युन्नीहारवृष्टिभिः । प्रत्यर्कपरिवेषेन्द्रचापाम्बुधरगर्जितम् ॥ लत्तोपग्रहपाताख्या मासदग्धाह्वया तिथिः । दग्धलग्नान्धकाणाख्याः पङ्गुसंज्ञाश्च राशयः ॥ एवमाद्यास्तथैतेषां व्यवस्था क्रियतेऽधुना ॥ अकालजा भवन्त्येते विद्युन्नीहारवृष्टयः । प्रत्यर्कपरिवेषेन्द्रचापाभ्रध्वनयो यदि । दोषाय मङ्गले नूनं न दोषाय च कालजाः' इति । वसिष्ठ आह—'उपग्रहोल्कानिलपातिचर्क्षं शुभग्रहैर्विद्धविदूषितं यत् । विरुद्धयोगेषु विशुद्धनाश्यो दूराशयश्च ग्रहजन्मधिष्ण्यम् ॥ ये मासदग्धास्तिथयो विलग्नान्यन्धानि शून्यानि च बाधिराणि । दुर्दग्धलग्नानि सपङ्गुकाणल्यालासुगा यन्पनमासतिथ्योः ॥ प्रत्यर्कनीहारमहेन्द्रचापविद्युल्लताभ्रभ्रमणाभ्रघोषाः । मरुत्प्रचारः परिवेषकम्पप्रतीन्दुवैवर्ण्यमथेन्दुमान्द्यौ: ॥ सुचारवारर्क्षकमृत्युयातहालाहलोत्पातमहीचलाद्याः । एतेऽल्पदोषाः प्रमदास्तथैषां देशव्यवस्था क्रियतेऽथ सम्यक्' इति । तथाह नारदः—'सौराष्ट्रे शाल्वदेशे च लातितं भं विवर्जयेत् । कलिङ्गवङ्गदेशे च पातितं भमुपग्रहम् ॥ बाह्लीके कुरुदेशे च नासिन्देशे च दूषणम् ॥ तिथयो या मासदग्धा दग्धलग्नानि यान्यपि । मध्यदेशे विवर्ज्यानि न दूष्याणीतरेषु तु ॥ पङ्ग्वन्धकाणलग्नानि मासशून्याश्च राशयः । गौडमालवयोस्त्याज्या अन्यदेशे न गर्हिताः ॥ दोषदुष्टं सदा कालं तं निमार्ष्टुं न

पाठा:—१ गौडमागधयोः ।

शस्यते। अभिधातुरतो न्याय्यं दोषाल्पत्वं गुणोत्कटम् ॥ परित्यज्य महादोषान्शेषयोर्गुणदोषयोः। गुणाधिकः स्वल्पदोषः स कालो मङ्गलप्रदः' इति ॥ ॥ अथ स्वल्पदोषादिभङ्गः। तत्रान्धकाणाद्यपवादः बार्हस्पत्ये—'स्वर्क्षेऽन्ययगतं भानुमपि पश्येद्धरागुरुः। गोऽन्धतां न गुरोर्दृष्ट्यायदीन्दुः सत्क्रियारतः'। अन्यच्च—'लग्नेशे बलसंयुक्ते लग्नार्धेऽन्ययगे त्रिगे। चन्द्रे च शुभकार्यस्थे नाचार्योऽन्धत्वमाप्नुयात्' ॥ ॥ अथ परिवेषदोषभङ्गः—'कण्टके च शुभस्तिष्ठेत्त्रिकोणे वा बलान्वितः। शुभवर्गेऽपि लग्नेन्द्वोः परिवेषोत्थदोषहा'। कण्टकः केन्द्रस्थानम्। अन्यच्च—'स्वत्रिकोणस्वराशिस्थः केन्द्रे चाये च यः शुभः। परिवेषगतं दोषं विनाशयति नान्यथा ॥ लग्नकेन्द्रे शुभः स्वोच्चे स्ववर्गे वा बली यदि। चन्द्रश्च शुभकार्यस्थो न दोषः परिवेषतः ॥ सूर्ये दूषितराशीनः स्वलग्ने च स्ववर्गगः। यदा तदा न दोषाय परिवेषो घनाद्दृते'। नारदीये—'बलवान्केन्द्रगो जीवः परिवेषोत्थदोषहा। एकादशस्थः शुक्रश्चेद्बलवान्सौम्यवीक्षितः' इति ॥ ॥ अथ ग्रहरश्मिदोषभङ्गः—'केन्द्रत्रिकोणगाः सौम्याः स्ववर्गस्था बलान्विताः। नाशयन्ति तदा दोषान्ग्रहरश्मिसमुत्थितान्' इति ॥ ॥ अथ मासशून्यादिदोषभङ्गः—'मासशून्याश्रयास्तारा राशयो वा तिथयः। स्वामिजीवबुधैर्दृष्टा युता वा नैव दोषदाः ॥ केन्द्रत्रिकोणयोः सौम्यो बलवांश्च स्ववर्गगः। मासशून्यकृतं दोषं राशिशून्यं विनाशयेत्' इति ॥ ॥ अथ दग्धयोगमृत्युयोगापवादः—'दग्धमृत्युसमाख्याश्च होरास्वामिदृशायुताः। बलवद्गुरुदृष्टा वा युता वा नैव दोषदाः' इति ॥ ॥ अथ भूकम्पदोषभङ्गः—'अर्के स्वर्क्षे च तुङ्गस्थे शुभग्रहनिरीक्षिते। भूमिकम्पादयः सर्वदोषा भद्रं प्रयुच्छन्' इति ॥ ॥ अथ पञ्चमधूमयोगभङ्गः—'शुभयोगेऽर्कचारेण नक्षत्रे सहिते सदा। योगा धूमादयः पञ्च भङ्गं

गच्छन्ति दोषदाः' इति॥ ॥ अथ कण्टकस्थूणभङ्गः—'भास्कराङ्गारकौ स्वोच्चस्ववर्गस्थौ शुभेक्षितौ। कण्टकस्थूणनामापि दोषो
गच्छति भग्नताम्' इति॥ ॥ अथ कण्टकभङ्गः—'बुधे स्वतुङ्गे वर्गे वा शुभग्रहनिरीक्षिते। महाकण्टकनामायं दोषो गच्छति भङ्ग-
ताम्' इति॥ ॥ अथेन्द्रचापादिदोषभङ्गः—'चापोपसूर्यनीहारमेघगर्जनसंभवाः। दोषा नाशं ययुः सर्वे केन्द्रस्थाने बृहस्पतौ' ॥
॥ अथ मासदग्धदोषभङ्गः—'ये दोषा मासदग्धाख्यास्तिथिदग्धसमुद्भवाः। ते सर्वे नाशमायान्ति केन्द्रस्थाने बृहस्पतौ' ॥ ॥
अथ दुःस्थानग्रहदोषभङ्गः—'दुःस्थानस्था ग्रहाः क्रूराः पापखेटसमुद्भवाः। ते दोषा विलयं यान्ति केन्द्रस्थाने बृहस्पतौ' ॥ ॥
अथोत्पातदोषभङ्गः—'त्रिविधोत्पातजं दोषं हन्ति केन्द्रगतो गुरुः। स्नानादिनलसंपन्नस्त्रिनेत्रस्त्रिपुरं यथा' ॥. ॥'अथ सर्व-
दोषभङ्गः नारदीये—'बृहस्पतिः केन्द्रगतः शुक्रो वा यदि वा बुधः। एतेषां दोषसंघानां करोत्येव विनाशनम्॥ गुरुरे-
कोऽपि लग्नस्थः सकलं दोषसंचयम्। विनाशयति घर्मांशुरुदितस्तिमिरं यथा॥ एकोऽपि लग्नगः काव्यो बुधो वा यदि लग्नगः।
नाशयत्यखिलं दोषं तूलराशिमिवानलः॥ लग्नदोषाश्चन्द्रदोषा दोषाः षड्वर्गजाश्च ये। हन्ति तांल्लग्नगो जीवो मेघसंघमिवानिलः॥
केन्द्रत्रिकोणगे जीवे शुक्रे वा यदि वा बुधे। दोषा विनाशमायान्ति पापानीव हरिस्मृतेः॥ गुरुर्भवत्रिकोणस्थः सर्वदोषविनाश-
नम्। करोति निखिलं पापं प्रणाम इव शूलिनः'। वासिष्ठे—'स्वक्षेत्रगः स्वस्य नवांशगो वा शुभग्रहः सौम्यनिरीक्षितो वा।
स लग्नगो यत्र निहन्ति दोषान्प्रज्वालनो यद्वदिभेन्द्रवृन्दम्॥ उच्चस्थितः सौम्यनवांशगो वा शुभः स्वमित्रेण निरीक्षितो वा। स
केन्द्रगो यत्र निहन्ति दोषान्हरिस्मृतिर्यद्वदशेषपापान्॥ वर्गोत्तमस्थ शुभखेचरसंयुतं वा लग्नं भवेन्निखिलखेचरवीक्षितं यत्। तत्स-

र्वदोषनिचयं विनिहन्ति सयस्ताक्ष्यः समस्तमहिसंघमिव प्रतापात् ॥ बलाधिकः सौम्यनभश्चरो यः कुटुम्बसंस्थो विनिहन्ति दोषम् । लग्नोद्भवं विष्णुपदाब्जतोयं यथाघसंघं शुभवर्गगोऽपि' । कुटुम्बो द्वितीयस्थानम् । नारदीये—'नाशयत्यखिलान्दोषान्यत्रैकादशगो रविः । गङ्गायां स्नानतो भक्त्या सर्वपापमिवाचिरात् ॥ उक्तानुक्ताश्च ये दोषास्तान्निहन्ति बली गुरुः । केन्द्रसंस्थः सितो वापि भुजगान्गरुडो यथा' । इति सर्वदोषापवादः ॥ ॥ अथ सर्वदोषापवादापवादः । एवमुक्तेषु दोषापवादेषु सत्सु केनचिद्ग्रहयोगविशेषेण सकलदोषापवादा नश्यन्तीत्याह बृहस्पतिः—'यस्य लग्नर्क्षचन्द्रर्क्षौ गुरोः सप्तमपञ्चमौ । तृतीये वा स दोषाणामपवादविनाशनः ॥ ऋक्षं नक्षत्रम् । यस्य लग्नर्क्षचन्द्रर्क्षाद्रविर्विपदि वा स्थितः । प्रत्यरे वा वधे वाऽसौ दोषाणामपवादहा ॥ यस्य सर्वग्रहाः सन्ति दुःस्थाने गोचरे तथा । दोषापवादा नश्यन्ति दोषास्तत्र बलाधिकाः' इति ॥

अथ ग्रहबलविचारः । एवमुक्तप्रकारेण महादोषविरहितं लग्नं सम्यग्विमृश्य ग्रहबलं पश्येत् । तदुक्तं वासिष्ठे—'गुणाधिकं स्वल्पविहीनकालं ज्ञात्वा विलग्नेशनवांशपस्य । बलाबलं खेचरिणां च सम्यग्विचार्य लग्नं प्रवदेदभिज्ञः' । बृहस्पतिस्तु—'तिथिरेकगुणा वारो द्विगुणस्त्रिगुणं च भम् । योगश्चतुर्गुणः पञ्चगुणस्तिथ्यर्धसंज्ञकः ॥ ततो मुहूर्तो बलवांस्तस्मात्पश्येत्क्लाबलम् ॥ शुभेक्षितयुताः शस्ता उद्वाहेऽखिलराशयः ॥ पातालाम्बरपञ्चमे द्विनवमे लग्ने च सौम्यग्रहाः क्रूराः षष्ठगताः शशी धनगतः सर्वे त्रिरेकादशे । जामित्रे ग्रहवर्जिते नच भृगुः षष्ठे कुजश्चाष्टमे षष्ठाष्टान्त्यशशी विवाहसमये शेषेषु ते शोभनाः' ॥ अन्य निरूपणमाह नृसिंहः—'लग्नस्था गुरुशुक्रज्ञाः शुभाः शेषा विनाशदाः । पापा द्वितीये नशुभाः सौम्याः सर्वे सुखा-

ग्रहाः ॥ तृतीयस्थानगाः सर्वे सर्वसौख्यप्रदाः सदा । जीवज्ञशुक्रास्तोयस्थाः शुभाः शेषा मृतिप्रदाः ॥ पापाः सुतस्था नशुभाः सौम्याः सर्वे शुभप्रदाः । षष्ठे पापग्रहाः श्रेष्ठाः सर्वे दुःखप्रदाः शुभाः ॥ सर्वे सप्तमराशिस्था विशेषेण विवर्जिताः । मन्दज्ञार्काः शुभा रन्ध्रे शेषाः सर्वे मृतिप्रदाः ॥ धर्मस्था ज्ञार्किभौमाश्च निन्द्याः शेषाः शुभावहाः । नभःस्था जीवशुक्रज्ञाः शुभाः शेषा मृतिप्रदाः ॥ आयस्थानगताः सर्वे विशेषेण शुभप्रदाः । व्ययस्थाः शुक्रजीवज्ञाः शुभाः शेषा व्ययप्रदाः ॥ अशुभस्य गृहे चन्द्रस्तत्सं निन्द्यतमो भवेत् । अशुभास्ते शुभाः प्रोक्ताः स्वोचमित्रस्ववर्गगाः' इति ॥ ॥ अथ लग्नादिद्वादशभावफलं वसिष्ठः—'मृत्युर्नैस्स्व्यं बहुविधधनं भ्रातृहानिः प्रजानां व्याधिर्मान्यैरतिशयधनं भ्रातृहानिश्चिरायुः । श्रेयोहानिर्भवति हृदयव्याधिरर्थागमश्च भानौ स्त्रीणामतिशयरुजा लग्नभावादिसंस्थे ॥ नाशः संपद्बहुविधयशोबन्धुसंपत्प्रजाभिः शस्त्रान्मृत्युर्भवति नचिरादीर्घसापत्न्यबाधा । प्रजयत्वं दुहितृजननं वैभवं भोगभाग्यं दास्यं स्त्रीणां तुहिनकिरणे लग्नभावादिसंस्थे ॥ मृत्युः शोको बहुविधधनं भ्रातृवैरं कुबुद्धिर्लक्ष्मीप्राप्तिर्भवति मरणं चोभयोर्वंशनाशः । स्त्रीणां क्षेपं व्यसननिरतिः पुत्रपौत्रार्थसिद्धिर्भीतिर्भूमेर्बलिनि तनये लग्नभावादिसंस्थे ॥ प्रीतिर्वृद्धिः सुगुणनिरतिर्बन्धुपूजा सुताप्तिर्निर्वैपक्ष्यं विनयरहितत्वं तनुत्यागचिन्ता । धर्मे बुद्धिर्भवति धरणीलाभमत्यन्तवृद्धिर्हानिः स्त्रीणां हिमकरसुते लग्नभावादिसंस्थे ॥ लक्ष्मीप्राप्तिर्भवति सुयशः प्रीतिरन्योन्यवृद्धिरर्थावाप्तिर्बहुविधभयं चाश्रमाणां विरक्तिः । पापासक्तिः सुकृतनिरतिर्भूरिलाभः सुरेज्ये स्त्रीणां सौख्यं रिपुकृतभयं लग्नभावादिसंस्थे ॥ भोगप्राप्तिर्विविधविभवः स्वैरवृद्धिर्महत्त्वं धर्माधिक्यं भवति निधनं सर्वनाशो व्यसुतम् । युद्धप्रीतिर्बहुविधगुणः सर्वसंपत्समृद्धिर्नित्यं स्त्रीणामुरा-

नसि तथा लग्नभावादिसंस्थे ॥ स्वच्छन्दत्वं कदशनरतिर्वल्लभत्वं विशीलं व्याधिः सुश्रीर्मृतिरतिसुखं गर्भपातप्रवृत्तिः । द्यूतासक्तिर्भवति विरहो वैभवं चक्ररोगः स्वर्भानौ वा ग्रहविधुशिखौ लग्नभावादिकेषु' ॥ ॥ उक्तानां ग्रहाणां मध्ये आवश्यकग्रहसंख्यामाह नारदः—'चन्द्रार्कज्यादयः पञ्च यस्य राशेस्तु खेचराः । इष्टास्तच्छुभदं लग्नं चत्वारो वा बलान्विताः'' इति ॥

अथ विवाहयोगा उच्यन्ते—'यथोक्तकालदुर्लाभे गुणेषु विफलेषु च । दोषापवादाभावेन योगोऽभीष्टप्रदः शुभः । विवाहे शुभदा योगाः कथिताश्चतुराननैः ॥ बुधे स्वराशिगे लग्नेऽनस्तगेऽतिबलैर्युते । विवाहे शुभदो योगो नन्दनामातिशोभनः ॥ शुक्रश्चातिबलैर्युक्तः स्वराशिरुदितो यदि । बलिना गुरुणा दृष्टो भद्रो योग उदाहृतः ॥ स्वर्क्षे भावबलैर्युक्ते जीवे लग्नगते तदा । बुधे सिते वा केन्द्रस्थे योगो जीवाह्वयः शुभः ॥ बुधजीवौ यदा क्वापि राशावतिबलान्वितौ । ससितावुदितो योगो जीमूतो नाम शोभनः ॥ शुक्रजीवौ यदा लग्ने सहितौ बलिनौ तदा । योगोऽयं स्थावरो नाम विवाहसमये शुभः ॥ यदा शुक्रबुधौ सार्धमुदितौ प्रबलौ तदा । विवाहे शुभदो योगो जयो नामातिशोभनः ॥ यदा ज्ञजीवशुक्राश्च सहिता लग्नगास्तदा । बलिनो यदि योगोऽयं विजयो नाम योगराट् ॥ मानुष्यभोदये दृष्टे शुभैर्बलसमन्वितैः । चन्द्रे शुभकरे तस्मिन्विवाहः शोभनप्रदः ॥ चन्द्रे लग्ने वीक्षितेन भौमेनार्थसमे स्थिते । इन्द्रावपरिवेषस्थे मृत्युवर्ज्यं शुभं भवेत् ॥ जीवोदये बलैर्वृद्धे सिते रन्ध्रे रिपौ रवौ । विवाहे शुभदो योगो दंपत्योर्वृद्धिदो भवेत् ॥ बलवद्गविभौमौ द्वौ दशमैकादशं गतौ । लग्ने सितज्ञौ प्राणाढ्यौ जीवे पुत्रगते शुभः' ॥ सुरः पञ्चमस्थानम् । 'गुरौ बलयुते लग्ने कर्मणीन्दौ शुभे रते । एकादशे रवौ शुक्रे दशमेऽजीवशोभनः ॥ लग्नारिकर्ममृत्युस्था

ग्रहाः ॥ तृतीयस्थानगाः सर्वे सर्वसौख्यप्रदाः सदा । जीवज्ञशुक्रास्तोयस्थाः शुभाः शेषा भूतिप्रदाः ॥ पापाः सुतस्था नशुभाः सौम्याः सर्वे शुभप्रदाः । षष्ठे पापग्रहाः श्रेष्ठाः सर्वे दुःखप्रदाः शुभाः ॥ सर्वे सप्तमराशिस्था विशेषेण विवर्जिताः । मन्दज्ञार्काः शुभा रन्ध्रे शेषाः सर्वे मृतिप्रदाः ॥ धर्मस्था ज्ञार्किभौमाश्च निन्द्याः शेषाः शुभावहाः । नभःस्था जीवशुक्रज्ञाः शुभाः शेषा मृतिप्रदाः ॥ आयस्थानगताः सर्वे विशेषेण शुभप्रदाः । व्ययस्थाः .शुक्रजीवज्ञाः शुभाः शेषा व्ययप्रदाः ॥ अशुभस्य गृहे चन्द्रस्तस्य निन्द्यतमो भवेत् । अशुभाप्ते शुभाः प्रोक्ताः स्वोच्चमित्रस्ववर्गगाः' इति ॥ ॥ अथ लग्नादिद्वादशभावफलं वसिष्ठः—'मृत्युर्नैःस्व्यं बहुनिधनं भ्रातृहानिः प्रजानां व्याधिर्मान्यैररतिशयधनं भ्रातृहानिश्चिरायुः । श्रेयोहानिर्भवति हृदयव्याधिरर्थागमश्च भार्या गीणामतिशयरुजा लग्नभावादिसंस्थे ॥ नाशः संपद्बहुविधयशोबन्धुसंपत्प्रजाप्तिः शस्त्रान्मृत्युर्भवति नचिराद्दीर्घसापत्न्यबाधा । प्रजयपतं दुहितृजननं घर्मं भोगभाषत्वं दास्यं स्त्रीणां तुहिनकिरणे लग्नभावादिसंस्थे ॥ मृत्युः शोको बहुविधधनं भ्रातृवैरं कुबुद्धिर्लक्ष्मीप्राप्तिर्भवति मरणं चोभयोर्वंशनाशः । स्त्रीणां द्वेषं व्यसननिरतिः पुत्रपौत्रार्थसिद्धिर्भीतिर्भूमेर्बलिनि तनये लग्नभावादिसंस्थे ॥ प्रीतिर्वृद्धिः सुगुणनिरतिर्बन्धुपूजा सुताप्तिर्निर्वपक्ष्यं विनयरहितत्वं तनुत्यागचिन्ता । धर्मे बुद्धिर्भवति धरणीलाभमत्यन्तवृद्धिर्हानिः स्त्रीणां हिमकरसुते लग्नभावादिसंस्थे ॥ लक्ष्मीप्राप्तिर्भवति सुयशः प्रीतिरन्योन्यवृद्धिरर्थावाप्तिर्बहुविधभयं चाश्रमाणां विरक्तिः । पापासक्तिः सुकृतनिरतिर्भूरिलाभः सुरेज्ये स्त्रीणां सौख्यं रिपुकृतभयं लग्नभावादिसंस्थे ॥ भोगप्राप्तिर्विविधविभवः सौरवृद्धिर्महत्त्वं धर्मोधिक्यं भवति निधनं सर्वनाशो व्यसुत्वम् । पुत्रप्रीतिर्बहुविधगुणः सर्वसंपत्समृद्धिर्नित्यं स्त्रीणामुप-

नसि तथा लग्नभावादिसंस्थे ॥ स्वच्छन्दत्वं कदशनरतिर्वल्लभत्वं विशीलं व्याधिः सुश्रीर्मृतिरतिसुखं गर्भपातप्रवृत्तिः । द्यूतासक्तिर्भवति विरहो वैभवं वक्त्ररोगः स्वर्भानौ वा ग्रहविधुशिखौ लग्नभावादिकेषु' ॥ ॥ उक्तानां ग्रहाणां मध्ये आवश्यकग्रहसंख्यामाह नारदः—'चन्द्रार्केज्यादयः पञ्च यस्य राशेस्तु खेचराः । इष्टास्तच्छुभदं लग्नं चत्वारो वा बलान्विताः' इति ॥

अथ विवाहयोगा उच्यन्ते—'यथोक्तकालदुर्लभे गुणेषु विफलेषु च । दोषापवादाभावेन योगोऽभीष्टप्रदः शुभः । विवाहे शुभदा योगाः कथिताश्चतुराननैः ॥ बुधे स्वराशिगे लग्नेऽनस्तगेऽतिबलैर्युते । विवाहे शुभदो योगो नन्दनामातिशोभनः ॥ शुक्रश्चातिबलैर्युक्तः स्वराशिरुदितो यदि । बलिना गुरुणा दृष्टो भद्रो योग उदाहृतः ॥ स्वर्क्षे भानबलैर्युक्ते जीवे लग्नगते तदा । बुधे सिते वा केन्द्रस्थे योगो जीवाह्वयः शुभः ॥ बुधजीवौ यदा क्वापि राशावतिबलान्वितौ । ससितावुदितौ योगो जीमूतो नाम शोभनः ॥ शुक्रजीवौ यदा लग्ने सहितौ बलिनौ तदा । योगोऽयं स्थावरो नाम विवाहसमये शुभः ॥ यदा शुक्रबुधौ सार्धमुदितौ प्रबलौ तदा । विवाहे शुभदो योगो जयो नामातिशोभनः ॥ यदा ज्ञजीवशुक्राश्च सहिता लग्नगास्तदा । योगोऽय विजयो नाम योगराट् ॥ मानुष्यभोदये दृष्टे शुभैर्बलसमन्वितैः । चन्द्रे शुभकरे तस्मिन्विवाहः शोभनप्रदः ॥ चन्द्रे लग्ने वीक्षितेन भौमेनार्थसमे स्थिते । इन्द्वावपरिवेषस्थे मृत्युवर्ज्यं शुभं भवेत् ॥ जीवोदये बलैर्निद्धे सिते रन्ध्रे रिपौ रवौ । विवाहे शुभदो योगो दंपत्योर्वृद्धिदो भवेत् ॥ बलवद्रविभौमौ द्वौ दशमैकादशं गतौ । लग्ने सितज्ञौ प्राणाढ्यौ जीवे पुनगते शुभः' ॥ शुनः पञ्चमस्थानम् । 'गुरौ बलयुते लग्ने कर्मणीन्दौ शुभे रते । एकादशे रवौ शुक्रे दशमेऽजीवशोभनः ॥ लग्नारिकर्ममृत्युस्था

जीज्ञार्कसितरात्रिपाः । क्रमाद्बलयुताः सर्वे योगः परिणये शुभः ॥ त्रिधर्मैकादशस्थाश्चेदारजीवार्कजाः क्रमात् । बलवन्तो विवाहस्य योगोयं संपदालयः ॥ गुरुशुक्रौ यदा लग्ने चन्द्रे स्वांशगृहं गते । विवाहसमये योगः पुनर्माङ्गल्यवृद्धिदः ॥ गुरुर्धने ज्ञशुक्रौ द्वौ पञ्चमे रिपुभे रवौ । नलिनो न सरेरकाथियोगोऽतीव शुभप्रदः ॥ सौमे तृतीयगे मन्दे षष्ठे चैकादशे स्थिते । दशमे च रवौ योगो जीवक्षेत्रोदये तदा ॥ लग्ने वा दशमस्थौ वा ज्ञशुक्रौ वाऽयगे रवौ । केन्द्रत्रिकोणगे जीवे योगः शुभकरस्तदा ॥ लग्नगः शुभदः कश्चित्रिषडायेषु पापकः । बलिनौ तौ शुभकरौ योगोयं दोषहा स्वयम् ॥ शुभो वा यदि वा पापो भवेत्केन्द्रे बली शुभः । शुभांशे शुभकृच्चन्द्रः शुभदो योगराडयम् ॥ लग्ने तृतीयगृहपञ्चमदाष्टमेषु जीवो धराजरविजौ शनिजो रविश्च । चन्द्रः सितश्च यदि वीर्ययुतः क्रमेण योगो विवाहसमये शुभवृद्धिदाता ॥ केन्द्रत्रिकोणभवने यदि शोभनैकः स्वोच्चस्ववर्गसहितो बलवान्प्रदीप्तः । पापस्तथाविधगुणस्त्रिषडायगश्च योगो विवाहसमये बहुपुत्रदाता' ॥ इति विवाहयोगाः ॥

एवमुक्तेषु ग्रहयोगेषुसत्सु दृष्टिविशेषेण स्थानविशेषेण ग्रहयोगविशेषेण चन्द्रकर्मविशेषेण च पूर्वोक्तशुभाशुभफलमन्यथा भवतीत्युच्यते । तत्र बृहस्पतिः—'अनिष्टस्थानस्थोऽप्यतिशुभद एवाशुभगतः शुभांशस्थः सौम्योदितबलदृशा वा हिततनुः । तदानीं चन्द्रोतिप्रथितशुभकृच्चेद्बलयुतः स्वतुङ्गस्वर्क्षस्थो यदि शुभकरः. किं पुनरयम् ॥ ग्रहाः सर्वे लग्नादशुभगदितस्थानसहिताः स्वतुङ्गे वा स्वर्क्षे यदि समितुरुत्कृष्टबलिनः । तदा तेनैवास्मिन्कथितमखिलं दद्युरशुभं भवे युक्ताः प्रोक्तं शुभमतितरां दद्युरखिलम्' ॥ अन्यच्च—'स्वोच्चातिशुभवर्गा ये तिष्ठन्त्यशुभदा अपि । तेऽतीव संप्रयच्छन्ति श्लाघनीया यतस्ततः ॥ स्वकर्मसं-

ह्युमादुपचयगता यद्यशुभदास्तदा पापैर्युक्तं निखिलमशुभं नैव समियात् । अनिष्टस्थानस्थैर्दिवसपतिना सद्भिरथवा विनश्यन्त्य-प्रोक्ता विपकुलिकदोषाः शुभफलाः ॥ यस्य दोषस्य यः कर्ता स्ववर्गस्थोच्चगो यदि । शुभदृष्टः स एवास्य भङ्गं दोषस्य यच्छति' ॥ श्रीधरीये—'क्रूरांशकाः क्रूरसमागताश्च क्रूरेक्षिताः क्रूरफला भवन्ति । नीचारिगा मूढगता विलग्ने शुभग्रहा अप्यशुभप्रदाः स्युः ॥ सौम्यग्रहसंयुक्तः क्रूरोपि च सौम्यतामेति । सौम्योपि क्रूरयुतः क्रूरो भवतीति शास्त्रविदः ॥ तथैव बलहीनस्य वर्गं क्रूर-ग्रहस्य तु । योजयेत्कार्यसिद्ध्यर्थं लग्नं सर्वत्र शुध्यति' इति । तथाच—'अस्तगा नीचगाः शत्रुराशिगाश्च पराजिताः । अशक्ताः स्वफलं दातुं दानमश्रोत्रिये यथा' । बृहस्पतिः—'जीवेन शुक्रेण बुधेन वा युता होरा बलाढ्या शुभकर्मणीन्दोः । तेष्वेव नीचारिगृहांशकादिस्थितेषु दोषाय बलक्षयाय' । अन्यच—'स्वनीचारिषु वर्गे ये तिष्ठन्ति शुभदा अपि । ते चापि शुभदाः सर्वे सर्वत्र शुभकर्मणि ॥ वक्रस्थोच्चगतानां तु फलं त्रिगुणितं भवेत् । वर्गोत्तमे स्वराशौ च स्वांशकेस्वत्रिकोणयोः ॥ गतानां द्विगुणं विद्यात्स्वहोरां रविशीतगोः । स्वनीचस्थे च मूढे च तस्यार्धं फलमीरितम् ॥ शत्रुक्षेत्रे स्वमार्गोनं फलं स्यात्तु तदर्धकम्' इति ॥ ॥

अत्र ग्रहाणां षड्बलस्वरूपं चन्द्रकर्मस्वरूपं च ज्ञातव्यतया प्रसक्तं । तत्र ग्रहाणां षड्बलस्वरूपं जातकर्मप्रकरणेऽस्माभिरुक्तम् । इदानीं चन्द्रस्य षष्टिकर्माण्युच्यन्ते । श्रीधरीये—'प्रवासी तापसः कामी चारः कृशतनूरजे । आसीनो नृपतिः श्रीमान्से-नानीः शुभदो वृषे ॥ सृतो भिक्षुर्दरिद्रश्च वद्धो मूको हतो यमे । ऐन्दवे नृपतिर्ज्ञानी शुद्धो धार्मिकतापसौ ॥ सद्वंशसंभवः श्रीमा-न्धीरो विद्वान्जयी हरौ । ज्वरार्तोऽध्वस्थः पार्थोने भग्नः पापोऽरिणा हतः ॥ पार्थोनं कन्या । ज्ञानी श्रीमान्सुवोढा च परहन्ता गजे

मिनः। मन्मथी विजयी मीरः कौर्पे श्रीमान्दयापरः ॥ कौर्पिर्दृश्चिकः। क्षुद्रो भोगीश्वरश्चैव नृमांसाशी मृतो हये। संभार्यो निषद्दो धूतासक्तो राजभयो मृगे ॥ सुतो हीनश्च भोगीशो निशिभार्यान्वितो घटे। भोगी पायसभुग्ज्ञानी गुणवान्नृपराद् झपे ॥ नक्षत्रेष्वेरमेन सान्नाद्यः पञ्च च पञ्च च' इति। बृहस्पतिः—'एवं चन्द्रगुणाढ्येषु शुभकर्म समाचरेत्। सर्वे दोषा विनश्यन्ति विशेषान्न्यापनाविधौ। प्रश्नकाले गुणश्चन्द्रः प्रश्नः शुभफलप्रदः' ॥ इति चन्द्रकर्माणि ॥

अथ जलयन्त्रविधिः। अथेदानीं लग्नादिविचारस्य मुहूर्तदर्शने घटिकायन्त्रसंज्ञकजलयन्त्रस्यैव प्राधान्यादादौ तावज्जलयन्त्रकरणविधिरभिधीयते। तत्र नारदः—'षडङ्गुलमितोत्सेधो द्वादशाङ्गुलमाननम्। कुर्यात्कपालवत्ताम्रपात्रं तद्दशभिः पलैः ॥ पूर्णं यथा जलपलैः षष्टिर्मज्जति वासरात्। माषत्रयं त्र्यंशयुतं स्वर्णसूचशलाकया ॥ चतुर्भिरङ्गुलैरायें तथा सिद्धमतिस्फुटम्' इति। जलयन्त्रविन्यासविधिमाह स एव—'ताम्रपात्रे जलैः पूर्णे गन्धपुष्पैरलंकृते। तण्डुलस्थे स्वर्णयुते वस्त्रयुग्मेन वेष्टिते ॥ मण्डलार्धोदयं वीक्ष्य रवेस्तत्र विनिक्षिपेत्। मन्त्रेणानेन पूर्वोक्तलक्षणं यन्त्रमुत्तमम् ॥ मुख्यं त्वमसि यन्त्राणां ब्रह्मणा निर्मितं पुरा। भव भावाय दंपत्योः कालसाधनकारणम् ॥ एवं सुलग्ने दंपत्योः कारयेत्सम्यगीक्षणम् ॥ दिवा वा यदि वा रात्रौ विवाहदिवसे शुभे' इति ॥

अथ लग्नप्रदातृलक्षणं व्यतिरेकेणाह संवर्तः—'अन्धः श्वित्री च कुनखी हीनाङ्गः पङ्गुरेव च। महापातकिसंसर्गी निष्ठुरः दुश्चेष्टितः ॥ विपनागतः क्रुद्धो दुराचारो नृशंसकः। बहुवादी क्षिप्रवादी स्तेनः प्रश्नोपजीवकः ॥ मिथ्यावादी कंदर्पश्च सर्ववर्णेषु

याचकः । शास्त्रमर्मानभिज्ञश्च छलवादी विरागयुक् ॥ कर्ममार्गानिधूतश्च सर्ववर्णेषु याचकः । कपटानुगतश्चैव निन्दकश्चोरसंकुलः ॥
मिथ्याप्रलापी रोगिष्ठो द्वेषी दीर्घविचारवान् । लग्नदो भवेद्यत्र कुलक्षयकर हि तत्' इति ॥ वसिष्ठः—'स्कन्धत्रयविचारज्ञो
दोषादोषविवेकवान् । त्रुटिकालाद्यभिज्ञश्च शास्त्रवादी जितेन्द्रियः ॥ पूर्वोक्तदोषरहितः सम्यक्शास्त्रविचारकः' इति ॥ ॥
लग्नप्रदानक्रम उच्यते श्रीधरीये—'गुणेषु दोषेष्वधिकं विचिन्त्य यदा तु दोषा बहवस्त्यजेत्तत् । यदा गुणाः सन्ति तदा वि-
धेयाः सदोषकालाः सगुणाश्च नेह ॥ सदोषकाला एकविंशतिमहादोषकालाः । अर्थात्प्रकरणाद्यैश्च लिङ्गौचित्यादिभिः सदा ॥
देशकालादिभिश्चैव वाक्येतरविरोधतः ॥ अपवादादिभिर्वाक्यैः सामान्यैर्न विरोधतः ॥ विचार्य सहसा लग्नं प्रदद्याच्चद्विवृद्धये ।
सर्वतः सर्वमालोक्य ज्ञानी कालं समादिशेत्' ॥ तल्लग्नकाललक्षणमुक्तं नारदेन—'स्वस्थे सति सुखासीने यावत्स्पन्दति लोच-
नम् । तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्तितः ॥ तस्माच्छततमो भागस्त्रुटिरित्यभिधीयते । त्रुटेः सहस्रभागो यो लग्नकालः स
उच्यते ॥ देवोपि तं न जानाति किं पुनः प्राकृतो जनः । सुकालो वान्यकालो वा पूर्वकर्मवशाद्भवेत् । निमित्तमात्रं दैवज्ञस्तद्व-
शाच्च शुभाशुभम्' इति । बृहस्पतिस्तु—'शुभग्रहोदयर्क्षं वा शुभषड्वर्ग एव वा । वेदविज्ञानवाक्यं च महान्तः शुभदा गुणाः' ॥
वेदविज्ञानवाक्यं चेति वेदस्य विज्ञानं येषां ते वेदविज्ञाना वेदवेदाङ्गतत्त्वज्ञाः तेषां वाक्यं । अथवा विजानन्तीति विज्ञानाः ।
'कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट् । वेदस्य विज्ञाना वेदविज्ञाना इति स एवार्थः । तेषां वाक्यं तत्सुमुहूर्तमस्त्वित्येवंरूपमि-
त्यर्थः । अपिच वेदैर्विज्ञायत इति वेदविज्ञानो वेदवेद्यो लक्ष्मीपतिः । बहुलग्रहणात्कर्मणि ल्युट् । तस्य लक्ष्मीपतेश्चरणस्मरणरूपं

वाच्यं 'तदेव लग्न'मित्यादि । एतदुक्तं भवति—मुहूर्तकाले 'सुमुहूर्तमस्त्विति भवन्तो ब्रुवन्तु—तदेव लग्नं सुदिनं तदेव तारावलं चन्द्रबलं तदेव । विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि' । इति चोक्त्वा मुहूर्ते दद्यादिति । इति लग्नप्रकरणम् ॥

अथ कन्यादातृनिर्णयः ॥ अथेदानीं लग्नविचारानन्तरं कन्यादातृविचारस्य कर्तव्यत्वात्तावद्दातृनिर्णयो निरूप्यते । तत्र नारदः—'पिता दद्यात्स्वयं कन्यां भ्राता वानुमतेः पितुः । मातामहो मातुलश्च सकुल्यो बान्धवस्ततः ॥ माता त्वभावे सर्वेषां प्रकृतौ यदि वर्तते । तस्यामप्रकृतिस्थायां कन्यां दद्युः स्वजातयः ॥ यदा तु नैव कश्चित्स्यात्कन्यां राजानमाव्रजेत् । पुरोहितेन वै राजा प्रदद्याद्ब्राह्मणोत्तमे' इति । अप्रकृतिस्था उन्मादादिदोषदुष्टेत्यर्थः ॥ ॥ याज्ञवल्क्योपि—'पिता पितामहो भ्राता सकुल्यो जननी तथा । कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परस्परः ॥ अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ । गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयं वरम् ॥ गम्यं गमनार्हं । सवर्णादिगुणयुक्तमित्यर्थः ॥ द्रव्यहीने दातरि कन्यादानाशक्तेऽन्यो वित्तवान् द्रव्येण तामात्मीकृत्य दद्यात् ॥ तथाच स्कान्दे—'आत्मीकृत्य सुवर्णेन परकीयां तु कन्यकाम् । धर्म्येण विधिना दातुमसगोत्रोऽपि युज्यते' ॥ विष्णुधर्मोत्तरे—'अनाथां कन्यकां दत्वा सदृशे चाधिके वरे । द्विगुणं फलमाप्नोति कन्यादाने यदीरितम्' इति ॥ सदृशवरलक्षणमाह नारदः—'सवर्णमनुरूपं च कुलशीलबलश्रुतैः । सहधर्मं चरेत्तेन पुत्रांश्चोत्पादयेदिति' ॥ सवर्णं वरं प्राप्येत्यध्याहृत्य योजनीयम् । एतच्चासति रजोदर्शने द्रष्टव्यम् ॥ ॥ रजोदर्शने दोषमाह शाट्यायनिः—'माता चैव पिता चैव ज्येष्ठभ्राता तथैव च । त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम्' । मरीचिः—'यस्तां विवाहयेत्कन्यां ब्राह्मणो

मद्मोदितः । असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः' इति । इतिहासोऽपि—'पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता । सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः' इति ॥ ॥ अत्र प्रायश्चित्तपूर्वं परिणयनमाहाचार्यः—'कन्यामृतुमतीं शुद्धां कृत्वा निष्कृतिमात्मवान् । तथाच कारयित्वा तामुद्वहेदानृशंस्यधीः ॥ पिता ऋतून्स्वपुत्र्यास्तु गणयेदादितः सुधीः । दानावधि गृहे यत्नात्पालयेच्च रजोवतीम् ॥ दद्यात्तदृतुसंख्या गाः शक्तः कन्यापिता यदि । दातव्यैकापि निःस्वेन दाने तस्या यथाविधि ॥ दद्याद्वा ब्राह्मणेभ्योऽन्नमतिनिःस्वः सदक्षिणम् । तदतीतर्तुसंख्येभ्यो वराय प्रतिपादयेत् ॥ उपोष्य त्रिदिनं कन्या रात्रौ पीत्वा गवां पयः । अदृष्टरजसे दद्यात्कन्यायै रत्नभूषणम् ॥ तामुद्वहन्वरास्तमापि कूष्माण्डैर्जुहुयाद्द्विजः' इति । इति दातृनिर्णयः ॥

अथाष्टविधविवाहनिर्णयः । एवं दातृनिर्णयं कृत्वा विवहेत् । स विवाहस्त्वष्टधा भवति । तथाच मनुः—'ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः । गान्धर्वो राक्षसश्चैव पैशाचस्त्वष्टमो मतः' इति । इदमत्र गृह्यम्—'अलंकृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहस्तस्यां जातो द्वादशावरान्द्वादश परान्पुनात्युभयत ऋत्विजे वितते कर्मणि दद्यादलंकृत्य स दैवो दशावरान्दश परान्पुनात्युभयतः सह धर्मं चरत इति प्राजापत्योऽष्टावरानष्ट परान्पुनात्युभयतो गोमिथुनं दत्त्वोपयच्छेत स आर्षः सप्तावरान्सप्त परान्पुनात्युभयतो मिथः समयं कृत्वोपयच्छेत स गान्धर्वो धनेनोपतोष्योपयच्छेत स आसुरः सुप्तानां प्रमत्तानां वापहरेत्स पैशाचो हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदद्भ्यो हरेत्स राक्षसः' इति । अस्यार्थमाह देवस्वामी—एतेष्वष्टसु विवाहेषु आद्यो ब्राह्मणानामेव, प्रतिग्रहार्त्विज्ययोगात् । गान्धर्वराक्षसौ क्षत्रियस्यैव, तथा पुराणे दर्शनात् युद्धसंयोगाच्च । आसुरो वैश्यानां, द्रव्यसं-

योगात्। अन्ये त्रयो न नियताः। तेषु पैशाचो निन्दितः। तथाच स्मृत्यन्तरम्—'चत्वारो ब्राह्मणस्याद्याः शस्ता गान्धर्वराक्षसौ। राजन्यस्य तथाऽऽसुरो वैश्ये शूद्रे चाऽन्त्यस्तु गर्हितः' ॥ अन्त्यः पैशाचः। तत्र नववस्त्रादिभिरलंकृत्य कन्यां ब्राह्मणमुक्तलक्षणमाहूय सादरमुदकपूर्वं दद्यात्स ब्राह्मो विवाहः। तस्यां ब्रह्मविवाहोढायां जातः पुत्र उभयतो मातृवंशे पितृवंशे च द्वादशावरानुत्पत्स्यमानान् द्वादश परान्पित्रादीन्मातामहादींश्च पुनातीत्यर्थः। वितते वैतानिके कर्मणि दक्षिणादानकाले नववस्त्रादिभिर्यथाशक्त्यलंकृत्य कन्यामृत्विजे दक्षिणात्वेन दद्यात्स दैवो विवाहः। तस्यां जात इति सर्वत्रानुवर्तते। दैवविवाहोढायां जातः पुत्रः उभयतो दशावरान्दश परान्पुनाति। सह धर्मं चरत इत्युक्त्वा यत्र कन्या प्रदीयते स प्राजापत्यः। यद्यप्यन्येष्वपि विवाहेषु सहधर्माचरणमस्ति तथाप्यत्र यावज्जीवं सहधर्माचरणमेव न मध्ये आश्रमान्तरप्राप्तिर्नापि द्व्यन्तरविवाह इति विशेषः। तस्यां जातः पुत्रः उभयतोऽष्टावरानष्ट परान्पुनाति। यत्र गां बलीवर्दं च कन्यादात्रे दत्त्वा तामुपयच्छेत स आर्षः। तस्यां जातः पुत्रः सप्तावरान्सप्त परान्पुनात्युभयतः। यत्र कन्याकुमारौ परस्परं प्रथमत आवां जायापती भवावेति प्रच्छन्नतया समयं कृत्वा पश्चाद्बन्धुजनैरभिकाङ्क्षन्तौ यथाविधि कृतविवाहौ स्यातां स गान्धर्वो विवाहः। यत्र कन्याप्रदातारमपेक्षितधनेन परितोष्य कन्यामुपयच्छेत स आसुरो विवाहः। यदि सुप्तानां प्रमत्तानां रक्षकाणां प्रमादात्कन्यामपहरेत्स पैशाचः। यत्र सहायैः सहितो हत्वा भित्त्वा च शीर्षाणि रुदद्भ्यः पित्रादिभ्यो रुदतीं कन्यामपहरेत्स राक्षसः। नन्वासुरवदार्षोऽपि बहिष्करणीयः क्रयप्राप्तत्वाविशेषात्। अतएव काश्यपः—'क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते। न सा दैवे न पित्र्ये च दासीं तां कश्यपोऽब्रवीत्' इति। तदसांप्रतम्।

गोमिथुनस्य शुल्करूपताभावात् । शुल्कं हि नाम कन्यकाया देशकालानुरोधेन मूल्यतया परिकल्पितं द्रव्यम् । नहि सर्वत्र सर्वदा शुल्कस्येयत्तानियमोऽस्ति कन्याक्रये । तस्या देशतः कालतश्च न्यूनाधिकभावदर्शनात् । गोमिथुनं त्वार्षे सर्वदा सर्वत्रैकरूपमेव ॥ तथाचाह मनुः—'आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत् । अल्पो वापि महान्वापि विक्रयस्तावदेव सः' इति । तस्माद्देशकालाभ्यामियत्ताभेदविधुरेण गोमिथुनेनैवार्षस्य संपाद्यत्वेन क्रयक्रीतत्वाभावाद्धर्म्य एवार्षः । अतएव देवलः—'पूर्वे विवाहाश्चत्वारो धर्म्यास्तोयप्रधानकाः । अशुल्का ब्राह्मणाद्याश्च तारयन्ति द्वयोः कुलम्' इति ॥ ननु च गान्धर्वादिषु कथं भार्यापतिभावः, तत्र सप्तपदक्रमणाभावात् । यदाह यमः—'नोदकेन विना चाथ कन्यायाः पतिरुच्यते । पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे' । इति चेत्, उच्यते—गान्धर्वादिषु कन्यास्वीकरणात्पश्चादस्त्येव विवाहविध्यनुष्ठानम् । तदाह देवलः—'गान्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः । कर्तव्यश्च त्रिभिर्वर्णैः समर्थेन तु साक्षिकः' इति । समर्थेन वेदशास्त्राभिज्ञेन ॥ गृह्यपरिशिष्टान्तरेऽपि—'गान्धर्वासुरपैशाचा विवाहा राक्षसाश्च ये । पूर्वं परिश्रयस्तेषां पश्चाद्धोमो विधीयते' इति । परिश्रयः स्वीकरणम् । अकृते तु होमे न कार्यः परिश्रयः । तदुक्तं वसिष्ठबोधायनाभ्याम्—'बलादपहृता कन्या मन्त्रैर्यदि न संस्कृता । अन्यस्मै विधिवद्देया यथा कन्या तथैव सा' इति । अकृते तु होमे प्रायश्चित्तमाह त्रिकाण्डी—'अधर्म्येषु विवाहेषु ताम्बूलमनुमोदनम् । वाहनं भोजनं चैव वर्जयेत्सर्वथा द्विजः ॥ आसुरे तूपवासः स्याद्गान्धर्वे च त्रिरात्रकम् । राक्षसे चैव पैशाचे कार्यं चान्द्रायणं तथा' इति ॥ अत्र भगवान्—'कुलीनाय वरिष्ठाय श्रुतशीलादिभिर्गुणैः । द्विजन्मने समाच्छाद्य नववस्त्रेण कन्यकाम् ॥ अलंकृत्य च यद्दद्यात्सादरं सो-

दकं नतः । अयं ब्राह्मो विवाहः स्याद्देवर्षिपितृपूजितः ॥ या ब्राह्मेण विवाहेन सम्यग्दत्ता कुमारिका । तज्जातः पावयेत्पुत्रो मातापितृकुलोद्भवान् ॥ द्वादशद्वादशातीतान्पुरुषान्भाविनस्तथा । वस्त्रेण च समाच्छाद्य भूषयित्वा च शक्तितः ॥ ऋत्विजे कन्यकादानं वितते यज्ञकर्मणि । दैवो नाम विवाहोऽसौ ज्ञेयो दैवतसंमतः ॥ दैवोढकन्यकाजातो मातापितृकुलोद्भवान् । दशावरान्दश परान्पुनात्युभयतो नरान् ॥ सहैव धर्मं चरत इति यत्र कुमारिका । प्रदीयते विवाहोऽसौ प्राजापत्य इति स्मृतः ॥ अन्येष्वपि विवाहेषु धर्मस्य चरणं सह । यद्यप्युक्तं तथाप्यत्र विशेषोक्तिर्गृहाश्रमात् । आश्रमान्तरसंप्राप्तिनिषेधार्थेति गम्यताम् ॥ नचात्र तस्यां जीवन्त्यां विवाहस्य परिग्रहः । आश्रमान्तरयोगो वा मृतायां भवतस्तु तौ ॥ प्राजापत्यविवाहोढावधूपुत्रः स्ववंशजान् । अष्टावरानष्ट परान्पुनात्युभयतो नरान् ॥ यत्र गोमिथुनं दत्त्वा प्रदाद्भ्यः कुमारिकाम् । उद्वहेदार्षनामासौ विवाहस्त्वृषिसंमतः ॥ तस्यां जातः सुतो मातुः पितुश्च कुलसंभवान् । सप्तावरान्सप्त परान्पुनात्युभयतो नरान् ॥ यत्र कन्यावरौ छन्नं कृत्वा समयमादितः । जायापती भवावेति पश्चाद्बन्धुजनैरपि ॥ अनुज्ञातौ कृतोद्वाहौ भवेतां विधिपूर्वकम् । स गान्धर्वो विवाहः स्यात्प्रायः क्षत्रियसेवितः ॥ यत्रोपतोष्य[1] वित्तेनं दातॄन्कन्योपगम्यते । आसुरो नाम विज्ञेयो विवाहः स बहिष्कृतः ॥ यस्तु सुप्ते प्रमत्ते वा कन्याया रक्षके नरः । चौर्यादपहरेत्कन्यां पैशाचो नाम सोऽधमः ॥ यस्मिन्बलमुपाश्रित्य सहायैः सह साधकैः । समेत्य कन्यां बन्धुभ्यो रक्षिभ्योपि यथाबलम् ॥ हत्वा भित्त्वा च शीर्षाणि रुदद्भ्यो रुदतीं हरेत् । स राक्षसो विवाहः स्यात्प्रायः क्षत्रियशी-

पाठ०—1 यत्रोपतोष्य यतेन ।

स्विनः' इति ॥ अत्र ब्राह्मादिविवाहेषु उत्कृष्टफलमाह मनुः—'ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः । ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसंमताः ॥ रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः । पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः ॥ इतरेष्ववशिष्टेषु नृशंसानृतवादिनः । जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः' इति ॥ प्रशस्तविवाहचतुष्टयेपि तरतमभावमाह बोधायनः—'तेषां चत्वारः पूर्वे ब्राह्मणस्य तेष्वपि पूर्वः पूर्वः श्रेयान् इतरेषामुत्तरोत्तरः पापीयान्' इति । इति विवाहभेदाः ।

अथ कन्यावरणप्रकारः । एवमुक्तविवाहभेदेषु ब्राह्मविवाहस्य मुख्यत्वं हृदि निधाय तद्विधिं वक्तुमादौ वाग्दानरूपकन्यापरिग्रहणविधिमाह सूत्रकारः परिशिष्टरूपेण—'कन्यां परिणेष्यमाणो द्वौ चतुरो वा वरान्पितुराप्तान्प्रशस्ताचारकर्मणोऽनूचाना ऋजवः सन्तु पन्था इति प्रहिणुयात्ते तावतीभिः पुरन्ध्रीभिः सहिता मङ्गलगीततूर्यघोषाभ्यां कन्यागृहमेत्य शुभे पीठासने प्राङ्मुखमासीनाया दावज्ञातिगन्धस्रोपेतायाः कन्यायाः पाणौ फलं प्रदाय कल्याणे काले कन्यां वृणीरन् आसीनाः प्रत्यङ्मुखाश्च—अमिष्ठगोत्रोद्भवायामुष्य प्रपौत्रायामुष्य पौत्रायामुष्य पुत्राय श्रुतशीलनाम्ने वराय, वत्सगोत्रोद्भवाममुष्य प्रपौत्रीममुष्य पौत्रीममुष्य पुत्रीं सुशीलानाम्नीमिमां कन्यां भार्यात्वाय वृणीमह इति ब्रूयुः । अथवा दाता सभार्यो ज्ञातिबन्धुसमेतो यथोक्तमनघ वृणीध्वमिति ब्रूयादेवं त्रिः प्रयुज्य प्रदास्यामीति चोच्चैस्त्रिर्ब्रूयादथ ब्राह्मणा उक्तस्वस्त्ययनाः शिवा आपः सन्तु सौमनस्यमस्तु अक्षतं चारिष्टं चास्तु दीर्घमायुरस्तु शान्तिः पुष्टिस्तुष्टिश्चास्त्वित्युक्त्वैतद्वः सत्यमस्त्विति त्रिरनूद्य समानी व आकूतिः प्रमुमन्ताधिपसानस सक्षणिरित्येवं पठेयुः पुरन्ध्र्यः कन्यायै कल्याणान्कुलधर्मोपचारान्कुर्युः' इति ॥

पाठा०—१ धनवन्तो । २ वाग्दानमिदमेव ।

अथ वरणे तिथ्यादिविधिमाह श्रीधरीये नारदः—'पञ्चाङ्गशुद्धिदिवसे चन्द्रतारानलान्विते । विवाहभेऽस्योदये वा कन्यावरणमाचरेत् ॥ भूषणैः फलताम्बूलगन्धपुष्पाक्षतादिभिः । शुक्लाम्बरो गीतवाद्यैर्विप्राशीर्वचनैः सह ॥ गच्छेच्च कन्यकागेहं वरः प्रणयपूर्वकम् । तदा कुर्यात्पिता तस्याः प्रदानं प्रीतिपूर्वकम् ॥ कुलशीलवयोरूपवित्तविद्यायुताय च । वराय रूपसंपन्नां कन्यां दद्याद्यवीयसीम् ॥ संपूज्य प्रार्थयिता च शचीं देवीं गुणाश्रयाम् । त्रैलोक्यवल्लभां दिव्यां गन्धमाल्याम्बरावृताम् ॥ सर्वलक्षणसंयुक्तां सर्वाभरणभूषिताम् । अनर्घ्यमणिमालाभिर्भासयन्तीं दिगन्तरम् ॥ विलासिनीसहस्रौघैः सेव्यमानामहर्निशम् । एवंविधा कुमारी सा पूजान्ते प्रार्थयेदिति ॥ देवीन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि । विवाहं भाग्यमारोग्यं पुत्रलाभं च देहि मे' इति ॥

अथ विवाहकालमध्ये आशौचप्राप्तौ विचारः । अथ यथोक्तविधिना कृतस्नातकान्तकर्मणो वरस्य विधिवत्कृतकन्यावरणमारभ्य विवाहव्रतनिष्पत्तिपर्यन्तं मध्यवर्तिनि काले दीर्घकालाशौचे प्राप्ते तदपोद्याशौचस्य चन्द्रिकाकारेण प्रतिपादितत्वात्तत्प्रकारोऽत्र निरूप्यते । तत्र याज्ञवल्क्यः—'ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् । सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥ दाने विवाहे यज्ञे च संग्रामे देशविप्लवे । आपद्यपि च कष्टायां सद्यःशौचं विधीयते' इति । तत्रर्त्विक्शब्दार्थो मनुना निवृतः—'अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान्मखान् । यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते' इति । वृतो वरणेन संस्कृत इत्यर्थः । स च वरणसंस्कारोऽग्न्याधेयादौ वरणप्रभृति तत्प्रयोगपरिसमाप्तिपर्यन्तमनुवर्तत इति । तदनुवृत्तिपर्यन्तमृत्विजां दीर्घकालाशौचमध्येऽपि सद्यःशौचं विधीयत इति संबन्धः । दीक्षितो दीक्षाख्यसंस्कारवान् । स च संस्कारो दीक्ष-

णीयेष्ट्यादिभिरुत्पद्यते अवभृथस्नानेनचापैति । तथाच ब्रह्मपुराणम्—'तद्गृहीतदीक्षस्य त्रैविद्यस्य महामखे । स्नानं त्ववभृथो यावत्तावत्तस्य न विद्यते' इति । एतदुक्तं भवति । दीक्षणीयेष्ट्यादिभिरुत्पन्नो दीक्षाख्यसंस्कारो यावद्यजमाने पत्न्यां चानुवर्तते तावत्तयोर्दीर्घकालाशौचमध्येपि तदाशौचं न विद्यते सद्यःशौचविधानादिति ॥ सत्रिव्रतिदातृशब्दानामर्थाः संग्रहकारेण दर्शिता.—'सत्री गृहीतनियमो यज्ञे दानेपि दीक्षितः । चान्द्रायणाद्यनुष्ठाता व्रतीति ब्रह्मचार्यपि ॥ श्राद्धे च कृतसंकल्पो व्रती भोक्ता च कीर्तितः । दाता नित्यमनादाता वानप्रस्थोऽत्र कीर्तितः ॥ यज्ञे सोमयागादौ । दानेऽप्यन्नदाने[1] गृहीतनियमः । कृतसंकल्पः सत्रीत्यनेनोक्तः । यज्ञे गृहीतनियमो दीक्षितो भवति । तथा पुरस्तादुक्तदीक्षितशब्दसंनिधानाद्गोबलीवर्दन्यायेनात्र सत्रिशब्दो दीक्षितावस्थेतरगृहीतनियमे यजमाने वर्तत इति दर्शयितुं यज्ञदातृदीक्षित इत्युक्तम् । व्रतीत्यनेन चान्द्रायणादौ कृतसंकल्पः । तथा व्रतीत्यनेन पित्रादिश्राद्धे कृतसंकल्पः पुत्रादिः । भोक्ता भोजनार्थंनिमन्त्रितविप्रोपि कीर्तितः । तयोरपि व्रतयोगवत्त्वेन व्रतशब्दप्रवृत्तिनिमित्तसद्भावात् । यद्यप्युपनीतिव्रतिब्रह्मचारिणोपि प्रवृत्तिनिमित्तसद्भावेन व्रतशब्दो वर्तते तथापि व्रती ब्रह्मचारीति शब्दसंनिधानाद्गोबलीवर्दन्यायेन ब्रह्मचारिव्यतिरिक्तव्रतिषु वर्तत इति दर्शयितुं ब्रह्मचारीत्युक्तम् । दातृशब्देन वानप्रस्थोप्युपदिश्यते । असाधारणेन व्यपदेशा भवन्तीति न्यायात् । तदेतदभिसंधायोक्तं—'दाता नित्यमनादाता वानप्रस्थोत्र कीर्तितः' इति । अनादाता न व्रती गृहीतः । ब्रह्मवित् परिव्राजकः । तस्मिन्प्रायेण ब्रह्मज्ञानसद्भावात् । अत्र व्रतिषु व्रतनिवृत्तिपर्यन्तं प्राप्त-

---

पाठा०—1 यदवान्नदाने ।

दीर्घकालाशौचबाधेन सद्यःशौचं विधीयते । ब्रह्मचार्यादिषु तत्तदाश्रमेषु यावत्स्थितस्तावत्सद्यःशौचं प्राप्तदीर्घकालाशौचबाधेन विधीयत इत्यवगन्तव्यम् ॥ ननु सत्रिशब्देनैव यज्ञे च सद्यःशौचं सिद्धं तेन दाने विवाहयज्ञदानयज्ञयोः पुनरनेन विधानं व्यर्थम् । उच्यते—दाने तावद्व्रतादन्यत्रापि दानविशेषे कचित्सद्यःशौचविधानार्थं पुनर्दानवचनम् । असंकल्पितयज्ञेऽपि कचित्सद्यःशौचविधानार्थं पुनर्यज्ञवचनमिति न वैयर्थ्यम् । तथाच संग्रहकारः—'दाने विशिष्टे आर्तस्य व्याधिना शुद्धतोच्यते । यत्नित्यदोऽपि यो यत्तु दातुं हेमादि वाञ्छति । यज्ञे संभृतसंभारः' इति । व्याधिना आर्तस्य विशिष्टे दाने व्याधिपरिहारार्थे मृत्युमहिष्यादिदाने धर्मोपचयार्थदाने च शुद्धतोच्यते । सद्यःशौचमुच्यत इत्यर्थः । संभृतसंभार इत्यस्यार्थस्तूपरिष्टादवक्ष्यते ॥ अत्र विवाहादिषु सद्यःशौचं कस्येत्यपेक्षिते वराहपुराणे—'कन्यादाने च नो भवेत्' इति । विवाहविषये कन्याया लाजहोमादिकर्मणीति कन्यादाने विवाहकर्मणि कन्यायास्तद्दातुस्तत्परिग्रहीतुश्चोभयोर्नान्दीश्राद्धकन्यावरणप्रभृति विवाहसंस्कारनिष्पत्तिपर्यन्तं दातुःसंकल्पवरणादाशेषहोमान्तं वधूवरयोश्च दीर्घकालाशौचप्राप्तावपि तदाशौचं न भवेन्न विद्यते । विवाहव्रतनिष्पत्तेरक्षतारोपणादूर्ध्वं तावद्दातुर्नियम इत्यर्थः । विवाहविषयेऽपि सद्यःशौचविधानादित्यर्थः । शेषहोमान्तमिति कङ्कणसूत्रमोचनान्तमित्यर्थः । यावद्व्रतसमापनादित्युक्तत्वात् ॥ ॥ अत्र प्रसङ्गादाधानादिकर्मणां विशेषमाह संवर्तः—'आधानपौंस्नसीमन्तजातनामान्नकर्मसु । संकल्पकरणादूर्ध्वमन्तराशौचसंभवे । तत्तत्कर्मसमाप्त्यन्तं कर्तुर्नाशौचमिष्यते ॥ पुत्रजातश्रुतस्नानादानालच्छेदनावधि । नाशौचं विद्यते कर्तुर्मातुरेव विधीयते' इति । मातुरेवेत्येवकारश्रवणान्न पितुः ।

मातुस्त्वाशौचमस्त्येवेत्यर्थः । योन्युदरस्थमलसंभवात् ॥ व्यासोऽपि—'चौलोपनयने चैव संकल्पचरणात्परम् । व्रते ब्रह्मौदनं यावदाशौचं न विद्यते ॥ तावदाचार्यनियमो पटोः पालाशदर्शनात्' इति । पालाशदर्शनं पालाशहोमान्तम् । तेन मेधाजननान्तमित्यर्थः । 'आशौचं यदि संजातमनादृत्य तदाचरेत्' इत्यत्र आशौचमनादृत्य तच्छुभकर्म समाचरेदित्यर्थः । अत्र तत्कर्मसमाप्यन्त इति । 'यथोक्तकर्म विधिवत्करिष्य इति जाग्रतः । संकल्प्य नान्दीश्राद्धं च निर्वर्त्य विधिपूर्वकम् ॥ आरम्भस्तत्समाप्तौ तु कर्ता कर्मसमापणम् । कर्मणोऽन्त इति प्रोक्तः पुनः पुण्याहवाचनम् ॥ यावत्तावन्न चाशौचनियमो द्विजभोजनात्' इति ॥ अस्यानुप्रेयार्थः—'गर्भाधानपुंसवनसीमन्तजातकर्मनामान्नप्राशनकर्मसु यथोक्तकर्म नान्दीश्राद्धपूर्वकं करिष्ये इत्यादिपुनःपुण्याहपूर्वकं तत्कर्मसमापणपर्यन्तं कर्मान्तरा प्राप्तमाशौचमनादृत्य कर्म कुर्यादित्यर्थः । एवं नित्यनैमित्तिककर्मस्वपि ज्ञेयम् । चौले च परेद्युः कर्मसमाप्त्यन्तं कार्या । उपनये तु संकल्पादाब्रह्मौदनान्तं चतुरामेधाजननान्तं कार्या । विवाहे कन्यादातुरेव संकल्पनान्दीश्राद्धाक्षतारोपणान्तं वधूवरयोश्च कौतुकसूत्रविसर्जनान्तम् । अत्र कर्तृग्रहणात्तत्पत्न्या अपि ग्रहणम् ॥ ॥ अत्र विशेषमाह स्मृत्यन्तरेऽपि—'नरेन्द्रस्याभिमतिनां विवाहोपनयादिषु । सद्यःशौचं समाख्यात'मिति । नरेन्द्रस्य कस्मिन्कर्मणि सद्यःशौचमित्यपेक्षिते ब्रह्मपुराणम्—'राज्यनाशस्तु येन स्यादिना राज्ञः स्वमण्डले । प्रयाणतश्च संग्रामे होमे प्रास्थानिके सति ॥ मन्त्रादितर्पणे चापि प्रजानां शान्तिकर्मणि । गोमण्डनादौ वैश्यानां कृषिकालात्ययेऽपि ॥ आशौचं न भवेल्लोके सर्वत्रान्यत्र विद्यते' इति । अयमर्थः—'राज्ञः

१ मेधाजनने [illegible] होमपर्यन्तमित्यर्थः ।

स्वराष्ट्रे येन कर्मणा विना यत्कर्माकरणे प्रजापालनादिराज्यनाशस्तस्मिन्कर्मण्युपक्रान्तेपि, तथा प्रयास्यतः प्रास्थानिके प्रस्थाननिमित्तके होमे प्रस्तुते, तथा मन्त्रादिभिर्मन्त्रप्रचारैः दु(स्स्थ)ष्टग्रहतर्पणे प्रस्तुते, उपसर्गेण क्लेशितानां प्रजानां शान्तिकर्मणि प्रस्तुते, तथा वैश्यानां लोकाचारसिद्धगोमण्डनादिकर्मणि प्रस्तुते, तथा कृष्यादिकर्मार्थं विनायकादिपूजाकर्मणि च प्रस्तुते, राज्ञो वैश्यानां च आशौचं दीर्घकालतया न विद्यते, सद्यःशौचविधानात् । अन्यत्र पूर्वोक्तकर्मविषयेभ्योऽन्यत्र वैश्वदेवादिकर्मसु सर्वत्राशौचं विद्यते, तत्र सद्यःशौचविधानाभावादिति ॥ यत्त्वङ्गिरोवचनम्—'जनने मरणे चैव त्रिष्वाशौचं न विद्यते । यज्ञे विवाहकाले च देवयागे तथैव च' ॥ यज्ञः सोमयागादिर्वैदिकः । देवयागो मातृकादिदेवताभ्यो लौकिको गणयागः ॥ यदपि पैठीनसिवचनम्—'विवाहधर्मयज्ञेषु यात्रायां तीर्थकर्मणि । न तत्र सूतकं तद्वत्कर्म यज्ञादि कारयेत्' ॥ यच्च ब्रह्मपुराणवचनम्—'अथ देवप्रतिष्ठायां गणयागादिकर्मणि । श्राद्धे च पितृयज्ञे च कन्यादाने च नो भवेत्' इति । तान्येतान्युपक्रान्तयज्ञादिविषयाणि वचोभङ्ग्याः सद्यःशौचविधायकानि चेति मन्तव्यम् ॥ अतएव ब्रह्मपुराणे क्वचिदस्यापवाद उक्तः—'यज्ञार्थं बहुसंभारसंभृतस्यापि कुत्रचित्' इति । 'आशौचं नो भवेदि'ति पदत्रयमत्रानुषज्यते । तत्रश्चायमर्थः—'यज्ञार्थसंभृतबहुसंभारस्य उपकल्पितसमस्तयज्ञसाधनपदार्थस्याकृतयागसंकल्पस्याशौचापगमादूर्ध्वं वसन्तान्तर्गतपर्वकालासंभवेन तस्मिन्वत्सरे करिष्यमाणयज्ञादिकर्मविषये यज्ञसंकल्पात्पूर्वक्षणे शुद्धिर्भवतीति । यज्ञग्रहणं प्रतिष्ठादेरुपलक्षणार्थम् । अतएव विष्णुः—'न देवप्रतिष्ठाविवाहयोः पूर्वसंभृतयो'रिति । देवप्रतिष्ठाविवाहयोः संभृतसंभारयोरुपक्रमात्प्रागपि तत्कर्तुराशौचं न भवतीत्यर्थः । विशेषवचनात् । एतदुक्तं

भवति—यावति काले संभृतबहुसंभारधारणं कर्तुं शक्यते तावत्कालमध्ये प्रतिष्ठाद्यङ्गभूतं तत्कालान्तरं यत्र लभ्यते तत्र विषय एतत्संकल्पात्प्रागाशौचाभाव इति। स्मृत्यन्तरेपि—'यज्ञे संभृतसंभारो विवाहे श्राद्धकर्मणि'। संभृतसंभार इति सर्वत्र संबध्यते। अस्यापि वैष्णववचनसमानविषयत्वमवगन्तव्यमिति। स्वल्पसंभृतसंभारस्याधैव वा कालान्तरे वाभिसंकल्पितस्य च संकल्पादूर्ध्वमेवाद्यभावित्वं न प्राक्। बहुसंभृतसंभारादित्युक्तत्वात्। तदाह संवर्तः—'प्रारंभो वरणं यज्ञे संकल्पो व्रतसत्रयोः। नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया॥ दीक्षान्तोऽवभृथो यज्ञे कङ्कणान्तं वधूवरौ। व्रते व्रतौदनं यावद्बटोः पालाशदर्शनम्॥ तावत्राशौचमित्याहुः श्राद्धे विप्राङ्घ्रिशोधनात्' इति। वधूवरावित्युक्तत्वेन विवाह उपलक्ष्यते। व्रते उपनयने। पालाशदर्शनं पालाशहोमान्तम्। 'श्राद्धे कूर्चविसर्जन'मिति वा पाठः।

अथ कन्यापरिग्रहविचारः। अत्र विधिवत्कन्यां परिगृह्य वरो यदि केनचित्कारणेन देशान्तरं व्रजेत्तदा किं कर्तव्यमित्याह नारदः—'परिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत्। त्रीनृतून्समतिक्रम्य कन्यान्यं वरयेद्वरम्' इति। त्रीनृतून् षण्मासान्। आर्षविवाहे निर्णयमाह स एव—'प्रदाय शुल्कं गच्छेद्यः कन्यायाः स्त्रीधनं तथा। धार्या सा वर्षमेकं तु देयान्यस्मै विधानतः' इति। कात्यायनोऽपि—'अनेकेभ्योऽपि दत्तायामनूढायां तु तत्र वै। पुराऽऽगतश्च सर्वेषां लभते तदिमां सुताम्॥ अथागच्छेत चोढायां दत्तं पूर्ववरो हरेत्' इति। कन्या पूर्वं यस्मै प्रतिश्रुता तस्यामनूढायां स एव तां लभते। अन्येनोढायां तु स्वदत्तं शुल्कमात्रमाहरेन्न कन्यामित्यर्थः। वसिष्ठस्तु—'अद्भिश्च वाचा दत्तायां म्रियेतादौ वरो यदि। न च तौ दंपती स्यातां

कुमारी पितुरेव सा'। यमोपि—'वरयिता तु यः कश्चित्प्रणश्येत्पुरुषो यदि। रक्तागमांस्त्रीनतीत्य कन्यान्यं वरयेद्वरम्' ॥ रक्तागमो रजोदर्शनम् ॥ यत्तु याज्ञवल्क्येनोक्तम्—'सकृत्प्रदीयते कन्या हरंस्तां चोरदण्डभाक्' इति तचादुष्टवराभिप्रायम्। तथाच नारदः—'दत्त्वा कान्ताय यः कन्यां वराय न ददाति ताम्। अदुष्टश्चेद्वरो राज्ञा स दण्ड्यश्चोरदण्डभाक्' इति ॥ अत्र दुष्टशब्देन दुष्कुलत्वं दुःशीलत्वं चोपलक्ष्यते। नचेदं सामान्यवचनमिति शङ्कनीयम्। ततः स्वयमेवाह याज्ञवल्क्यः—'दत्तामपि हरेत्पूर्वं श्रेयांश्चेद्वर आव्रजेत्' इति। अयमर्थः—यस्मै वाचा दत्ता कन्या ततोऽन्यश्चेत्कुलतो गुणतश्च प्रशस्तवरो लभ्येत तस्मै देया न दुष्टाय पूर्वस्मै वराय प्रतिश्रुत्याप्यधर्मेण संयुक्ताय दद्यादिति। इति कन्यापरिग्रहणविधिः।

अथ विवाहवेदिकालक्षणम्। अथेदानीं कन्यादाता वाग्दानानन्तरं कन्यादानार्थं विवाहहोमार्थं च विधिवद्विवाहवेदिकां कारयेत्। तद्विधानं नारदेन दर्शितम्—'हस्तोच्छ्रितां चतुर्हस्तैश्चतुरस्रां समंततः। स्तम्भैश्चतुर्भिः सुश्लक्ष्णां वामभागे तु सद्मनि ॥ समण्टपां चतुर्दिक्षु सोपानैरतिशोभिताम्। प्रागुदक्प्रवणां रम्भास्तम्भहंसशुकादिभिः ॥ विचित्रैणाङ्कितैः कुम्भैर्विहितैस्तोरणाङ्कितैः। भृङ्गारपुष्पनिकरैर्वर्णकैः समलंकृताम् ॥ विप्राशीर्वचनैः पुण्यस्त्रीभिर्दीपैर्मनोरमाम्। वादित्रनृत्तगीताद्यैर्हृदयानन्दिनीं शुभाम्। एवंविधामारुरुक्षेन्मिथुनं साग्निवेदिकाम्' इति। इति विवाहवेदिकानिर्माणलक्षणविधिः।

अथ वरस्य कन्यागृहगमनविधिरभिधीयते। तत्र कारिका—'अपरेद्युः कृतस्नानोऽहतवस्त्रधरो वरः। अलंकृतः सितच्छत्रो पदातिर्ज्ञातिबन्धुभिः ॥ वृतो वधूगृहं गत्वा मधुपर्केण पूजितः' इति। अत्र गृह्यपरिशिष्टम्—'सुस्नातालंकृतो वरः स्वस्ति-

वाचयित्वा समाहितः स्वर्चितैर्ब्राह्मणैः पुरन्ध्रीभिर्ज्ञातिबान्धवैरपदातिर्मङ्गलगीततूर्यघोषाभ्यां संबन्धिनो गृहमेत्य' इति । अत्र भगवान्—'पुण्ये मुहूर्ते कुर्वीत विवाहं विधिवद्द्विजः । तत्राभ्युदयिकं श्राद्धं पूर्वेद्युर्वाऽपरेहनि ॥ अपरेद्युः कृतस्नानो धृतधौताम्बरद्वयः । भूषितो गन्धमाल्याद्यैर्वन्दिताभीष्टदेवतः ॥ ब्राह्मणान्भोजयित्वा तैः कृतपुण्याहवाचनः । कृतकौतुकबन्धश्च मित्रबान्धवसंयुतः ॥ यानं यथार्हमारुह्य यातव्यं च वधूगृहम् । तस्य द्वाराद्बहिः स्थित्वा श्वशुरेणाऽभिमुखागतैः । प्रदीपपूर्णकुम्भादिपाणिभिर्वनिताजनैः । कृताभ्युद्गमनो गेहं प्रविशेत्सह बन्धुभिः' इति ॥ ब्रह्मपुराणे तु—'पूर्वेद्युः स्वस्तिवचनं नान्दीश्राद्धसमन्वितम् । अपरेद्युः कृतस्नानोऽहतवस्त्रधरो वरः ॥ भुक्त्वा निश्यग्निः(?) पूर्वाह्णे उद्वहेन्निशि सर्वदा । भुक्त्वा समुद्वहेत्कन्यां सावित्रीग्रहणे तथा ॥ उपोषितस्तु तां दद्यादर्चिताय वराय च । क्षीरान्नं सात्विकाहारं भुक्त्वा कन्यां समुद्वहेत् ॥ भूषणैः फलताम्बूलैर्गन्धपुष्पाक्षतादिभिः । शुक्लाम्बरवरैर्वाद्यैर्विप्राशीर्वचनैः सह । गच्छेच्च कन्यकागेहं वरश्च स्त्रीपुरस्सरम्' इति ॥ ॥ अथ वधूवरभोजनविधिः । बोधायनः—'स्रग्वी भुक्तवान्प्रनोदपाणिरपदातिर्गत्वा वधूज्ञातिभिरतिथिवदर्चितः स्नातामहतवाससं गन्धानुलिप्तां स्रग्विणीं भुक्तवतीमिषुहस्तां प्रदत्तां वधूं समीक्षेत' इति । व्यासोऽपि—'भुक्त्वा समुद्वहेत्कन्यां सावित्रीग्रहणं तथा । उपोषितस्तु तां दद्यादर्चिताय द्विजातये' इति ॥ इति कन्यागृहगमनविधिः ॥

अथ मधुपर्कविधिः ॥ अथेदानीमागतस्य वरस्य कन्यादात्रा कर्तव्यमधुपर्कविधिरभिधीयते । तत्र कारिका—'कन्यादातृभिरत्रैषो मधुपर्को मयोच्यते ॥ वरस्य यस्य या शाखा तच्छाखागृह्यचोदितः । मधुपर्कः प्रदातव्यो ह्यन्यशाखेऽपि दातरि ॥

विष्टराद्युपकल्प्यैनमुपवेश्यासने शुचौ । अत्रोपकल्पितं पूर्वं विष्टरं त्रिर्निवेदयेत् ॥ उत्तराग्रे तदंवर्ष्मेत्यस्मिन्नुपविशेद्वरः । एवमेवे-
तरेषां च पद्यानां त्रिर्निवेदनम् ॥ निवेदितेन पाद्येन पादौ प्रक्षालयेद्वरः । प्रक्षालयित्रे विप्राय दक्षिणाङ्घ्रिं प्रयच्छति । पश्चात्सव्यं
तु शूद्राय सव्यं पूर्वं प्रयच्छति ॥ गन्धादियुक्तमर्घ्यं च प्रतिगृह्य निवेदितम् । वेदिताचमनीयापामेकदेशं ततो वरः ॥ उक्त्वा-
ऽमृतोपस्तरणमसिमन्त्रं पिबेदपः । अनन्तरेण शौचार्थं पूर्वमाचमनं त्विह ॥ शौचार्थाचमनं कार्यमेवेति प्राह वृत्तिकृत् । आनीयमा-
नमीक्षेत मित्रस्यत्वेतिमन्त्रतः ॥ मधुपर्कमथानीतं पूर्वनत्रिर्निवेदितम् । देवस्यत्वेति मन्त्रेण गृह्णात्यञ्जलिना ततः ॥ मधुवातातृचेनैव
मधुपर्कमवेक्षते । निदधाति च तत्पात्रं सव्ये पाणावतः परम् ॥ अङ्गुष्ठोपकनिष्ठाभ्यामालोड्य त्रिः प्रदक्षिणम् । वसवस्त्वादिभि-
र्मन्त्रैर्दिक्षु पूर्वादिषु क्रमात् ॥ निमृज्याङ्गुलिलेपं तु भूतेभ्यस्त्वेति मन्त्रतः । त्रिरुद्धृत्य त्रिरुत्क्षिप्य भूमौ पात्रं निधाय च । प्राश्ना-
त्यस्यैकदेशं तु विराजोदोह इत्यथ ॥ आचम्य पूर्ववत्प्राश्य विराजो दोहमशीय च । आचम्य तद्वत्प्राश्नीयान्मयि दोह इति त्वथ ॥
विनियोगं च कुर्वीत शिष्टस्याप्तोक्तमार्गतः । आचम्याथामृतापीति पिबेदाचमनीयकम् ॥ आचम्याचमनीयाम्बु पिबेत्सत्यं यशस्त्विति ।
आचान्तः पुनराचामेदथ गां त्रिर्निवेदिताम् ॥ ततो वरो जपेन्मातारुद्राणां दुहितेत्यृचम् । अथो ओमुत्सृजेत्याह मैपं गामुत्सृजेत च ॥
गन्धमाल्याम्बरैस्तद्वद्भूषणैः पूजयेद्वरम्' इति । इदमत्र गृह्यम्—'ऋत्विजो वृत्वा मधुपर्कमाहरेत्स्नातकायोपस्थिताय राज्ञे चाचार्या-
य च श्वशुरपितृव्यमातुलानां चैकस्मिन्पात्रे दधनि मध्वानीय सर्पिर्वा मध्वलाभे विष्टरः पाद्यमर्घ्यमाचनीयं मधुपर्को गौरित्येतेषां
त्रिस्त्रिरेकैकं वेदयन्ते । अहं वर्ष्म सजातानां विद्युतामिव सूर्यः । इदं तमधितिष्ठामि यो मा कश्चाभिदासतीत्युदग्रे विष्टर उपवि-

शेदाक्रम्य वा पादौ प्रक्षालयीत दक्षिणमग्रे ब्राह्मणाय प्रयच्छेत्सव्यं शूद्राय प्रक्षालितपादोऽर्घ्यमञ्जलिना प्रतिगृह्याथाचमनीयेनान्वाचामत्यमृतोपस्तरणमसीति मधुपर्कमाह्रियमाणमीक्षेत मित्रस्य त्वा चक्षुषा प्रतीक्ष इति मित्रस्य त्वा चक्षुषा समीक्षे मित्रस्य त्वा चक्षुषाऽनुवीक्ष इति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीति तदञ्जलिना प्रतिगृह्य मधुवाता ऋतायत इति तृचेनावेक्ष्यानामिकया चाङ्गुष्ठेन च त्रिःप्रदक्षिणमालोड्य वसवस्त्वा गायत्रेण छन्दसा भक्षयन्त्विति पुरस्तान्निमार्ष्टि रुद्रास्त्वा त्रैष्टुभेन छन्दसा भक्षयन्त्विति दक्षिणत आदित्यास्त्वा जागतेन छन्दसा भक्षयन्त्विति पश्चाद्विश्वेत्वा देवा आनुष्टुभेन छन्दसा भक्षयन्त्वित्युत्तरतो भूतेभ्यस्त्वेति मध्यात्रिरुद्गृह्य त्रिरुत्क्षिप्य विराजो दोहोसीति प्रथमं प्राश्नीयात् विराजो दोहमसीयेति द्वितीयं मयि दोहः पद्यायै विराज इति तृतीयं न सर्वं न तृप्तिं गच्छेद्ब्राह्मणायोदगुच्छिष्टं प्रयच्छेदलाभेऽप्सु सर्वं वाऽथाचमनीयेनान्वाचमत्यमृतापिधानमसीति सत्यं यशः श्रीर्मयि श्रीः श्रयतामिति द्वितीयमाचान्तोदकाय गां वेदयन्ते हतो मे पाप्मा पाप्मा मे हत इति जपित्वों कुरुतेति कारयिष्यन् मातारुद्राणां दुहिता वसूनामिति जपित्वोमुत्सृजतेत्युत्स्रक्ष्यन् नामांसो मधुपर्को भवति भवति' इति । अस्यार्थः—ऋत्विजो वृत्वा वृतानां च आहरेद्द्यादित्यर्थः । उपस्थिताय कृतसमावर्तनाय तस्मिन्नहनि गृहानभ्यागताय, विवाहार्थिने च, राज्ञे अभिषिक्ताय चोपस्थिताय, श्वशुरपितृव्यमातुलेभ्यो वर्षे पर्यभ्यागतेभ्यश्च । एषां समासेन निर्देशस्तत्तुल्यत्वज्ञापनार्थः । तेन स्नातकाय तदहरेव देयः । 'यत्रैनं पूजयिष्यन्तो भवन्ती'ति वचनात् । विवाहार्थिने च । राज्ञे तदहरहः, अभ्यागताय वराय, आचार्यादीनां प्रति वत्सरमुषित्वागतानां शाखान्तरविशेषोपलब्धेः । दधनि—लाभे । आनायतिस्त्र

सेचनकर्मा। आसिन्चेत्यर्थः। सर्पिर्वा मध्वलाभ इति वचनं मध्वलाभे अयमेव प्रतिनिधिर्भवति नान्यस्तैलादिरित्येवमर्थम्। अल्पस्वा-द्वातुः कर्म पूर्वमाह। विष्टरः—म्यवा। विष्टर इत्यासनम्। विष्टरमारभ्यैतेषां द्रव्याणां मध्ये एकैकं द्रव्यं त्रिस्त्रिर्निवेदयेदिति। अत्र प्रथमतो विष्टरोविष्टरोविष्टर इति त्रिर्निवेदयेत्। पाद्यार्थमर्घ्यार्थमाचमनीयार्थं चोदकं तथोक्तम्। एतेषामितिवचनमेतेषामेव त्रिर्निवेदनं यथा स्याद्भोजनस्य माभूदित्येवमर्थम्। भोजनं च देयमिति वक्ष्यामः। ऋत्विजां मधुपर्कदाने द्वे गती संभवतः—पदार्थानुसमयः काण्डानुसमय इति। तत्र पदार्थानुसमयो नाम सर्वेषां वरणक्रमेण विष्टरं दत्वा ततः पाद्यं ततोऽर्घ्यमिति। काण्डानुसमयो नाम वरणक्रमेण विष्टरं दत्वा ततः पाद्यं ततोऽर्घ्यादीन्येकैकस्यैव पूर्वं विष्टरादि गोनिवेदनान्तं समाप्य ततोऽन्यस्य सर्वं ततोऽन्यस्येति। अथ प्रतिग्रहीतुः कर्माह—अहंवर्ष्मेत्यादि मन्त्रेण उत्तराग्रे विष्टर उपविशेत्। अथवा पद्भ्यां मन्त्रेण विष्टरमाक्रम्योपविशेत् पद्भ्यामाक्रम्य वा विष्टरौ एतयोर्विकल्पः। पश्चात्सव्यम्। कुतः। अग्रेवचनात्। पादौ—द्राय। यदा ब्राह्मणः प्रक्षालयिता तदा दक्षिणं पादमग्रे प्रयच्छेत् ततः सव्यम्। यदा शूद्रः प्रक्षालयिता तदा तस्मै सव्यं पादमग्रे प्रयच्छेत् ततो दक्षिणम्। क्षत्रियवैश्यौ यदा प्रक्षालयितारौ तदा सव्यं वा पूर्वं दक्षिणं वा नास्ति नियमः। प्रक्षालयतीतेति रूपसिद्धिश्चिन्त्या। प्रक्षालित—प्रतिगृह्य। प्रक्षालितपादग्रहणमानन्तर्यार्थं प्रक्षालनानन्तरमर्घ्यमेव गृह्णीयादिति। गन्धमाल्यादिसंयुक्तमुदकमर्घ्यमिस्युच्यते। अथा—सीति। अथशब्दस्त्वानन्तर्यार्थः अर्घ्यानन्तरमाचमनीयमेवेति। तेन गन्धमाल्यादीनि परिसमाप्ते कर्मणि दातव्यानि। आचामतीति उदकं पिबतीत्यर्थः। अत्र शौचार्थमाचमनं न भवति। कुतः। स्मृतेः—'मधुपर्के च सोमे च अप्सु प्राणा-

हुतीषु च नोच्छिष्टा भवन्ती'त्युत्तरत्र विधानात्। आचान्तोदकाय गामित्येनमेके। तदयुक्तम्। कुतः। सोमेऽनुच्छिष्टविधानात्। यत्राचमनं न प्रतिषेधति तत्र शौचार्थमाचमनं भवतीति गम्यते। आचान्तोदकमन्यार्थम्। मधु—तृतीयं। मधुपर्कमाह्रियमाणमानीयमानमीक्षेत मन्त्रेण। अथ वरो मध्येमार्गमानीयमानं मधुपर्कं मित्रस्यत्वेति मन्त्रेणावेक्षेत। ततस्त्रिर्निवेदितं मधुपर्कं देवस्यत्वेति मन्त्रेणाञ्जलिना प्रतिगृह्णीयात्। अनामिकेति। केचिन्मध्यमामाहुः। कुतः। देशेनैव समाख्या नतु तस्या नाम विद्यतेऽङ्गुष्ठादिवत्। अन्येतूपकनिष्ठिकामाहुः। कुतः। कनिष्ठिकया ह्यसौ व्यपदिश्यते नतु तस्या नामास्तीति। आगमाद्विशेषो ज्ञेयः। मधुवाता ऋतायत इति तृचेनावेक्ष्य ततः सव्ये पाणौ कृत्वा प्रदक्षिणमालोड्य वसवस्त्वेति पुरस्तान्निमार्ष्टि अङ्गुलिगतं लेपमपनयतीत्यर्थः। एवं रुद्रास्त्वा त्रैष्टुभेनेति दक्षिणतः। आदित्यास्त्वा जागतेनेति पश्चात्। विश्वेत्वादेवाइत्युत्तरतो निमृज्य भूतेभ्यस्त्वेति मन्त्रेण मध्यात्त्रिरुद्गृह्य त्रिरुत्क्षिप्य त्रिर्निमार्ष्टि। ऊर्ध्वं त्रिरुत्क्षिपतीत्यर्थः। अत्र प्रत्युत्क्षेपणं मन्त्रावृत्तिरुक्ता। ततो भूमौ निधाय पात्रं विराजोदोहोसीति मन्त्रेण मधुपर्कैकदेशमादाय प्राश्य लौकिकेनोदकेनाचम्य। अत्र शुद्ध्यर्थमाचमनम्। पुनः पूर्ववद्गृहीत्वा विराजो दोहमशीयेति मन्त्रेण प्राश्य पूर्ववदाचम्य। पुनः पूर्ववद्गृहीत्वा मयि दोह इति तृतीयमुद्ग्राहं प्राशयेत्। संख्यावचनानि तु सर्वप्राशनपक्षे त्रिभिरेव मन्त्रैर्यथा सर्वं प्राशितं भवति तथा प्राश्नीयादित्येवमर्थं इत्येवं भाष्यकारः। अन्ये त्वन्यथा व्याचख्युः—भूतेभ्यस्त्वेति मध्यात्त्रिरुद्गृह्य विराजो दोहोसीति प्रथममुद्ग्राहं प्राश्नीयात्। विराजो दोहमशीयेति द्वितीयमुद्ग्राहम्। मयि दोह इति तृतीयमुद्ग्राहम्। तृतीयवचनं सर्वप्राशनपक्षे तृतीयेन प्राशनेन यथा सर्वं प्राशितं भवति तथा प्राश्नीयादित्येनमर्थम्। पद्यायै

विराज इत्यत्र विराज इति षष्ठी। कुतः। पूर्वयोस्तथा दृष्टत्वात्। पद्यायै इत्यपि चतुर्थी षष्ठ्यर्थे । तेन तत्सामानाधिकरण्येसत्यपि षष्ठ्येव युक्ता कल्पयितुम्। न सर्वं प्राश्नीयात् तृप्तिं च न गच्छेत्। ब्राह्मणायोच्छिष्टम्। अत्र तृप्तिं पर्याप्तिं च न गच्छेत्। उद्धृतादवशिष्टं मधुपर्कमुदङ्मुखो ब्राह्मणाय प्रयच्छेत्। ब्राह्मणालाभेऽप्सु निक्षिपेत्। सर्वं प्राश्नीयाद्वा। अथाचमनीयेनेत्यादि यत्तत्पूर्वमाचमनीयं निवेदितं तदेकदेशममृतापिधानमसीति पीत्वा पुनः कर्माङ्गमाचमनं लौकिकेन जलेन। पुनरपि तदेवाचमनीयमेकदेशतो गृहीत्वा सत्यं यश इति मन्त्रेण पीत्वा पुनः शुद्ध्यर्थमाचमनं कुर्यात्। द्वितीयग्रहणमाचमनीयप्राप्त्यर्थम्। इतरथा मन्त्रस्योत्तरेण संबन्धः स्यात्। आचान्त इति। आचान्तग्रहणं शौचार्थमाचमनं कृत्वा कर्माङ्गमप्याचमनं कुर्यादित्येवमर्थम्। उदकवचनमाचमनीयनिवृत्त्यर्थम्। तेनाचमने उदकान्तरं भवति॥ हतो मे पाप्मा पाप्मा मे हत इति मन्त्रं जपित्वा ओंकुरुतेति ब्रूयात्। यदि कारयिष्यन्मारयिष्यन्भवति तदा च दाता आलभेत। तत्र देवताः प्रागुक्ताः। यद्युत्स्रक्ष्यन्भवति तदा मातारुद्राणामित्येतामृचं जपित्वा ओमुत्सृजतेति ब्रूयात्। नामांस इति। मधुपर्काङ्गं भोजनममांसं न भवतीत्यर्थः। कुतः। मांसस्य भोजनाङ्गत्वेन लोके प्रसिद्धत्वात्। अनेनाभ्युपायेन भोजनमप्यत्र विहितं भवति। पशुकरणपक्षे तन्मांसेन भोजनम्। उत्सर्जनपक्षे मांसान्तरेण। अध्यायान्तलक्षणार्थं द्विर्वचनं मङ्गलार्थं चेति॥ ॥ अत्र भगवाञ्शौनकः—'मधुना सर्पिषा वापि सुसंपृक्तं भवेद्दधि। मधुपर्क इति प्राहुर्याज्ञिकैः सोऽभिधीयते॥ मधुपर्कं तदा दद्याद्वरायास्मै वधूपिता। तत्रादावासनं दद्यात्कूर्चं दर्भैर्विनिर्मितम्॥ वराय विष्टर इति त्रिरुच्चार्य वरोऽप्यथ। अहं वर्ष्मसजातानामित्यायां स्वैलिकीमृचम्॥ उच्चार्योपविशेत्तस्मिन्नुदगग्रे तु कूर्चके। अथवाक्रम्य पा-

दाभ्यां कूर्चमासीत पूर्ववत् ॥ निवेदिताभिरद्भिः पाद्यमित्यद्भिर्मधुपर्कदः । प्रक्षालयेद्वरस्याङ्घ्रिं दक्षिणं प्रागथोत्तरम् ॥ वरोऽथ लौकिकं तोयमाचम्य त्रिर्निवेदितम् । आदायाचमनीयाङ्कं तस्मादुद्धृत्य किंचन ॥ अमृतोपस्तरणमसीत्युच्चार्यैव तु तत्पिबेत् । पीत्वा शुद्ध्यर्थमाचम्य लौकिकं सलिलं ततः ॥ मधुपर्कमवेक्षेत पूर्ववत्त्रिर्निवेदितम् । आनीयमानं मार्गस्थं मित्रस्यत्वेति मन्त्रतः ॥ देवस्य त्वेति यजुषाञ्जलिना प्रतिगृह्य तम् । मधुवाताऋतायत इत्याद्यं तृचमीरयेत् ॥ वीक्ष्याञ्जलिस्थमेवाथ तत्पुनर्दक्षिणेतरे । हस्ते निधायाङ्गुष्ठानामिकाभ्यां च प्रदक्षिणम् । त्रिरालोड्य ततो मन्त्रैर्वसवस्त्वादिकैश्च तम् । किंचित्क्षिप्त्वा प्रतिदिशं ततो मध्याच्च किंचन ॥ आदाय भूतेभ्यस्त्वेति मन्त्रमुक्त्वा त्रिरुत्क्षिपेत् । मन्त्रः स्यात्क्षेपणस्यापि त्रिरभ्यासं समाचरेत् ॥ ततो विराजो दोहोसीत्याद्यं मन्त्रत्रयं क्रमात् । उच्चार्य मधुपर्कस्य किंचित्किंचित्पिबेदथ ॥ प्रतिप्राशनमाचामेल्लौकिकं चापि शुद्धये । न सर्वं प्रपिबेत्तं तु न तृप्तिमपि भावयेत् ॥ मधुपर्कं पीतशिष्टं विप्रायोदङ्मुखस्ततः । प्रदद्याद्ब्राह्मणालाभे प्रक्षिपेत्सलिलेपि तत् । स्वयं पिबेद्वा निःशेषमाचामेच्च तथा पुनः ॥ अपिधानमसीत्यन्तममृतेत्यादिकं यजुः । उच्चार्याचमनीयाम्भःशेषं किंचित्पिबेत्पुनः ॥ आचामेच्च यथापूर्वं लौकिकं सलिलं ततः ॥ सत्यं यशः श्रीरित्याद्ययजुषाचमनोदकम् । पीत्वा निःशेषमाचामेद्विशुद्ध्यै लौकिकं जलम् ॥ अथाचान्तोदकायास्मै दाता गां त्रिर्निवेदयेत् । हत्वाऽनले पक्तुमिच्छेत्तां गां यदि वरः स्वयम् ॥ ततो हतो मे पाप्मादि यजुषा जपमाचरेत् । पश्चादोंकुरुतेत्येवं ब्रूयाद्वाऽथ जिहासति ॥ तदापि मातारुद्राणां दुहितेत्यादिकामृचम् । जप्त्वोमुत्सृजतेत्येवं ब्रूयादोमुक्तिपूर्वकम् । दाताथ गन्धमाल्याद्यैर्विधिनाभ्यर्चयेद्वरम् । पश्चात्तेन सहायातांस्तद्बन्धूनपि पूजयेत्' इति ॥ ॥ तत्र मधुपर्कदानं स्नातका-

दिवरशाखानुसारेण कार्यम् । तथाच गृह्यपरिशिष्टम्—'वरस्य यस्य या शाखा तच्छाखागृह्यचोदितः । मधुपर्कः प्रदातव्यो ह्यन्यशाखेऽपि दातरि' इति । संवर्तोऽपि—'आगताय वरायास्मै मधुपर्कं प्रकल्पयेत् । दाताऽर्हते विधानेन वरशाखोक्तमार्गतः' इति ॥ भारद्वाजोऽपि—'कन्यादाता वरं सम्यङ्मधुपर्केण पूजयेत् । वरशाखानुसारेण ततः कन्यां प्रदापयेत्' इति ॥ यत्तु कपर्दिवचनम्—'जातस्य जातकर्मादि विवाहान्तं पिता चरेत् । पश्चात्स्वाह्वाधिकारत्वात्स्वयमेवाध्वरः स्मृतः' इति । यच्च देवस्वामिवचनं—'स्वशाखाविधिनाभ्यर्च्य मधुपर्कादिना वरम् । ततः कन्यामलंकृत्य दाता तस्मै प्रदापयेत्' इति च, तद्गान्धर्वादिविषयमित्याचार्यादिभिरनादृतम् ॥ अत्र विशेषमाहाचार्यः—'ब्राह्मादिषु विवाहेषु वरशाखोक्तधर्मतः । मधुपर्केण संपूज्य कन्यादाता ततो वरम्' इति । 'गान्धर्वादिषु यत्नेन मधुपर्कं स्वशाखया । दाता कुर्याद्विधानेन स्नातकं विधिनार्चयेत्' इत्यलमतिप्रसङ्गेन ॥

॥ अथ विष्टरलक्षणम्—'कतिभिस्तु भवेद्ब्रह्मा कतिभिर्विष्टरो मतः । पञ्चाशता भवेद्ब्रह्मा तदर्धेन तु विष्टरः ॥ ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः । दक्षिणावर्तको ब्रह्मा वामावर्तस्तु विष्टरः' इति ॥ अत्र कलौ गवालम्भनं निषिद्धमित्युक्तमादित्यपुराणे—'कन्यायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा । कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्' इति ॥ इति मधुपर्कविधिः ॥

अथ निरीक्षणम् । एवं कृतमधुपर्काय वराय दातव्यकन्याविवाहविधिरभिधीयते । तत्र कारिका—'स्नातालंकृतकन्यायाः प्राङ्मुख्याः प्रत्यगाननः । ईक्षेत तण्डुलस्थाया वरस्तस्य मुखं च सा ॥ मुहूर्ते शोभने सम्यक् क्षिपेतां मुखयोर्मिथः । सगुडं जीरकं कन्यां वृणुयादथ तां वरः' इति ॥ संग्रहे—'कन्यावरणकाले तु प्राङ्मुखीं वरयेद्वधूम् । पश्चिमास्यं वरं स्थाप्य

द्रोणमाने तु तण्डुले' इति । शाकलोपि—'प्राङ्मुखीं वृणुयात्कन्यां गोत्रसंबन्धपूर्वकम् । प्रत्यङ्मुखं वरं कृत्वा वृणुयाद्वधुपूर्वकम्' ॥ शातातपीये बोधायनः—'प्राङ्मुखं तं वरं कुर्याद्वरुणाभिमुखीं वधूम् । कन्यावरणकाले तु दानकाले विपर्ययः ॥ प्राङ्मुखः प्रतिगृह्णीयात्प्राङ्मुखं वरयेद्वरम् । वृणुयाद्गोत्रनामाद्यैर्वरुणाभिमुखं स्थिताम्' इत्यादिवचनद्वैविध्यसमवलम्बाच्च स्वगृह्यविच्छिष्टाचार एव प्रामाण्यम् ॥ कारिका—'असावमुकगोत्रस्य पुनः पौत्रः प्रपौत्रकः । एतद्गोत्रामिमामस्य पुत्रीं पौत्रीं च नप्तृकाम् ॥ वृणेऽहं कन्यकां साध्वीं श्रीरूपामित्यतः परम् । वरेणैवं वृतां कन्यां तत्पिता प्रददाति ताम् ॥ पुत्रायास्य च पौत्राय नप्त्रेऽस्मामुकगोत्रिणे । अस्माअमुकगोत्रस्य पुत्रीं पौत्रीं च नप्तृकाम् ॥ श्रीरूपैषा मया दत्ता तुभ्यं श्रीधररूपिणे । इत्युक्त्वोदकपूर्वां तां दत्त्वा स्वस्तिपदं वदेत् ॥ वरोऽथ प्रतिगृह्णीयात्स्पृशेत्क इति मन्त्रतः' इति ॥ ॥ अथानुदानम् । अभ्यावहति यत्किंचित्कन्यादाता ततः परम् । गोभूहिरण्यदास्यादींस्तस्मै दद्यात्स्वशक्तितः ॥ अथ गोभूहिरण्यादिना वरपरितोषमावहति करोतीति व्युत्पत्त्या आवहनी नाम पारितोषिकी क्रिया । आवहन्यां अधि अध्यावहनीति विभक्त्यर्थेऽव्ययीभावः ॥ ॥ अथाक्षतारोपणम्—'सघृतं क्षीरमादाय कराभ्यां कन्यकाञ्जलौ । द्विरुन्मृज्य वरः सिक्तान्शुभ्रान् शाल्यक्षतानथ ॥ गृहीत्वाञ्जलिना तस्या अञ्जलौ द्विः क्षिपेद्वरः । आदायाञ्जलिनादत्ते तदञ्जल्युपरि स्वयम् ॥ कन्येत्याद्याशिषः पूर्वमुक्त्वा कन्यापिता ततः । कन्यकां प्रतिगृह्णात्वित्यन्ते क इति मन्त्रतः ॥ उपरिस्थाञ्जलौ पूर्णे हरेत्स्वर्णोदकं ततः । तामेव प्रतिगृह्णामीत्यन्तं मन्त्रमुदीरयेत् ॥ अञ्जलिस्थाक्षतान्कन्यामूर्धनि प्रक्षिपेद्वरः । स्वाञ्जलिस्थाक्षतान्कन्या वरमूर्धनि निक्षिपेत् ॥ मूर्धिक्षेपान्तमेवं स्यात्पुनरुन्मार्जनादिकम् । उन्मार्जनादि द्विः कुर्याद्वरवरक-

न्यका करे ॥ कन्येत्यादि पिता कुर्याद्वरवत्त्रं वरो वदेत्' । वरतन्त्रमित्युपरितनं तन्त्रं प्रतिगृह्णामीति वरो वदेदित्यर्थः ॥ ॥ अथ तिलकम्—'कन्याशिरस्थमाल्यस्य गृहीत्वा कौसुमं दलम् । सघृतं क्षीरसंयुक्तं कुर्यात्तिलकमुत्तमम् ॥ वरः कन्याललाटेथ कन्याच वरशिरस्स्रजः । पुष्पस्य दलमादाय क्षीराज्याक्तं वरस्य तु ॥ ललाटे तिलकं कुर्यादीक्षेतैवं मिथो मुखम् ॥ ॥ अथ परस्परमालारोपणम्—'कण्ठे मिथः शुभां मालां दंपती प्रतिमुञ्चतः । क्षीराज्याक्तेन सूत्रेण शुक्लेनैतौ प्रदक्षिणम् । आवेष्ट्य पादादुद्गत्य कक्षया इति मन्त्रतः ॥ ऐशान्यादिकृतं सूत्रं पुनः पश्चानुवेष्टयेत् । हरिद्राक्षीरसंसिक्तं कन्याया दक्षिणे करे ॥ नबेद्वरः पुनः कन्यावरहस्तेऽथ दक्षिणे । आशीर्भिर्मोचयित्वाथ निशकुद्रादिषु क्रमात् ॥ नबेद्वस्त्रान्वशुभयोः श्वाशुरौ च ततः परम् । देवीं दाक्षायणीं नत्वा सर्वसंपत्प्रदायिनीम् । होमदेशं व्रजेतां तौ परिगृह्य करे मिथः । वदेतत्सूत्रकृद्वक्ति सूत्रेणोच्चावचा इति' । इदमत्र सूत्रम्—'अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च तान्विवाहे प्रतीयाद्यत्तु समानं तद्वक्ष्यामः' इति । अस्यार्थः—अथशब्दोऽधिकारार्थः । यद्वक्ष्यते तद्विवाहेऽपि वेदितव्यमिति । खलु—क्ष्यामः । उच्चावचग्रहणं कथम् । एते जनपदधर्मादयो नानाप्रकाराः क्रियेरन् नैकेन कर्त्रा समुच्चीयेरन्निति । जनपदधर्मा देशधर्माः । ग्रामशब्देन नगरमुच्यते । धर्मशब्दादेव द्वितीयानिर्देशे ( सति अन्वये ) सिद्धे तानिविवचनं कुलधर्मा अपि कार्या इत्येवमर्थम् । तान् तादृशानित्यर्थः । विवाहाधिकारे पुनर्विवाहग्रहणं कृत्स्नेऽपि विवाहे यथा स्युरित्येवमर्थम् । इतरथोपयमनकालादुत्तरकालं विहितत्वादुपयमने न स्युः । उपयमनं नाम कन्यायाः स्वीकरणम् । प्रतीयादिति कुर्यादित्यर्थः । यत्तु समानं तद्वक्ष्यामः । किमर्थमिदम् । यथान्यान्युपदेशादेव सर्वत्र भवन्ति पार्वणादीनि तथेदमपि स्वान्निय-

पाठा०—१ वीक्षेत समयो ।

मार्थं। तर्हि जनपदादिधर्माणां वक्ष्यमाणधर्माणां च विरोधे सति वक्ष्यमाणमेव धर्मं कुर्यान्न जनपदादिधर्ममिति यद्वक्ष्यामस्तत्सर्वत्र समानमेवेत्यर्थः ।[1] केचिद्देशेषु सद्यएव व्यवायो दृष्टः । गृह्ये तु ब्रह्मचारिणौ त्रिरात्रमिति ब्रह्मचर्यं विहितं तत्र गृह्योक्तमेव कुर्यान्न देशधर्ममिति सिद्धम् । अत्र गृह्यपरिशिष्टम्—'चतुष्पादे सोत्तरच्छदे हरितदर्भास्तीर्णे भद्रपीठे प्राङ्मुख उपविशेत्तस्य पुरस्तात्प्राङ्मुखीं भद्रपीठासीनां सुस्नातामलंकृतामहतवाससं स्रग्विणीं कन्यां पुरस्कृत्य दाता सामात्य उपविशेद्वरं विधिवदभ्यर्हयेदथ दक्षिणतः पुरोधा उदङ्मुख उपविश्य मध्ये प्रागग्रोदगग्रान्दर्भानास्तीर्य तैजसमपां पूर्णं कलशं निधाय व्रीहियवानोप्य गन्धादिभिरलंकृत्य दूर्वापल्लवैर्मुखमवस्तीर्याब्लिङ्गाभिर्ऋग्भिरभिमन्त्र्य ताभिरद्भिः प्रयोजयेदथ दाता पुण्याहादीनि वाचयित्वा शिवा आपः सन्तु सौमनस्यमस्त्वक्षतं चारिष्टं चास्तु दीर्घमायुरस्तु शान्तिः पुष्टिस्तुष्टिश्चास्तु तिथिकरणमुहूर्तनक्षत्रसंपदस्त्वित्युक्त्वा भार्यादिसमेतः कन्यां प्रगृह्य वत्सगोत्रोत्पन्नाममुष्य प्रपौत्रीममुष्य पौत्रीममुष्य पुत्रीं सुशीलानाम्नीमिमां कन्यां, वसिष्ठगोत्रोद्भवायामुष्य प्रपौत्रायामुष्य पौत्रायामुष्य पुत्राय श्रुतशीलनाम्नेऽस्मै वराय संप्रददे कन्यां प्रतिगृह्णातु भवानिति ब्रुवन्वरस्य पाणौ हिरण्यमुपधाय कलशोदकधारामासिञ्चेत् । मनसा प्रजापतिः प्रीयतामिति ब्रूयादथ शिरसि पुण्याहाशिषो वाचयित्वा दक्षिणेंसे कन्यामभिमृश्य क इदं कस्मा अदात्कामः कामायादात्कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविश कामेन त्वा प्रतिगृह्णामि कामैतत्ते वृष्टिरसि द्यौस्त्वा ददातु पृथिवी प्रतिगृह्णात्विति जपित्वा प्रजापतिमनुस्मृत्य धर्मप्रजासिद्ध्यर्थं कन्यां प्रतिगृह्णामीति ब्रूयादेवं त्रिः प्रयुज्य पुरोधा दातृवरौ प्रति ऋतस्य हि शुरुधः सन्ति पूर्वीरिति तिस्रो जपित्वैतद्वः सत्यमस्त्विति ब्रूयात् । अथानयो-

पाठा०—१ वैदेहेषु ।

निरीक्षणं स्वलंकृते वेश्मनि मङ्गलगीततूर्यनिर्घोषे पूर्वापरावस्थुच्छ्रितौ हस्तान्तरालौ शुक्लतण्डुलराशी कृत्वा मध्ये स्वस्तिकाङ्कितति-रस्करिणीं धारयेयुरथ पूर्वस्मिन्राशौ प्रत्यङ्मुखीं गुडजीरकपाणिं कन्यां स्थापयेयुरपरस्मिन्प्राङ्मुखं तथाभूतं वरं तौ मनसेष्टदेवतां ध्यायन्तौ समाहितौ तिष्ठेतां ब्राह्मणाः सूर्यासावित्रीसूक्तं पठेयुः पुरंध्र्यो मङ्गलगीतीः कुर्युः । अथ ज्योतिर्विदादिष्टे काले प्रविष्टे सच-लिरस्करिणीमुदगपसार्य कन्यावरौ परस्परं गुडजीरकाववकिरन्तौ परस्परं निरीक्षेयाताम् । अभ्रातृघ्नीं वरुणापतिघ्नीं बृहस्पते । इन्द्रापुत्रघ्नीं लक्ष्म्यन्तामस्यै सवितः सुव इति तामीक्षमाणो जपत्यघोरचक्षुरपतिघ्न्येधीति तयेक्ष्यमाणोऽथास्या भ्रुवोर्मध्यं व्याहृति-भिर्दर्भाग्रेण परिमृज्य दर्भं निरस्याप उपस्पृशेदथ ब्राह्मणा बान्धवाः पुरंध्र्यस्तावाशीर्भिरभिनन्दयेयुः । अथानयोरार्द्राक्षतारोप-णम् । तैजसेन पात्रेण क्षीरमादाय घृतमासिच्य पात्रान्तरेणार्द्राक्षततण्डुलान् अथ तथास्थितयोर्वधूवरयोर्वर्धनकमेतत्कारयेयुरमृतं क्षीरमायुर्घृतमरिष्टाक्षता अप एतेषामारोपणमिष्यते । वरः प्रक्षालितपाणिर्वध्वाः प्रक्षालितेऽञ्जलौ क्षीरघृतं पाणिना द्विरुपस्तीर्य द्विस्तण्डुलानञ्जलिनावपति यथापूर्वंत । ततो द्विरुपरिष्टादभिघारयत्येवं वराञ्जलावन्यस्तण्डुलपूर्णं कुर्याद्दाता तयोरञ्जल्योर्हिरण्य-मवदधाति । अथ वरः कन्याञ्जलौ स्वाञ्जलिं धारयेद्दाता कन्या तारयतु दक्षिणाः पान्तु बहुदेयं चास्तु पुण्यं वर्धतां शान्तिः पुष्टि-स्तुष्टिश्चास्तु तिथिकरणमुहूर्तनक्षत्रसंपदस्त्वित्युक्त्वा कन्यामुद्धृत्य तदञ्जल्यक्षतान्वरमूर्धन्यारोपयेद्वरोऽपि तन्मूर्धनि स्वाञ्जल्यक्षता-नारोपयेदेवं निर्वधूपूर्णं वराञ्जलौ वधूस्तण्डुलपूरणं कुर्याच्चदञ्जलावन्योऽथ समारोपणं कारयेत् ॥ इदानीं दाता वराय गोभूमिदासी-यानशयनान्नादीनामनुदानं दद्यादथ पुरोधाः कांस्ये पय आसिच्यौदुम्बर्याद्रया शाखया सपलाशया सहिरण्यपवित्रया सदूर्वापल्ल-

चयाभिपिञ्चेदब्लिङ्गाभिर्ऋग्भिरथ वधूवरौ सशेखरपुष्पं क्षीरघृतेनाप्लाव्य परस्परं तिलकं कुरुतः कण्ठे स्रजं चामुञ्चतः कौतुकसूत्रकं च करे बध्नीयातामथ पुरोधास्तयोरुत्तरीयान्तयोः पञ्च पूगफलानि विवाहव्रतरक्षिणं गणाधिपमनुस्मृत्य गणानां त्वा गणपतिं हवामह इत्यातून इन्द्रक्षुमन्तमिति च वधूवरयोरुत्तरीयान्तौ च नीललोहितं भवतीति बध्नीयादथ दाता सभार्यो वृद्धाः पुरंध्र्यो-ज्ञातिबान्धवाश्च क्रमादाशीर्भिरार्द्राक्षतारोपणं कुर्यु'रिति ॥ अथ कन्यानिरीक्षणदानादिषु कारिकागृह्यपरिशिष्टयोः क्रमन्यत्यये सति सविशेषं गृह्यपरिशिष्टोक्तमेवानुसंधेयं आचार्येणोक्तत्वात्, 'तथैव लौकिकं वाक्यं स्मृतिबाधे परित्यजे'दिति वचनाच्च ॥ ॥ अत्र भगवांस्तु—'नानाविधा जानपदा ग्राम्याश्चोद्वाहकर्मणि । क्रियन्ते लौकिका धर्मास्तेषु स्वकुलपूरुषैः ॥ पूर्वैरनुष्ठितान्कृत्वा कुर्या-द्दारपरिग्रहम् । सर्वसाधारणं कर्म यत्तु तावदिहोच्यते ॥ तत्र प्रदेशे कस्मिंश्चिद्बन्धुपरिकल्पिते । विष्टरे प्राङ्मुखः सम्यगासित्वा चरणौ स्वयम् ॥ प्रक्षाल्याचम्य च कृतप्राणायामः समाहितः । उपलिप्य तथोल्लिख्य स्थण्डिलेऽग्निं निधाय च ॥ पश्चादग्नेः प्रति-ष्ठाप्य पाषाणीमश्मनिर्मिताम् ॥ प्रागुत्तरेऽग्नेः संस्थाप्य पूर्णकुम्भमथो वरः ॥ उत्थाय प्राङ्मुखः स्थित्वा प्रत्यगुत्तरतोऽनलात् । त-दानीमात्मना दत्तं नूतनं वसनद्वयम् ॥ वसित्वाऽऽचान्तसलिलो भूषितां कुसुमादिभिः । प्रत्यङ्मुखः प्राङ्मुखीं तां स्थितामात्मसमी-पतः ॥ कन्यकां प्रतिगृह्णीयाद्दत्तां पित्रादिभिर्वरः । कन्यादानप्रकारश्च पूर्वाचरित उच्यते ॥ वरस्याभिमुखः स्थित्वा कन्यायाः प्रतिपादकः । चतुर्थ्यन्तं वरस्योक्त्वा नाम तद्गोत्रपूर्वकम् ॥ ततः सहस्रकर्मभ्य इत्युच्चार्य ततः परम् । पादयामीति चोच्चार्य प्रति-पूर्वं ततः परम् । वरस्य हस्तेऽसौ दद्याद्देवतीर्थेन शान्तधीः ॥ तद्यथा गार्ग्यगोत्राय परमेश्वरशर्मणे । आत्रेयगोत्रभवां पार्वतीं

प्रददाम्यहम् ॥ कन्यां सहलकर्मभ्यः करोति प्रतिपादिताम् । कन्यादाने च कर्मैवमाचरन्ति मनीषिणः ॥ विभवानुगुणं क्षेत्रं सुवर्णं रजतादिकम् । सर्वं विहितमत्रैव कालेऽन्यत्तु सहोदकम् ॥ ततो मङ्गलसूत्रं च ध्यायन्निष्टां च देवताम् । बध्वाः कण्ठप्रदेशे स्नानूपणानि सशक्तितः' इति ॥ ॥ अत्र नवभूषणधारणे जप्यसूक्तमुक्तमृग्विधाने—'आयुष्यमायुर्वर्चस्यं सूक्तं दाक्षायणं महत् । अलंकारं हिरण्यं वा प्राप्य दाक्षायणीं जपेत् ॥ प्राप्नोति स श्रियमाधत्ते बहु चान्नमुपाश्नुते' इति । अत्र कौतुकबन्धनाग्निप्रतिष्ठादौ तु गृह्यपरिशिष्टकारशौनकोक्तवाक्ययोर्विरोधे परिशिष्टोक्तमेवानुसंधेयम् । आचार्येणोक्तत्वात् ॥ अत्र तण्डुलमानमाह यमः—'आरुह्य तण्डुलप्रस्थमीक्षेत्प्रत्यङ्मुखो वधूमि'ति । स्मृतिपक्षस्तु—'द्रोणप्रमाणे सिततण्डुलानां चारुह्य राशौ वरयेत्कुमारीम् । प्रत्यङ्मुखः पूर्वमुखीं सुलग्ने वरो वरेण्यां वरयेद्यथोक्तम्' इति ॥ अथ कन्यादानमन्त्रौ वायुपुराणे—'कन्यां कनकसंपन्नां कनकाभरणैर्युताम् । दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया ॥ विश्वंभरः सर्वभूताः साक्षिण्यः सर्वदेवताः । इमां कन्यां प्रदास्यामि पितॄणां तारणाय च' इति ॥ अथ प्रार्थनमन्त्रावाह ऋष्यशृङ्गः—'गौरीं कन्यामिमां विप्र यथाशक्ति विभूषिताम् । गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ॥ कन्ये ममाग्रतो भूयाः कन्ये मे देवि पार्श्वयोः । कन्ये मे पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम्' इति ॥

॥ अथानुदानान्युच्यन्ते लिङ्गपुराणे—'दासीदासासनाद्यं च भूषणानि गृहं ततः । क्षेत्राणि च धनं चापि तथान्यानि प्रदा-

पाठा॰—१ पयभूता ।

पयेत्' ॥ ऋष्यशृङ्गोऽपि—'भूमिं गां चैव दासीश्च वसनानि स्वशक्तितः । महिषीर्वाजिनश्चैव दद्यात्सर्वमणीनपि ॥ ततः स्वगृह्यविधिना होमाद्यं कर्म कारयेत् । यथाचारं विधेयं हि माङ्गल्यं करकादि च' इति ॥

अथ कन्यादानप्रशंसा ब्रह्माण्डपुराणे—'कन्यां तु परया भक्त्या ह्यलंकृत्य प्रयत्नतः । कुलीनाय सुरूपाय गुणज्ञाय विशेषतः ॥ कन्यां वरयमाणाय दद्यादेष विधिः स्मृतः' इति ॥ लैङ्गे—'कन्यादानं प्रवक्ष्यामि सर्वदानोत्तमोत्तमम् । यद्दत्त्वा सर्वदानानां फलं प्राप्नोति मानवः' । स्मृत्यन्तरे—'महीदातुश्च गोदातुः कन्यादातुश्च ये रथाः । कन्यादानानुगाः पश्चात्समं यान्ति त्रयो रथाः ॥ अयाचितप्रदातुश्च सत्यवादिन एव च । नित्यस्वाध्यायशीलस्य समं यान्ति त्रयोरथाः' । बृहस्पतिः—'सहस्रमेव धेनूनां शतं चानडुहां समम् । दशानडुत्समं यानं दशयानसमो हयः ॥ दशवाजिसमा कन्या भूमिदानं च तत्समम् । तस्मात्सर्वप्रयत्नेन कन्यादानं विशिष्यते ॥ अग्निहोत्रादिभिर्यत्स्यादीक्षातो ब्राह्मणस्य च । तत्कन्यां विधिवद्दत्वा फलमाप्नोति मानवः' ॥ स्कान्दे—'वैवाहिकप्रदानं वा यो ददाति तथा नरः । विमानेन विचित्रेण किङ्किणीजालमालिना ॥ माहेन्द्रभवनं याति दीप्यमानोऽप्सरोगणैः' । संवर्तः—'अलंकृत्य मुदा कन्यां भूषणाच्छादनादिभिः । दत्त्वा स्वर्गमवाप्नोति पूज्यते वासवादिभिः ॥ कुकुदश्चाश्वमेधी च प्राणदाता भयेषु च । समं यान्ति रथा येषां त्रयो वै नात्र संशयः' ॥ सालंकारकन्यादाता कुकुदः—'सत्कृत्यालंकृतां कन्यां यो ददाति स कुकुदः' इत्यभिधानात् । 'दातुं भूषितकन्यायां कुकुर्गर्ते प्रहावपि' इति वैजयन्तीदर्शनाच्च ॥ वह्निपु-

पाठा०—१ चाचरेत् ।

राणे—'कन्यां ये तु प्रयच्छन्ति यथाशक्ति स्वलंकृताम् । ब्रह्मदेयां द्विजश्रेष्ठ ब्रह्मलोकं व्रजन्ति ते ॥ कृत्वा कन्याप्रदानं च पितरः प्रपितामहाः । विमुक्ताः सर्वपापेभ्यो ब्रह्मलोकं व्रजन्ति ते ॥ तिलराशिः कृतो यावद्दिवाकरसमुच्छ्रितः । वर्षान्ते गृह्यते तस्य तिलराशेस्तु यावता । संक्षयं लभते तावद्ब्रह्मलोकोऽस्य निश्चितः ॥ यावन्ति सन्ति रोमाणि कन्यायाश्च तनौ पुनः । तावद्वर्षसहस्राणि रुद्रलोके महीयते' ॥ अत्रिः—'वालुकाभिः कृतो राशिर्यावत्सप्तर्षिमण्डलम् । गते वर्षसहस्रे तु लवमेकं विशिष्यते । क्षयश्च दृष्टस्तस्यापि कन्यादाने न विद्यते' । संवर्तस्तु—'ज्योतिष्टोमातिरात्राणां शतं शतगुणीकृतम् । प्राप्नोति कन्यकां दत्त्वा होममन्त्रैश्च संस्कृताम्' इति । इति कन्यादानफलप्रशंसा ॥

अथ दंपतिभ्यां कर्तव्यपूजाविधिः । तत्र कात्यायनः—'सवर्णायास्तथा पाणिं गृहीत्वा विधिवद्वरः । संपूज्य प्रार्थयित्वा तां प्रचीं देवीं गुणाश्रयाम् ॥ त्रैलोक्यवल्लभां दिव्यां गन्धमाल्याम्बरान्विताम् । सर्वलक्षणसंयुक्तां सर्वाभरणभूषितम् ॥ अनर्घ्यमणिमालाभिर्भासयन्तीं दिगन्तरम् । विलासिनीसहस्रौघैः सेव्यमानामहर्निशम् ॥ एवंविधां कुमारीं च पूजान्ते प्रार्थयेत्ततः । कात्यायनीं पद्मजां च गौरीमेवं प्रपूजयेत्' इति ॥ ॥ अत्र कन्यायाश्चक्राङ्कुरालंकृतिरुक्ता श्रीधरीये—'कन्यायाः करसंग्रहोत्कगमये चक्राङ्कुरालंकृतिः' इति । करसंग्रहो विवाहः तत्समये चक्राङ्कुरालंकृतिः स्वर्णमयलिङ्गाकृतिर्धार्या । तथाच नृसिंहः—'सौम्यांशे वरयेत्कन्यां लिङ्गाकारं सुवर्णकम् । कण्ठे संयोजयेदेव माङ्गल्येन सहाङ्गना ॥ विवाहसमये चैवं कृत्वा तत्पतिना व्र-

पाठा—१ भिचिन्वयेत् ।

जेत् । होमशेषं प्रतीवि शेषः । वनितानां गले सूत्रे माङ्गल्ये शिथिले पुनः । कृत्वा तु पूर्ववत्सद्यो धारयेत्प्रथमोपमम्' इति ॥ ॥ अत्र कन्यामाता कर्मप्रारम्भात्प्राग्रजस्वला चेत्कन्यादाननिषेध उच्यते माधवीये—'आरम्भात्प्राग्विवाहस्य माता यदि रजस्वला । निवृत्तिस्तस्य कर्तव्या सद्वलश्रुतिचोदनात्' इति । इति कन्यादानविधिः ॥

अथ विवाहहोमविधिः । तत्र कारिका—'आत्मनो दक्षिणे पार्श्वे वधूं तामुपवेश्य च । उपलेपादि कुर्वीत हविर्भुवस्थापनान्तकम् ॥ पश्चादग्नेः प्रतिष्ठाप्य दृषदं सोपलामथ । उदकुम्भं निधायाग्नेः प्रागुदीच्यामतः परम् ॥ आज्याधिश्रयणान्तं स्यादन्वाधानादि पूर्वकम् । आज्येन सह लाजानां पर्यग्निकरणं भवेत् ॥ त्रिःप्रोक्षणं भवेत्तेषां केवलोत्पवने सति । इध्माभिघारणान्तं स्यादाज्यस्योद्वासनादिकम् ॥ वधूदक्षिणहस्तेन समन्वारब्ध एव सन् । कुर्यादाघारपर्यन्तं चौलोक्ताज्याहुतित्रयम् ॥ अत्राज्यभागौ नैवेद्यावित्युक्तं पूर्वमेव तु । हुत्वा त्वमर्यमेत्यन्यां प्रजापतिरितीतराम् ॥ अथोन्नतमुखीं कुर्याल्लज्जयाऽवनताननाम् । प्राङ्मुख्या उपविष्टायास्तिष्ठन्प्रत्यङ्मुखः स्वयम् ॥ उत्तानेनाथवा नीचेनोचानस्य करस्य तु । अङ्गुष्ठादि तु गृह्णीयाद्भूणामीलितया ततः ॥ उपस्तृणीत भार्याया अञ्जलौ प्रोक्षिते वरः । वधूभ्राताथवा भ्रातृस्थानो लाजान्द्विरावपेत् ॥ पश्चावत्ती वरः स्याचेदञ्जलौ तांस्त्रिरावपेत् । वरः शूर्पगतांल्लाजानवत्तांश्चाभिघारयेत्' ॥ भ्रातृस्थानीयानाह—'भ्रातृस्थाने पितृव्यस्य मातुलस्य च यः सुतः । मातृष्वसृसुतस्तद्वत्पितृष्वसृसुता अपि ॥ पठत्यर्यमणं मन्त्रमथ पत्नी स्थिता सती । कुर्वन्त्यञ्जल्यविच्छेदमञ्जल्यग्रैर्जुहोति तान् ॥ हविर्भुजं सकुम्भं च दृषदं प्रदक्षिणम् । वधूं परिणयन्मन्त्रममोहमिति वै जपेत् ॥ इममश्मानमारोहेत्यनेन प्राङ्मुखीं वधूम् । उभाभ्यामपि

पादाभ्यामारोप्य स्पदं पुनः ॥ उपस्तृत्यादि तद्वत्स्याद्दुपदारोपणान्तकम् । वरुणं त्विति होमोऽञ्जल्युपस्तृत्यादि पूर्ववत् ॥ अश्मारोपणपर्यन्तं गहनं पूर्णं त्विति । प्रजापतिं चतुर्थ्यन्तं स्वाहायुक्तं वरः स्मरेत् ॥ शूर्पकेणावशिष्टांस्तानभ्यात्मं जुहुयाद्वधूः । जयन्तास्वाह वचनं चतुर्थ्यां वरकर्तृकम् ॥ यदि बद्धे शिखे स्यातां देशधर्मादिना ततः । प्रतामुञ्चामिमन्त्रेण दक्षिणं तु विमुञ्चति ॥ प्रेतोमुञ्चामिमन्त्रेण उत्तरां च विमुञ्चति । शिखे वरस्य बद्धे चेत्तूष्णीमेव विमुञ्चति ॥ अभ्युत्क्रमयतीशाने वधूं सप्तपदानि तु । साचाभ्युत्क्रमयेत्पूर्वं दक्षिणं पादमात्मनः ॥ इष इत्यादिभिर्मन्त्रैरनुपक्रैर्भवादिना । सप्तमे क्रमिते तस्याः शिरसी संनिधाय च ॥ तयोः कुम्भाम्भसा तेन शिरसी अभिषिञ्चति । आज्येन स्विष्टकृद्धोमं कृत्वा शेषं समापयेत् ॥ होमादारभ्य यच्छेत वाचं दृष्ट्वा ध्रुवादिकान् । जीवपत्नीति मा वाचं विसृजेच्च ततः परम्' इति ॥ इदमत्र गृह्यम्—'पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्योत्तरपुरस्तादुदकुम्भं समन्वारब्धायां हुत्वा तिष्ठन्प्रत्यङ्मुखः प्राङ्मुख्या आसीनाया गृभ्णामि ते सौभगत्वाय हस्तमित्यङ्गुष्ठमेव गृह्णीयाद्यदि कामयीत पुमांस एव मे पुत्रा जायेरन्नित्यङ्गुलीरेव स्त्रीकामो रोमान्ते हस्तं साङ्गुष्ठमुभयकामः प्रदक्षिणमग्निमुदकुम्भं च त्रिः परिणयञ्जपत्यमोऽहमस्मि सा त्वं सा त्वमस्यमोऽहं द्यौरहं पृथिवी त्वं सामाहमृक्त्वं तावेह विवहावहै । प्रजां प्रजनयावहै संप्रियौ रोचिष्णू सुमनस्यमानौ जीवेव शरदः शतमिति परिणीयपरिणीयाश्मानमारोहयति । इममश्मानमारोहाऽश्मेव त्वं स्थिरा भव । सहस्व पृतनायतोऽभितिष्ठ पृतन्यत इति वध्वञ्जलावुपस्तीर्य भ्राता भ्रातृस्थानो वा द्विर्लाजानावपति त्रिर्जामदग्न्यानां प्रत्यभिघार्य हविरवत्तं चैषोऽवदानधर्मः-

पाठा०—१ यच्छेत्सो ।

अर्यमणं नु देवं कन्या अग्निमयक्षत । स इमां देवो अर्यमा प्रेतो मुञ्चातु नामुतः स्वाहा ॥ वरुणं नु देवं कन्या अग्निमयक्षत । स इमां देवो वरुणः प्रेतो मुञ्चातु नामुतः स्वाहा ॥ पूषणं नु देवं कन्या अग्निमयक्षत । स इमां देवः पूषा प्रेतो मुञ्चातु नामुतः स्वाहेत्यविच्छिन्दत्यञ्जलिं स्रुचेव जुहुयादपरिणीय शूर्पपुटेनाभ्यात्मं तूष्णीं चतुर्थमोप्योप्य हैके लाजान्परिणयन्त्युपत्यथोत्तमे आहुती न संनिपतवोऽथास्यै शिखे विमुञ्चति यदि कृते भवत ऊर्णास्तुके केशपक्षयोर्बद्धे भवतः प्रतामुञ्चामि वरुणस्य पाशादित्युत्तरामुत्तरयाऽथैनामपराजितायां दिशि सप्तपदान्यभ्युत्क्रामयतीष एकपद्यूर्जे द्विपदी रायस्पोषाय त्रिपदी मायोभव्याय चतुष्पदी प्रजाभ्यः पञ्चपद्यृतुभ्यः षट्पदी सखा सप्तपदी भव सा मामनुव्रता भव । पुत्रान्विन्दावहै बहूंस्ते सन्तु जरदष्टय इत्युभयोः संनिधाय शिरसी उदकुम्भेनावसिच्य ब्राह्मण्याश्च वृद्धाया जीवपत्न्या जीवप्रजाया अगार एतां रात्रीं वसेद्ध्रुवमरुन्धतीं सप्तऋषीनिति दृष्ट्वा वाचं विसृजेत जीवपत्नी प्रजां विन्देयेति' । अस्यार्थः—पश्चादग्नेरिति । अग्निप्रतिष्ठापनोत्तरकालं पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्योत्तरपूर्वदेशे उदकपूर्णकलशं स्थापयेत् । ततः आज्यस्य बर्हिषि सादनान्तं कृत्वा । समन्वारब्धायां वध्वां इध्माभ्याधानाधाघारान्तं कृत्वा ततः पूर्वोक्ता आज्याहुतीर्हुत्वा । तिष्ठन्प्रत्यङ्मुखः प्राङ्मुख्या आसीनाया अङ्गुष्ठमेव गृह्णीयात् गृभ्णामीत्यृचा पुत्रकामश्चेत् । मन्त्रस्तूत्तरयोरपि हस्तग्रहणयोर्भवत्येवायम् । दृषत्प्रसिद्धा । अश्मा तत्पुत्रकः । तेनोभयोः प्रतिष्ठापनं सिद्धम् । एवंचेद्दोषः—अश्मानमारोहयति इत्यत्र पुत्रकावरोहणं स्यात् । तर्हि अश्मग्रहणं तस्यै विशेषणं स्यात् दृषदमश्मानमिति ।

पाठा०—१ नयन्ति तयोत्तमे । २ दृषद्विशेषण ।

अश्ममयीमित्यर्थः । मृन्मय्यपि हि लोके दृपद्वियते । तर्हि पुत्रकप्रतिष्ठापनं न स्यात् । स्यादेव मङ्गलार्थत्वात् । दक्षिणतः पत्न्युपनिवेशदुत्तरतः पतिरिति शास्त्रान्तरे दृष्टम् । स्रुवेण होमः साधनान्तरानुपदेशात् । एवंभूतो व्यक्तहोमे इत्यनेनैवावस्थाने सिद्धे तिष्ठन्समिधमादध्यादित्यत्र तिष्ठद्ग्रहणं कथम् । अन्यत्रासीनस्य कर्माणि स्युरित्येवमर्थम् । अतोऽत्राप्यासीनता प्राप्नोति तन्निवृत्त्यर्थं तिष्ठद्ग्रहणम् । प्रत्यङ्मुख इति प्राङ्मुखत्वनिवृत्त्यर्थम् । 'तस्य नित्याः प्राग्भ्रेषाः' ( श्रौ. सू. १।१।८ ) इत्यनेन प्राङ्मुखत्वे सिद्धे प्राङ्मुख्या आसीनाया इति वचनं प्रत्यङ्मुखत्वाधिकारनिवृत्त्यर्थम् । आसीनाया इत्येतत्कथम् । इतउत्तरं वध्वा विहितं कर्म तिष्ठन्त्या स्यादित्येवमर्थम् । 'उत्तानेनोत्तानं पाणिं गृह्णीयान्नीचेन नोत्तानं' इति शास्त्रान्तरे दृष्टम् । पुत्रशब्दः पुंसि स्त्रियां च स्मृतौ दृष्टः । 'अकृता वा कृता वापि यं विन्देत्सदृशात्सुतम् । पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम्' इति ( मनु ९।१३६ ) पौत्री पितामहस्तेनेति । तेन दौहित्रेण मातामहः पौत्री भवतीत्यर्थः । लोके च दुहितरि पुत्रशब्दं प्रयुञ्जाना दृश्यन्ते—एहि पुत्रेति । मन्त्रे च दृश्यते—पुमांस्ते पुत्रो जायतामिति । तस्मात्पुमांसः पुत्रा इति विशेषणम् । अथवा 'पुंनाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा' इति (मनुः ९।१३८) । एवंविधः स पुत्रो जायेत न प्रथमप्रकृतिमात्रमित्येवमर्थमुभयोर्ग्रहणम् । अङ्गु—कामः । एवकारोऽङ्गुष्ठनिवृत्त्यर्थः । स्त्रीकामो दुहितृकाम इत्यर्थः । रोमान्ते—कामः । उभयकामः पुत्रदुहितृकामः अङ्गुष्ठाङ्गुलिभिः सह हस्तं गृह्णीयात् । प्रदक्षिणं—शतमिति । अग्निमुदकुम्भं च त्रिःप्रदक्षिणं वधूं परिणयन् जपति अमोहमस्मीति । उदकुम्भग्रहणमन्येषां यज्ञपात्राणां बहिःकरणार्थमित्येके । अन्ये तु विवाहे यदन्यद्दृष्टं पात्रं अश्मा तस्यैव बहिः-

करणार्थमिति । त्रिर्ग्रहणं परिणयनेन संबध्यते उत जपेन । यदि पूर्वेण तर्हि सकृज्जपः स्यात् । अथ जपेन तर्हि सकृत्परिणीतिः । पूर्वेणेति ब्रूमः । कुतः । परिणीयपरिणीयेति तस्य बहुत्वं दर्शितम् । जपश्च परिणयाङ्गमिति कृत्वा यावत्परिणयनमावर्तते । परिणीयपरिणीयेति । वीप्सावचनं सर्वपरिणयनेष्वश्मारोहणं कारयितव्यमित्येतदर्थम् । अथास्य कर्मणः कः कर्ता । आचार्यः । कुतः । वक्ष्यति—शिरसी उदकुम्भेनावसिच्येति । स्वयं कर्तृत्वे सति अवसेचनं न शक्यते कर्तुं । तदसत् । वरएव कर्ता । आचार्येण ह्ययं विसृष्टो विवाहं करोति । उदकुम्भग्रहणं तु तत्रस्थमुदकुम्भं लक्षयति । वध्वा—वपति । ततो वध्वञ्जलावुपस्तीर्य वध्वा भ्राता द्विर्द्विर्लाजानावपति । वरो जामदग्न्यश्चेत्त्रिः । ततः शेषं प्रत्यभिघार्यावत्तांश्च प्रत्यभिघारयति । एवमवदायावदाय त्रिभिर्मन्त्रैर्जुहोति । भ्रातृस्थानः पितृव्यपुत्रो मातुलपुत्रश्च । त्रिर्जामदग्न्यानाम् । पञ्चावत्तिनामित्यर्थः । प्रत्यवधार्य हविः । हविःशब्दः शेषे वर्तते । यथा नात्र हवींषीति । अवत्तं च । अवदानमित्यर्थः । उपस्तरणाभिघारणे कः करोति । भ्राता । कुतः । समानकर्तृत्वनिर्देशात् । तदयुक्तम् । यदि ह्यत्र भ्राताभिप्रेतः स्यात् वध्वाञ्जलौ भ्रातोपस्तीर्येत्येवावक्ष्यत् । तस्माद्वरएव करोति । यदुक्तं समानकर्तृत्वनिर्देशादिति, तत्र ब्रूमः । असमानकर्तृत्वेपि हि क्त्वाप्रत्ययो दृश्यते । यथा 'आज्याहुतिं हुत्वा मुख्यं धनं दद्या'दिति होमे ब्रह्मा कर्ता दाने तु यजमानः इत्यादिषु पूर्वकालतामात्रमेव विवक्षितं तद्वदत्रापीति । एषो—धर्मः । यत्र यत्रावदानमस्ति तत्रतत्रैष धर्मो भवतीत्यर्थः । 'मध्यात्पूर्वार्धाच्च हविषोऽवद्यती'त्यादौ । अर्यमणमित्यादि । को जुहोति । वधूः । कुतः । अविच्छिन्दन्त्यञ्जलिमिति स्त्रीलिङ्गनिर्देशात् । कस्यैते मन्त्राः । वध्वाः । कुतः । सा हि जुहोति । मन्त्रलिङ्गाच्च कन्या अग्निमयक्षतेति । तदसत् । नहि स्त्रीणां मन्त्रेष्वधिकारो-

स्ति। ननु कथं पत्नीवाचने। तत्र वचनमस्ति। अत्र तु संदिग्धं। तस्माद्वरस्य मन्त्राः। मन्त्रलिङ्गाच्च। स इमां देव इति हि परोक्षनिर्देशः। यदि हि वध्वाः स्युः स इमां देव इति न स्यात्। यच्चूक्तं सा जुहोतीति तत्र ब्रूमः। अन्यस्यापि मन्त्रो दृश्यते। अध्वर्युर्जुहोति होता वषट्करोतीति। यच्चूक्तं मन्त्रलिङ्गादिति तत्र ब्रूमः। नह्यनेयं कन्याभिधीयते। अन्या एव तु कन्याः। यदीयमभिधीयेत बहुवचनं नोपपद्येत। तथाभूतश्च प्रत्ययः। तस्माद्वरस्येति सिद्धम्। अपरि—तुर्थं। अप्राप्तनिषेधः किमर्थः। चतुर्थहोमं कृत्वा कथममन्त्रकं परिणयनं स्यादित्येवमर्थमित्येके। अन्ये तु त्रीणि परिणयनान्यानन्तर्येणोक्तानि तत्र त्रयो होमाः। तत्र कथं। पूर्वं पूर्वं परिणयनं कृत्वा पश्चाद्धोमः स्यादिति ज्ञापयितुमिति। शूर्पपुटः कोणः। तूष्णींवचनं प्रजापतिज्ञापनार्थम्। चतुर्थग्रहणं कथं। एतस्य द्रव्यस्य सिष्टकृन्मस्यात् स एव च कर्ता यथा स्यादिति। तेन च वधूर्जुहोति। ओप्योप्य—ततः। अभिमतार्थज्ञापनार्थो हशब्दः। एके लाजानोप्योप्य पश्चात्परिणयन्ति। किमिति। तथा सत्युत्तमे आहुती न संनिपतत इति कृत्वा। पूर्वस्मिंस्तु पक्षे उत्तमे आहुती संनिपततः। कोऽयं संनिपातो नाम। यदि पूर्वाहुतेः शिरसि प्रक्षेपः न तर्हि कचिदप्यसाविष्यते किं पुनः पूर्वस्मिन्पक्षे। अथानन्तर्यं न तर्ह्यसौ दोषः पार्वणादौ दृष्टत्वात्। तस्मादयमर्थः। यथोत्तमे आहुती न संनिपततस्तथा कर्तव्यम्। उत्तमयोराहुत्योर्मध्ये परिणयनं कर्तव्यमित्यर्थः। कथं वा न स्यात्। अपरिणीय शूर्पपुटेनाभ्यात्ममिति अन्यार्थं कृतमपीह मध्ये परिणयनं निवर्तयेत्। अथवा पूर्वस्मिन्पक्षे उत्तमे संनिपततः, अत्र तु न संनिपतत इति वदन् अपरिणीयवचनं चतुर्थपरिणयनार्थमित्यस्मिन्नपि पक्षे पूर्वं परिणयनं कृत्वा पश्चाद्धोमः नचानन्तर्येण होम इति ज्ञापयति। यदि त्वानन्तर्येण होमः स्यात् सर्वासा-

मेव संनिपातादुत्तरयोराहुत्योः पूर्वस्मिन्पक्षे संनिपात इति नोपपद्यते । अथास्यै—भवतः । अथशब्द इदानीं स्विष्टकृन्निवृत्त्यर्थः । अस्यै अस्या इति वरस्य निवृत्त्यर्थम् । यदीत्यनित्ये । देशधर्मादिना यदि कृते भवतः । के कृते भवत इत्याह । ऊर्णा—दिति । प्रत्वा मुञ्चामीति दक्षिणां शिखां विमुञ्चति । उत्तरया । प्रेतो मुञ्चामीत्युत्तरां शिखां विमुञ्चति । वरस्य तु शिखे तूष्णीं विमुञ्चति । अथैनां इति । अथशब्दः पूर्वेण तुल्यः । एनां वधूम् । अपराजिता प्रागुदीची तत्र सप्तपदान्यभ्युत्क्रामयति वधूं सप्तभिर्मन्त्रैः । वाक्यस्य साकाङ्क्षत्वाल्लवादेश्च योग्यत्वात्संनिहितत्वाच्च प्रत्येकं संबध्यते । यथा रहस्ये उल्लिखामीति शब्दः 'प्राणायत्वापानायत्वाव्याना-यत्वोल्लिखामि' इत्यन्ते वाक्ये पठितोपि पूर्वत्रापि संबध्यते तद्वदत्रापि । ऐतरेयिभिरप्युक्तं 'भवादि सर्वत्र समानं' इति । तेन इष एकपदी भव सा मामनुव्रताभवेति सर्वत्र संबन्धनीयम् । उभयोः—सिच्य । सप्तमे पदेऽभ्युत्क्रामिते तत्रस्थ एवोभयोः शिरसी सं-निधाय केनचिदुदकुम्भमानाय्य तत्रस्थेनोदकेन शिरसी अवसिञ्चति । अथाज्येन स्विष्टकृतं जुहोति । ब्राह्म—वसेत् । ग्रामान्तर-गमने यद्यन्तरा वसतिः स्यात्तदा एवंगुणयुक्तायाः ब्राह्मण्या गृहे अनन्तरां रात्रिं वसेत् । वसतिं कुर्यादित्यर्थः । स्वग्रामे विवाहश्चे-न्नायं विधिः । ध्रुव—येति । समाप्ते होमे रात्रौ ध्रुवादीन्दृष्ट्वा वाचं विसृजेत जीवपत्नी इति मन्त्रेण । इदानीं वाग्विसर्जनविधाना-द्धोमादारभ्य एतावन्तं कालं वाचो नियम इति गम्यते । कस्यायं वाग्विसर्गः । वध्वाः । कुतः । मन्त्रलिङ्गात् । तथाहि जीवः पतिर्यस्याः सा जीवपत्नी । जीव इति कर्तरि पचाद्यच् । 'पत्युर्नो यज्ञसंयोगे' 'विभाषा सपूर्वस्य' इति ङीप्प्रत्ययो नश्चान्तादेशः ॥ 'हरदत्तस्तु सप्तऋषीनितीत्यत्र इतिशब्दः प्रकारार्थः । तेन शुक्रादीनामपि दर्शनं यथा संभवतीति ॥ अत्र भगवाञ्शौनकः—

[1]कन्यकां प्रतिगृह्यैवं वरः पूर्ववदासने । तत्रैवोपविशेत्पश्चात्तां वधूं मातुलादिकः ॥ स्वजनः परिगृह्याग्नेरुत्तरेण वरस्य तु । पश्चिमेन तथा नीत्वा तस्मिन्नेव वरासने ॥ वरस्य दक्षिणे पार्श्वे प्राङ्मुखीमुपवेशयेत् । समाधाय पुरस्त्वग्निमन्वाधानादिकं क्रमात् ॥ प्रणीतासादनान्तं तु विधायाथ विभावसोः । उदक्पूर्वस्थितांल्लाजान्विन्यस्याथाज्यसंस्कृतिम् ॥ प्रक्रम्य कर्मानुयाजनिधानान्तं विधाय च । ततो वधूकरस्पृष्टः कृत्वेध्माधानपूर्वकम् । पुरस्तात्तन्त्रशेषं तदाज्यभागविवर्जितम् ॥ ततः प्रधानहोमांश्च कुर्यादाज्येन तत्र तु । पूर्वं कृत्वाग्न आयूंषीत्याद्यैर्मन्त्रैस्त्रिभिः क्रमात् ॥ त्वमर्यमा चतुर्थी च पञ्चमी तु प्रजापते । व्यस्ताभिश्च समस्ताभिर्व्याहृतीभिश्चतुष्टयम् ॥ अथोत्थाय वरो वध्वाः प्राङ्मुख्याः पुरतः स्वयम् । प्रतीच्यभिमुखस्तिष्ठन्नासीनायाः कराग्रकम् ॥ दक्षिणं दक्षिणेनैव पाणिनाङ्गुष्ठसंयुतम् । गृभ्णामीतिऋचा सम्यग्गृहीत्वोत्थाप्य तां वधूम् ॥ प्राङ्मुखीं समवस्थाप्य क्षालयित्वाथ तत्करौ । कारयित्वाञ्जलिं ताभ्यां तस्मिन्नाज्यं स्रुवेण तु ॥ उपस्तीर्य वरस्तिष्ठेत्परिगृह्य तमञ्जलिम् । तस्यास्तत्राञ्जलौ भ्राता भ्रातृस्थानीय एव वा ॥ शूर्पादञ्जलिनादाय लाजांस्तिष्ठन्द्विरावपेत् । पश्चावत्ती वरः स्याच्चेत्ततो लाजांस्त्रिरावपेत् ॥ वरोऽथ पूर्वं शूर्पस्थांल्लाजान्प्रत्यभिघार्य तु । अञ्जलिस्थानधस्थांश्च पश्चात्प्रत्यभिघारयेत् ॥ सर्वत्रैषोऽवदानस्य प्रकारः परिगृह्यताम् । वरोऽर्यमणं वाक्यं मन्त्रं वध्वर्थमीरयेत् ॥ वधूः स्वाञ्जलिविच्छेदमकुर्वाणा स्रुचेव तान् । लाजानञ्जलिपार्श्वेन जुहुयादवधानतः ॥ एवमेव वधूपाणिं गृहीत्वा

पाठाः—१ सर्वत्रैवावदानस्य । २ वरो वध्वर्थं । ३ दवदानत ।

पूर्ववद्वरः । अश्मानं वर्जयित्वाग्निमुदकुम्भादिसंयुतम् ॥ प्रदक्षिणं परिणयन्वधूमग्रे स्वयं व्रजेत् । अमोऽहमस्मि सा त्वं चेत्यादिमन्त्रमुदीरयेत् ॥ इममश्मानमित्याद्यं मन्त्रमुक्त्वा वरो वधूम् । अश्मानमारोप्य पुनर्लाजहोमं समाचरेत् ॥ लाजहोमे द्वितीयेऽपि पूर्ववत्सक्रिया स्विला ॥ वरुणं त्वादिको होममन्त्र एव तु भिद्यते ॥ पूर्ववत्परिणीयाग्निमश्मानमधिरोप्य च । तृतीयमपि लाजानां होमं पूर्ववदाचरेत् ॥ मन्त्रोऽत्र पूषणं त्वादि सर्वमत्र यथापुरम् । परिणीय तथैवाग्निमश्मानं चाधिरोपयेत् ॥ हुतावशिष्टांल्लाजांस्तु वधूः स्वाभिमुखं ततः । शूर्पाग्रेणैव जुहुयात्तूष्णीं निरवशेषतः । तस्यां तूष्णीं तु जुह्वत्यां वरो ध्यायेत्प्रजापतिम् ॥ ऊर्णासूत्रेण यद्वस्याः केशपक्षस्य पार्श्वयोः । शिखे बद्धे तदा प्रत्वामुञ्चामीत्यादृचा तयोः ॥ शिखां दक्षिणपार्श्वस्थां विमुच्योत्तरया ऋचा । प्रेतोमुञ्चाम्यादिकया विमुञ्चेदुत्तरां शिखाम् ॥ अथ तां पूर्वमार्गेण परिगृह्य वधूं वरः । अग्नेः पूर्वोत्तरं देशं नीत्वा तस्याः पुरो व्रजेत् ॥ इष एकपदीत्याद्यमुक्त्वा मन्त्रं सपर्वकम् । मन्त्रादिपदसंख्यानं प्रत्येकं योजयेत्पदम् ॥ अथ स्वशिरसा वध्वाः शिरः संयोज्य ते उभे । सिंचेत उदकुंभस्थसलिलेन वरः स्वयम् ॥ ततः पूर्ववदासित्वा स्विष्टकृद्धोमपूर्वकम् । उपरिष्टात्तनं तन्त्रं विदधीत यथाविधि ॥ यस्मिन्काले विवाहः स्याद्रजन्यां यदि वा दिवा । तत्र होममुपक्रम्य त्राग्विवाहसमापनात् । वधूर्वाङ्नियमं कृत्वा वर्तेतावहिता सती ॥ निवृत्ते तु विवाहे तां वधूं ध्रुवमरुन्धतीम् । सप्तर्षीन्दर्शयेत्पश्चाद्बध्वा वक्तुमशक्तितः ॥ वध्वर्थं जीवपत्न्यादि वाक्यं च व्याहरेद्वरः । अथ रक्षां विवाहाग्नेः कारयित्वा विधानतः ॥ ततोऽभिनन्दन्नासीत वध्वा सार्धं द्विजातिभिः । क्रियमाणं सहाशीर्भिरक्षतारोपमङ्गलम्' इति ॥ एवं रक्षितोऽग्निर्गृहप्रवेशनीयहोमादर्वागनुगतश्चेत्तदा विवाहहोमः पुनः कार्यः ।

गृहप्रवेशहोमानन्तरमनुगवत्रेद्धोमद्वयमपि पुनः कर्तव्यमिति गृहप्रवेशहोमसूत्रे वृत्तिकारेणोक्तत्वादिदद्वयाप्यनुसंधेयमिति ॥ ॥ अथ लाजप्रमाणम् । अत्र होम्यलाजप्रमाणमुक्तं सिद्धान्तशेखरे—'कर्षमात्राणि भक्षाणि लाजा मुष्टिमिता मताः' इति ॥ ॥ अथ होमस्थानानि ॥ एतद्विवाहहोममग्नेः पश्चिमभागस्थितजिह्वायां कुर्यात् । तथाच संग्रहे—'विवाहे वारुणी जिह्वा मध्यमा यज्ञकर्मसु । उत्तरा चोपनयने दक्षिणा पितृकर्मसु ॥ प्राचीना सर्वकार्येषु आग्नेयी शान्तिकर्मसु । ईशानी चोग्रकार्येषु होतद्धोमस्य लक्षणम्' इति ॥ ॥ अथ कन्यादोपदर्शनम् । अत्र कन्यादोषदर्शने विशेषमाह याज्ञवल्क्यः—'विधिवत्परिगृहीतां त्यजेत्कन्यां विगर्हिताम् । व्याधितां विप्रदुष्टां वा छद्मना चोपपादिताम्' ॥ विप्रदुष्टां प्रकर्षेण दुष्टाम् । एतदपि सप्तमपदादर्वाग्वेदितव्यम् । तत्रैव भार्यात्वोपपत्तेः । अतएव मनुः—'पाणिग्रहणमन्त्रैस्तु नियतं दारलक्षणम् । तेषु निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे' इति ॥ ॥ यस्तु कन्यादोषमनभिधाय प्रयच्छति स राज्ञा दण्ड्य इत्याह नारदः—'यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति । तस्य कुर्यान्नृपो दण्डं पूर्वसाहसचोदितम्' इति । पणशतद्वयं सप्तत्यधिकं पूर्वसाहसम् । यत्तु याज्ञवल्क्येनोक्तम्—'अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसम्' इति तद्दोषभूयस्त्वाभिप्रायम् । उत्तमसाहसं साशीतिपणसाहस्रम् ॥ यः पुनरदुष्टामेव परित्यजति सोऽपि दण्ड्य इत्याह नारदः—'प्रतिगृह्य तु यः कन्यामदुष्टामुत्सृजेन्नरः । विनेयः सोऽप्यकामोपि कन्यां तामेव चोद्वहेत्' इति । विनेयो दण्ड्यः । दण्डमपि स एवाह—'अदुष्टां प्रतिगृह्यापि त्यजन्नुत्तमसाहसम्' इति ॥ ॥ कन्यादोषा अपि तेनैवोक्ताः—'दीर्घकुत्सितरोगार्ता व्यङ्गा संसृष्टमैथुना । दुष्टाऽन्याहितभावा च कन्यादोषाः प्रकीर्तिताः' ॥ अन्योन्याभिरोचने

विशेषमाह स एव—'नादुष्टां दूषयेत्कन्यां नादुष्टं दूषयेद्वरम् । दोषेऽप्यत्र न दोषः स्यादन्योन्यं भज्यते द्वयोः' इति ॥ ॥ अथ विवाहकाले कन्याया ऋतुदर्शने । विवाहकाले कन्या ऋतुमती चेत्तत्राह यज्ञपार्श्वः—'विवाहे वितते तन्त्रे होमकाल उपस्थिते । कन्यां ऋतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥ स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि । युञ्जानमाहुतिं हुत्वा ततः कर्मणि योजयेत्' । युञ्जानः प्रथमं मन इति मन्त्रस्तैत्तिरीयशाखायामभिहितः—'युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः । अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याभरदि'ति । यद्वा—'विवाहहोमे प्रक्रान्ते यदि कन्या रजस्वला । त्रिरात्रं दंपती स्यातां पृथक्शय्यासनाशिनौ । चतुर्थेऽहनि संस्नातौ तस्मिन्नग्नौ यथाविधि' इति । इति विवाहहोमविधिः ।

अथ गृहप्रवेशहोमविधिः । तत्र कारिका—'उपलेपादिकं कृत्वा विवाहाग्निं समिध्य च । प्राग्ग्रीवमूर्ध्वलोमाग्नेः प्रत्यगानडुहं भवेत् ॥ आज्यासादनपर्यन्तमन्वाधानादि पूर्ववत् । चर्मण्यथोपविष्टायां समन्वारभते पतिः । कृत्वाज्यभागपर्यन्तमिध्माधानादिपूर्ववत् ॥ ऋग्भिश्चतसृभिरानः प्रजामित्यादिभिस्त्वथ । पठन्नाज्याहुतीर्हुत्वा स्वाहाकारमृगन्ततः ॥ समञ्जन्त्वित्यृचा प्राश्य दधि तस्यै प्रयच्छति । सा तु प्राश्नाति तत्तूष्णीमथ स्विष्टकृदादिकम् ॥ अथानक्ति हृदयमेतयर्चाज्यशेषतः' इति । इदमत्र गृह्यम्—'विवाहाग्निमुपसमाधाय पश्चादस्यानडुहं चर्मास्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन्नुपविष्टायां समन्वारब्धायामानः प्रजां जनयतु प्रजापतिरिति चतसृभिः प्रत्यृचं हुत्वा समञ्जन्तु विश्वेदेवा इति दध्नः प्राश्य प्रतिप्रयच्छेदाज्यशेषेण वानक्ति हृदये' इति । अस्यार्थः—अग्निप्रणयनान्तं कृत्वा अग्निमुपसमादधाति । समिधः प्रक्षिप्य प्रज्वलयतीत्यर्थः । ततः पश्चादस्यानडुहं चर्मास्तृणाति प्राग्ग्रीवमुत्त-

रलोम ऊर्ध्वलोम । ततोऽन्वाधानाद्याज्यस्य बर्हिषि सादनान्तं कृत्वा तस्मिन् चर्मण्युपविष्टायां समन्वारब्धायां वध्वामिध्माधानाद्याज्यभागान्तं कृत्वा आनःप्रजामिति चतसृभिः प्रत्यृचं हुत्वा । ततः समञ्जन्त्वित्यृचा दध्न एकदेशं स्वयं प्राश्य वध्वै प्राशनार्थं शिष्टं दधि प्रयच्छेत् । सा तु तूष्णीं प्राश्नाति । सकृत्प्रयुक्तस्य मन्त्रस्योभयप्राशनार्थत्वादुभयार्थत्वम् । नाविति द्विवचनात् । आज्यशेषेण वा उभयोर्हृदये अनक्ति तेनैव मन्त्रेण ॥ हृदये अतऊर्ध्वमिति विवृत्य पाठः कार्यः प्रगृह्यत्वात् । ततः स्विष्टकृदादि समापयेत् । विवाहाग्निग्रहणमन्यनिवृत्त्यर्थं । कथं पुनरन्याग्निप्राप्तिशङ्का । 'गृह्याणि वक्ष्यामः' (गृ० १।१।१) इति हि प्रतिज्ञातम् । उच्यते—दायविभागकालेऽग्निः परिगृह्यते चेदत्राप्यन्याग्निः प्रसज्येत तन्निवृत्त्यर्थमिदम् । अपिचात्र विवाहाग्निग्रहणान्न विवाहहोममात्रेणाग्नेर्गृह्यत्वसिद्धिः किं तर्हि गृहप्रवेशनीयहोमे कृते । एवमुभाभ्यां होमाभ्यां गृह्यत्वसिद्धिर्नैकेनेति ज्ञायते । तेन गृहप्रवेशनीयहोमादर्वाग्दर्शपूर्णमासप्राप्तौ पार्वणस्थालीपाको न कार्यः । परिचरणहोमस्तु कार्य एव । 'पाणिग्रहणादि' ( गृ० १।९।१ ) इति वचनात् । वैश्वदेवं च कार्यमेव तस्याग्निविशेषविध्यभावात् । तेनाग्निनाशे होमद्वयं कार्यमिति सिद्धम् । उपसमाधायेति आस्तरणकालोपदेशार्थम् । अथवा समानकर्तृकत्वसिद्ध्यर्थं । तेन यत्रोपसमाधानग्रहणं नास्ति तत्रैवोपसमाधानं कुर्यात् । तस्मिन्निति वचनं चर्मास्तरणानन्तरं तन्त्रान्तरमिति ज्ञापनार्थम् । प्रत्यृचग्रहणं कथम् । ऋगन्ते होमः स्यान्न स्वाहाकारान्त इत्येवमर्थम् । स्वाहाकारं पठन् जुहुयादित्यर्थः । तेन यत्र प्रत्यृचग्रहणं नास्ति तत्र स्वाहाकारं कृत्वा पश्चाद्धोमः कार्यः । आज्यशेषेण वेति सिद्धवदुपदेशादनादेशे

पाठा०—१ अग्न्यन्तर ।

आज्येन होम इति गम्यत इति ॥ अत्र भगवान्—'तत्र प्रदेशे कस्मिंश्चिदुपलेपादिपूर्वकम् । विधाय स्थण्डिलं तस्मिन्विवाहाग्निं निधाय च ॥ ततोऽग्नेः पश्चिमे देशे प्राग्ग्रीवोपरिलोमिकाम् । स्वचमानडुहीं बध्वाः समास्तीर्यासनक्षमाम् ॥ उपवेश्य वधूं तत्र ततोऽन्वाधानपूर्वकम् । अनूयाजविधानान्तं पुरस्तन्त्रं विधाय च ॥ अन्वारब्धस्ततो बध्वा यदिध्माधानपूर्वकम् । पुरस्तात्तन्त्रशेषं तद्विधाय जुहुयात्ततः ॥ आनःप्रजामित्यादिभिर्ऋग्भिश्चतसृभिर्घृतम् । तत्र प्रत्यृचमित्युक्तेर्मन्त्रोक्तावनले हविः । प्रक्षिप्य पश्चात्स्वाहेति शब्दं होता समीरयेत् ॥ ततः समञ्जन्त्वित्याद्यामृचमुक्त्वा स्वयं दधि । किंचित्प्राश्यावशिष्टं च दधि तां प्राशयेद्वधूम् ॥ अथवा हुतशिष्टाज्यशेषेणैवोरसी उभे । समञ्जन्त्वनयैकर्चा स्वस्य बध्वा अपि क्रमात् ॥ ततः स्विष्टकृतादूर्ध्वं तन्त्रं परिसमापयेत्' इति । इति गृहप्रवेशनीयहोमविधिः ॥ ॥ अथ गृहप्रवेशहोमस्थानविचारः । यद्यप्येष गृहप्रवेशहोमो गृह्यकारेण प्रयाणविधेरनन्तरमुक्तत्वात्स्वगृह एव कर्तव्य इति प्रतिभाति तथापि श्वशुरगृह एव प्राचुर्येणाचारदर्शनाद्विवाहहोमानन्तरं तत्रैव गृहप्रवेशसंज्ञको होमः कर्तव्यः । ननु शिष्टाचारेण गृह्यस्य बाधितत्वात्कथं श्वशुरगृहे कर्तव्य इति चेत् । सत्यम् । केवलाचारस्य बाधकत्वेपि स्मृत्यन्तरानुगृहीतस्याचारस्याबाधकत्वोपपत्तेः ॥ तत्र प्रसङ्गादाह मन्नुपार्श्वः—'अतो नागबलिं कृत्वा रात्रौ संवेशनं शुभम्' इति । संवेशनं प्रवेशनम् । अनेन चतुर्थदिवसात्प्राग्गृहप्रवेशनमशुभमित्युक्तं भवति । तस्मादेष होमः श्वशुरगृहे कर्तव्यः । अथवा कल्पसूत्राधिकरणोक्तन्यायेन गृह्यस्य प्राबल्यात्तत्रोक्तक्रमेण प्रयाणविधेरनन्तरं स्वगृहे गृहप्रवेशहोमः कर्तव्यः । अत्र देशाचारतो व्यवस्था द्रष्टव्या ॥ ततस्त्रिरात्रव्रतं चरित्वा विवाहकाले बध्वा परिहितमम्बरं सूर्यासूक्तविदे ब्राह्मणाय दत्त्वा व्रतसंपूर्त्यर्थं ब्राह्मणे-

भ्योऽन्नं दत्त्वा तैः स्वस्त्ययनं वाचयेत्। तथाच कारिका—'वध्वा विवाहवेलायां यत्तत्परिहिताम्बरम्। सत्येनोत्तभितासूक्तं वेत्ति यः पाठतोऽर्थतः॥ तस्मै विप्राय तद्दद्याद्व्रतान्ते धौतमम्बरम्। ब्राह्मणान्भोजयित्वा तानोंस्वस्तीत्यथ वाचयेत्। ओंस्वस्तीति प्रतिब्रूयुर्ब्राह्मणास्तेन पूजिताः॥ दंपत्योरत आरभ्य गृहप्रवेशीयहोमतः। ऊर्ध्वं त्रिरात्रमथवा द्वादशाहं भवेद्व्रतम् ॥ अब्दं वा क्षारलवणवर्जितं भोजनं भवेत्। अधश्च शयनं तद्वद्ब्रह्मचर्यं च वै भवेत्' इति॥ इदमत्र गृह्यम्—'अतऊर्ध्वमक्षारालवणाशिनौ ब्रह्मचारिणावलंकुर्वाणावधःशायिनौ स्यातां त्रिरात्रं द्वादशरात्रं संवत्सरं वैकऋषिर्जायत इति चरितव्रतः सूर्याविदे वधूवस्त्रं दद्यादन्नं ब्राह्मणेभ्योऽथ स्वस्त्ययनं वाचयीत' इति। अस्यार्थः—अतऊर्ध्वमक्षारालवणाशिनावित्यादि। विवाहादारभ्यैते नियमा भवन्त्युभयोः 'हैडम्बिका राजमाषा माषा मुद्गा मसूरकाः। लङ्कयाढक्यश्च निष्पावास्तिलाद्याः क्षारसंहिताः'। गृहप्रवेशनीयहोमात्प्रागपि नियमानामिष्टत्वाद्योगविभागः कृतः। उत्तरविधिमाह—अतऊर्ध्वं त्रिरात्रं द्वादशरात्रमिति। अतो गृहप्रवेशनीयहोमादूर्ध्वं त्रिरात्रं द्वादशरात्रं वा संवत्सरं वा नियतौ स्यातामेकर्षिकल्पः पुत्रो जायत इति कृत्वा। अन्येत्वाहुः व्रतान्ते एकऋषिः संपद्यते पितृगोत्रं विहाय पतिगोत्रं भजत इत्यर्थः। चरितव्रत इत्यादि। व्रतानन्तरं सूर्याविदे वध्वा उपयमनकाले उपहितं धृतं वस्त्रं दद्यात्। सूर्यया दृष्टो मन्त्रः सूर्या यथा वृषाकपिरिति। साच सत्येनोत्तभितेति सूक्तम्। कथं पुनरसौ वेत्ति।-स्वरतो वर्णत इत्यादि। अन्नं ब्राह्मणेभ्य इत्यादि। दद्यादिति शेषः। अथ स्वस्त्ययनमित्यादि। ॐ स्वस्ति भवन्तो ब्रुवन्त्विति। तेच ॐ स्वस्तीति प्रतिब्रूयुः। अत्र भगवान्—'अत ऊर्ध्वं त्रिरात्रं तौ द्वादशाहमथापि वा। शक्तिं वीक्ष्य तथाब्दं वा चरेतां दंपती व्रतम्॥ अक्षारलवणाहारौ

भवेतां भूतले तथा । अधीयातां समावेशं न कुर्यातां वधूवरौ ॥ व्रते समाप्ते वध्वा च विवाहसमये धृतम् । वस्त्रं प्रदद्यात्तत्सर्वं ब्राह्मणाय विपश्चिते ॥ सूर्यानाम्नीमृचो वेत्ति शब्दार्थस्तत्त्वश्च यः । सत्येनोत्तभितेत्याद्यामृचमारभ्य या ऋचः ॥ विहिसोतोरसृक्षत नेन्द्रमित्याद्यृचः पुरा । अधीतास्ता इहोच्यन्ते सूर्याशब्देन सूरिभिः ॥ ब्राह्मणान्भोजयित्वा तैः पुण्याहमथ वाचयेत्' इति । आह सत्यव्रतः—'विवाहे दंपती स्यातां त्रिरात्रं ब्रह्मचारिणौ । अधःशय्यासिनौ स्यातामक्षारलवणाशिनौ' इति । इति व्रतविधिः ।

अथ चतुर्दिवसकर्तव्यम् । अथ चतुर्षु दिवसेषु कर्तव्यताविशेषमाह स एव—'दंपती रोहिणीसोमौ भूत्वा प्राथमिके दिने । दाक्षायणीं यजेयातां द्वितीयदिवसेऽपि तौ । पूजयेतां महादेवीं गन्धर्वाप्सरसौ च तौ । अग्निस्वाहे तृतीयेऽथ पूजयेतां च कालिकाम् ॥ चतुर्थ्यां तौ जयेयातां शांकरीं मानवस्त्रियौ । एवं प्रतिदिनं पूजां कुर्यातां दंपती तदा ॥ चतुर्ष्वेतेषु दिवसेष्वर्चयेद्ब्राह्मणान्बहून् । वस्त्रहेमादिमृष्टान्नताम्बूलादिप्रदानतः ॥ आशीर्वादैर्बहुविधैश्चतुर्वेदोदितैर्द्विजैः' इति दाक्षायण्यादिपूजाविधिः ।

अथान्तरा मृतसूतके निर्णयः । अत्रान्तरा सूतकनिर्णय उच्यते ब्रह्मपुराणे—'विवाहयज्ञयोर्मध्ये सूतके सति चान्तरा । शेषमन्नं परैर्देयं दातॄन्भोक्तॄंश्च न स्पृशेत्' इति । शेषमन्नं परैर्देयमित्येतत्तु भोक्तृगृहव्यतिरिक्तजन्ममरणविषयम् । दातॄन्भोक्तॄंश्च न स्पृशेदित्यत्र दोष इति शेषः । अत्राह क्रतुः—'विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके । पूर्वसंकल्पितं द्रव्यं दीयमानं न दुष्यति' इति ॥ अत्र कालनिर्णय उच्यते तत्रैव—'प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः । नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया ॥ अङ्कुरार्पणमारभ्य आर्त्विज्ये वरणं तथा । शावके सूतके चैव दोषस्तत्र न विद्यते' इति । इति मङ्गलमध्ये सूतके निर्णयः ।

अथ मन्त्रार्थः । अथ विनियुक्तमन्त्राणामर्थः—तत्र मधुपर्के विष्टरोपवेशने अहंवर्ष्मेति—विद्युतां विद्योतनस्वभावानां ज्योतिषां यथा सूर्यः प्रधानभूतः एवमहं सजातानां वर्ष्म प्रधानभूतः । यः कश्चन मा मां अभिदासति उपक्षपयति । अभिदासतीति णिचो रूपम् । इदं तमधितिष्ठामि आक्रम्य स्थितोस्मि । अनेन विष्टरोपक्रमेण शत्रवो नश्यन्त्वित्यर्थः ॥ ॥ अमृतोपस्तरण-मसीति—हे अमृत, त्वं मधुपर्कस्य उपस्तरणमसि । यथा पुरोडाशादेराज्यमुपस्तरणं तद्वत् ॥ ॥ मित्रस्यत्वेत्यवेक्षणं मधुपर्कस्य—मित्रस्य मित्रभूतस्य मम चक्षुषा त्वां प्रतीक्षे प्रतिपश्यामि ॥ देवस्य त्वेत्युपनयने व्याख्यातम् ॥ ॥ मधु वाता इति—वाताः वायवः मधु स्वादु इदं ऋतायते ऋतमिति कर्मनाम । ऋतं श्रौतस्मार्तलक्षणं मधुपर्काख्यं कर्म मम भवत्विति इच्छते यजमानाय मधु क्षरन्ति क्षरन्तु । सिन्धवो नद्यः मे मधु क्षरन्ति । लोडर्थे लट् क्षरन्तु । ओषधीः ओषधयश्च नः माध्वीः माध्व्यः सन्तु मधु प्रयच्छन्तु ॥ ॥ मधुनक्तमिति—नक्तं रात्रिः नो मधु देयात् । उत अपिच उषसः मधुमन्तः सन्तु मधुराः स्युः । पार्थिवं रजः पृथिवीलोकः । रजःशब्दो लोकवाची 'लोका रजांस्युच्यन्ते' इति । मधु द्यौरस्तु नः पिता सर्वेषां द्यौर्द्युलोकपालको मधु मधुमानस्तु ॥ ॥ मधुमान्न इति—वनस्पतिः सोमः नो मधुमानस्तु । सूर्यश्च मधुमानस्तु । गावश्च नो माध्वीः मधुदात्र्यो भवन्तु ॥ ॥ निमार्जने वसवस्त्वेत्यादि—हे मधु, वसवः अष्टौ वसवः प्रातःसवने त्वा त्वां गायत्रेण छन्दसा भक्षयन्तु । रुद्राः 'एकादश-रुद्राः त्वां मध्यंदिनसवने त्रैष्टुभेन छन्दसा भक्षयन्तु । आदित्याः द्वादशादित्याः त्वां तृतीयसवने जागतेन छन्दसा भक्षयन्तु । तत्रैव सवने विश्वेदेवास्त्वा आनुष्टुभेन छन्दसा भक्षयन्तु । भध्यात्त्रिरुन्नयति भूतेभ्यः यक्षरक्षःप्रभृतिभ्यः त्वा त्वामहं ददामि ॥

विराजो दोहोऽसि। विराडन्नं तस्य त्वं दोहोऽसि सारोऽसि। विराजो दोहमशीयेति अन्नस्य दोहमशीय अश्नीयाम्। मयि दोहः पद्यायै विराजः मयि प्राप्तो यो विराजो दोहः स पद्यायै पदं स्थानं तत्र भवा पद्या तत्स्थानोत्पन्ना पुत्रादिका प्रजा तस्यै भवतु॥ अमृतापिधानमसीति। हे मधुपर्क, अमृतस्यापिधानं आच्छादनं यत्तदसि। यथा हविर्भिरवदानानन्तरमभिघारणं तद्वत्। सत्यं यशः श्रीर्मयि श्रीः श्रयतां। सत्यं प्रथमा यशो द्वितीया श्रीस्तृतीया ऋचो यजूंषि सामानि 'सा हि श्रीरमृता सता'मिति दर्शनादृग्यजुःसामस्थानीया सत्यादिस्वरूपा च या श्रीः सा मयि मधुपर्कभक्षणेन श्रयताम्। गां वेदयन्ते—अस्याः यो वधमनुजानाति सः जपति—हतो मे पाप्मेति—मे पाप्मा पापं हतोऽस्तु न गौः। पाप्मा मे हत इति पुनर्वचनमादरार्थम्। जपित्वा ब्रूयात्। ॐकुरुतेति सामान्यवाची करोतिः प्रकरणाद्विधिशेषे वर्तते। ॐ हतेत्युक्तं भवति। उत्सर्जनकामस्तु जपति—मातारुद्राणामिति। रुद्राणां एकादशरुद्राणां माता जननी वसूनां अष्टवसूनां दुहिता आदित्यानां द्वादशादित्यानां स्वसा सर्वेषां देवानां यज्ञभागित्वात्तस्या अपि आज्यद्वारेण यज्ञसाधनत्वात्तस्या लक्षितलक्षणया देवमात्रादित्वम्। अमृतस्य अमरत्वप्राप्तिहेतोर्यज्ञस्य नाभिः आज्यद्वारेण प्रधानावयवः यतः कारणादियं गौरेवंविधा अतः कारणात् चिकितुषे चिकितं ज्ञानं तद्वते जनाय प्रनुवोचं नु क्षिप्रं प्रकर्षेण वोचं प्रब्रवीमि। अनागां अनागसं अदितिं अदितिस्वरूपां इमां गां मा वधिष्ट मा हत इति जपित्वा ब्रूयात्—ॐ उत्सृजतेति॥ ॥ अथ विवाहमन्त्रार्थः। कन्याप्रतिग्रहमन्त्रः क इदं कस्मा अदादिति—कः प्रजापतिः इदं द्रव्यं कस्मै ब्रह्मणे अदात् ददाति। अत्र दातृप्रतिग्रहीत्रोः प्रजापतित्वकल्पनया अपरोक्षव्यवहार उक्तः। कामः स्वसंकल्पफलापेक्षा। कामाय

प्रतिग्रहीतुः कामाय अदात् । अतएव कामो दाता काम एव दाता न यजमानः । दानकाम एव प्रतिग्रहीता नाहं, कामस्यैव निमित्तत्वात् । भो प्रजापते, इतः परं कामं प्रतिगृह्य कामं समुद्रं समुद्रपदं आविश प्रवेशय । भो ग्राह्यद्रव्य, कामेन त्वा त्वां प्रतिगृह्णामि कामेन-प्रेर्यमाणोऽहं प्रतिगृह्णामि न मदर्थम् । हे काम, एतत्ते एतद्द्रव्यं ते तवैव न मम । त्वं सर्वकारणभूता वृष्टिरसि अतः कारणाद् द्यौः द्युस्थानीयो दाता वृष्टिस्वरूपां त्वां ददातु । पृथिवी पृथिवीस्वरूपः प्रतिग्रहीता प्रतिगृह्णातु । दातृप्रतिग्रहीत्रोः परोक्षव्यवहारः ॥ अत्र आयूंषीत्यादिमन्त्रचतुष्टयं चौले व्याख्यातम् ॥ त्वमर्यमेति—हे सधानन्द हविर्लक्षणान्नवन् अग्ने, त्वं नः यस्मात्कारणात् कनीनां कन्यकानां अर्यमा दाता भवसि । 'यः खलु वै ददाति सोऽर्यमे'ति श्रुतेः । तस्मात्कारणात्त्वं वैदिकैरज्ञातं नाम बिभर्षि । यद्यस्मात्कारणात् हे अर्यमसंज्ञक-अग्ने, त्वं दंपती वधूवरौ समनसा समनस्कौ कृणोषि करोषि तस्मात्कारणात् सर्वेषां मित्रं नः मित्रमिव स्थितं सुतं सुष्ठु निहितं त्वां गोभिर्गोविकारैराज्यादिभिरञ्जन्ति कान्तियुक्तं कुर्वन्ति ॥ ॥ गृभ्णामित इति—हे स्त्रि, त्वं यथा मया पत्या जरदष्टिः जरावस्थाप्राप्तिर्यस्याः सा जरदष्टिः असाः तथा ते तव हस्तं सौभगत्वाय सौभाग्याय गृभ्णामि गृह्णामि । भगो अर्यमा सविता पुरंधिः पूषा चैते देवाः मह्यं त्वा त्वां गार्हपत्याय गृहस्थाश्रमाय अदुः ॥ ॥ अर्यमणं नु देवमिति—अर्यमणं अर्यमसंज्ञकं देवं द्योतनात्मकं अग्निं नु क्षिप्रं कन्याः अयक्षत इष्टवत्यः । सोऽर्यमा देवः इमां वधूं इतः पितृकुलात् प्रमुञ्चातु । नामुतः अमुष्मात् भर्तृकुलात् न प्रमुञ्चातु । सा मय्युपासक्ता यथा पितृकुलं न गच्छेत् तथा करोतु । एतेनोत्तरौ व्याख्यातौ ॥ ॥ अमोऽहम-

स्मीति—हे स्त्रि, अहं अमोऽस्मि सामस्थानीयोऽस्मि । त्वं सा ऋक्स्थानीयासि । सा त्वमसमोहमिति पुनर्वचनमादरार्थम् । द्यौः द्युलोकस्थानीयोऽहं त्वं पृथिवी पृथिवीस्थानीया । सामाहं ऋक्त्वं । तौ आवां आसमन्तादिह विवहावहै विवाहं करवावहै । तत्र प्रजां संतानं प्रजनयावहै उत्पादयावहै च । संप्रियौ परस्परं प्रीयमाणौ रोचिष्णू रूपशीलादिनान्योन्यसौ रोचमानौ सुमनस्यमानौ सुमनस्कौ शतं शरदो जीवेव जीविनौ भवेव ॥ ॥ इममश्मानमिति—हे वधूः, इममश्मानं दृषदं आरोह । अश्मेव अश्मवत् त्वं स्थिरा भव दृढा भव । पृतनायतः योद्धुकामान् सहस्व । पृतन्यतः तानेवमभितिष्ठ अभिभूय तिष्ठ वशीकुरु ॥ ॥ प्रत्वा मुञ्चामीति—हे वधूः, सुशेवः शेव इति सुखनाम सुष्ठु सुखयिता सविता येन पाशेन त्वा त्वां अबध्नात् बद्धवान् तस्माद्वरुणस्य पाशात् अहं त्वां प्रमुञ्चामि । ऋतस्य सत्यस्य योनौ स्थाने सुकृतस्य पुण्यस्य कर्मणो लोके गृहस्थाश्रमे मया पत्या सह केनाप्यरिष्टां अहिंसितां त्वां दधामि स्थापयामि ॥ ॥ प्रेतो मुञ्चामीति—इतः पितृकुलात् त्वामहं प्रमुञ्चामि । नामुतः अमुष्मात् भर्तृकुलात् न प्रमुञ्चामि । न केवलं प्रमुञ्चामि किंतर्हि सुबद्धां अमुतः अमुष्मिन्कुले करं करोमि । मीढ्वः वर्षितः हे इन्द्र, यथेयं वधूः सुपुत्रा सुभगा च असत् भविष्यति तथा कुरु ॥ ॥ इष एकपदीति—एकं पदं अभ्युत्क्रान्तं यया सा एकपदी त्वं इषे अन्नाय भव । सा त्वं मामनुव्रता मां प्रत्यनुकूलव्रता भव । आवां बहून्पुत्रान् विन्दावहै लभावहै । ते च पुत्राः जरदष्टयः सन्तु । जरसी जरायुक्ता अष्टिर्येषां ते जरदष्टयः । अष्टिरायुषो व्याप्तिः ॥ ऊर्जे द्विपदी भवेति—द्वे पदे अभ्युत्क्रान्ते यया सा द्विपदी त्वं ऊर्जे बलाय भव । शेषं पूर्ववत् ॥ रायस्पोषायेति—त्रीणि पदान्यभ्युत्क्रान्तानि यया सा त्रिपदी त्वं रायस्पोषाय राः धनं तस्याः

पोषाय । शेषं समानम् ॥ मायोभव्यायेति—मय इति सुखनाम । तद्भावयतीति मयोभूः तस्य भावो मायोभव्यं तस्मै मायोभव्याय त्वं चतुष्पदी भव । उक्तमन्यत् ॥ प्रजाभ्य इति—प्रजाभ्यः पुत्रादिभ्यः पञ्चपदी भव ॥ ऋतुभ्य इति—ऋतुभ्यः ऋतुशब्देन तत्रस्था भोगा लक्ष्यन्ते तेभ्यः ऋतुभोगेभ्यः त्वं षट्पदी भव ॥ सखेति—सखा सप्तपदी त्वं सखा भव सखी भव । शेषं सर्वत्र समानमिति ॥ जीवपत्नीति—जीवः पतिर्यस्याः सा जीवपत्नी अहं प्रजां संतानाभिवृद्धिं विन्देय लभेय इति ॥ ॥

अथ गृहप्रवेशमन्त्रार्थः । आ नः प्रजामिति—प्रजापतिर्नः आवयोः प्रजां पुत्रादिकां आजनयतु । अर्यमा आजरसाय जरापर्यन्तजीवनाय समनक्तु संगमयतु । हे वधूः, त्वं अदुर्मङ्गलीः अकुत्सितमङ्गली(मना)भूत्वा पतिलोकं पत्युर्मम गृहं आविश प्राविश । नः अस्माकं द्विपदे भृत्यादिकाय शं सुखकरी भव । चतुष्पदे पश्वादिकाय शं सुखकरी भव ॥ अघोरचक्षुरिति—हे वधूः, त्वं अघोरचक्षुः अक्रूरदृष्टिः अपतिघ्नी पत्युर्ममाऽहन्त्री तद्धेतुभूतं कर्माऽकुर्वती एधि वर्धस्व । मम पशुभ्यः पानीयादिप्रदानेन शिवा सुखकरी भव । सुमनाः सुवर्चाश्च भव । वीरसूः पुत्राणामेव प्रसवित्री देवकामा देवान्यष्टुमिच्छन्ती स्योना सुखकरी भव ॥ इमां त्वमिति—हे इन्द्र, मीढ्वः वृष्ट्युदकैर्वृष्टेः सेक्तः, त्वं इमां वधूं सुपुत्रां शोभनपुत्रां सुभगां च कृणु कुरु । अथास्यां वध्वां दश पुत्रानाधेहि मया आधापय । पतिं मामेकादशं कृधि कुरु ॥ सम्राज्ञीति—हे वधूः, श्वशुरे सम्राज्ञी शुश्रूषादिना तत्कृतेन बहुमानेन सम्यक् राजतीति सम्राज्ञी भव । तथा श्वश्र्वां अस्मन्मातरि सम्राज्ञी इष्टा भव । ननान्दा पत्युः स्वसा तस्यां अधिदेवृषु वरेषु अधि सम्राज्ञी भव तत्कृतैर्बहुमानैर्दीप्ता भव ॥ समञ्जन्त्विति—नौ आवयोः हृदयानि विश्वेदेवाः समञ्जन्तु सस्नेहानि कुर्वन्तु । अपगत-

क्लेशानि कृत्वा लौकिकवैदिकेषु विषयेषु प्रकाशयुक्तानि कुर्वन्त्वित्यर्थः । तथा आपश्च समञ्जन्तु तथा मातरिश्वा नौ हृदयानि संदधातु । आवयोः बुद्धिं परस्परानुकूलां करोत्वित्यर्थः । धाता च संदधातु । देष्ट्री फलानां दात्री सरस्वतीत्यर्थः । सा च संदधातु । उशब्दः पादपूरणार्थः ॥ इति विवाहमंत्रार्थः ॥

अथ प्रसङ्गात्सत्येनोत्तभितेत्यादीनामष्टमाष्टकतृतीयाध्यायगतैकोनविंशप्रभृतिनववर्गाणामर्थः संगृह्यते—दशममण्डलगतसप्तमेऽनुवाके पञ्चसूक्तानि । तत्र सत्येनेति सप्तचत्वारिंशदृचं प्रथमं सूक्तं सवितृसुतायाः सूर्याया आर्षम् । सूक्तविनियोगो लैङ्गिकः ॥ ॥ सत्येनोत्तभितेति—सत्येन ब्रह्मणा अनन्तात्मना । ब्रह्मा खलु देवानां मध्ये सत्यभूतः तेनाधःस्थितेन भूमिरुत्तभिता उपरि स्तम्भिता यथा अधो न पतेत्तथा कृता । यद्वा सत्येनानृतप्रतियोगिना धर्मेण भूमिरुत्तभिता उद्धृता फलिता भवतीत्यर्थः । असति सत्ये भूम्यां सस्यादयो न फलन्ति । तथा सूर्येण देवेन द्यौरुत्तभिता । सूर्यो हि द्युस्थानत्वाद्दिवं दधार । ऋतेन यज्ञेन आदित्या अदितेः पुत्रा देवास्तिष्ठन्ति यज्ञेन यजमानदत्तेन खल्वाहुत्या देवा उपजीवन्ति । दिवि द्युलोके सोमो देवतानामाप्यायनकारी वल्लीरूपो देवतारूपश्चाधिश्रितः अधितिष्ठति । इति स्वपतिं सोमं सूर्या स्तौति ॥ ॥ सोमेनादित्या इति—सोमेनादित्या अदितेः पुत्राः इन्द्रादयो बलिनो भवन्ति ऐन्द्रवायवादिग्रहपरिग्रहादिति भावः । तथा सोमेन आहुत्यात्मना हुतेन पृथिवी भूमिः मही महती भवति । आहुत्या वृष्टिद्वारेण सस्यादिसंपत्तेः । अथो अपिचायं सोमो नक्षत्राणामेषां नक्षं त्रायन्त इति नक्षत्रा ग्रहचमसादयः तेषामेषामुपस्थे सोमो रसात्मक आहितः । यद्वा प्रसिद्धानामेव नक्षत्राणामुपस्थ उपस्थाने द्युलोके सोम

आहितः । 'तृतीयस्यामितो दिवि सोम आसीत्तं गायत्र्याहर'दित्यादिश्रुतेः । देवतारूपसोमपक्षे—सोमेनादित्या देवा बलिनो बलवन्तो भवन्ति तस्यैकैककलास्वादनात् । 'प्रथमां पिबते वह्निर्द्वितीयां पिबते रवि'रित्यादिस्मृतेः । सोमेन पृथिवी मही अमृतसेकेनौषध्याद्यभिवृद्ध्या पृथिव्या बलवत्त्वं चन्द्रस्य नक्षत्राणामुपस्थे स्थितिः प्रसिद्धा ॥ ॥ सोमं मन्यत इति—तं सोमं मन्यते । पपिवान् वैद्येन कामार्थं चिकित्साद्यर्थं पीतः सोमो येन । यत् यमित्यर्थः । यं सोममोषधिं वल्लीरूपं संपिंषन्ति सामर्थ्याद्राकः । पपिवान् ... साथनिकाः । नच स साक्षात्सोमः । तर्हि कः । उच्यते । सोमं हितं मन्यते यं ब्रह्माणः यद्ब्रह्म । ब्रह्मशब्दो ब्राह्मणशब्दपर्यायोऽस्ति 'कुवोऽनुचरसि ब्रह्मन् तस्मै मायया निविपाय ब्रह्म'न्नि त्यादिप्रयोगात् । ब्राह्मणा इत्यर्थः । ते च ऋत्विजो यजमानाश्च यागसाधनभूतं संस्कर्तुं विदुर्जानन्ति तं तस्यांशं । यद्वा कर्मणि षष्ठी । तं सोमं कश्चनाश्नाति कश्चिदप्ययज्वेति शेषः । यज्वैनं भक्षितुमर्हति नान्य इत्यर्थः । एवमोषधिपक्षे । अथ चन्द्रपक्ष उच्यते—तं सोमं मन्यते पपिवान् पीतवान् पीतसोमो यजमानः यत् यमोषधिरूपं संपिंषन्ति अभिषवग्रावमिरध्वर्य्वादयो यजमानाश्च नच स सोमः । कस्तर्हि । यं ब्रह्माणो ब्राह्मणा अभिज्ञा देवज्ञा विदुः कथयन्ति चन्द्रमसम् । 'न तस्याश्नाति कश्चन देवो देवेभ्योऽन्यो मनुष्यादिः देवा अग्न्यादयो रश्मयो वा । यज्ञार्हसोमस्यासोमत्वं न निन्दार्थं अपितु इतरस्य स्तुत्या इति मन्तव्यम् । 'अपशवोऽन्ये गोअश्वेभ्य' इत्यादिवत् । एवमत्र सौम्या उभयथा योज्याः ॥ ॥ आच्छद्विधानैरिति—हे सोम, आच्छद्विधानैः आच्छादयन्ति विधानानि येषां ते आच्छद्विधानाः तैर्गुपितः । तथा बार्हतैः गुपितः स्वानभ्राजाङ्घार्यादिभिः सप्तभिः सोमपालैः रक्षितस्त्वं । 'एते वा अमुष्मिँल्लोके सोममरक्षन्' इति ब्राह्मणम् । ग्राव्णामिच्छृण्वन् अभिषवग्राव्णां ध्वनिं शृण्व-

नैव तिष्ठति वै त्वां पार्थिवः पार्थिवो जनः नाश्नाति। नहि द्युस्थश्चन्द्ररूपः सोमोऽन्यैः पानयोग्यो भवति। 'चन्द्रमा वै सोमो देवानामन्नं तं पौर्णमास्यामभिषुण्वन्ति' इति वाजसनेयकम् ॥ ॥ यत्त्वा देवेति—हे देव सोम, यद्यदा त्वा त्वां प्रपिबन्त्योषधिरूपं निष्पपि सवनेषु ततोऽनन्तरमेव पुनराप्यायसे। आप्यायस्व समिति प्रातःसवने सं ते पयांसीत्युत्तरयोः सवनयोराप्यायसे। किंच वायुस्तव सोमस्य रक्षिता यथा न शुष्यति तथा। वायुः शोषकः प्रसिद्धो लोके। किंच मासः मास्यते परिमीयत इति मासः सोमः स च समानां संवत्सराणामाकृतिः आकर्ता व्यवच्छेदको भवति। संवत्सरे संवत्सरे वसन्तादिकालेष्वनुष्ठीयमानत्वात् 'वसन्तेवसन्ते ज्योतिषा यजेत' इति श्रुतेः। यद्वा सोमाधारवनस्पतिविकारग्रहद्वारेण वायुः सोमस्य रक्षिता भवति। 'वायुगोपा वनस्पतयः' इति श्रुतेः। एवं वल्लीरूपसोमपक्षे योजना। चन्द्रपक्षेतु—हे देव सोम, यत् यदा त्वा त्वां प्रपिबन्ति रश्मयोऽपरंपक्षे ततः अनन्तरमेव पूर्वपक्षे पुनराप्यायसे। वायुश्च सोमस्य तव रक्षिता वाय्वधीनत्वाच्चन्द्रगतेः। किंच समानां संवत्सराणां मासः। षष्ठ्येकवचनमेतत्। मासस्य चाकृतिः. कर्ता त्वं च। अस्यैकैककलाह्रासवृद्धिभ्यां हि मासः पूर्यते तैः संवत्सर इति। इत्यष्टमस्य तृतीये विंशो वर्गः ॥ २० ॥ ॥ रैभ्यासीदिति—आभिः सूर्या सवितुराहमस्तौदित्युक्तं। सूर्यासावित्री ब्रूते। रैभी रैभ्यः काश्चन ऋचः। 'रैभीः शंसति रेभन्तो वै देवाश्च ऋषयश्च स्वर्गं लोकमायन्' इति ब्राह्मणविहिता रैभ्यः। सा रैभी अनुदेय्यासीत् यजमानवधूविनोदनायानुदीयमाना वयस्यासीत्। तथा नाराशंसी 'प्रातारत्नम्' इत्यादिका मनुष्याणां स्तुतयो नाराशंस्यः सा नाराशंसी। न्योचनी उच्यतिः सेनाकर्मा। सा वधूशुश्रूषार्थं दीयमाना दास्यभवत्। सूर्यायाः भद्रं वासः विचित्रदुकूलादिकमाच्छादनयोग्यं

वस्त्रं गाथया परिष्कृतमलंकृतमिति गाथा गीयते इत्यादिब्राह्मणोक्ता गाथा तया गाथया परिष्कृतमस्ति तद्वासोऽभवदिति ॥ ॥ चित्तिरा इति—चित्तिर्देववा उपबर्हणं आः आसीत् चक्षुरभ्यञ्जनं आः आसीत् । तथाहि 'वृत्रस्य कनीनिका परापतत् । त्रिककुन्नाम पर्वतः तेन त्रैककुदेनाञ्जनेन सजातीयेन चक्षुषी अञ्जीत तच्चक्षुरेवाञ्जनमासीत्' इति । द्यौश्च भूमिश्च कोश आसीत् कोशस्थानीये अभूताम् । यद्यदा सूर्या पतिं स्वकीयं नवभर्तारं सोमं अयात् अगच्छत् तदेवमुपकरणान्यासन् ॥ ॥ स्तोमा आसन्निति—सूर्याया रथस्य स्तोमाः त्रिवृदादयः प्रतिधयः प्रतिधीयन्त इति प्रतिधयः ईषातिर्यगायतकाष्ठादयः आसन् । तथा कुरीरं छन्दः अनसः ओपशोऽभवत् । येनोपशेरते स ओपशः । तादृशायाः सूर्याया अश्विना अश्विनौ वरावरौ आस्तामिति शेषः । तस्या विवाहे पुरोगवः पुरो गन्ता यः पूर्वमेव प्रस्तावार्थं गच्छति तत्स्थानीयोऽग्निरासीत् । 'प्रजापतिर्वै सोमायराज्ञे दुहितरं प्रायच्छत् सूर्यां सावित्रीं तस्यै सर्वे देवा वरा आगच्छन्' इत्यादिब्राह्मणम् । अत्रायमभिप्रायः—प्रजापतिः सविता स्वदुहितरं सोमाय प्रायच्छत् सोमाय दास्यामीति मनीषामकरोत् । तस्मिन्समये पुत्र्या उपचारार्थं प्रदानान्युक्तान्यभवन् । तथाच सति अश्विनौ प्रज्वलौ सन्तौ आर्जि पुरतो गत्वा तामलभेतामिति । उत्तरत्रापि 'सोमो वधूयुरभवत्' इत्यादिनायमेवार्थः स्पष्टो भविष्यति । योपावृणीत जेन्येत्यादिकमुक्तम् ॥ ॥ सोमो वधूयुरिति—सोमो वधूयुर्वधूकामो वरोऽभवत् । तस्मिन्समये अश्विना अश्विनौ उभा उभौ वरा वरौ आस्तां अभूताम् । यद्यदा सूर्यां पत्ये शंसन्तीं पतिं कामयमानां पर्याप्तयौवनामित्यर्थः । सूर्यां मनसा सहिताय सोमाय वराय सविता तत्पिता अददात्प्रादात् दित्सांचकार ॥ ॥ मनो अस्या इति—अस्याः सूर्यायाः पत्युर्गृहं गच्छन्त्याः अनो रथो मनः

आसीत् या पतिगृहं त्वया गच्छामीति मतिरस्ति सा अनः आसीत् । उतापिच तस्य अनसो द्यौर्द्युलोकः छदिः उपर्यपिधानमासीत् । शुक्रौ दीप्तौ सूर्याचन्द्रमसावनड्वाहौ रथस्य वोढारौ आस्तां अभवताम् । यद्यदा सूर्या सोमगृहमयात् अगात् । इत्यष्टमस्य तृतीये एकविंशो वर्गः ॥ २१ ॥ ॥ ऋक्सामाभ्यामिति—हे सूर्ये देवि, ते तव ऋक्सामाभ्यामभिधानीस्थानाभ्यां अभिहितौ गावौ गोस्थानीयौ सूर्याचन्द्रमसौ सामनौ समानौ सन्तौ इतः गच्छतः अनोवाहौ पत्युर्गृहंप्रति गच्छतः । ते तव श्रोत्रं श्रोत्रे इत्यर्थः । गस्य गुणग्राहिणी श्रोत्रे एव चक्रे आस्तां मनोरूपस्य रथस्य श्रोत्रे चक्रे अभवतामित्यर्थः । दिवि पन्थाश्चराचरः चलाचलः अत्यन्तं गमनसाधनभूतो मार्गोऽभूत् रथसंचारप्रदेशो द्युलोक आसीत् ॥ ॥ शुची ते चक्रे इति—यात्या गच्छत्यास्ते तव अनसश्चक्रे चंक्रमणशीले रथाङ्गे शुची श्रोत्रे आस्तां । व्यानस्तव व्यानो वायुः अक्षः उभयरथच्छिद्रगामिनी या काष्ठा सा च रथस्य सर्वं भारं वहति सोऽक्षो व्यानोऽभूत् । मनस्मयं मनोमयं अनः शकटं सूर्यापतिं सोमंप्रति प्रयती प्रकर्षेण गच्छन्ती आरुहत् आरूढवती । पतिंप्रति जिगमिषोर्मनोरूपस्य रथस्य पत्युर्गुणश्राविणी श्रोत्रे एव चक्रे अभूताम् । व्यानो धारको वायुश्चेत्यधकोऽक्षोभूदित्यर्थः ॥ ॥ सूर्याया वहतुरिति—सोमाय प्रदित्सितायाः सूर्यायाः वहतुः कन्याप्रियार्थं दातव्यो गवादिपदार्थो वहतुः सच प्रागात् अस्या अपि पूर्वमगच्छत् । यं वहतुं सविता अस्याः पिता अवासृजत् अवसृष्टवान् प्रादादित्यर्थः । कदा सागच्छत् कदा वहतुरिति उभयोः काल उच्यते । अघासु मघास्वित्यर्थः । मघानक्षत्रेषु सवित्रा दत्ता गावः सोमगृहं प्रति हन्यन्ते दण्डैस्ताड्यन्ते प्रेरणार्थं । अर्जुन्योः फल्गुन्योरित्यर्थः । तयोर्नक्षत्रयोः सवितुः सकाशात् परि सोमगृहंप्रति उह्यते नीयते रथेन ॥ ॥

यदश्विना इति—हे अश्विना अश्विनौ, यद्यदा पृच्छमानौ सवितारं प्रष्टुं आयातं गच्छतम्। केन साधनेन यातं तदुच्यते। त्रिचक्रेण चक्रत्रययुक्तेन रथेन। किं पृच्छमानौ। सूर्याया वहतुं विवाहमित्यर्थः। तत्तदानीं वां युवां सवितारंप्रति गच्छन्तौ विश्वे सर्वे देवाः अन्वजानन्ननुज्ञातवन्तः। तथा पितरौ पुत्रः अश्विनोः पुत्रः पूषा अवृणीत धृतवान्॥ ॥ यदयातमिति—हे शुभस्पती उदकस्य स्वामिनौ, यत् यौ अयातं अगच्छतम्। कंप्रति। वरेयं वरणीयायाः सूर्यायाः संबन्धिनं वरेर्याचितव्यं वा सवितारमित्यर्थः। किमर्थम्। सूर्यामुपगन्तुं वां भवतोः संप्रति दृश्यमानमिदं एकं चक्रं कासीत्। पुरा क वां युवां देष्ट्राय दानाय प्रवृत्तौ तस्थथुरित्यश्विनोर्निवासं पृच्छति। इत्यष्टमस्य तृतीये द्वाविंशो वर्गः॥ २२॥ ॥ द्वे ते चक्रे इति—अथ स्वयमेव स्वात्मानंप्रति सूर्या वदति। हे सूर्ये, ते तव द्वे चक्रे प्रज्ञाते पुरा दृष्टे द्वे एव चन्द्रसूर्यात्मके ऋतुथा ऋतुषु विनिर्दिष्टे चक्रे ब्रह्माणो ब्राह्मणा विदुः। अथैकं चक्रं तृतीयं संवत्सरात्मकं गुहा गुहायां निहितं यदस्ति तदद्धातय इत्। एतन्मेधाविनामसु पठितम्। मेधाविन एव विदुर्जानन्ति॥ ॥ सूर्यायै देवेभ्य इति—सूर्यायै सूर्यस्य पत्न्यै देवेभ्योऽग्न्यादिभ्यो मित्राय वरुणाय च ये च भूतस्य भूतजातस्य प्रचेतसः सुमतयः अभिमतप्रदा भवन्ति तेभ्यः सर्वेभ्य इदं नमः नमस्कारमकरं करोमि॥ ॥ पूर्वापरं चरत इति—कश्चित्पूर्वं गच्छति सूर्यः अन्यस्तमनुचरति चन्द्रमाः एवं पूर्वापरं पौर्वापर्येण मायया स्वप्रज्ञानेन एतौ आदित्यचन्द्रौ चरतो गच्छतो दिवि तौ शिशू। शिशुवद्भ्रमणाज्जायमानत्वाद्वा शिशू इत्युच्येते। शिशू सन्तौ क्रीळन्तौ अन्तरिक्षे विहरन्तौ अध्वरं परियातः यज्ञंप्रति गच्छतः। तयोरन्य आदित्यो विश्वानि भुवना भुवनानि अभिचष्टेऽभिपश्यति ऋतूंन्वसन्तादीन्। अन्यश्च-

न्द्रमाः विदधत् कुर्वन् मासानर्धमासांश्च कुर्वन् पुनः पुनर्जायते । यद्यप्युभयोरपि पुनर्जनिरस्ति तथापि सूर्यस्य सर्वदा प्रवृद्धेः उभयोर्ग्रहो नाभिप्रेतः । चन्द्रस्य तु ह्रासवृद्धिसद्भावात् पुनःपुनर्जायत इत्युक्तिर्युक्ता 'चन्द्रमा वै जायते पुनः' इत्यादिश्रुतेश्च ॥ ॥ नवोनव इति—अतिमूर्तिनाम्न्येकाहे शुक्लपक्षे चान्द्रमसीष्टिस्तत्र नवोनव इत्येषा याज्या । सूत्रितं च—'नवो नवो भवति जायमानस्तरणिर्विश्वदर्शत' इति । अयं चन्द्रमा जायमानः प्रतिदिनं जायमान एकैककलाधिक्येनोत्पद्यमानः सन् नवोनवो भवति प्रतिदिनं नवनवएव भवति । एतत्पूर्वपक्षाद्यभिप्रायम् । तथा अह्नां दिवसानां केतुः प्रज्ञापकः प्रतिपदादीनां तिथीनां चन्द्रकलाह्रासवृद्ध्यधीनत्वात् तादृशश्चन्द्रमा उषसां प्रभातानामग्रमेति । एतत्कृष्णपक्षान्ताभिप्रायम् । केचनैनं पादं आदित्यदैवतमाहुस्तस्मिन्पक्षेऽह्नां केतुः उषसामग्रगतिश्च । प्रसिद्धेभ्यो देवेभ्यो भागं हविर्भागं विदधाति करोति उभयपक्षान्ते । किं कुर्वन् । आयन् प्रतिदिनं ह्रासवृद्ध्या पक्षान्तमभिगच्छन् । एतदर्धमासाभिप्रायम् । चन्द्रमा उक्तलक्षणो देवो दीर्घमायुः तिरते वर्धयति ॥ ॥ सुकिंशुकमिति—सुकिंशुकं सु शोभनं किंशुकवृक्षनिर्मितं यथा शल्मलिं शल्मलिवृक्षनिर्मितं विश्वरूपं नानारूपं हिरण्यवर्णं हितरमणीयवर्णं हिरण्यालंकारयुक्तं वा सुवृतं सुष्ठुवर्तनं सुचक्रं शोभनचक्रोपेतं रथं हे सूर्ये, आरोह । अमृतस्य लोकं स्थानं स्योनं सुखकरं पत्ये सोमाय वहतुं वहनमात्मनः प्रापणं कृणुष्व कुरुष्व । अत्र निरुक्तं १२।८ द्रष्टव्यम् । इत्यष्टमस्य तृतीये त्रयोविंशो वर्गः ॥ २३ ॥

॥ उदीर्ष्वात इति—आभिर्नृणां विवाहः स्तूयते—हे विश्वावसो, अतः स्थानात् कन्यासमीपात् उदीर्ष्व उत्तिष्ठ । एषा कन्या पतिवतीहि संजाता अत उदीर्ष्वेति वा अतःशब्दो योज्यः । विश्वावसुं एतन्नामानं गन्धर्वं नमसा नमस्कारेण गीर्भिः स्तुति-

मिश्च ईळे स्तौमि । यदि एनां विहाय कां स्वीकरोमीति यदि ब्रूषे तर्हि अन्यां पितृषदं पितृकुले स्थितां व्यक्तां अनूढेति परि-स्फुटां विगताञ्जनां वा स्तनोद्गमादिराहित्येनाप्रौढामित्यर्थः । स तादृशः पदार्थस्ते तव भागः कल्पितः तस्य तं भागं विद्धि जानीहि जनुषा जन्मना लभस्वेत्यर्थः ॥ ॥ उदीर्ष्वातो विश्वावसो इति—अतोऽस्माच्छयनात् हे विश्वावसो, कन्या-स्वामिन् गन्धर्व, उदीर्ष्व उद्गच्छ । ईरगतौ आदादिक अनुदात्तेत् तस्य लोटि रूपम् । 'विश्वावसुर्नामगन्धर्वः कन्यानामधिपति-र्मतः । लभामि तेन कन्या'मिति हिमत्रः । तादृश देव, त्वां नमसा नमस्कारेण ईळामहे स्तुमः । स त्वमन्यां प्रफर्व्यं गृहाभितम्वां कन्यामिच्छ जायां मां पत्या सह पुनः संसृज ॥ ॥ अनृक्षरा इति—हे देवाः, पन्थाः पन्थानो मार्गाः अनृक्षराः । ऋक्षरः कण्टक उच्यते । कण्टकरहिता ऋजवः अकुटिलाश्च सन्तु । येभिर्यैः पथिभिः नोऽस्माकं सखायो वरप्रेषिताः वरेयं वरैर्याचितव्यं पितरंप्रति यन्ति गच्छन्ति ते पन्था इति । किंच अर्यमा देवो नोऽस्मान् संनिनीयात् सम्यक्प्रापयेत् । तथा भगो देवः संनिनीयात् । हे देवाः, आसंगतमस्तु पतिकुलमिति शेषः । तथा इदं जास्पत्यं जायापत्योर्युगलं सुयममस्तु सुमिथुनमस्तु ॥ ॥ प्रत्वामुञ्चा-मीति—पत्न्या यौक्त्रविमोचने प्रत्वामुञ्चामीत्येषा । सूत्रितं च—'अथास्या योक्त्रं विचृतेत्प्रत्वा मुञ्चामि वरुणस्य पाशा'दिति । जातं प्राणिनं सवित्रा प्रेरितो वरुण आत्मपाशैर्बध्नाति तस्मात् वरुणस्य पाशात् हे वधूः, त्वा त्वां प्रमुञ्चामि येन पाशेन त्वा त्वां स-विता वरुणस्य प्रेरकः सुशेवः सुसुखः अबध्नात् बन्धनं कृतवान् । यज्ञाङ्गपक्षे पत्नीं योक्त्रेण बध्नाति बन्धनस्य वरुणोऽभिमानी अतो वरुणपाशात् योक्त्रात् प्रमुञ्चामि । येन योक्त्रेण सविता कर्मणामनुज्ञाता देवः ऋत्विक् पाशेनाबध्नात् तं मोचयित्वा च ऋतस्य यज्ञस्य

योनौ स्थाने यागभूमौ सुकृतस्य लोके कर्मक्षेत्रे भूलोके च अरिष्टां अहिंसितां पुत्रार्थं पत्यासह दधामि स्थापयामि ॥ ॥ प्रेतो मुञ्चामीति—इतः पितृकुलात्प्रमुञ्चामि त्वां । नामुतो भर्तृगृहात्प्रमुञ्चामि । अमुतो भर्तृगृहे सुबद्धां करं । यथेयं कन्या हे इन्द्र, मीढ्वः सेक्तः, सुपुत्रा सुभगा सुष्ठुभाग्या वा सति भवति तथा कुरु । इत्यष्टमस्य तृतीये चतुर्विंशो वर्गः ॥ २४ ॥ ॥ पूषा त्वेत इति—विवाहानन्तरभाविनि प्रयाणे पूषा त्वेतो नयत्वित्यनया रथादियानमारोहयेत् । सूत्रितं च—'पूषा त्वेतो नयतु हस्तगृह्येति यानमारोहये'दिति । हस्तगृह्य ग्राहहस्तः पूषा त्वा त्वामितो नयतु प्रापयतु । अश्विना अश्विनौ त्वा त्वां रथेन प्रवहतां प्रगमयताम् । गृहान् भर्तृसंबन्धिनो गच्छ । त्वं गृहपत्नी यथा असः भवसि गृहस्वामिनी भवसि । वशिनी सर्वेषां गृहगतानां वशं प्रापयित्री प-त्युर्वशे वर्तमाना वा विदथं पतिगृहं आवदासि आवदसि गृहस्थितं भृत्यादिजनमावद ॥ ॥ इह प्रियमिति—इह प्रियमित्येषा वध्वा गृहप्रवेशिनी । सूत्रितं च—'इह प्रियं प्रजया ते समृध्यतामिति गृहं प्रवेशये'दिति । हे वधूः ते तव इहास्मिन् पतिकुले प्रियं प्रजया सह समृध्यताम् । अस्मिन्गृहे गार्हपत्याय गृहपतित्वाय जागृहि बुध्यस्व । एना अनेन पत्या पतिना सह तन्वं स्वीयं शरीरं संसृजस्व संसृष्टा भव । अथा अथ जिव्री जीर्णौ जायापती युवां विदथं गृहं आवदाथः आभिमुख्येन वदतम् ॥ ॥ नीललोहित-मिति—कृत्या अभिचाराभिमानिनी देवता नीललोहितं भवति नीलं च लोहितं च तस्या रूपं भवतीत्यर्थः । सा कृत्या आ-सक्तिः आसक्ता अस्यां संनद्धा व्यज्यते इत्यर्थः । तस्यां कृत्यायामपगतायां अस्या वध्वा ज्ञातय एधन्ते वर्धन्ते । पतिः बन्धेषु सांसारिकेषु बध्यते ॥ ॥ परा देहीति—शामुल्यं शमलमित्यर्थः । शमलं शारीरमलं शरीरावच्छिन्नस्य मलस्य धारकं वस्त्रं

परादेहि परात्यज । धृतप्रायश्चित्तार्थं ब्रह्मभ्यो ब्राह्मणेभ्यः वसु धनं विभज प्रयच्छेत्यर्थः । किमर्थं वधूवासःपरित्याग इति चेत् । उच्यते—एषा कृत्या पद्वती पादवतीसती जाया भूत्वी भूत्वा पतिं विशते कृत्यारूपवासःप्रवेशात् कृत्या जाया भूत्वा विशन इत्युपचर्यते । अतस्तत्परित्यागे कृत्यैव त्यक्ता भवतीत्यर्थः । यदि वधूवासः स्वयं निधत्ते तदैवेदं भवतीति वधूवासःसंस्पर्शनं निन्दायुक्तम् ॥ ॥ अश्रीरा तनूरिति—अत्रापि वधूवासःसंस्पर्शनिन्दोच्यते । तनूस्तस्य संबन्धिनी अश्रीरा अश्रीका भवति । कथं स्याचेदिति उच्यते—रुशती । रुशदिति वर्णनाम । दीप्तया अमुया अनया पापया पापरूपया कृत्यया यदि युक्ताचेत्तत्रः । तदेवाह—पतिः यत् यदि वध्वोवाससा स्वमङ्गमभिधित्सते परिधातुमिच्छति । इत्यष्टमस्य तृतीये पञ्चविंशो वर्गः ॥ २५ ॥ ॥ ये वध्व इति—ये वधः चन्द्रं हिरण्यरूपं वहतुं ये यक्ष्मा व्याधयोऽनुयन्ति प्राप्नुवन्ति जनादस्मद्विरोधिनः सकाशाद्वा, जनाद् यमाख्यात् तान् यक्ष्मान् पुनर्यन्तु प्रापयन्तु यज्ञिया यज्ञार्हा देवा इन्द्रादयः । यत आगताः यस्मात्ते यक्ष्मा आगताः तत्र तान्नयन्तु ॥ ॥ माविदन्निति—वध्वाः प्रयाणे माविदन्निल्येषा जप्या । सूत्रितं च—'कल्याणेषु देशवृक्षचतुष्पथेषु मा विदन्परिपन्थिन इति जपे'दिति । परिपन्थिनः पर्यवस्थातारः शत्रवो मा विदन् मा प्रापयन् ये परिपन्थिनो दंपती आसीदन्ति अभिगच्छन्ति । सुगेभिः सुगैर्मार्गैः दुर्गं दुःखेन गन्तुं शक्यं दुर्गमं देशमंतीतां अतिगच्छतां । अरातयः अदातारः शत्रवोऽपद्रान्तु अपगच्छन्तु ॥ ॥ सुमङ्गलीरिति—इयं वधूः सुमङ्गलीः शोभनमङ्गला अतः इमां सर्वे आशीःकर्तारः समेत संगच्छत तां पश्यत च । तां संगताश्च दृष्ट्वा अस्याः ऊढायै सौभाग्यं दत्ताय दत्त्वा अथ अस्तं गृहनामैतत् । स्वस्वसंबन्धिनं गृहं विपरेतन विविधं परागच्छत ॥ ॥ तृष्टमेत-

दिति—अनयापि वधूवस्त्रपरित्यागः प्रतिपाद्यते। एतद्वस्त्रं तृष्टं दाहजनकं तथैव तत्कटुकं तथा अपाष्ठवत् अपाष्ठमपस्थितमजीर्णं तद्वत् तथा विषवत् नैतद्वस्त्रमत्तवे अत्तव्यं अनुपयोग्यं यो ब्रह्मा ब्राह्मणः सूर्यां इदानीं प्रस्तुतां देवीं विद्यात् सम्यग्जानीयात् सइत् सएव वाधूयं वधूवस्त्रं अर्हति॥ ॥ आशसनमिति—आशसनं तुपाधानं तचान्यवर्णं भवति। विशसनं शिरसि निधीयमानं नाद्यं दशान्ते निधीयमानं अधिविकर्तनं यत्रिधा वासो विकृन्तन्ति तान्याशसनादीनि वासांस्यवस्थितानि सूर्याया रूपाणि भवन्ति तानि पश्य। एवंभूतान्याशसनादीनि पुरा सूर्या स्वशरीरे स्थितानि अमङ्गलानि वासांसि विधत्ते तानि रूपाणि सूर्याविद्ब्रह्मा तु ब्राह्मण एव तस्माद्वाससःसकाशात् शुन्धति अपनयति। इत्यष्टमस्य तृतीये षड्विंशो वर्गः॥ २६॥ ॥ गृभ्णामि ते इति—विवाहे कन्याहस्तग्रहणे गृभ्णामीत्येषा। सूत्रितं च—'गृभ्णामि ते सौभगत्वाय हस्तमित्यङ्गुष्ठमेव गृह्णीया'दिति। हे वधूः, ते तव हस्तं गृभ्णामि गृह्णामि। किमर्थं। सौभगत्वाय सौभाग्याय। मया पत्या त्वं यथा जरदष्टिः प्राप्तवार्धक्या असः भवसि। भगः अर्यमा सविता पुरन्धिः पूषा एते देवाः त्वा त्वां मह्यं अदुः दत्तवन्तः। किमर्थम्। गार्हपत्याय यथाहं गृहपतिः स्यामिति॥ ॥ तां पूषन्निति—हे पूषन्पोषक एतन्नामक देव, शिवतमा अत्यन्तमङ्गलभूतां तां आ एरयस्व सर्वतः प्रेरय। यस्यां ऊरौ बीजं रेतोलक्षणं मनुष्याः वपन्ति आदधते। या नोऽस्माकं ऊरू उशती कामयमाना विश्रयाते यस्यामूरौ उशन्तः कामयमानाः वयं शेपं स्पर्शनयोग्यं पुंस्प्रजननं प्रहराम ऊरौ व्यञ्जनसंबन्धं करवामेत्यर्थः॥ ॥ तुभ्यमग्रे इति—गन्धर्वाः हे अग्ने, तुभ्यं अग्रे पर्यवहन् प्रायच्छन्नित्यर्थः। कां। सूर्याम्। केन सह। वहतुना सह। त्वं च तां सूर्यां वहतुना सह सोमाय प्रायच्छः तद्वदिदानीमपि

हे अग्ने, पुनः पतिभ्योऽस्मभ्यं जायां प्रजया सह दाः देहि ॥ ॥ पुनः पत्नीरिति—पुनः सगृहीतां पत्नीं अग्निः आयुषा वर्चसा च सह अदात् प्रायच्छत्। अस्या अग्निदत्तायाः यः पतिः पुमान् स दीर्घायुः सन् शरदःशतं संवत्सरशतं जीवाति जीवतु ॥ ॥ सोमः प्रथम इति—जातां कन्यां सोमः प्रथमभावीसन् विविदे लब्धवान्। गन्धर्वः उत्तरः सन् विविदे। अग्निस्तृतीयः पतिः। ते तव पश्चान्मनुष्यजाः पतिः तुरीयश्चतुर्थः। इत्यष्टमस्य तृतीये सप्तविंशो वर्गः ॥ २७ ॥ ॥ सोमो ददिति—सोमः गन्धर्वाय प्रथमं ददत्। गन्धर्वोऽग्नये प्रादात्। अथो अपिच अग्निः इमां कन्यां रयिं धनं पुत्रांश्च मह्यं अदात् ॥ ॥ इहैव स्तमिति—इहैव स्तं इहैवास्मिंल्लोके स्त भवतम्। माविवौष्टं मापृथग्भूतं विश्वमायुर्व्यश्नुतं प्राप्नुतम्। किंच पुत्रैः नप्तृभिः पौत्रैः सह स्वेगृहे मोदमानौ भवतमिति शेषः ॥ ॥ आ नः प्रजामिति—गृहप्रवेशे आनःप्रजां जनयत्वित्याद्याश्चतस्रो होमार्थाः। सूत्रितं च—'आ नः प्रजा जनयतु प्रजापतिरिति चतसृभिः प्रत्यृचं हुत्वे'ति। प्रजापतिर्देवो नोऽस्माकं प्रजामाजनयतु। अर्यमा च जरसाय जरापर्यन्तजीवनाय समनक्तु संगमयतु। सा त्वं अदुर्मङ्गलीः दुर्मङ्गलरहिता सुमङ्गली। यद्वा या मङ्गलाचारान्दूषयति सा दुर्मङ्गली ततोन्या अदुर्मङ्गली तादृशी सती पतिलोकं पतिसमीपं आविश प्राप्नुहि। नोऽस्माकं द्विपदे शं भव। तथाच चतुष्पदे शं भव ॥ ॥ अघोरचक्षुरिति—हे वधूः, त्वं अघोरचक्षुः क्रोधादभयंकरचक्षुः एधि भव। तथा अपतिघ्नी भव। तथा पशुभ्यः शिवा हितकरी भव। सुमनाः सुवर्चाश्च भव। वीरसूः पुत्राणामेव प्रसवित्री देवकामा स्योना सुखकरी च भव ॥ ॥ इमां त्वमिन्द्रेति—हे इन्द्र, त्वं इमां वधूं सुपुत्रां सुभगां च कृणु कुरु। अस्यां वध्वां दश पुत्रानाधेहि। पतिं एकादशं कृधि।

दशपुत्राः पतिरेकादशो यथा स्यात्तथा कृधि कुरु ॥ ॥ सम्राज्ञी इति—हे वधूः, श्वशुरादिषु त्वं सम्राज्ञी भव। देवृषु देवरेष्वित्यर्थः ॥ ॥ समञ्जन्त्विति—समञ्जन्त्वित्येषा वरस्य दधिप्राशने वधूवरयोः हृदयस्पर्शने वा विनियुक्ता। तथाच सूत्रितं 'समञ्जन्तु विश्वेदेवा इति दधि प्राश्य प्रतिप्रयच्छेदाज्यशेषेण वानक्ति हृदये' इति। विश्वेदेवाः सर्वे देवा नौ हृदयानि मानसानि समञ्जन्तु सम्यगञ्जन्तु अपगतदुःखादिक्लेशानि कृत्वा लौकिकवैदिकविषयेषु प्रकाशयुक्तानि कुर्वन्त्वित्यर्थः। आपश्च समञ्जन्तु। तथा मातरिश्वा नौ हृदयानि संदधातु। आवयोर्बुद्धीः परस्परानुकूलाः करोत्वित्यर्थः। धाता च संदधातु। देष्ट्री दात्री फलानां सरस्वतीत्यर्थः। सा च संदधातु संधानं करोतु॥ २८ ॥ इत्यष्टमस्य तृतीयेऽष्टाविंशो वर्गः ॥"

"अथ प्रसङ्गात् विवाहधृतऋक्कथा इत्याद्यैतरेयब्राह्मणखण्डवाक्यार्थः संगृह्यते। (पंचिका ३ खण्डः २३) स्तुतमनुशंसतीति विधिनलेन निष्केवल्यशस्त्रस्य स्तोत्रपूर्वकत्वाद्बुद्धिस्थस्य साम्न आश्रयत्वेन तृचं विधातुमाख्यायिकामाह—ऋक्चवा इदमग्रे इति—यदिदमिदानीमृगाश्रितं सामोभयमेलनरूपमधीयते तदिदमग्रे मेलनात्पुरा ऋगक्षरपदरूपा पृथग्भूता साम च गीतिरूपं पृथग्भूतमित्येवं द्वे अपि पृथगेवास्ताम्। तयोः परस्परमेलनयोग्यतां प्रदर्शयितुमस्मिन्नेव सामनाम्न्यन्तर्भावः प्रदर्श्यते। सामेति नाम्नि यदेतत्सेति पूर्वमक्षरं तदेवैकं नाम तन्नामवाच्या ऋगासीत्। अम इत्येकं नाम तद्वाच्यं सामासीत्। अतो मेलनयोग्यतायां सत्यां सैव ऋक् साम प्रत्युपावदत्समीपमागत्योक्तवती—आवामुभे मिथुनं यथा भवति तथा संभवाव, तच्च संभवनं प्रजोत्पत्त्यर्थमिति। तदुक्तं साम निराकरोत् स्वाभिप्रायं चावदत्। अतोऽस्मात्त्वत्तो ज्यायानभ्यधिको मम साम्नो महिमा तस्मात् 'विवादश्च विवाहश्च

तुल्ययो'रिति न्यायविरोध इति । ततः साम्ना तुल्यत्वसिद्ध्यै ते ऋचौ संभूयोपेत्य पूर्ववदुक्तवत्यौ । नचेत्यक्षरद्वयात्मको निपातोऽपिशब्दार्थः । ते द्वे ऋचौ प्रत्यपि साम न समवदत संवादमङ्गीकारं नाकरोत् । पुनस्ता ऋचस्तिस्रोभूत्वोपेत्य पूर्ववदुक्तवत्यः । तदानीं ताभिस्तिसृभिः समभवत्संभवनं संयोगमकरोत् । यस्मात्संयोगः संभूतस्तस्मात्सामयुक्ताभिस्तिसृभिर्ऋग्भिः सामगाः स्तुवन्ति यज्ञे स्तोत्रं कुर्वन्ति । तस्यैव व्याख्यानं तिसृभिरुद्गायन्तीति । औद्गात्रं कर्म कुर्वन्तीत्यर्थः । अतएव शाखान्तरे श्रूयते—'एकं साम तृचे क्रियते स्तोत्रियम्' इति । यद्यपि छन्दःसामनामके ग्रन्थ एकस्यामृचि सामोत्पन्नं तथाप्युत्तराख्ये ग्रन्थ आम्नातेषु तृचेषु प्रयोगकाले साम गातव्यम् । तत्र प्रथमायामृचि योनिरूपायां यत्सामोत्पन्नं छन्दःसामग्रन्थे समाम्नातं तदत्रलोक्य तत्सादृश्येन द्वितीयतृतीययोर्गानं समूहनीयम् । एतदपि शाखान्तरे विहितम्—'यद्योन्यां तदुत्तरयोर्गायति' इति । तस्मादौद्गात्रं कर्म तिसृभिर्ऋग्भिर्निष्पद्यते । यस्मादाख्यानोक्तप्रकारेण तिसृभिर्ऋग्भिः साम संमितं साम्न एकस्य महिमा तुल्यः संवृत्तस्तस्माल्लोकेऽप्येकस्य पुरुषस्य सामस्थानीयस्य बह्व्यो जाया ऋक्स्थानीया भवन्ति नतु विपर्ययेणैकस्याः स्त्रियाः बहवः पतयः परस्परैकमत्येन सहवर्तमाना दृश्यन्ते । यस्मादृगक्षरपदादिरूपा सेत्यनेन शब्देनाभिधेया साम चामशब्देनाभिधेयं सत्पश्चादुभयं संयुक्तं तत्मामाभवत्तस्मादेकोभयात्मकवस्तुनः सामनाम संपन्नम् ॥ उक्तार्थवेदनं प्रशंसति—सामन्भवतीति । ऋक्सामयोरेकत्ववेदिता यः स सर्वैरभ्यर्हितैः सहितो भवति ॥ लौकिकवृत्तान्तोदाहरणेनापि सामस्वरूपं प्रशंसति—योवा इति । यः पुमान्भूतिमैश्वर्यं प्राप्नोति यश्च विद्यावृत्ताभ्यां श्रेष्ठत्वं प्राप्नोति स सर्वोऽपि सामन्भवति मर्येषु स्वकीयस्वबुद्ध्या समदृष्टिर्भवति । अन्यथा सर्वे जनास्त-

मसामन्यः पक्षपातीति निन्दन्ति । अतः सामन्यरूपस्य लोके प्रशस्तत्वादत्राप्यक्षरपाठस्य गानस्य चैकत्वेन सामत्वं प्रशस्तमित्यर्थः ॥ नन्वस्त्वेवं सामत्वं निष्केवल्यशस्त्रे किमायातमित्याशङ्क्य सामसादृश्येन शस्त्रप्रशंसां दर्शयति—ते वा इति । ते वै तएव वक्ष्यमाणाः शस्त्रावयवाः पञ्चसंख्याका अन्यत्पृथगेव शस्त्ररूपं भूत्वा वर्तन्ते । तथा हिंकारादयः पञ्च सामांशा वैश्वदेवावयवा अन्यत्पृथक्सामरूपं भूत्वा वर्तन्ते च शस्त्रसामनी स्वाहावादयन्त्य(?) वयवोपेते उभे कल्पेतां स्वव्यापारसमर्थे भवतः । आहावः शोंसावोमिति मन्त्रः । स्तोत्रिये तृचे प्रथममध्यमोत्तमास्तिस्र ऋचः । याज्यान्ते पठितव्यो वषट्कारः । तदेतत्पञ्चकं शस्त्रस्वरूपम् । उद्गात्रा पठितव्यः साम्न आदौ हिमित्येवं शब्दो हिंकारः । प्रस्तोत्रा गातव्यः सामावयवः प्रस्तावः । उद्गात्रा गातव्य उद्गीथः । प्रतिहर्त्रा गातव्यः प्रतिहारः । अन्ते सर्वैर्गातव्यो भागो निधनम् । तदेतत्पञ्चकं स्तोत्रस्वरूपम् । अतः सामसादृश्येन निष्केवल्यशस्त्रं प्रशस्तम् ॥ प्रकारान्तरेण प्रशंसति—ते यदिति । यस्मात्सामशस्त्रयोरुक्तप्रकारेण प्रत्येकं पञ्चावयवत्वं संपन्नं तस्मात्पञ्चानां पङ्क्त्या योगादयं यज्ञः पाङ्क्त इत्येवं ब्रह्मवादिन आहुः । तथा गवादिपशवोऽपि चतुर्भिः पादैर्मुखेन च योगात्पाङ्क्ताः । अतो यज्ञपाङ्क्तत्वप्रसिद्धिसंवादनात्पशुसाम्याच्च शस्त्रं प्रशस्तम् ॥ पुनः प्रकारान्तरेण प्रशंसति—यद्विति । 'दशाक्षरा विराडि'ति श्रुत्यन्तराद्दशानामक्षराणां समूहो दशिनी या विराडस्ति तामभिलक्ष्य पञ्चकद्वयात्मके शस्त्रसामनी समपद्येतां विराट्सदृशे जाते इत्यर्थः । यद्व यस्मादेव कारणात्संख्यया विराट्सादृश्यं तस्मादभिज्ञा एवमाहुः । दशसंख्योपेतायां शस्त्रसामरूपायां विराजि यज्ञो व्यवस्थित इति ॥ पुनरपि गृहस्थपुरुषसादृश्येन शस्त्रं प्रशंसति—आत्मा वा इति । येन तृचेन सामगाः स्तुवन्ति

स स्तोत्रियस्तृचो निष्केवल्यशस्त्रस्य प्रारम्भे शंसनीयः । स चात्मा वै गृहस्थशरीरस्थानीय एव स्तोत्रियं तृचमनु द्वितीयो यस्तृचः शस्यते सोऽयमनुरूपः । स च प्रजापुत्रपौत्रादिस्थानीयः । येयं धाय्या शस्त्रे प्रक्षेपणीया सा पत्नीस्थानीया । यः प्रगाथः स पशुस्थानीयः । यन्निविद्धानीयं सूक्तं तद्गृहस्थानीयम् ॥ एतद्वेदनं प्रशंसति—स वा इति । पशुमिश्च सहित इति शेषः ॥ ( पं. ३ खं. २४ ) अथ निष्केवल्यशस्त्रभागाः स्वरविशेषाश्च वक्तव्याः । तत्र प्रथमभागं विधत्ते—स्तोत्रियमिति । 'अभि त्वा शूर नोनुमः' (९।३३।२२) इत्यस्मिन्प्रगाथे तृचं संपाद्य सामगाः स्तुवन्ति सोऽयं स्तोत्रियस्तमादौ शंसेत् । तस्य गृहस्थदेहस्वरूपत्वं पूर्वमेवोक्तम् ॥ तस्मिन् स्तोत्रिये स्वरविशेषं विधत्ते—तं मध्यमयेति । अत्युच्चत्वमतिनीचत्वं च यस्यां वाचि नास्ति सा मध्यमा । यावता ध्वनिना देवयजनदेशस्थाः शृण्वन्ति न तद्बहिर्देशस्थास्तावन्तं ध्वनिं कुर्यात् । तेनात्मानमेव देहमेव संस्कुरुते ॥ तृचान्तरं विधत्ते—अनुरूपमिति । स्तोत्रियेण सदृशस्तृचोऽनुरूपः । स चात्र 'अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः' इत्येष प्रगाथः । उभयोः प्रगाथयोः समानच्छन्दस्त्वात्समानदेवताकत्वाच्चानुरूपत्वम् । तमिमं तृचं शंसेत् । तस्य च पुत्रादिप्रजास्थानीयस्यानुरूपत्वमपेक्षितं पितापुत्रयोः कुलशीलादिना समानरूपत्वम् ॥ तस्य ध्वनिविशेषं विधत्ते—स उच्चैरिति । स्तोत्रियध्वनेरप्यधिकं ध्वनिं कुर्यात् । तथा सति स्वस्मादाधिक्यं पुत्रादौ संपादितं भवति ॥ ततो यद्वावानेत्येतस्या धाय्यायाः शंसनं विधत्ते—धाय्यामिति । पत्नीत्वं पूर्वमेवोक्तम् ॥ स्वरविशेषं विधत्ते—सा नीचैरिति । अत्यन्तनीचो ध्वनिः कर्तव्यः ॥ होतुरेवद्वेदनं प्रशंसति—अप्रतीति । पत्युः प्रतिकूलं वदतीति प्रतिवादिनी तद्विपर्ययेणानुकूलवादिनी भवति ॥ पिता सुतस्य

स्थानभूतं तदेव मण्डलं प्रजापतेरप्यायतनं स्थानम्। आदित्यमण्डले प्रजापत्युपासनस्याभिधानात् । तदेव मण्डलं स्वाराज्यं पारत्र्याभावात् ॥ उपसंहरति—ऋध्नोतीति । एकविंशतिसंख्याभिरेताभिर्ऋग्भिरेतं यजमानं समृद्धं करोत्येव । अभ्यासोऽध्यायसमाप्त्यर्थः ॥ (पं० २ खं० ६) नवमभागमनूद्य व्याचष्टे—ऊवध्यगोहमिति । ऊवध्यगोहं पुरीषगूहनस्थानं पार्थिवं खनतात्पृथिवीसंनन्वमेव खनत। अत्रोवध्यशब्देनौषधमेवोच्यते पुरीषस्य पशुभक्षितस्यौषधिविकारत्वात्। ओषधीनां चेयमेव भूमिः प्रतिष्ठाश्रयः। तत्तथासति एनमूवध्यं स्वकीयायामेव प्रतिष्ठायां भूमिरूपायामन्ततः पशुविशसनान्ते प्रतिष्ठापयति ॥ ॥ (पं० २ खं० ४०) शस्त्रसान्ते याज्यां विधत्ते—याज्यया यजतीति । अग्न इन्द्रश्चेति येयं याज्या पूर्वमुक्ता तया यजति । यागार्थं याज्यां पठेत्। याज्यात्र प्रत्तिर्वै प्रदानरूपैव। तथाच हविष आदानप्रदाने क्रमेण पुरोनुवाक्यायाज्याधीने श्रुत्यन्तरे श्रूयेते—'पुरोनुवाक्यया आदत्ते प्रयच्छति याज्यया' इति। अतः प्रदानरूपत्वादियं पुण्यैव लक्ष्मीः। शास्त्रीयत्वात्पुण्यत्वम्। फलस्य लब्धिहेतुत्वाल्लक्षणस्य दर्शनहेतुत्वाद्वा लक्ष्मीत्वम्। अतो याज्यापाठेन पुण्याया एव लक्ष्म्याः संभावनासंस्कारौ भवतः ॥ ॥ (पं० ३ खं० २९) यत्रावाञ्च इति। यत्र ये केचिदवाञ्चो नाभेरर्वाचीने तृतीयस्थानीये देशे वर्तमानाः पायुगुह्यादयोऽवाञ्चः प्राणाः अल्पीयांस इति शेषः ॥ तस्मिन्नेव वैश्वदेवशस्त्रे द्यावापृथिवीदेवताकं सूक्तं विधत्ते—द्यावापृथिवीयमिति । इह मनुष्यजन्मनि इयमेव भूमिः प्रतिष्ठा आश्रयः। अमुत्र जन्मान्तरेऽसावेव द्युलोकः प्रतिष्ठा आश्रयः। एवं द्यावापृथिव्यावेव प्रतिष्ठे यस्मात्तस्मात्तदीयसूक्तशंसनेनैनं यजमानं प्रतिष्ठारूपयोर्द्यावापृथिव्योरेवावस्थापयति ॥ ॥ (पं० ३ खं० ५०) सूक्तानां द्विदेवताकत्वं प्रशं

सति—द्वन्द्वमिन्द्रेणेति । इन्द्रेण सह द्वन्द्वं युग्मं भूत्वा वरुणबृहस्पतिविष्णुदेवताः क्रमेण शस्यन्ते । द्वन्द्वं च लोके स्त्रीपुरुषरूपं मिथुनं तादृशान्मिथुनादपत्यरूपं मिथुनं प्रजायते । ततो द्वन्द्वशंसनं यजमानस्य प्रजात्यै भवति ॥ वेदनं प्रशंसति—प्रजायत इति । शस्त्रिणां त्रयाणां होत्रकाणां सूक्तानि विधाय पोतुर्नेष्टुश्च मन्त्रान्तराणि विधत्ते—अथ हैते इति । ग्रैषग्रन्थे पञ्चमे सूक्ते होता यक्षदित्यादिकौ द्वितीयाष्टमौ मन्त्रौ पोतुर्द्वावृतुयाजौ, तथा तत्रैव तृतीयनवमौ मन्त्रौ नेष्टुर्द्वावृतुयाजौ इत्येवं चत्वार ऋतुयाजास्ते मिलित्वा पोतृसंबन्धान्नेष्टृसंबन्धाच्च पोत्रीया नेष्ट्रीयाश्च भवन्ति । तथा प्रस्थितयाज्याः पोतुस्तिस्र ऋचो नेष्टुश्च तिस्र ऋच इत्येवं षळृचो भवन्ति तदेतन्मन्त्रदशकं प्रशंसति—सा विराडित्यादिना । सा पूर्वोक्ता मन्त्रसमष्टिर्दशिनी दशसंख्यायुक्ता सती विराट्छन्दः संपद्यते । 'दशाक्षरा विराट्' इति श्रुत्यन्तरात् । तत्तेन दशसंप्रयोगेण दशिन्यां दशसंख्योपेतायां विराजि यज्ञमृत्विजः प्रतिष्ठापयन्ति ॥ ॥ (पं० ४ सं० १०) पुनरप्यन्ये द्वे ऋचौ विधत्ते—मही द्यौरिति । मही द्यौरित्येका । तेहीति द्वितीया । उभे अप्यृचौ द्यावापृथिवीदेवताके । ते च द्यावापृथिव्यौ सर्वेषां प्राणिनामाधारभूते । इह मनुष्यजन्मनि इयमेव पृथिवी प्राणिनामाश्रयः । अमुत्र जन्मान्तरेऽसौ द्युलोक आश्रयः । तथा सति द्यावापृथिवीययोर्ऋचोः शंसनेनोभयोरपि प्रतिष्ठारूपयोर्लोकयोरेनं यजमानं प्रतिष्ठापयति ॥ ॥ (पं० ५ सं० १५) धारयन्नित्यस्य पुनः पुनः पठितस्यानुवादेन तदभिप्रायं सदृष्टान्तं दर्शयति—धारयन्धारयन्निति । होताऽस्मिन्सूक्ते चतुर्थेषु पादेषु धारयन्धारयन्निति पुनःपुनः पठित्वा शंसति तस्य कोऽभिप्राय इति सोऽभिधीयते । अन्तः शस्त्रस्यावसानप्रदेशस्तस्य प्रसंसात् प्रकर्षेण स्रंसनाच्छैथिल्यादयं होता बिभाय भीतिं

ग्रासनात् । संगनपरिहारार्थे दृष्टान्तोऽभिधीयते । तद्यथा लोके रज्जुं निर्मिमाणः पुरुषः पुनराग्रन्थं पुनःपुनराग्रथ्याग्रथ्य पुनर्निग्रन्थं पुनःपुनर्निग्रथ्यनिग्रथ्य तस्या रज्जोरन्तं बध्नीयात् । दीर्घरज्ज्वा अग्रं सूक्ष्मं पुनः पृष्ठतः प्रत्याकृष्य वेष्टनं कृत्वा ग्रथनं नाम तस्य दृढीभावो निर्ग्रन्थनामको दृष्टान्तः । अन्योऽप्यभिधीयते—यथावा लोके चर्मकार आर्द्रस्य चर्मणः संकोचनिवारणाय भूमौ तत्प्रसार्य दृढमाकृष्य चर्मणोऽन्ते मयूखं शङ्कुं चर्मणो धारणाय भूमौ निहन्यात् दृढं भूमिप्रविष्टं कुर्यात् । होतुः पुनर्धोरस-न्निति शंसनं यदस्ति तदेतत्तादृशं पूर्वोक्तदृष्टान्तसमानं द्रष्टव्यम् । तदेतच्छंसनं यज्ञस्य संतत्यै भवति ॥ ॥ (पं० ६ खं० २६) अथ सुब्रह्मण्याविषये कंचिद्विशेषं विधत्ते—दक्षिणा अन्विति । दक्षिणासु नीतासु ता दक्षिणा अनु पश्चात् सुब्रह्मण्या संतिष्ठते समाप्यते । सुब्रह्मण्याया वाग्रूपत्वाद्दक्षिणायाश्चान्नरूपत्वादन्ततः समाप्तिवेलायामिमं यज्ञमन्नाद्ये वाचि द्वयोरेवैतयोः प्रतिष्ठापन्ति प्रतिष्ठितं कुर्वन्ति । अभ्यासोऽध्यायसमाप्त्यर्थः ॥ ॥ ( पं० ७ खं० १८ ) राजसूयक्रतावभिषेचनीयाख्ये कर्मणि यदा राजा-भिषिक्तो भवति तदानीं तस्मै राज्ञे तदाख्यानं होता कथयेत् । तत्रेतिकर्तव्यं दर्शयति—हिरण्यकशिपाविति । होता यदोपा-ख्यानं कथयति तदानीं हिरण्यकशिपौ सुवर्णनिर्मितसूत्रैर्निष्पादिते कशिपौ स होतोपविशेत् । तदाख्यानमध्येऽध्वर्युश्च हिरण्य-कशिपावासीनो वक्ष्यमाणं प्रतिगरं ब्रूयात् । हिरण्यस्य यशोहेतुत्वाद्यशस्त्वम् । तथासत्येनं राजानं यशसैव समृद्धं करोति ॥ ॥ ( पं० ७ खं० २० ) स राजा यस्मिन्नेवाहनि दीक्षितुमुद्युक्तस्तस्याह्नः पूर्वाह्णकाल एवोद्यन्तमूर्ध्वं गच्छन्तमादित्यमृग्यजुर्भ्यामुपति-ष्ठेत । इदं श्रेष्ठमित्यृचः प्रतीकं । देवसवितरित्यादिकं यजुषः—देवसवितरिति । हे देव सवितः, देवयज्यायै देवसंबन्धियागार्थं

मे मह्यं देवयजनं देवोचितयागदेशं देहीत्यनेन प्रकारेण देशं याचेत् । ऋचोपस्थानं यजुषा याचनमिति व्यवस्थया द्रष्टव्यम् ॥ राज्ञा याचितस्यादित्यस्य प्रत्युत्तरं संपादयति—स यत्तत्रेति । आदित्यो यद्यदि तत्र तदानीमनेन राज्ञा याचितः सन्नुत्तरां यत्र स्वयं तिष्ठति तस्मादनन्तरभाविनीं दिशं प्रति सर्पति गच्छेत्तदानीं तत्तेन सर्पणेनोंतथा ददामि इत्येवमुत्तरमाह श्रुते । लोकेपि पृष्टः पुरुषो वाचा वा हस्तशिरश्चालनादिनैवोत्तरं प्रयच्छति तद्वदत्रापि सर्पणमेवोत्तरमस्तु । सर्पणस्याभिप्राय ओंतथा ददामीत्यनेन कथितः । ॐ त्वदुक्तमङ्गीकरोमि तथा तेनैव प्रकारेण देवयजनं ददामि ॥ तामेतां देवयजनयाच्ञां प्रशंसति—तस्य ह्वतेति । यः पुमान्क्षत्रियः स्वयं राजा सन्नेवमृचादित्यमुपस्थाय यजुषा याचयित्वा ततो देवयजनं निश्चित्य दीक्षते दीक्षां प्राप्नोति तस्य राज्ञः सवित्रा देवेन प्रसूतस्यानुज्ञातस्य रिष्टिर्हिंसा काचन काचिदपि न भवति । न केवलं हिंसाराहित्यं किंतूत्तरोत्तरिणीं दिनेदिने वर्धमानां श्रियमश्नुते प्राप्नोति । किंच प्रजानां सर्वासामैश्वर्यं ईश्वरत्वं नियमनसामर्थ्यमाधिपत्यमधिप्राय पालयितृत्वं तत्तद्योगक्षेमसंपादनमश्नुते प्राप्नोति ॥ ॥ (पं० ८ खं० ६) देवाश्छन्दोभिः सयुग्भूत्वेत्यस्यार्थोऽग्निर्गायत्र्येत्यादिना स्पष्टीकृतः । उक्तमर्थं मन्त्रसंवादेन द्रढयति—ते एते इति । ते एते देवच्छन्दसी परस्परसहिते कयाचिदृचाभ्यनूच्येते । सेयमृगग्नेरित्यादिका येयं गायत्री सेयमग्नेः सयुग्वा सहवासिन्यभवदिति तस्या ऋचोऽर्थः ॥ क्षत्रियस्यारोहणं प्रशंसति—कल्पते ह्वा इति । यः पुमान्स्वयं क्षत्रियः सन्नारोहति एता देवता अनु स्वयमप्युक्तेन प्रकारेणैतामासन्दीमारोहति अस्मै क्षत्रियाय योगक्षेमः कल्पते सिध्यति । अप्राप्तस्य लाभस्य प्राप्तिर्योगः । प्राप्तस्य वस्तुनो रक्षणं क्षेमः । योगसहितः क्षेमो यो-

गक्षेमः। किंचायं क्षत्रिय उत्तरोत्तरिणीं दिनेदिने वर्धमानां श्रियं आप्नोति। तथा सर्वासां प्रजानामैश्वर्यं नियामकत्वमाधिपत्यमधिकृत्वेन पालनं च प्राप्नोति॥ ॥ (पं० ८ खं० १५) अभिषेकं विधत्ते—साम्राज्यमिति। अयं क्षत्रियः सर्वेषां राज्ञां मध्ये श्रैष्ठ्यायाधिपत्यान्तगुणयुक्तो भवेत्। समन्तपर्यायी देशतः कालतः सर्वव्यापी स्यात्। आऽन्तात्समुद्रतीरपर्यन्तं सार्वभौमत्वं देशव्याप्तिः, आपरार्धात् परार्धशब्दाभिधेयकालसंख्यापर्यन्तं सार्वायुषत्वं कालव्याप्तिः, एवंविधो भूत्वा समुद्रपर्यन्तायाः पृथिव्या एकएव राजाऽस्त्वित्यनयेच्छयाचार्यो महाभिषेकेण तमभिषिञ्चेत्॥ ॥ (पं० ८ खं० १८) अभिषेक्ष्यन्नेतयर्चैतयुक्तं मन्त्रं दर्शयति—निषसादेति। पूर्ववद्व्याख्येयम्। अभिमन्त्रणादूर्ध्वमभिषेकप्रकारं दर्शयति—तमेतस्यामिति। इन्द्राभिषेकवाक्यवद्व्याख्येयम्॥"

अथ विवाहप्रयोगः॥ आचार्यगृहे कृतसमावर्तनो वरः स्वगृहं समेत्य प्रागुक्तलक्षणां कन्यां कुलतो गुणतश्च सम्यक्परीक्ष्य अष्टादशविधजन्मयोगमेकविंशतिदोषरहितं लग्नं च विचार्य अन्तर्लक्षणज्ञानार्थं विष्णुपुराणोक्तमर्चनपूर्वकं सम्यङ्निरीक्ष्य तत्प्रश्नैरेव संतोषकरीं कन्यां शुभतिथौ परिगृह्णीयात्। तत्रायं क्रमः—युग्मान्ब्राह्मणान् तथाविधपुरन्ध्रीभिः सहितान् पितुराप्तान् प्रशस्ताचारकर्मणः—अनृक्षरा ऋजवः सन्तु पन्था० इति मन्त्रमुच्चार्य कन्यागृहं प्रति प्रहिणुयात्। अथवा नारदोक्तरीत्या शुक्लाम्बरधरो वरः स्वयमेव पूर्वोक्तैर्ब्राह्मणैराशीर्वचनयुक्तैः पुरन्ध्रीभिर्गन्धपुष्पाक्षतताम्बूलैर्गीतवाद्यैश्च सह कन्यागृहं गच्छेत्। ततो ब्राह्मणाः शुभे पीठासने प्राङ्मुख्या आसीनाया दातृज्ञातिबान्धवोपेतायाः कन्यायाः पाणौ फलं प्रदाय वरेण सह प्राङ्मुखमासित्वा कल्याणे काले कन्यां वृणीरन्। तत्रायं क्रमः—'वसिष्ठगोत्रोद्भवायामुष्य प्रपौत्रायामुष्य पौत्रायामुष्य पुत्राय श्रुतशीलनाम्नेऽसौ वराय। वत्स-

गोत्रोद्भवाममुष्य प्रपौत्रीममुष्य पौत्रीममुष्य पुत्रीं सुशीलानाम्नीमिमां कन्यां भार्यात्वाय वृणीमहे इति ब्रूयुः । अथ दाता भार्याज्ञातिबन्धुसमेतो यथोक्तमनूद्य वृणीध्वमिति ब्रूयात् । एवं पुनर्द्विः प्रयुज्य प्रदास्यामीतिचोच्चैस्त्रिर्ब्रूयात् । अथ ब्राह्मणा उक्तस्वस्त्ययनाः शिवा आपः सन्तु सौमनस्यमस्तु अक्षतं चारिष्टं चास्तु दीर्घमायुरस्तु शान्तिःपुष्टिस्तुष्टिश्चास्त्वित्युक्त्वा एतद्वः सत्यमस्त्विति त्रिरनूद्य । ॐ समानी व आकूतिः समाना हृदयानि वः । समानमस्तु वो मनो यथा वः सुसहासति । प्रसुग्मन्ता धियसानस्य सक्षणिः इति पठेयुः ॥ ॥ ततः कन्यादाता कन्यायाः विवाहसौभाग्याद्यभिवृद्ध्यर्थं शचीपूजनं करिष्य इति संकल्प्य शचीपूजा कुर्यात् । तत्रायं क्रमः—पात्रस्थितसिततण्डुलेषु शचीमावाहयेत् । तत्र मन्त्रौ—त्रैलोक्यवल्लभां दिव्यगन्धमाल्याम्बरान्विताम् । सर्वलक्षणसंयुक्तां सर्वाभरणभूषिताम् ॥ अनर्घ्यमणिमालाभिर्भासयन्ती दिगन्तरम् । विलासिनीसहस्रौघैः सेव्यमानामहर्निशम् । एवंविधां शचीमावाह्य षोडशोपचारैरभ्यर्चयेत् । ततः कन्या तां देवीं प्रार्थयेत् । तत्र मन्त्रः—देवीन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि । विवाहं भाग्यमारोग्यं पुत्रलाभं च देहि मे ॥ इति । ततः पुरन्ध्र्यो वधूवरयोर्नीराजनादिकुलधर्मान्कुर्युः ॥

एवं वरः कन्यापरिग्रहणं कृत्वा विवाहदिनात्पूर्वेद्युः स्वस्तिवाचनाङ्कुरार्पणग्रहयज्ञान्संकल्पपूर्वकं कुर्यात् । वधूगृहेऽपि कन्यापिता कुर्यात् ॥ [ अभ्यङ्गस्नानपूर्वकं माङ्गलिकवेषमङ्गलतिलकधारणाद्युभयत्र समानम् ] तत्र वरस्य संकल्पप्रकारः—कृतनित्यक्रियः प्राणानायम्य देशकालौ संकीर्त्य मम देवर्षिपित्रृणापाकरणहेतुभूतधर्मप्रजोत्पादनसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं कन्याप्रतिग्रहं कर्तुं तदादौ तदङ्गभूतं स्वस्तिवाचनं करिष्ये इत्येवं सर्वत्र संकल्पं कुर्यात् । ततः कन्यापितापि मम कुमार्याः जातकर्मादिसंस्कारैः संस्कृ-

तायाः अनादिसिद्धश्रुतिस्मृतीतिहासपुराणविहितशिष्टाचारपरंपराप्राप्तसकलवैदिकलौकिकमङ्गलाचरणाधिकारसंपादकसुवासिनीत्वसिद्धिद्वाराश्रीपर० मत्स्यपुराणोक्तप्रकारेण षोडशमहादानान्तर्गतसालंकृतकन्यादानमुत्तरत्र कर्तुकामः तदादौ वाग्दानरूपकं कन्यादानमहं करिष्ये तदङ्गभूतस्वस्तिवाचनं करिष्य इत्येवं संकल्पं कुर्यात् । ततो विधिवत्पित्रा नान्दीश्राद्धं कारयेत् । तत्र संकल्पः—मम कुमारस्य विवाहकाले पितृतृप्तिद्वारा श्रीपर० नान्दीश्राद्धं करिष्ये इति संकल्प्य कृत्वा । ततो विधिवत्कौतुकसूत्रं कारयेत् । तत्रायं क्रमः—आचार्यो मङ्गलवाद्यनादे कृते पूर्वकृताङ्कुरपालिकासमीपे दर्भोपरि पूर्णकलशं निधाय तत्समीपे साक्षतकांस्यपात्रं निधाय पञ्चगुणीकृतकार्पासोद्भवं सूत्रद्वयं निर्माय तण्डुलोपरि निधाय तत्समीपे चरमुपवेश्य ऋत्विग्भिः सह कुम्भोदकं दर्भाग्रैः तत्सूत्रद्वयोपरि समन्त्रमभिषिञ्चेत् । तत्र मन्त्राः—[ ॐभूर्भुवःस्वःसावित्र्या ऋग्भिर्वेदादिभिस्तथा । आपोहिष्ठादिकाल्लिङ्गैः शुद्धवत्यघमर्षणैः ॥ शर्वंवत्यः स्वस्तिमत्यः पावमान्यस्तथैव च । रक्षोहणं च रात्रिं च कृणुष्वेति तथैव च । तरत्समन्दीपुरुषं विष्णुसूक्तं तथैव च । अतो देवा अवन्त्विति परोमात्रा तथैवच । श्रीसूक्तं शिवसंकल्पं वायुसूक्तं तथैव च । ] सुश्रामिलेतिसूक्तं च स्योनापृथिवी भवेति च । द्रविणोदाः सवितेति नवोविद्युत्रथेति च । उलूकयापिशंगेत्येतैर्मन्त्रैरभिषिञ्च्य जातवेदस इत्यृचा सूत्रद्वयं मन्त्रावृत्त्या गन्धेन लेपयित्वा तत्सूत्रद्वयं शुद्धस्थले प्रज्ञातं निदध्यात् । तस्मिन्नेव दिवसे कन्यादाता स्वशाखानुसारेण स्वस्तिवाचनाङ्कुरार्पणग्रहयज्ञनान्दीश्राद्धानि कृत्वा । कन्यायाः पूर्वसंस्कारातिपत्तिपक्षे—उपनयनप्रकरणोक्तप्रकारेण प्रायश्चित्तपूर्वकममन्त्रकान्संस्कारान्कुर्यात् ॥

पाठा०—१ चिह्नगर्भीकृतो भागो ग्रन्थद्वये न दृश्यते किंतु सुश्रामीत्याद्येव संगृहीतमस्ति ।

अथ जलयन्त्रविधिः ॥ अथ ज्यौतिषिको रव्यवर्धास्तमिते अर्धोदिते वा वस्त्रयुग्मेन वेष्टिते स्वर्णयुते शुद्धजलपूरिते तण्डुलोपरिस्थिते नवकलशे ताम्रमयजलयन्त्रं समन्त्रकं स्थापयेत् । तत्र मन्त्रः ॥ 'मुख्यं त्वमसि यन्त्राणां ब्रह्मणा निर्मितं पुरा । दोषा(भव)भावाय दंपत्योः कालसाधनकारणम्' इति ॥ इति जलयन्त्रविधिः ॥ अस्य घटनं पूर्वोक्तमवसेयम् ॥

वरस्य वधूगृहगमनम् ॥ ततो वरः परेद्युः कृतनित्यक्रियो विधिवत्स्वस्तिवाचनं कारयित्वा ब्राह्मणैः सह सात्त्विकाहारं भुक्त्वा ईषद्धौतं नवं श्वेतं सदशं परेणाधृतं वस्त्रयुग्मं धृत्वा अलंकृतः स्वगोत्रदेवतां पित्रादींश्च नमस्कृत्य प्रतोदपाणिर्यथाविभवमश्वादियानमारुह्य धृतसितच्छत्रः स्वर्वितिर्ज्ञातिगान्धर्वैर्मङ्गलतूर्याष्टमङ्गलसंज्ञकदर्पणपूर्णकलशकन्यापुष्पाक्षतदीपमालाध्वजलाजैः शुक्लाम्बरधरैः कनिक्रद्–अपनिलयन्ताम् इति सुमङ्गलसूक्तपठनपरैर्ब्राह्मणैः पुरन्ध्रीभिश्च सह वधूगृहं गत्वा तद्द्वारदेशे प्राङ्मुखः स्थित्वा नीराजनपूर्णकुम्भयुक्तैः पुरन्ध्रीजनैः प्रत्युद्यातो नीराजितोऽन्तर्गृहं प्रविश्य तत्र सोत्तरच्छदे हरितदर्भास्तीर्णे चतुष्पादे भद्रपीठे प्राङ्मुख उपविशेत् । ततो दाता तस्य पुरस्तात्प्रत्यङ्मुखीं सुस्नातामलंकृतामहतवाससं गन्धानुलिप्तां स्रग्विणीं भुक्तवतीं कन्यां तथाविध आसने उपवेश्य तां पुरस्कृत्य सामात्य उपविश्य आगताय वराय तच्छास्त्रोक्तविधिना मधुपर्कं कुर्यात् ॥ ॥

अथ मधुपर्कविधिः ॥ तत्रायं क्रमः—पाद्यार्थमर्घ्यार्थमाचमनीयार्थं शुद्धाचमनीयार्थं च जलपात्रचतुष्टयं मधुपर्कपात्रं गां पञ्चविंशतिदर्भैरवाग्रं वामावर्तेन कृतं विष्टरं च संपाद्य आचम्य प्राणानायम्य देशकालौ संकीर्त्य कन्यार्थिने गृहमागताय वरायास्मै स्नातकाय कन्यादानाङ्गभूतं मधुपर्कं वरशास्त्रोक्तविधिना करिष्ये इति संकल्प्य प्रागुक्तलक्षणं दर्भमयं कूर्चं विष्टरो विष्टरो विष्टर

इति त्रिर्निवेद्य आसनार्थं वराय दद्यात् । वरोपि तस्मिन्नुदगग्रे कूर्चे अहं वर्ष्मेति मन्त्रमुच्चार्य । अहंवर्ष्मेत्यस्य वामदेवो विष्टरोऽनुष्टुप् । विष्टरोपवेशनेवि० । अहं वर्ष्म सजातानां विद्युतामिव सूर्यः । इदं तदधितिष्ठामि यो मा कश्चाभिदासति । इत्युपविश्य ततो दात्रा पाद्यंपाद्यंपाद्यमिति त्रिर्निवेदितेन जलेन क्रमात् प्रक्षालितदक्षिणसव्यचरणो लौकिकेनोदकेनाचम्य । पूर्ववत्त्रिर्निवेदितमर्घ्यमञ्ज-लिना प्रतिगृह्य । ततस्त्रिर्निवेदिताचमनीयं प्रतिगृह्य तस्यैकदेशं गृहीत्वा अमृतोपस्तरणमसीति पीत्वा लौकिकजलेनाचम्य । मध्येमार्ग-नीयमानं मधुपर्कं मित्रस्य त्वा चक्षुषा प्रतीक्ष इत्यवेक्ष्य मधुपर्को मधुपर्को मधुपर्क इति त्रिर्निवेदितं मधुपर्कं देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि । इत्यञ्जलिना प्रतिगृह्य । मधुवाता ऋतायत इति तृचेनावाङ्मुखो वीक्ष्य त-त्पात्रं सव्यहस्ते धृत्वाङ्गुष्ठानामिकाभ्यां मधुपर्कं त्रिः प्रदक्षिणमालोड्य अङ्गुलिगतं मधुपर्ककणं वसवस्त्वा गायत्रेण छन्दसा भक्ष-यन्त्विति पुरस्तान्निक्षिपेत् । एवं रुद्रास्त्वा त्रैष्टुभेन छन्दसा भक्षयन्त्विति दक्षिणतः । आदित्यास्त्वा जागतेन छन्दसा भक्षय-न्त्विति पश्चात् । विश्वे त्वा देवा आनुष्टुभेन छन्दसा भक्षयन्त्वित्युत्तरतः क्षिप्त्वा । भूतेभ्यस्त्वेति प्रत्युद्ग्रहणं मन्त्रमुच्चारयन्मध्यात्त्रि-रुद्धृत्य निरुत्क्षिप्य मधुपर्कपात्रं भूमौ निधाय मधुपर्कैकदेशं गृहीत्वा विराजो दोहोसीति प्राश्य लौकिकेनोदकेनाचम्य । पुनरेक-देशं गृहीत्वा विराजो दोहमशीयेति द्वितीयं प्राश्य पूर्ववदाचम्य । पुनः पूर्ववद्गृहीत्वा मयि दोहः पद्यायै विराज इति प्राश्य पूर्व-वदाचम्य मधुपर्कशेषमुदङ्मुखोऽप्सु निक्षिप्य पूर्ववत्त्रिर्निवेदिताचमनीयोदकमेकदेशतो गृहीत्वा अमृतापिधानमसीति पीत्वा पूर्ववदा-चम्य पुनराचमनीयजलं गृहीत्वा सत्यं यशः श्रीर्मयि श्रीः श्रयतां इति मन्त्रमुच्चार्य निरवशेषमाचमनीयमाचम्य पुनर्लौकिकेनोद-

केन द्विराचम्य । गौर्गौर्गौः इति त्रिर्निवेदितां गां मातारुद्राणामित्यस्य भार्गवो जमदग्निर्गौस्त्रिष्टुप् । माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः । प्रनुवोचं चिकितुषे जनाय मागामनागामदितिं वधिष्ट । इति मन्त्रं जपित्वा ओमुत्सृजतेत्युक्त्वा विसर्जयेत् । अत्र द्वितीययज्ञोपवीतधारणं केचित् । अथ दाता वरं गन्धादिभिरभ्यर्च्य पश्चात्तेन सहागतान्बन्धूनपि संपूजयेत् । इति मधुपर्कः ॥

अथ जलशुद्धिः ॥ अथोत्तरत्र कर्तव्यकन्यादानार्थं विनियोज्य जलस्य शुद्धिं कुर्यात् । तत्रायं क्रमः—दक्षिणतः पुरोधा उदङ्मुख उपविश्य वधूवरयोर्मध्ये प्रागग्रोदगग्रान्दर्भानास्तीर्य तैजसं पूर्णकलशं निधाय व्रीहियवानोप्य गन्धादिभिरलंकृत्य दूर्वापल्लवैर्मुखमवस्तीर्य अब्लिङ्गाभिर्ऋग्भिरभिमन्त्रयेत् । अथ दाता ॐ पुण्याहं भवन्तो ब्रुवन्तु । ॐ स्वस्ति भवन्तो ब्रुवन्तु । ॐ ऋद्धिं भवन्तो ब्रुवन्तु । इति प्रत्येकं त्रिवारं मन्द्रमध्योच्चस्वरैर्वाक्यत्रयं ब्राह्मणान्प्रत्युच्चारयेत् । तथा ब्राह्मणैरप्युक्ते शिवा आपः सन्तु । सौमनस्यमस्तु । अक्षतं चारिष्टंचास्तु । दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्तु । तिथिकरणमुहूर्तनक्षत्रसंपदस्तु इत्युक्त्वा भार्यादिसमेतः प्राणानायम्य देशकालौ संकीर्त्य मम समस्तपितॄणां निरतिशयसानन्दब्रह्मलोकावाप्त्यादिकन्यादानकल्पोक्तसमग्रफलावाप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं कन्यादानं करिष्य इति संकल्प्य वरं वस्त्रभूषणादिभिर्यथाशक्त्यलंकृत्य तथा कन्यां चालंकृत्य वरहस्ते

पाठा०—१ वात्स्यायनेन वरेणास्यां कन्यकायामुत्पादयिष्यमाणसन्तत्या द्वादशावरान्द्वादशपरान्पुरुषान्पवित्रीकर्तुमात्मनश्च श्रीलक्ष्मीनारायणप्रीतये ब्राह्मविवाहविधिना कन्यादानं करिष्य इति विशेषः सर्वत्र प्रयोगग्रन्थेषु ।

हिरण्यं निधाय सपत्नीक उत्थायोदङ्मुख एव पूर्वार्चितकलशं स्वहस्ते गृहीत्वा कन्यां संप्रगृह्य—कन्यां कनकसंपन्नां कनकाभरणैर्युताम् । दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया ॥ विश्वंभरः सर्वभूताः साक्षिण्यः सर्वदेवताः । इमां कन्यां प्रदास्यामि पितृणां तारणाय च । इति मन्त्रमुचार्य । वत्सगोत्रोद्भवाममुष्य प्रपौत्रीममुष्य पौत्रीममुष्य पुत्रीं सुशीलानाम्नीमिमां श्रीरूपां प्रजापतिदेवताकां कन्यां वसिष्ठगोत्रोत्पन्नायामुष्य प्रपौत्रायामुष्य पौत्रायामुष्य पुत्राय श्रुतशीलनाम्नेऽस्मै श्रीधररूपिणे वराय तुभ्यं मम समस्तपितृणां निरतिशयसानन्दब्रह्मलोकावाप्त्यादिकन्यादानकल्पोक्तसमग्रफलावाप्तिद्वारा श्रीपरमेश्वरप्रीतिकामोऽहं प्रजासहत्वकर्मभ्यः संप्रददे प्रतिगृह्णातु भवानिति ब्रुवन् वरस्य पाणावुदकं निषिञ्चन् प्रजापतिः प्रीयतामिति मनसा स्मरन् ॐ स्वस्तीत्युक्त्वा—गौरीं कन्यामिमां विप्र यथाशक्ति विभूषिताम् । गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ॥ कन्ये ममाग्रतो भूयाः कन्ये मे देवि पार्श्वयोः । कन्ये मे पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम् । इति प्रार्थयेत् । अथ वरः ॐपुण्याहं भवन्तो ब्रुवन्त्वित्यादि दातृवदुक्त्वा तथा ब्राह्मणैरप्युक्ते ततः कन्यादक्षिणांसमभिमृश्य क इदं कस्मा अदात्कामः कामायादात्कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविश कामेन त्वा प्रतिगृह्णामि कामैतत्ते वृष्टिरसि द्यौस्त्वा ददात्विति जपित्वा प्रजापतिमनुस्मृत्य धर्मप्रजासिद्ध्यर्थं कन्यां प्रतिगृह्णामीति ब्रूयात् । पुनरेवं कइदं कस्मा अदादित्यारभ्य प्रतिगृह्णामीत्यन्तं द्विः प्रयुज्य धर्मे चार्थेच कामेच नातिचरितव्येत्युक्ते नातिचरामीति वरो ब्रूयात् । अथ ॐस्वस्तीति ब्रूयात् । अथ पुरोधा दातृवरौ पश्यन् ऋतस्य हि शुरुधः सन्ति

पाठा॰—१ पञ्चभूता । २ सर्वतो भूया ।

पूर्वीतितृचस्य वामदेवोऽग्निस्त्रिष्टुप्। ॐ ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति । ऋतस्य श्लोको बधिराततर्द कर्णा बुधानः शुचमान आयोः ॥ ऋतस्य दृढा धरुणानि सन्ति पुरूणि चन्द्रा वपुषे वपूंषि । ऋतेन दीर्घमिषणन्त पृक्ष ऋतेन गाव ऋतमा विवेशुः ॥ ऋतं येमान ऋतमिद्वनोत्यृतस्य शुष्मस्तुरया उ गव्युः । ऋताय पृथ्वी बहुले गभीरे ऋताय धेनू परमे दुहाते ॥ इति तिस्र ऋचो जपित्वा एतद्वः सत्यं समृद्धिमदस्त्विति ब्रूयात् ॥ ॥ अथ **निरीक्षणम्** ॥ अथाभ्यां परस्पर मन्त्रवन्निरीक्षणं कर्तव्यम् । तत्रायं क्रमः—ब्राह्मणाः स्वलंकृते वेश्मनि सुमङ्गलगीततूर्यनिर्घोषे कृते पूर्वापरभागयोर्हस्तान्तरालं विहाय प्रत्येकं प्रस्थमितार्द्रसिततण्डुलराशी कृत्वा तन्मध्ये गन्धादिना कृतस्वस्तिकचिह्नं तिरस्करिणीसंज्ञकं वस्त्रमुत्तरदशं ब्राह्मणा धारयेयुः । अथ पूर्वस्मिन्राशौ प्रत्यङ्मुखीं गुडजीरकपाणिं कन्या अपरस्मिन्प्राङ्मुखं तथाभूतं वर स्थापयेयुः । तौ वधूवरौ मनसेष्टदेवता ध्यायन्तौ समाहितौ तिष्ठेताम् । अथ ब्राह्मणाः सुर्यासाविर्त्रीसंज्ञकं सत्येनोत्तभितेति सूक्तं पठेयुः । पुरन्ध्यो मङ्गलगीतानि कुर्युः । अथ ज्यौतिषिकेन सुमुहूर्तोस्तु तदेवलग्नं० सरामीत्यन्तं चोक्तया प्रदिष्टे काले सद्यस्तिरस्करिणीमुदगपसार्य कन्यावरौ परस्पर गुडजीरकानवकिरन्तौ परस्पर निरीक्षेताम् । ततो वरःअभ्रातृघ्नीं वरुणा पतिघ्नीं बृहस्पते । इन्द्रापुत्रघ्नीं०सुव।इति मन्त्रं जपन्निरीक्षेत । अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाःसुवर्चाः। वीरसूर्देवकामा स्योना शंनो भव द्विपदे शं चतुष्पदे । इति मन्त्रं कन्ययेक्ष्यमाणो जपित्वा दर्भाग्रेण तस्या भ्रुवोर्मध्यं व्याहृतिभिः परिमृज्य दर्भं निरस्याप उपस्पृशेत् । अथ ब्राह्मणाः पुरन्ध्यश्चाशीर्वादैरभिनन्दयेयुः ॥ ॥ **अथाक्षतारोपणम्** ॥ अथ वधूवरावायु-

पाठा०—१ पूर्वराशौ प्रत्यङ्मुखं वरं पश्चिमराशौ प्राङ्मुखीं कन्यां गुडजीरकपाणी उभाववस्थापयेयुरिति प्रयोगरत्नकारादय ।

वर्धनक्रमक्षतारोपणं कुर्याताम् । तत्रायं क्रमः—तैजसेन पात्रेण क्षीरमानीय घृतमासिच्य पात्रान्तरेणार्द्रानक्षतशुक्लशालितण्डुलानादाय वरः प्रक्षालितपाणिः वध्वाः प्रक्षालितेऽञ्जलौ क्षीरघृतं पाणिना द्विरुपस्तीर्य द्विवारं तण्डुलानोप्य द्विवारं तेनैवाभिघारयेत् । तत एवं वराञ्जलावन्येन पूरिते दाता तदञ्जल्योः सुवर्णं निधाय वराञ्जलिं कन्याञ्जल्युपरि निधाय दाता कन्या तारयतु दक्षिणाः पान्तु बहुदेयं चास्तु पुण्यं वर्धतां शान्तिःपुष्टिस्तुष्टिश्चास्तु तिथिकरणमुहूर्तनक्षत्रसंपदस्तु इत्युच्चार्य कन्यामुद्धृत्य कन्याञ्जलिस्थितानक्षतान्वरमूर्धन्यारोपयेत् । ततो वरः स्वाञ्जलिस्थितानक्षतान्कन्याशिरसि निक्षिपेत् । एवं पुनर्द्विवारं कुर्यात् । ततः कन्या वराञ्जलिं द्विरुपस्तीर्य द्विस्तण्डुलैरापूर्य द्विरभिघार्य एवमन्येन कन्याञ्जलौ पूरिते दाता पूर्ववद्धिरण्यं निधाय कन्याञ्जलिं वराञ्जलौ निधाय पूर्ववत्कन्यातारयत्वित्यादि वाक्यषट्कमुच्चार्य वरेण कन्यामूर्ध्न्यक्षतेषु क्षिप्तेषु स्वयं कन्यामुद्धृत्य वरमूर्धन्यारोपयेत् । एवं पुनर्द्विवारं कुर्यात् । अथ वरो वध्वञ्जलिं पूर्ववदापूर्य स्वाञ्जलिमन्येन पूरयित्वा पूर्ववदुभौ वधूपूर्वकमारोपयेताम् ॥ ॥ अथानुदानम् ॥ अथ दाता वराय गोभूदासीयानशय्यासनामत्रादिकमनुदानं समन्त्रं सोदकं दद्यात् ॥ तत्र संकल्पः—तिथ्यादिकमुच्चार्य एतत्कन्यादानाङ्गभूतान्यनुदानानि करिष्ये इति संकल्प्य । तत्र मन्त्राः—यज्ञसाधनभूता या विश्वस्याघप्रणाशिनी । विश्वरूपधरो देवः प्रीयतामनया गवा ॥१॥ सर्वसस्याश्रया भूमिर्वराहेण समुद्धृता । अनन्तसस्यफलदा अतः शान्तिं प्रयच्छ मे ॥ २ ॥ इयं दासी मया तुभ्यं श्रीवत्स प्रतिपादिता । सदा कर्मकरी भोग्या यथेष्टं भद्रमस्तु ते ॥ ३ ॥ अशून्यं शयनं नित्यमनूनां श्रियमुन्नतिम् । सौभाग्यं देहि मे नित्यं शय्यादानेन केशव ॥ ४ ॥ हिरण्यगर्भसंभूतं सौवर्णं चाङ्गुलीयकम् । सर्वप्रदं

प्रयच्छामि प्रीणातु कमलापतिः ॥ ५ ॥ क्षीरोदमथने पूर्वमुद्भूतं कुण्डलद्वयम् । श्रिया सह समुद्भूतं दद्यां श्रीः प्रीयतां मम ॥ ६ ॥ इदं गृहं गृहाण त्वं सर्वोपस्करसंयुतम् । तव विप्र प्रसादेन ममास्त्वभिमतं फलम् ॥ ७ ॥ इति ॥ ॥ अथ स्वर्णाभिषेकादि ॥ ततः पुरोधाः कांस्यपात्रे पूर्वार्चितकलशजलमासिच्य औदुम्बर्यार्द्रया शाखया सपलाशया सहिरण्यपवित्रया सकुशदूर्वापल्लवया आपोहिष्ठाद्यब्लिङ्गकैर्मन्त्रैर्वधूवरावभिषिञ्चेत् । अथ वरः स्वशेखरपुष्पमेकमादाय क्षीरघृतेनाप्लाव्य कन्याललाटे तिलकं कुर्यात् । सापि स्वशेखरपुष्पमेकमादाय क्षीरघृतेनाप्लाव्य वरललाटे तिलकं कृत्वा स्वकण्ठस्थितपुष्पमालां वरस्य कण्ठे निदध्यात् । ततो वरः स्वकण्ठस्थितपुष्पमालां कन्याकण्ठे निदध्यात् । ततः कन्यावरौ पूर्वकृतकौतुकसूत्रद्वयमादाय पुरोधसा विश्वेत्तात इत्यस्य भार्गवो नेमो विश्वेदेवा जगती । विश्वेत्ता ते सवनेषु प्रवाच्या या चकर्थ मघवन्निन्द्र सुन्वते । पारावतं यत्पुरुसंभृतं वस्वपावृणोः शरभाय ऋषिबन्धवे । अनेन मन्त्रेण कन्या वरस्य दक्षिणहस्ते बध्नीयात् । ततो वरः श्रियेजात इत्यस्य कण्वः पवमानः सोमस्त्रिष्टुप् । श्रिये जातः श्रिय आनिरियाय श्रियं वयो जरितृभ्यो ददाति । श्रियं वसाना अमृतत्वमायन्भवन्ति सत्यासमिथा मितद्रौ । इति मन्त्रेण कन्याया वामहस्ते बध्नीयात् । ततः पुरोधाः शतंजीवेतिद्वाभ्यां बृहत्सामेत्येकया ये यज्ञेनेत्यष्टाभिस्त्र्यम्बकमित्येकयाक्षतै रक्षां कुर्यात् । ततो वरः कौतुकबन्धाङ्गभूतमाचार्यादिभ्यो यथाशक्ति दक्षिणां दद्यात् । ततः पुरोधा विवाहव्रतरक्षणार्थं गणानांत्वा गणाधिपमनुस्मृत्य आतून काण्वः कुसीदीइन्द्रोगायत्री । आतून इन्द्र क्षुमन्तं चित्रं ग्राभं संगृभाय । महाहस्ती दक्षिणेन॥ विद्मा हि त्वा तुविकूर्मिं तुविदेष्णं तुवीमघम् । तुविमात्रमवोभिः ॥ इति मन्त्रद्वयावृत्त्या तयोरुत्तरीयान्तयोः पञ्च पञ्च क्रमुकानाबध्नीयात् । व-

धूवरौ विवाहव्रतसमाप्तिपर्यन्तं तद्ग्रन्थिद्वयं न विसृजेताम् । ततः पुरोधाः नीललोहितमित्यस्य सूर्यासावित्रीसूर्यात्रिष्टुप् । ॐनीललोहितं भवति कृत्यासक्तिर्व्यज्यते । एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यते ॥ इति मन्त्रेण तयोरुत्तरीयग्रन्थिद्वयाग्रं चावबध्नीयात् । अथ दाता सभार्यो वृद्धाः पुरन्ध्यो ज्ञातिबान्धवाश्च क्रमादाशीर्भिरार्द्राक्षतारोपणं कुर्युः । ततो वधूवरौ उमामहेश्वरौ लक्ष्मीनारायणौ शचीपुरंदरौ च श्रीमहालक्ष्मीं पार्वतीं शचीं च प्रणमेताम् । तत्रायं क्रमः—पात्रस्थितसिततण्डुलेषु देवतात्रयं क्रमेण षोडशोपचारैर्नाममन्त्रेणाभ्यर्च्य प्रार्थयेताम् । ततो वधूवरौ तिथ्यादिकं संकीर्त्य चतुर्थदिवसपर्यन्तं विवाहव्रतं करिष्यावहा इति संकल्प्य तत्र प्रथमदिने रोहिणीसोमौ भूत्वा दाक्षायणीमावाहनादिभिः पूजयेताम् । ततो वरो मङ्गलसूत्रसंज्ञकां कृष्णमणिमालां वधूकण्ठे इष्टदेवतां स्मरन्—माङ्गल्यतन्तुनानेन मत्[1]जीवनहेतुना । कण्ठे बध्नामि सुभगे सा जीव शरदः शतम् ॥ इति मन्त्रमुच्चारयन्बध्नीयात् । तदानीमेव वरो वधूं वस्त्रभूषणैश्चक्राकारभूषणैश्च । आयुष्यं वर्चस्यं रायस्पोषमौद्भिदम् । इदं हिरण्यं वर्चस्व जैत्रायाविशतादिमाम् ॥ उच्चैर्वाजि पृतनाषाट् सभासाहं धनंजयम् । सर्वाः समग्रा ऋद्धयो हिरण्येऽस्मिन्समाहिताः ॥ शुनमहं हिरण्यस्य पितुर्नामेव जग्रभ । तेन मां सूर्यत्वचमकरं पुरुषु प्रियम् ॥ सम्राजं च विराजं चाभिष्टिर्या च मे ध्रुवा । लक्ष्मी राष्ट्रस्य या मुखे तया मामिन्द्र संसृज ॥ अग्नेः प्रजातं परि यद्धिरण्यममृतं दध्रे अधि मर्त्येषु । य एनद्वेद स इदेनदर्हति जरा मृत्युर्भवति यो बिभर्ति ॥ १ ॥ यद्वेद राजा वरुणो यद्वु देवी सरस्वती । इन्द्रो यद्वृत्रहा वेद तन्मे वर्चस आयुषे ॥ न तद्रक्षांसि न

पाठा०—१ मङ्गलसूत्रबन्धने वरस्य स्वतः क्वचित्, ममजीवनहेतुनेति केचित्पठन्ति ।

पिशाचाश्चरन्ति देवानामोजः प्रथमजं ह्येतत् । यो बिभर्ति दाक्षायणा हिरण्यं स देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः ॥ यदाबध्नन्दाक्षायणा हिरण्यं शतानीकाय सुमनस्यमानाः । तन्म आबध्नामि शतशारदायायुष्मान्जरदष्टिर्यथासत् ॥ घृतादुल्लुप्तं मधुमत्सुवर्णं धनंजयं धरुणं धारयिष्णु । ऋणक्सपत्नादधरांश्च कृण्वदारोहमां महते सौभगाय ॥ प्रियं मा कुरु देवेषु प्रियं राजसु मा कुरु ॥ प्रियं विश्वेषु गोप्त्रेषु मयि धेहि रुचा रुचम् ॥ अग्निर्येन विराजति सूर्यो येन विराजति । विराड्येन विराजति तेनास्मान्ब्रह्मणस्पते विराज समिधं कुरु ॥ इति सूक्तं पठन्भूषयेत् । ततो वधूः मङ्गलद्रव्यपूर्णान्युपायनानि सुवासिनीभ्यो लक्ष्म्यादिदेवताप्रीत्यै यथाशक्ति दद्यात् ॥

अथ विवाहहोमः ॥ अथ वधूवरौ सद्मनो वामभागे निर्मितां हस्तोच्छ्रितां समन्ततश्चतुर्हस्तप्रमाणां हंसशुकादियुक्तचतुःस्तम्भयुक्तमण्टपां चतुर्दिक्षु सोपानयुक्तां प्रागुदक्प्रवणां विचित्रकुम्भतोरणभृङ्गारपुष्परङ्गवल्लीदीपैरलंकृतां वादित्रनृत्यगीतैर्मनोहरां प्रयुज्यमानाशीर्वचनैः स्वर्चितब्राह्मणैर्विविधालंकारयुक्तपुरन्ध्रीभिश्च युक्तां विवाहवेदीमागच्छेताम् । ततो वरः स्वयमासनमध्यास्य उत्तरदेशस्थितां नियमितवाचं वधूं पश्चिममार्गेणानीय दक्षिणत उपवेश्य प्राणानायम्य देशकालौ संकीर्त्य मम सहधर्मचारिणीसंबन्धसंपादनीयौपासनाग्निपरिग्रहणद्वारा श्रीपर० पाणिग्रहणहोमं करिष्य इति संकल्प्य स्थण्डिलोल्लेखनाद्यग्निप्रतिष्ठापनान्तं कर्म कृत्वा प्रत्यगग्नेर्दृषदं सोपलां प्रतिष्ठाप्य प्रागुदीच्यामुदकुम्भं धान्यराशेरुपरि निधाय पल्लवैरपिधाय गन्धपुष्पैरलंकृत्य उदगग्नेः सप्ततण्डुलराशीनुपकल्प्य समिद्द्वयमादाय देशकालकथनपूर्वकमस्मिन्विवाहहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये । अस्मिन्नन्वाहिते-

श्राविल्याद्याघारानाज्येनेत्यन्तमुक्त्वा त्रिरग्निं पवमानं अर्यमणं प्रजापतिं चाज्येन अर्यमाग्निं वरुणाग्निं पूषाग्निं प्रजापतिंच लाजद्रव्येण
शेषेण स्विष्टकृतमित्याद्युक्त्वाऽऽग्न्याधाय परिसमूहनाद्याज्याधिश्रयणान्तं पूर्ववत्कृत्वाज्यं लाजैः सह त्रिः पर्यग्निकृत्वा आज्योत्पव-
नाद्याघारान्तं कृत्वा वध्वान्वारब्ध अग्नआयूंषीतितिसृभिः त्वमर्यमाभवसीत्यनेन प्रजापतेनत्वदेतान्यन्य इत्यनेनच पञ्चाज्याहुतीर्हुत्वा
यथा—अग्नआयूंषीति त्रयाणां मन्त्राणां शतं वैखानसा ऋषयः अग्निःपवमानो देवता गायत्रीच्छन्दः प्रधानाज्यहोमेवि० अग्नये पव-
मानायेदं। त्वमर्यमा वसुश्रुतोग्निस्त्रिष्टुप्। अर्यम्ण इदं। प्रजापते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप्। प्रजापतय इदं त्युद्देशत्यागौ कृत्वा
ततः प्रत्यङ्मुखस्तिष्ठन्प्राङ्मुख्या उपविष्टाया वध्वा उत्तानस्य करस्य अङ्गुष्ठादिप्रदेशमवाङ्मुखेन करेण गृभ्णामित इति मन्त्रेण गृही-
त्वोत्थापिताया वध्वाः करौ प्रक्षाल्याञ्जलिं कारयित्वा स्रुवेणाज्यमादायोपस्तीर्य तद्भ्राता भ्रातृस्थानीयेन वा तिष्ठता शूर्पस्थाँल्लाजा-
न्मुष्टिपरिमितान्द्विरावाप्य स्वयं पात्रस्थानञ्जलिस्थानप्यभिघार्य अर्यमणं नामदेवोर्यमानुष्टुप्। प्रधानलाजहोमेवि० अर्यमणं नु देवं
कन्या अग्निमयक्षत। स इमां देवो अर्यमा प्रेतो मुञ्चातु नामुतः स्वाहा। अर्यम्णेग्नय इदं० ॥ इति मन्त्रमुक्त्वा अविच्छिन्नाञ्जलि-
नाङ्गुल्यग्रैर्हावयेत्। ततो दृषदमुपलं च वर्जयित्वा पूर्णकुम्भसहितमग्निं। अमोहमस्मि सा त्वं सा त्वमस्यमोहं द्यौरहं पृथिवी त्वं सा-
माहमृक्त्व तावेव विवहावहै। प्रजां प्रजनयावहै संप्रियौ रोचिष्णू सुमनस्यमानौ जीवेन शरदः शतं। इति मन्त्रेण स्वयमग्रे गच्छन्
वध्वासह प्रदक्षिणीकृत्य तां प्राङ्मुखीं कृत्वा। इममश्मानमारोहाश्मेव त्वं स्थिरा भव। सहस्व पृतनायतोऽभितिष्ठ पृतन्यतः। इति
मन्त्रेण द्वाभ्यामपि पादाभ्यां दृषदमारोप्य। पुनः पूर्ववत्तदञ्जलिमुपस्तीर्य लाजावदानं द्विः कारयित्वाभिघार्य वरुणं नु वामदेवो वरु-

गोनुष्टुप्। वरुणं नु देवं कन्या अग्निमयक्षत। स इमां देवो वरुणः प्रेतो मुञ्चातु नामुतः स्वाहा। वरुणायाग्नय इदं० इति मन्त्रेण हावयित्वा पूर्ववद्वध्वासह प्रदक्षिणीकृत्याश्मानमारोप्य। पुनरुपस्तीर्य द्विराज्याभिघार्य पूषणं वामदेवः पुषानुष्टुप्। पूषणं नु देवं कन्या अग्निमयक्षत। स इमां देवः पूषा प्रेतो मुञ्चातु नामुतः स्वाहा। पूष्णेग्नय इदं०। इति मन्त्रमुक्त्वा हावयित्वा पुनः पूर्ववत्प्रदक्षिणीकृत्य पुनर्दृषदमारोप्य स्वयं प्रजापतयेस्वाहेतिस्मरन् अवशिष्टलाजानात्माभिमुखं शूर्पकोणेनैव निरवशेषं तथैव हावयेत्। ततो वधूं परिगृह्य अग्नेरुदीच्यां सप्ततण्डुलराशिष्वपि इष एकपदी भव सामामनुव्रता भव। पुत्रान्विन्दावहै बहूंस्ते सन्तु जरदष्टय इति प्रथमं राशिम्। ऊर्जे द्विपदी भवेत्यादिना द्वितीयम्। रायस्पोषायेत्यादिना तृतीयम्। मायोभव्याय चतुष्पदी भवेत्यादि चतुर्थम्। प्रजाभ्यः पञ्चपदी भवेत्यादिना पञ्चमम्। ऋतुभ्यः षट्पदी भवेत्यादिना षष्ठम्। सखा सप्तपदी भवेत्यादिना सप्तमं राशिं प्रत्यगादितः क्रमेणाभ्युत्क्रामयन्स्वशिरसा वधूशिरः संयोज्य कलशस्थमुदकमादाय प्रथममात्मशिरः पश्चाद्वधूशिरः शान्तिरस्त्वित्यादिपञ्चदशमन्त्रैरभिषिच्य पूर्ववदासित्वा आज्येन स्विष्टकृदादिहोमशेषं समाप्य पूर्ववद्बद्धोत्तरीयान्तौ तूर्णीं विस्रस्य रात्रौ ध्रुवमरुन्धतीं सप्तर्षींश्च वध्वा सह दृष्ट्वा पत्न्या जीवपत्नी प्रजां विन्देयेति मन्त्रं वाचयेत्। ततो वधूर्वाङ्नियमं विसृजेत्। एतदादिविवाहाग्निमभिरक्षेत्। इति विवाहप्रयोगः ॥

अथ गृहप्रवेशनहोमः—अथैष विवाहो दिवा कृतश्चेद्दिवैव होमं कृत्वा विधिवत्सायंसंध्यामुपास्य पूर्वरात्रौ विवाहश्चेन्नवनाडिकाभ्यः पूर्वमौपासनं कृत्वा गृहप्रवेशहोमं कुर्यात्। तदुपरि विवाहश्चेत्तत्काल एव विवाहहोमं कृत्वा औपासनकर्मणोऽतीत-

कालत्वात्परेद्युः सायमौपासनं कृत्वा गृहप्रवेशहोमं कुर्यात् ॥ तत्रायं क्रमः—विवाहाग्निं प्रज्वाल्य प्राणानायम्य तिथ्यादिकं संकीर्त्य अस्मिन्विवाहाग्नौ यथोक्तकाले उक्तद्रव्येषु यथालाभद्रव्येण यावज्जीवमौपासनं करिष्य इति संकल्प्य वक्ष्यमाणप्रकारेणौपासनं कृत्वा ॥ पुनस्तिथ्यादिकं संकीर्त्य मम विवाहाग्नेर्गृहप्रवेशसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गृहप्रवेशहोमं करिष्ये । तत्र देवतापरिग्रहार्थमन्वाधानं करिष्ये इति संकल्प्य । अस्मिन्नन्वाहितेऽग्नावित्यादि चक्षुषी आज्येनेत्यन्तमुक्त्वा सूर्यासावित्रीं चतुर्वारमाज्येन समञ्जन्त्विति मन्त्रेण हृदयाञ्जनं शेषेण स्विष्टकृतमित्यादिपूर्ववदुक्त्वान्वाधाय । ततः प्रत्यगग्नेः स्वदक्षिणदेशे प्राग्ग्रीवमुत्तरलोमानडुहं चर्मास्तीर्य तस्मिन्वधूमुपवेश्य पात्रासादनाद्यग्न्यलंकरणान्तं कृत्वा पत्न्यान्वारब्धःसन्निध्माधानाद्याज्यभागान्तं कृत्वा । आ नः प्रजामिति चतसृणां सूर्यासावित्री सूर्यासावित्री प्रथमा जगती द्वितीया त्रिष्टुप् तृतीयाचतुर्थ्यावनुष्टुभौ गृहप्रवेशनप्रधानाज्यहोमे वि० । आ नः प्रजां जनयतु प्रजापतिराजरसाय समनक्त्वर्यमा । अदुर्मङ्गलीः पतिलोकमाविश शं नो भव द्विपदे शं चतुष्पदे स्वाहा ॥ सूर्यासावित्र्या इदं० ॥ अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः । वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे स्वाहा ॥ सूर्या० । इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु । दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि स्वाहा ॥ सूर्या० ॥ सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव । ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु स्वाहा ॥ सूर्या० । एताभिश्चतसृभिर्ऋग्भिः स्वाहाकारं पठन् चतस्र आज्याहुतीर्हुत्वा सर्वत्र सूर्यासावित्र्या इदंनममेत्युद्दिश्य त्यक्त्वा । समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ । सं मातरिश्वा संधाता समुदेष्ट्री दधातु नौ ॥ इति मन्त्रेण स्रुवशिष्टाज्येन स्वस्य वध्वाश्च हृदये अङ्क्त्वा हस्तं

प्रक्षाल्य स्विष्टकृदादिहोमशेषं समाप्य पतिपुत्रवतीभिः सुवासिनीभिर्नीराजितविग्रहो ब्राह्मणेभ्य आशिषो गृहीत्वा वध्वा सहाभिनन्द्यासीत । ततो द्वितीयाह्ने वधूवरौ अप्सरोगन्धर्वौ भूत्वा महादेवीं तृतीयाह्ने स्वाहामीं भूत्वा कालिकां चतुर्थाह्ने मानवी भूत्वा शांकरीं चावाहनादिभिः संपूजयेताम् । एवं चतुर्षु दिवसेषु वस्त्रहेमदानसहितबहुब्राह्मणभोजनवेदोक्ताशीर्वादपूर्वकं व्रताचरणं कुर्याताम् । तत्र त्रिरात्रं वधूवरौ ब्रह्मचारिणावलंकुर्वाणावधःशायिनावक्षारालवणाशिनौ भूत्वा तिष्ठेताम् । ततो वरो व्रताचरणान्ते विवाहकाले वध्वा परिहिताम्बरं सूर्यासंज्ञकसत्येनोत्तभितेतिसूक्तविदे ब्राह्मणाय दत्त्वा व्रतसंपूर्णफलसिद्ध्यर्थं ब्राह्मणान्भोजयित्वा ओंस्वस्तीति तानुक्त्वा पुनरोंस्वस्तीति तैर्वाचयेत् । गन्धर्वादिविवाहेष्वेवं कुर्याताम् ॥ इति श्रीमन्नृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे विवाहप्रकरणम् ॥

अथ प्रसङ्गात्पुनर्विवाहविधिरभिधीयते ॥ इत्थं विवाहे कृते पश्चाल्लग्नं पञ्चाङ्गशुद्धिराहित्यादिना दुष्टमिति ज्ञातं चेत्तदा ज्योतिःशास्त्रोक्तकालविशेषे पुनर्विवाहं कुर्यात् । तदाह श्रीधरीये नृसिंहः—‘पुनर्विवाहं वक्ष्यामि दंपत्योः शुभवृद्धिदम् । लग्नेन्दुलग्नयोर्दोषे ग्रहताराादिसंभवे ॥ अन्येष्वशुभकालेषु दुष्टयोगादिसंभवे । विवाहे त्वथ दंपत्योराशौचादिसमुद्भवे ॥ अत्राशौचादिशब्देन तद्गृहे मृताशौचोत्पाता गृह्यन्ते । वरेणाचरितगुरुमृताशौचविषयं वा । अन्यत्र सामान्याशौचे नान्दीश्राद्धादूर्ध्वमाशौचाभावात् । तस्य दोषस्य शान्त्यर्थं पुनर्वैवाहमिष्यते । अयने चोत्तरं श्रेष्ठं वर्धयेत्तु विशेषतः ॥ आषाढमार्गशीर्षौ द्वौ वर्ज्यौ शेषाः शुभावहाः ॥ विवाहोक्तर्क्षतिथ्यंशराशिवारादिवर्गजाः । करणं योगसंज्ञानि ग्रहगोचरयोगगाः ॥ तस्मिन्विवाहसमये शुभ-

दाथ तथैव च। पूर्वाह्णे पूर्वरात्रे च विवाहः शुभदो भवेत्॥ पुनर्विवाहिकं त्विर्थं पूर्वोक्तं मन्त्रसंयुतम् । पुनरावर्तयेत्सर्वं कन्यानरणपूर्वकम्॥ व्रतचर्यं न तत्कुर्यात्तस्मिन्नह्नि समापयेत्' इति। इति पुनर्विवाहः॥

अथ द्वितीयादिविवाहनिर्णयः। तत्र श्रूयते—'तस्मादेको बह्वीर्जाया विन्दते' इति। श्रुत्यन्तरमपि—'तस्मादेकस्य बह्व्यो जाया भवन्ति नैकस्यै बहवः सह पतयः' इति ब्राह्मणम्। तद्विषयमाहापस्तम्बः—'धर्मप्रजासंपन्ने दारे नान्यां पत्नीं कुर्वीतान्यतराभावे कार्या प्रागग्न्याधानात्' इति। अस्यार्थः—यदि प्राग्व्यूढा स्त्री धर्मेण प्रजया च संपन्ना तदा नान्यां विवहेत्। अन्यतराभावे अग्न्याधानात्प्रागन्या वोढव्या। देवपितृऋणापाकरणार्थत्वाद्विवाहस्येति। तथाच श्रूयते—'त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी' इति। 'नाऽपुत्रस्य लोकोऽस्ती'ति श्रुत्यन्तरं च। स्मृतिश्च—'अपुत्रः सन्पुनर्दारान्परिणीय ततः पुनः। परिणीय समुत्पाद्य नोचेदापुत्रदर्शनात्॥ विरक्तश्चेद्वनं गच्छेत्संन्यासं वा समाश्रयेत्' इति॥ ॥ तत्राधिवेदने प्रतीक्षाकालमाह मनुः—'वन्ध्याष्टमेऽधिवेद्या स्याद्दशमे तु मृतप्रजा। एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी' इति। अप्रियवादिनी व्यभिचारिणी। संग्रहे तु—'अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत्। मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम्' इति। स्मृतिभास्करे—'व्याधिता स्त्रीप्रजा वन्ध्या उन्मत्ता विगतार्तवा। अदुष्टा लभते त्यागं तीर्थतो न तु धर्मतः'। तीर्थतो योनितः॥ संहितायां विशेषमाह स एव—'या रोगिणी स्याद्धिता संपन्ना चैव शीलतः। सानुज्ञाप्याधिवेत्तव्या नावमान्या तु कर्हिचित्' इति। स्मृत्यन्तरे तु—'एवमुत्क्रमश्च कामार्थमन्यां लब्धुं

यदीच्छति। समर्थस्तोपयित्वार्थैः पूर्वोढामपरां वहेत्' इति। याज्ञवल्क्यस्तु—'आज्ञासंपादिनीं दक्षां वीरसूं प्रियवादिनीम्। त्यजन्दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः' इति। सधनस्य तृतीयांशदानम्। निर्धनस्याशनाच्छादनादिना पोषणमित्यर्थः। यात्तूक्तद्रव्यापरितोषात्प्रकारान्तरेण वा निर्गच्छेत्तां प्रत्याह मनुः—'अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात्। सा सद्यः संनिरोद्धव्या त्याज्या वा कुलसंनिधौ' इति॥ ॥ अत्र ज्येष्ठयैव सह धर्मः कर्तव्य इत्याह हेमाद्रौ कात्यायनः—'अग्निशिष्टादिशुश्रूषां बहुभार्यः सवर्णया। कारयेत्तद्बहुत्वं चेज्ज्येष्ठया गर्हिता न चेत्'। अस्यार्थः—अग्निशुश्रूषा दर्शपूर्णमासादीनि कार्याणि। शिष्टशुश्रूषा अतिथ्यभ्यागतादिपूजा। अनेनान्येऽपि पत्नीसाहित्यसंपाद्या गृहमेधिधर्मा उपलक्ष्यन्ते। तदेतत्सर्वं सवर्णासवर्णभार्यासमवायवान् सवर्णयैव भार्यया कारयेत्। अनेकसवर्णभार्यायुक्तस्तु ज्येष्ठया सवर्णया। यदि सा गर्हिता न चेत्तर्ह्येव तया कारयेत्। गर्हशब्दोऽत्र धर्मायोग्यत्वोपपादकदोषोपलक्षणार्थः। अनेनैवंविधदोषवत्या ज्येष्ठयापि सवर्णया धर्मकार्यं न कारयेत् किंतु निर्दोषया कनीयसैवेति दर्शितमिति। एतज्ज्येष्ठभार्ययैव कर्तव्याग्निपरिचरणमाधानकाले सहाधिकृतज्येष्ठभार्याविषयम्। आधानोत्तरकालपरिणीतायाः पुनराधानं विना सहाधिकाराभाव इति हेमाद्रिणा प्रपञ्चितत्वात्। तदेतत्सर्वं हविर्यज्ञकाण्डे आधानप्रकरणे प्रपञ्चयिष्यामः। स्मार्ताग्निपरिचरणे तु शौनकोक्ताग्निद्वयसंसर्गविधानेनैव सर्वासामधिकारः। 'अतः स्मार्तकर्मणि सर्वासामधिकारोऽस्त्येव। तदग्निद्वयसंसर्गविधानं लौपासनप्रकरणे वक्ष्यते॥ ॥ तत्र प्रथमपत्नीं प्रशंसति स्मृतिभास्करे कात्यायनः—'प्रथमा धर्मपत्नी स्याद्द्वितीया रतिवर्धिनी। दृष्टमेवं फलं तत्र नादृष्टमुपपद्यते' इति। अत्र रत्यर्थमपि न

शूद्रां परिगृह्णीयात् ॥ ॥ अथ हीनजातिपरिणये दोषमाह विष्णुः—'हीनजातिस्त्रियो मोहादुद्वहन्तो द्विजातयः । कुलान्येव नयन्त्याशु ससंतानानि शूद्रताम् ॥ दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु । नादन्ति पितृदेवाश्च न च स्वर्गं स गच्छति' इति ॥ ॥ अथ द्वितीयविवाहहोमाग्निनिर्णय उच्यते कात्यायनेन—'सदारोऽन्यान्पुनर्दारानुद्वोढुं कारणान्तरात् । यदीच्छेदग्निमान्कुर्वन्क्व होमोऽस्य विधीयते ॥ स्वाग्नावेव भवेद्धोमो लौकिके न कदाचन' इति । कुर्वन् होमकर्तेत्यर्थः । तदेतच्छाखान्तरविषयम् । बह्वृचगृह्यपरिशिष्टे तु औपासनप्रकरणे पूर्वाग्नौ लौकिकाग्नौ वा होमविधानात् शौनकेन लौकिकाग्नौ होमः कर्तव्य इति वक्ष्यमाणत्वाच्च पूर्वगृह्याग्नौ लौकिकाग्नौ वा होमः कर्तव्यः ॥ ॥ अथ द्वितीयविवाहे जीवत्पितृकस्य नान्दी ॥ अत्र द्वितीयां परिग्रहीष्यन् जीवत्पितृकोऽपि वृद्धिश्राद्धप्रकरणोक्तरीत्या स्वयमेव नान्दीश्राद्धं कुर्यात् । तथाच तत्रत्यवचनम्—'नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे पुनः । अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम्' इति । तत्र पितृवर्गं विहाय मातृमातामहवर्गयोः कुर्यात् । मातरि जीवन्त्यां मातामहस्यैव कुर्यात् । तस्मिन्नपि जीवति द्वारलोपात्कर्मलोप एव । तान्प्रत्यक्षेण पूजयेदित्यन्ये । सोऽपि साग्निकश्चेत् स्वस्य पिता येभ्यो दद्यात्तेभ्यः स्वयमपि दद्यात् । 'एभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः' इति वसिष्ठवचनात् । स्वस्तिवाचनाङ्कुरार्पणग्रहयज्ञांश्च स्वयमेव कुर्यात् । इति द्वितीयविवाहनिर्णयः ॥

पाठा०—१ यदुक्तं तत्प्राक्तनगृह्याग्नौ कर्तव्यमित्येवं परं नतु सर्वथा लौकिकाग्नौ कर्तव्यमिति । शौनकाश्वलायनाचार्याभ्यां अग्निद्वयसंसर्गविधेः कथितत्वात् ।

अथ तृतीयविवाहनिषेधः । स्मृतिसंग्रहे पैङ्गयः—'ब्रह्मचर्यं समाप्यैकां भार्यां यो द्वितयीं तथा । तृतीयां नोद्वहेद्विप्र इति धर्मकृतो विदुः' इति । अत्र तृतीयापरिणयननिषेधो मानुषीविषयः । तदाह मात्स्ये काश्यपः—'अपाकृत्य ऋणं चापि लक्षण्यां स्त्रियमुद्वहेत् । एकां तु पितृदेवार्थं रत्यर्थमपरां तु वा ।। तृतीयां मानुषीं नैव चतुर्थीं तु समुद्वहेत् । पुत्रभ्रात्रादिसंपन्नः कुटुम्बी साग्निकोऽजरः । उद्वहेद्रतिसिद्ध्यर्थं तृतीयां न कदाचन ।। मोहादज्ञानतो वापि यदि गच्छेत्तु मानुषीम् । नश्यत्येव न संदेहो गार्ग्यस्य वचनं यथा' इति । अन्यच्च—'धर्मदारनिमित्तेऽपि नोद्वहेन्मानुषीं स्त्रियम् । यद्युद्वहेत्तृतीयां तु तर्हि सा विधवा भवेत्' इति तृतीयविवाहनिषेधस्य मानुषीविषयत्वात् । तस्मात्तृतीयोद्वाहदोषनिवृत्तये तदा अर्ककन्यां विवहेत् । तथाच संग्रहे—'यद्युद्वहेत्तृतीयां तु तर्हि सा विधवा भवेत् । चतुर्थादिविवाहार्थं तृतीयेऽर्कं समुद्वहेत्' इति ।। ।। अर्कविवाहविधानमुच्यते संग्रहे—'आदित्यदिवसे वापि हस्तर्क्षे वा शनैश्चरे । शुभे दिने वा पूर्वाह्णे कुर्यादर्कविवाहकम्' । अत्र देशादिनियमो ब्रह्मपुराणे दर्शितः—'ग्रामात्प्राच्यामुदीच्यां वा सपुष्पफलसंयुतम् । परीक्ष्य यत्नतोऽधस्तात्स्थण्डिलादि यथाविधि' । व्यासः—'मालालंकृतवासस्तु रक्तगन्धादिभूषितः । सुपुष्पफलशाखाढ्यमर्कगुल्मं समाश्रयेत् ।। तत्तल्लक्षणसंयुक्तमर्कं संस्थाप्य यत्नतः । अर्ककन्याप्रदानार्थमाचार्यं कल्पयेत्पुरा । अर्कसंनिधिमागत्य ततः स्वस्त्यादि वाचयेत् ।। नान्दीश्राद्धं हिरण्येन चाष्टवर्गान्प्रपूजयेत् । पूजयेन्मधुपर्केण वरं विप्रस्य हस्ततः ।। यज्ञोपवीतं वस्त्रं च हस्तकर्णादिभूषणम् । उष्णीषगन्धमाल्यादि वरायास्मै प्रदापयेत् ।। स्वशाखोक्तप्रकारेण मधुपर्कं समाचरेत्' इति । ब्रह्मपुराणे—'कृत्वार्के पुरतस्तिष्ठन्प्रार्थयेत द्विजोत्तमः । त्रिलोकवासिन्स-

त्राश्च छायया सहितो रवे । तृतीयोद्वाहजं दोषं निवारय सुखं कुरु ॥ तत्राध्यारोप्य देवेशं छायया सहितं रविम् । वस्त्रैर्माल्यैस्तथा गन्धैस्तन्मन्त्रेणैव पूजयेत्' । व्यासोपि—'अर्कं प्रदक्षिणीकुर्वञ्जपेन्मन्त्रमिमं बुधः ॥ मम प्रीतिकरी येयं त्वया सृष्टा पुरातनी । अर्कजा ब्रह्मणा सृष्टा सास्माकं प्रतिरक्षतु ॥ पुनः प्रदक्षिणं कुर्यान्मन्त्रेणानेन मन्त्रवित् ॥ नमस्ते मङ्गले देवि नमः सवितुरात्मजे । त्राहि मां कृपया देवि पत्नी त्वं म इहागता ॥ ततश्च कन्यावरणं त्रिपूरुषं कुलमुच्चरेत् । आदित्यः सविता चार्कः पुत्री पौत्री च नप्त्रिका । गोत्रं काश्यपमित्युक्तं लोके लौकिकमाचरेत् ॥ सुमुहूर्ते निरीक्षेत स्वस्तिसूक्तमुदीरयन् । आशीर्भिः सहितैः कुर्यादाचार्यप्रमुखैर्द्विजैः ॥ अथाचार्यं समाहूय विधिना संमुखे च ताम् । प्रतिगृह्य ततो होमं गृह्योक्तविधिनाचरेत्' इति ॥ विधिनेत्याचार्यस्तद्दानमन्त्रमुच्चार्य दद्यात् । तां प्रतिगृह्णीयादित्यर्थः । तन्मन्त्रो व्यासेन दर्शितः—'अर्ककन्यामिमां विप्र यथाशक्ति विभूषिताम् । गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय' इति । अङ्गल्यक्षतकर्माणि कृतकङ्कणपूर्वकम् । यावत्पञ्चावृतं सूत्रं तावदर्कं प्रवेष्टयेत् ॥ स्वशाखोक्तेन मन्त्रेण गायत्र्या वाथवा जपेत् । पश्चीकृत्य पुनः सूत्रं स्कन्धे बध्नीत मन्त्रतः ॥ बृहत्सामेति मन्त्रेण मूलरक्षां प्रकल्पयेत् । अर्कस्य पुरतः पश्चाद्दक्षिणोत्तरयोस्तथा ॥ कुम्भांश्च निक्षिपेत्पश्चादाग्नेयादिचतुष्टये । सवस्त्रं प्रतिकुम्भं च त्रिसूत्रेणैव वेष्टयेत् ॥ हरिद्रागन्धसंयुक्तं पूरयेच्छीतलं जलम् । प्रतिकुम्भं महाविष्णुं संपूज्य परमेश्वरम् । पाद्यार्घ्यादिनिवेद्यान्तं कुर्यान्नाम्नैव मन्त्रवित्' इति ॥ होमस्येतिकर्तव्यता शौनकेन दर्शिता—'तृतीयेऽस्मिन्विवाहे तु संप्राप्ते पुरुषस्य तु । आर्कं विवाहं वक्ष्यामि शौनकोक्तविधानतः ॥ अर्कसंनिधिमागत्य तत्र स्वस्त्यादि वाचयेत् । नान्दीश्राद्धं प्रकुर्वीत स्थण्डिलं तूपकल्पयेत् ॥ अर्कमभ्यर्च्य

विधिना गन्धपुष्पाक्षतादिभिः । स्वयं चालंकृतस्तद्वद्वस्त्रमाल्यादिभूषणैः ॥ अर्कस्योत्तरदेशे तु समन्वारब्ध एतया । उल्लेखनादिकं कुर्यादाघारान्तमतः परम् ॥ आज्याहुतिं च जुहुयात्संगोभिरित्यृचैकया । यस्मै त्वा कामकामायेत्येकयर्चा ततः परम् ॥ व्यस्ताभिश्च समस्ताभिर्भूराद्यैः स्विष्टकृत्तथा ॥ परिषेचनपर्यन्तमयाश्चेत्यादिभिः क्रमात्' इति ॥

अथ प्रयोगः । आचम्य प्राणानायम्य देशकालौ संकीर्त्य मम तृतीयोद्वाहदोषनिवृत्त्यर्थमर्कविवाहहोमं करिष्य इति संकल्प्य तत्र देवतापरिग्रहार्थमित्याद्याघारान्तमुक्त्वा बृहस्पतिं अग्निं अग्निं वायुं सूर्यं प्रजापतिं चाज्येन शेषेण स्विष्टकृतमित्याद्याघारान्तं कृत्वा संगोभिरित्यस्याङ्गिरा ऋषिः बृहस्पतिर्देवता त्रिष्टुपछन्दः अर्कविवाहाङ्गभूताज्यहोमे वि०। ॐ संगोभिराङ्गिरसो रक्षमाणो भगं इवेदर्यमणं निनाय । जने मित्रो न दंपती अनक्ति बृहस्पते वाजयाशूंरिवाजौ स्वाहा। बृहस्पतय इदं०। अनेन मन्त्रेणाज्याहुतिं हुत्वा यस्मैत्वेत्यस्य वामदेवोऽग्निस्त्रिष्टुप् अर्क०। यस्मै त्वा काम कामाय वयं सम्राड्यजामहे । तमस्मभ्यं कामं दत्वाथेदं त्वं घृतं पिब स्वाहा । अग्नय इदं० इति । अनेन व्यस्तसमस्तव्याहृतिभिश्च हुत्वा उद्देशत्यागौ कृत्वा होमशेषं समापयेत् । अत्र प्रार्थनामन्त्रादिविशेषमाह व्यासः—'पुनः प्रदक्षिणं कृत्वा मन्त्रमेतमुदाहरेत् ॥ मया कृतमिदं कर्म स्थावरेषु जरायुणा । अर्कापत्यानि नो देहि तत्सर्वं क्षन्तुमर्हसि ॥ इत्युक्त्वा शान्तिसूक्तानि जपित्वा विसृजेत्पुनः । गोयुग्मं दक्षिणां दद्यादाचार्याय च भक्तितः ॥ इतरेभ्योऽपि विप्रेभ्यो दक्षिणां चापि शक्तितः । वत्सरे गुरवे दद्यादन्ते पुण्याहवाचनम्' इति । अत्र पञ्चमदिवसे कर्तव्यमुक्तं ब्रह्मपुराणे—'चतुर्थे दिवसेतीते पूर्ववत्संप्रपूज्य च । विसृज्य होममग्निं च विधिना मानुषीं पराम् ॥ उद्वहेदन्यथा नैव पुत्रपौ-

त्रादिवृद्धिमान्। न पशून् च मित्राणि मङ्गलं च न गच्छति ॥ एवमेव द्विजश्रेष्ठ विधिना सम्यगुद्वहेत्। धनधान्यसमृद्धिश्च इच्छाशक्तिः परत्र च' इति। इत्यर्कविवाहः ॥ एष द्वितीयादिविवाहः पूर्वपत्नीसद्भावे यथालाभकाले कर्तव्यः। सा तु मृता चेत्कालविशेषोऽभ्यनुज्ञायते संग्रहे—'प्रमदामृतिवत्सरादितः पुनरुद्वाहविधिर्वरस्य च। विषमे परिवत्सरे शुभो युगुले चेत्तु मृतिप्रदो भवेत्' इति ॥ अन्यच्च—'पत्नीवियोगे प्रथमे च वर्षे नो चेद्विवाहः पुनरुद्वहेच्च। समे च वर्षे विषमे च मासेष्वुद्वाहकं स्याच्छुभदं प्रशस्तम्' ॥ इति श्रीमन्नृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे द्वितीयविवाहतृतीयविवाहार्कविवाहपुनर्विवाहप्रकरणम् ॥

अथौपासनविधिः ॥ उपासको यस्य सुरेश्वरस्य भक्तौघभीसंचयनिरासकस्य। उपासनीयत्वमुपैति सोसौ लक्ष्मीनृसिंहोस्तु मयि प्रसन्नः ॥ किंच—यस्योपासननिपुणा विजयन्ते हन्त देवतानिवहाः। भूयान्मयि प्रसन्नः स्वाश्रितजनबन्धुरेष नरसिंहः ॥ अथ विवाहहोमोत्तरकालकर्तव्यौपासनविधिरभिधीयते ॥ तत्र तावत्प्रारम्भकाल उक्तः कारिकायाम्—'अथ यस्मिन्विवाहाग्निरुत्पन्नोऽहनि तस्य तु। यत्सायं तत आरभ्य वह्निं परिचरेत्स्वयम्' इति। स्मृतिरत्नावल्याम्—'औपासनं विवाहाग्नौ कुर्यादत्र न शङ्कया। गृहप्रवेशहोमं तु कुर्यादौपासनानले' इति। वसिष्ठोपि—'विवाहहोमं निर्वर्त्य तस्मिन्नौपासनं ततः। प्रवेशहोमं विधिवत्ततो गृहत्वसिद्धये' इत्यादिवचनैः विवाहहोमानन्तरमेवौपासनं कर्तव्यं ततो गृहप्रवेशहोम इति सिद्धम् ॥ इदमत्र गृह्यम्—'पाणिग्रहणादि गृह्यं परिचरेत्' इति। अस्यार्थः—पाणिग्रहणप्रभृति गृह्यं अग्निं परिचरेत्। पाणिग्रहणादिवचनं गृहप्रवेशहोमोत्तरकाले औपासनप्रारम्भशङ्कानिवृत्त्यर्थम्। यद्विधास्यते तत्परिचरणमिति। गृह्यपरिशिष्टेपि—

'अथ नित्यौपासनं तस्य सायमारम्भः' इति । अत्र भगवाञ्शौनकः—'यस्मिन्नह्नि विवाहः स्यात्सायमारभ्य तस्य तु । परिचर्या विवाहाग्नेर्विदधीत स्वयं द्विजः ।। यदि रात्रौ विवाहाग्निरुत्पन्नः स्यात्तथा सति ।। उपक्रम्योत्तराहेऽग्निं सायं परिचरेदमुम्' इति । संग्रहेऽपि—'रात्रौ विवाह उत्पन्ने कथं कुर्वन्ति याज्ञिकाः । रात्रावतीतकालश्चेच्छ्वःसायं तदुपक्रमः' इति ।। तत्प्रमाणकालमाह सुदर्शनभाष्यकारः—'तस्य चारम्भणं रात्रावेव यदि नव नाड्यो नातीताः । अतीताश्चेत्परेद्युः सायमग्निहोत्रवेलायामेवारम्भः' इति । षट्त्रिंशन्मते—'त्रिधा विभक्ते निशि पूर्वभागे भवेद्विवाहो यदि तत्र कुर्यात् । औपासनं तत्परतो यदि स्याच्छ्वःसायमौपासनहोम इष्टः ।। दिवा विवाहो यदि चेत्तदानीं विवाहहोमं दिवसे तदैव । औपासनं चास्तमिते विधाय प्रवेशहोमं तु तथा निशायाम् ।। कृत्वाऽवलाया निशि दर्शयित्वा ध्रुवर्क्षमौपासनमारभेत' इति । संध्याभाष्येऽपि—'प्रातर्होमः संगवान्तः कालस्त्वनुदिनं तथा । सायमस्तमिते होमः कालस्तु नवनाडिकाः' इति ।। ।। अथ होमकर्तॄनाह कारिकाकारः—'आत्मनोऽसंभवे पत्नीपुत्रादय इति स्थितिः । अन्ये तु मन्यते पत्नीकुमार्योस्तदहोमकम् ।। तत्रं नास्त्यत्र भगवद्वृत्तिकृद्वचनं यथा' इति ।। इदमत्र गृह्यम्—'स्वयं पत्न्यपि वा पुत्रः कुमार्यन्तेवासी वा नित्यानुगृहीतः स्यात्' इति । अस्यार्थः—पत्नीकुमार्योरहोमकमित्येके । कुतः । स्त्रीणां मन्त्रानधिकारात् । अन्ये तु सहोमकम् । कुतः । वचनात् पत्नीसंनहनवत् । अन्तेवासी शिष्यः । अनुशब्दः परिशब्दस्य स्थाने । नित्यं परिगृहीतः स्यादित्यर्थः । किमुक्तं भवति । यदि विवाहाग्निर्नष्टः स्यात् ततो नष्टाहरणप्रायश्चित्तं कृत्वा परिचरेदिति । अथवा आत्मनः पत्न्या वा समीपे कथं नित्यः स्यात् नोभयोरन्यत्र स्थापयितव्य इति । अथवा होमधर्मस्योपलेपनादे-

निवृत्त्यर्थम् । तदपिहि कचग्रहणेन प्राप्नोति परिसमूहनादिवदिति । अत्र भगवान्—'पत्नी कुमारी पुत्रो वा शिष्यो वापि यथा-क्रमम् । पूर्वस्यपूर्वस्यालाभे विदध्यादुत्तरोत्तरः' इति । माधवीये दक्षस्तु—'संध्याकर्मावसाने तु स्वयं होमो विधीयते । स्वयं-होमे फलं यत्स्यात्तदन्येन न लभ्यते ॥ ( होमे यत्फलमुद्दिष्टं जुह्वतः स्वयमेव तु । हूयमानं तदन्येन फलमर्धं प्रपद्यते ॥ ) ऋ-त्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः । एतैरेव हुतं यच्च तद्धुतं स्वयमेव तु' ॥ विट्पतिर्जामाता ॥ तत्रापि फलतारतम्य-माह स एव—'अन्यैः शतहुताद्धोमादेकः शिष्यहुतो वरम् । शिष्यैः शतहुताद्धोमादेकः पुत्रहुतो वरम् ॥ पुत्रैः शतहुताद्धोमा-देकोऽध्यात्महुतो वरम्' इति ॥ अत्र विशेषः कूर्मपुराणे दर्शितः—'ऋत्विक् पुत्रोऽथवा पत्नी शिष्यो वापि सहोदरः । प्राप्या-नुज्ञां विशेषेण जुहुयाद्वा यथाविधि' इति । एतहत्विगादिना हवनं पर्वव्यतिरिक्तविषयम् । 'स्वयं पर्वणि जुहुयादृत्विजामेक इतर-काल'मिति सूत्रितत्वात् । ऋत्विगादिहोमे दंपतिसंनिधानेन भवितव्यम् । तथाच कात्यायनः—'असमक्षं तु दंपत्योर्होतव्यं न-र्त्विगादिना । द्वयोरप्यसमक्षं तु भवेद्धुतमनर्थकम्' इति ॥ तदभावे एकतरसंनिधानेनापि भवितव्यमित्युक्तं तत्रैव—'निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा । प्रवसेत्कार्यवान्विप्रो वृथैव न चिरं वसेत्' इति । स्मृत्यर्थसारे तु—'संनिधौ यजमानस्य उद्देश-त्यागकारणात् । असंनिधौ तु पत्नी स्यादध्वर्युस्तदनुज्ञया ॥ उन्मादे प्रसवे चार्तौ कुर्वीतानुज्ञया विना । नोपवासी प्रवासे स्यात्पत्नी धारयते व्रतम्' इति । इति कर्तृनिर्णयः ॥

अथ प्रादुष्करणकालमाह कारिकाकारः । 'ज्वलयेदपराह्णेऽग्निमस्तं याते दिवाकरे । पर्युक्ष्याग्निं परिस्तीर्य पर्युह्य च ततः

परम्' इति। इदमत्र सूत्रम्—'तस्याग्निहोत्रेण प्रादुष्करणहोमकालौ व्याख्यातौ' इति। अस्यार्थः—तस्यग्रहणं नियमार्थम्। तस्याग्निहोत्रेणैव विधिर्भवति नान्येन। तेन पाकयज्ञतन्त्रं न भवति। तर्हि प्राशनादयोऽपि न स्युरित्याशङ्क्याह प्रादुष्करणेति। प्रादुष्करणं नाम अपराह्णे गार्हपत्यं प्रज्वाल्येति एवं प्रातर्व्युष्टायामिति चे'ति। गृह्यपरिशिष्टेपि—'अस्तमित आदित्ये सायमग्नेः प्रादुष्करणमुदिते प्रातरि'ति। अस्तमितेऽस्तं गच्छति। उदिते उदयं गच्छति॥ अत्र भगवान्—'अत्रोपयमनार्थं तमुपलेपादिसंस्कृते। देशे निधाय ज्वलितं कृत्वा परिसमुह्य च॥ उपस्तीर्य च पर्युक्ष्य गन्धाद्यैः परिपूज्य च' इति॥ अत्र कालविशेषमाह कात्यायनः—'सूर्ये तु शैलमप्राप्ते षट्त्रिंशद्भिरिहाङ्गुलैः। प्रादुष्करणमग्नीनां प्रातर्भासामदर्शने' इति। अस्यानुकूलान्कर्दनाह स्मृतिभास्करे कात्यायनः—'दुहित्रा स्नुषया वापि विहारो न विरुध्यते। निर्लेपनं च पात्राणामुपलेपनमर्चनम्' इति। विहारो विहरणम्। प्रादुष्करणमिति यावत्। एतत्प्रादुष्करणकालात्यये प्रतिपदोक्तप्रायश्चित्तस्यानुक्तत्वात्समस्तव्याहृतिमन्त्रेणाज्याहुतिः कर्तव्या। तथाच कारिका—'प्रायश्चित्तविशेषेण यत्र नोक्तो भवेद्विधिः। होतव्याज्याहुतिस्तत्र भूर्भुवःस्वरितीति[2] च'। इति प्रादुष्करणकालः॥ ॥ अथ होमकालः। तत्राश्वलायनाचार्यः—'सम्यङ्निम्लोचति रवौ सायं च जुहुयात्तदा। अथ प्रातर्हुनेन्नित्यमुदितेऽर्के यथाविधि'। विप्रः स्मार्ताग्निरेनाग्रामग्निमानग्निषु त्रिषु। आहिताग्निश्च यज्वा च बह्वृचो योऽग्निषु त्रिषु॥ हुनेदाहवनीयेऽन्यस्तत्रैव जुहुयाद्विजः' इति। कात्यायनोपि—'यावत्सम्यङ् न भाव्यन्ते नभस्यृक्षाणि सर्वतः। लोहितत्वं च नापैति

---

पाठा०—१ परिस्तीर्य। २ रिति श्रुचेति।

तावत्सायं तु हूयते' ॥ आह मनुः—'लेखामात्रश्च दृश्येत रश्मिभिस्तु समन्वितः । उदितं तं विजानीयात्तत्र होमं प्रकल्पयेत्' इति । चन्द्रिकायाम्—'हस्तादूर्ध्वं रवियविन्नद्धवं हिसा न गच्छति । तावद्धोमविधिः पुण्यो नातोऽभ्युदितहोमिनाम्' इति । अत्रिरपि—'उदितेऽस्तमिते भानौ होमकालो विधीयते । द्विजातीनां त्रयाणां तु तद्ब्राह्मश्चेति गद्यते' इति ॥ अनुकल्पकालमाह सूत्रकारः—'प्रदोषान्तो (सायं) होमकालः संगवान्तः प्रात'रिति । अस्यार्थः—प्रदोषो नाम रात्रेः पूर्वचतुर्थभागः । प्रदोषस्य अन्तो यस्य स प्रदोषान्त इत्यर्थः । सायंहोमकालः । केषांचित्पञ्चमीषष्ठीनाडिके प्रदोषशब्देनोच्येते तदन्तो होमकालः । संगवान्तः प्रातरिति । यस्मिन्काले गावो वत्सैः सहिता आसते स संगवः कालः । तत्पर्यन्तं प्रातर्होमस्य कालः । केचिदह्नस्तृतीयो भागः संगव इत्याहुः । तदन्तः संगवान्तः । दशनाडिका इत्यर्थः । अस्तमिते उदिते च विहितो होम एतावति काले क्रियमाणोऽतीतकालो न भवतीति । गृह्यपरिशिष्टेपि—'प्रदोषान्तः सायं होमकालः संगवान्तः प्रातर्नात्र तत्रभिष्यते' इति ॥ ॥ अत्र प्रदोषसंगवयोर्लक्षणमाहाचार्यः स्मृतिरूपेण—'पश्चादस्तमयात्कालो यो भवेत्त्रिमुहूर्तकः । स सायंहोमकालश्च प्रदोषान्त उदाहृतः ॥ यस्तु षण्णाडिका कालः पश्चादेवोदयाद्रवेः । स होमकालो विप्राणां संगवान्त इति स्मृतः' ॥ इति होमकालः ॥ ॥ अथ गौणकालातीतप्रायश्चित्तम् । एतद्गौणकालातिक्रमे प्रायश्चित्तमाह सूत्रकारः—'तमतिनीय चतुर्गृहीतमाज्यं जुहुया'दिति । अस्यार्थः—पूर्वोक्तप्रदोषसंगवावतीतौ चेन्मनोज्योतिरिति मन्त्रेण चतुर्गृहीताज्यं हुत्वाऽतीतहोमः कर्तव्यः । एतद्द्वादशरात्रपर्यन्तमिति ॥ तथा च गृह्यपरिशिष्टम्—'नित्यहोममतीत्य मनस्वत्या चतुर्गृहीतं जुहुयाद्द्वादशरात्रादूर्ध्वं पुनराधानमेव कुर्या'दिति ।

अतीतहोमविधिस्तूत्तरत्र वक्ष्यते ॥ यत्तु गोभिलगृह्यम्—'यदि गृह्येऽग्नौ सायंप्रातर्होमयोर्हव्यं होतारं नाधिगच्छेत् कथं कुर्यादामायमाहुतेः प्रातराहुतिर्नित्येत्याप्रातराहुतेः सायमाहुति'रिति । यत्तु बोधायनवचनम्—'आसायंकर्मणः प्रातराप्रातःसायकर्मणः । आहुतिर्नातिपद्येत पार्वणं पार्वणान्तरा'दिति । तदेतच्छाखान्तरविषयम् ॥ ॥ प्रायश्चित्ताकरणे कृतमप्यकृतमित्याह पुलस्त्यः—'अकाले यत्कृतं कर्म कालं प्राप्य पुनः क्रिया । कालातीतं तु यत्कुर्यादकृतं तद्विनिर्दिशेत्' इति । अत्र हविरुत्पादनाद्यङ्गजातमपि होमकाल एव कार्यम् । 'यो होमकालः सोऽङ्गाना'मित्यापस्तम्बस्मरणात् । इति कालातीतप्रायश्चित्तम् ॥ ॥

अथ होमद्रव्यसंस्कारादि । तत्र कारिकाकारः—'पयःप्रभृतिषु त्वेकं संस्कुर्यादग्निहोत्रवत् । अलंकरोति पुष्पाद्यैरनलायतनं ततः ॥ द्रवं हविः स्रुवेणैव पाणिना कठिनं हविः । जुहुयादग्नये स्वाहा सुसमिद्धे हुताशने ॥ ध्यात्वा शब्दं चतुर्थ्यन्तं प्रजापतय इत्यथ । स्वाहाकारेण जुहुयात्ततः परिसमूहनम् ॥ पर्युक्षणं च कुर्वीत प्रातरप्येवमिष्यते । व्युष्टायां ज्वलयेदेनं सायंहोमकृतेः पुरा ॥ पयमान्येन वा प्रातस्तेनैवेत्याह वृत्तिकृत् । पूर्वमन्त्रस्तु सूर्याय स्वाहेत्यन्यत्समं भवेत्' इति । इदमत्र गृह्यम्—'हौम्यं च मांसवर्जं कामं तु व्रीहियवतिलैरग्नये स्वाहेति सायं जुहुयात्सूर्याय स्वाहेति प्रातस्तूर्ष्णीं द्वितीये उभयत्र' इति । अस्यार्थः—हौम्यं नाग्निहोत्रद्रव्येण व्याख्यातम् । पयसा नित्यहोम इत्यादीनि पञ्च मांसवर्जम् । मांसप्रतिषेधाच्छास्त्रान्तरदृष्टमपि हौम्यं भवतीति गम्यते ।—'पयो दधि यवागूश्च सर्पिरोदनतण्डुलाः । सोमो मांसं तथा तैलमापस्तानि दशैव तु' इति । येनैव द्रव्येण सायं जुहुयात्तेनैव प्रातः प्रतिनिधिर्वर्जम् । कामवचनं पूर्वोक्ताभावे कथमेतेषां ग्रहणं स्यादित्येवमर्थम् । व्रीह्यादयश्च प्रत्येकं

साधनानि न मिश्राणि तच्च न्यायतोऽवगन्तव्यम् । तूर्ष्णीं द्वितीये आहुती जुहोति । तूर्ष्णींग्रहणं प्रजापतिध्यानार्थम् । उभयत्र सायं प्रातश्चेत्यर्थः । अग्निं परिसमुह्य परिस्तीर्य पर्युक्ष्य होमद्रव्यस्याग्निहोत्रवत्संस्कारं कृत्वा ततोऽग्नये स्वाहेति सायं जुहुयात् । ततः प्रजापतय इति चतुर्थ्यन्तं ध्यात्वा स्वाहेत्युपांशूक्त्वा द्वितीयामाहुतिं जुहुयात् । ततः परिसमूहनपर्युक्षणे कुर्यादेवं सायम् । प्रातर्होमे तु पूर्वमन्त्रस्थाने सूर्यायस्वाहेति विशेष इति ॥ गृह्यपरिशिष्टेपि—'अग्निं परिसमुह्य परिस्तीर्य पर्युक्ष्य हौम्येष्वपक्वमुल्मुकेनावज्वल्य प्रोक्ष्य तेनैव त्रिःपरिहृत्योल्मुकं निरस्येत् । पक्वमुदगङ्गारेष्वधिश्रित्य प्रोक्ष्योदगुद्वास्य तानङ्गारानतिसृजेदेष हौम्यः संस्कारः । पयोदधिसर्पिर्यवागूरोदनं तण्डुलाः सोमस्तैलमापो व्रीहयो यवास्तिला इति हौम्यानि । तण्डुलाश्च नीवारश्यामाकयावनालानाम् । व्रीहिशालियवगोधूमप्रियङ्गवः स्वरूपेणापि होतव्याः। तिलाः स्वरूपेणैव। शतं चतुःषष्टिर्वाहुतिर्व्रीहितुल्यानां। तदर्धं सर्पिस्तिलयोः। तैलं च तिलजार्तिलातसीकुसुम्भानां। येन प्रथमां देवतां जुहुयात्तेनैव द्वितीयां जुहुयाद्येन च सायं जुहुयात्तेनैव प्रातरिति । अत्र भगवान्—'अग्निहोत्रवदित्येतच्छौनकेन प्रपञ्चितम् । पुनः पर्युक्ष्य चाङ्गारानुदगग्नेरपोह्य च ॥ होम्यानां द्वादशानां तु पक्वमेतेष्वधिश्रयेत् । पयो यवागूः सर्पिश्च ओदनं दधि तण्डुलाः । सोमस्तैलं पयो व्रीहिर्द्वादशैते तिला यवाः ॥ पेय आदीनि चत्वारि विदुः पक्वानि याज्ञिकाः ॥ दध्यादीनामपक्वानां नाधिश्रयणमिष्यते । दर्भेण सर्वं ज्वलयेदपक्वं पक्वमेव च ॥ अधिश्रिते स्रुवेणापः प्रतिषिंचेन्नवापि च । पुनस्त्रिर्ज्वलता तेन परिहृत्यापमृज्य तत् ॥ उदक्पर्यग्निशोद्वास्याप्यङ्गारानतिसृज्य च ।

पाठा०—१ अनादीनि च ।

अग्नेः पश्चात्तृणेष्वेव निधाय समिधा सह ॥ तेषामेकं संस्कृत्वं तु गृहीत्वा सायमग्नये । स्वाहेति मन्त्रमुच्चार्य कुर्वीत प्रथमाहुतिम् ॥ प्रातर्होमे तु सूर्याय स्वाहेति प्रथमाहुतिम् । विधायोभयतस्तूष्णीं द्वितीयाहुतिमाचरेत् ॥ तत्र प्रजापतिं ध्यायेदुभयत्राप्यविस्मरन् । स्रुवेण जुहुयाद्द्रव्यं सर्पिरादिद्रवात्मकम् ॥ पाणिना दक्षिणेनैव जुहुयादन्नतण्डुलौ । एषामलाभे द्रव्याणां जुहुयाद्व्रीहिभिर्यवैः । तिलैर्वा निष्कृतिं कुर्यात्पुनः परिसमूहनम् । पर्युक्षणं चाविस्मृत्य सायं प्रातरितीरितम्' इति ॥ ॥ अत्र द्रव्यविशेषेण फलविशेष उक्तो ऋग्विधाने—'श्रद्दधानोऽनसूयुश्च नित्यं वेदपरायणः । तिलैः परिचरन्नग्निं तण्डुलैश्च सुतं लभेत् ॥ अन्नाद्यैर्व्रीहिभिः कार्यं यत्नेनाक्षयमश्नुते' इति ॥ ॥ अत्र हविर्लक्षणं तत्परिमाणं च चन्द्रिकायामुक्तम्—'हविस्तु त्रिविधं ज्ञेयं कृतं चैव कृताकृतम् । अकृतं च क्रमादेषां लक्षणं सम्यगुच्यते ॥ कृतमोदनसक्त्वादि तण्डुलादि कृताकृतम् । व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा बुधैः ॥ शालिश्यामाककनीवारव्रीहिगोधूमयावकाः । एतेषां तण्डुला होम्या यावनालाः प्रियङ्गवः' इति । अन्यत्तु—'नीवाराः शालयश्चापि गोधूमा व्रीहयो यवाः । स्वरूपेणैव होम्याः स्युः स्वरूपेण च वै तिलाः ॥ अत्रानुकल्पद्रव्याण्युक्तानि स्मृतिभास्करे—'यवाभावे तु गोधूमास्ततो वेणुयवादयः । छन्दोगवचनाच्चैव जुहुयाद्धविरत्यये ॥ फलं वा यज्ञवृक्षस्य तत्पत्रमथ वा जलम्' इति ॥ ॥ अथाहुतिपरिमाणमाह बृहस्पतिः—'अक्षधान्यं चतुःषष्टिराहुतेः परिकीर्तितम् । तिलानां तु तदर्धं स्यात्तण्डुला व्रीहिभिः समाः' इति ॥ अक्षलक्षणं तु—'प्रसृतिद्वितयं मानं प्रस्थं मानचतुष्टयं' इति । बोधायनस्तु—'व्रीहीणां वा यवानां वा शतमाहुतिरिष्यते' इति । अगस्त्यसंहितायाम्—'द्रवद्रव्यस्य मानं स्याद्धारा गोकर्णदीर्घिका' इति । सिद्धान्तशेखरेऽपि—'अन्नं ग्रास-

समं प्रोक्तं लाजा मुष्टिमिता मताः' इति। इति होमद्रव्यसंस्कारः ॥ ॥ अथ समिल्लक्षणमुक्तं स्मृत्यर्थसारे—'पलाशखदिराश्वत्थशम्युदुम्बरजा समित्। अपामार्गार्कदूर्वाश्च कुशाश्चेत्यपरे विदुः ॥ सत्वचः समिधः कार्या ऋजुश्लक्ष्णाः समास्तथा। शस्ता दशाङ्गुलास्तास्तु द्वादशाङ्गुलकास्तथा ॥ आर्द्राः पक्वाः समाश्छेद्यास्तर्जन्यङ्गुलिवर्तुलाः। अपाटिताश्चाद्विशाखाः कृमिदोषविवर्जिताः ॥ ईदृग्भिर्होमयेत्प्राज्ञः प्राप्नोति विपुलां श्रियम्' इति। अत्राहुतिप्रक्षेपात्पूर्वं समिधमन्त्रावादध्यात्। 'जान्वाच्य समिधमादध्यात्' इति सूत्रितत्वात्। 'आहितायां च समिधि प्रदीप्तायां व्यङ्गुलमात्रे जुहुयात्' इति सूत्रकारोक्तेः। आपस्तम्बोपि—'व्यङ्गुले मूलात्समिधि जुहोति' इति। भगवानपि—'जान्वाच्य दक्षिणं समिधमाधायोपस्पृशेत्पुनः। व्यङ्गुलमात्रसमिधि प्रदीप्ते जुहुयाद्धविः' इति। तत्र कारणं श्रूयते—'सोऽग्निरबिभेत्। आहुतयो मात्येष्यन्तीति। स एताः समिधमपश्यत्। तामाधत्त। ततो वा अग्नावाहुतयो ध्रियन्त। यदेनऽसमयच्छत् तत्समिधः समित्त्वम्। समिधमादधाति। समेवैनं यच्छति। आहुतीनां धृत्यै। अथो अग्निहोत्रमेवेध्मवत्करोति। आहुतीनां प्रतिष्ठित्यै। ब्रह्मवादिनो वदन्ति। यदेकाऽसमिधमाधाय द्वे आहुती जुहोति। अथ कस्याऽसमिधि द्वितीयामाहुतिं जुहोतीति। यद्वे समिधावादध्यात्। भ्रातृव्यमस्मै जनयेत्। एकाऽसमिधमाधाय। यजुषान्यामाहुतिं जुहोति। नास्मै भ्रातृव्यं जनयति। आदीप्तायां जुहोति। समिद्धमिव हि ब्रह्मवर्चसम्। अथो यथातिथिं ज्योतिष्कृत्वा परिवेवेष्टि। तादृगेव तत्' इति ॥ ॥ होमकाले उत्तराहवनप्रकारमाह सूत्रकारः—'उत्तरां तूष्णीं भूयसीमसंस्पृष्टां प्रागुत्तरतो वा प्रजापतिं मनसा ध्यायन्तूष्णीं होमेषु सर्वत्रे'ति। तथाच भगवान्—'प्रागुदगुत्तरतो वा प्राजापत्यां च भूयसीम्। ततः प्रजा-

पतिं ध्यायन्स्वाहेति जुहुयादथ' इति ॥ तत्र कारणं श्रूयते—'उत्तरावतीं वै देवा आहुतिमजुहवुः । अवाचीनमसुराः । ततो देवा अभवन्परासुराः । यं कामयेत वसीयान्स्यामिति । कानीयस्तस्य पूर्वंहुत्वा । उत्तरं भूयो जुहुयात् । एषा वा उत्तरावत्याहुतिः । तान् देवा अजुहवुः । ततस्ते भवन्ति' इति ॥ होमकाले हवनस्थानं विज्ञाय होतव्यम् । अविज्ञाय होमे दोषसरणात् । अत्र संग्रहकारः—'यत्र काष्ठं तत्र कर्णौ हुनेच्चेव्याधियुङ्नरः । धूमस्थानं शिरः प्रोक्तं मनोदुःखं भवेदिह ॥ यत्राल्पज्वलनं नेत्रं यजमानस्य नाशनम् । भस्मस्थाने तु केशः स्यात्स्थाननाशो धनक्षयः ॥ अङ्गारे नासिकां विन्द्यान्मनोदुःखं विदुर्बुधाः । यत्र प्रज्वलनं तत्र जिह्वा चैव प्रकीर्तिता ॥ गजवाजिस्वनादे तु वह्निः शुद्धफलप्रदः' इति । स्मृत्यर्थसारे—'बहुशुष्केन्धने चैव सुसमिद्धे हुताशने । साङ्गारे लेलिहाने च होतव्यं नान्यथा क्वचित् ॥ योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारे चैव मानवः । मन्दाग्निरामयावी च दरिद्रश्चोपजायते ॥ अग्निः प्रदक्षिणावर्तः कर्दमश्च शुभावहः' इति । अत्र खलु श्रूयते—'अङ्गारा भवन्ति । तेभ्योऽङ्गारेभ्योऽर्चिरुदेति । प्रजापतिस्तर्ह्यग्निः । तस्मिन्यस्य तथाविधे जुह्वति । प्रजापतावेवास्याग्निहोत्रंहुतं भवति । शरोऽङ्गारा अध्यूहन्ते । ब्रह्म तर्ह्यग्निः । तस्मिन्यस्य तथाविधे जुह्वति । ब्रह्मन्नेवास्याग्निहोत्रं हुतं भवती'ति ॥ ॥ अथ हवनप्रकारः संग्रहे—'द्रवं हविः स्रुवेणैव पाणिना कठिनं हविः । अङ्गुल्यग्रैर्न होतव्यं न कुर्यादङ्गुलिभेदनम् ॥ अङ्गुल्युत्तरपार्श्वेन होतव्यमिति च स्मृतिः' इति ॥ ॥ अथ होमकाले ध्यानविशेषमाहात्रिः—'हृदिस्थस्य वियत्स्थस्य ज्ञात्वैक्यं तेजसो द्विजः । स्मृत्वा हुत्वा च जप्त्वा च सपर्यां वैदिकीं चरेत् ॥ निष्कृत्यर्थं च काम्यार्थमनायासकरीं बुधः । सपर्यां वैदिकीं सम्यक्कुर्यात्प्रातर्गृहे वसन्' इति । अत्र प्रातरिति

अनुष्ठानकालोपलक्षणार्थम् ॥ ॥ उपस्थानमाह शौनकः—'परिसमुह्य च पर्युक्ष्याप्युपतिष्ठेद्विभुंजम् । अग्नेः सूक्तैश्च सौर्यैश्च प्राजापत्यैश्च नित्यशः ॥ अग्निं प्रजापतिं सायं प्रातः सूर्यं प्रजापतिम् । अग्नआयूंषिपवितृभिर्द्वाभ्यामग्ने त्वमित्यथ ॥ सूर्योन इति मन्त्रेण ह्युदुत्यं च द्वितीयया । तृतीयया चित्रमिति नमोमित्रस्य चान्यया ॥ प्रजापतेन त्वदचा तन्तुं तन्वन्द्वितीयया । हिरण्यगर्भः समिति ह्युपतिष्ठेद्धुताशनम् ॥ सौरैर्वैश्वानरीयैर्वा समस्ते सति पञ्चभिः । द्विदैवत्यं हविष्पान्तमिति मूर्धाग्निर्दैवतम् । यावज्जीवं परिचरेदेवमौपासनं गृही' ॥ अत्र काम्योपस्थानमृग्विधाने—'त्वमग्न इति सूक्तेन ह्युपतिष्ठेद्धुताशनम् । अग्नेर्भये तु संप्राप्ते रक्षस्वेव हुताशनः' इत्युपस्थानविधिः ॥ ॥ अथ स्थण्डिललक्षणम्—एतत्परिचरणमायतने स्थण्डिले वाग्निं प्रतिष्ठाप्य कर्तव्यम्। 'कुण्डे वा स्थण्डिले वापी'ति वचनात् । तत्रायतननिर्णयः संग्रहे—'अरत्निमात्रमग्न्यर्थं कार्यमायतनं बुधैः । वितस्ति(?)मात्रमित्येके तदप्यंसान्तरं(?) भवेत्' इति । स्थण्डिललक्षणमग्निमुखप्रकरणे द्रष्टव्यम्। अत्र विशेषश्छन्दोगपरिशिष्टे—'यद्यग्निरिध्माङ्गविधिं करिष्यन्नौपासनाग्निं निरपेक्षधिष्ण्याम् । अन्यत्र सर्वेषु स भाण्डवर्ती स्याल्लौकिकः स्थापित एव भूमौ' इति केश्चिदुक्तं तत्प्रवसथादिग्राक्षाहिताग्निविषयं वा ॥ ॥ अथाग्निसंरक्षणविधिः क्रियासारे—'बुसैश्च गोशकृत्पिण्डैरग्निसंरक्षणं स्मृतम् । तुषकेशास्थिभिः स्पृष्टो न योग्यो हवनेऽनलः ॥ निषिद्धकाष्ठैरपि वाऽदीपितज्वलितस्तथे'ति। अदीपितज्वलितः स्वयंज्वलित इत्यर्थः । बुसैः करीषैः । एतदुक्तविधिनाग्निपरिचरणं कर्तव्यम् । अविधिना कृते दोषस्मरणात् । तथाच संग्रहे—'स्वाभिप्रायकृतं कर्म यत्किंचिज्ज्ञानवर्जितम् । क्रीडाकर्म च बालानां तत्सर्वं निष्प्रयोजनम्' इति । चतुर्विंशतिमतेपि—'हतं ज्ञानं क्रियाहीनं हतास्त्वज्ञानिनः

क्रियाः । अपश्यन्नन्धको दग्धः पश्यन्नपि च पङ्गुकः' इति ॥ ॥ अथ होमप्रशंसा । तत्राङ्गिराः—'यद्दद्यात्काञ्चनं मेरुं पृथिवीं च ससागराम् । तत्सायंप्रातर्होमस्य तुल्यं भवति वा न वा' इति । स्मृतिभास्करे हारीतस्तु—'नाग्निहोत्रात्परो धर्मो नाग्निहोत्रात्परं पतः । नाग्निहोत्रात्परं श्रेयो नाग्निहोत्रात्परं यशः ॥ नाग्निहोत्रात्परा सिद्धिर्नाग्निहोत्रात्परा गतिः । नाग्निहोत्रात्परं स्नानं नाग्निहोत्रात्परं व्रतम् ॥ आद्या व्याहृतयस्तिस्रः स्वधा स्वाहा नमो वषट् । यस्यैते वेश्मनि सदा ब्रह्मलोकः स एव तु' इति । अथाकरणे दोषः । तत्राचार्यः—'दारसंग्रहणाच्छ्रौते स्मार्तेऽग्नौ वा द्विजातयः । तौ विना वर्तमानास्तु ब्राह्मणा नामधारकाः ॥ तेऽनर्हाः कर्मस्वग्राह्याः सदाराः पतितोपमाः । अनग्नयस्त्वनापन्ना विद्वांसोपि बहुश्रुताः' इति ॥ पाराशरे गर्गः—'कृतदारो नैव तिष्ठेत्क्षणमप्यग्निना विना । तिष्ठेत चेद्द्विजो व्रात्यस्तथा च पतितो भवेत् ॥ यथा स्नानं यथा भार्या वेदस्याध्ययनं यथा । तथैवौपासनं दृष्टं न स्थितिस्तद्वियोगतः' । शातातपः—'यो हित्वा हि विवाहाग्निं गृहस्थ इति मन्यते । अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥ वृथापाकस्य भुञ्जानः प्रायश्चित्तं समाचरेत् । प्राणायामशतं कृत्वा घृतं प्राश्य ततः शुचिः' । भरद्वाजोपि—'औपासनं विना भार्यां गच्छेद्यः काममोहितः । तन्मातृगमनं प्रोक्तमसकृद्ब्रह्महा भवेत्' इति । इति नित्यहोमविधिः ॥ ॥

अथ सूतकादौ प्राप्ते होमविधिः । तत्राचार्यः—'स्मार्ताग्निः सूतके शावे स्वयं न जुहुयाद्द्विजः । श्रौताग्निस्तु सकृज्जुह्वा समासेरा स्वयं हुनेत् ॥ स्मार्ताग्निरात्मनोन्येषामभावे सूतकादिषु । समारोप्य तदन्ते तु विहृत्य जुहुयात्स्वयम् ॥ अतीताहुतयः सर्वा हुनेन्निष्कृतिपूर्विकाः । घृतैश्चतुर्गृहीतैस्तु कार्या तन्निष्कृतिस्तदा ॥ अतीते द्वादशाहे तु पूर्णाहुत्यष्टकं हुनेत् । प्राश्नासाच ततो होमं

हुत्वाप्यग्निर्विनश्यति' इति ॥ ॥ अथातिपन्नहोमविधिः ॥ तत्र कारिका—'नित्यहोमे त्वतिक्रान्ते संस्कृत्याज्यं च पूर्ववत् । चतुः-कृत्वो गृहीत्वाज्यं मनस्वत्या जुहोत्यथ' । अस्यार्थः—जाग्रत्येवानले नित्यहोमातिक्रमणे कालान्तरे आज्यं संस्कृत्य मनोज्योति-रिति मन्त्रेण चतुर्गृहीतमाज्यं स्रुचैव हुत्वा अतीतहोमान्पृथक्पृथक् कृत्वा कालहोमं चरेदिति । तथाच भगवान्—'जाग्रत्येवा-नले होमानतिक्रान्तान्बहूनपि । तदा कृत्वाज्यसंस्कारं यथोक्तविधिना ततः ॥ आज्यं चतुर्गृहीत्वैतत्स्रुवेण प्रकृतं स्रुचि । उक्त्वा मन्त्रं मनोज्योतिर्जुषतामिति पूर्ववत् ॥ हुत्वा सकृदतीतांश्च होमान्कृत्वा यथाक्रमम् । पश्चात्स्वकालहोमं च विदधीत यथापुरा ॥ प्रायश्चित्तमिदं केचित्त्रितिहोमव्यतिक्रमे' इति । चन्द्रिकायामपि—'कालातीतेषु होमेषु उत्तरेष्वागतेषु च । कालातीतानि हुत्वैव उत्तराणि समापयेत् ॥ यस्त्वतीतान्यतिक्रम्य उत्तराणि समापयेत् । न देवाश्चापि च पितृंस्तद्धविस्तूपतिष्ठति' इति ॥ अत्रेति-कर्तव्यतामाहाचार्यः—'पृथक्पृथगतीतांस्तु हुनेदाहुतयोऽखिलाः । नित्याग्निहोत्रवद्भिः परिस्तीर्य प्रतिप्रति' इति । भगवा-नपि—'अतीतहोमान्कृत्वादौ कालहोमं ततश्चरेत् । प्रतिहोममविस्मृत्य कुर्यात्परिसमूहनम् ॥ पर्युक्षणं चेत्युक्तोऽयमौपासनविधि-क्रमः' इति । इत्यतिपन्नहोमविधिः ॥ ॥ अथ समस्तहोमविधिः । अथापन्नस्य कालद्वयहोमाशक्तौ दिनहोममनुजानाति प्रजापतिः—'सायंप्रातस्तनौ होमावुभौ सायं समस्य तु । आपन्नो जुहुयात्तत्र समिदेकाथवा द्वयम् ॥ सायंहोमस्य मुख्यत्वाचदीयं तत्रमिष्यते । चतस्र आहुतीः कुर्यात्तत्र द्वे सायमाहुती ॥ द्वे प्रातराहुती सायं होमे चैका समिद्यदि । समित्कृता द्वितीया चेत्सा भवेत्प्रातराहुतौ ॥ द्विः सायंहोमवन्मृज्याद्धिःप्रातर्होमवत्स्रुचम् । उपस्थानं सकृत्कार्यं शेषं प्रकृतिवद्भवेत् ॥ केचिद्द्वे आहुती

हुत्वा संमिश्र्यैव निमील्य वा । विच्छिद्यैवं तु तौ होमौ कुर्युर्द्वे आहुती ततः ॥ गुर्वापदि समस्यन्ते प्रातः सर्वे कदाचन । यावन्तोत्र समस्यन्ते सर्वैः सायमुपक्रमः ॥ प्रातःकालापवर्गश्च नतु प्रातरुपक्रमः' इति । गृह्यपरिशिष्टेपि—'सायंप्रातर्होमौ सायं वा समस्येन्न तु प्रातःसायं होमौ' इति । अत्र विशेष उक्तः स्मृतिभास्करे—'सर्वथौपवसथ्याहे सायंहोमः पृथग्भवेत् । तथैव प्राजनीयेह्नि प्रातर्होमः पृथग्भवेत्' इति । इति समस्तहोमविधिः ॥ ॥ अथ पक्षहोमविधिः । चन्द्रिकायां वैय्याघ्रपादः—'एकेऽभ्युदितहोमाः स्युरन्ये तु दिनहोमिनः । अन्येऽनुदितहोमाश्च पक्षहोमास्तथैव च' ॥ अनुपत्तिदिनं ज्ञात्वा होतव्यमित्युक्तं तत्रैव—'प्रवासी साग्निहोत्री यत्त्रिपञ्चाहांश्च सप्त वा । दातव्यो होम एकाह्ने सायंप्रातः पृथक्पृथक्' इति ॥ पक्षहोमे कारणमाह मरीचिः—'शरीरापद्भवेचत्र भयादार्तिः प्रजायते । तथान्यास्वपि चापत्सु पक्षहोमो विधीयते ॥ पक्षहोमानयो हुत्वा मध्ये तस्मान्निवर्ततः । होमं पुनः प्रकुर्यात्तु नचासौ दोषभाग्भवेत्' इति ॥ अत्र होमप्रकारमाहाचार्यः—'आपन्नः पक्षहोमी स्यात्सर्वहोमी च वा द्विजः । अनापन्नस्य तन्नैव ब्राह्मणस्य विधीयते ॥ हुत्वा सायं प्रतिपदि चतुर्दश चतुर्दश । पृथग्गृहीत्वा मन्त्राभ्यां द्विरावृत्त्या पृथग्घुनेत् ॥ द्वितीयायां तथा प्रातर्होमान्तेऽभ्यर्च्य पावकम् । पक्षहोमं चरेदेवमग्निमानपि चापदि' इति । अस्यार्थः—रोगाद्यापत्प्राप्तौ पक्षहोमं कुर्वन् शुक्लपक्षे कृष्णे वा प्रतिपदि इष्टिं कृत्वा सायंकाले पर्युक्षणादि समित्प्रक्षेपणान्तं सकृत्कृत्वा आहुतिप्रमाणेन होमद्रव्यं चतुर्दश चतुर्दश पृथक्पात्रयोर्गृहीत्वा अग्नयेस्वाहेति प्रथमगृहीतं सर्वं हुत्वा प्रजापतये स्वाहेति द्वितीयगृहीतं

---

पाठा०—१ प्रातराहुतिमारभ्य समाप्य प्रातरेवतु । श्व प्रातराहुतिं चैव पूर्वे सायं समस्यते । इति ।

सर्वं हुत्वा पर्युक्षणाद्युपस्थानान्तमङ्गजातं सकृत्कुर्यात् । एवं द्वितीयायां प्रातः । तथाचापस्तम्बः—'यायावरा ह वै नामऋषयः पुरा आसंस्तेऽध्वन्यश्राम्यंस्तेऽर्धमासायार्धमासायाग्निहोत्रमजुहवुस्तसाद्यायावरधर्मेणाभयाव्यार्तोऽध्वन्यापत्सु वार्धमासायार्धमासायाग्निहोत्रं जुहुयात् । प्रतिपदि सायं चतुर्दशगृहीतान्युभयत्येका समित्सकृद्धोमः सकृत्पाणिनिमार्जनꣳसकृदुपस्थानमेवं प्रातरेतावान्विकारः शेषः प्रकृति'रिति । एवं सततं पक्षत्रये कृते सति पुनराधानं कर्तव्यम् । तथाचापस्तम्बः—'पक्षत्रये पुनराधेयमि'ति । स्मृत्यर्थसारे तु—'एवमापद्गतः पक्षेपक्षे चैवं समाचरेत् । आपद्येदनुवर्तेत दीर्घकालं कथंचन ॥ यावज्जीवमविच्छिन्नं पक्षहोमं समाचरेत् । आपदेवावधिस्तत्र न पक्षगणनावधिः' इति । इति पक्षहोमविधिः ॥ ॥ अथ सीमोल्लङ्घने दोषः । तत्र कारिका—'उदयेऽस्तमये वापि दंपती चेद्बहिर्निर्गतौ । आरूढो वा धृतो वाग्निर्लौकिकः स्यात्तदैव हि' इति । अत्र भगवान्—'प्रोषिते तु पतौ पत्नी यदि ग्रामान्तरं व्रजेत् । होमकाले यदि प्राप्ता न सा दोषेण युज्यते' इति ॥ कात्यायनः—'विहायाग्नीन्सभार्यश्चेत्सीमामुल्लङ्घ्य गच्छति । होमकालात्यये तस्य पुनराधानमिष्यते' इति ॥ चन्द्रिकायां तु—'अग्नावनुगते यत्र होमकालद्वयं व्रजेत् । उभयोर्निप्रवासे वा लौकिकोऽग्निर्विधीयते' ॥ अत्र चिरकालप्रवासकारणमस्तिचेत्तत्र—सभार्यः सन्नात्मनि समिधि वाग्निं समारोप्य व्रजेत् । इति सीमोल्लङ्घने दोषः ॥ ॥ अथ समारोपणविधिमाह कारिकारः—'साग्निः प्रयाति चेत्पाणी प्रतपेद्यात इत्यपि । क्षिपेत्पाणी ततः काले चाहृत्याग्निं समुन्धसेत् ॥ कृते पाणिसमारोपे नियमानपि मे शृणु । जले निमज्य न स्नायान्नोपेयाच्च स्त्रियं तथा ॥ कृत्वा मूत्रपुरीषं च चिरं नासीत वाऽशुचिः । समिधं प्रतपेदग्निमयं ते योनिरित्यृचा ॥

अग्नौ प्रत्यवरोहेति मन्त्रेणानेन वाहुनेत् । अनेनैव च पूर्वस्मिन्पक्षे चाग्निं समुच्छ्रुसेत्' इति । भगवानपि—'अथ प्रयाणाद्यापरसु गमारोपणमुच्यते । अरण्यात्मसमित्स्वेव गृह्यस्याग्नेर्यथाविधि ॥ अग्नौ प्रज्वलिते गृह्ये प्रतपेदरणिद्वयम् । आश्वत्थीं समिधं वापि अयं ते योनिरित्यृचा ॥ याते अग्ने यज्ञियेति पाणी वा युगपत्तपेत् । आपद्येवं समारोप्य ततः प्रत्यवरोहयेत् ॥ अथारण्योः समारूढमरणीभ्यां मथेत्पुनः । प्रत्यवरोहेत्यनया वाऽस्मारूढं ततः श्वसन् ॥ आत्मारूढाग्निमादध्याल्लौकिकाग्नावृचानया । समिधं तां समाधाय काले होमं समाचरेत् ॥ अरण्यात्मसमित्स्वग्निरारूढः संप्रणश्यति । ऊर्ध्वं द्वादशरात्रात्स पुनराधानमर्हति ॥ अर्वाग्द्वादशरात्राच्च चण्डालपतितादिभिः । स्पृष्टो नष्टोऽग्निरारूढो ह्यरण्यात्मसमित्सु यः ॥ अरण्यात्मसमित्स्वग्निसमारोपविधिः क्रमात् । एषां त्रयाणां पक्षाणां पूर्वः पूर्वः प्रशस्यते' इति । अत्र विधिवदात्मारूढमग्निं पूर्वोक्तप्रादुष्करणकाले विधिवत्प्रतिष्ठाप्य प्रत्यवरोहेति मन्त्रेण प्रत्यवरुह्य होमकाले विधिवज्जुहुयात् । अकरणे विध्यतिक्रमप्रसङ्गात् ॥ ॥ अत्र होमविधिरुक्तः सायणीये—'उपावरोहणं कृत्वा प्राणायामाननन्तरम् । स्वगृह्योक्तप्रकारेण वह्नेरर्चनमाचरेत् ॥ पवित्रपाणिः पूतात्मा शुक्लाम्बरधरो नरः । अनन्यमानसो वह्निं जुहुयाद्वै जितेन्द्रियः ॥ हुताग्निं सूर्यदैवत्यान्जपेन्मन्त्रान्समाहितः' इति । शेषं पूर्ववत् ॥ ॥ अत्राग्निसहितगमनाशक्तौ गुरुपस्यैव कालनियमपूर्वकं प्रवासमनुजानाति चन्द्रिकायां पैठीनसिः—'प्रस्खलीकृतधर्मस्य पीड्यमानस्य शत्रुभिः । मासद्वयं प्रवासोऽस्ति परतोऽनाहिताग्निवत्' इति । मासद्वयस्योपरि अनाहिताग्नेराहिताग्निवत्प्रवासो नास्तीत्यर्थः ॥ ॥ अत्र होमार्थमृत्विजः परिकल्प्य प्रवसेदित्युक्तं कूर्मपुराणे—'निक्षिप्याग्निं स(स्व)दारेषु परिकल्प्यर्त्विजं तथा । प्रवसेत्कार्यवान्विप्रो वृथैव

न चिरं वसेत्' इति । अत्र कार्यवानिति धनार्थी नतु तीर्थाद्यर्थी । तथाच सत्यव्रतः—'धनान्यर्जयितुं युक्तः प्रवासो ह्यग्निहोत्रिणः । धनैर्यत्संभवेदिज्या तीर्थाद्यर्थं तु न व्रजेत्' इति ॥ ॥ अथ तीर्थयात्राद्यकरणे कारणमाह स एव—'ब्रह्मा विष्णुः शिवः सूर्यो गोविप्रपितृदेवताः । अग्निहोत्रगृहे सन्ति व्रततीर्थतपांसि च' इति ॥ ॥ अत्र प्रवासकाले गमनकाले च कार्यविशेष उच्यते । तत्र कारिका—'अभयं वोऽभयं मेस्तु मन्त्रेणौपासनं गृही । प्रवसन्नुपतिष्ठेत ततो ग्रामान्तरं व्रजेत् ॥' आगत्य ज्वलयेदग्निमनेनैवोपतिष्ठते । गृहा इत्यादिमन्त्रेण गृहानीक्षेत वै ततः ॥ गृहानहं सुमनस इत्यनेन प्रपद्यते । जपेच वीक्षमाणस्तु शिवंशग्ममिति त्रय' इति । इदमत्र सूत्रम्—'गृहानीक्षेताप्यनाहिताग्निर्गृहामाविभीतोपमत्तस्यैवासासु च प्रजायध्वं माच योपरीरिपदिति प्रपद्येत गृहानहं सुमनसः प्रपद्ये वीरघ्नो वीरवतः सुवीरान् । इरां वहन्तो घृतमुक्षमाणास्तेष्वहं सुमनसः संविशानीति शिवं शग्मं शंयोः शंयोरिति त्रिरनुवीक्षमाणो विदितमप्यलीकं न तदहर्प्रापयेयुर्विज्ञायतेऽभयंवोभयंमेस्त्वित्येवोपतिष्ठेत प्रवसन्प्रत्येत्याहरहर्वेती'ति । अस्यार्थः—वीक्षणं प्रपदनं चानाहिताग्निरपि कुर्यात् । गृहामाविभीतेतीक्षेत । गृहानहमिति प्रपद्येत । प्रपद्यमान एवं प्रपद्येत शिवं शग्मं शयोः शंयोरिति त्रिरनुवीक्षमाणः । अनुवीक्षमाणमनुमन्त्रणं मन्त्रेण प्रकाशनं तत्पुनर्मन्त्रेण विनिकर्तुं न शक्यत इति मन्त्रोपि त्रिरावर्तते । वदितमित्यादि । अलीकमप्रियं । अवगतमप्यप्रियं प्रवासादागतस्य तस्मिन्नहनि न निवेदयेयुः । विज्ञायत इत्यादि । वाशब्दश्चशब्दार्थे । अभयं च इत्यनेन मन्त्रेण प्रवत्स्यन् प्रवासादागतश्चाहरहरग्निहोत्रमेवोपतिष्ठेतेति श्रुतिरेवोपन्यस्ता विज्ञायत इति ॥ ॥ अथ प्रवासादागतस्य कृत्यान्तरमाह गृह्यकारः—'प्रवासादेत्य पुत्रस्य शिरः परिगृह्य

जपति अङ्गादङ्गात्संभवसि हृदयादधि जायसे। आत्मा वै पुत्रनामासि स जीव शरदः शतमिति मूर्धनि निरवघ्रायाचृतेव कुमार्यै' इति। अस्यार्थमाह हरदत्तः—'यदा पिता प्रोष्य प्रत्यागच्छति तदा पुत्रस्य शिर उभाभ्यां हस्ताभ्यां सर्वतो गृहीत्वा मूर्धनि त्रिरवघ्राणं कृत्वा अङ्गादङ्गात्संभवसीति ऋचं जपेत्। एतच्च पुत्रेऽपि प्रोष्यागते कर्तव्यं न्यायस्य तुल्यत्वात्। तथाच सत्यापाढगृह्यम्—'आगतं पुत्रम्' इति। कुमार्यौ इति षष्ठ्यर्थे चतुर्थी। कुमार्यास्त्वमन्त्रकं करोति। यदनन्तरमुक्तं प्रवासादेत्येति तस्यायं शेष इत्येके। अनन्तरस्य जातकर्मणोऽपीत्यपर इति। अत्र भगवान्शौनकः—'दीक्षितान्तर्गतस्तत्र प्रपद्यासनमात्मनः। प्रोष्य कामेनशादेशम् पुनः प्रत्यागतो गृही॥ मन्त्रं गृहामानिर्मीत इत्याद्यं रिपदन्तकम्। जपित्वाथ समीक्षेत बहिर्द्वारस्थितो गृहम्॥ तद्गृहानहमित्यादिमन्त्रेण प्रविशेद्गृहम्। प्रविश्य तु शिवं शग्मं शंयोः शंयोरितीरयन्॥ ईक्षितान्तर्गतस्तत्र प्रपद्यासनमात्मनः। ज्येष्ठानुपूर्वं पुत्राणां प्रत्येकं सर्वतः शिरः। पाणिभ्यां परिगृह्याथ त्रिराजिघ्रञ्जपेत्तदा॥ अङ्गादङ्गात्संभवसि एवमाद्यामृचं ततः। कुमारीणां च कर्मेदं विदध्यान्मन्त्रवर्जितम्' इति। इति प्रवासविधिः॥

॥ अथौपासनाग्नेः संसर्गादिप्रायश्चित्तम्। एवमनुष्ठितस्याग्ने संसर्गादिदोषश्चेत्तत्प्रतिपदोक्तप्रायश्चित्तेष्टिरुच्यते। तत्र कारिका—'संसृष्टो यस्य गृह्याग्निरन्यगृह्याग्निना यदि। चरुर्निर्वपे कार्यो यद्वा पूर्णाहुतिर्भवेत्॥ अग्निर्गुणी भवेदेष विविच्चित्वादिको गुणः। शवाग्निना तु संसर्गे कुर्वीत शुचये चरुम्॥ प्रायश्चित्तचरुस्थाने पूर्णाहुतिरिहेष्यते। निमित्तानन्तरं सर्वं प्रायश्चित्तं भवेदिह' इति। इदमत्र गृह्यम्—'अथाप्येष्य इष्टयो व्रतातिपत्तौ व्रतपतये साधानग्निमणयनेऽग्निने क्षामायागारदाहे दावानलेन च संसृष्टेऽग्नये शुचये संसजनेऽग्निनान्येन

मिथश्चेद्विविचये गार्हपत्याहवनीययोर्वीतये ग्राम्येण संसर्गाय वैद्युतेनाप्सुमते' इति ॥ अस्यार्थः—'अथोत्तरत्र या वक्ष्यन्ते ता अग्निदेवत्या इष्टय इति वेदितव्यम्। यान्यत्र चतुर्थ्यन्तानि तान्यग्नेर्गुणवाचकानि। व्रतातिपत्तौ व्रतपतये। यस्मिन्कर्मणि यानि चोद्यन्ते व्रतशब्देन धर्मशब्देन वा तत्र तेषामतिपत्तावेवेष्टिः कार्या। साग्नावग्निप्रणयनेऽभिव्रत इति। क्षामायागारदाहे। अन्य इति शवाग्निरुच्यते। तेन संसर्जने शुचये। मिथश्चेदिति गार्हपत्यादयः सर्वे।द्वौ परस्परमन्येन वा संसृज्येतां तदा विविचय इष्टिः कार्या। गार्हपत्याहवनीययोर्वीतये। ग्राम्येण संसर्गाय ग्राम्यः पचनाग्निः। वैद्युतेनाप्सुमत इत्यादीष्टिः। एतत्प्रायश्चित्तं तत्तदपराधे तत्तत्प्रतिपदोक्तं कुर्यात्। तथाच सूत्रम्—'विध्यपराधे प्रायश्चित्ति'रिति। अपिवा प्रायश्चित्तेष्टीनां स्थाने तस्यैतस्यै देवतायै पूर्णाहुतिं जुहुयादिति विज्ञायते' इति। अस्यार्थः—प्रायश्चित्तकरणे या इष्टयः इष्टिशब्देनोच्यन्ते याश्च ब्राह्मणोक्तास्तासामयं वैकल्पिको विधिरुच्यते। यास्तासामिष्टीनां देवतास्तासामेकैकस्यै देवतायै एकैकां पूर्णाहुतिं जुहुयात्। तत्र पूर्णाहुतिर्नाम द्वादशगृहीतेनाज्येन स्रुचं पूरयित्वा यद्धूयते सा पूर्णाहुतिरुच्यते। तत्स्रुवेण साध्यत्वात्तदेव स्रुवपूर्णाहुतिरित्युच्यते। इयं पुनरनुपक्रान्तदर्शपूर्णमासस्य भवति। दर्वीहोममध्येपि भवतीत्यन्यत्रेति॥ इति संसर्गादिदोषप्रायश्चित्तम्॥ ॥ अथाग्निद्वयसंसर्गादिविषयः। अथाग्निद्वयसंसर्गविषये विशेषविधिरुच्यते कारिकान्तरे—'औपासनाग्निद्वयसंगतिश्चेदग्निं समारोपणतो विभज्य। पुरा च होतुर्विविचेश्चरुः स्यात्पश्चाच्च होतुः पथिकृच्चरुः स्यात्' इति। अन्यच्च—'औपासनाग्नियुगलं यदि संगतं स्यादग्निं विभज्य पुरुषोऽथ समारोप्य' इति। एतत्प्रायश्चित्तं कुर्यादिति शेषः। एतत्प्रायश्चित्तं प्रथमतः कृत्वा अनन्तरं प्राप्तं कृत्स्नं कर्म कुर्यात्।

तथाचापस्तम्बः—'विभ्यपराधे विधीयत एकस्मिन्दोषे श्रूयमाणानि प्रायश्चित्तानि समभ्युच्चीयेरन् अर्थान्तरत्वाज्जपहोमाविज्या च दोषनिर्घातार्थानि भवन्त्यनन्तरं दोषात्कर्तव्यानि हृतदोषे पुनः कृत्स्नं कर्मे'ति । कुर्यादिति शेषः । एतत्प्रायश्चित्तमग्निसद्भावे द्रष्टव्यम् ॥ इत्यग्निद्वयसंसर्गादिविषयः ॥

अथ पुनःसंधानम् । नष्टेऽग्नौ तु पुनःसंधानं कर्तव्यम् । तत्र कारिका—'औपासनोऽनुगच्छेच्चेदुपलेपादि पूर्ववत् । आहृत्य श्रोत्रियागारात्प्रतिष्ठाप्य हविर्भुजम् ॥ अन्यस्माद्धोमकालात्स्त्री नाश्नीयाद्यदि वा गृही । पर्युक्षणादिकं कृत्वा संस्कृत्याज्यं च पूर्ववत् ॥ अयाश्चेत्यनया हुत्वा यथापूर्वं जुहोत्यथ' इति । इदमत्र गृह्यम्—'यदि तूपशाम्येत्पत्न्युपवसेदित्येके' इति । अस्यार्थमाह नारायणः—यदि प्रादुष्करणकाल उद्वहेत् अन्यस्माद्धोमकालात्पत्न्युपवसेदित्येके । एकेग्रहणाद्यजमान उपवसेदित्येके । ध्रुवः । शाखान्तरदर्शनादिति । हरदत्तस्त्वेवं व्याचकार—'यदि खल्वग्निरयमुपशाम्येत्पत्न्या उपवासो भवतीत्येके मन्यन्ते, अन्ये यजमानस्य, उभयोरपरे' इति । अत्राग्न्युत्पत्तिप्रकारस्यानुपदेशात्कल्पान्तरमपेक्ष्यम् । अत्रापस्तम्बः—'नित्यो धार्योऽनुगतो मन्थ्यः श्रोत्रियागाराद्वाहार्यः । उपवासश्चान्यतरस्य भार्यायाः पत्युर्वानुगतेऽपि चोत्तरया नोपवसेत्'इति । उत्तरया अयाश्चेत्येतया । सर्वत्राग्न्युत्पत्तिरप्येवेति । अत्र दंपत्युपवासस्तु होमकालव्यतिरिक्तकालेऽग्निनाशविषयः। होमकाले त्वग्निनाशश्चेदयाश्चेति मन्त्रेण पुनःसंधानं कृत्वा तत्कालहोमं कुर्यादव्यवहितत्वात् ॥ अयाश्चेति पुनःसंधानं द्वादशरात्रमेव भवति । तदुक्तं गृह्यपरिशिष्टे—'अथ पुनराधानमनुगतेऽग्नौ विशिष्टागारादानीयोक्तवदुपसमाधाय परिसमुह्य परिस्तीर्य पर्युक्ष्याज्यमुत्पूयाज्यमादायाया-

अग्ने इत्येकामाहुतिं हुत्वा यथापूर्वं परिचरेदेवमाद्वादशरात्रात्'इति । भगवांस्तु—'यदि काष्ठाद्यभावेन नष्टो वाग्निर्भवेत्तदा । भस्मापनीयायतनं गोमयेनोपलिप्य तत् ॥ उल्लिख्य चाग्निमादध्यादानीय श्रोत्रियालयात् । विनाशकालादारभ्य परस्माद्धोमका-लतः ॥ पूर्णं गृहिण्युपवसेत्तत्र संकल्पपूर्वकम् । होमकाले तु जुहुयाद्यथाकालमिति स्थितिः ॥ गृहिणी यदि रोगाद्यैरुपवस्तुं न शक्नु-यात् । तदा प्रयोगमाश्रित्य तैत्तिरीयप्रकल्पितम् ॥ अग्निं विहृत्य काष्ठाद्यैरद्भिः परिसमुह्य च । परिस्तीर्य च पर्युक्ष्य ततोऽग्नेरुत्तरे कुशान् ॥ आस्तीर्य तेषु प्रोक्षिण्या सममामादयेत्स्रुवम् । आज्यपात्रेण संमार्गतृणानि सह सादयेत् ॥ कृत्वा पवित्रमुभयोर्मध्ये ग्रन्थिं प्रकल्प्य च । ततः प्रोक्षणपात्रे तन्निषिच्य सलिलं शुचि ॥ ताभ्यां तूष्णीं त्रिरुत्पूय पवित्राभ्यां यथापुरम् । स्रुवाज्यपात्रे उत्ताने कृत्वा प्रोक्ष्य त्रिरम्भसा ॥ आज्यस्थाल्यां निषिच्याज्यं तस्याधिश्रयणादिकम् । कृत्वोद्वास्योत्तरे वह्नेस्त्रिस्तूष्णीमेव तत्पुनः ॥ पुन-राहारमुत्पूय पवित्राभ्यां ततस्तु ते । पवित्रग्रन्थिमुन्मुच्य प्रोक्ष्याग्नौ संप्रहृत्य च ॥ परिषिच्य ततो वह्निं सकृदेव समंततः । अलं-कृत्य च पुष्पाद्यैः संमृष्टेन स्रुवेण तु ॥ आज्यं गृहीत्वाऽयाश्चाग्नेऽस्यनभीत्येनमादिकम् । मन्त्रमुक्त्वा विधायैकामाहुतिं तदनन्तरम् । कुर्यादौपासनं होमं यथापूर्वमतन्द्रितः ॥ यद्वासच्छास्त्रविहितप्रयोगेणाज्यसंस्कृतिम् । कृत्वा मन्त्रमयाश्चाग्नेऽस्यनभीत्येवमादिकम् ॥ उक्त्वा हुत्वा सकृत्पश्चाज्जुहुयाच्च यथापुरा' इति । यदेतद्वादशरात्रादर्वागयाश्चेतिमन्त्रेण पुनःसंधानमुक्तं तदापदि त्यक्ताग्निविषयम् । अनापदि तु यथाशक्तिसुवर्णं दत्त्वा विवाहगृहप्रवेशहोमपूर्वकं पुनःसंधानं कर्तव्यम् ॥

पुनःसंधानप्रकारः । तत्रापन्नस्यानापन्नस्य च द्वादशरात्रादूर्ध्वं पुनःसंधानमाह कारिकाकारः—'आद्वादशदिनादेव-

मूर्ध्नि विच्छिद्यतेऽनलः । प्रायश्चित्तं तु यत्प्रोक्तमग्नित्यागोपपातके ॥ मनुना तत्प्रकुर्वीत तत्तत्कालानुसारतः ॥ उपलेपादिकं कुर्यादाधारान्तं विवाहवत् । विवाहाज्याहुतीर्हुत्वा लाजहोमो भवेदिह ॥ गृहप्रवेशनीयाश्च हुत्वा स्याद्धृदयाञ्जनम् । परिणीत्यादि नास्त्यत्र लाजानावपति स्वयम् ॥ समानतन्त्रकं चेह होमद्वयमिदं भवेत्' इति । इदमत्र गृह्यपरिशिष्टम्—'अतऊर्ध्वं विवाहगृहप्रवेशहोमाभ्यामेकतन्त्राभ्यामादध्यात्तत्र विवाहाज्याहुतयो लाजाहुतयो गृहप्रवेशाहुतयो हृदयाञ्जनं च भवति कर्तैव लाजानावपत्येतत्पुनराधानम्' इति । अतऊर्ध्वं एवमाद्वादशरात्रादिति पूर्वत्र विहितत्वात्' । तदाहाचार्यः स्मृतिरूपेण—'प्रायश्चित्तविधानं च कालश्च तदतिक्रमे । श्रौते श्रौतस्य गृह्ये च स्मार्तस्योक्तः पुरा मया ॥ तत्रानुक्तो विशेषश्च विकल्पश्च समासतः । वक्ष्यन्ते होमयोः सम्यक्तन्त्रतन्त्राधिकारिणः ॥ त्यक्त्वापन्निरनापन्नो यावत्तावत्प्रभृत्यथ । आहरेद्विधिनैवाग्निं द्रव्यैश्चापि तदीरितैः ॥ त्यक्त्वाग्निमापदि स्वस्थो हुत्वाज्येनाहुतिं च ताम् । भूराद्यैर्वह्निमाहृत्य पालयेत्पुत्रवत्तदा ॥ यदि त्यक्त्वा त्वनापन्नो दत्त्वा शक्त्या द्विजे वसु । विवाहविधिनैवाग्निमाहरेच्च यथा पुरा ॥ पाणिग्रहः परिणयश्चात्र वर्ज्यस्तदुद्भवः । गृहवेशोपलारोहौ वर्ज्यौ सप्तपदी तथा ॥ स्वयं च जुहुयाल्लाजानव्यारब्धस्तदीरितैः । मन्त्रैः सा यदि वा वाचा हुनेदग्निं विवाहवत् ॥ अनश्नन्नग्निमाहृत्य सायं हुत्वा ततश्चरेत्' इति । तत्र भगवान्—'ऊर्ध्वं चाथ विनष्टाग्निर्द्वादशाहाद्यदि स्थ । अहोरात्रानतिक्रामेत्तदा स्मृतिषु चोदितम् ॥ उपपातकिनो यत्तु प्रायश्चित्तं विधाय तत् । पूर्वोक्तेन प्रकारेण विधायाग्निपरिग्रहम्' इति ॥ ॥ अथ नष्टस्य गृह्याग्नेः प्रायश्चित्तम् । 'अथ गृह्यस

पाठा०—१ नास्तिकत्वादिदोषैर्विधानान्तरमाह स एव ।

नष्टस्य शमेराधानमुच्यते । उपोष्य दंपती दत्त्वा होमद्रव्यं द्विजोत्तमे ॥ द्रव्यं किंचिद्यथाशक्ति ब्राह्मणायाहिताग्नये । आदध्यादपराह्णेऽग्निमाधानद्रव्यसंश्रितैः ॥ सिकताः पद्मपत्रं च वराहविहता च मृत् ॥ मृगमाखूत्करं चोपवाल्मीकावपशर्कराः । उदुम्बराश्मनिहतं पर्णाश्वत्थविकंकताः । शम्यङ्कुरास्तु विज्ञेया आधानद्रव्यसंश्रिताः ॥ अग्न्यायतन एतानि पुनराधानकर्मणि । निधायैषामलाभे तु यथालाभं निधापयेत् ॥ उपलिप्योल्लिखेद्देवान्सिकतादीन्निधाय च । इदंत एकमित्यग्नौ सव्याहृतिकमाहिते ॥ तत्रं कृताज्यभागान्तमन्वाधानादिकं ततः । चतुर्गृहीतमाज्यं च जुहुयाद्धि यथाक्रमम् ॥ जुह्वामेव स्रुवेणैव स्थाल्यामादाय गृह्यते । चतुर्गृहीतमाज्यं च चतुष्कृत उदाहृतम् ॥ समग्ने सग्नथा असि यो अग्निं देववीतये । तन्तुं तन्वन् त्वं नो अग्ने सत्वं नो अग्ने सप्त ते ॥ मनोज्योतिः पुनस्त्वेति जुह्वामष्टाभिरेव च । स्रुवेण जुहुयादाज्यं मन्त्रैश्चापि यथाक्रमम् । अग्नये पवमानाय अग्नये पावकाय च ॥ अग्नये शुचये चाथाग्नये पथिकृते ततः । अग्नये तन्तुमत इत्येतेभ्यः पञ्चमाहुतिः ॥ सौविष्टकृतमारभ्य होमशेषं समापयेत् । अन्वाहार्यदक्षिणा देया ब्राह्मणायाहिताग्नये ॥ नास्तिक्येन विसृष्टाग्निश्चीर्णचान्द्रायणव्रतः । अनेनैवाग्निमादध्याच्चिरोत्सृष्टस्तथैव च' इति ॥

अथ विसृष्टोत्सृष्टाग्नेः प्रायश्चित्तम् । अथ नास्तिक्याद्विसृष्टाग्नेः प्रमादाद्विसृष्टाग्नेरालस्याद्विसृष्टाग्नेश्च कालविशेषेण प्रायश्चित्तमाह निर्णयादर्शकारः—'कृच्छ्रो मासद्वयं चेत्त्यजति हुतवहं तच्चतुष्केऽतिकृच्छ्रस्तत्षट्के स्यात्पराकस्तदुपरि च पयो मासमब्दादिमासम् । नास्तिक्याच्चप्रमादे लसुनियमशतं प्राक्त्रिरात्रात्परं चेत्कुर्यादेकोपवासं त्रिदिनमुपवसेद्विंशतेरूर्ध्वमब्दात् ॥ षष्ठे-

पाठा०—१ गृह्यताम् । २ रूर्ध्वमृक्षम् ।

र्ध्वं तु कृच्छ्रः शरद उपरि चेद्वत्समालस्यतोऽग्निस्त्यक्तश्चेद्द्वादशाहे त्रिदिनमुपवसेद्द्वादशाहं तु मासे। मासं चाब्देथ चान्द्रं तदपि भवति सोमायनं चाब्दयुग्मं सार्ध्वं तप्तकृच्छ्रः खलु भवति धनी गां च दद्याद्द्विजाय' इति ॥ अस्य श्लोकद्वयस्यार्थः—नास्तिक्या-द्विहिताग्नित्यागे मासद्वयपर्यन्तं कृच्छ्रः। मासद्वये पूर्णे मासचतुष्टयपर्यन्तमतिकृच्छ्रः। मासचतुष्टये पूर्णे षण्मासपर्यन्तं पराकः। अत ऊर्ध्वमब्दपर्यन्तं मासं पयोव्रतम्। अब्दे पूर्णे त्रैमासिकं व्रतं कार्यमिति॥ नास्तिक्ये प्रमादादग्नित्यागे त्रिरात्रात्प्राक् प्राणायामशतम्। तदूर्ध्वं चेद्विंशतिदिनपर्यन्तमेकमुपवासं कुर्यात्। तदूर्ध्वं मासद्वयपर्यन्तं त्रिरात्रमुपवसेत्। तदूर्ध्वमब्दपर्यन्तं प्राजापत्यम्। तदूर्ध्वं यथान्यायमित्येतत्प्रमादे॥ आलस्येनाग्नित्यागे द्वादशाहपर्यन्तं त्रिदिनमुपवसेत्। द्वादशाहे पूर्णे मासपर्यन्तं द्वादशाहम्। मासे पूर्णेऽब्दपर्यन्तं मासमुपवासः पयोभक्षणं वा। अब्दादूर्ध्वं द्विवर्षपर्यन्तं चान्द्रम्। तदूर्ध्वं त्र्यब्दपर्यन्तं चान्द्रायणं सोमायनं च। तदूर्ध्वं तप्तकृच्छ्रः। धनिनो गोदानं चेति॥ पराशरप्रायश्चित्तकाण्डे वसिष्ठः—'योऽग्नीनपविध्येत्स कृच्छ्रं द्वादशरात्रं चरित्वा पुनराधानं कारयेत्' इति। मनुरपि—'अग्निहोत्र्यपविद्धाग्निर्ब्राह्मणः कामकारतः। चान्द्रायणं चरेन्मासं वीरहत्यासमं हि तत्॥ अग्निहोत्र्यपविद्धाग्निर्मासादूर्ध्वं तु कामतः। कृच्छ्रं चान्द्रायणं चैव कुर्यादेवाविचारयन्' इति। हारीतः—'संवत्सरोऽच्छिन्नेऽग्निहोत्रे चान्द्रायणं कृत्वा पुनरादध्यात्। द्विवर्षोच्छिन्ने चान्द्रायणं सोमायनं च कुर्यात्। त्रिवर्षोच्छिन्नेऽप्यस्य पुनरादध्यात्' इति। शङ्खोपि—'अभ्युत्सादात्संवत्सरं प्राजापत्यं चरेद्गां च दद्या'दिति। भारद्वाजः—'द्वादशाहातिक्रमे त्र्यहमुपवासः मासातिक्रमे द्वादशाहं पयोभक्षणं च। संवत्सरातिक्रमे मासोपवास इति। एतत्सर्वमालस्यादग्नित्यागविषयतया

यथायोगमूहनीयम् ॥ यत्तु भारद्वाजगृह्येऽभिहितम्—'प्राणायामशतमादशरात्रं कुर्यादुपवासः स्यादाविंशतिरात्रम् । अतऊर्ध्वमापष्टिरात्रात्तिस्रो रात्रीरुपवसेदतऊर्ध्वमासंवत्सरात्प्राजापत्यव्रतं चरेत् । अतऊर्ध्वं कालगुरुत्वे दोषगुरुत्व'मिति तत्प्रमादाद्गित्यागविषयम् ॥

अथ नास्तिक्यात्त्यागे प्रायश्चित्तम् । नास्तिक्यात्त्यागे तु व्याघ्रपादः—'योऽग्निं त्यजति नास्तिक्यात्प्राजापत्यं चरेद्द्विजः । अन्यत्र पुनराधानं दानमन्यत्तथैवच' इति । प्राजापत्यस्योपलक्षणतात्त्यागकालस्य गौरवलाघवानुसारेण व्रतान्तराण्यूहनीयानि ॥ ततः किं कर्तव्यमित्यत आह चिन्तादर्शकारः—'तन्नायाश्चेति वह्निर्भवति पुनरिति द्वादशाहं तथाग्नौ होमश्चेन्नास्ति तस्मिन्नाति भवति मनोज्योतिर्पं द्वादशाहे । अत्रैवेष्टित्रयं वै स्मृतमथ पुनराधानमुद्वाहनीयाद्यद्वायाश्चेति तत्स्याच्छ्रुतसमभिहिताधानसंभारलाभे' । अस्यार्थः—तत्राग्निनाशे द्वादशाहपर्यन्तमयाश्चेतिमन्त्रेण पुनराधानम् । सतिहृयावहोमे तु द्वादशाहपर्यन्तं मनोज्योतिरिति मन्त्रेण चतुर्गृहीतमाज्यं जुहुयात् । स्थालीपाके तथैवातिक्रान्ते यदाग्निनाशस्तदा स्वगृह्यविधिवदग्न्याधानम् । यद्वेति पक्षान्तरम् ॥ तत्र संभाराहरणे श्लोकद्वयम्—'पलाशोदुम्बराश्वत्थशमीवैकङ्कताम्बुजम् । वल्मीकोपरवाराहमूपकोत्खातमृत्तिकाः ॥ शर्कराः सिकतोद्भूताशनिध्वस्ततरुत्वचः । यथालाभं समाकीर्यायाश्चेत्यग्निं समुद्धरेत्' इति । तत्र तावत्कालहोमद्रव्यं दद्यात् ॥ तथापस्तम्बः—'तत्र यावत्कालहोमस्तावद्द्रव्यं दत्त्वा पुनराधान'मिति । एतदग्निप्रतिष्ठापनकाले पूर्वं संभारनिक्षेपणे कारणं श्रूयते । 'यदेनास्या अमेध्यं तदपहन्ति । अपोवोक्षति शान्त्यै । सिकता निवपति । एतद्वा अग्नेर्वैश्वानरस्य रूपं । रूपेणैव वैश्वानरमवरुन्धे । ऊषां

निवपति । पुष्टिर्वा एषा प्रजननं यदूषाः । पुष्ट्यामेव प्रजननेऽग्निमाधत्ते । अथो संज्ञान एव । संज्ञानꣳह्येतत्पशूनां यदूषाः । द्यावा-
पृथिवी सहास्ताम् । ते वियती अब्रूताम् अस्त्वेव नौ सह यज्ञियमिति । यदमुष्या यज्ञियमासीत् । तदस्यामदधात् । त ऊषा अ-
भवन् । यदस्या यज्ञियमासीत् । तदमुष्यामदधात् । तददश्चन्द्रमसि कृष्णमूषां निवपन्नदो ध्यायेत् । द्यावापृथिव्योरेव यज्ञियेऽग्नि-
माधत्ते । अग्निर्देवेभ्यो निलायत । आखुरूपं कृत्वा स पृथिवीं प्राविशत् । स ऊती कुर्वाणः पृथिवीमनुसमचरत् । तदाखुकरीषम-
भवत् । यदाखुकरीषꣳ संभारो भवति । यदेवास्य तत्र न्यक्तम् । तदेवावरुन्धे । ऊर्जं वा एतꣳरसं पृथिव्या उपदीका उद्दिहन्ति ।
यद्वल्मीकम् । यद्वल्मीकवपा संभारो भवति । ऊर्जमेव रसं पृथिव्या अवरुन्धे । अथो श्रोत्रमेव । श्रोत्रꣳह्येतत्पृथिव्या यद्वल्मीकः ।
अबधिरो भवति य एवं वेद । प्रजापतिः प्रजा असृजत । तासामन्नमपाक्रामत् । ताभ्यः सूदमुपप्राभिनत् । ततो वै तासामन्नं नाक्षीयत ।
यस्य सूदः संभारो भवति । नास्य गृहेऽन्नं क्षीयते । आपो वा इदमग्रे सलिलमासीत् । तेन प्रजापतिरश्राम्यत् कथमिदꣳ स्यादिति ।
सोऽपश्यत्पुष्करपर्णं तिष्ठत् । सोऽमन्यत । अस्ति वै तत् यस्मिन्निदमधितिष्ठतीति । स वराहरूपं कृत्वोपन्यमज्जत् । स पृथिवीमध
आर्च्छत् । तस्या उपहत्योदमज्जत् । तत्पुष्करपर्णेऽप्रथयत् । यदप्रथयत्तत्पृथिव्याः पृथिवीत्वम् । अभूद्वा इदमिति तद्भूम्यै भूमित्वम् । तां
दिशोऽनु वातः समवहत् । ताꣳशर्कराभिरदृꣳहत् । शं वै नोऽभूदिति । तच्छर्कराणां शर्करत्वम् । यद्वराहविहतꣳसंभारो भवति । अ-
स्यामेवाच्छम्बट्कारमग्निमाधत्ते । शर्करा भवन्ति धृत्यै । अथो शंत्वाय सरेता अग्निराधेय इत्याहुः । आपो वरुणस्य पत्नय आसन् ।
ता अग्निरभ्यध्यायत् । ताः समभवत् । तस्य रेतः परापतत् । तद्धिरण्यमभवत् । यद्धिरण्यमुपास्यति । स रेतसमेवाग्निमाधत्ते । पुरुष

अग्निनाग्निः समिध्यते संस्रष्टे अग्निना पाहिनो अग्न एकया इति तिसृभिरस्तीदमधिमन्थनमिति तिसृभिरथैनं परिचरेन्मृतामनेन संस्कुर्यादन्यया पुनराद्ध्याद्यथायोगं वाग्निं विभज्य तद्भागेन संस्कुर्यादेतद्बह्वीनामप्येवमग्नियोजनं कुर्याद्गोमिथुनं दक्षिणा' इति । भगवानपि—'अथाग्न्योर्गृह्ययोर्योगं सपत्नीभेदजातयोः । सहाधिकारसिद्ध्यर्थमहं वक्ष्यामि शौनकः ॥ अरोगामुद्वहेत्कन्यां धर्मलोपभयात्स्वयम् । कृते तत्र विवाहे च व्रतान्ते तु परेऽहनि ॥ पृथक्स्थण्डिलयोरग्नी समाधाय यथाविधि । तन्त्रं कृताज्यभागान्तमन्वाधानादिकं ततः ॥ जुहुयात्पूर्वपत्न्यग्नौ तयान्वारब्ध आहुतीः । अग्निमीळेति सूक्तेन नवर्चेन यथोदितम् ॥ समिध्येनं समारोप्य अयं ते योनिरित्यृचा । प्रत्यवरोहेत्यनया कनिष्ठाग्नौ निधाय ताम् । आज्यभागान्तं तन्त्रं च कृत्वारभ्य तदादितः । समन्वारब्ध एताभ्यां पत्नीभ्यां जुहुयाद्धृतम् ॥ चतुर्गृहीतमेताभिर्ऋग्भिः षड्भिर्यथाक्रमम् । अग्नावग्निश्चरतीत्यग्निनाग्निः समिध्यते ॥ अस्तीदमिति तिसृभिः पाहिनोअग्न एकया । ततः स्विष्टकृदारभ्य होमशेषं समापयेत् ॥ गोयुग्मं दक्षिणां दद्याच्छ्रोत्रियायाहिताग्नये । पत्न्योरेका यदि मृता दग्ध्वा तेनैव तां पुनः । आदधीतान्यया सार्धमाधानविधिना गृही' ॥ भर्तुः समीपे जायाया असांनिध्ये तु शङ्कया । तत्काले विहितं कर्म संसृज्य तु यथाविधि ॥ आरोपितसमिद्धोमं कृत्वा सांसर्गिकं ततः' इति । इति द्विभार्याग्निसंसर्गविधिः ॥

अथौपासनकर्मणि विनियुक्तमन्त्राणामर्थः कथ्यते । प्रत्यवरोहेति—हे जातवेदः अग्ने, त्वं अस्मिन्नग्नौ प्रत्यवरोह पुनरवतर । अवरुह्य च नोऽस्मदीयं हव्यं देवेभ्यः पुनर्वह । प्रजानन् नः भक्ततां वा हव्यवहनप्रकारं वा विद्वान् स हव्यं वह । प्रजा

संततिं पुष्टिं तत्पुष्टिं रयिं धनमस्मासु धेहि धत्स्व । अथ यजमानाय यजनप्रवृत्ताय शंयोश्च भव । शं च युश्च शंयुः समाहारद्वन्द्वः छान्दसं पुंलिङ्गत्वम् । शं विद्यमानानां रोगादीनां शमनं आगामिनां तेषां यवनं पृथक्करणम् ॥ ॥ ध्यानार्चनमन्त्रा अग्निमुखप्रकरणे व्याख्याताः ॥ अग्न आयूंषि पवस इति तिस्रश्च चौलप्रकरणे व्याख्याताः ॥ अग्ने त्वं नो अन्तम इति सूक्तमग्निमुखप्रकरणे व्याख्यातम् ॥ ॥ सूर्यो नो दिवस्पात्विति—सूर्यः सर्वप्रेरकः शोभनवीर्यो वा देवः दिवो द्युलोकात् द्युलोकवर्तिनो नोऽस्मान् पातु रक्षतु । वातो वायुश्चान्तरिक्षात् मध्यस्थानगतात् बाधकादस्मान् रक्षतु । तथा पृथिवीस्थानमग्निश्च पार्थिवेभ्यः पृथिव्यां वर्तमानेभ्यः शत्रुभ्यो नोऽस्मान् रक्षतु ॥ ॥ उदुत्यमिति—केतवः प्रेरकाः सूर्याश्वाः यद्वा सूर्यरश्मयः सूर्यं सर्वस्य प्रेरकं आदित्यं उद्वहन्ति ऊर्ध्वं वहन्ति । उद्विति पादपूरणे । उक्तंच 'मिताक्षरेष्वनर्थकाः कमीमिद्वु'मिति । किमर्थं । विश्वाय विश्वस्मै भुवनाय दृशे द्रष्टुम् । यथा सर्वे जनाः सूर्यं पश्यन्ति तथोर्ध्वं वहन्तीत्यर्थः । कीदृशं सूर्यम् । त्यं प्रसिद्धं जातवेदसं जातानां प्राणिनां वेदितारं जातप्रज्ञं जातधनं वा देवं द्योतमानम् । अत्र निरुक्तं—'उद्वहन्ति तं जातवेदसं देवमश्वाः केतवो रश्मयो वा सर्वेषां भूतानां संदर्शनाय सूर्य'मिति । जातवेदसं जातानि वेत्तीति जातवेदाः तमित्यर्थः ॥ ॥ चित्रं देवानामिति—देवानां दीव्यन्तीति देवाः रश्मयः तेषां देवजातानामेव वा अनीकं समूहरूपं चित्रं आश्चर्यकरं सूर्यस्य मण्डलमुदगात् उदयाचलं प्राप्तमासीत् । कीदृशम् । मित्रस्य वरुणस्याग्नेश्च उपलक्षणमेतत् । एतदुपलक्षितानां जनानां चक्षुः प्रकाशकं चक्षुरिन्द्रियस्थानीयं वा । उ-

पाठा०—१ प्रकरणा । २ चगताम् ।

इन्नी स्याद्गमो बीभत्सव इत्याहुः। उत्तरत उपास्यत्यबीभत्सायै। अतिप्रयच्छति। आर्तिमेवातिप्रयच्छति। अग्निर्देवेभ्यो निला-यत। अश्वो रूपं कृत्वा। सोऽश्वत्थे संवत्सरमतिष्ठत्। तदश्वत्थस्याश्वत्थत्वम्। यदाश्वत्थः संभारो भवति। यदेवास्य तत्र न्यक्तम्। तदेवावरुन्धे। देवा वा ऊर्जं व्यभजन्त। तत उदुम्बर उदतिष्ठत्। ऊर्ग्वा उदुम्बरः। यदौदुम्बरः संभारो भवति। ऊर्जमेवाव-रुन्धे। तृतीयस्यामितो दिवि सोम आसीत्। तं गायत्र्याहरत्। तस्य पर्णमच्छिद्यत। तत्पर्णोऽभवत्। तत्पर्णस्य पर्णत्वम्। यस्य पर्णमयः संभारो भवति। सोमपीथमेवावरुन्धे। देवा वै ब्रह्मन्नवदन्त। तत्पर्ण उपाशृणोत्। सुश्रवा वै नाम। यत्पर्णमयः सं-भारो भवति। ब्रह्मवर्चसमेवावरुन्धे। प्रजापतिरग्निमसृजत। सोऽबिभेत्प्रधक्ष्यतीति। तं शम्या शमायत्। तच्छम्यै शमित्वम्। यच्छमीमयः संभारो भवति। शान्त्या अप्रदाहाय। अग्नेः सृष्टस्य यतः। विकङ्कतं भा आर्च्छत्। यद्वैकङ्कतः संभारो भवति। भा एवावरुन्धे। सहृदयोऽग्निराधेय इत्याहुः। मरुतोऽद्भिरग्निमतमयन्। तस्य तान्तस्य हृदयमाच्छिन्दन्। साऽशनिरभवत्। यद-शनिहतस्य वृक्षस्य संभारो भवति। सहृदयमेवाग्निमाधत्ते' इति। इति पुनःसंधानविधिः॥

अथापत्नीकौपासनविधिः। तत्राचार्यैः—'सार्वार्धेनाग्निभिर्दग्ध्वा मृतां पत्नीं च तां त्रिभिः। शिष्टार्धेनोद्वहेदन्यां पुनर्थैवा-ग्निमान्यजेत्॥ प्रागुद्वाहाच्च शिष्टार्धं स्मार्तस्याग्नेर्यथाविधि। शुश्रूषेदप्यपत्नीक इष्टिं कुर्याच्च वा न वा॥ सायंप्रातर्होममघर्ममधीया-नपि संचरेत्' इति। अस्यार्थः—स्मार्तकर्मानुतिष्ठन् स्वपत्नीसंस्कारे औपासनस्यार्धेन तां संस्कृत्य शिष्टार्धेन पूर्ववदुपासनं कुर्वन् पुनरुद्वाहकाले तस्मिन्नर्धाग्नौ विवाहहोमादिकं कुर्यात्। श्रौतकर्मानुतिष्ठन् स्वपत्नीसंस्कारे त्रिभिरप्यग्निभिः संस्कृत्य पुनरुद्वा-

हिरण्यगर्भः । तथाच तैत्तिरीयकम्—'प्रजापतिर्वै हिरण्यगर्भः । प्रजापतेरनुरूपत्वाये'ति । यद्वा हिरण्मयोऽण्डो गर्भवद्यस्योदरे वर्तते सोऽसौ सूत्रात्मा हिरण्यगर्भ इत्युच्यते । अग्रे प्रपञ्चोत्पत्तेः प्राक् समवर्तत मायाया अध्यक्षात् सिसृक्षोः परमात्मनः सकाशात्सम-जायत । यद्यपि परमात्मैव हिरण्यगर्भः तथापि तदुपाधिभूतानां वियदादीनां सूक्ष्मभूतानां ब्रह्मण उत्पत्तेस्तदुपलक्षितो व्युत्पन्न उच्यते । स च जातो जातमात्र एव एकः अद्वितीयः सन् भूतस्य विकारजातस्य ब्रह्माण्डादेः सर्वस्य जगतः पतिरीश्वर आसीत् । न केवलं पतिरासीदेव । अपितु हिरण्यगर्भः पृथिवीं विस्तीर्णां द्यां दिवं उतापिच असाभिर्दृश्यमानां पुरोवर्तिनीमिमां भू-मिम् । यद्वा पृथिवीत्यन्तरिक्षनाम । अन्तरिक्षं दिवं भूमिं च स दाधार धारयति तस्मै । अत्र किंशब्दो निर्ज्ञातस्वरूपत्वात्प्र-जापतौ वर्तते । यद्वा सृष्ट्यर्थं कामयत इति कः । यद्वा कं सुखं तद्रूपत्वात् क इत्युच्यते । अथवा इन्द्रेण सृष्टः प्रजापतिर्मदीयं महत्त्वं तुभ्यं प्रदायाहं कः कीदृशः स्यामित्युक्तवान् । स इन्द्रः प्रत्यूचे यदिदं ब्रवीषि अहं कः स्यामिति तदेव त्वं भवेति । अतः कारणात् क इति प्रजापतिराख्यायते । 'इन्द्रो वै वृत्रं हत्वा सर्वा विजितीर्विजित्याब्रवीत्प्रजापतिमहमेतदसौ' इत्यादिकं ब्राह्मणम-नुसंधेयम् । यदासौ किंशब्दस्तदा सर्वनामत्वात्स्मैभावः सिद्धः । कर्मणः संप्रदानत्वाच्चतुर्थी । कं प्रजापतिं हविषा पशोर्वपारूपेण एककपालात्मकेन पुरोडाशेन वा वयमृत्विजः विधेम परिचरेम । विदधातिः परिचरणकर्मा ॥ ॥ समस्तहोमोपस्थाने हवि-ष्पान्तमिति—पान्तं पानीयं सोमात्मकं अजरं जरारहितं जुष्टं देवानां प्रियं यद्धविः स्वर्विदि सूर्यस्य वेदितरि दिविस्पृशि दि-विस्पृष्टेऽभानाहुतमभिहुतं तस्य सोमात्मकस्य हविषो भर्मणे भरणाय भावनाय च धर्मणे धारणाय च कं सर्वस्य सुखतरमिम-

दृपं प्राप्य च द्यावापृथिवी दिवं पृथिवीं अन्तरिक्षं च आप्रा इति स्वकीयेन तेजसा आसमन्तादापूरयन् ईदृग्भूतमण्डलान्तर्वर्ती सूर्य अन्तर्यामितया सर्वस्य प्रेरकः परमात्मा जगतो जंगमस्य तस्थुषश्च स्थावरस्य आत्मा स्वरूपभूतः। स हि सर्वस्थावरजंगमात्मकस्य कार्यवर्गस्य कारणं। कारणाच्च कार्यं नातिरिच्यते। तथाच पारमर्षं सूत्रम्—'तदनन्यत्वमारम्भणशब्दादिभ्यः' इति। यद्वा स्थावरजंगमात्मकस्य सर्वस्य प्राणिजातस्य जीवात्मा। उदिते हि सूर्ये मृतप्रायं सर्वं जगत्पुनश्चेतनयुक्तं सद्रूपं लभ्यते। तथाच श्रूयते—'योसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेती'ति॥ ॥ नमो मित्रस्येति—हे ऋत्विजः, यूयं मित्रस्य वरुणस्य मित्रावरुणयोश्चक्षसे द्रष्ट्रे महो महते देवाय द्योतमानाय दूरेदृशे दूरे सन्तमपि पश्यते देवजाताय देवेषु जाताय केतवे विश्वस्य प्रज्ञातव्यपदेशः। दिवस्पुत्राय द्युलोकस्य पुत्रवत्प्रियाय सूर्याय सूर्यार्थं नमः कृत्वा तद्विहितमृतं यागादिलक्षणं कर्म सपर्यत पूजयत शंसत स्तुतिमपि कुरुत। एतावत्सूर्योपस्थानम्॥ ॥ प्रजापते न त्वदिति चौले व्याख्यातम्॥ ॥ तन्तुं तन्वन्निति—हे अग्ने, तन्तुं यज्ञं तन्वन् विस्तारयन् रजसः रञ्जनात्मकस्य लोकस्य भानुं भास्करमादित्यमन्विहि अनुगच्छ रश्मिद्वारा सूर्यमण्डलं प्रविशेत्यर्थः। किंच ज्योतिष्मतः प्रकाशवतः यज्ञस्य पथो गमनमार्गान्। अथवा ज्योतिष्मतः दीप्तिमतः स्वर्गस्य पथो मार्गान् देवयानान् रक्ष पालय। कीदृशान्मार्गान्। धिया कर्मणा कृतान् संपादितान्। किंच सोऽग्निः जोगुवां स्तोतॄणां अपः कर्मनामैतत्। क्रियया व्याप्यं कर्म अनुल्बणं अनतिरिक्तं वयत करोतु। स त्वं मनुर्भव मन्तव्यो भव स्तुत्यो भवेत्यर्थः। किंच दैव्यं जनं देवसंघं जनय उत्पादय। प्रातिगमनवन्तं कुर्वित्यर्थः॥ ॥ हिरण्यगर्भः समवर्ततेति—हिरण्यगर्भस्य हिरण्मयाण्डस्य गर्भभूतः प्रजापति-

भवति ॥ ॥ अग्नेरात्मसमारोपणे । या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मात्मानम् । अच्छावसूनि कृण्वन्नस्मे नर्या पुरूणि ॥ यज्ञो भूत्वा यज्ञमासीद स्वां योनिं । जातवेदो भुव आ जायमानः' इति—हे अग्ने, या ते यज्ञिया यज्ञसाधनभूता तनूः मूर्तिः तया एहि आगच्छ । आगत्य च आरोह आत्मा आत्मभूतः आत्मानं मां तदानीमेवोक्तं 'अहं त्वदस्मि मदसि त्वमेत'दित्यादिश्रुतेः । अच्छाशब्दः अभिमुखार्थे । आरोहेत्यनेन संबन्धः । अभ्यारोह मां पुरूणि बहूनि नर्या नृभ्यो हितानि तानि वसूनि कृण्वन् ददत् यज्ञो भूत्वा यज्ञस्य साधको भूत्वा यज्ञं यज्ञस्य सधिकां स्वां योनिमासीद मयि च विश । हे जातवेदः, यदा च त्वामवरोहामि तदा भुवं भवतीति भूः शरीरं ततः मम शरीरात् आजायमानः ॥ ॥ अरण्योः समिधि चारोपणे । अयं ते योनिरिति—हे अग्ने, ऋत्वियः वसन्ताद्यृतौ भवः अयं अङ्गुल्या निर्दिश्यमानः पलाशाश्वत्थादिमयः काष्ठविशेषोऽरणिः ते तव योनिरुत्पत्तिस्थानम् । यतोऽरणेर्जातस्त्वं अरोचथा अशोभथाः । जानन्, तमरणिरूपकाष्ठविशेषमासीद तस्यामरण्यामारोपितः सन् त्वं नैरन्तर्येण तिष्ठ । अथानन्तरं नोऽस्माकं गिरः स्तुतिलक्षणा वाचः वर्धय । यद्वा गिरशब्देन तद्वन्तो लक्ष्यन्ते । तथा स्तोतॄनस्मान्वर्धय पशुपुत्रादिभिः समृद्धान्कुरु ॥ इत्यौपासनमन्त्रार्थः ॥

अथौपासनप्रयोगः—शुद्धदेशे चतुर्विंशत्यङ्गुलप्रमाणं षोडशाङ्गुलप्रमाणं वा चतुरस्रं प्रत्येकं चतुरङ्गुलोत्सेधं चतुरङ्गुलविस्तारं मेखलात्रययुक्तमायतनं निर्माय गोमयेनोपलिप्योल्लिख्य तत्र यथालाभं सिकतापञ्चपत्रादिसंभाराग्निक्षिप्य तत्र गृह्याग्निं पूर्ववत् प्रतिष्ठाप्य विवाहदिनस्य सायंकालादिमारभ्यौपासनं कुर्यात् । तत्रायं क्रमः—यजमानः कृतसंध्यावन्दन आचम्याग्नेः पश्चिमत

मग्निं देवान् मयपाग्नेन पप्रथन्त प्रथयन्ति । तथाच यज्ञः हविर्यत्पानीयं अजरं सूर्यं दिवि दिविस्पृश्याहुतं जुष्टमग्नौ तस्य भरणाय च भावनाय च एतेभ्यः सर्वेभ्यः कर्मभ्यो देवा इममग्निमन्नेन पप्रथन्तेति ॥ ॥ गीर्णं भुवनमिति—गीर्णं पूर्वं निगीर्णं तमगान्धकारेण अपगूढं आच्छादितं सः सर्वं भुवनमग्नौ यस्मिन्वैश्वानरे जाते उत्पन्ने सत्याविरभवत् आविर्भवति । तस्मास्य वैश्वानरस्याग्नेः सख्ये सखिकर्मणि देवा इन्द्रादयः पृथिवी भूमिश्च द्यौश्चान्तरिक्षं चोदकानि ओषधीरोषधयश्चारणयन् पुनरनन्तरप्रीतिं कुर्वन्त इत्यर्थः ॥ देवेभिर्न्निषित इति—यज्ञियेभिः यज्ञार्हैः देवेभिः देवैरिन्द्रादिभिः नु क्षिप्रं इषितः प्रेषितोहं अजरं जरारहितं बृहन्तं महान्तं अग्निं तं वैश्वानराग्निं स्तोषाणि स्तोष्यामि । यो वैश्वानराग्निर्भानुना तेजसा पृथिवीं भूमिं उतापि चेमां द्यां दिवं चान्तरिक्षं च आततान आतनोति । तदेव दर्शयति—रोदसी द्यावापृथिव्यावाततानेति विस्तारयतीत्यर्थः ॥ ॥ यो होतासीदिति—यो वैश्वानराग्निः देवजुष्टो देवैः सेवितः प्रथमो मुख्यो होतासीत् । यं च वैश्वानराग्निं यजमानेनावृणाना आज्येन समाञ्जन् समञ्जन्ति जातवेदाः जातप्रज्ञो जातधनो वा स वैश्वानरोऽग्निः पतत्रि पतनशीलं पक्षिजातं इत्वरं गमनशीलं सरीसृपादिकं स्थाः स्थावरं वृक्षादिरूपं च जगत् । स्थावरं जंगमं च जगदित्यर्थः । श्वात्रं क्षिप्रमेवाकृणोत् अजनयत् । तथाच यास्कः—'सपतत्रीत्वरं जंगमं स्थावरं जंगमं च यत्तत्क्षिप्रमग्निरकृणोज्जातवेदाः' इति ॥ ॥ यज्जातवेद इति—हे जातवेदः जातप्रज्ञाग्ने, यत् यस्त्वं भुवनस्य लोकस्य मूर्धन् मूर्धनि रोचनेनादित्येन सह अतिष्ठः स्थितवानसि । तं त्वा वैश्वानराग्निं च मतिभिरर्चनाभिः गीर्भिः स्तुतिभिरस्थैः शर्गेभ अहेम प्रपद्यामहे । हि गताविति धातुः । स वैश्वानरः त्वं रोदसिप्राः द्यावापृथिव्योः पूरयिता यज्ञियो यज्ञार्हश्चाभवो

भवति ॥ ॥ अग्नेरात्मसमारोपणे । या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मात्मानम् । अच्छावसूनि कृण्वन्नस्मे नर्या पुरूणि ॥ यज्ञो भूत्वा यज्ञमासीद स्वां योनिं । जातवेदो भुव आजायमानः' इति—हे अग्ने, या ते यज्ञिया यज्ञसाधनभूता तनूः मूर्तिः तया एहि आगच्छ । आगत्य च आरोह आत्मा आत्मभूतः आत्मानं मां तदानीमेवोक्तं 'अहं त्वदसि मदसि त्वमेत'दित्यादिश्रुतेः । अच्छाशब्दः अभिमुखार्थे । आरोहेत्यनेन संबन्धः । अभ्यारोह मां पुरूणि बहूनि नर्या नृभ्यो हितानि तानि वसूनि कृण्वन् ददत् यज्ञो भूत्वा यज्ञस्य साधको भूत्वा यज्ञं यज्ञस्य सधिकां स्वां योनिमासीद मयि च विश । हे जातवेदः, यदा च त्वामवरोहामि तदा भुवं भवतीति भूः शरीरं ततः मम शरीरात् आजायमानः ॥ ॥ अरण्योः समिधि चारोपणे । अयं ते योनिरिति—हे अग्ने, ऋत्वियः वसन्तादृतौ भवः अयं अङ्गुल्या निर्दिश्यमानः पलाशाश्वत्थादिमयः काष्ठविशेषोऽरणिः ते तव योनिरुत्पत्तिस्थानम् । यतोऽरणेर्जातस्त्वं अरोचथा अशोभथाः । जानन्, तमरणिरूपकाष्ठविशेषमासीद तस्यामरण्यामारोपितः सन् त्वं नैरन्तर्येण तिष्ठ । अथानन्तरं नोऽस्माकं गिरः स्तुतिलक्षणा वाचः वर्धय । यद्वा गिरशब्देन तद्वन्तो लक्ष्यन्ते । तथा स्तोतॄनस्मान्वर्धय पशुपुत्रादिभिः समृद्धान्कुरु ॥ इत्यौपासनमन्त्रार्थः ॥

अथौपासनप्रयोगः—शुद्धदेशे चतुर्विंशत्यङ्गुलप्रमाणं षोडशाङ्गुलप्रमाणं वा चतुरस्रं प्रत्येकं चतुरङ्गुलोत्सेधं चतुरङ्गुलविस्तारं मेखलात्रययुक्तमायतनं निर्माय गोमयेनोपलिप्योल्लिख्य तत्र यथालाभं सिकतापत्रपत्रादिसंभारान्निक्षिप्य तत्र गृह्याग्निं पूर्ववत् प्रतिष्ठाप्य विवाहदिनस्य सायंकालादिमारभ्यौपासनं कुर्यात् । तत्रायं क्रमः—यजमानः कृतसंध्यावन्दन आचम्याग्नेः पश्चिमत

उपविश्य पवित्रे मध्यं भूत्वा प्राणानायम्य देशकालौ संकीर्त्य ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं सायमौपासनं करिष्य इति संकल्प्य अस्तमयात्पूर्वकाले प्रज्वलिताग्नौ चत्वारिशृङ्गेतिमन्त्रेण यज्ञपुरुषस्य मूर्तिं ध्यात्वा सोदकेन पाणिना समन्तात्प्रदक्षिणं त्रिःपरिमृज्य पूर्ववत्परिस्तीर्य पुनःपुनस्त्रिरुदकमादाय त्रिःपरिमृज्य प्रागुदग्द्वादशद्रव्येषु मध्ये प्रक्षालितानार्द्रसिततन्दुलान् शुद्धपात्रे निक्षिप्य तत्पात्रमग्नेरुत्तरतो निधाय ज्वलता दर्भेणावज्वल्य प्रोक्ष्य तेनैव त्रिःपर्यग्निकृत्वा तदुल्मुकं निरस्यापः स्पृष्ट्वाग्नेः पश्चिमतः कुशानास्तीर्य तत्र समिधासह हविर्निधाय विधानिन इति द्वाभ्यां गन्धादिभिरभ्यर्च्य दक्षिणं जान्वाच्य वचत्समिधं तूष्णीमग्नौ प्रक्षिप्याप उपस्पृश्य समिधि प्रदीप्तायां सत्यां विधूमाल्पज्वालाङ्गारेऽग्नौ शतसंख्याकांस्तण्डुलान्, प्रस्थधान्यस्य चतुःषष्ठितमभागतण्डुलान्वा दक्षिणहस्तेनादाय सव्यं पाणिं हृदि निधायाङ्गुल्युत्तरपार्श्वेन समिन्मूलतो व्यङ्गुलप्रदेशे अग्नयेस्वाहेतिहुत्वा तस्या ऐशानदेशे पूर्वाहुतेर्भूयसीमाहुतिं प्रजापतिपदं चतुर्थ्यन्तं मनसा ध्यायन् स्वाहेत्युच्चार्यासंसृष्टां हुत्वा पूर्ववदुपविश्य परिस्तरणं विसृज्य परिसमूहनपर्युक्षणे कृत्वा उपस्थानं कुर्यात् । तत्र मन्त्राः—अग्नआयूंषीति मन्त्रत्रयस्य शतंवैखानसाः परमानः सोमो गायत्री । अग्नेत्वंन इति सूक्तस्य गौपायनालौपायना वा बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुरिति क्रमेण ऋषयः अग्निर्देवता द्विपदाविराट्छन्दः । प्रजापते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् । एतैर्मन्त्रैर्वायव्यदेशे प्रह्वीभूतः कृताञ्जलिः स्थिताग्निमीक्षमाण उपस्थाय पुनरुपविश्य न्यूनातिरिक्ताच्छिद्रत्वार्थं श्रीविष्णुस्मरणं कृत्वा अनेन होमेन भगवान्श्रीपरमेश्वरः प्रीयतामित्युक्त्वार्पणं कृत्वा पवित्रग्रन्थिं विमस्य शुद्धदेशे प्रक्षिपेत् ॥ इति सायमौपासनप्रयोगः ॥ ॥ अथ प्रातरौपासनप्रयोगः ॥

एवं प्रातरुदयात्पूर्वं प्रादुष्करणं कृत्वा होमकाले पूर्वाङ्गानि कृत्वा ॐ सूर्याय स्वाहेति पूर्वद्रव्येणैव प्रथमाहुतिं हुत्वा सायंकालद्वितीयाहुतिवदत्रापि द्वितीयाहुतिं हुत्वा परिसमूहनादिकं कृत्वा उपस्थानं कुर्यात् । तत्र मन्त्राः—सूर्यो न इत्यस्य सौर्यश्चक्षुः सूर्यो गायत्री । उदुत्यमित्यस्य काण्वः प्रस्कण्वः सूर्यो गायत्री । चित्रंदेवानामित्यस्याङ्गिरसः कुत्सः सूर्यस्त्रिष्टुप् । नमोमित्रस्येत्यस्य सौर्योऽभितपाः सूर्यो जगती । एतैश्चतुर्मन्त्रैः प्राजापत्यैश्चोपस्थायाचामेत् । इति प्रातरौपासनप्रयोगः ॥

अथ सूतके होमप्रयोगः । सूतके ऋत्विगाद्यन्यतमेन पूर्वोद्दिष्टद्रव्येण सायंप्रातर्होमौ कुर्यात् । ऋत्विगाद्यन्यतमाभावे सूतकागमनात्पूर्वं होमान्ते वक्ष्यमाणप्रकारेण समारोपणं कृत्वा सूतकनिवृत्तौ स्नात्वा कृतनित्यक्रियोऽग्निं प्रतिष्ठाप्य तत्समिधं प्रत्यवरोहेत्यग्नौ प्रतिक्षिप्य प्राणानायम्य देशकालौ संकीर्त्य मम सूतकादिना नित्यहोमातिक्रमदोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रायश्चित्तपूर्वकं नित्यहोमं करिष्ये इति संकल्प्य परिसमूहनादिकं कृत्वाग्नेः पश्चिमतः सपवित्रे पात्रे आज्यमासिच्य सभसाङ्गारानायतनादुत्तरतो बहिःकृत्य तेष्वाज्यपात्रं निधाय तृणेनावज्वल्य तत्र दर्भाग्रद्वयं निक्षिप्य तेनैव त्रिः पर्यग्निकृत्वोल्मुकं निरस्यापः स्पृष्ट्वा कर्पन्निवोदगुद्वास्याङ्गारानतिसृज्य । सवितुष्ट्वेति मन्त्रस्य हिरण्यस्तूपः सविता पुरउष्णिक् आज्योत्पवने विनियोगः । इति मन्त्रेण सकृत्तूष्णीं द्विः एवं त्रिरुत्पूय पवित्रे प्रोक्षण्यां प्रहृत्याज्यं पश्चिमतो दर्भेष्वासाद्य स्रुवादिसंमार्जनं कृत्वा तदाज्यं स्रुवेण स्रुचि चतुर्गृहीत्वा । मनोज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञ१ समिमं दधातु । या इष्टा उपसो निम्रुचश्च ताः संदधामि हविषा घृतेन

पाठा०—१ सो या अनिष्टास्ता सतनोमि इति पाठ ।

स्वाहा । इति हुत्वा नित्यहोमार्थं पूर्ववत्तण्डुलान्संस्कृत्य अतीतकालादारभ्य क्रमेण नित्यहोमवत्परिसमूहनादि समित्प्रक्षेपणान्तं तन्त्रपूर्वकं द्वे द्वे आहुती हुत्वा कालहोमं कृत्वा अग्निं सूर्यं प्रजापतिं चोपस्थाय परिसमूहनाद्यङ्गजातं सकृत्कुर्यात् ॥ इति सूतके होमप्रयोगः ॥ ॥ अथापत्कालकर्तव्यः समस्तहोमप्रयोगः । पूर्वं सायंकालकर्तव्याहुतिद्वयं हुत्वा पर्युक्षणादिकं कृत्वा किंचित्कालं निमील्य पुनः पर्युक्षणादिसमित्प्रक्षेपणान्तं कृत्वा श्वःकर्तव्यप्रातराहुतिद्वयमपकृष्य हुत्वा उपस्थानं कुर्यात् । तत्र मन्त्राः—हविष्पान्नामितिपञ्चर्चस्य सूक्तस्य मूर्धन्वान्वामदेव्यः सौर्यो वैश्वानरोऽग्निस्त्रिष्टुप् । एभिर्मन्त्रैः प्राजापत्यैश्चोपस्थाय पर्युक्षणाद्यङ्गजातं सकृत्कुर्यात् । इति समस्तहोमप्रयोगः ॥ ॥ अथ पक्षहोमप्रयोगः । गुर्वापदि प्रतिपद्धोमानन्तरं सायंकाले समित्प्रक्षेपणान्तं पूर्वाङ्गजातं कृत्वा आहुतिप्रमाणेन तण्डुलान्पात्रद्वये प्रतिपात्रं चतुर्दशवारं गृहीत्वा होमकाले प्रथमपात्रस्थांस्तण्डुलान् हस्तेन अग्नये स्वाहेति सर्वान्जुहुयात् । पुनः प्राजापत्यार्थं गृहीतान् प्रजापतिशब्दं चतुर्थ्यन्तं मनसा ध्यायन् स्वाहेत्युक्त्वा सर्वं हुत्वा उपस्थानाद्यङ्गजातं सकृत्कुर्यात् । एवं द्वितीयायां प्रातः समित्प्रक्षेपणानन्तरं सूर्याय स्वाहेति हुत्वा सायंकालीनोत्तराहुतिवद्द्वितीयाहुतिं हुत्वा उपस्थानाद्यङ्गजातं कुर्यात् । पक्षमध्ये आपन्निवृत्तावागामिचतुर्दशीपर्यन्तं शेषहोमान्कुर्यात् । अत्र पूर्ववदग्निमभिरक्षेत् । तत्रापन्निवृत्तौ तु तद्दिनमारभ्य पूर्ववत्सायंप्रातर्होमौ कुर्यात् ॥ इति पक्षहोमप्रयोगः ॥ ॥ अथ भार्याप्रवासे प्राप्ते कर्तव्यप्रयोगः । कालहोमानन्तरं—अयं ते योनिरित्यस्य गाथिपुत्रो विश्वामित्रोऽग्निरनुष्टुप् । अनेन मन्त्रेण अरणिद्वये समारोपयेत् । अथवा तेनैव मन्त्रेण समिधि आरोपयेत् । अथवा—याते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मात्मानमच्छावसूनि कृण्वन्नस्मे नर्या पुरूणि । यज्ञो भूत्वा

यज्ञमासीद् स्वां योनिं जातवेदो भुव आ जायमानः। इति मन्त्रेण पाणी प्रताप्य आत्मनि समारोपयेत्। तत्र प्रादुष्करणकाले अरणिसमारोपणपक्षे अरणी निर्मन्थ्य प्रत्यवरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन्। प्रजां पुष्टिं रयिमस्मासु धेह्यथा भव यजमानाय शंयोः। इति मन्त्रेण स्थण्डिलेऽग्निं प्रतिष्ठापयेत्। समित्समारोपणपक्षे श्रोत्रियागारादग्निमाहृत्य स्थण्डिले प्रतिष्ठाप्य प्रत्यवरोहेति मन्त्रेण तां समिधं निदध्यात्। आत्मसमारोपणपक्षे सर्वदा अस्पृश्यस्पर्शनं जलनिमज्जनस्नानं स्त्रीगमनं चाकुर्वन् मूत्रपुरीषोत्सर्जनकाले शौचमकृत्वा चिरकालमतिष्ठंश्च होमकाले आत्मसमारूढाग्निमुच्छ्वासरूपेण प्रत्यवहेति मन्त्रेण लौकिकाग्नौ निदध्यात्। एवं यथाधिकारमग्निं प्रतिष्ठाप्य कालद्वये वैककाले वा पूर्ववज्जुहुयात् ॥ इति भार्याप्रवासे प्राप्ते कर्तव्यप्रयोगः ॥ ॥ अथ पुरुषप्रवासे कर्तव्यप्रयोगः ॥ होमान्ते पूर्वोक्तमन्त्रैरुपस्थाय पुनः प्रवासार्थं—अभयं वोऽभयं मेऽस्त्विति मन्त्रेणाग्निमुपस्थाय द्विमासमध्यवर्तिकालेष्वन्यतमकालपर्यन्तं प्रवत्स्यमानः स्वगृहसमीपमागत्य—गृहा मा बिभीतोप वस्वस्त्येवास्मासु च प्रजयध्वं मा च वो गोपती रिषत्। इति मन्त्रेण गृहं निरीक्ष्य—गृहानहं सुमनसः प्रपद्ये वीरघ्नीर्वीरवतः सुवीरान्। इरां वहन्तो घृतमुक्षमाणास्तेष्वहं सुमनाः संविशानि। इति अन्तर्गृहं प्रविश्य—शिवं शग्मं शंयोः शंयोः इति पुनस्तिरस्तुवीक्ष्य होमकाल उपस्थानान्तं पूर्ववत्सर्वं कृत्वा—अभयं वोऽभयं मेस्तु इति पुनरग्निमुपतिष्ठेत। ततो ज्येष्ठपुत्रमुभाभ्यां पाणिभ्यां परिगृह्य—अङ्गादङ्गात्संभवसि हृदयादधि जायसे। आत्मा वै पुत्रनामासि स जीव शरदः शतम्। इति जपित्वा तस्य मूर्धानं त्रिराजिघ्रेत्। एवमितरेषामपि पुत्राणां क्रमेण कृत्वा प्रत्यदुहितॄणां तूष्णीमेव शिर आजिघ्रेत्। एतच्छिरआघ्राणादिकं पु-

प्रेऽपि प्रोष्यागते भवति ॥ इति पुरुषप्रवासे कर्तव्यप्रयोगः ॥

अथाग्निसंसर्गादिप्रायश्चित्तप्रयोगः ॥ स्वगृह्याग्निरन्यगृह्याग्निना संसृष्टश्चेदग्निं विभज्य उभौ समित्समारोपणं कुर्याताम् । ततः पूर्वहोता प्राणानायम्य देशकालौ संकीर्त्य समिद्द्वयमादायाऽस्मिन्नन्वाहितेऽग्नावित्यादि चक्षुषी आज्येनेत्यन्तमुक्त्वा अग्निं विविचिं प्रधानदेवतां चरुद्रव्येण शेषेण स्विष्टकृतमित्यादि सद्यो यक्ष्य इत्यन्तमुक्त्वा समिद्द्वयमग्नावाधाय परिसमूहनादि पूर्णपात्रनिधानान्तं कृत्वा पवित्रवति शूर्पे अग्नये विविचये त्वा जुष्टं निर्वपामीति चतुरो मुष्टीन्निरुप्य तावद्वारं प्रोक्षणाद्याज्यभागान्तं कृत्वा । ॐ अग्नये विविचये स्वाहा इति हुत्वा स्विष्टकृदादिहोमशेषं समापयेत् ॥ अनुपक्रान्तदर्शपूर्णमासश्चेत्—पूर्ववदाज्यं संस्कृत्य स्रुवेण द्वादशवारं स्रुचि गृहीत्वा ॐ अग्नये विविचयेस्वाहेति स्रुचैव हुत्वा कालहोमं चरेत् । पश्चाद्धोतातु ॐ अग्नये पथिकृते स्वाहेति जुहुयात् ॥ शवाग्निना संसृष्टश्चेत्—ॐ अग्नयेशुचये स्वाहेति जुहुयात् ॥ पचनाग्निना संसृष्टश्चेत्—ॐ अग्नये संसर्गाय स्वाहेति जुहुयात् ॥ वैद्युतेन संसृष्टश्चेत्—ॐ अग्नयेप्सुमते स्वाहेति जुहुयात् । ततः कालहोमं चरेत् ॥

अथ पुनःसंधानप्रयोगः ॥ अथ प्रमादादग्निनाशे पुनःसंधानप्रयोगः । यदि प्रमादाद्गृह्याग्निनाशस्तदा होमकालश्चेद्यजमानः स्त्रियासह स्नानादिना शुचिर्भूत्वा आयतनस्थितं भस्म सर्वमपनीय तदायतनं गोमयेनोपलिप्य उल्लेखनादिकं कृत्वा यथाशक्ति सिकतादिसंभारान्निक्षिप्य श्रोत्रियागारादग्निमाहृत्य व्याहृतिभिर्विधिवदग्निं प्रतिष्ठाप्य प्रबोध्य प्राणानायम्य देशकालौ संकीर्त्य ममापदि प्रमादान्नष्टाग्नेः पुनःसंधानं करिष्ये इति संकल्प्य चत्वारिशृङ्गेत्यादिनाग्निं ध्यात्वा परिसमूहनादिकं कृत्वा आज्यं

विधिवत्संस्कृत्य अग्नेः पश्चाद्दर्भेषु तदाज्यं निधाय स्रुवं संमृज्य । अयाश्चेत्यस्य विमदो अयाऽग्निः पङ्क्तिः पुनःसं० ॐ अयाश्चाग्नेस्यनभि-
शस्तीश्च सत्यमित्त्वमया असि । अयासावयसा कृतोऽयासन्हव्यमूहिषेऽयानो धेहि भेषजं स्वाहा अग्नये अयस इदं० । इति स्रुवोद्देश-
त्यागौ कृत्वा तत्कालहोमं पूर्ववत्कुर्यात् ॥ पूर्वो नियमेन होमकालेऽग्निरनुगतश्चेत्तदैव पूर्ववत्पुनःसंधानं कृत्वान्यहोमकालपर्यन्तं
स्त्रियासहानश्नन्स्थित्वा कालहोमं कुर्यात् । एवमादिप्रमादादग्निनाशे अग्निनाशदिनादारभ्य त्रिरात्रपर्यन्तं प्राणायामशतं द्वादश-
दिनपर्यन्तमेकदिनोपवास एवं तत्तद्दिनानुसारिप्रायश्चित्तं कृत्वा अयाश्चेतिमन्त्रेण पुनःसंधानं कुर्यात् । तद्द्वादशदिवसानां म-
ध्येऽप्यनापद्यालस्यादेककालमपि त्यक्ताग्निर्यथाशक्ति किंचित्सुवर्णदानं । द्वादशदिनपर्यन्तं एकदिनोपवासः । मासद्वयपर्यन्तं त्रिरा-
त्रमुपवासः । अब्दपर्यन्तं मासं पयोव्रतम् । द्विवर्षपर्यन्तं चान्द्रायणम् । त्रिवर्षपर्यन्तं चान्द्रायणं सोमायनं च । तदूर्ध्वं त्र्यब्द-
कृच्छ्रं धनिनो गोदानं चेति ॥ ॥ एवं प्रमादादालस्यरूपापराधानुसारितत्तत्कालोक्तप्रायश्चित्तं तत्तत्प्रतिनिधिरूपसुवर्णदानादिकं कृत्वा
पुनःसंधानं कुर्यात् । तत्रायं क्रमः—पूर्वोक्तमग्निं प्रतिष्ठाप्य समिद्द्वयमादाय पुनर्देशकालौ संकीर्त्य अत्र पुनःसंधानहोमे देव-
तापरिग्रहार्थमन्वाधानं करिष्ये इत्याद्याघारावाज्येनेत्यन्तमुक्त्वा त्रिरग्निंपवमानं अर्यमाग्निं प्रजापतिं चाज्येन अर्यमाग्निं वरुणाग्निं
पूषाग्निं प्रजापतिं च लाजद्रव्येण सूर्यासावित्रीं चतुर्वारमाज्येन शेषेण स्विष्टकृतमित्यादि सद्योयक्ष्य इत्यन्तमुक्त्वा समिद्द्वयमग्ना-
वाधाय परिसमूहनाद्याज्ये दर्भाग्रद्वयक्षेपणान्तं कृत्वा आज्येन सह लाजान्पर्यग्निकृत्वोदगुद्वास्याघारान्तं कृत्वा । अग्नआयूंषीत्या-
दिभिस्त्रिभिर्मन्त्रैः त्वमर्यमा भवसि प्रजापतेनत्वदिति मन्त्रद्वयेन चाज्यं हुत्वा ॥ ततः प्रक्षालितवध्वञ्जलौ स्रुवमाज्येनोपस्तीर्य मुष्टिपरि-

मितोंल्लाजान्द्विवारमोप्य शेषमभिघार्य अवत्तं चाभिघार्य अर्यमणमितिमन्त्रं पठित्वा तिष्ठन्त्या वध्वा हावयेत्। एवं वरुणं-न्नित्यादिमन्त्रद्वयेन पृथक्पृथग्घावयित्वा अथवा आचार्यस्मृत्युक्तप्रकारेण स्वयमेव कुर्यात् । अवशिष्टॉल्लाजान् शूर्पकोणेन प्रजा-पतिं मनसा स्मरन् तथैव हावयित्वा । आनःप्रजां जनयत्वित्यादिभिश्चतसृभिः प्रत्यृचमाज्यं हुत्वा समञ्जन्तुविश्वेदेवा इति मन्त्रे-णाज्यशेषेण स्वस्य हृदयं पत्नीहृदयं चाङ्क्त्वा स्विष्टकृदादिहोमशेषं समाप्य पूर्ववत्सायमादिहोमं कुर्यात् ॥ इति पुनःसंधानहोमः ॥

अथ नास्तिक्याद्विसृष्टस्याग्नेः पुनःसंधानप्रयोगः । यजमानः संकल्पपूर्वकं स्त्रिया सहोपोष्य परेद्युः स्वयं कृतनित्यक्रियः संकल्पपूर्वकं प्रायश्चित्तं कुर्यात् । तत्रायं क्रमः—द्वादशाहपर्यन्तं यथाशक्ति सुवर्णदानं । मासद्वयपर्यन्तं कृच्छ्रम् । मासचतुष्टय-पर्यन्तमतिकृच्छ्रम् । षण्मासपर्यन्तं पराकम् । अब्दपर्यन्तं मासं पयोव्रतम् । अब्दे पूर्णे त्रैमासिकव्रतम् । अत्र सर्वत्र होम्यद्रव्यदानम् । एवं कालानुसारि प्रायश्चित्तं चरित्वा अतीतहोमद्रव्यं च द्विजेभ्यो विभज्य दत्वा अपराह्णे उपलेपनादि संभारनिधानान्तं कृत्वा इ॒दं तु॒ एकं॑ पु॒र ऊं॑तु॒ एकं॑ तृ॒तीये॑न॒ ज्योति॑षा॒ संवि॑शस्व । सं॒वेश॑ने त॒न्व१॒॑श्चारु॑रेधि प्रि॒यो दे॒वानां॑ पर॒मे ज॒नित्रे॑ ॥ इत्यनया व्या-हृत्या चाग्निं स्थण्डिले विधिवत्प्रतिष्ठाप्य । समिद्द्वयमादाय पुनर्देशकालौ संकीर्त्य मम नास्तिक्याद्विसृष्टाग्नेः पुनःसंधानाङ्गभूतम-न्वाधानं करिष्य इति संकल्प्य अस्मिन्नन्वाहितेऽग्नावित्याद्याधारावाज्येनेत्यन्तमुक्त्वा प्रधानदेवतामग्निमष्टवारं अग्निंपवमानं अग्निं-पावकं अग्निंशुचिं अग्निंपथिकृतं अग्नितन्तुमन्तं चाज्येन शेषेण स्विष्टकृतमित्यादि सद्योयक्ष्य इत्यन्तमुक्त्वा समिद्द्वयमग्नावाधाय परिसमूहनाद्याज्यभागान्तं कृत्वा स्रुवेण स्रुचि आज्यं चतुर्गृहीत्वा । त्वमग्ने सप्रथा असीत्यस्यात्रेयः सुतंभरोऽग्निर्गायत्री नास्ति-

क्याद्विसप्तत्यग्नेः पुनःसंधानप्रधानाज्यहोमे० । त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः । त्वया यज्ञं वितन्वते स्वाहा ॥ अग्नय इदं० ॥ यो अग्निमित्यस्य काण्वो मेधातिथिरग्निर्गायत्री ॥ यो अग्निं देववीतये हविष्माँ आविवासति । तस्मै पावक मृळय स्वाहा ॥ अग्नय इदं० ॥ तन्तुं तन्वन्नित्यस्य देवा अग्निर्गायत्री । तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् । अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनं स्वाहा । अग्नय इदं० ॥ त्वंनो अग्न इत्यस्याङ्गिरसो हिरण्यस्तूपोऽग्निर्जगती ॥ त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च वन्द्य । त्राता तोकस्य तनये गवामस्यनिमेषं रक्षमाणस्तव व्रते स्वाहा० ॥ अग्नय इदं० ॥ सत्वंनो अग्न इत्यस्य वामदेवोऽग्निवरुणौ त्रिष्टुप् ॥ स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अव यक्ष्व नो वरुणं रराणो वीहि मृळीकं सुहवो न एधि स्वाहा ॥ अग्नय इदं० ॥ सप्तते हिरण्यगर्भोऽग्निः सप्तवान्जगती । सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि । सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्वा घृतेन स्वाहा । अग्नये सप्तवत इदं । मनोज्योतिर्वामदेवो मनोज्योतिस्त्रिष्टुप् । मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳसमिमं दधातु । या इष्टा उषसो निम्रुचश्च ताः संदधामि हविषा घृतेन स्वाहा ॥ मनसे ज्योतिष इदं० ॥ पुनस्त्वाहिरण्यगर्भोविश्वेदेवास्त्रिष्टुप् ॥ पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथयज्ञैः । घृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः स्वाहा ॥ विश्वेभ्यो देवेभ्य इदं० ॥ एतैरष्टाभिर्मन्त्रैरष्टवारं यथाक्रमं तथैव स्रुचा जुहुयात् । ततः स्रुवेण स्थाल्या आज्यमादाय अग्नये पवमानाय स्वाहा । अग्नये शुचये स्वाहा । अग्नये पथिकृते स्वाहा । अग्नये तन्तुमते स्वाहा । इति पञ्चभिर्मन्त्रैः पञ्चाहुतीर्यथाक्रमं हुत्वा स्विष्टकृदादिहोमशेषं समाप्य ।

आहिताग्नये अनड्वाहं दक्षिणां दत्वा पूर्णान्तसायमादिहोमं कुर्यात् ॥ इति प्रयोगः ॥ ॥ अथापत्नीकौपासनप्रयोगः । अर्धाग्निं पूर्णमारिण्यै स्त्रियै दत्वा शिष्टार्धाग्नौ पूर्णान्तसायंप्रातर्होमौ कुर्यात् ॥ इति ॥

अथ द्विभार्याग्निसंसर्गप्रयोगः । उभावग्नी पूर्वोक्तप्रकारेण स्थण्डिलयोः प्रतिष्ठाप्य ज्येष्ठभार्याग्निसमीप उपविश्य प्राणानायम्य देशकालौ संकीर्त्य मम भार्याद्वयाग्निसंसर्गद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रायश्चित्ताज्यहोमं करिष्ये इति संकल्प्य परिसमूहनादिपुनःसंमार्जनं कृत्वा ज्येष्ठभार्यान्वारब्धः । अग्निमीळे इति नवर्चस्य सूक्तस्य मधुच्छन्दा अग्निर्गायत्री । अग्निद्वयसंसर्गप्रायश्चित्ताज्यहोमे वि० । एवंनवभिर्मन्त्रैः स्वाहाकारं पठन्प्रत्यृचं हुत्वा अग्नय इदं० इत्युद्देशत्यागौ कृत्वा अग्ने त्वं न इति चतसृणां गौपायनालौपायना बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्चैकर्चाऋषयः अग्निर्देवता द्विपदाविराट्छन्दः उपस्थानेवि० । इति सूक्तेनाग्निमुपस्थाय परिसमूहनादिकं कृत्वा तमग्निं अयन्तेयोनिरित्यस्य गाथिपुत्रो विश्वामित्रोऽग्निरनुष्टुप् । अयं ते योनिर्ऋत्विय इतिमन्त्रेण समिध्यारोप्य तत उत्तरस्थितकनिष्ठपत्न्यग्निसमीप उपविश्य प्रत्यवरोहजातवेद इति मन्त्रेण तां समिधमग्नौ प्रक्षिप्य प्राणानायम्य देशकालौ निर्दिश्य अग्निद्यमिद्वयसंसर्गहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये इत्युक्त्वा अस्मिन्नन्वाहितेग्नावित्यादि चक्षुषी आज्येनेत्यन्तमुक्त्वा प्रधानदेवतामग्निं पञ्चारमाज्येन शेषेण स्विष्टकृतमित्यादि सद्यो यक्ष्य इत्यन्तमुक्त्वा समिद्द्वयमभ्याधाय परिसमूहनाद्याज्यभागान्तं कृत्वोभाभ्यामन्वारब्धः अग्निनाग्निः समिध्यतइत्यस्य काण्वो मेधातिथिरग्निर्गायत्री अग्नय इदं० । त्वंह्यग्ने अग्निनेत्यस्याङ्गिरसो विरूपोऽग्निर्गायत्री अग्नय इदं० । अस्तीदमधिमन्थनमिति तृचस्य विश्वामित्रोग्निरनुष्टुप् अन्त्ये त्रिष्टुभौ अग्नय इदं । पाहि नो अग्न

इत्यस्य प्रगाथो भर्गोऽग्निर्बृहती। एतैर्मन्त्रैर्हुत्वा स्विष्टकृदादिहोमशेषं समाप्य पूर्ववत्संभारवत्यायतने तमग्निं प्रतिष्ठाप्य यथापूर्वं परिचरेत् ॥ इत्यग्निद्वयसंसर्गप्रयोगः ॥ इति श्रीनृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे औपासनप्रकरणम् ॥

अथ गृहप्रवेशहोमानन्तरं कर्तव्यप्रतिपदिष्टिविधिः। दृष्टिरिष्टिर्विशिष्टार्थसमष्टिर्येस्य सूयते। विष्टवे तं कृपाविष्टं विष्टरश्रवसं मुहुः ॥ १ ॥ अथेदानीं गृहप्रवेशहोमानन्तरं कर्तव्यप्रतिपदिष्टिविधिरभिधीयते। तत्र कारिका—'अन्नसद्मस तत्रेष्टेः स्थालीपाकः पुरोच्यते। गृहप्रवेशहोमाद्या पौर्णमास्यागमिष्यति। तस्यां तं प्रारभेतेति वृत्तिकारेण भाषितम्' इति। गृह्यपरिशिष्टेऽपि—'अथ पार्वणः स्थालीपाकस्तस्य पौर्णमास्यामारम्भ' इति। अत्र भगवान्शौनकः—'पौर्णमासी तु संप्राप्ता या विवाहादनन्तरम्। ततः प्रक्रम्य कुर्वीत स्थालीपाकं तु पर्वसु ॥ तत्र यद्यप्यमावास्या विवाहानन्तरापतेत्। तथापि पौर्णमास्यादिस्थालीपाकक्रिया स्मृता' इति। बोधायनोऽपि—'सायंप्रातःक्रियाणां तु सायमारम्भ इष्यते। पौर्णमासस्य दर्शस्य प्रारम्भः पूर्णमासतः ॥ चतुर्थीहोममध्ये तु प्राप्यते यदि पूर्णिमा। प्रक्रम्य यागः कर्तव्यस्त्वन्वाधानपुरःसरः' इति ॥ अभ्युत्पत्तेः प्रागन्वाधानादिसंभवे न यष्टव्यमित्याह जैमिनिः—'विवाहादध्युपोष्यैव पौर्णमास्यामुपक्रमेत्। अन्यत्र सद्यस्कालो वा उपोष्यैव परेहनि' इति। अनेन वचनजातेन गृहप्रवेशहोमानन्तरं प्राप्तायां पौर्णमास्यामेवाव्यवधानेन प्रथमान्वाधानादिकं कर्तव्यमित्युक्तं, तत्राधिमासादिप्राप्तावपि तत्कर्म कर्तव्यमित्याहापरार्के कालादर्शकारः—'गोभूतिलहिरण्यानां संध्योपासनयोः क्रिया। पर्वहोमाश्चाग्रयणं साग्नेरिष्टिश्च पर्वणः ॥ नित्याग्निहोत्रहोमश्च देवतातिथिपूजनम्। स्नानं च स्नानविधिना चाभक्ष्यापेयवर्जितम्। पार्वणं

च निमित्तस्य नित्यत्वादुभयत्र च' इति । उभयत्र मलमासे शुद्धमासेऽपीत्यर्थः ॥ यत्तु तस्मिन्नेव मैत्रावरुणीयसूत्रम्—'पार्वणेष्टिश्चाग्रयणं संध्यौपासनकर्म च । अग्निहोत्रं पाकयज्ञानन्यानपि मलिम्लुचे । कुर्यान्नित्यादिकर्माणि न आरम्भमिति स्थितिः' इति । यदपि बृहस्पतिना—'आरम्भो दार्शपौर्णस्योरग्निहोत्रस्य चोदितः । प्रतिष्ठानं च कुर्मादेर्मलमासे विवर्जयेत्' इति ॥ संग्रहकारेणापि—'उपरागेऽधिमासे च यदि प्रथमपर्वणि । तदा मलिम्लुचे पौषे नान्वारम्भणमिष्यते ॥ अत्र पाठान्तरम्—'न तत्रारम्भणं कुर्यान्मौढ्ये तु गुरुशुक्रयो'रिति । गुरुभार्गवयोर्मौढ्ये चन्द्रसूर्यग्रहे तथा' इत्यादि । एतद्वचनजातमालस्यादिना स्वकालानुपक्रान्तान्वाधानादिप्रारम्भनिषेधविषयम् । तथाच अपरार्के गर्ग आह—'नामकर्म च दर्शेष्टिं यथाकालं समाचरेत् । अतिपाते सति तयोः प्रशस्ते मासि पुण्यभे' इति । तस्मात्कालप्राप्तप्रथमान्वाधानादिकमधिमासादिषु कर्तव्यमिति सिद्धम् । एतदुपक्रान्तानुपक्रान्तविशेषमधिकृत्य पर्वहोमादि मलमासादौ कर्तव्यमेवेति हेमाद्रिणा सयुक्तिकं प्रतिपादितम् । तथाच तत्रत्यबृहस्पतिवचनम्—'नित्ये नैमित्तिके कुर्यात्प्रयतः सन्मलिम्लुचे' इत्यादि । नित्यमावश्यकं तन्मासविशेषनिरपेक्षमेव विहितम् । तस्याकरणे कालात्यये निमित्तप्रायश्चित्तमाम्नायते । तद्यथा—'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयेदि'ति । तथाभूतस्य नित्यस्य ग्रहणं नतु नित्यमात्रस्य । तेन दर्शपूर्णमासाग्निहोत्रपञ्चमहायज्ञादेरनुष्ठानं मलिम्लुचेऽपि कर्तव्यमित्युक्तं भवति । नित्यादिसोमयागक्रिया मलिम्लुचे मासि न कार्या । मलिम्लुचमासातिक्रमेऽपि वसन्तादिकालस्य सोमयागाङ्गस्यानतिक्रान्तत्वेन प्रायश्चित्तप्राप्तेरसंभवात् । एवं नैमित्तिकस्य गृहदाहबालरोगशान्ति-

जातेष्ट्यादेर्नैमित्तानन्तरकाले कर्तव्यस्य मासान्तरे विहितकाललाभः, तथाभूतावश्यकक्रियाविषय एव मलिम्लुचे मासि कुर्यादिति विधानाम्। जातेष्ट्यादेर्नैमित्तिकस्यापि शिशुरक्षणार्थं निमित्तानन्तरकालमपहाय कालान्तरे कर्तव्यस्य यथा सूतकालमध्ये अनुष्ठानमन्याय्यं तथा मलिम्लुचमासमध्येऽपीति मलिम्लुचेऽननुष्ठानम्। एवं नित्यं नैमित्तिकं च विवक्षितम् यस्यातिक्रमे प्रायश्चित्तप्राप्तिः, यस्य च मासान्तरविहितकालालाभेनावश्यकं मलिम्लुचेऽनुष्ठानं तत्सर्वं मलिम्लुचे कुर्यादिति बार्हस्पत्यवचनस्य तात्पर्यार्थः प्रत्येतव्यः। तथाच स्मृत्यन्तरम्—'अनन्यगतिकं नित्यं कुर्यान्नैमित्तिकं तथा' इति। यस्य नित्यस्य मुख्यकालातिक्रमे जघन्यस्य कालान्तरस्यानभ्युपगतत्वादत्यन्तलोपप्रायश्चित्तं प्रसज्यते तत्कर्मानन्यगतिकं मलमासेपि कुर्यात्। गृह्यपरिशिष्टान्तरमपि—'मलं वदन्ति कालस्य मासं कालविदोऽधिकम्। नेहेचत्र विशेपेज्यामन्यत्रावश्यकाद्विधेः' इति। आवश्यकात्तु दर्शपौर्णमासादिविधेरन्यत्र विशेषेज्यां मलमासे नेहेत् नाचरेत्। यस्यां शुद्धे मासि क्रियमाणायां नास्ति विधेर्लोपःसा विशेषेज्या। यथा 'वसन्ते वसन्ते ज्योतिषा यजेते'ति वसन्तविहितज्योतिष्टोमस्य मलमासवैशाखपरित्यागेन शुद्धवैशाखे क्रियमाणस्य वसन्त एव कृतत्वान्नास्ति विधेर्लोपः। अनेनावश्यको विधिरधिमासेऽनुष्ठेय इत्यर्थादुक्तं भवति। उक्तंच साक्षादपि तत्रैव 'अवपद्धारहोमाश्च पर्व चाग्रयणं तथा। मलमासेऽपि कर्तव्यं काम्या इष्टीर्विवर्जयेत्' इति। अवपद्धारहोमा अग्निहोत्रौपासनवैश्वदेवादयः। पर्व दर्शपूर्णमासौ पार्वणस्थालीपाकश्च। आग्रयणमाग्रयणेष्टिः। इति हेमाद्रिप्रतिपादितकालनिर्णयः॥

अत्र श्रीमद्विद्यारण्यमुनीन्द्रैः कालनिर्णयप्रतिपादितप्रकारः प्रदर्श्यते। तत्र पैठीनसिः—'श्रौतस्मार्तक्रियाः सर्वा द्वा-

दशे मासि कीर्तिताः । त्रयोदशे तु सर्वास्ता निष्फला इति कीर्तिताः ॥ तस्मात्त्रयोदशे मासि कुर्यात्ता न कथंचन । कुर्वन्ननर्थमेवाशु कुर्यादात्मविनाशनम्' इति । अत्र निष्फले इत्यभिधानात्फलकामनया प्रवृत्तकर्म निषिध्यत इति गम्यते । तथाच स्मृत्यन्तरम्—'इष्ट्यादि सर्वकाम्यं तु मलमासे विवर्जयेत्' इत्यादि । नच सर्वास्ता इत्यभिधानान्नित्यनैमित्तिकयोरपि निषेधः शङ्कनीयः ।—'नित्ये नैमित्तिके कुर्यात्प्रयतः स मलिम्लुचे' इति बृहस्पतिवचनात् । जाबालिनापि तथैवोक्तम्—'नित्यं नैमित्तिकं चैव श्राद्धं कुर्यान्मलिम्लुचे । तिथिनक्षत्रवारोक्तं काम्यं नैव कदाचन' इति । योऽयं मलमासे काम्यनिषेधः सोऽसावारम्भसमाप्तिविषयः । 'अमूर्या नाम ये मासा न तेषु मम संमताः । व्रतानां चैव यज्ञानामारम्भाश्च समाप्तयः' इत्यारम्भसमाप्त्योरेवाधिमासे प्रतिषेधात् । आरम्भसमाप्त्योर्मध्यपातिन्यधिमासेऽपि तदारब्धं काम्यं कर्मानुष्ठेयम् ।—'अधिमासे निपतिते लोप एव विधिक्रमः' इति स्मरणात् । यत्तु काठकगृह्ये समाप्तिप्रतिप्रसववचनम्—'प्रवृत्तं मलमासात्प्राक्काम्यकर्मासमापितम् । आगते मलमासेऽपि तत्समाप्यं न संशयः' इति, तत्सावनमासप्रवृत्तं कृच्छ्रचान्द्रायणाहीनसत्रादिविषयम् । आवश्यकं तु यत्काम्यं कर्म तन्मलमासेऽप्यनुष्ठेयम् । तद्यथा—'प्रक्रान्तेषु द्विरात्रेषु दिवसेषु तेषु अभिचरतः प्रतिचरतश्च यदि कश्चिद्बालो ग्रहब्रह्मराक्षसादिना गृह्येत तदा रक्षोघ्नीष्टिः सद्य एव कर्तव्या । मलमाससमाप्तिप्रतीक्षायां बालादिमरणप्रसङ्गात् । साचेष्टिः काम्यकालखण्डे श्रूयते—'अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यदि रक्षांसि संचेरन्नग्निमेव रक्षोहणं स्वेन भागधेयेनोपधावति सएवास्माद्रक्षांस्यपहन्ती'ति । संचेरन् समवेयुः गृह्णीयुरिति यावत् । उपधावति तावता प्रियेण हविर्भागेन तोषयति । अस्माद्रक्षोगृहीता-

दिष्टिकर्ता रक्षांस्यपनयति । तथा तेषु अभिचरतः प्रतिचरतश्च काचिदिष्टिः श्रूयते—'आग्नावैष्णवमेकादशकपालं निर्वपेत्तद्भिचरन्निति । प्रति वै परस्तादभिचरन्तमभिचरति द्वेद्वे पुरोनुवाक्ये कुर्या'दिति च द्वयोरप्येकैवेष्टिः । अभिचरत एका पुरोनुवाक्या प्रतिचरतस्तु द्वेद्वे इति विशेषः । कालविलम्बनप्रतीक्षात्र न संभवति । बाधके शत्रौ प्रत्यासन्ने सति तदैवाभिचारस्य कर्तव्यत्वात् प्रतिचारस्यापि सएव कालः । एतयैव यजेताभिचार्यमाण इति वर्तमानवाचिशानच्प्रत्ययान्तेन शब्देन प्रतिचारकर्तुरभिचारसमकालत्वविशेषणत्वात् । एवं प्रबलज्वररोगादिना यदा मृत्युः प्रसक्तस्तदापि सद्यएवेष्टिः कर्तव्या । इष्टिस्तु श्रूयते—'यो मृत्योर्बिभीयात्तस्मादेतां प्राजापत्यां शतकृष्णलां निर्वपेत्प्रजापतिमेव स्वेन भागधेयेनोपधावति सएवास्मिन्नायुर्दधाति सर्वमायुरेती'ति । कृष्णलान्सुवर्णशकलानि यवपरिमितानि । तानि च शतसंख्यानि यस्यां निर्वापणीयानि सेष्टिः शतकृष्णला । यदा वृष्ट्यभावात्सस्यानि शुष्यन्ति मलमासश्चागतस्तदा 'कारीर्या वृष्टिकामो यजेते'ति विहितेष्टिर्न कालविलम्बं सहते । एवं स्मार्तान्यप्यावश्यकान्युदाहरणीयानि । नित्यनैमित्तिकयोरपि यदनन्यगतिकं तन्मलमासेऽपि कार्यम् । 'अनन्यगतिकं नित्यं कुर्यान्नैमित्तिकं तथा' इयि स्मरणात् । काठकगृह्येपि—'कुर्यादनन्यगतिकनित्यनैमित्तिकीं क्रियाम्' इति । अनन्यगतिकानि नित्यानि गृह्यपरिशिष्टे उदाहृतानि'अवपद्धारहोमाश्च पर्व चाग्रयणं तथा । मलमासेऽपि कर्तव्याः काम्या इष्टीर्विवर्जयेत्' इति । अवपद्धारहोमा अग्निहोत्रौपासनवैश्वदेवादयः । पर्व दर्शपूर्णमासौ पार्वणः स्थालीपाकश्च । दर्शादीनां नित्यसमकरणे प्रत्यवायश्रवणादवगन्तव्यम् । तथाचाथर्वणिका आमनन्ति—'यस्याग्निहोत्रमदर्शपौर्णमासमनाग्रयणमतिथिवर्जितं च हुतमवैश्वदेवमविधिना हुत-

मासत्वमांसस्य लोकान्हिनस्ती'ति । गत्यन्तरयुक्तानि तु नित्यानि तत्र वर्ज्यानि । तदुक्तं काठकगृह्यपरिशिष्टे—'सोमयागादि-कर्माणि नित्यान्यपि मलिम्लुचे । पष्ठीष्ट्याग्रयणाधानचातुर्मास्यादिकान्यपि ॥ महालयाष्टकाश्राद्धोपाकर्माद्यपि कर्म यत् । स्पष्ट-मासविशेषे ख्याद्विहितं वर्जयेन्मले' इति । सोमयागो वसन्ते विहितः तस्य मलमासेऽपि शुद्धमासेऽनुष्ठानासंभवात्सगतिकत्वम् । पष्ठीष्टिः कठशाखादौ प्रसिद्धा । नचाग्रयणस्य सगतिकागतिकयोरुदाहरणं विरुद्धमिति शङ्कनीयम् । तस्य मलमासेऽपि विकल्पित-त्वात् । तदाह पैठीनसिः—'संक्रान्तिरहिते मासि कुर्यादाग्रयणं नवम्' इति । अनन्यगतिकानि नैमित्तिकानि ग्रहणस्नानादीनि । तेषा मलमासेऽपि कर्तव्यत्वमाह यमः—'चन्द्रसूर्यग्रहस्नानश्राद्धदानजपादिकम् । कार्यं च मलमासेऽपि नित्यं नैमित्तिकं तथा' इति । सगतिकानि तु नैमित्तिकादीनि जातेष्ट्यादीनि 'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इति विहितायाः इष्टेराशौचेऽव-सिते यथानुष्ठानं तद्वन्मलमासेऽप्यवसितेऽनुष्ठातुं शक्यत्वात्सगतिकत्वम् । अनेनैतदुक्तं भवति—यथोक्तरीत्या काम्यमावश्यकं अन-न्यगतिके नित्ये नैमित्तिके अपि मलमासे कार्ये नेतराणीति ॥ इतीष्ट्युपक्रमकालनिर्णयः ॥ ॥

अथ प्रतिपत्पर्वसंधिकालनिर्णयः । एवं निश्चिते पर्वखण्डे तत्र यागकालो निर्णीयते । अत्र भगवान्शौनकः—'प्र-तिपत्पञ्चदश्योर्यः संधिः पर्वेति तत्स्मृतम् । या तेन युक्ता प्रतिपत्तस्यां कर्मेदमाचरेत्' इति । अत्र श्रुतिः—'संधौ यजेते'ति । संधेः सूक्ष्मकालत्वात्तन कर्मणः साङ्गानुष्ठानासंभवात्तत्पार्श्वद्वयं लक्ष्यते । अतएव 'संधिमभितो यजेते'ति श्रुत्यन्तरम् । काल-निर्णये बोधायनोऽपि—'सूक्ष्मत्वात्संधिकालस्य संधेर्विषय उच्यते । सामीप्यं विषयं प्राह पूर्वेणाप्यपरेण च' इति । तदप्रमाण-

मुक्तं यज्ञपार्श्वेन—'पञ्चदश्याः परः पादः पक्षादेः प्रथमास्त्रयः । कालः पावर्णयागे स्यात्तथान्ते तु न विद्यते' इति । वृद्धशातातपेनापि—'पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः । यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः' इति । अत्र प्रातरिति विशेषणात्सूर्योदयादुपरि मुहूर्तत्रयं यागकाल इत्युक्तं भवति । आचार्योऽपि—'कुर्वन्निष्टिं विजानीयात्पर्वसंधिं विचक्षणः । स भवेत्पञ्चदश्यन्ते प्रथमादौ च सर्वदा ॥ पञ्चदश्याश्चतुर्थांशश्चाद्याः प्रतिपदस्त्रयः । इष्टिकालो द्विजातीनां होमेष्वाग्निमतां शुभः ॥ प्रतिपद्यश्चतुर्थांशात्प्रागेवेष्टिं समापयेत् । पञ्चदश्याश्चतुर्थांशे यत्नादेवं समापयेत्' इति । तत्र तिथिद्वैधे चतुर्दश्यामपि प्रातरेवान्वाधानं कर्तव्यमित्याह सएव—'पौर्णमासस्य दार्शस्य काम्यादीनां च मानवः । अनुमत्यां च कुह्वां च पूर्वाह्णे च प्रयत्नतः ॥ प्रारभेत सिनीवाल्यां राकायां प्रातरेव हि' इति ॥ ॥ सिनीवाल्यादीनां लक्षणमाह सएव—'दृष्टचन्द्रा सिनीवाली वृद्धौ कृष्णा भवेद्यदा । नष्टचन्द्रा कुहूर्ज्ञेया क्षये पञ्चदशी च सा' इति । इति पर्वसंधिनिर्णयः ॥ ॥ अथ संधिकालविशेषाद्यागकालविशेष उच्यते गोभिलेन—'आवर्तने यदा संधिः पर्वप्रतिपदोर्भवेत् । तदहर्याग इष्येत परतश्चेत्परेऽहनि ॥ पर्वप्रतिपदोः संधिरर्वागावर्तनाद्यदि । तस्मिन्नहनि यष्टव्यं पूर्वेद्युस्तदुपक्रमः ॥ आवर्तनात्परः संधिर्यदि तस्मिन्नुपक्रमः । परेद्युरिष्टिरित्येष पर्वद्वयविनिश्चयः' इति । आवर्तनमहर्मध्यकालः । लौगाक्षिरपि—'पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते । उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते ॥ अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते । उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते' इति । अत्राप-

पाठा०—१ स्यात्पावान्तेतु । २ तावदग्निमताम् ।

राद्ध इति आवर्तनादुपरितनकाल उच्यते। अत्र ह्रासवृद्धिसमीकरणेन संधिः कल्पनीय इत्याह कात्यायनः—'परेद्यि घट्यो या न्यूनास्तथैवाभ्यधिकाश्च याः। तदर्धकृत्या पूर्वस्मिन्ह्रासवृद्धी प्रकल्पयेत्'॥ लौगाक्षिरपि—'तिथेः परस्या घटिकाश्च याः स्युर्न्यूनास्तथैवाभ्यधिकास्तु तासाम्। अर्धं वियोज्यं च तथा प्रयोज्यं ह्रासे च वृद्धौ प्रथमं दिने तत्' इति। अस्यार्थः—पूर्वेद्युरमावास्या पञ्चदशघटिका परेद्युः प्रतिपदपि तावती तदा यथास्थितमेवोपजीव्य संधिर्विज्ञेयः। यदा तु प्रतिपदः षड्घटिकोदयः तदा घटिकात्रयक्षयोऽमावास्यायां योजनीयः। तस्मिन्योजिते द्वादशघटिकामावास्या भवति तथा सत्यावर्तनात्पूर्वं संधिर्भवति। अनेनैव न्यायेन घटिकात्रयवृद्धौ योजितायाममावास्याऽष्टादशघटिका भवति। तथा सत्यावर्तनादूर्ध्वं संधिर्भवति। तदेवं संधीन्विभाय तदनुसारेणान्वाधानेष्टी अनुष्ठातव्ये इति। यत्तु हेमाद्रौ हारीतवचनम्—'पर्वणोंऽशे तुरीये तु कर्तव्येष्टिर्द्विजातिभिः। द्वितीयासहितं यस्माद्दूषयन्त्याश्वलायनाः'। यच्चाश्वलायनवचनम्—'द्वितीयामाश्रिता वर्ज्या प्रतिपत्सर्वदा द्विजैः। षोडशी वा पञ्चदशी सपत्नीकैर्विशेषतः॥ प्रतिपत्स्वपि वर्ज्या स्याद्या तु सप्तदशात्मिका। यदास्तमययुग्मेऽपि प्रतिपद्या तिथिस्तदा। पूर्वोत्तमयवेलायामिष्टिं कृत्वा समापयेत्॥ यदास्तमययुग्मेपि न च स्यात्प्रतिपत्तिथिः। सेष्टिर्द्विजैस्तदा कार्या तस्यामपि विचक्षणैः' इति। अनेन वचनजातेन पर्वणो द्वितीयांशेऽपीष्टिः कर्तव्येत्युक्तं भवति। तथाच हेमाद्रौ हारीतवचनम्—'पर्वणोंऽशे द्वितीये तु कर्तव्येष्टिर्द्विजातिभिः। द्वितीयामहितं यस्माद्दूषयन्त्याश्वलायनाः' इति। एतद्वचनजातस्यायमभिप्रायः—बह्वृचानां द्वितीयामहितां प्रतिपदं निषिध्य पर्वद्वितीयांशादिषु यष्टव्यमित्युक्तं भवति। तदेतत्प्रतिपत्प्रथमांशे यागसमाप्तेरसंभवात् बह्वृच-

नविरोधाचोपेक्षणीयम् । अथवा बह्वृचब्राह्मणोक्तप्रकारेण पैङ्ग्यमतानुसारिणामेव तदनुष्ठानमिति योजनीयम् । तथाच ब्राह्मणम्—'पूर्वां पौर्णमासीमुपवसेदिति पैङ्ग्यमुत्तरामिति कौषीतकं या पूर्वा पौर्णमासी साऽनुमतिर्योत्तरा सा राका' इति । अस्यार्थः श्रीमद्विद्यारण्यमुनीन्द्रैः स्पष्टीकृतः—खण्डतिथिवशाद्यदा दिनद्वये पौर्णमासी तिथिः संबध्यते तदानीमनुमतिसंज्ञां पूर्वां पौर्णमासीमुपोष्य परेद्युर्यजेतेति सामशाखाप्रवर्तकस्य पैङ्ग्यमहर्षेर्मतम् । उत्तरां राकासंज्ञां पौर्णमासीमुपोष्य परेद्युर्यजेतेति ऋक्शाखाप्रवर्तकस्य कौषीतकमहर्षेर्मतम् । पौर्णमासीन्यायममावास्यायामपि दर्शयति—'या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहू'रिति । अत्राप्युपवासयागनिर्णये मतभेदः पूर्ववद्द्रष्टव्यः । अत्र पूर्वोत्तरविभागनिर्णयाय कर्मोपयोगिन्यास्तिथेः स्वरूपं दर्शयति—'यां सूर्यः पर्यस्तमियादभ्युदियात्सा तिथिरि'ति । अमावास्यां पौर्णमासीं वा यां परिप्राप्य सूर्योऽस्तमियात् तथा यामभिलक्ष्य सूर्य उदियात् सेयमुदयास्तमयव्यापिनी कर्मोपयुक्ता तिथिः । तादृश्यां तिथावुदयास्तमययोर्मध्ये पूर्वोत्तराभ्यां चतुर्दशीप्रतिपद्भ्यां मिश्रणे सति पर्वद्वैविध्यं भवति । तस्मिन्द्वैविध्ये पूर्वोक्तमतद्वयं द्रष्टव्यमिति ॥ ॥ पर्वणि समापननिषेधमाह मनुः—'प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यते । पुनः प्रणीय कृत्स्नेष्टिः कर्तव्या यागवित्तमैः' इति । तस्याः प्रतिपदश्चतुर्थांशे यागं निषिध्यति कात्यायनः—'न यष्टव्यं चतुर्थेऽशे यागैः प्रतिपदः क्वचित् । रक्षांसि तद्विलुम्पन्ति श्रुतिरेषा सनातनी' इति । आचार्योऽपि—'यस्य न प्रारभेतेष्टिमन्त्यांशे पर्वणो द्विजः । प्रतिपद्यश्चतुर्थांशात्प्राङ्श्च न समापयेत् ॥ कृता चाप्यकृतेवेष्टिस्तयोः

---

पाठा०—१ प्रागयस्त्वां न ।

स्यान्न संशयः । पुनरेवाचरेदिष्टिं शुभेऽहनि यथाविधि' इति ॥ शुभेऽहनि पर्वसमापनतिथावित्यर्थः । तदाह सएव—'मासस्य पर्वषट्काणि संप्रोक्तानि मनीषिभिः । पञ्चम्यौ पञ्चदश्यौ च दशम्यौ नाप्युदीरिते ॥ व्रतबन्धुदयादाशु प्रतिपर्वसु यो द्विजः' इति ॥ ॥ अस्य प्रतिपच्चतुर्थ्यशननिषेधस्य प्रतिप्रसवमाह शातातपः—'संधिर्यद्यपराह्णे स्याद्यागं प्रातः परेहनि । कुर्वाण' प्रतिपद्भागे चतुर्थेऽपि न दुष्यति' इति ॥ ॥ अथ सद्यस्कालविधिरुच्यते । तत्र कारिकाकारेण—'सद्यस्कालो भवेद्यद्वा पौर्णमासस्तु पार्वण' इति । आपस्तम्बोऽपि—'पौर्णमास्यां त्वन्वाधानपरिस्तरणोपवासाः सद्यो वा सद्यस्कालो यागः सर्वः कि-पने' इति । तल्लक्षणमाह कात्यायनः—'संधिश्चेत्संगवादूर्ध्वं प्राक्पर्यावर्तनाद्रवेः । सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः' इति ॥ भाष्यार्थसंग्रहकारोऽपि—'अन्वाहितिश्च स्तरणोपवासौ पूर्वेद्युरेते खलु पौर्णमास्याम् । आवर्तनात्प्राग्यदि पर्वसं-धिर्न्नदैव यागः क्रियते समस्तः' इति । कालादर्शे—'पूर्णिमाप्रतिपत्संधिर्यदि संगवमन्तरा । आवर्तनं च स्याचर्हि सद्यस्कालवि-धिर्भवेत्' इति ॥ ॥ अमावास्यायामपि सद्यस्कालविधिरुक्तो नारदपुराणे—'मध्याह्नद्वितये स्यातामभावास्या च पूर्णिमा । परेद्युरेव विप्रेन्द्राः सद्यस्कालो विधीयते ॥ पर्वद्वये परेद्युः स्यात्संगवात्परतो यदि । सद्यस्कालं परेद्युः स्याज्ज्ञेयमेवं तिथिक्षये' इति ॥ ॥ अथ विकृतीष्टिकालमाह त्रिकाण्डमण्डनः—'आवर्तनात्प्राग्यदि पर्वसंधिः कृत्वा तु तस्मिन्प्रकृतिं विकृत्याः । नदैव यागः परतो यदि स्यात्तस्मिन्विकृत्याः प्रकृतेः परेद्युः' । अस्यार्थः—आवर्तने ततः पुरा वा पर्वसंधौ तस्मिन्संधिदिने

पाठा०—१ प्रथम ।

प्रथमं प्रकृतियागं कृत्वा पश्चादाग्रयणादिविकृतियागः कर्तव्यः । यदा आवर्तनात्परतः संधिस्तदा केवलविकृतियागः संधिदिने कर्तव्यः । प्रकृतियागस्तु संधिदिनात्परेद्युरनुष्ठेय इति ॥ हेमाद्रावपि—'आद्ययोः कल्पयोः कुर्याद्विकृतिं प्रकृतेः पुरा । अन्यत्र विकृतिं तत्र कुर्यादूर्ध्वः प्रकृतिर्भवेत्' इति ॥ इति ॥

अथ पुनरिष्टिकालनिर्णय उच्यते कालनिर्णये आपस्तम्बेन—'षोडशेऽहन्यभीष्टेष्टिर्मध्या पञ्चदशेऽहनि । चतुर्दशे जघन्येष्टिः पापा सप्तदशेऽहनि' इति । अस्यार्थः—पूर्वप्रतिपदिनमारभ्य गणनायामागामिप्रतिपद्यदा षोडशदिनं भवति तत्रेष्टिरभीष्टोत्तमा । ततः पूर्वस्मिन्पञ्चदशदिने मध्यमा । ततः पूर्वस्मिंश्चतुर्दशदिने जघन्या । तदेवं कालत्रयं विहितम् । उत्तमकालात्षोडशदिनादूर्ध्ववर्तिनि सप्तदशदिने प्रतिषिद्धेति ॥ हेमाद्रावपि—'ऊने पञ्चदशे याज्या षष्ठे याज्या तु षोडशे । ऊने चाभ्यधिके चापि नेष्या सप्तदशे क्वचित्' इति । अत्र षोडशेऽहन्यभीष्टेष्टिरिति श्लोकस्य चन्द्रिकाकारकृता व्याख्यात्र लिख्यते—इष्टिं न कुर्यान्नान्वारभेतेति तत्रान्वाधानमेव निषिध्यते न यागः । तथात्वे तिथिवृद्धौ इष्टेरनुष्ठानमेव न स्यात् । अतो यजनीयादारभ्य सप्तदशेऽहनि औपवसथ्यं कर्म न कार्यमित्यवगन्तव्यम् । अतएव बोधायनः—'यद्यौपवसथं कर्म यजनीयात्त्रयोदशे । भवेत्सप्तदशे वापि तत्प्रयत्नेन वर्जयेत्' इति । ननु च दिनद्वयस्य क्षयवृद्ध्योरसंभवात्त्रयोदशेऽह्नि सप्तदशे वा कदाचिदप्यौपवसथ्यं कर्म न प्राप्तमिति कथं निषेधः । उच्यते—यद्यप्राप्तस्तर्हि नान्तरिक्षे न दिवीतिवन्नित्यानुवाद इति सर्वमनवद्यम् । इति पर्वकालनिर्णयः ॥ ॥

पाठा०—१ त्रयोदशम् ।

एवं पर्वकालं निश्चित्येदानीं तत्र कर्तव्यं कर्म निरूप्यते । तत्र गृह्यम्—'अथ पार्वणः स्थालीपाकस्तस्य दर्शपूर्णमासाभ्यामुपवास इध्माबर्हिषोश्च संनहनम्' इति । अस्यार्थः—अथशब्दो मङ्गलार्थः । पर्वणि भवः पार्वणः । स्थाल्यां पच्यत इति स्थालीपाकः । इह तु तद्वदिष्टं कर्म विवक्षितम् । विवाहानन्तरं या पौर्णमासी तस्यामस्य प्रथमप्रारम्भः । तस्य ग्रहणं नियमार्थम् । तस्यैवोपवासो यथा स्यादनिर्दिष्टानां माभूदिति । दर्शपूर्णमासाविति कर्मनामधेयम् । उपवास इति दंपत्योरेकभोजनं सर्पिर्मिश्रं अक्षारलवणमपिशितमित्यादयश्च नियमा लक्ष्यन्ते । तथाचापस्तम्बः—'अमावस्यमावास्यमाज्येनाश्नीयातां तदभावे दध्ना पयसा वा' इति । दर्शपूर्णमासाविति । तत्र इध्माबर्हिषी सन्नह्येदिति ॥ उपवासस्य कारणं श्रूयते—'तदाहुर्यद्दर्शपूर्णमासयोरुपवगति नह्यवा अव्रतस्य देवा हविरश्नन्ति तस्मादुपवसत्युत्तमे देवा हविरश्नीयुः' इति ॥ तैत्तिरीयब्राह्मणमपि—'पूर्वेद्युरिध्माबर्हिः करोति । यज्ञमेवारभ्य गृहीत्वोपवसति' इति ॥ ॥ तत्रान्वाधानकालमाह कारिकाकारः—'प्रातरौपासनं हुत्वा समिधौ द्वे निधाय च । अथवा तिस्र आदध्यात्क्रतुसंकल्पपूर्वकम्' इति । तथाहापस्तम्बः—'प्रातरग्निहोत्रं हुत्वान्यमाहवनीयं प्रणीयाग्नीनन्वादधाति' इति । भगवानपि—'अग्निं विहृत्य पूर्वेद्युस्तत्रान्वाधानपूर्वकम् । परिस्तरणपर्यन्तं पुरस्तात्तन्त्रमाचरेत्' इति ॥ पूर्वेद्युः परिस्तरणे कारणं श्रूयते—'उपास्मिन्श्वो यक्ष्यमाणे देवता वसन्ति य एवं विद्वानग्निमुपस्तृणाति' इति । एतत्परिस्तरणं सायमौपासनहोमानन्तरं कर्तव्यम् । तथाच सायंहोमानन्तरं परिस्तरणविधिमाहापस्तम्बः—'ततः संप्रोक्ष्यति परिस्तृणीत परिषिञ्चति परिहितोऽग्निर्यजमानं भुनक्तु । अपाꣳरस ओषधीनाꣳसुवर्णाः । निष्का इमे यजमानस्य सन्तु कामदुघाः । अमुत्रामुष्मिँल्लोके

इति परिस्तरणीमेतामेके समामनन्ति उदगग्रैः प्रागग्रैश्च दर्भैरग्निं परिस्तृणीयादुदगग्राः प्रागग्राश्च पश्चात्पुरस्ताच्चैनत्कुशोपवसति' इति। तत्र कर्तव्यव्रतमुच्यते कारिकाकारेण—'भुञ्जीयातामहन्येव मांसमाषादिवर्जितम्। निश्यधश्च शयीयातां दंपती मैथुनं न च' इति॥ चन्द्रिकायां पुलस्त्यः—'सकृत्पर्वणि सर्पींषि हविष्यं लघुभोजनम्। न सायं सोपवासः स्यात्तैलामिषविवर्जितम्' इति। सांख्यायनोऽपि—'कलहक्रीतविक्रीतं प्रहासं बहुभक्षणम्। तूर्यत्रिकं वृथाशय्यां यक्ष्यमाणो विवर्जयेत्' इति॥ जाबालिरपि—'करम्भांश्च कुलित्थांश्च वर्जयेत्कोद्रवांस्तथा। अनृतं बहुभाषां च क्रयं विक्रयमेव च॥ दन्तशौचं च पूर्वेद्युर्भोगस्त्रैतानि वर्जयेत्। मसूराँल्लवणं क्षारांश्चणकान्कोरदूषकान्। माषान्मधु परान्नं च वर्जयेत्पर्वणि द्विजः' इति। एतद्व्रतमावश्यकम्। अकरणे प्रायश्चित्तश्रवणात्॥ तदाह कारिकाकारः—'पर्वण्यत्राश्रुपाते तु कुर्याद्व्रतभृते चरुम्। पर्वणि व्रतलोपे तु कुर्याद्व्रतपतिं चरुम्' इति। ऋग्विधाने—'यस्य लुप्येद्व्रतं मोहाद्व्रात्यैर्वा संविशेत्सह। उपोष्य जुहुयादाज्यं त्वमग्नेसप्रथा असि' इति। इति पर्वणिकर्तव्यविधिः॥ ॥ अथापरेद्युः कर्तव्यमाह कारिकाकारः—'अपरेद्युर्हुनेत्प्रातः परितस्त्रिः समुह्य च। पाणिना सोदकेनाग्नेः समन्तात्परिमार्जनम्। तत्समूहनमत्रेष्टं जयन्तवचनं यथा॥ दिक्षु सर्वासूदक्संस्था प्राच्यादिषु परिस्तृतिः। पवित्रान्तर्हिते शूर्पे व्रीहिमुष्टिचतुष्टयम्॥ निर्वपेदग्नयेत्यादिमन्त्रेणावर्तयेत्ततः। निर्वपेदपरं त्वग्नीषोमाभ्यां त्वेति मन्त्रतः॥ उद्धृत्य च चरोरर्धमभिमृश्येदमग्नये। इतीदमग्नीषोमाभ्यामिति त्वभिमृशेत्परम्' इति। अत्र साधारण्येनोक्ताः शिष्टाः कारिकाश्चाग्निमुखप्रकरणे लिखिता-

पाठा०—१ प्रवास बहुभाषणम्। २ पर्वण्याश्रुषु।

स्तत्रैव द्रष्टव्याः । इदमत्र गृह्यम्—'देवताश्चोपांशुयाजेन्द्रमहेन्द्रवर्जम्' इति । अस्यार्थः—देवताश्च ताभ्यां व्याख्याताः । उपांशुयाजादिवर्जम् । तेनाग्निरग्नीषोमौ पौर्णमास्याम् । अग्निरिन्द्राग्नी अमावास्यायाम् ॥ संनहनरहितत्वादत्रैन्द्रमहेन्द्रवर्जमित्युक्तम् । तथाच गृह्यपरिशिष्टम्—'अग्निरग्नीषोमौ च पौर्णमास्यां देवते अग्निरिन्द्राग्नी चामावास्यायाम्' इति । गृह्यम्—'काम्या इतराः' इति । उक्ताभ्योऽन्या या उपांशुयाजाद्याः देवतास्ताः काम्या भवन्ति । काम्ये सति कर्तव्या इत्यर्थः । 'विष्णुं शुभूषन्यजेते'त्येवमादयः काम्याः । उक्तं तस्यै देवतायै इत्यस्य गृह्यस्य साधारण्येनोक्तत्वात्तदस्माभिरग्निमुखप्रकरणे लिखितम् ॥ अत्र भगवान्—'उत्तरत्र दिने हुत्वा प्रातरौपासनं ततः । तत्परिस्तरणादूर्ध्वं प्रणीतासादनान्तकम् ॥ तन्त्रं पुरस्तनं तत्र समाचर्य यथाविधि ॥ यद्वा तदहरेवैतदन्वाधानपुरःसरम् ॥ पुरस्तात्तन्त्रमखिलमाचरेदवधानतः ॥ चतुर्निर्वापणं कुर्यात्पौर्णमास्यां पुरोऽग्नये । निर्वापमग्नीषोमाभ्यामपि पश्चात्समाचरेत् ॥ निरुप्य त्वग्नये पूर्वममावास्यातिथावपि । इन्द्राग्निभ्यां तु निर्वापं पश्चात्कुर्याद्यथाविधि ॥ चतुर्निर्वपणादूर्ध्वं तन्त्रशेषं पुरस्तनम् । विधाय पूर्ववत्सर्वं होमे तु समुपस्थिते ॥ पौर्णमास्यां तु मन्त्रेण जुहुयात्पूर्वमग्नये—। स्वाहेत्यथाग्नीषोमाभ्यां स्वाहेति जुहुयात्क्रमात् ॥ पूर्वं हुत्वाग्नये स्वाहेत्यमावास्यातिथौ क्रमात् । पश्चादुदीर्येन्द्राग्निभ्यां स्वाहेति जुहुयात्क्रमात् ॥ अथोपरिष्टात्तन्त्रं च यथाविधि समापयेत् । हुतशेषं हविर्यत्तद्दक्षिणा तत्र कीर्तिता' इति ॥ ॥ अत्र सूतकादौ प्राप्ते इष्टेः कर्तव्यतामाहाचार्यः—'तौ चापि सूतके शावे पर्वणीष्टी महापदि । स्त्रीधर्मिण्यां च भार्यायां न कुर्यातां कदाचन' इति । ताविति प्रकरणात् श्रौतस्मार्तकर्मानुष्ठातारौ । स्त्रीधर्मिण्यामिति । स्त्रीधर्मो रजः तद्वती स्त्रीधर्मिणी । 'स्त्रीधर्मिण्यविरात्रेयी

मलिनी पुष्पवत्यपि' इत्यभिधानात्। एतद्व्रतग्रहणात्पूर्वकालप्राप्तविषयम् ॥ व्रतग्रहणे तु कृते यागकर्तव्यता श्रूयते—'यस्य व्रत्येहन्पत्न्यनालंभुका भवति तामपरुध्य यजेते'ति। अस्यार्थं प्रसङ्गादाह रुद्रदत्तः—'व्रतार्हमहर्व्रत्यमहः। तच्चौपवसथ्यम्। तत्रैव व्रतोपदेशात्। तस्मिन्नहनि यदि पत्न्यार्तववशादनालंभुका स्पर्शनानर्हा स्यात्तदा तया विना कुर्यादेव तत्कर्मेत्यर्थः। तद्यथा—पर्वणा। दर्शपूर्णमासाभ्यामिति शेषः। अथवा व्रतशब्दः कर्मवाची। यथा शिक्षितव्रतेनेत्यादौ तत्प्रतिनियतमहर्व्रत्यमहः। तस्मिन्ननालंभुकायामपि पत्न्यां तया विना कुर्यादेव तत्कर्मेत्यर्थः। पर्वणी दर्शपूर्णमासौ अमावास्यायां पिण्डपितृयज्ञः सायंप्रातरग्निहोत्रमित्यादि। व्रत्येहन्निति वचनाद्यदेतत्प्रनियतं तत्रानालंभुकायां तन्न क्रियते। एतदुक्तं भवति—यस्मिन्काले यदक्रियायां प्रत्यवायः प्रायश्चित्तं वाभ्यसेत् आपतेदित्यर्थः। स तस्य मुख्यः कालः। तत्र तदनालंभुकायामपि क्रियते। तेन काम्येष्टयः पशुसोमाश्च यस्मिन्पर्वणि अनालंभुका न तस्मिन्क्रियन्त एव। एतस्मिन्यदा प्रक्रान्ता भवन्ति प्रक्रान्तस्य कर्मणस्तत्कालप्रतिनियमादिति। इति सूतकादौ इष्टिप्रकारः॥

अथातिपन्नहोमकालः। अत्रातिपन्नहोमं तु सूतकादिनिवृत्तौ कुर्यात्। तत्र कारिका—'स्थालीपाके त्वतिक्रान्ते यद्यन्याग्नौ स्वयं यजेत्। स्वाग्नावन्यो यजेद्यद्वा कार्यः पथिकृतश्चरुः' इति। इदमत्र सूत्रम्—'यद्यमावास्यां पौर्णमासीं वातीयाद्यदि वान्योन्याग्निषु यजेत यदिवाऽस्यान्योऽग्निरग्नीन्व्यपेयाद्यदिवास्याग्निहोत्र उपावसन्ने हविषि वा निरुप्ते चक्री वा श्वा वा पुरुषो वा विहारमन्तरियाद्यदिवाध्वनि प्रमीयेतेष्टिरग्निः पथिकृदि'ति। अस्यार्थः—यद्यमावास्यां पौर्णमासीं वा स्वकाले अकृत्वातीयात् अन्यस्याग्निषु वा यागं कुर्यात्। अस्याग्निष्वन्यो वा यजेत अस्याग्नीनन्यो वा अग्निर्व्यपेयात्। अथवाऽस्याग्निहो-

मद्ध्ये कुशेपूपमादिते दर्शपूर्णमासादिषु वा हविषि निरुप्ते चक्री रथशकटादि श्वा पुरुषो वा मनुष्यजातिः सर्वासीनां मध्ये-चातिक्रामेत् । अथवा यजमानोऽध्वनि म्रियेत यस्मिन्ग्रामे अग्नय आसते तस्माद्ग्रामादन्तरे म्रियेतेत्यर्थः । एतेषु निमित्तेष्विष्टिः कर्तव्या । अग्निः पथिकृत्त्वात्, इयं देवताभिः पथिकृद्गुणकः । इयंच निमित्तानन्तरं कर्तव्या । ततो वर्तमानं समाप्य समयेष्टिः कर्तव्या । दर्वीहोममध्ये । दर्वीहोमो नित्यहोमः । इष्टिमध्ये तु तदेव तन्त्रमुपजीव्य तत्रैव यागः कर्तव्यः । प्रागिष्टेरिति वचनं पूर्वाया इष्टेः प्रागेवेयं कर्तव्येत्येतमर्थमिति । स्वकाले कृत्वा अतीयादित्यत्र स्वकालशब्देनागामिचतुर्दशीपर्यन्तं कालो विवक्षितः । अनन्तरपर्वणि तु प्राप्ते पथिकृत्पूर्वकमतीतयागं कुर्यात् ॥ तथाह भगवान्—'स्थालीपाकमतिक्रामेद्यदि तद्यत्र कुत्रचित् । दिवसे तत्र कर्तव्यमेवत्तु स्मार्तकर्मणः ॥ तत्रापि तदतिक्रामेत्कार्यं पर्वण्यनन्तरे । पथिकृद्धोमपूर्वं तु कर्तव्यमवधानतः ॥ चतुर्निर्वपणं तत्र पूर्वं-पथिकृतेऽग्नये । अन्याभ्यो देवताभ्यस्तु चरमं जुहुयात्क्रमात् ॥' अन्ये तु पथिकृद्धोमं स्वतन्त्रं कर्म मेनिरे । ते तु कृत्वा पुरस्तन्त्रं प्रणीतागादनान्वकम् ॥ निर्वापप्रोक्षणे कृत्वा चरुः पथिकृतेऽग्नये । अथोपरिष्टात्तन्त्रं च यथाविधि समाप्य च ॥ अतिक्रान्तं च कुर्वीत स्थालीपाकं यथा पुरा' इति । अस्यार्थः—प्रतिपदि कर्तव्यस्थालीपाकादिक्रमेण आगामिचतुर्दशीपर्यन्तेषु तिथिषु यत्र कुत्रचित् स्थालीपाकः कर्तव्यः । तत्राप्यतिक्रमणे अनन्तरे पर्वण्येव पथिकृत्पूर्वकमतिपन्नहोमं कुर्यादिति ॥ ॥ तत्रापि तिथिविशेषमाहाचार्यः स्मृतिरूपेण—'शुभेऽहनि तु कार्या स्यादिष्टिः पश्चात्ततः परम् । नातीतेष्टिश्चतुर्दश्यां चतुर्थ्यां मध्य-पञ्चमे । नवम्यां च द्वितीयायां कार्या स्याहुतयस्तथा' इति । मध्य-पञ्चमे मध्ये पर्वमध्ये । अष्टम्यामित्यर्थः । पञ्चमे पञ्चमदिवसे पञ्च-

स्यामित्यर्थः । यत्तु चन्द्रिकायामुक्तम्—'पौर्णमास्यत्यये हव्यं होता च यदहर्भवेत् । तदहर्जुहुयादेवममावास्यात्ययेपि च' इति। हव्यं हविः । होता ऋत्विक् । अत्र कृतापि पाथिकृती विकृतीष्टिर्वैश्वानरी. अतिपन्ना कार्या ॥ एतदपि यावदन्यस्य पर्वणो न कालः । तत्मात्ती तु प्रायश्चित्तमेव न पुनरतिपन्नानुष्ठानम् । अधिकारान्तराविरोधेन पूर्वाधिकारो निवृत्तः । तदुक्तं भाष्यकारेण—'ततो दर्शं पूर्णमासं वा यावदन्यो न.पर्वकालः' इति । तदेतच्छाखान्तरविषयम् । आश्वलायनानां तु अतिपन्नेष्टेरित्यन्तरग्रहणात् ॥ ॥ पर्वद्वयात्यतिक्रमणे निर्णयमाह कारिकाकारः—'उभयातिक्रमे कार्य एकः.पाथिकृतश्चरुः ।. तृतीयाप्रभृतीनां तु पर्वणामतिपातने ।। पुनराधेयमिच्छन्ति केचिद्ब्रह्मविदो जनाः' इति ॥ अत्राचार्यः स्मृतिरूपेणाह—'इष्टित्रयसमायोगात्स्मार्तोग्निः संप्रणश्यति । द्वयोर्योगे तु कार्या स्यादष्टपूर्णाहुतिर्घृतैः ॥ बहिष्टीनां समायोगादग्निर्नैत्र प्रणश्यति । श्रौताग्न्योस्तु द्वयोर्योगे कार्या कल्पोक्तनिष्कृतिः' इति ॥ सायणीये प्रजापतिस्तु—'दर्शश्च पूर्णमासश्च लुप्तोऽथ द्वयमेव वा । एकस्मिन्कृच्छ्रपादेन द्वयोरर्धेन शोधनम्' इति । इत्यतिपन्नेष्टियागविधिः ॥ ॥

अथान्वाधानेष्टिमध्ये ग्रहणं भवति चेत्प्रायश्चित्तमाह संग्रहकारः—'अन्वाधानेष्टिमध्ये तु ग्रहणं चन्द्रसूर्ययोः । नवोनवो यमादित्याश्विनं चोद्दुत्यमुद्वयम्' इति । एतत्प्रायश्चित्तहोमं निमित्तसमनन्तरमेव कुर्यात् । अन्वाधानेष्टिमध्ये अग्निरनुगतश्चेत्प्रायश्चित्तमाह कारिकाकारः—'अन्वाधाने कृते यागात्प्राक्चेदनुगतो भवेत् । प्रायश्चित्तमिदं कृत्वा पुनरन्वादधात्यथ' इति ।

पाठा०—१ स्यात्यये हव्यहोता । २ पाथिकृतो भवेत् । ३ हुते होमात् ।

त्रेदमिति प्रकरणाद्याहृत्याज्यहोमः प्रक्षेतव्यः। सोऽपि पुनःसंधानोक्तरीत्या अयाश्चेतिमन्त्रेणाज्याहुतिं हुत्वानन्तरं कर्तव्य इति ॥ ॥ अन्वाधानेष्टिमध्ये प्रयाणोपपत्तौ प्रायश्चित्तविधिरुच्यते। तत्र कारिका—'अन्वाधाने कृते यागात्प्राक्चेत्प्रवसते यदि। तुभ्यं ता इत्यृचा हुत्वा वह्निमारोपयेत्ततः' इति ॥ अत्र तुभ्यं ता इति मन्त्रहोमस्य कारणं श्रूयते—'सर्वान्वा एषोऽग्नौ कामान्प्रवेशयति यो‌ऽग्नीनन्वाधाय व्रतमुपैति। स यदनिष्ट्वा प्रयायात्। कामप्रीता एनं कामा नानुप्रयायुः। अतेजा अवीर्यः स्यात्। स जुहुयात्।—तुभ्यं ता अङ्गिरस्तम विश्वाः सुक्षितयः पृथक्। अग्ने कामाय येमिरे इति कामानेवास्मिन्दधाति कामप्रीता एनं कामा अनु प्रयान्ति तेजस्वी वीर्यवान्भवती'ति ॥ अत्र पर्वण्यन्वाधानं कृत्वा प्रतिपदि प्रमादादिष्ट्यकरणे तृतीयादिषु परिभाषाप्राप्तव्याहृतियागं होमपूर्वकं कुर्यात्। तत्रापस्तम्बः—'तदिदं सर्वप्रायश्चित्तं सर्वत्र क्रियत इत्याश्मरथ्यो यत्र नाम्नातं तत्र क्रियेत इत्यालेखन' इति। एतद्दर्शपूर्णमासप्रसंगाच्छ्रूयते—'प्रजापतिर्यज्ञानसृजताग्निहोत्रं चाग्निष्टोमं च पौर्णमासीं चोक्थ्यं चामावास्यां चातिरात्रं च तानुदमिमीत यावदग्निहोत्रमासीत्तावानग्निष्टोमो यावती पौर्णमासी तावानुक्थ्यो यावत्यमावास्या तावानतिरात्रो य एवं विद्वानग्निहोत्रं जुहोति यावदग्निष्टोमेनोपाप्नोति तावदुपाप्नोति य एवं विद्वान्पौर्णमासीं यजते यावदुक्थ्येनोपाप्नोति तावदुपाप्नोति य एवं विद्वानमावास्यां यजते यावदतिरात्रेणोपाप्नोति तावदुपाप्नोती'ति। स्मृतिभास्करे वायुपुराणवचनं—'दर्शं च पूर्णमासं च ये यजन्ति द्विजातयः। न तेषां पुनरावृत्तिर्ब्रह्मलोकात्कदाचन' इति ॥ ॥ अकरणे दोष उक्त आथर्वणिकश्रुतौ—'यस्य चाग्निहोत्रमदर्शपूर्णमासमनाग्रयणमतिथिवर्जितं च अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान्हिनस्ती'ति।

अस्मिन्कर्मणि विनियुक्तमन्त्राणामर्थोऽग्निमुखप्रकरणे अस्माभिरुक्तः। प्रायश्चित्ताज्यहोमे तुभ्यं ता अङ्गिरस्तम इति—हे अङ्गिरस्तम अङ्गिरसां श्रेष्ठाऽग्ने, तुभ्यं विश्वाः सर्वास्ताः प्रसिद्धाः सुक्षितयः प्रजाः कामाय आत्मनः कामसिद्ध्यर्थं पृथग्येमिरे नियच्छन्ति। इति मन्त्रार्थः॥

अथ स्थालीपाकप्रयोगः॥ प्रागुक्तप्रकारेण तिथ्यादिकं विचार्य पूर्वेद्युरन्वाधानदिने स्त्रिया सह स्नात्वा कृतनित्यक्रियो विधिवत्प्रातरौपासनं हुत्वा प्राणानायम्य देशकालौ संकीर्त्य ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं पौर्णमासेन यक्ष्ये। तत्र देवतापरिग्रहार्थमन्वाधानं करिष्य इति संकल्प्य[1]। समिद्द्वयं पाणिनादाय अस्मिन्नन्वाहितेऽग्नावित्यादि चक्षुषी आज्येनेत्यन्तमुक्त्वा। अग्निमग्नीषोमौ च प्रधानदेवते चरुद्रव्येण शेषेण स्विष्टकृतमित्यादि श्रोषक्ष्य इत्यन्तमुक्त्वा समिद्द्वयमग्नावाधायेध्माबर्हिषी संनह्येत्। तत्रायं क्रमः। उक्तप्रकारेणाहृतेषु कुशदर्भेषु प्रादेशमात्रान्पञ्चविंशद्दर्भान् रज्जुकरणार्थं गृहीत्वा प्रादक्षिण्येन तत्र द्वादशदर्भैः संधित्रयवतीं रज्जुं कृत्वा पुनरन्यां रज्जुमेवं कृत्वा उभयमप्रादक्षिण्येन समस्य पुनरन्यां रज्जुं कृत्वा प्रादक्षिण्येन त्रिवृतं समस्यान्ते प्रदक्षिणं ग्रन्थिं कृत्वा तां त्रिवृतां रज्जुमुदगग्रां वितत्य तत्र प्रादेशमात्रान्मुष्टिपरिमितान्दर्भान्निधाय तथा बर्हिर्द्विरावेष्ट्य रज्ज्वग्रेण रज्जुमूलं सकृदावेष्ट्य तदग्रशेषं पूर्वमावेष्टितरज्ज्वधस्तान्निनीय परिस्तरणार्थदर्भैः सहायतनपश्चाद्भाग उपरि निदध्यात्। ततः पूर्ववत्त्रिवृतां रज्जुं कृत्वोदगग्रां वितत्य पलाशखदिराद्यन्यतमयज्ञियवृक्षसंभवं द्विप्रादेशप्रमाणं पञ्चदशसमिदात्मकमिध्मं प्रागग्रं निधाय

पाठा०—१ प्रादक्षिण्येन त्रिवृतं समस्यान्ते प्रदक्षिणं ग्रन्थिं।

तथा सकृदावेष्ट्य यज्ञोपरि निधाय पत्न्या अग्न्यायतनालङ्करणं कारयेत् । ततो गन्धादिभिरुभौ स्वशरीरे अलंकृत्य तद्दिवसे कलहक्रयविक्रयानृतप्रहासनृत्तगीतवादित्रिकादिव्यसनपर्यङ्कशयनदन्तधावनकरंभसंज्ञकदधिमिश्रसक्तुकुलित्थकोद्रवचणकमसूरसंज्ञकशृगाकारचणकक्षारलवणमधुमांसमाषपरान्नवर्जं दधिघृतमिश्रं हविष्यान्नं दिवैव सकृद्भुञ्जीयाताम् । ततो यजमानः सायंहोमानन्तरं यागदेवतान्नमवस्थानार्थमग्निं परिस्तृणीयात् । तत्रायं क्रमः—अग्नेः सकाशादष्टाङ्गुलपरिमिते देशे ऐशानीं दिशमारभ्य प्रदक्षिणं समन्तात्सोदकेन पाणिना निःपरिमृज्य पूर्वमुपरिनिहितान्दीर्घान्षोडशदर्भानादाय दशाङ्गुलमिते देशे प्राच्यामुदगग्रैर्दक्षिणस्यां प्रागग्रैः प्रतीच्यामुदगग्रैरुत्तरस्यां प्रागग्रैर्दर्भैः परिस्तृणीयात् । पूर्वपश्चिमपरिस्तरणमूलयोरुपरि दक्षिणपरिस्तरणं उत्तरपरिस्तरणं तूदगग्रयोरधस्तात्करोति एवंपरिस्तीर्य ब्रह्मचारीभूत्वाऽधःशयीत । ततोऽपरेद्युः प्रातर्होमानन्तरं ब्रह्मासनार्थमग्नेर्दक्षिणतः पात्रासादनार्थं चोत्तरतः कांश्चिद्दर्भान्प्रागग्रानास्तीर्य अग्नेरपराजितां दिशमारभ्य निरम्भमा परिषिच्य पात्रासादनं कुर्यात् । तत्रायं क्रमः—अग्नेरुत्तरभागे पूर्वमास्तीर्णेषु दर्भेषु चरुस्थालीं प्रोक्षणपात्रं दर्वीं स्रुवं प्रणीतापात्रं आज्यपात्रे इध्मं बर्हिः शूर्पं कृष्णाजिनं उलूखलं मुसलं च द्वन्द्वश उदगपवर्गं प्राक्संस्थं न्यग्बिलमासादयेत् । ततः प्रोक्षणपात्रमुत्तानीकृत्य प्रादेशमात्रे स्थौल्येन च समे पवित्रे कृत्वा तत्पात्रस्योपरि निधाय शुद्धाभिरद्भिः पूरयित्वा हस्तयोरङ्गुष्ठोपकनिष्ठिकाभ्यां ते पवित्रे उदगग्रे असंसृष्टे गृहीत्वा त्रिरुत्पूय पात्राण्युत्तानानि कृत्वा इध्मं च विस्रस्य सर्वाणि पात्राण्युत्पूताभिरद्भिस्त्रिः प्रोक्षेत् । ब्रह्मणः कृत्यम्—ततो यथोक्तलक्षणमैशानदिशि स्थितं ब्राह्मणमस्मिन्कर्मणि ब्रह्माणं त्वां वृण इति तत्पाणिं पाणिना गृहीत्वा वृणुयात् । ततो ब्रह्मा वृतोऽस्मीत्युक्त्वा

प्राङ्मुखो यज्ञोपवीत्याचम्य समस्तपाण्यङ्गुष्ठो भूलाग्रेणाग्निं परीत्य दक्षिणतं उदङ्मुखः स्थित्वा आसनार्थं दर्भमेकं दर्भमङ्गुष्ठानामि-काभ्यां गृहीत्वा 'निरस्तः परावसुः' इति नैर्ऋत्यां निरस्यापः स्पृष्ट्वा 'इदमहमर्वावसोः सदने सीदामि' इत्युपविशन् उदङ्मुख एव वामोरूपरि दक्षिणपादं संस्थाप्योपविश्य गन्धाक्षतादिभिरभ्यर्चितः सन् 'ॐ बृहस्पतिर्ब्रह्मा ब्रह्मसदन आसिष्यते बृहस्पते यज्ञं गोपाय' इति जपित्वा सर्वदा यज्ञमना एव वर्तेत । ततो यजमानः प्रणीतापात्रमग्नेः प्रत्यङ् निधाय तत्र पवित्रे निधाय उत्पूताभिरद्भिः पूर-यित्वा गन्धपुष्पाक्षतान्निक्षिप्य धृतप्राणो मुखसममुद्धृत्य अग्नेरुत्तरतो दर्भेषु निधाय ते पवित्रे गृहीत्वा अन्यैर्दर्भैराच्छादयेत् । ततः प्रत्यगग्नेः शूर्पं निधाय तत्र पवित्रे निधाय अग्नये त्वा जुष्टं निर्वपामीति मन्त्रावृत्त्या चतुरो व्रीहिमुष्टीन्निरुप्य अग्नीषोमाभ्यां त्वा जुष्टं निर्वपामीति तथैव चतुरो मुष्टीन्निरुप्य ते पवित्रे व्रीहीणामुपरि निधाय उत्पूताभिरद्भिर्निर्वापसंख्यया अग्नये त्वाजुष्टं प्रो-क्षामि अग्नीषोमाभ्यां त्वाजुष्टं प्रोक्षामीति प्रोक्ष्य प्राग्ग्रीवोर्ध्वलोम्नि कृष्णाजिन उलूखलं निधाय तत्र तान्मुसलेन पत्न्यावघात्य निःफलीकृत्य त्रिःप्रक्षाल्य अविदग्धमबहिर्गतगाढिकं शनैःशनैः सुशृतं पचेत् । ततस्ते पवित्रे आज्यपात्रे निधाय तत्पात्रं पुरतः संस्थाप्याज्यमासिच्याग्नेरुत्तरतः स्थितानङ्गारान्सम्भनामहापयेद्रक्षपरिस्तरणाद्बहिर्निरुह्याज्यस्थालीं तेष्वधिश्रित्य ज्वलतादर्भोल्मुकेना-वज्वल्याङ्गुष्ठपर्वमात्रं प्रक्षालितं दर्भाग्रद्वयमाज्ये प्रत्यस्य पुनर्ज्वलता तेनैव दर्भोल्मुकेन चरुणा सहाज्यं त्रिःपर्यग्निकृत्वा तदुल्मुकम-पास्यापः स्पृष्ट्वा स्थालीं भुवि कर्षन्निरोदगुद्वास्याङ्गारान्प्रत्यूह्यापः स्पृष्ट्वा तत्रस्थितमेवाज्यं सवितुष्ट्वेत्यस्य हिरण्यस्तूपः सविता पुर-

पाठा०—१ गोपायेत्यस्याग्रे—'स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहि' इत्यधो मन्त्रे येनचिन्निर्दिष्टो स्तः' सर्वत्रेति निपुणतरं प्रतीम ।

उष्णिक् आज्योत्पवनेवि० । ॐसवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः । इति मन्त्रेणैकवारं द्विस्तूष्णीं पवित्राभ्यां प्रागुत्पूय ते पवित्रे अद्भिः प्रोक्ष्याग्नौ प्रहरेत् । ततोऽग्नेः पश्चात्परिस्तरणाद्बहिरात्मनोऽग्रतो ध्रुवं प्रोक्ष्य तत्र बर्हिःसंनहनीं रज्जुमुदगग्रां नितत्य तत्र बर्हिः प्रागग्रमुदगपवर्गमविरलमास्तीर्य तत्राज्यपात्रं निधाय स्रुवादिसंमार्जनं कुर्यात् । तत्रायं क्रमः— दक्षिणेन हस्तेन स्रुक्स्रुवौ गृहीत्वा सव्येन कांश्चिद्दर्भानादाय सहैवाग्नौ प्रताप्य स्रुचं निधाय दक्षिणेन पाणिना स्रुवस्य बिलं दर्भाग्रैः प्रागादिप्रागपवर्गं त्रिःसंमृज्याधस्तादर्भाग्रैरेवाभ्यात्मं बिलपृष्ठं त्रिःसंमृज्य ततो दर्भाणां मूलैर्दण्डस्याधस्ताद्बिलपृष्ठादारभ्य यावदुपरिष्टाद्बिलं तावत्त्रिः संमृज्याद्भिः प्रोक्ष्य स्रुवं निष्टप्याज्यस्थाल्या उत्तरतः स्रुचाऽस्पृष्टं निधायोदकं स्पृष्ट्वा तैरेव दर्भैः स्रुचं चैवमेव संमृज्य तां स्रुवस्योत्तरतो निधाय दर्भानद्भिः प्रोक्ष्याग्नावनुप्रहरेत् । ततः शृतं चरुं स्रुवगृहीतेनाज्येनाभिघार्योदगुद्वास्याग्न्याज्ययोर्मध्ये नीताज्याद्दक्षिणतो बर्हिषि सान्तरमासाद्य पुनरभिघार्य हविरुद्धरणाय चर्वाज्ययोर्मध्ये पात्रान्तरं निधाय एकादशाङ्गुलमिते देशे गन्धाक्षतपुष्पैरग्निं समन्त्रमर्चयेत् । तन्मन्त्राः विश्वानिनइत्यनयोर्वसुश्रुतोऽग्निस्त्रिष्टुप् । ततः आत्मानं चालंकृत्य हस्तं प्रक्षाल्य इध्मनन्धनरज्जुं तत्रैव निधाय पाणिनेध्ममादाय त्रिरिध्ममभिघार्य मूलमध्ययोर्मध्यभागे गृहीत्वा । अयंत इध्मइत्यस्य वामदेवो जातवेदाअग्निस्त्रिष्टुप् । ॐअयं त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्धस्व चेद्ध वर्धय चास्मान्प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा । इतीध्ममग्नावाधाय अग्नये जातवेदस इदंनममेत्युद्दिश्य त्यजेत् । अथ स्रुवेणाज्यं गृहीत्वा परिस्तरणवायव्यकोणे नीताग्नेर्वायव्यकोणमारभ्याग्नेयीपर्यन्तं प्रजापतय इति मनसा स्मरन् स्वाहेत्युच्चार्य नैरन्तर्येणार्जवेनाज्यधारां ज्योति-

ष्मत्यश्वाविध्मदारूणि परिप्लावयन्हुत्वा पुनराज्यं गृहीत्वा नैर्ऋतकोणतो नीलाग्नेर्नैर्ऋत्यकोणमारभ्यैशानीपर्यन्तं तथैव हुत्वा उभयत्र प्रजापतयइदं नममेत्युद्देशत्यागौ कृत्वा स्रुवेणाज्यमादाय अग्नयेस्वाहेत्यग्नेरुत्तरपार्श्वे पूर्वभागे हुत्वा पुनराज्यं गृहीत्वा सोमायस्वाहेति दक्षिणपार्श्वे तत्समप्रदेशे हुत्वा चरुं पात्रान्तरे पृथक्कृत्य इदमग्नये इदमग्नीषोमाभ्यामिति चरुभागद्वयमुत्तरसंस्थमभिमृश्य अवदान-धर्मेण जुहुयात् । तत्रायं क्रमः—स्रुवेण दर्व्यामुपस्तीर्य प्रथमप्रधानदेवताचरोर्मध्यादङ्गुष्ठपर्वमात्रं तिरश्चीनाभिरङ्गुष्ठमध्यमानामि-काभिरुदगग्राभिर्नखसंस्पर्शमकृत्वाऽवदाय दर्व्यामोप्य । ततश्चरोः पूर्वभागात्प्रागग्राभिस्तथैवावदाय दर्व्यामोप्य पात्रस्थं हविरभि-घार्य पश्चाद्दर्वीस्थमभिघार्य विधूमाल्पज्वालाङ्गारायामग्नौ अग्नयेस्वाहेति आज्यभागयोः मध्यदेशे आच्छादयन्निव दर्व्याः पार्श्वेन हुत्वा । पुनः पूर्ववदुत्तरहविषोऽवदाय अग्नीषोमाभ्यां स्वाहेति पूर्वाहुतेः प्रागेव हुत्वा उद्देशत्यागौ कुर्यात् । दर्व्यामुपस्तीर्य द्वितीयं पुनर्हवि-स्तथैवावदाय पात्रस्थमनभिघार्यावत्तं तु द्विरभिघार्य । यदस्येति हिरण्यगर्भोऽग्निः स्विष्टकृदविष्टुतिः । ॐ यदस्य कर्मणोऽत्यरी-रिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वान्सर्वं स्विष्टं सुहुतं करोतु मे । अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्धयित्रे सर्वान्नः कामान्समर्धय स्वाहा । इत्यग्नेरैशानदेशे जुहुयात् । पश्चात्तर्वी तु प्रधानहोमे मध्यात्पूर्वार्धात्पश्चा-र्धाच्च त्रिरवदानमवद्यति । इतरत्तु समानम् । अनन्तरमग्नेरुत्तरतः स्थितामिध्मबन्धनरज्जुं विसृज्य रुद्रायस्वाहेतिहुत्वा अपःस्पृष्ट्वा स्रुवेणा-ज्यमादाय प्रायश्चित्ताहुतीः सप्त जुहुयात् । तत्र मन्त्राः—अयाश्चेत्यस्य विमदोयाज्ञिः पङ्क्तिः । अयाश्चाग्नेस्यनभिशस्ती० । अतोदे-वाइत्यस्य मेधातिथिर्देवागायत्री इदं विष्णुरित्यस्य मेधातिथिविष्णुर्गायत्री एतैर्मन्त्रैस्तिस्र आज्याहुतीर्जुहुयात् । व्याहृतीनां व्यस्तानां

विश्वामित्रोजमदग्निर्भरद्वाजो अग्निर्वायुः सूर्यो गायत्र्युष्णिगनुष्टुप् समस्तव्याहृतेः प्रजापतिः प्रजापतिर्बृहती । भूःस्वाहेत्या-
दिभिश्चतस्र आज्याहुतीर्जुहुयात् । अनन्तरं ब्रह्मा वायव्यदेशे स्थित एताश्च हुत्वा मन्त्रविपर्यासादिनियतनिमित्ते ग्रामे
अमाज्ञातमितिमन्त्रद्वयस्य हिरण्यगर्भोऽग्निरनुष्टुप्—ॐ अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु । अग्ने तदस्य कल्पय त्वꣳहि वेत्थ
यथातथꣳस्वाहा ॥ पुरुषसंमितो यज्ञो यज्ञः पुरुषसंमितः । अग्ने तदस्य कल्पय त्वꣳहि वेत्थ यथातथꣳस्वाहा ॥ यत्पाकत्रेत्यस्याहय-
स्वितोऽग्निस्त्रिष्टुप् इत्यादिभिर्हुत्वा । यद्वोदेवा इत्यस्यामितपामरुतस्त्रिष्टुप् । अनेनच जुहुयात् । यजमानस्तत्तद्देवताभ्य उद्दिश्य
त्यजेत् ॥ ततो यजमानः सर्वकर्मप्रपूरणीं भद्रद्रव्यदां पूर्णाहुतिं जुहुयात् । तत्रायं क्रमः—स्रुवेणाज्यं गृहीत्वा स्रुचं समविलां
द्वादशकृत्वः पूरयित्वा तत्र स्रुवमूर्ध्वविलं निधाय पुनरधोविलं निक्षिप्य स्रुगग्रे कुसुमाक्षतं निधाय सव्यपाणिना स्रुक्स्रुवमूले दक्षि-
णपाणिना स्रुचं शङ्खमुद्रया गृहीत्वा तिष्ठन्समपाद ऋजुकायः स्रुवाग्रन्यस्तलोचनः प्रसन्नात्मा सन् समुद्रादूर्मिरित्येकादशर्चस्य
सूक्तस्य वामदेवऋषिः आपोदेवता त्रिष्टुप्छन्दः अन्त्याजगती पूर्णाहुतौ० । समुद्रादूर्मिरित्यादिमधुमन्तन्तऊर्मिं स्वाहेत्यन्तं पठन्
यवपरिमितधारां संततां स्रुगग्रेण सावशेषं हुत्वा अग्नयइदंनममेत्युद्दिश्य त्यक्त्वा विज्योतिषेत्यस्य जारो वृशोऽग्निस्त्रिष्टुप् । अने-
नच तथैवावशिष्टं सर्वं हुत्वा अग्नय इदं नममेत्युद्दिश्य त्यजेत् । ततो विश्वेभ्योदेवेभ्यः स्वाहेति संस्रावं हुत्वोद्दिश्य त्यजेत् । त-
ण्डुलकणांन्समिद्भस्मशकलान्प्रोक्ष्यामी गृहत्यावभृथरूपं पापक्षयकरं पूर्णपात्रजलमार्जनं कुर्यात् । तत्रायं क्रमः—पूर्वासादितपूर्ण-
पात्रमास्तीर्णे बर्हिषि दक्षिणपाणिना निधाय तत्र गङ्गादिपुण्यनदीः स्मृत्वा दक्षिणपाणिना स्पृशन्—ॐ पूर्णमसि पूर्णं मे भूयाः

सुपूर्णमसि सुपूर्णं मे भूयाः, सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः । अक्षितिरसि मामेक्षेष्ठाः । इति जपित्वा कुशाग्रैः प्रागादिपञ्चदिक्षु जलं सिंचेत् । तत्र मन्त्राः—प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तां । दक्षिणस्यां दिशि मासाः पितरो मार्जयन्ताम् । प्रतीच्यां दिशि गृहाः पशवो मार्जयन्ताम् । उदीच्यां दिश्यापओषधिवनस्पतयो मार्जयन्तां । ऊर्ध्वायां दिशि यज्ञः संवत्सरः प्रजापतिर्मार्जयन्ताम् । इति प्रतिदिशं सिक्त्वा स्वशिरसि कुशाग्रैर्मार्जयेत् । तत्र मन्त्राः—आपो अस्मानित्यस्य देवाश्रवा आपस्त्रिष्टुप् । ॐ आपोऽअस्मान्मातरः० । इदमापइत्यस्य सिन्धुद्वीप आपोऽनुष्टुप् । इदमापः प्रवहत० । सुमित्र्या न आप ओषधयः सन्त्वितिच एतैर्मन्त्रैर्मार्जने मार्जनं कृत्वा दुर्मित्र्यास्तस्मै सन्तु योऽस्मान्द्वेष्टि यंच वयं द्विष्मस्तं हन्मि । इति निर्ऋतिदेशे कुशाग्रैरपः सिञ्चेत् । ततो ब्रह्मा यजमानस्य वामपार्श्वस्थितपत्न्यञ्जलौ पूर्णपात्रजलं ॐ माहं प्रजां परासिचं या नः सयावरीः स्थ न समुद्रे वो निनयानि स्वं पाथो अपीथ । इत्येकश्रुत्योस्त्वा प्रत्यक्पुरं निषिच्य तदञ्जलिस्थितजलैः पापनिरसनार्थमात्मानं यजमानपत्नीं च प्रोक्षेत् । पत्नी तु तज्जलं बर्हिषि निषिञ्चेत् । अथवा मार्जनानन्तरं यजमानः स्ववामपाणिमुत्तानीकृत्य बर्हिषि निधाय दक्षिणपाणिना पूर्णपात्रं गृहीत्वा तत्र तज्जलं प्रत्यक्पुरं निषिच्य वा आपः समुद्रं गच्छन्तीति ध्यात्वा पाणिस्थजलैरात्मानं पत्नीं च प्रोक्षेत् । ततः कर्ता अग्नेः प्रत्यगुदक्स्थितः संस्थानपेनोपतिष्ठेत । तत्र मन्त्राः—अग्नेत्वंगौपायनालौपायनाना बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्चैकर्षाऋषयः अग्निर्देवता द्विपदाविराट्छन्दः अग्न्युपस्थाने विनियोगः । अग्ने त्वं न इति द्वाभ्यां ॐ चम इत्येतैश्चोपस्थानं कुर्यात् । ततो ब्रह्माप्येतैरेवोपतिष्ठेत । ततः कर्ता परिस्तरणं विसृज्याग्निं परिसमुह्य परिषिच्य पुष्पादिभिरलंकृत्य नैवेद्यताम्बूले निवेद्य ब्रह्मणे हुतशेषं घृतादिकं म

हिरण्यमुदकपूर्वं दक्षिणात्वेन दद्यात्। अथ पात्राणि प्रक्षाल्य पूर्वक्रमेण द्वन्द्वश उत्सृज्य यस्य स्मृत्येत्यादिना श्रीविष्णवे समर्प्याचामेत्॥ ॥दर्शेतु दर्शेन यक्ष्य इत्युक्त्वा पूर्ववदन्वाधाय पिण्डपितृयज्ञं कृत्वा पूर्ववद्व्रतनियमपरिस्तरणादिकं कृत्वा परेद्युः प्रातरौपासनं हुत्वा पूर्णपात्रनिधानान्ते अग्नये त्वाजुष्टं निर्वपामि इन्द्राग्निभ्यां त्वा जुष्टं निर्वपामि इति चतुरश्चतुरो मुष्टीन्निरुप्य प्रोक्षणादिहविरवदानान्तं कृत्वा अग्नयेस्वाहा इन्द्राग्निभ्यां स्वाहेति हुत्वा स्विष्टकृदादिहोमशेषं समापयेत् ॥

अथ सद्यस्कालकर्तव्यम्। सद्यस्काललक्षणतिथौ उभयत्रापि प्रातर्होमानन्तरं अन्वाधाय इध्माबर्हिषी सन्नह्य होमं कुर्यात्। प्रमादादन्याग्नौ स्वयं यजेत चेत् स्वाग्नावन्यो यजेत चेत् प्रायश्चित्तार्थं पथिकृद्धोमं कृत्वा पुनस्तृतीयादितिथिष्वन्वाधानपूर्वकमिष्टिं कुर्यात्। इति सद्यस्कालकर्तव्यम् ॥ ॥ अथातिपन्नहोमप्रयोगः। अन्वाधानात्पूर्वं स्त्री रजस्वला भवति चेत् पञ्चमादिदिवसे सद्यस्कालान्वाधानपूर्वकं होमं कुर्यात्। अन्वाधानात्परतो रजस्वला भवति चेत्तां तिरस्कृत्य प्रतिपद्येव होमं कुर्यात्। सूतकादिना होमोऽतीतश्चेदागामिपर्वमध्यतिथिषु द्वितीयां चतुर्थीं पञ्चमीं अष्टमीं नवमीं चतुर्दशीं च विहाय शिष्टासु तिथिषु अतिपन्नहोमं कुर्यात्। तत्राप्यतिक्रान्ते अनन्तरे पर्वणि पथिकृद्धोमपूर्वकमिष्टिं कुर्यात्। तत्राप्यतिक्रान्ते आगामिपर्वसहितदिवसेष्वन्यतमदिवसे पादकृच्छ्रपथिकृद्धोमपूर्वकमिष्टिं कुर्यात्। तत्राप्यतिक्रान्ते अनन्तरप्रतिपदि अर्धकृच्छ्रप्रायश्चित्तं कृत्वा प्रतिपदङ्गभूतसद्यस्कालान्वाधानाद्याज्यभागान्तं कृत्वा अतीतेष्टिप्रायश्चित्तार्थमष्टपूर्णाहुतिं करिष्य इति संकल्प्य स्रुवेणाष्टवारं स्रुचि पूरयित्वा एवं पूर्णाहुतिमादौ हुत्वा प्रधानाहुत्यादि सर्वं कुर्यात्। एवमागामिपर्वपर्यन्तं कुर्यात्। तत्राप्यतिक्रान्ते गृह्याग्नेर्नष्टत्वात्पूर्वोक्तवत्पुनःसंधानं

कृत्वा तत्रप्रतिपद्धोमं कुर्यात् । इत्यतिपन्नेष्टिप्रयोगः ॥ ॥ अथ ग्रहणेष्टिप्रयोगः । अथान्वाधानेष्टिमध्ये सोमग्रहणं चेदिष्टिदिवसे हविरासादनान्तं कृत्वा अन्वाधानेष्टिमध्ये ग्रहणदोषप्रायश्चित्तार्थमाज्यहोमं करिष्य इति संकल्प्य । नवोनवोभवतीत्यस्य सूर्यासावित्री चन्द्रमास्त्रिष्टुप् । यमादित्या अंशुमाप्याययन्ति यमक्षितमक्षितयः पिबन्ति । तेन नो राजा वरुणो बृहस्पतिराप्याययन्तु भुवनस्य गोपाः । आभ्यां मन्त्राभ्यामाज्याहुती हुत्वा अभ्यलंकरणादितन्त्रशेषं समापयेत् । सूर्यग्रहणं चेद्धविरासादनान्ते त्रिभिर्मन्त्रैराज्याहुतीर्जुहुयात् । तत्र मन्त्राः—चित्रंदेवानामित्यस्याङ्गिरसः कुत्सः सूर्यस्त्रिष्टुप् । उदुत्यंजातवेदसमित्यस्य काण्वः प्रस्कण्वः सूर्यो गायत्री । उद्वयमित्यस्य काण्वः प्रस्कण्वः सूर्योऽनुष्टुप् । एतैर्मन्त्रैराज्याहुतीर्हुत्वा अभ्यलंकरणादितन्त्रशेषं समापयेत् । अन्वाधानेष्टिमध्येऽग्निरनुगतश्चेत् अयाश्चेतिमन्त्रेण पूर्वोक्तवत्पुनःसंधानं कृत्वा भूर्भुवःस्वरितिमन्त्रेण संकल्पपूर्वकं प्रायश्चित्ताज्याहुतिं संस्कृत्याज्येन हुत्वा पुनरन्वाधानपूर्वकमिष्टिं कुर्यात् । अन्वाधानेष्टिमध्ये प्रयाणोपपत्तौ तुभ्यंता अङ्गिरस्तमेतिमन्त्रेण संकल्पपूर्वकं संस्कृत्याज्यं हुत्वा अरण्यादिषु पूर्ववदारोप्य होमकाले प्रतिष्ठाप्य प्रातर्होमपूर्वकमिष्टिं कुर्यात् । अन्वाधानं कृत्वा प्रतिपदि प्रमादादिष्टयकरणे तृतीयादितिथिषु प्रातरौपासनानन्तरं संकल्पपूर्वकं संस्कृताज्यं समस्तव्याहृतिभिर्हुत्वा पुनरन्वाधाय यागं कुर्यात् ॥ इति श्रीमन्नृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे प्रतिपदिष्टिप्रकरणम् ॥

अथ नागबलिप्रकरणम् ॥ यस्योदरगृहोद्देशे निवसन्ति जगन्त्यहो । सविकासं नमस्तस्मै कस्मैचिन्महसे मुहुः ॥ अपिच—रक्षतु लक्ष्मीरमणो लक्ष्मीकुचकुम्भयुग्मपरिरम्भः । रक्षितभुवनत्रितयः शिक्षितरक्षोगणाधिपाध्यक्षः ॥ इत्थमा-

चीर्णपाणिग्रहणविधेर्नरस्य यथासह गृहप्रवेशविधिरभिधीयते तत्र ज्योतिर्बृहस्पतिः—'कालः पटुतरो नृणां गृहस्थानां शुभाय वै। गृहप्रवेशनादेव गृहस्थस्य गृहस्थितिः' इति। तद्गृहप्रवेशनं विवाहव्रते संपूर्णे चतुर्थे दिवसे नागबलिं कृत्वा कर्तव्यम्। तथाच वराहमिहिरः—'विवाहस्य निवृत्तिस्तु चतुर्थेऽहनि रात्रिषु। तासु नागबलिः कार्यो विप्राशीर्वचनं तथा' इति। अत्र भगवाञ्शौनकः—'अथातः संप्रवक्ष्यामि शौनकोऽहं द्विजन्मनाम्। दंपत्योरभिवृद्ध्यर्थं नागबल्याख्यमुत्सवम्॥ चतुर्थदिवसे रात्रौ तस्य कालः प्रकीर्तितः। यस्मिन्स्यादाहुतिक्षेपस्तदारभ्य प्रकीर्तितः॥ चतुर्थदिवसे तस्मिन्रात्रौ कुर्यान्महोत्सवम्' इति॥ 'विवाहस्य निवृत्तिस्तु चतुर्थेऽहनि रात्रिषु। तस्यां नागबलिः कार्यो विप्राशीर्वचनं तथा' इति॥ यज्ञपार्श्वः—'चतुर्थे दिवसे रात्रौ लिखेन्मानसरोवरम्। हिरण्यगर्भं तन्मध्ये गन्धपुष्पाक्षतादिभिः॥ संपूज्याप्सरसश्चैव सोमगन्धर्वपावकान्। संपूज्य रथहस्त्यादीनारोप्य स्वगृहं प्रति। संवेशनादिकं कर्म अन्यथा तु भवेद्वयम्' इति। तदकरणे प्रत्यवायः शौनकेन दर्शितः—'अक्षीचिह्ना तु या कन्या वर्तते पितृमन्दिरे। तस्यां वसति गन्धर्वो विश्वावसुसमाह्वयः॥ तं निरस्य तु देवेशी चतुर्थ्यां निशि पूजिता। विश्वावसुनिरासार्थं मानवल्लीत्वसिद्धये॥ चतुर्थेऽहनि रात्रौ तु तस्माद्दाक्षायणीं यजेत्। दंपती रोहिणीसोमौ भूत्वा प्राथमिके दिने। दाक्षायणीं यजेयातां द्वितीये दिवसेऽपि तु॥ पूजयेतां महादेवीं गन्धर्वाप्सरसौ च तौ। अग्निस्वाहे तृतीयेऽह्नि पूजयेतां च कालिकाम्॥ चतुर्थ्यां तौ यजेयातां शांकरीं मानवल्लिकाम्। एवं प्रतिदिनं कर्तुं पूजां यद्यक्षमो भवेत्॥ मध्ये चाद्यन्तयोः कुर्याद्व्रतग्रहणसिद्धये। चतुर्ष्वेतेषु दिवसेष्वर्चयेद्ब्राह्मणान्बहून्॥ वस्त्रहेमादिभूदानताम्बूलादिप्रदानतः। आशीर्वादैर्बहुविधैश्चतुर्वेदप्रगैर्द्विजैः॥

आशीर्वदेयुर्दिवसे दिवसे बन्धुभिः सह । चतुर्थदिवसे रात्रौ कर्तव्यं तदिहोच्यते ॥ गृहमध्ये समश्लक्ष्णे विस्तीर्णे भूमिमण्डले । चतुर्भद्राह्वयं कुर्यात्सर्वमङ्गलकारकम् ॥ वसुरेखामितैः सूत्रैः पातितैस्तिर्यगूर्ध्वतः । भवन्त्येकोनपञ्चाशत्कोष्ठास्तैरवशेषयेत् ॥ स-कोणमध्ययुगोपेतान् चतुर्दिङ्मध्यकोष्ठकान् । मार्जयेद्वसुसंख्याकान्कोणेकोणे बहिः क्रमात् ॥ मध्येऽपि मार्जयेद्धीमान् त्रयोदशगृहा-न्ततः । अवशिष्टद्वादशभिः स्याच्चतुर्भद्रमण्डलम् ॥ चतुर्द्वारोपशोभाढ्यं मध्यकोणान्वितं सरः । तन्मध्ये कोणषट्कं तु तदन्तः स्या-त्त्रिकोणकम् ॥ तत्र चाष्टदलं पद्मं कुर्यात्कर्णिकयान्वितम् । पद्मं तु परितोभित्तिं तत्र मातुः सिताक्षतैः ॥ रचयेत्कोष्ठमध्ये तु हंस-पक्षशुकादिकान् । कृष्णश्वेतहरिद्रक्तपीतशुक्लैः क्रमाद्बहिः ॥ प्राकारषट्कं रचयेद्रक्तपीतादिभिस्ततः । लिखेत्किसलयं प्राच्यां प्र-तीच्यां तु शुकद्वयम् ॥ कोणाग्रेषु बहिर्वल्लीं रचयेत्पिप्पलच्छदाम् । मत्स्यं दक्षिणपार्श्वे तु कुर्यात्तण्डुलहस्तिनम् ॥ प्रत्यगुत्तरपार्श्वे तु कुर्याल्लवणहस्तिनम् । अन्योन्याभिमुखौ तौ स्तः प्राक्पादावतिशोभनौ ॥ इत्थं निर्माय तु सरः कुम्भं तत्र प्रविन्यसेत् । चित्रितं ग-न्धतोयेन सकर्पूरेण पूरितम् ॥ वामभागे स्थापयेच्च दृषदं सोपला तथा । गुडजीरकसंयुक्तां फलपुष्पोपशोभिताम् ॥ ततस्तत्पश्चिमे-भागे दंपती उपविश्य तौ । दाक्षायणीं पूजयेतां तस्मिन्कुम्भे विधानतः ॥ दाक्षायणीं महादेवीं सर्वसंपत्प्रदायिनीम् । यवपा-त्राङ्कुशयुतां तथा ग्रामयशालिनीम् । रत्नकेयूरकटकमुकुटाद्यैरलंकृताम् ॥ विचित्रवसनोपेतां सर्वलक्षणलक्षिताम् । विलासिनीसह-स्रैश्च सेव्यमानामहर्निशम् ॥ देवासुरैरपि सदा वन्द्यमानपदाम्बुजाम् । अणिमादिगुणोपेतामष्टैश्वर्यप्रदायिनीम् ॥ एवं ध्यात्वा तु तां देवीं सर्वशक्तिसमन्विताम् । दलेष्वावाह्य तच्छक्तीर्ब्राह्म्याद्याः संप्रपूजयेत् ॥ देव्याः पाद्यादिपुष्पान्तमुपचारान्विधाय च ।

त्रिकोणाग्रेषु संपूज्य देवीं कालीं च शांकरीम् ॥ षट्कोणपरितो ब्रह्मसावित्र्यौ पूर्वतो यजेत् । दक्षिणे शंकरं चोमां देव्या अभिमुखं स्थितौ ॥ लक्ष्मीनारायणौ तद्वत्पश्चिमे संप्रपूजयेत् । इन्द्रं शचीमुत्तरे तु तद्बाह्ये चाष्टभैरवान् ॥ कपाली भीषणश्चण्डो रुरुः क्रोधस्तथैव च । उन्मत्तश्चासिताङ्गश्च संहारश्चाष्टभैरवाः ॥ कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः । पुष्पदन्तः सार्वभौमः सुप्रतीकोऽञ्जनाह्वयः ॥ एतांश्च दिग्गजान्दिक्षु इन्द्रादीनपि पूजयेत् । क्षुरिकां विन्यसेत्तत्र पुष्पमाल्याद्यलंकृताम् ॥ क्षुरिके त्वं महादेवि सर्वदेवाभिपूजिते । अतस्त्वां पूजयिष्यामि सर्वसंपत्प्रदा भव ॥ हस्तिद्वयं च तत्रस्थं गन्धादिभिरनुक्रमात् । धूपदीपादिभिर्नानानैवेद्यैर्भक्ष्यसंयुतैः । संपूज्य च ततो दद्यान्नागाय बलिमुत्तमम् । परितो दीपमालाभिरलं कुर्यात्सरोवरम् ॥ ततश्च दंपती कन्यापिता वस्त्रादिनार्चयेत् । सूर्यासाविनीसूक्तं च तत्र शृणुतां दंपती ॥ तस्मै तथा वधूवस्त्रयुग्मं विप्राय दापयेत् । ततः कन्याग्रजः श्वेतवस्त्रालंकारभूषिता । धारयेन्मूर्ध्नि भक्ष्याद्यैः पूरितं भाजनोत्तमम् । सापिधानं सदीपं च सुवासिन्युद्धृतं तथा । क्षुरिकां या समादाय पात्रे तस्मिन्निधाय च । प्रविश्य पश्चिमद्वारं चतुर्भद्रं समाहिता । कुम्भं त्रिः परिणीयाथ पात्रं तदवरोहयेत् । अन्नं तत्पात्रमध्यस्थं किंचित्कुम्भे विनिक्षिपेत् । किंचिदालिप्य कुम्भं च किंचिद्दिक्षु विनिक्षिपेत् । ततस्तां पूजयेत्पट्टवस्त्राद्यैश्च वराग्रजः । ततो जायापती स्वस्वमास्थाय करिणं मुदा । अन्योन्याभिमुखौ भूत्वा जपेदात्मसूक्तकम् । अन्योन्यं याचयेन्नागौ दंपती प्रणयादथ । विनिमय्य ततो नागौ पूर्ववत्सूक्तमुच्चरन् । ततस्तूपविशेत्कन्या चोत्तरे दक्षिणे वरः । अनुभूय च माङ्गल्यदीपमालाक्षतानथ । आशीर्वादांश्च विविधान्ब्राह्मणैर्बन्धुभिः सह । लौकिकैरुपचारैश्च विदधीत महोत्सवम् ॥ इत्थं नागबलिं कुर्याद्यः प्रयत्नेन

मानवः। आयुरारोग्यमैश्वर्यं लभतेऽधिकसंपदः ॥ यथेन्द्रस्य महेन्द्राणी यथा श्रीः श्रीधरस्य च। शंकरस्य यथा गौरी तथा भर्तुर्भवेद्वधूः' इति ॥ यज्ञपार्श्वस्तु—'चतुर्थदिवसे रात्रौ लिखेन्मानसरोवरम्। हिरण्यगर्भं तन्मध्ये गन्धपुष्पाक्षतादिभिः ॥ संपूज्याप्सरसश्चैव सोमगन्धर्वपावकान्। संपूज्य रथवस्त्रादीनारोप्य स्वगृहं प्रति ॥ संवेशनादिकं कर्म अन्यथातु व्रजेत्त्रयम्। ततो नागबलिं कृत्वा रात्रौ संवेशनं शुभम्' इति। 'संवेशनं प्रवेशनम्। एष नागबलिः श्वशुरगृहे एव कार्यः। 'संपूज्य रथहस्त्यादीनारोप्य स्वगृहं प्रति' इति नियमात्। एतदुक्तं भवति—विवाहव्रतसमाप्त्यनन्तरमुक्तप्रकारेण नागबलिं कृत्वा पर्वसंक्रमादिवर्जिते काले गृहप्रवेशनं कर्तव्यमिति। तथाचोक्तं कालदीपे—'संवेशनं तुर्यदिने चतुर्दशीपर्वाष्टमीसंक्रमपातवर्जिते' इति। अस्यार्थः—तुर्यदिने चतुर्थदिने 'चतुरश्छयतावाद्यक्षरलोपश्चे'ति चतुर्शब्दाद्यत्प्रत्यय आद्यक्षरलोपश्च। चतुर्दशीपर्वाष्टमीसंक्रमणवर्जिते संवेशनं प्रवेशनं भवतीति।

[[1]"इतः प्रक्षिप्तोभागः॥मुहूर्तसंग्रहे—'रेवतीहस्तमित्राश्विरोहिणीचन्द्रवासवाः। त्रीण्युत्तराणि मूलं च वैष्णवं शततारका। पैतृकं च तथा श्रेष्ठं संवेशनविधौ तथा' इति। संवेशनं प्रवेशनम्। मित्रोऽनुराधा। चन्द्रो मृगशिरः। वासवं धनिष्ठा। वैष्णवं श्रवणम्। पैतृकं मघा। शेषाः प्रसिद्धाः।—'रिक्तापर्वाष्टमीविष्टिवर्ज्याः शेषाः शुभावहाः। चराः श्रेष्ठास्तथा चान्याः शेषाः सर्वाः शुभावहाः ॥ विवाहलग्नमारभ्याला यावत्नगोत्रकादयः ॥ मूलत्रिकोणस्वगृहस्वमित्रस्वोच्चे तथा जीवसितज्ञमन्दाः। लग्नमके यः कुरुते प्रवेशं स पुत्रपौत्रैर्वसुभिर्विभाति ॥ मित्रोच्चकोणस्वगृहेषु जीवे तद्वत्सिते द्वे सहनर्गयुक्ते। संवेशनं यः कुरुते निशायां सुरेन्द्रकान्ति

पाठा०—१ इत्थिहान्तर्गमितो भाग एकस्मिन्पुस्तके दृष्टो न सार्वत्रिकोऽथाप्यन्तरान्तरा कचिदुपयुक्तोऽस्तीति स गृहीतोऽस्ति।

न दूषाति भूमौ' ॥ आह वराहमिहिरः—'शुद्धैर्द्वादशकेन्द्रनैधनगतैः पापैस्त्रिषष्ठायगैर्लग्ने केन्द्रगते तथा सुरगुरौ दैत्येयपूज्येऽपि वा । सर्वारम्भफलप्रसिद्धिरुदये राशौ च कर्तुः शुभे नृग्रामस्थिरभोदये च भवने कार्यः प्रवेशोऽपि वे'ति ॥ स्थिरेषु वृषभो ग्रामः कुंभो नरः इतरयोरुभयोरुदय इत्युक्तः ॥ आह श्रीपतिः—'त्रिकोणकेन्द्रगैः शुभैस्त्रिषष्ठलाभसंश्रितैः । असद्ग्रहैः स्थिरोदये गृहं विशेद्बले विधोः' इति ॥ ज्योतिषार्णवेपि—'त्रिषडायगताः पापाः शुभास्तूपचये शुभाः । नवमस्थश्चन्द्रपुत्रः षट्सप्तमगतो भृगुः ॥ त्रिषडायगतो जीवो विशेषेण विवर्जितः । अष्टमस्था ग्रहाः सर्वे मूर्तिं दद्युः प्रवेशने' इति ॥ इह केचित्तृतीयायुःशुद्धिमिच्छन्ति ॥ यथोक्तमत्रिणा—'प्रविशेद्धामष्टसशुद्धियुक्ते'इति ॥ इति नवधूप्रवेशे तिथ्यादिनिर्णयः ॥ ॥ अथ गृहप्रवेशविधिः—एवं तिथ्यादिकं सम्यग्विचार्य भवनधूसमेतो विध्युक्तप्रकारेण स्वगृहं गच्छेत् ॥ ॥ अथ प्रसङ्गाद्ग्रामगेहादीनां प्रवेशकालमाह बृहस्पतिः—'भूतग्रामगृहादीना प्रवेशे पुरुषस्य वा । उभयोरपि वा योगे नवे लभ्यसनेन वा ॥ प्रवेशय नूतनस्येऽथ प्रवेष्टॄणां च तत्वतः । इच्छनां संपदा नृणामुच्यते समयः शुभः ॥ चतुष्पदां तथान्येषां वाहनानां प्रवेशने । प्राणिनां पक्षिणां वापि नवसंवेशनेऽपि च ॥ सर्वेषामपि वा कालं विशेषेण पृथक्पृथक् । वदामि कुलिशान्सम्यक् विनिर्दिष्टोऽहं यतः ॥ शुभांशे शुभवारेषु शुभदृष्टे स्थिरार्कके । दिवाप्रवेशः संपत्त्यै निशि वा शोभनो भवेत् । यदि लाभाधिपः सौम्यः सुबली सौम्यवीक्षितः । वृषभे प्रविशेद्भृत्यैः शेषेषु स्थिरराशिषु ॥ शुभदृष्टियुते वापि वीर्योत्कटसमाह्वये । वृषांशकोदये सर्वप्रवेशः शोभनः सदा ॥ चरोदयेषु सर्वेषु वृषांशश्चाति शोभनः । विष्टिवर्ज्यं शुभे वारे शुभक्षे शुभेक्षिते ॥ शुभांशके शुभैर्युक्ते शुभवीक्षादिसंयुते । शुभराश्युदये सम्यक् स्थिरभे च

स्थिरांशके ॥ राश्यंशनाथदृष्टीशान्संपूज्यागारमाविशेत् । चैत्रपौषश्रविष्ठाधिवारकादिचतुष्टये ॥ याम्यवारुणसौम्यैन्द्रदिग्गैर्द्वारैः क्रमादिशेत् । शेषेषु द्वादशर्क्षेषु न विशेद्यदि दुर्बलः ॥ यदि वा द्वादशर्क्षेषु शुभांशे बलवांस्तथा । यथालाभं गुणानन्यान्दृष्ट्वा शेषेषु निर्दिशेत् ॥ एवमेवान्यसंवेशे धनधान्यादिना नरः । तत्र वाहनवस्त्रादिग्रहणे च विशेषतः ॥ नन्दायां दक्षिणद्वारं भद्रायां पश्चिमेन तु । जयायामुत्तरद्वारं पूर्णायां पूर्वतो व्रजेत् । रिक्तायां न विशेत्स्थानं कृष्णे चान्त्यत्रिकाद्दले ॥ तथा शुभग्रहाणां तु क्रमाद्वाराः शुभावहाः । नाशुभे नित्ययोगे च विशेद्वसभादयम्' इति"] ॥ ॥ अत्र नववधूप्रवेशे विशेषो नारदेन दर्शितः—'आरभ्योद्वाहदिनात्षष्ठे वाप्यष्टमे दिने । वधूप्रवेशः संपत्त्यै दशमेथ समे दिने' इति । एष युग्मदिवसप्रवेशः षोडशदिवसादर्वाक् वेदितव्यः । अतऊर्ध्वं विषमे मासि संवत्सरे वा कर्तव्यः । समे दोषस्मरणात् । तथाचोक्तं तेनैव—'समवर्षे समे मासि यत्र नारी गृहे व्रजेत् । आयुष्यं हरते भर्तुः सा नारी मरणं व्रजेत्' इति । एष युग्मवत्सरनिषेधः पञ्चमवत्सरादर्वाक् वेदितव्यः । अत ऊर्ध्वं दोषो नास्तीत्युक्तं संग्रहे—'विवाहमारभ्य वधूप्रवेशो युग्मे दिने षोडशवासरान्तात् । तदूर्ध्वमब्दे युजि पञ्चमान्तात्ततः परस्मान्नियमो न चास्ति' इति । तत्र मासफलमुक्तं छागलेन—'वैशाखे सुभगा प्रभूतविभवा मार्गे च पुत्रान्विता फाल्गुन्ये प्रियवल्लभा प्रियजना नित्योत्सवापूरणी । वन्ध्यानिर्धनदुर्भगाविहारिणी स्वात्मगेता नित्यशो भुङ्क्ते देवसुतापि दुःखमतुलं वेश्मान्यमासे वधू'रिति ॥ (अत्र मासनियममाह बृहस्पतिः—'कुलीरकन्याकुंभे दिनेशे न विशेद्गृहम् । ग्रामं वा नगरं वापि स्वगृहं वा

पा०—१ पाद० १ प्रविशो भाग इति शेषम् ।

नराधिप: ॥ प्रविशेत्समये सौम्ये विनाशः स्यादशोभने । नगरग्रामगेहानां प्रवेशास्त्रिविधा हरेत् ॥ सपूर्वापूर्वद्वंद्वाख्यास्त्रिविधं नैव कारयेत् । कन्याकुंभकुलीरेच कृते सर्वविनाशनम् ॥ कुंभकर्कटयोः कृत्वा कदाचित्परिहृत्य च । अवश्येऽपि न कर्तव्यं परित्यागेऽपि सर्वदा ॥ कन्यकायां रवौ कुर्वन् पुरदारपशुक्षयः । अत्र कुंभमासनिषेधः तन्मासविवाहव्यतिरिक्तविषयः)॥ अथ ग्रामप्रवेशे वधूप्रवेशेच शुक्रविचारः । तत्र शुक्रविषयमाह सएव—'पृष्ठगं दक्षिणस्थं वा भृगुं कृत्वा विशेद्गृहम् । पुरतो वामतो वापि शुक्रं कृत्वा नचाविशेत् ॥ मूढस्थे भृगुजे सर्वप्रवेशो नैव शोभनः' इति । फलप्रदीपे तु—'अग्रदक्षिणभागस्थे चण्डरश्मौ सितेऽथवा । निद्राणे केशवे व्यङ्गे राशौ वापि प्रभाकरे ॥ चरलग्नेऽथवा कुंभे क्रूरदृष्टेऽथवा युते । वामपृष्ठस्थिते चन्द्रे नैव शस्तं प्रवेशनम्' इति ॥ सितः शुक्रः । अत्र दक्षिणशुक्रो न शोभन इत्युक्तं, बार्हस्पत्ये त्वनुकूल इत्युक्तम् । अत्र वृद्धाचारतो व्यवस्था द्रष्टव्या । तत्र शुक्रदोषस्यापवादः श्रीधरीये बृहस्पतिनोक्तः—'सिते स्वतुङ्गस्वक्षेत्रयुते दोषो न विद्यते । एकगेहे चतुःशाले विवाहे यज्ञकर्मणि ॥ प्रजारिष्टे च कलहे प्रतिशुक्रो न दुष्यति ॥ एकग्रामे पुरे वापि दुर्भिक्षे राष्ट्रविप्लवे । उद्वाहे तीर्थयात्रायां प्रतिशुक्रो न विद्यते ॥ काश्यपेषु वसिष्ठेषु भृगुष्वप्याङ्गिरस्सु च । भारद्वाजेषु वत्सेषु प्रतिशुक्रो न विद्यते ॥ बालानामातुराणां च गमने रक्षणाय तु । प्रतिशुक्रफलं नास्ति स्त्रीणां भर्तृगृहं प्रति' इति ॥ भर्तुः सूर्यबलं ग्राह्यम् ॥ ॥ वधूः संप्रविशेद्धानौ भर्तुः शोभनगोचरे । दंपत्योर्जन्मधिष्ण्यानि विशेषेण विवर्जयेत्' इति ॥ ॥ अथ गृहप्रवेशे नक्षत्रनिर्णयः । तत्र नक्षत्रविधिमाह बादरायणः—'नीहारांशुवसूत्तरादितिगुरुब्रह्मानुराधाश्विनी पौष्णे भास्करवायुवारुणहरित्वाष्ट्रेषु शस्ते तिथौ । कुम्भाजालिगते रवौ शुभकरे प्रासे-

दये भार्गवे जीवज्ञास्फुजितां दिने नववधूवेश्मप्रवेशः शुभः' इति । अस्यार्थः—नीहारांशुः मृगशीर्षम् । वसुः धनिष्ठा । उत्तरा उत्तरात्रयम् । अदितिः पुनर्वसुः । गुरुः पुष्यः । ब्रह्मा रोहिणी । पौष्णो रेवती । भास्करो हस्तः । वायुः स्वाती । वारुणं शतभिषक् । हरिः श्रवणम् । त्वाष्ट्रं चित्रा । शेषे प्रसिद्धे । आस्फुजिच्छुक्रः ॥ आह गुरुः—'शुभनाभसु तारासु सर्वासु प्रविशेद्गृहम् । शुभांशे शुभवारेषु शुभदृष्टे स्थिरांशके ॥ यदि लग्नाधिपः सौम्यः सुबली सौम्यवीक्षितः । वृषभे प्रविशेन्मूर्त्यै शेषेषु स्थिरराशिषु ॥ शुभदृष्टे युते वापि वीर्योत्कर्षसमाह्वयः । वृषांशकोदये सर्वप्रवेशः शोभनस्तदा ॥ चरोदयेषु सर्वेषु वृषांशः स्यात्सुशोभनः' इति ॥ ॥ अपवादाभावेऽपि प्रवेशविधिरुच्यते बार्हस्पत्येन—'वामप्रत्यक्षुरसाख्यादिदोषैः शुक्रे व्यवस्थिते । आवश्यके गमे नृणां प्रवेशविधिरुच्यते ॥ भार्गवं वा भरद्वाजवंशोत्थं द्विजमग्रतः । कृत्वा सुपूर्णकुम्भं च जपन्तो मृतजीविनीम् ॥ विद्वान्द्विजो विघ्नक्षयार्थं वर्धनार्थं प्रजायुषाम् । शुक्रंते अन्यदित्यादि तथा त्र्यैयम्बकं मनुम् ॥ जप्त्वा हुत्वा पयोभिर्वा तर्पयित्वा सहस्रशः । समिदन्नघृताद्यैश्च वास्तुमध्ये गुडान्विभिः ॥ सावित्र्याऽष्टसहस्रं च हुत्वाज्येन विधानतः । अनेनापि चरुं कृत्वा नैर्ऋत्यां वायुदिग्भवे ॥ आग्नेय्यां च क्रमाद्धुत्वा विशेद्गेहं नराधिपः । अपामार्गपलाशार्कखदिरोदुम्बरैः सह ॥ नन्दाभद्राऽमृताख्येन तृणेन सह वन्धयेत् । इन्द्रवल्लीलताभिश्च यज्ञियद्रुमपल्लवैः ॥ गृहसंमार्जनं कृत्वा संशोधयेद्दर्भमुष्टिना । पञ्चगव्यं यथान्यायं संगृह्य न्यस्य मध्यमे ॥ सिद्धार्थकैर्महाधान्यैः पत्रपुष्पैः प्रकीर्य च । अश्वत्थपत्रमालाभिर्दर्भमालाभिरेव च ॥ अलंकृत्य क्रमाद्दिक्षु पूर्णकुम्भाक्षतैरपि । दीपैरपि सुधूपैश्च संपूज्य गृहमाविशेत् ॥ ब्राह्मणैराशिषो वाच्या भुक्ततुष्टैर्द्विजोत्तमैः । एवं गजाश्वशालासु कृत्वैव प्रविशे-

त्सदा' इति। कालप्रदीपेतु—'अथोढभार्यस्य गृहं विविक्षोर्यात्रानिवृत्तस्य च वच्मि कालम्। निर्माय नूतं गृहमन्यशुकमपूर्वगेहं प्रविविक्षतश्च॥ निर्गमान्नवमे मासि तथाच नवमेऽहनि। रिक्तासु निन्द्ययोगेषु भानुभानुजवारयोः॥ अग्रदक्षिणभागस्थे चण्डरश्मौ सितेऽथवा। निद्रालौ केशवे व्यङ्गे रात्रौ चापि प्रभाकरे॥ चरलग्नेऽथवा कुम्भे क्रूरदृष्टेऽथवा युते। वामपृष्ठस्थिते चन्द्रे नैव शस्तं प्रवेशनम्॥ ध्रुवक्षिप्रमृदुष्विन्दोः स्थिरांशे चोदये विशेत्। स्वजन्मोच्चक्षये क्षत्रे सुभार्गवे स्थिरांशके॥ जन्मतोऽनुपचये विलग्ने पापखेचरयुतेऽथ वीक्षिते। हानिशोकरिपुरोगपीडनं जायते खलु गृहं विविक्षताम्॥ अत्र दक्षिणशुक्रो शोभन इत्युक्तं बार्हस्पते चानुकूल इति। तत्र यथाचारं व्यवस्था द्रष्टव्या॥ अत्रैवोक्तनवमदिनादिनिषेधस्य व्यवस्थोच्यते कालदीपे—'गव्यूतिहीने तथ नैव निर्गमान्मासे दिने वा नवमे पुनर्विशेत्।' अस्यार्थः—गव्यूतिः क्रोशयुगं सा हीना न्यूनाऽवधिभूता यस्य देशस्य स गव्यूतिहीनः तस्मिन्देशविषये निर्गमान्निर्गममासं तद्दिवसं वापेक्ष्य। ल्यब्लोपे पञ्चमी। नवमे मासि दिने वा ग्रामगेहादिकं न प्रविशेदिति॥ ॥ एवं तिथ्यादिकं सम्यग्विचार्य नववधूसमेतो विध्युक्तप्रकारेण स्वगृहं गच्छेत्। तत्र कारिका—'विवाहानन्तरं गच्छेत्सभार्यः स्वस्य मन्दिरम्। यदि ग्रामान्तरं तत्स्यादथ यानेन गम्यते॥ पूपालेत्यनया यानं वधूमारोपयेद्वरः। दंपत्योरग्रतोऽजस्रं विवाहाग्निं नयन्ति च। गृहान्निर्गच्छतोरेष स्वग्रामेऽपि भवेद्विधिः॥ ब्राह्मणी जीवपत्नी या जीवत्पुत्रा च या भवेत्। वसेदनन्तरां रात्रिं स्वग्रामे नैतदिष्यते॥ यद्यन्तरास्ति नद्यादि नावमारुह्य यापयेत्। अश्मन्वतीरपृचोर्वेन नावमारोहये-

पाठा०—१ याति चेत्।

द्वधूम् ॥ अर्धर्चेनोत्तरेणैनां जलादुत्तारयेदथ ॥ नीयमाना वधूर्बन्धुवियोगाद्यदि रोदिति । जपेज्जीवंरुदन्त्येतामेकग्रामेऽप्ययं विधिः ॥ जपेच्छोभनदेशादौ माविदन्परिपन्थिनः ॥ सुमङ्गलीरियेक्षेत वासेवासे समीक्षकान् । इहप्रियमृचा भार्यां स्वस्य गेहं प्रवेशयेत्' इति । इदमत्र गृह्यम्—'प्रयाण उपपद्यमाने पूषा त्वेतो नयतु हस्तगृह्येति यानमारोहयेदश्मन्वतीरीयते संरभध्वमित्यर्धर्चेन नावमारोहयेदुत्तरेणोत्क्रमयेज्जीवंरुदन्तीति रुदत्यां विवाहाग्निमग्रतोऽजस्रं नयन्ति कल्याणेषु देशवृक्षचतुष्पथेषु माविदन्परिपन्थिन इति जपेद्वासेवासे सुमङ्गलीरियं वधूरितीक्षकानीक्षेतेह प्रियं प्रजया ते समृध्यतामिति गृहं प्रवेशयेत्' इति । अस्यार्थः—विवाहानन्तरं स्वगृहं गन्तव्यम् । तत्र यदि ग्रामान्तरे स्वगृहं स्यात् तथासति तत्र प्रयाणे यदि यानमुपपद्यते तथोपपद्यमाने यानमारोहयेद्वधूं मन्त्रेण । तेन प्रयाणे यानस्यैवायं नियमः । यानादन्येन शिबिकादिना प्रयाणे च न भवति मन्त्रः । स्वग्रामविवाहपक्षे स्वगृहगमने नायं विधिः । अश्मन्वतीरीयत इत्यादि । यद्यन्तरा अन्तरिता वा नदी स्यात्तदाऽनेनार्धर्चेन नावमारोहयेद्वधूम् । उत्तरार्धर्चेन अत्राजहामेत्यनेन वधूमुदकादुत्तारयेत् । जीवमित्यादि । नीयमाना वधूर्यदि रोदिति बन्धुवियोगात्तदा एतां जपेत् । अयं विधिः स्वग्रामे भवत्यविशेषात् । विवाहाग्निमित्यादि । विवाहाग्निग्रहणमग्निविशेषनियमशङ्कानिवृत्त्यर्थम् । अजस्रग्रहणं ध्रियमाणस्य नियमार्थम् । तेनान्यत्र प्रयाणे समारोपणं कुर्यादिति गम्यते । अयं विधिः स्वग्रामेऽपि भवत्यविशेषात् । कल्याणेष्वित्यादि । शोभनेषु देशवृक्षचतुष्पथेषु एतां जपेत् । वासेवास इत्यादि । वासेवासे वसतौवसतौ ईक्षकाः सन्ति चेत्तानवेक्षेत । वासादन्यत्रेक्षणे न मन्त्रः । इह प्रियमित्यादि । अनया गृहं प्रवेशयेद्वधूम् । इदमादयः संवेशनपर्यन्ता विधयः स्वग्रामविवाहेऽपि भवन्तीति ॥ ॥ अत्र

भगवान्—'वरोऽप्यथ विवाहाग्निं नीत्वाजस्रकमग्रतः । वधूं गृहीत्वा हस्तेन निर्गत्य स्वगृहं नयेत् ॥ पूपालेतो नयत्वाद्यामृचमुच्चार्य तां वधूम् । आत्माधिकारसदृशं यानमारोहयेत्ततः ॥ ब्राह्मण्या जीवपुत्राया जीवपत्याश्च वेश्मनि । विवाहरजनीमेतामावसेतां वधूवरौ ॥ देशान्तरस्थं स्वं वेश्म वधूं तां प्रापयिष्यति । वरस्य पथि नौतार्या नदी यदि समापतेत् ॥ अश्मन्वतीरीयत इत्यृचार्धेन च तां वधूम् । आरोप्य प्रथमं नावमारोहेच्च वरः स्वयम् ॥ अत्राजहामेत्याद्येन सर्धर्चेनोत्तरेण ताम् । नावोऽवरोहयेत्सा चेत्स्वजनादर्शनादिना ॥ अश्रु मुञ्चेत्तु तां जीवं रुदन्तीमामृचं जपेत् । मनोरमेषु देशेषु वृक्षेषु च चतुष्पथे ॥ छन्नरूपेण वसतां यक्षादीनां प्रशान्तये । माविदन्परिपन्थिन इत्याद्यां च ऋचं जपेत् ॥ मार्गस्थेषु निवासेषु वधूं पश्यन्ति ये जनाः । तद्दृष्टिदोषशान्त्यर्थं प्रतिवीक्षेत तां वरः ॥ सुमङ्गलीरियं वधूरिमामित्यादृचं जपेत् । इत्यध्वना स्वकं वेश्म वधूं प्रापय्य तां वरः । तया सह गृहद्वारं प्रविशेत्प्राङ्मुखः स्थितः ॥ प्रदीपपूर्णकुम्भादिपाणिभिर्वनिताजनैः । कृताभ्युद्गमनस्तत्र तैः सादरकृतार्हणः । प्रदक्षिणप्रक्रमणमनुभूय क्षणान्तरम् । ततस्तां पूर्ववत्पाणौ परिगृह्य वधूं वरः । प्रवेशयेद्गृहमिह प्रियमित्यादृचं जपन्' इति ॥ ॥ अत्र कर्तव्यविशेषमाह फलप्रदीपकारः—'विधाय पूर्वं गृहदेवतार्चां सन्मङ्गलालंकृतगेहदेहः । तूर्यस्वनैर्मङ्गलगीतपूर्णकुम्भैर्निशेद्दीपवधूसमेतः ॥ स्वस्तिवाचनपुरःसरं ततो विप्रसंघमभिपूज्य शक्तितः । बन्धुभिः सह विधाय भोजनं संविशेदभिमताङ्गनासखः' इति ॥ ततः कर्तव्यमाह कारिकाकारः—'स्वस्त्यादि वाचयित्वाथ स्त्रियं तामुपगच्छति । मुहूर्ते शोभने तस्या व्रीडा न स्याद्यथा तथा' इति ॥ भगवानपि—'त्रिरात्रादिव्रतेष्वेषु दंपत्योः शक्त्यपेक्षया । अनुष्ठिते त्वन्यतमे व्रते या तु तदा निशा ॥ पुण्याहवाचनं तस्यां कार-

यित्वा द्विजैर्वरैः । मुहूर्ते शोभने गन्धमाल्यादिभिरलंकृताम् ॥ उपगच्छेद्वधूं यद्वा कालान्तरसमुद्भवे । उभयोरपि दंपत्योर्नक्षत्रा-
नुगुणैर्गुणैः ॥ शुद्धे विवाहनक्षत्रे रात्रौ दोषविवर्जिते । पुण्ये मुहूर्ते पुण्याहं वाचयित्वा द्विजोत्तमैः । अलंकृत्य मनोज्ञां तामुपग-
च्छेद्वधूं वरः' इति ॥

अथास्मिन्कर्मणि विनियुक्तमन्त्राणामर्थः कथ्यते—दंपत्योर्यानारोहणे पूषा त्वेत इति मन्त्रः । हस्तेन हस्तं गृह्य गृहीत्वा पूषा त्वा त्वां इतो नयतु प्रापयतु । अश्विना अश्विनौ त्वां रथेन प्रवहतां प्रगमयताम् । गृहान्भर्तृसंबन्धिनो गच्छ त्वं यथा गृहपत्नी असः गृहस्वामिनी भवसि वशिनी सर्वेषां गृहगतानां वशं प्राप्ता प्रापयित्री पत्युर्वशे वर्तमाना वा विदथं गृहस्थितं भृत्यादिजनं आवदासि वद ॥ ॥ अश्मन्वतीरीयत इति—अश्मन्वतीनाम नदी रीयते गच्छति । रीङ् गताविति धातुः । तां नदीं गमनाय संरभध्वं उत्तिष्ठत उद्गच्छत । तथाकृत्वा प्रतरत तां नदीमुल्लङ्घयत । सखायः यजमानस्य सखिभूताः इति देवानां संबोधनम् । अत्र अस्यां नद्यां ये अशेवाः शेव इति सुखनाम असुखभूता असन् अस्मानाश्रित्य वर्तन्ते तान् जहाम परित्यजाम । शिवान् सुखकरान् वाजान् अन्नानि हवींष्यभिप्राप्तुं वयमुत्तरेम ॥ ॥ जीवं रुदन्तीति । ये नराः पुरुषाः कन्यकाश्च जीवं जीवां जीवन्तीमिमां कन्यां अध्वरे अहिंसके काले रुदन्तीति यत् तदिदं । विमयन्ते इत्यन्वयं । कुर्वन्ति अस्थाने शोचन्ति ते नराः काकाश्च आवयोर्दीर्घां प्रसितिं दीर्घकालभाविनं प्रकृष्टं भावबन्धं अनुदीधयुः अनुध्यायन् । ये पितृभ्यो वामं वननीयमिदं कर्म समेरिरे प्रेरितवन्तः तेषां मयः सुखरूपं तद्रोदनं पतिभ्यो जनयः जायाया वध्वाः परिष्वङ्गे आलिङ्गनाय भवतु तत्सर्वमावयोः सुखाय

भवतु ॥ ॥ माविदन्नीति—ये चोराः पथि गच्छन्तौ दंपती आसीदन्ति अपहरणायोपसर्पन्ति ते परिपन्थिनश्चोराः माविदन् मावगमन् । सुगेभिः सुगमैः पथिभिर्दुर्गं दुर्गमनं देशं अतीतामतिक्रामतां अरातयः शत्रवः अपद्रान्तु अपगच्छन्तु ॥ ॥ सुमङ्गलीरिति—हे ईक्षका जनाः सुमङ्गलीः शोभनमङ्गलवती इयं वधूः अतःकारणादिमां वधूं समेत आगच्छत । समेत्य पश्यत च । दृष्ट्वा चास्यै सौभाग्यं पतिविषये वाल्लभ्यं दत्ताय दत्त्वा अथानन्तरं अस्तं स्वगृहं विपरेतन यथेष्टं गच्छत ॥ ॥ इह प्रियमिति—इह मदीये गृहे प्रजया पुत्रपौत्रादिकया प्रियं प्रीतिस्ते समृध्यताम् । अस्मिन्गृहे गार्हपत्याय गृहस्वामित्वाय जागृहि बुध्यस्व । एना एतेन मया पत्या तन्वं शरीरं संसृजस्व । अथ जिव्री जीर्णौ सन्तौ विदथं गृहकृत्यं आवदाथः आभिमुख्येन वदाथः । इति मन्त्रार्थः ॥

अथ नागबलिप्रयोगः । गृहप्रवेश(विवाह)दिनादारभ्य चतुर्थदिवसे दर्शसंक्रमव्यतीपातादिवर्जिते शुभे समदिने वा गृहप्रवेशं करिष्यमाणः श्वशुरगृहेऽभ्यज्य स्नात्वा रात्रौ नागबल्याख्यमुत्सवं कुर्यात् । तत्रायं क्रमः—गृहमध्ये विस्तीर्णश्लक्ष्णसमभूमौ चतुर्भद्रसंज्ञकमानससरोवरनिर्माणार्थं वसुसंख्याकरेखास्तिर्यगूर्ध्वं च समालिख्य तेन फलीकृतोनपञ्चाशत्कोष्ठानां मध्ये बाह्यचतुष्कोणेषु प्रत्येकमष्ट रेखाः प्रमृज्य मध्ये त्रयोदशगृहान्प्रमृज्यैवमवशिष्टद्वादशगृहोपेतमष्टकोणान्वितं चतुर्द्वारोपशोभितं चतुर्भद्राख्यं सरः कृत्वा तन्मध्ये षट्कोणमण्डलं रचयित्वा तन्मध्ये त्रिकोणमण्डलं रचयित्वा तन्मध्ये अष्टदलपद्मं सकर्णिकं रचयित्वा तत्परितः सिताक्षतैर्भित्तिं रचयित्वा तत्र ब्राह्म्यादिसप्तमातृकाः सम्यग्रचयित्वा सरोवरमध्ये सिताक्षतैः हंसशुकपक्ष्यादीन्स-

म्पग्रचयित्वा सरसो बहिस्तदाकारेण कृष्णश्वेतहरितशुक्लरक्तपीताक्षतैः पद्माकारान्यथाक्रमं रचयित्वा तद्बहिः पूर्वभागे रक्ताक्षतैर्ब्रह्माणं पश्चिमभागे सिताक्षतैः शंकरं बहिः कोणाग्रभागेषु फलच्छदयुक्तवल्लीं नैर्ऋत्यां श्वेततण्डुलैर्वायव्यभागे लवणेन च अन्योन्याभिमुखौ प्रावपादौ हस्तिनौ रचयित्वा । चित्रितं कर्पूरमिश्रजलपूरितं कुम्भं कर्णिकामध्ये संस्थाप्य सरसो बहिरुत्तरभागे गुडजीरकफलगन्धपुष्पसंयुक्तां सोपलां दृषदं संस्थाप्य स्वयं पश्चिमभागे स्त्रियासह सोत्तरच्छदभद्रासने उपविश्य प्राणानायम्य देशकालौ संकीर्त्य मम वन्ध्याश्रितविश्वावसुसंज्ञकगन्धर्वनिरासस्त्रीत्वसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नागवल्याख्यमुत्सवं करिष्य इति संकल्प्य सरोवरमध्ये हिरण्यगर्भमावाह्य तस्मिन्कुम्भे दाक्षायणीमावाहयेत् । तत्रायं क्रमः—दाक्षायणीं महादेवीं सर्वसंपत्प्रदायिनीम् । वरपाशाङ्कुशयुतां तथाचाभयशालिनीम् । रत्नकेयूरकटकमुकुटाद्यैरलंकृताम् । विचित्रवसनोपेतां सर्वलक्षणलक्षिताम् । विलासिनीसहस्रौघैः सेव्यमानामहर्निशम् । देवासुरैरपि सदा वन्द्यमानपदाम्बुजाम् । अणिमादिगुणोपेतामष्टैश्वर्यप्रदायिनीम् । एवंरूपां देवीं ध्यात्वा कुंभे आवाह्य पद्मस्य प्रागादिसप्तदलेषु यथाक्रमं ब्राह्मीं माहेश्वरीं कौमारीं वैष्णवीं वाराहीं इन्द्राणीं चामुण्डां इति सप्तमातॄः त्रिकोणमण्डलाग्रेषु पूर्वादितिसृषु दिक्षु यथाक्रमं महादेवीं महाकालीं शांकरीं षट्कोणमण्डलात्पूर्वभागे ब्रह्माणं सावित्रीं दक्षिणभागे शंकरं उमां पश्चिमभागे लक्ष्मीं नारायणं उत्तरभागे इन्द्रं शचीं तद्बहिः पूर्वाद्यष्टदिक्षु कपालिनं भीषणं चण्डं रुरुं क्रोधं उन्मत्तं असिताङ्गं संहारं तथैव कुमुदं कुमुदाक्षं पुण्डरीकं वामनं पुष्पदन्तं सार्वभौमं सुप्रतीकं अञ्जनं इतिसंज्ञकानष्टदिग्गजानिन्द्रादिलोकपालांश्च सरोमध्ये अप्सरसः सोमं गन्धर्वं पावकं देव्यभिमुखमावाह्य हिरण्यगर्भादिपावकान्तदेवेभ्यस्त-

तन्नाममन्त्रैरासनादिपुष्पसमर्पणान्तोपचारान्कृत्वा पुष्पमालाद्यलंकृतां क्षुरिकां कुम्भसमीपे निधाय—क्षुरिके त्वं महादेवि सर्वदेवाभिपूजिते । अतस्त्वां पूजयिष्यामि सर्वसंपत्प्रदा भव । इति संप्रार्थ्य तस्या आसनादिपुष्पसमर्पणान्तोपचारान्कृत्वा पूर्वरचितहस्तिद्वयमावाहनादिपुष्पसमर्पणान्तोपचारैः सम्यगभ्यर्च्य आवाहितदेवताभ्यो धूपदीपनैवेद्याद्युपचारान्समर्प्य नागयोश्च पृथगुपहारं दत्वा सरोवरपरितो दीपमालाभिरलंकुर्यात् । ततः कन्यापिता दंपती वस्त्रादिभिरलंकुर्यात् ॥ ततो वरो वध्वा सह सत्येनोत्तभितेतिसूक्तं श्रुत्वा तत्पाठकाय वधूपरिहितं वस्त्रद्वयं दापयेत् । ततः कन्यामाता भूषणश्वेतवस्त्रैरलंकृतान्नापूपपूरितं पात्रान्तरेणापिहितं अन्यया सुवासिन्यारोपितदीपसहितं भाजनं मूर्ध्नि दत्वा तदुपरि क्षुरिकां धृत्वा पश्चिमद्वारा सरोवरं प्रविश्य समाहिता तत्कुम्भं प्रदक्षिणीकृत्य तत्पात्रं कुंभस्य पुरतो निधाय तत्पात्रमध्यस्थं किंचिदन्नं कुंभे निक्षिप्य तत्कुंभे किंचिदालिप्य पुनः किंचिद्गृहीत्वा सर्वासु दिक्षु विनिक्षिपेत् । ततो वरमाता वधूमातरं पट्टवस्त्राद्यैः संपूजयेत् । ततो जायापती मुदा स्वस्वं करिणमधिरुह्यान्योन्याभिमुखौ भूत्वा । आतूनइन्द्रेति नवर्चस्य सूक्तस्य काण्वः कुसीदी इन्द्रो गायत्री इति सूक्तमुच्चारयन् स्नेहाद्वाचयित्वा हस्तिविनिमयं कुर्याताम् । ततो वरः पूर्ववदुपविशेत् । तद्वामभागे कन्यकोपविशेत् । ततो वरो ब्राह्मणेभ्योऽर्घं दत्वा कर्मान्ते कर्तव्यं स्वस्तिवाचनं पूर्ववत्कृत्वा श्वशुरेण दीयमानदासीदासपर्यङ्कादियुक्तमाङ्गल्यदीपमन्त्राक्षतान्बहुविधान्याशीर्वचनानि च स्वीकृत्य बन्धुभिः सह स्वलंकृतः कारितस्वगृहदेवतापूजः स्वलंकृतया वध्वा सह स्वलंकृतो ब्राह्मणभोजनं कारयित्वा स्वगृहं गच्छन् विवाहाग्निं शकटे अवस्थाप्य तमग्रतोऽजस्रं नयन् तेन सह प्रविशेत् । तत्रायं क्रमः—पूषात्वेत्यस्य सूर्यासावित्री सूर्यासावित्री त्रिष्टुप् । अनेन वधूं य-

थार्ह गजादियानमारोप्य यदा सा रोदिति तदा जीवंरुदन्तीति मन्त्रं जपेत् । सुमङ्गलीसूक्तपठनपरैर्ब्राह्मणैः बन्धुभिः सुवासिनीभिरष्टमङ्गलसंज्ञकदर्पणपूर्णकलशकन्यापुष्पाक्षतदीपमालाध्वजलाजैर्मङ्गलतूर्यनादैश्च सह सितच्छत्रोपलक्षितः स्वगृहसमीपं गत्वा सुवासिनीभिर्नीराजितविग्रहो वधूपाणिं संगृह्य इह प्रियं प्रजयां ते समृध्यतामिति मन्त्रेण शुभे मुहूर्ते तद्गृहं प्रविश्य तत्र विधिवत्पुण्याहं वाचयित्वा शुभे मुहूर्ते तामुपगच्छेत् ॥ इति श्रीमन्नृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे नागबलिसहितगृहप्रवेशनप्रकरणम् ॥

अथ स्तम्भबलिप्रकरणम् । तत्र भगवान्—'शौनकोऽहं प्रवक्ष्यामि स्तम्भबल्याख्यमुत्सवम् । पञ्चमेऽहनि कुर्वीत अभ्यङ्गस्नानपूर्वकम् ॥ ब्राह्मणैर्बन्धुभिः सार्धं पुण्याहं वाचयेत्ततः । पूर्वेद्युरर्चिते कुम्भे वसन्तोदकपूरिते । वसन्तं पूजयेत्तत्र ध्यानावाहनकादिभिः ॥ तत्र ध्यानम्—कनकारुणभासुरं प्रसन्नं हयवक्त्रं मदनस्य साहचर्यम् । द्विभुजं धृतपल्लवप्रसूनं भजकाभीष्टदमर्चयेद्वसन्तम् ॥ नैवेद्यं विनिवेद्यैवं बलिं चैव समर्पयेत् । स्तम्भेष्वथ बलिं दद्यान्नानाभक्ष्यान्नविस्तरैः ॥ इत्थं संपूज्य विधिना अभिषेकं च कारयेत् । पूर्वकुम्भेथ संस्थाप्य अङ्गुलीयकमुत्तमम् ॥ कौतुकं रचयेत्तत्र दंपतिभ्यां प्रयत्नतः । वेदोक्तैर्विविधैर्मन्त्रैरभिषेकं समाचरेत् । वसन्तादींश्च संप्रार्थ्य दिग्गजान्दिक्पतीनपि । ब्राह्मणैर्बन्धुभिः सार्धं अभिषिञ्चेच्च तज्जलम् । ततः स्तम्भबलिं सर्वं ब्राह्मणेभ्यो निवेदयेत् । दक्षिणां च यथाशक्ति दत्वा भुञ्जीत तैः सह । इत्थं स्तम्भबलिं कृत्वा सर्वान्कामानवाप्नुयात्' इति ॥

अथ प्रयोगः । वरो वध्वा सह पञ्चमदिवसे समभ्यज्य स्नात्वा देशकालौ संकीर्त्य आवयोरायुरारोग्यादिसर्वकामावाप्तिद्वारा

श्रीपरमेश्वरप्रीत्यर्थं स्तम्भवल्युत्सवाख्यं कर्म करिष्ये इति संकल्प्य बन्धुभिर्ब्राह्मणैः सह स्वस्तिवाचनं कृत्वा पूर्वदिवसे समर्चितं कुम्भं पालाशपुष्पचूर्णादिमिश्रितवसन्तोदकेन संपूर्य तस्मिन्कुम्भे । कनकारुणभासुरं प्रसन्नं हयवक्त्रं मदनस्य साहचर्यम् । द्विभुजं धृतपल्लवप्रसूनं भजकामीष्टदमर्चयेद्वसन्तम् ॥ इति ध्यात्वा आवाहनादिषोडशोपचारैरभ्यर्च्य नानाभक्ष्यान्नैः स्तम्भेषु बलिं दद्यात् । ततो ब्राह्मणाः कुम्भे सुवर्णाङ्गुलीयकं संस्थाप्य तत्र दंपतीधृतकौतुकसूत्रे क्षिप्त्वा तज्जलेन अब्देवताकमन्त्रैर्दंपती अभिषिञ्चेयुः । ततो वरो वसन्तादिषड्ऋतून् कुमुदाद्यष्टगजानिन्द्रादिलोकपालांश्च प्रणवादिचतुर्थ्यन्तनमोन्तनाममन्त्रैः पूजापूर्वकं संप्रार्थ्य ब्राह्मणैर्बन्धुभिः सह तज्जलमभिषिच्य सर्वं स्तम्भबलिं ब्राह्मणेभ्यो दत्वा यथाशक्ति दक्षिणां दत्वा बन्धुभिः सह भुञ्जीत ॥ इति श्रीमन्नृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे स्तम्भबलिप्रकरणम् ॥ ॥ अत्र वक्तव्यं संध्यादिकर्म आह्निककाण्डे वक्ष्यामः ॥

इत्थं षोडशकर्मकाण्ड इह संस्कारा निषेकादिकाः पुंसोऽष्टादश वर्णितास्तदुचिता ज्योतिर्विदाद्युक्तयः ।
सर्वेऽप्यन्वयवह्निसाध्यविषयो नान्दीमुखाद्या अपि श्रीमन्दिव्यनृकेसरिस्तव पदाम्भोजस्मृतेः प्राभवात् ॥

इति श्रीमन्नृसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डं समाप्तम् ॥

अत्र ग्रन्थसंख्या १२७०८ ॥ ॥ अथेतःपरं पाकयज्ञकाण्डं भविष्यति ।

अयं ग्रन्थ आन्ध्रकोशेनसह कोशचतुष्टयसंवादनपूर्वकं विद्वत्साहाय्येन च

पणशीकरोपाह्वविद्वद्वराग्रेसरलक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणा

संस्कृतः पाठान्तरयोजनेन परिष्कृतश्च ।

सचार्यं मुम्बय्यां

श्रेष्ठिवर तुकाराम जावजीतिप्रथिताह्वयेन स्वीये निर्णयसागराख्यमुद्रणालये

रामचन्द्र येसू शेडगेद्वारा मुद्रितः प्रकाशितश्च ।

शके १८३८,     सन १९१६.

॥ इति प्रयोगपारिजाते षोडशकर्मकाण्डं संपूर्णम् ॥

# ॥ अथ प्रयोगपारिजाते पाकसंस्थाहविस्संस्थाकाण्डम् ॥

श्रीयज्ञनारायणाय नमः ॥ त्वं पाकयजनेनैव हिरण्यसस्यपुत्रदः । लक्ष्मीनृसिंह किंदाता तदन्ययजनैरसि ॥ श्रवणकर्मविलोचनसाधनप्रभुगुणामणिकान्तिरनल्पदः(?) । नरहरे विहरन्घनगर्जनैः प्रमुदितो ह्यसि सर्पबलिश्रिया ॥ ॥ अथाचार्योक्तक्रमेण सप्तपाकयज्ञविधिरभिधीयते ॥ तथा तदीयवचनम्—'अतः परं द्विजातीनां संस्कृतिर्नियतोच्यते । संस्काररहिता ये तु तेषां जन्म निरर्थकम् ॥ पञ्चविंशतिसंस्कारैः संस्कृता ये द्विजातयः । ते पवित्राश्च योग्याः स्युः श्राद्धादिषु सुयन्त्रिताः ॥ गर्भाधानं पुंसवनं सीमन्तो बलिरेव च । जातकृत्यं नामकर्म निष्क्रमोऽन्नाशनं परम् ॥ चौलकर्मोपनयनं तद्व्रतानां चतुष्टयम् । स्नानोद्वाहौ चाग्रयणमष्टका च यथातथम् ॥ श्रावण्यामाश्वयुज्यां च मार्गशीर्ष्यां च पार्वणम् ॥—श्रावण्यां कर्तव्यं श्रवणाकर्म । एवमाश्वयुज्यामाश्वयुजीकर्म । मार्गशीर्ष्यां प्रत्यवरोहणम् । पर्वणि क्रियमाणं पार्वणम् ॥—उत्सर्गश्चाप्युपाकर्म महायज्ञाश्च नित्यशः । संस्कारा नियता ह्येते ब्राह्मणस्य विशेषतः' इति ॥ एतेषां पञ्चविंशतिसंस्काराणां नैमित्तिक-वार्षिक-मासिक-नित्यभेदेन चातुर्विध्यमाह स एव—'नैमित्तिकाः षोडशोक्ताः समुद्वाहावसानकाः । सर्पैवाग्रयणाद्याश्च संस्कारा वार्षिका मताः ॥ मासिकं पार्वणं प्रोक्तमशक्तानां तु वार्षिकम् । महायज्ञास्तु नित्याः स्युः संध्यावच्चाग्निहोत्रवत् ॥ संस्काराणामथैतेषां यथावदिह निर्णयः । देशकालानुरूपेण शास्त्रतश्च प्रवक्ष्यते' इति ॥ एतेषां संस्काराणां मध्ये गर्भाधानादिविवाहान्ताः षोडश संस्काराः उत्सर्गोपाकृती च पूर्वमेवोक्ताः ॥ ॥ इदानीं श्रवणाकर्मा-श्वयुजीकर्मा-ग्रयण-प्रत्यवरोहण-पार्वणश्राद्धा-

१ प्रथमे षोडशसंस्कारकाण्डे ।

ष्टकाश्राद्ध-महायज्ञरूपाः सप्त पाकयज्ञाः क्रमेण कथ्यन्ते ॥ तत्र तावदुद्देशक्रमप्राप्तः श्रवणाकर्मविधिरभिधीयते ॥ तदाह कारिकाकारः—'उच्यते श्रवणाकर्म सर्पबल्याख्यकर्म च । कुर्वीत श्रावणे मासि पौर्णमास्यामिदं द्वयम् ॥ पूरयेदक्षि कलशं नवं यावकसक्तुभिः । निधाय तं नवे शिक्ये दर्वीं वैकङ्कतीमपि ॥ प्राच्यां दिशि शुचि देशं बल्यर्थं परिगृह्य च । यवधाना भिर्जर्यकं भागमभ्यज्य सर्पिषा' इति ॥ इदमत्र सूत्रम्—'श्रावण्यां पौर्णमास्यां श्रवणाकर्माऽक्षतसक्तूनां नवं कलशं पूरयित्वा दर्वीं च बलिहरणीं नवे शिक्ये निदधात्यक्षतधानाः कृत्वा सर्पिषार्धा अनक्ति' इति ॥ अस्य हरदत्तकृतोऽर्थः—'मेषादिस्थे सवितरि यो यो दर्शः प्रवर्तते । मासाश्चान्द्रास्तदन्ताश्च चैत्राद्या द्वादश स्मृताः ॥ तेषु या या पौर्णमासी सा सा चैत्र्यादिका मता । कादाचित्केन योगेन नक्षत्रस्येति निर्णयः' ॥ तदेवं सिंहस्थे सवितरि या अमावास्या तदन्तचान्द्रमासमध्यवर्तिनी या पौर्णमासी सा श्रावणी । श्रवणयोगस्तु भवतु वा मा वा भूत्तस्यां श्रवणाकर्म कर्तव्यम् । श्रवणाशब्देनापि श्रावण्येवोच्यते 'विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः' इति दर्शनात् । तस्यां क्रियत इति श्रवणाकर्मेति कर्मनामधेयमन्वर्थकमिति । किंपुनस्तत् । यत्सर्पबलिरित्याख्यायते । अशेषवचनात् प्रतिसंवत्सरं भवेदिति हरदत्तः ॥ अथ सूत्रस्य नारायणकृता व्याख्या लिख्यते—श्रवणाकर्मेति—। कर्तव्यमिति शेषः । सर्पबलिश्चेत्यध्याहार्यम् । श्रवणेन युक्ता पौर्णमासी श्रावणी । यदा पुनः पौर्णमासी श्रवणेन न युज्यते तदापि कर्तव्यमेव पौर्णमासीति विशेषलक्षणार्थत्वान्नक्षत्रस्य । श्रवणाकर्मेति कर्मनामधेयम् । अक्षतसक्तूनामिति । अक्षता नाम यवास्तैः कृताः सक्तवोऽक्षतसक्तवः । सक्तूनामिति तृतीयार्थे षष्ठी । तैर्नवं कलशं पूरयित्वा । दर्वी वैकङ्कती स्रुगा-

कृतिः । बलिर्यया दर्व्या ह्रियते सा बलिहरणी । एतदुभयं नवे शिक्ये निदधाति सर्पबल्यर्थम् । शिक्यं रज्जुनिर्मितं लोके विदित-
मेव ॥ ॥ अथ श्रवणाकर्मोच्यते । अर्धा अनक्ति । अक्षतानां यवानां व्रीहीणां च लौकिकाग्नौ भर्जनेन धानाः कृत्वा ता-
सामर्धा एकमंशं असंस्कृतेन लौकिकेनाज्येनानक्ति क्लेदयति । समप्रविभागे अर्धशब्दो नपुंसक इति वैयाकरणाः । वेदे तु दृ-
श्यते—'तस्यार्धाः शस्त्यार्धाः परिशिष्य मध्ये निविदं दधाति' इति । अर्धा धानाः पात्रान्तरे कृत्वा अन्याश्चार्धा धाना अनक्तीत्यर्थः ।
एतावदहनि कर्तव्यमिति ॥ अत्र भगवान्शौनकः—'श्रावण्यां पौर्णमास्यां तु श्रवणाकर्मसंज्ञितम् । कर्म कृत्वा पुनः सर्पबलिं
चास्यां समाचरेत् ॥ व्रीहीणां वा यवानां वा ये स्युः कण्डनवर्जिताः । तण्डुलास्तैः समुत्पाद्य सक्तूंस्तैः कलशं नवम् ॥ पूरयि-
त्वाथ दर्वीं च बलिप्रक्षेपसाधनम् । वैकङ्कतीं स्रुगाकारां निर्मायोभयमप्यथ ॥ नवे शिक्ये निधायैतच्छिक्यं क्वापि निवेशयेत् ।
धानाश्च खण्डनाकाराः संपाद्याः प्रस्थमात्रिकाः ॥ तासामर्धं पृथक्कृत्य लौकिकेनैव सर्पिषा । अङ्क्त्वा कृत्वा विधानेन धानाः स्युः
पात्रयोर्द्वयोः ॥ एवं संभारानाहृत्य प्रत्यगस्तमिते रवौ' इति ॥ कारिका—'आदित्येऽस्तमिते कुर्यादग्न्याधानादि पूर्ववत् । हवि-
र्द्वयस्य तूष्णींस्तो निर्वापप्रोक्षणे इह ॥ पुरोवदवघातादि स्याद्विभज्य च तण्डुलान् । तत्रैकेन पुरोडाशमन्येन श्रपयेच्चरुम् ॥ एक-
स्मिंस्तु पुरोडाशं कपाले श्रपयेदिह । आज्येन सह धानानां पर्यग्निकरणं भवेत् ॥ आज्यस्य केवलोत्पूतौ तासां त्रिःप्रोक्षणं भवेत्'
इति ॥ इदमत्र गृह्यम्—'अस्तमिते स्थालीपाकं श्रपयित्वैककपालं पुरोडाशम्' इति ॥ अस्यार्थः—श्रपयित्वेति वचनं पुरोडा-
शस्यौपासनधर्मवच्छ्रपणार्थम् । स्थालीपाकस्य तु तत्रप्राप्त्यैवौपासनश्रपणं सिध्यति । नन्वस्यापि सिध्यति नियमार्थं तर्हि तेन धा-

चमसौ यथाशुष्कं प्रताप्योपवानीकृत्य तस्योपरि पवित्रे निधाय तूष्णीं चतुर्वारं समोप्य तूष्णीं त्रिरुत्पूय पवित्रं प्रोक्षण्यां निधाय पूर्णपात्रोदकं स्रुवेण पिष्टे सेचयित्वा पूर्वप्रतप्ताभिरद्भिः पिष्टं परिप्लाव्य मिश्रीकृत्य पिण्डीकृत्य पूर्वमुपहितकपालादङ्गारं तृणेनापोह्य तत्र पुरोडाशं निधाय अश्वशफमात्रं कूर्माकृतिं कृत्वाऽद्भिः श्लक्ष्णीकृत्य आज्यचरुधानापुरोडाशांस्त्रिःपर्यग्निकृत्वा पुरोडाशमुल्मुकैः प्रतितप्य दर्भाग्रैः प्रज्वाल्य तत्रैव सुशृतं श्रपयित्वा तदुपरि साङ्गारं भस्माभ्यूह्य वाचं विसृज्य हस्तं प्रक्षाल्य संवापपात्रं प्रक्षालयेत् ॥ तथाच सएव—'भदन्तीरधिश्रयति प्रक्षालितायां पात्र्यां निष्टप्तोपवातायां पवित्रवत्यां पिष्टानि संवपति देवस्य त्वेत्यनुद्रुत्याऽग्नये जुष्टं संवपामीति यथादैवतं त्रिर्यजुषा तूष्णीं चतुर्थं संवपन्वाचं यच्छति तामधिवासयन्विसृजते प्रोक्षणीवदुत्पूयान्युत्पूय प्रणीताभिः संयौत्यन्यया वा यजुषोत्पूय यदि प्रणीता नाधिगच्छेत्स्रुवेण प्रणीताभ्य आदाय वेदेनोपयम्य समापो अद्भिरग्मतेति पिष्टेष्वानीय अद्भ्यः परिप्रजातास्थ समद्भिरिति तप्ताभिरनुपरिप्लाव्य जनयत्यै त्वा संयौमीति संयुत्य मखस्य शिरोसीति पिण्डं कृत्वा यथाभागं व्यावर्तेथामिति विभज्य समौ पिण्डौ कृत्वा यथादैवतमभिमृशतीदमग्नेरित्याग्नेयमिदमग्नीषोमयोरित्यग्नीषोमीयमिदमहस्सेनाया अभीत्यैं सुरक्षमपोहामीति वेदेन कपालेभ्योऽङ्गारानपोह्य घर्मोऽसि विश्वायुरित्याग्नेयं पुरोडाशमष्टासु कपालेष्वधिश्रयत्येवमुत्तरमुत्तरेष्वेवमनुपूर्वाण्येवैष्वत ऊर्ध्वं कर्माणि क्रियन्ते समानजातीयेन कर्मणैकैकमपवर्जयति यानि विभवन्ति संस्कृतानि क्रियन्ते उरुप्रथस्वोरु ते यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयन्सर्वाणि कपालान्यभिप्रथयत्युत्तुङ्गमपूपाकृतिं कूर्मस्येव

प्रतितिमध्यप्रक्रमात्रं करोति यावन्तं वा मन्यते तं न सत्रा पृथुं करोतीत्येके सचं गृह्णीष्वेत्यद्भिः श्लक्ष्णीकरोत्यनक्ति अन्तरितश्र-क्षोऽन्तरिता अरातय इति सर्वाणि हवींश्यपि त्रिःपर्यग्निकृत्वा देवस्त्वा सविता श्रपयत्वित्युल्मुकैः प्रतितपत्यग्निस्ते तनुवं मातिधागिति दर्भैरवज्वलयति ज्वालैर्वोऽविदहन्तः श्रपयतेति वाचं विसृजत आग्नीध्रो हवींश्यपि सुशृतानि करोति संब्रह्मणा पृच्यस्वेति वेदेन पुरोडाशे माङ्गारं भस्माध्यूहत्यत्र वाचं विसृजेदङ्गुलिप्रक्षालनं पात्रीनिर्णेजनं च' इति । अत्र पुरोडाशस्य कपालेऽधिश्रयणकाले स्थाल्यां तण्डुलावपनं कुर्यात् । तथाच सएव—'अधिश्रयणकालेऽधिश्रयणमन्त्रेण तण्डुलानावपति' इति । एतत्पुरोडाशकरणे 'अनुक्तमविरुद्धमन्यतो ग्राह्य'मिति न्यायादापस्तम्बकल्पः प्रदर्शितः तस्य श्रौतविषयत्वात् । गृह्यकर्मणि मन्त्रान्विहाय सर्वं तन्त्रमे-वानुसंधेयं प्रायश्चित्तवत् ॥ अत्र भगवान्—'सायमौपासनं हुत्वा तत्रान्वाधानपूर्वकम् । पूर्णपात्रनिधानान्तं तन्त्रं कृत्वा पुरस्त-नम् ॥ निर्वापकाले हविषः पुरोडाशस्य चोभयोः । व्रीहीन्निरुप्य पर्याप्तान्निधाय प्रोक्षणं तथा ॥ अवहत्य पृथक्कृत्य तण्डुलानथ पावकम् । प्रज्वाल्यैकत्र तत्पार्श्वे चरोः श्रपणमाचरेत् । पार्श्वेऽन्यत्र पुरोडाशे शूर्पे वैककपालके । पुरोडाशार्थमन्यस्मिन्कृत्वा निर्व-पणं पृथक् ॥ ततश्चरुपुरोडाशौ पचेत च यथापुरा' इति ॥ कारिका—'चरुमासादयेत्पूर्वं पुरोडाशं ततः परम् । बर्हिष्याज्या-न्तरे कृत्स्नं पुरोडाशं निमज्जयेत् ॥ प्रकाशपृष्ठमथ वा पुरोडाशं निमज्जयेत्' इति ॥ अत्र पुरोडाशस्याज्यनिमज्जने कारणं श्रू-यते—'यजमानो वा एककपालः । तेज आज्यम् । यदेककपाल आज्यमानयति । यजमानमेव तेजसा समर्धयति । यजमानो वा

पाठा०—१ आज्यति ।

एककपालः । पशव आज्यम् । यदेककपाल आज्यमानयति । यजमानं पशुभिः समर्धयति । यदल्पामानयेत् । अल्पा एनं पशवो भुञ्जन्त उपतिष्ठेरन् । यद्बह्वानयेत् । बहव एनं पशवो भुञ्जन्तमुपतिष्ठेरन् । बह्वानीयाविःपृष्ठं कुर्यात् । बहव एवैनं पशवो भुञ्जन्त उपतिष्ठेरन्' इति ॥ अत्र भगवान्—'यद्वयोरुभयोः पूर्वं हविरुद्वास्य बर्हिषि । तीर्णेऽग्नेः पश्चिमे न्यस्य पुरोडाशमतः परम् ॥ उद्वास्य पात्रे कस्मिंश्चिदन्तर्धाय ततः परम् । यथा दृश्येत पात्रस्थो मग्नो वायमृतो भवेत् ॥ पुरीष्य च पुरोडाशं तथैव घृतमानयेत्' इति ॥ कारिका—'कृत्वाज्यभागपर्यन्तमिध्माधानादि पूर्ववत् । जुहुयात्पूर्ववच्चाथ चर्वाहुतिचतुष्टयम् ॥ अग्नेनयादिभिः कुर्वन्स्वाहाकारमृगन्ततः । उपस्तीर्यापसव्येन दक्षिणे प्रोक्षिते करे ॥ सव्येनैककपालं तमोप्य कृत्स्नमखण्डितम् । उपरिष्टात्तु सव्येन कुर्याद्विरभिघारणम् ॥ अच्युतायेति मन्त्रेण दक्षिणेन जुहोत्यथ । यस्मिन्नाज्ये निमग्नोऽयं स्रुवेणैव जुहोति तत् ॥ उपर्येककपालस्सः मानो अग्न इति त्वृचा । अथोपस्तरणाद्यन्यत्करोति गृहिणोञ्जलौ ॥ स तेन जुहुयादक्ता धानाः शं नो भवन्त्विति । यास्तु धाना अनभ्यक्ताः पुत्रादिभ्यो ददाति ताः ॥ अथ स्विष्टकृतं हुत्वा चरुधानैकदेशतः । परिषेचनपर्यन्तं होमशेषं समापयेत्' इति ॥ इदमत्र गृह्यम्—अग्ने नय सुपथा राये अस्मानिति चतसृभिः प्रत्यृचं हुत्वा पाणिनैककपालमच्युतायभौमाय स्वाहेत्यविप्लुतः स्यादाविःपृष्ठो वा मानो अग्नेऽवसृजो अघायेत्येनमाशयेनाभिजुहोति शंनो भवन्तु वाजिनो हवेष्वित्यक्ता धाना अञ्जलिनाऽमात्येभ्य इतरा दद्यात्' इति ॥ अस्यार्थः—पुरोडाशमुद्वास्याज्ये निमग्नं कुर्यात् प्रकटपृष्ठं[1] वा कुर्यात् । चरुं चतसृभिः प्रत्यृचमग्नेनयेत्या-

---

पाठा०—1 व्यक्तपृष्ठं वा ।

दिभिः ऋगन्ते स्वाहाकारं पठन्जुहुयात् । ततः पुरोडाशहोमकाले दक्षिणेन पाणिना एककपालं जुहुयान्मन्त्रेण । उपस्तरणाभि-
घारणे तु सव्येन करोति दक्षिणस्यान्यत्र व्यापृतत्वात् । दक्षिणाङ्गपरिभाषा च द्वयोः प्राप्तयोर्नियामिका नतु प्रापिकेत्युक्तम् । अस्य
सर्वहुतत्वादवदानाधर्माः लुप्ताः । सर्वहुतत्वं तु वक्ष्यामः । अविप्लुतत्वादाविःपृष्ठोवेति व्याख्यातम् ॥ मान इति ॥ एनं पुरोडाशम् ।
ग्नमितिवचनं अखण्डितोऽयं होतव्य इति ज्ञापनार्थम् । यस्मिन्नाज्ये स पुरोडाश आश्रयितः स आश्रयः तेनाज्येन मानो अग्ने इत्यृ-
चाभिजुहोति । उपरि जुहोतीत्यर्थः । स्रुवेणैव जुहुयादिति शेषः । धानाहोमे हस्तद्वयसंयोगोऽञ्जलिः । उपस्तरणावदानप्रत्यभिघा-
रणान्यर्थादन्यः करोति । शं नो भवन्तु वाजिन इत्यृचाऽक्ता धाना अञ्जलिना जुहुयात् । इतरा अनक्ता धाना अमात्येभ्यः पु-
त्रादिभ्यो दद्यात् । नवश्चरोर्धानाभ्यश्च गृहीत्वा स्विष्टकृतं हुत्वा होमशेषं समापयेत्' इति ॥ अत्र भगवान्—'इध्माधानादिकं
चाज्यभागहोमान्तमानकम् । अवशिष्टं पुरस्तन्त्रं कृत्वाथ हविषः शुचिः ॥ अवदायावदायाग्रेनवेत्याद्यं चतुर्ऋचम् । क्रमात्प्रत्यृचमु-
त्सोत्त्वा हुत्वाथो सव्यपाणिना ॥ निधाय दक्षिणे पाणावुपस्तृत्याभिघारणे । उत्स्वाऽन्युतास्मैमायस्वाहेति जुहुयात्ततः ॥ अस्य
सर्वहुतत्वेन नात्र द्विरवदानता । यस्मिन्नाज्ये' पुरोडाशः श्रायितः श्रापितोऽपि च ॥ किंचित्स्रुवेणैवादाय पुरोडाशस्य तूपरि । मा नो
अग्नेऽवसृजेति प्राज्यया जुहुयादृचा । आदायाञ्जलिना धाना घृताक्ता निहिताः पुरा । शं नो भवन्त्वित्याद्येन मन्त्रेण जुहुयात्ततः ॥ ॥ ५ ॥
परः सव्यात्मकः पाण्योर्नियोगादथात्मनः । आज्योपस्तरणाद्यर्थं कश्चित्कुर्यादितीर्यताम् ॥ अनक्तास्त्वितरा धानाः पुत्रादिभ्यो
दिशेत्ततः । स्विष्टकृद्धोममारभ्योपरितन्त्रं समापयेत्' इति ॥ अत्र पुरोडाशहोमकाले विशेषः श्रूयते—'यत्प्राक्प्रपद्येत देवलोक-

मभिजयेत् यद्दक्षिणा पितृलोकं जयेत् यत्प्रत्यक् रक्षांसि यज्ञान्हन्युः यदुदक् मनुष्यलोकमभिजयेत् प्रतिष्ठितो होतव्य एककपालं वै प्रतिष्ठितं द्यावापृथिवी अनुप्रतिष्ठिते द्यावापृथिवी ऋतव ऋचा प्रतिष्ठितं कुर्यात्' इति ॥ तथाचापस्तम्बः—'यदि हुतः पर्यावर्तेत स्रुचोग्रेण वा कपाले पाणिना' इति ॥ कपालादिवैपरीत्ये प्रायश्चित्तमाह कारिकाकारः—'कपालनाशे लेपः स्याच्छ्रपणात्कर्मणि तथ । एव इति ऋचोक्तां'अग्नये वैश्वानराय च पूर्णाहुतिं जुहुयात्' इति । कपालं यद्यवेक्षितं प्रागेव श्रपणाद्यदि । तत्र नयोक्तमन्त्रेण कपालं संदधात्यथ ॥ अभिन्नो घर्म इत्याभ्यामप्सु तत्प्रक्षिपेदथ । तच्चेदशुचिसंबद्धमाभ्यामेतत्क्षिपेज्जले ॥ अन्यथाशुचिसंबद्धं मृन्मयं भिन्नमेव वा ॥ भूमिर्भूमीति मन्त्रेण प्रक्षिपेदेव तज्जले ॥ भिन्द्याद्यदि पुरोडाश उद्धच्छेदथवा यदि । किमुत्पतसिमन्त्रेण बर्हिष्येनं निधाय च ॥ अभिमन्त्रयते तं च माहिंसीरिति मन्त्रतः' इति । 'अभिन्नो घर्मो जीरदानुर्यत आर्तस्तदगन्पुनः । इध्मो वेदिः परिधयश्च सर्वे यज्ञस्यायुरनुसंचरन्तु ॥ त्रयस्त्रिंशत्तन्तवो यान्वितन्वत इमं यज्ञं स्वधया ये यजन्ते । तेषां छिन्नं प्रतिदध्मो यजमन्स्वाहा यज्ञो अप्येतु देवान् ॥ भूमिर्भूमिमगान्माता मातरमप्यगात् । भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम् । किमुत्पतसि किमुत्प्रेष्ठाः शान्तः शान्तेरिहागहि । अघोरो यज्ञियो भूत्वाऽऽसीद सदनं स्वमासीद सदनं स्वमिति । मा हिंसीर्देव प्रेरित आज्येन तेजसाज्यस्व मा नः किंचन रीरिषः । योगक्षेमस्य शान्त्या अस्मिन्नासीद बर्हिषी'ति । इदमपि कर्माभ्युदयिकश्राद्धपूर्वकं कुर्यात् । वृद्धिश्राद्धप्रकरणे षोडशसंस्काराः श्रवणाकर्मादयश्च श्रौतादिवृद्धिश्राद्धविषय इत्याहुरिति वृत्तिकृता ना-

गयणेनोक्तत्वात् ॥ तथाचार्यः स्मृतिरूपेणाह—'कार्यमभ्युदयश्राद्धं श्रौते स्मार्ते च कर्मणि' इति । एतत्प्रकारस्तु वृद्धिश्राद्ध-प्रकरणेऽस्माभिरुक्तस्ततोऽवगन्तव्यः ॥

अथ श्रवणाकर्ममन्त्रार्थः । अग्ने नयेति—हे अग्ने देव, अस्मान् सुपथा शोभनेन पथा हितेन मार्गेण राये धनाय नय गमय मम पालितानि विश्वानि सर्वाणि वयुनानि ज्ञानानि । इह तु ज्ञातव्यवृत्तिर्वयुनशब्दः । सर्वाणि ज्ञातव्यानि विद्वान् त्वं अस्मदस्मत्तः एनः पापं युयोधि पृथक्कुरु अपनय । कीदृशम् । जुहुराणं कौटिल्यं कुटिलं । वयं च ते तुभ्यं भूयिष्ठां नमउक्तिं विधेम । लडर्थे लिङ् । भूयोभूयो नमोवाकं ते कुर्म इत्युक्तं भवति ॥ ॥ अग्ने त्वमिति—हे अग्ने, नव्यः । 'णु स्तुतौ' सर्वेषां नव्यः स्तुत्यस्त्वं अस्मान् स्वस्तिभिरविनाशैरुपायैः विश्वा विश्वानि दुर्गाणि दुरितानि अतिपारय अतिगमय । किंच तव प्रसादात् नोऽस्माकं पृथ्वी भूमिश्च बहुला भोगसमृद्धा उर्वी दीर्घा पूः पुरी चास्त्विति शेषः । तथा तोकाय पुत्राय तनयाय तत्पुत्राय च शंयोर्भव । उत्पन्नानां दुरितानां शमनाय आगामिनां पृथग्भावाय च भव ॥ ॥ अग्ने त्वमस्मदिति—हे अग्ने, त्वं असत् अस्मत्तः अमीवा रोगजातीकं युयोधि पृथक्कुरु । अनग्नित्राः अग्निं न त्रायन्ते इत्यनग्नित्राः यास्त्वग्निर्न त्रायते परिचरितुं न शक्नुत इत्यर्थः । अत्रेरुनास्यवालाभाय या इत्यध्याहार्यम् । या अमीवाः कार्न्यैः कृष्टीः प्रजाः कर्मभूताः अभ्यमन्त अभितो रुजन्ति तादृशीर्युयोधीति पूर्वेण संबन्धः । पुनश्च ब्रवीमि हे देव हे यजत्र, सर्वेषां यष्टव्यमस्मभ्यं सुविताय सुगमाय निर्बाधचरणाय क्षां भूमिं विश्वेभिरमृतेभिः सर्वैर्देवैः सह साकाङ्क्षत्वाद्देहीति गम्यते ॥ ॥ पाहिनो अग्न इति—हे अग्ने, नो अस्मान् पाहि रक्ष । उत अपिच

अजस्रैरविच्छिन्नैः पायुभिः पालनैः प्रिये सदने तवाभीष्टस्थाने यज्ञगृहे आ शुशुकान् आभिमुख्येन शोभमानो दीप्यमानः । किंच हे यविष्ठ युवन्, ते तव संबन्धिनं जरितारं जरागामिनं मां भयं माविदत् माप्रापत् कदापि । नूनं अनेकार्थत्वान्निपातानामनेन्यर्थे दृश्यते न नूनमस्ति नो श्व इति । अथेदानीमिह लोके च भयं माविदत् । अपरं च । सप्तम्यर्थे प्रथमा । अपरस्मिन्काले लोके च महम्नः वलवन् भयं माविदत् ॥ ॥ अच्युताय भौमायेति—सर्वदा स्वरूपादच्युताय भौमाय भूमावाहवनीयादिरूपेणावस्थिताय अग्नये स्वाहा वदामि ॥ ॥ मा नो अग्ने इति—हे अग्ने, नोऽस्मान् रिपवो मानस्त्वं मादाः । कीदृशाय । अघाय पापरूपाय विप्सवे विप्सः व्याप्तौ वेषणं विट् प्राप्तिस्तदभाववान् अविट् ततः । 'छन्दसि परेच्छायामपि' इति वा क्यच् 'क्याच्छन्दसि' इत्युप्रत्ययः । अस्माकं व्याप्तिमनिच्छते व्याप्तोयं माभूदित्येवमिच्छते । तथा दुच्छुनायै दुर्भिक्षाय च नो मा च शत्रुन् । किंच सहनानन् अविमर्शनान्भूत्वा । दीर्घोमानश्छान्दसः । दत्वते दत्त्ववते अतएव दशते सर्पादिकाय नोऽस्मान्मा परादाः हिंसार्थं दानं परादानम् । तथा अदते 'अद भक्षणे' व्याघ्रादिकाय मा परादाः । तथा रीपते हिंसते चौरादिकाय च मा परादाः ॥ ॥ शं नो भवन्त्विति—वाजिनो नाम देवताविशेषाः 'वाजिभ्यो वाजिन'मित्यत्र दृष्टाः ते हवेषु संग्रामेषु नोऽस्माकं शं भवन्तु सुखकरा भवन्तु । देवताता देवेभ्यस्तायते वितन्वत इति देवतातिर्यज्ञः तत्र । सप्तम्येकवचनस्य डादेशः । तत्रापि शं भवन्तु । कथंभूता वाजिनः । मितद्रवः मितं लोकं द्रवन्ति । स्वल्पगतय इत्यर्थः । स्वर्काः । अर्कः स्तुतिकर्मा । सुष्टु अर्काः स्तुत्याः तथा

अहिं सर्पं वृकं आरण्यश्वानं। उभयत्र जातावेकवचनम्। रक्षांसि च जंभयन्तो हिंसन्तः सनेमि क्षिप्रं असत् असत्तः अमीवा रोगजातीः युयवन् पृथक्कुर्वन्तु ॥ इति मन्त्रार्थः ॥

अथ प्रयोगः ॥ श्रावणमासे या पौर्णमासी तस्यां श्रवणाकर्माख्यं कर्म कुर्यात्। तत्र पूर्वाह्णे वृद्धिश्राद्धं कृत्वा दिवैव यथोक्तलक्षणा अक्षतधानाः समार्धीकृत्य तत्रार्धा धाना लौकिकाज्येनैकस्मिन्पात्रेऽभ्यज्यावशिष्टार्धा धानाः पात्रान्तरे निधाय अस्तमिते सूर्ये औपासनं हुत्वा पवित्रे समन्त्रं धारयेत्। तत्र मन्त्रौ—पवित्रवन्त इत्यनयोर्ब्रह्मा ऋषिः बृहस्पतिर्देवता जगतीछन्दः आभ्यां पवित्रं धृत्वा प्राणानायम्य देशकालौ संकीर्त्य मम पुत्रादीनां च रोगनिवारणसमस्तपापक्षयपृथिव्यादिप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नित्यविधिरूपं श्रवणाकर्माख्यं कर्म करिष्ये इति संकल्प्य। समिद्द्वयमादाय अस्मिन् श्रवणाकर्महोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये। अस्मिन्नन्वाहितेऽग्नावित्यादिचक्षुषी आज्येनेत्यन्तमुक्त्वा प्रधानदेवतामग्निं चतुश्चरुद्रव्येण अच्युतभौमाग्निं पुरोडाशद्रव्येण अग्निमाशयाज्येन वाजिदेवता धानाद्रव्येण शेषेण स्विष्टकृतमित्यादि सद्यो यक्ष्य इत्यन्तमुक्त्वा भूर्भुवःस्वःस्वाहेति। समिद्द्वयमाधाय परिसमूहनादिपूर्णपात्रनिधानान्तं तन्त्रं कृत्वा चरुपुरोडाशदेवतानां चतुरश्चतुरो मुष्टींस्तूष्णीं निरुप्य निर्वापसंख्यया तथैव प्रोक्ष्यावघातादि विधाय पूर्वं चरुपुरोडाशार्थं निरुह्य तण्डुलान् प्रक्षालनानन्तरं च पुरोडाशार्थं पृथक्कृत्य पुरोडाशभागं स्वयं किंचित्पिष्टीकृत्य कृष्णाजिने प्रस्कन्द्य पत्न्या दास्या[1] वा चूर्णं कारयित्वा ततश्चर्वर्थमग्नौ दक्षिणभागे स्थालीं निधाय। ततोऽग्नेः पश्चात्परिस्तरणस्य

पाठा०—1 दासीशब्दार्थोऽन्यत्र व्याख्यात —'क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते। न योज्या हव्यकव्येषु दासीं तां मुनयो विदुः' इति।

न मध्य उपरोपसंग्रकयज्ञियकाष्ठेन द्वावङ्गारौ पृथकृत्य तयोरेकं वायव्यदेशे निरस्याप: स्पृष्ट्वावशिष्टमङ्गारं दक्षिणमवस्थाप्य तस्मि-न्कपालमुपधाय तत्रान्यमङ्गारं निक्षिप्य पात्रान्तरे पिष्टसेकार्थमप: प्रताप्य प्रक्षालितशरावमग्नौ यथाशुष्कं प्रताप्य तत्पात्रं स्वाग्रे निधाय यावच्छीतमनस्थाप्य तत्र पवित्रे निधाय तूष्णीं चतुर्धारं पिष्टं समोप्य तूष्णीं त्रिरुत्पूय पवित्रं प्रोक्षण्यां निधाय पूर्णपात्रो-दकं स्रुवेण पिष्टेष्वन्तर्निनीय श्रपयित्वा पूर्वप्रतप्ताद्भिः पिष्टं परिप्लाव्य मिश्रीकृत्य पिण्डीकृत्य पूर्वमुपहितकपालादङ्गारं तृणेनापोह्य चरुस्थाल्यां तण्डुलानोप्य पुरोडाशं कपाले निधाय अश्वशफमात्रं कूर्माकृतिं कृत्वाऽद्भिः श्लक्ष्णीकृत्याज्यं संस्कृत्याज्यादीनि चत्वारि हवींषि त्रिःपर्यग्निकृत्वा पुरोडाशमुल्मुकैः प्रतितप्य दर्भैः प्रज्वाल्य तत्रैव सुश्रृतं श्रपयित्वा तदुपरि भस्मनासहाङ्गारान्निक्षिप्य चाचं निधाय हस्तं प्रक्षाल्य संतापपात्रं प्रक्षालयेत्। तत आज्योद्वासनं कृत्वाऽऽग्माय स्रुक्स्रुवसंमार्जने कृत्वा पुरोडाशोपरिस्थितभ-स्मादि तृणेनापोह्य चरुपुरोडाशावभिघार्याज्यमुदगुद्वास्य चरुं बर्हिष्यासाद्य उत्तरतः पात्रान्तरस्थितलौकिकाज्ये पुरोडाशं मज्ज-यित्वा तदुत्तरत आज्याक्तधाना आसाद्य इध्माधानाद्याज्यभागान्तं कृत्वा चरोरभ्युद्धृत्य दर्व्यामवदायावदाय। अग्नेनयेत्यादिनास्क-स्तुष्टस्यागस्त्यऋषिरग्निर्देवतात्रिष्टुप्छन्दः। अग्ने नय सुपथा राये अस्मानिति प्रतिहोमं ऋगन्ते स्वाहाकारं पठन् चतस्रश्चबाहु-तीर्हुत्वा आहुतिचतुष्टयेऽप्यग्नय इदं नममेत्युद्दिश्य त्यजेत्। पुरोडाशहोमकाले सव्येन पाणिना दक्षिणं पाणिं प्रोक्ष्योपस्तीर्य कृत्स्नं पुरोडाशमवदाय द्विरभिघार्य अच्युतायभौमायाग्नयेस्वाहेतिहुत्वा अच्युतायभौमायाग्नयइदं नममेत्युद्दिश्य त्यजेत्। ततो यस्मिन्नाज्ये पुरोडाश आश्रपितस्तदाज्यं स्रुवेण। मानोअग्नेइत्यस्यागस्त्य ऋषिरग्निर्देवता त्रिष्टुप्छन्दः मानो अग्ने इति पुरोडाशस्योपरि स्रुवेण

कृत्वाग्नय इदमित्युद्दिश्य त्यजेत् । धानाहोमे स्वाञ्जलावन्येनोपस्तीर्य प्रागुक्ता धाना द्विरोपयित्वाभिघार्य शंनो भवन्त्वित्यस्य वसिष्ठो वाजिनस्त्रिष्टुप् शंनो भवन्तु वाजिनो हवेष्वित्यञ्जलिना हुत्वा वाजिभ्य इदं न ममेति त्यजेत् । ततोऽवक्ता धानाः पुत्रादिभ्यो दत्वा चरुधानक्रदेशतः स्विष्टकृतं हुत्वा होमशेषं समाप्य धृतपवित्रग्रन्थिं विस्रस्य शुद्धदेशे प्रक्षिपेत् ॥ इति श्रवणाकर्म ॥

अथ सर्पबलिरुच्यते ॥ कारिका—'अथ प्रपूरयेद्दर्वीं सक्तुभिः कलशस्थितैः । गृहात्प्रागुपनिष्क्रम्य शुचौ देशेऽह्नि कल्पिते ॥ प्रो स्याग्निः प्रक्षिपेत्सक्तून्सर्पदेवेति मन्त्रतः । नान्तरा बलिमात्मानं व्यवेयादपि कश्चन ॥ व्यवायस्य निषेधोऽत्र उक्त आपरिदानतः । ये सर्पा इति मन्त्रेण नमस्कुर्यात्कृताञ्जलिः ॥ बलिं प्रदक्षिणं कृत्वा पश्चादस्योपविश्य च । सर्पोऽसीत्यादिकं मन्त्रं ददाम्यन्तं सकृद्वदेत् ॥ ध्रुवामुं ते परिददाम्येवमुक्त्वा निवेदयेत् । ज्येष्ठानुक्रमतः पुत्रानमत्या दुहितृस्ततः ॥ ततः पत्नी ध्रुवामुं त इत्याद्यावर्तनेन तु । पुनर्दर्नाम वक्तव्यं द्वितीयान्तममुंपदे ॥ ध्रुव मां ते परीत्यादिनात्मानं परिदाय च । अन्यः कुर्वीत चेदाह गृहिणो नाम मांपदे ॥ सर्पदेवादिमन्त्रेण सायंप्रातर्बलिं हरेत् । नमस्कारादि कुर्वीत तेनाप्रत्यवरोहणात् ॥ सायं प्रातश्च यावन्तः कालाः स्युर्मार्गशीर्षादधः । तावतो वा बलीनोप्य हरेत्तदहरेव तु' इति ॥ इदमत्र गृह्यम्—'कलशात्सक्तूनां दर्वीं पूरयित्वा प्रागुपनिष्क्रम्य शुचौ देशेऽपोऽवनिनीय सर्पदेवजनेभ्यःस्वाहेति हुत्वा नमस्करोति । ये सर्पाः पार्थिवा ये आन्तरिक्ष्या ये दिव्या ये दिश्यास्तेभ्य इदं बलिमाहार्षं तेभ्य इमं बलिमुपाकरोमीति प्रदक्षिणं परीत्य पश्चाद्बलेरुपविश्य । सर्पोऽसि सर्पतां सर्पाणामधिपतिरस्यन्नेन मनुष्यांस्त्रायसेऽपूपेन सर्पान्यज्ञेन देवांस्त्वयि मामन्तं त्वयि सन्तः सर्पा मा हिंसिषुर्ध्रुवं ते परिददामीति ध्रुवामुं ते ध्रुवामुं त इत्य-

मात्याननुपूर्वं ध्रुव मां ते परिददामीत्यात्मानमन्ततो नैनमन्तरा व्यवेयुरापरिदानात्सर्पदेवजनेभ्यः स्वाहेति सायंप्रातर्बलिं हरेदाप्रत्यवरोहणात्प्रसंख्याय हैके तावतो बलींस्तदहरेवोपसंहरन्ति' इति । अस्यार्थः—कलशश्च दर्वी च यस्मिन्नेव शिक्ये स्थापिते तत्र कलशाद्गृहीतैः सक्तुभिर्दर्वीं पूरयित्वा तां गृहीत्वा गृहान्निष्क्रम्य समीपे प्राच्यां दिशि शुचौ देशे अप आसिच्य सर्पदेवजनेभ्यः स्वाहेतिमन्त्रेण सक्तून् जुहोति प्रक्षिपति । ततो नमस्करोति ये सर्पा इति मन्त्रेण संहताभ्यां पाणिभ्याम् । हुत्वेति वचनादग्नौ प्राप्ते तन्निवृत्त्यर्थं शुचौ देशे इति वचनम् । प्रदक्षिणं परीत्य बलिं पश्चादस्योपविश्य सर्पोऽसीति मन्त्रं ब्रूयात् । बलिग्रहणं पश्चाच्छब्दस्य कालवाचित्वशङ्कानिरासार्थम् । कालवाचित्वेसति पूर्वाहुत्यनन्तरमेव स्यात् । मन्त्रसंज्ञकोऽयं मन्त्रः । तथाचोक्तम्—'इदं कार्यमनेनेति न कश्चिद्दृश्यते विधिः । लिङ्गादेवेदमर्थत्वं येषां ते मन्त्रसंज्ञकाः' इति । तस्मादुपांशु भवति । तथाहुः—'गृह्यकर्मणि सर्वत्र जपानुमन्त्रणाभिमन्त्रणोपस्थानमन्त्रकर्मकरणमन्त्राः पद्वपांशु प्रयोक्तव्याः' इति । ध्रुवामुं त इति । पूर्वं दद्यादिति शेषः । उत्तरत्र दृष्टः परिददामीति शब्दोऽत्रापि संबध्यते । साकाङ्क्षत्वादस्य मन्त्रस्य । वीप्सावचनं प्रत्यमात्यं परिदानस्याभ्यासः कार्यो न सर्वेषां नामानि निर्दिश्य सकृद्वक्तव्यमित्येवमर्थम् । पूर्वं पुत्रान्निवेदयति ध्रुव देवदत्तं ते परिददामीति । ततोऽप्रत्तदुहितॄः ध्रुवसावित्रीं ते परिददामीति । ततो भार्यां ध्रुव सत्यवतीं ते परिददामीति । ततः ध्रुव मां ते परिददामीत्यात्मानं । परिदद्यादिति शेषः । उपदेशादेवान्तत इति सिद्धे अन्तत इतिवचनं पूर्वेण संबन्धार्थम् । तेन पूर्वत्र परिददामीति संबन्धः सिद्धः । अमुंपदस्य स्थानेऽत्र ग्रमात्यानां तु नाम । 'द्वितीयान्तमनुज्येष्ठममात्यानां तथात्मनः । मां ते परिददामीति वदेदेवमथात्मनः' इति । अत्रार्थात्स्वकर्तृ-

कमेव कर्म । अन्यकर्तृकत्वेऽप्यधिकारिण एव । ततः परिदानकर्म । एनं बलिमात्मानं चान्तरा न व्यवेयुः । केचिदापरिदाना-त्परिदानपर्यन्तम् । आपरिदानादितिवचनात्पूर्वमन्त्रसाध्यक्रिया परिदानमिति गम्यते । कलशात्सक्तुभिर्दर्वीं पूरयित्वा शुचौ देशे मन्त्रेण बलिं हरेत् आप्रत्यवरोहणात्सायं प्रातश्च आचतुर्दश्या आपौर्णमास्या वा यस्मिन्नहनि प्रत्यवरोहणं करोति । सर्पदेवज-नेभ्यः स्वाहेति । पूर्वेणैव मन्त्रेण बलिहरणोपदेशादेव मन्त्रे सिद्धे पुनस्तदुपदेशादन्येषामुपनिष्क्रमणादीनां निवृत्तिः । मन्त्रोपदेशो नियमार्थः मन्त्रएव भवति नान्यो विधिरिति । सक्तवस्तावन्न निवर्तन्ते कलशपूरणस्य दृष्टार्थत्वप्रसङ्गात् । दर्वी च न निवर्तते दर्वीं च बलिहरणीमिति विशेषणस्येदमर्थत्वात् । शुचिदेशश्च न निवर्तते बलिहरणस्य भूमिसाध्यत्वेन प्रसिद्धत्वात् । अन्यत्सर्वं निव-र्तते । श्रावण्यां प्रतिपदमारभ्य यस्मिन्नहनि प्रत्यवरोहणं करोति मार्गशीर्षचतुर्दश्यां पौर्णमास्यां वा तस्मादर्वाचीनान्यहानि ह्रास-वृद्धिभ्यां परिगणनया परिगणितेष्वहःसु यावन्तः सायंप्रातःकालास्तावतो बलींस्तदहरेव दद्यादित्येके मन्यन्ते । इशब्दोऽभिमत-पक्षज्ञापनार्थः सर्वत्र । उपहरन्ति प्रदापयन्ति । उपहर्तव्य इत्याहुरित्यर्थः ॥ अत्र भगवाञ्छौनकः—'ततः सर्पबलिं कर्तुं नवे शिक्ये निवेशिताम् । दर्वीमादाय संपूर्य सक्तुभिः कलशाहितैः ॥ तामुपादाय निष्क्रम्य प्राच्यां दिशि निवेशनात् । तत्र स्वभावतः शुद्धदेशेऽरण्यादिसंभवे ॥ आसिच्यापः पुरःपश्चात्सर्पदेवेत्युपक्रमम् । मन्त्रं स्वाहान्तमुच्चार्य दर्वीस्थैरेव सक्तुभिः ॥ सर्पेभ्यो बलि-माधाय ये सर्पा इति पूर्वकम् ॥ उपाकरोमीत्यन्तं च मन्त्रमुक्त्वा नमस्ततः ॥ विधाय सर्पानुद्दिश्य प्रदक्षिणमथो बलिम् । परीत्य पश्चिमे तस्मादुपविश्य महीतले ॥ मन्त्रं हिंसिपुरित्यन्तं सर्पोसीत्येवमादिकम् । जपित्वाथ ध्रुवेत्येवं संबोध्य वदनन्तरम् ॥ ज्येष्ठा-

नुपूर्व्या भार्यां च समस्तान्परिदाय तु । अथात्मनोऽपि सर्वान्ते परिदानं समाचरेत् ॥ आत्मनः परिदाने तु ध्रुव मां त इतीर-
येत् । ननु पित्रोरात्मनश्च सूत्रकृद्वचनात्तथा ॥ स्वयंकर्तृकमेतच्च कर्मणोऽहेदमर्थतः । अन्यकर्तृकपक्षेऽपि योऽधिकार्यत्र कर्मणि । तस्यैव
परिदानं स्यात्तदर्थत्वेन कर्मणः । बलिप्रक्षेपमारभ्य प्रागन्तादस्य कर्मणः ॥ कर्त्रीर्बलेश्च मध्ये तु न गच्छेद्यत्रकुत्रचित् । मार्गशीर्षस्य
मासस्य पौर्णमास्यामथापि वा ॥ तस्य शुक्लचतुर्दश्यां नाम्ना प्रत्यवरोहणम् । करिष्यमाणं यत्कर्म ततः प्रागित उत्तरम् ॥ कुर्वीत
प्रत्यहोरात्रं सायंप्रातरिमं बलिम् । तेनैव मन्त्रेण तथा दर्व्या शिष्टैश्च सक्तुभिः ॥ अत्रोपवेशनं प्रत्यग्बलेर्मन्त्रजपस्तथा । नमस्का-
रश्च सर्वेभ्य इति सर्वं निवर्तते ॥ यद्वा तत्रैव समये तान्सर्वानेष्यतो बलीन् । संख्यायोपहरेदेवमाचार्याः केचिदूचिरे' इति ॥

अथ मन्त्रार्थः । सर्पदेवजनेभ्य इति—सर्परूपाणां देवानां ये जनाः परिचारकाः तेपि सर्पा एव तेभ्यः स्वाहा ददामि ॥
ये सर्पा इति—पृथिव्यां भवाः पार्थिवाः अन्तरिक्षे भवा आन्तरिक्ष्याः 'भवे छन्दसी'ति यत् । छान्दसत्वादादिवृद्धिः । दिवि
भवाः दिव्याः । दिशि भवा दिश्याः य एते सर्पाः तेभ्यः इमं बलिमाहार्षं आहृतवानस्मि । तेभ्य इमं बलिमुपाकरोमीति । उपाकरणं
नाम संस्कारः ॥ ॥ सर्पोऽसि सर्पतामिति—सर्पराजं प्रत्युच्यते । स त्वं सर्पोऽसि । न केवलं सर्पः किं तर्हि सर्पतां ये केचन
सर्पन्ति तेषां सर्पाणां अधिपतिरसि । स त्वं चान्नादिभिर्मनुष्यांस्त्रायसे एवं नाम महानुभावस्त्वं तस्मिन् त्वयि सन्तं त्वामेवाश्रित्य
वर्तमानं मा मां त्वयि सन्तं त्वामेवाश्रित्य वर्तमानाः सर्पा मा हिंसिषुः । ध्रुवामुमिति—ध्रुवो नाम सर्पराजः संप्रार्थ्यते । हे ध्रुव,
अहं तस्य कर्मणोऽन्ते परिददामि । अपर आह ध्रुवानिमान् परिददामि । यथैते ध्रुवा भवन्ति तथा परिददामीति । इति मन्त्रार्थः ॥

अथ प्रयोगः ॥ द्विधैव खण्डितव्रीह्यन्यतरतण्डुलनिर्मितैः सक्तुभिः नवं कलशं प्रपूर्य बलिप्रक्षेपसाधनवैकङ्कतदर्वीमपि संभृत्य तदुभयं नवे शिक्ये निधाय क्वापि निवेश्य स्वगृहापेक्षया प्राच्यां दिशि शुचिदेशं बल्यर्थं परिगृह्णीयात् । ततोऽस्तमिते सूर्ये देशकालकथनानन्तरं मम भार्यापुत्राऽप्रत्तदुहितृसमेतस्य भौमान्तरिक्ष्यदिव्यदिश्यसर्पेभ्यः संभावितबाधापरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं नित्यविधिरूपं सर्पबल्याख्यं कर्म करिष्य इति संकल्प्य । शिक्यस्थां दर्वीमादाय कलशाद्वितसक्तुभिरापूर्य गृहीत्वा गृहान्निष्क्रम्य प्राच्यां दिशि पूर्वोपकल्पितं देशमासाद्य प्रोक्ष्य सर्पदेवजनेभ्यः स्वाहेति मन्त्रेण दर्वीस्थसक्तूंस्तत्र प्रक्षिप्य सर्पदेवजनेभ्य इदं नममेत्युद्दिश्य त्यजेत् । बलेरात्मनश्च मध्ये केनाप्यपरिदानाद्व्यवधानं न कार्यम् । ततः कृताञ्जलिः । ये सर्पाः पार्थिवा ये आन्तरिक्ष्या ये दिव्या ये दिश्यास्तेभ्य इमं बलिमाहार्षं तेभ्य इमं बलिमुपाकरोमीति मन्त्रेण सर्पानुद्दिश्य नमस्कृत्य बलिं प्रदक्षिणीकृत्य पश्चाद्बलेरुपविश्य । सर्पोऽसि सर्पतां सर्पाणामधिपतिरस्यन्नेन मनुष्यांस्त्रायसेऽपूपेन सर्पान्यज्ञेन देवांस्त्वयि मा सन्तं त्वयि सन्तः सर्पा मा हिंसिषुर्ध्रुवां ते परिददामीति मन्त्रमुपांशु सकृज्जपित्वानुपूर्वं पुत्रादीन् परिदद्यात् ॥ तद्यथा—ध्रुवदेवदत्तं ते परिददामीति पुत्रम् । ध्रुवसाविर्त्रीं ते परिददामीत्यप्रत्तां दुहितरं । ध्रुवसत्यवतीं ते परिददामीति भार्यां । ध्रुव मां ते परिददामीत्यात्मानं ततः परिदद्यात् । अन्यः कर्ता चेत् मां पदस्थाने यजमाननाम द्वितीयया निर्दिश्य परिददामीति वदेत् । ततः श्रावणप्रतिपदमारभ्य यस्मिन्नहनि प्रत्यवरोहणं करोति मार्गशीर्षस्य चतुर्दश्यां पौर्णमास्यां वा तस्मादर्वाचीनान्यहानि ह्रासवृद्धिभ्यां परिगणनया परिगणितेष्वहःसु यावन्तः सायंप्रातःकालास्तावतो बलींस्तदहरेव दद्यात् । अत्र नमस्कारबलिप्रदक्षिणाप्रत्यगुपवेश-

नमन्त्रजपपरिदानानि निवर्तन्ते ॥ इति श्रीमन्नृसिंहीये प्रयोगपारिजाते पाकयज्ञकाण्डे श्रवणाकर्मसर्पबलिप्रकरणम् ॥

अथाश्वयुजीकर्म ॥ नरस्य नरसिंह त्वं रथस्याश्वयुजिक्रियाम् । व्यधाः किमनुकार्यं ते भक्तानां भक्तवत्सल ॥ अथ क्रमप्राप्तमाश्वयुजीकर्मोच्यते । तत्र कारिका—'कुर्वीताश्वयुजीकर्म तदिदानीमथोच्यते । स्यादाश्वयुजमासस्य पौर्णमास्यां हि तत्' इति ॥ इदमत्र गृह्यम्—'आश्वयुज्यामाश्वयुजीकर्मे'ति । अस्यार्थः—अश्वयुग्भ्यां युक्ता आश्वयुजी तस्यां पौर्णमास्यामाश्वयुजीकर्मसंज्ञकं कर्म कुर्यात् नक्षत्रायोगेपि पूर्ववत् । अत्र भगवान्—'या पौर्णमास्याश्वयुजीयुक्ता नक्षत्रयोगतः । तस्यामाश्वयुजीकर्मेत्येवमन्वर्थसंज्ञया'इति । कारिका—'निवेशनमलंकुर्यात्कुड्यानां लेपनं भवेत् । उपर्याच्छादयेत्तेषां समां भूमिं करोत्यथ ॥ सर्वे गृह्या विशेषेण स्नाताः शुक्लाम्बरास्तथा । औपासनं हुनेत्प्रातरन्वाधानादि पूर्ववत् ॥ उक्त्वा पशुपतिपदं चतुर्थ्यन्तं वदेत्परम् । त्वा जुष्टं निर्वपामीति निर्वापः प्रोक्षणं तथा ॥ प्रोक्षामीति विशेषस्तु प्रोक्षणे च समं भवेत् ॥ चरुश्रपणपर्यन्तमन्वाधानादि पूर्ववत् ॥ कुर्यात्पृषातकं नाम हविरन्यत्तदुच्यते । पयस्याज्ये निषिक्ते तु तत्पयः स्यात्पृषातकम् ॥ अस्यापि च सहाज्येन पर्यग्निकरणं भवेत् । आज्यस्य केवलोत्पूतौ तस्य निःप्रोक्षणं भवेत् ॥ इध्माभिघारणान्तं स्यादाज्यस्योद्वासनादिकम् । कृत्वाज्यभागपर्यन्तमन्वारब्धः सुतादिभिः ॥ पशुपतये शिवाय शंकरायापि नामतः । पृषातकाय स्वाहेति मन्त्रेण जुहुयाच्चरुम्' इति ॥ इदमत्र गृह्यम्—'निवेशनमलंकृत्य स्नाताः शुचिवाससः पशुपतये स्थालीपाकं निरुप्य जुहुयुः पशुपतये शिवाय शंकराय पृषातकाय स्वाहेति' इति ॥ अस्यार्थः—निवेशनं गृहं तत्प्रत्यवरोहणोक्तविधिना वक्ष्यमाणेनालंकृत्य सर्वे गृह्याः स्नान्ति । स्नानवचनं विशेषेण स्ना-

नार्थं। शौचार्थस्य स्मृतिप्राप्तत्वात्। शुचिवासोवचनं शुक्लवस्त्रप्राप्त्यर्थम्। स्थालीपाकं जुहुयुरित्येतावतैव सिद्धे पशुपतये निरुप्येति वचनं पशुपतये त्वा जुष्टं निर्वपामीत्येवं निर्वापप्रोक्षणे कुर्यादित्येवमर्थम्। एवं ब्रुवता आदिष्टमन्त्रेषु पाकयज्ञेषु निर्वापप्रोक्षणे तूष्णीं भवत इति ज्ञापितं भवति। स्थालीपाकमिति द्वितीयानिर्देशेऽपि सर्वहुतत्वाशङ्का न कार्या। अथ दधिसक्तून्जुहोतीत्यत्र हुत्वा दधिसक्तून्प्राश्येति शेषभावदर्शनात्स्थालीपाकमित्युक्ते स्थालीपाकस्यैकदेशमित्यर्थः। जुहुयुरिति बहुवचनं गृहिणा होमे क्रियमाणे पुत्रादयो गृह्याः समन्वारभेरन्नित्येवमर्थम्॥ अत्र भगवान्—'यत्कर्म ग्रथितं तस्य प्रयोगोऽत्र निबध्यते। पूर्वेद्युरुपलेपाद्यैरलंकृत्य निवेशनम्॥ प्रभातकालेऽथ स्नात्वा शुक्लाम्बरधरो भवेत्। प्रातरौपासनं हुत्वा तस्मिन्नग्नौ पुरस्तनम्॥ अन्वाधानादिकं तन्त्रं प्रणीतासादनावधि। कृत्वा च पशुपत्यर्थं चरुमुक्तप्रकारतः॥ परानशेषितं तन्त्रमाज्यसंस्कारपूर्वकम्। आज्यभागान्तमाचार्यस्त्ववदाय चरुं ततः॥ मन्त्रमुक्त्वा पशुपतय इत्यादि जुहुयात्पुनः। पुरस्कृत्वात्र जुहुयुः शुचिवासस इत्यपि॥ होमस्य बहुकर्तृत्वश्रुतेः पुत्रादयोऽपि च। स्नात्वा शुक्लाम्बरधरा भूत्वा प्रयतमानसाः। अन्वारभेरन्कर्तारमासीरन्वा तदन्तिके' इति॥ कारिका—'अथोपस्तरणाद्यन्यः करोति गृहिणोऽञ्जलौ। द्रवत्वेन स्रुवेणैव पृषातकमवद्यति॥ जुहोत्यञ्जलिना चैनदूनं मे पूर्यतामिति। हविर्द्वयैकदेशाभ्यां स्विष्टकृत्स्यात्समापयेत्' इति॥ इदमत्र गृह्यम्—'पृषातकमञ्जलिना जुहुयादूनं मे पूर्यतां पूर्णं मे मोपसदत्पृषातकाय स्वाहे'ति॥ अस्यार्थः—'पयस्याज्ये निषिक्ते तु तत्पयः स्यात्पृषातकम्'। उपस्तरणाभिघारणे त्वर्थादन्यः करोति। पृषातकं स्रुवेणावद्यति। धानावदस्य संस्कारः। 'सर्वत्र द्रवद्रव्याणि स्रुवेणानयेत्। कठिनानि तु हस्तेन। स्वधितिना पशु-

मि'ति तद्विदः । चरोः पृषातकाच्चावदाय स्विष्टकृतं हुत्वा होमशेषं समापयेदिति ॥ यदाह भगवान्—'ऊनं मे पूर्यतां पूर्णमित्युपक्रमसंयुतम् । पृषातकायस्वाहेति पर्यन्तमयमादितः ॥ उदीर्याञ्जलिना पश्चाज्जुहुयाच्च पृषातकम् । अञ्जलौ पाणियुग्मस्य विनियोगाददोपि च । धानाहोमावदानं स्यात्कर्तोपस्तरणादिकम् । क्षीरेण यद्धृतं मिश्रं तत्पृषातकमुच्यते ॥ ततसौविष्टकृतादूर्ध्वं तन्त्रं परिसमापयेत्' इति । इदमपि कर्माभ्युदयिकश्राद्धपूर्वकं कुर्यात् । एतत्प्रकारस्तु वृद्धिश्राद्धप्रकरणेऽस्माभिरुक्तः ।

अथ मन्त्रार्थः—पशुपतये ब्राह्मणाद्याः स्थावरान्ताः पशवः तेषां पती रक्षिता । 'स यथावत्पशून्पाति तैश्च यद्रमते पुनः । तेषामपि पतिर्यः स तस्मात्पशुपतिः स्मृतः' इति महाभारतम् । तस्मै शिवाय शिवः शान्तो निष्कलः शिवः परो वा शिव एको ध्येयः शिवः शंकरः । सर्वमन्यत्परित्यजेदित्याथर्वणिकाथां गाथायामामनन्ति—'समेधयति यन्नित्यं सर्वार्थान्सर्वकर्मसु । शिवमिच्छन्मनुष्याणां तस्मादेष शिवः स्मृतः' इति महाभारते । तस्मै शंकराय शं सुखं तत्करणशीलाय । 'पयस्यवनयेदाज्यं तत्पृषातकमुच्यते' इति छन्दोगाः । तद्योगादेव पृषातक इति शब्दराजः (?) । ऊनं म इति । यन्मे ऊनं मयाकृतेषु तत्पूर्यताम् यत्पुनः पूर्णं तन्मे मोपसदत् । 'षद्लृ विशरणगत्यवसादनेषु'इति धातुः । मोपसदत् श्रीर्णं माभूत् । पृषातकयोगादेवेति पृषातकशब्द इत्युक्तं तस्मै स्वाहेति । इति मन्त्रार्थः ॥

अथ प्रयोगः ॥ आश्वयुजमासे पौर्णमास्यामाश्वयुजीकर्म कुर्यात् । पूर्वेद्युर्यजमान उपलेपाद्यैर्निवेशनमलंकृत्य भूमिं समवधाय पवित्रे समन्त्रं धारयेत् पवित्रन्त इत्यादि । अनयोर्ब्रह्मा ऋषिः बृहस्पतिर्देवता जगतीछन्दः आभ्यां पवित्रं धृत्वा प्राणानायम्य दे-

शकालसंकीर्तनानन्तरं मम स्त्रीपुत्रादिसहितस्य न्यूनापेक्षितविषयसंपूर्णतापूर्णानवसादनसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नित्यविधिरूपमाश्वयुजीकर्माख्यं कर्म करिष्ये इति संकल्प्य । अस्मिन्नाश्वयुजीकर्मणि देवतापरिग्रहार्थमन्वाधानं करिष्य इत्यादि चक्षुषी आज्येनेत्यन्तमुक्त्वा । प्रधानदेवं पशुपतिं चरुद्रव्येण पृषातकं पृषातकद्रव्येण शेषेण स्विष्टकृतमित्यादि सद्योयक्ष्य इत्यन्तमुक्त्वा समिद्वयमग्नावाधाय परिसमूहनादिपूर्णपात्रनिधानान्तं कृत्वा प्रत्यगग्नेः शूर्पं निधाय पवित्रवति शूर्पे पशुपतये त्वा जुष्टं निर्वपामीति चर्वर्थं चतुरो मुष्टीन्निरुप्य तत्संख्यया प्रोक्ष्यावघातादिचरुश्रपणान्तं कृत्वा आज्यमिश्रं पयश्च पृषातकं नाम हविरन्तरमुत्पाद्याज्यं संस्कृत्य पृषातकचरुभ्यां सह पर्यग्निकृत्वाज्योद्वासनाद्याज्यभागपर्यन्तं कर्म कृत्वा सुतादिभिरन्वारब्धो निधितञ्चरुमवदाय पशुपतयेशिवायशंकरायपृषातकायस्वाहेति हुत्वा पशुपतयेशिवायशंकरायपृषातकायेदंनममेत्युद्दिश्य त्यजेत् । अथ यजमानाञ्जलावन्य उपस्तीर्य स्रुवेणैव पृषातकं द्विरवदायाभिघार्य यजमानोऽञ्जलिनैव ऊनं मे पूर्यतां पूर्णं मे मोपसदत्पृषातकायस्वाहेति हुत्वा पृषातकायेदं नममेत्युद्दिश्य त्यजेत् । ततो हविर्द्वयैकदेशाभ्यां स्विष्टकृतं हुत्वा होमशेषं समापयेदिति ॥ इति श्रीमन्नृसिंहीये प्रयोगपारिजाते पाकयज्ञकाण्डे आश्वयुजीकर्मप्रकरणम् ॥

अथाग्रयणम् ॥ आग्रयणं पदं यस्य प्रयच्छन्ति समुत्सकाः । मुनयो मनसा सक्ताः स नृसिंहः प्रसीदतु ॥ अथाग्रयणमुच्यते । तत्र कारिका—'शरद्याग्रयणं नाम पर्वणि स्यात्तदुच्यते । पूर्णपात्रनिधानान्तमन्वाधानादि पूर्ववत् ॥ निर्वापप्रोक्षणे तूष्णीं भवेतामत्र कर्मणि । कृत्वाज्यभागपर्यन्तमत्र धानादिपूर्ववत् ॥ तिस्रश्चर्वाहुतीर्हुत्वा सजूरित्यादिभिस्त्रिभिः । स्विष्ट-

कृत्स्नाचरोरेकदेशं सव्ये निधाय च ॥ प्रजापत्यादिमन्त्रेण दक्षिणेनाभिमृश्य ताम् । भद्रान्न इति तु प्राश्नात्याचामेन्नाभिमा-
त्मनः । आलभेतोपविष्टस्तु तत्रैवामोसिमन्त्रतः ॥ पत्नी तु मध्यमहविःशेषं प्राश्नात्यमन्त्रकम् । परिषेचनपर्यन्तं होमशेषं समाप-
येत् ॥ इदमाग्रयणं कुर्यात्त्रेतायामाहितानलः । एवमाग्रयणं प्रोक्तम्' इति ॥ इदमत्र गृह्यम्—'सजूर्ऋतुभिः सजूर्विधाभिः सजू-
रिन्द्राग्निभ्यांस्वाहा । सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वेभ्योदेवेभ्यःस्वाहा । सजूर्ऋतुभिः सजूर्विधाभिः सजूर्द्यावापृथिवीभ्यां-
स्वाहेत्याहिताग्नेराग्रयणस्थालीपाकोऽनाहिताग्नेरपि शालाग्नौ' इति । अस्यार्थः—अविशेषादाहिताग्नेरपि सिध्यति श्रवणाकर्मादिवत् ।
आहिताग्निग्रहणं किमर्थम् । ब्रूमः । आहिताग्नेराग्रयणान्तरस्य विहितत्वादेतदाग्रयणं न प्राप्नोति तस्मादाहिताग्निग्रहणम् । अयं
चापत्कल्पो द्रष्टव्यः । इदंचास्य त्रेतायां भवति नौपासने तत्तु साधयिष्यामः । शाखान्तरे दृश्यते—'गार्हपत्ये स्थालीपाकं श्रप-
यित्वाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यः' इति । तस्मात्त्रेतायामिति सिद्धम् । इहतु विधानं पाकयज्ञधर्मप्राप्त्यर्थं । अनाहिताग्नेरिति
अनाहिताग्नेरप्याग्रयणं कार्यम् । तच्च शालाग्नौ भवति । शालाग्निर्नाम औपासनः । तर्हि शालाग्निग्रहणमपार्थकम् । सत्यम् ।
नियमार्थं तु तत् अनाहिताग्नेरौपासने इति । तेनाहिताग्नेस्त्रेतायामिति सिद्धम् । स्विष्टकृतं हुत्वा चरोरेकदेशं गृहीत्वा सव्ये
पाणौ कृत्वा दक्षिणेनाभिमृशेत् प्रजापतयेत्त्वेति मन्त्रेण । ततो भद्रान्नः श्रेय इति प्राश्य तत आचम्य तत्रैवासीनो नाभिमाल-
भेत-अमोसि प्राण इति । पत्नी तु मध्यमहविःशेषं प्राश्नाति तूष्णीम् । होमशेषं समापयेत् । एतत्प्राशनमाग्रयणद्वयेऽपि भवति ।
गार्ग्यार्थमिदमत्र लिखितम् । इदं चाग्रयणं यदा वर्षस्य वृष्टिः सा तदा भवति शरदीत्यर्थः । तथाच वचनम्—'शरदि व्रीहिभि-

१ प्र० पारि०

यजेते'ति। तच्च पर्वणि भवति। यवाग्रयणं तु न कार्यम्। श्यामाकैस्तु प्रस्तरं कुर्यान्नाग्रयणं दृष्टत्वात्। अपिचात्र समानतन्त्रं कुर्यात्सौम्यं चरुम्। अस्यच नामधेयेन होमः। आग्रयणस्थालीपाक इत्यत्र विशेषणसमासः आग्रयणं चासौ स्थालीपाकश्चेति। तत्र स्थालीपाकग्रहणस्येदं प्रयोजनम् अनाहिताग्नेः स्थालीपाक एव कार्यो नाग्निहोत्री वै नानादयित्वेत्ययं पक्षः कार्य इति। अत्र वृत्तिकृता प्राशनाभिमन्त्रणं विहितं तस्य सूत्रमूलत्वादविरोधः। इदमत्र सूत्रम्—'अवान्तरेळायां नित्यं जपमुक्त्वा सव्येपाणौ कृत्वेतरेणाभिमृशेत्प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसे मह्यमन्नाद्याय। भद्रान्नः श्रेयः समनैष्ट देवास्त्वयाऽवसेन समशीमहि त्वा। स नो मयोभूः पितवाविशेह शं नो भव द्विपदे शं चतुष्पद इति प्राश्याचम्य नाभिमालभेताभोसि प्राण तदृतं ब्रवीम्यभासि सर्वानसि प्रविष्टः। स मे जरां रोगमपनुद्य शरीरादमाम एधि मा मृधाम इन्द्रेत्येतेन भक्षिणो भक्षान्सर्वत्र नवभोजन' इति। पुनस्तेनैव शरदीत्यर्थ इत्युक्तं तस्य आपस्तम्बसूत्रमूलत्वात्। तथाच शरदि व्रीहिभिरिति यजेतेति शेषः। तत्र पर्वणि कार्यं अमावास्यायां पौर्णमास्यां चेति तेनैवोक्तत्वात्। स्मृत्यर्थसारे तु तत्र कर्मणि कृत्तिकाप्रथमं विशाखे उत्तमं तानि देवनक्षत्राणीति॥ अत्र भगवान्—'कर्तुमाग्रयणे.................. । ऋत्विग्द्रव्याद्यभावेन तस्य कल्पोऽयमुच्यते॥ प्रज्वाल्य गार्हपत्याग्निं तदन्वाधानपूर्वकम्। चरुश्रपणपर्यन्तं तत्रं कृत्वा पुरस्तनम्॥ पश्चादाहवनीयाग्निमपि प्रज्वाल्य तत्र तु। अन्वाधानं विधायाथ कृत्वा परिसमूहनम्॥ परिस्तीर्य च पर्युक्ष्य तमप्यग्निं यथाविधि। ततोऽग्नेर्गार्हपत्यस्य समीपाद्बर्हिरादिकम्॥ होमोपकरणं सर्वं समादाय पृथक्पृथक्। अग्नेराहवनीयस्य पार्श्वेनास्य यथाक्रमम्॥ तस्मिन्नाहवनीयाग्नौ परिध्याधानपूर्वकम्। आज्यभागविधानान्तं पुरस्तन्त्रं

विधाय च ॥ ततोऽवदायावदानधर्मेण हविषः शुचिः । सजूर्ऋतुभिरित्याद्यैस्त्रिभिर्मन्त्रैर्यथाक्रमम् । हुत्वा स्विष्टकृदूर्ध्वं च तन्त्रं परिसमापयेत् ॥ अनाहिताग्निरप्यग्निं विहृत्यौपासनं ततः । स्थालीपाकप्रकारेण चरुं पक्त्वाऽवदाय च ॥ एतैरेव त्रिभिर्मन्त्रैर्हुत्वा स्विष्टकृदादिकम् । कृत्वोपरितनं तन्त्रमथान्नं हुतशेषितम् ॥ वैश्वदेवावशिष्टं च पात्रे निक्षिप्य कुत्रचित् । तत्पात्रमन्नसहितं सव्ये पाणौ निधाय च ॥ तत्प्रजापतयेत्याद्यं मन्त्रमुच्चार्य पाणिना । दक्षिणेनाभिमृश्याथ भद्रान्नःश्रेयआदिकम् ॥ उच्चार्य मन्त्रं प्राश्यान्नमाचम्य द्विरतन्द्रितः । अमोसि प्राण तदृतं ब्रवीमीत्येवमादिकम् । मन्त्रमुच्चार्य हस्तेन नाभिदेशं परामृशेत्' इति ॥ एतदाग्रयणमापत्काले मलमासेऽपि भवतीत्युक्तं चन्द्रिकायां गृह्यपरिशिष्टे—'अवपद्वारहोमश्च पर्व चाग्रयणं तथा । मलमासेऽपि कर्तव्यं काम्या इष्टीर्विवर्जयेत्' इति । अवपद्वारहोमोऽत्र औपासनवैश्वदेवादिकः । पर्व दर्शपौर्णमासौ पार्वणस्थालीपाकश्च । आग्रयणमाग्रयणेष्टिः । यद्यप्याग्रयणं 'वर्षासु श्यामाकैर्यजेते'तिमासद्वयात्मकवर्षाख्यतौ विहितं, मलिम्लुचमासेऽपि तत्कालासंभवादनन्यगतिकं न भवति तथापि दुर्भिक्षेण श्यामाकव्यतिरिक्तधान्यासंभवे जीवनार्थं नवश्यामाकान्नभोजनमप्यकृताग्रयणेन न कर्तव्यमित्याग्रयणानुष्ठानं जीवनार्थमावश्यकमिति युक्तमाग्रयणं तथेति । यदाहुः—दुर्भिक्षाद्यदावश्यकं तदाधिकमासेऽपि श्यामाकाग्रयणं कर्तव्यम्' । अनेनैवाभिप्रायेण पैठीनसिना—'संक्रान्तिरहिते मासि कुर्यादाग्रयणं नवे'ति विकल्प उक्तः । इदमपि कर्माभ्युदयिकश्राद्धपूर्वकं कुर्यात् ॥ ॥ आग्रयणेऽप्यकरणे प्रायश्चित्तमुच्यते ॥ तत्र कारिका—'अकृताग्रयणोऽश्नीयान्नवान्नं यदि वै ततः । वैश्वानराय कर्तव्यश्चरुः पूर्णाहुतिस्तु वा' इति ॥ अत्र ब्राह्मणम्—'तदाहुर्य आहिताग्निराग्रयणेनानिष्ट्वा नवान्नं प्राश्नीयात्का तत्र

प्रायश्चित्तिरिति सोऽग्नये वैश्वानराय द्वादशकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये वैश्वानरो अजीजनत्पृष्टोदिविपृष्टो अग्निः पृथिव्यामित्याहुतिं चाहवनीये जुहुयादग्नये वैश्वानरायस्वाहेति सा तत्र प्रायश्चित्तिः' इति ॥ तथाचापस्तम्बः—'वैश्वानरं द्वादशकपालं निर्वपेद्यदकृत्वाग्रयण आहिताग्निर्नवान्नस्याश्नीयाद्देवेभ्यो भागं परिकृत्तमधादार्तिमार्च्छेत्' इति ॥ ऋग्विधानेतु—'समिन्द्रायामन्त्रं च वर्षेवर्षे जपेच्छतम्। आग्रयणं यदा न्यूनं तदा संपूर्णमेव तत्' इति ॥

अथ मन्त्रार्थः—सजूर्ऋतुभिरिति। 'जुषी प्रीतिसेवनयोः' सहपूर्वे क्विप् उदुम्बर्यादिषु(?)सजूः सहार्थ इति पाठात् गतिसंज्ञा सहस्य समावश्च 'ससजुषो रुः' इति रुत्वम्। सहप्रीयमाणाभ्यां ततश्च सह ऋतुभिः। ऋतवोपि हि प्रीयन्ते अस्मास्विन्द्राग्नी इत्यृतव इति। विधीयन्त इति विधाः श्रुतिस्मृतिलक्षणाः क्रियाः ताश्च प्रीयन्ते अस्माभिरिन्द्राग्नी इति द्वितीयम्। तृतीयं सजूरिति पदमतिरिच्यते तत्रान्योन्यमिथ सह प्रीयमाणाभ्यामिति गम्यते। सर्वत्र सजूरिति चतुर्थीद्विवचनं छान्दसम्। एवंभूताभ्यामिन्द्राग्निभ्यां स्वाहा। एतेनोत्तरमन्त्रौ व्याख्यातौ ॥ प्रजापतय इति—प्राश्यद्रव्यं प्रत्युच्यते हे प्राश्य, त्वामहं प्रजापतये प्रजापतिरन्तरात्मा तस्मै गृह्णत इति ग्रहः यथा इन्द्रवाय्वादिसोमग्रहः तादृशं गृह्णामि अभिमृशामि। किमर्थम्। मह्यं श्रियै संपत्त्याद्यर्थं। शं नो भव द्विपदे शं चतुष्पदे चतुष्पदान्तवचनादयः शब्दाः प्रसिद्धाः। यशसे अन्नाद्याय अन्नादनाय ॥ भद्रान्न इति। पितुरित्यन्ननाम। हे पितो, त्वां वयं समश्नीमहि। 'अशङ् भोजने' व्यत्ययेनात्मनेपदं लडर्थे लिट्। समश्नीमः। अतश्च त्वया अवसेन 'अव रक्षणे' औणादिकः सेनप्रत्ययः। रक्ष। देवाः नोऽस्मान् भद्रान्प्रशस्तान् श्रेयः प्रयस्ते समनेष्ट। पुरुषव्यत्ययः। समनैषुः। स त्वं नः अस्माकं मयोभूः

सुखस्य भावयिता आविश प्रविश। इहोदरे आविश्य च नः अस्माकं संबन्धिने द्विपदे पुत्रादिरूपाय चतुष्पदे गवादिरूपाय च शं सुखकरो भव ॥ अमोऽसीति—हे प्राणस्थितिहेतो, त्वं अमोऽसि । अमशब्द आत्मवचनः । 'अन्तरिक्षादम उदेती'त्यादेर्दर्शनात् 'आत्मा पितुस्तनूर्वास ओजोदा' इति दृश्यते । अमासि तदतं सत्यं ब्रवीमि । अमासि अमोसि । प्रथमैकवचनस्याकारः । आदरार्थं पुनर्वचनम् । सर्वान्धातून् प्रविष्टोऽसि। स त्वं मे शरीराजरां रोगं च अपनुद्य हे अम, आम एधि आत्मैव भव । हे इन्द्र परमैश्वर्यसंपन्न । साम्राज्यादीनामधिपते इति मतान्तरम् । मे इति द्वितीयार्थे षष्ठी । मां मामृथाः । अन्तर्भावितण्यर्थः । मा मारय ॥ इति मन्त्रार्थः ॥

अथ प्रयोगः—शरदि पौर्णमास्याममावास्यायां वा पर्वणि तदलाभे कृत्तिकादिविशाखान्तेषु देवनक्षत्रेष्वन्यतमनक्षत्रे वाग्रयणं नाम कर्म कुर्यात् । तत्रायं क्रमः । प्रातरौपासनहोमानन्तरं संकल्पपूर्वकमभ्युदयश्राद्धं कृत्वा पवित्रं समन्त्रं धृत्वा प्राणानायम्य देशकालकीर्तनानन्तरं मम रोगजरानिवृत्तिश्रीयशोन्नप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नित्यविधिरूपमाग्रयणाख्यं कर्म करिष्य इति संकल्प्य । अस्मिन्नाग्रयणाख्ये कर्मणि देवतापरिग्रहार्थमन्वाधानं करिष्ये इत्यादिचक्षुषी आज्येनेत्यन्तमुक्त्वा इन्द्राग्नी विश्वान्देवान् द्यावापृथिव्यौ चरुद्रव्येण शेषेण स्विष्टकृतमित्यादि सद्योयक्ष्य इत्यन्तमुक्त्वा समिद्द्वयमग्नावाधाय परिसमूहनादिपूर्णपात्रनिधानान्तं कृत्वा । प्रत्यगग्नेः शूर्पं निधाय पवित्रवति शूर्पे इन्द्राग्निभ्यां विश्वेभ्योदेवेभ्यो द्यावापृथिवीभ्यां च प्रत्येकं चतुरश्चतुरो नूतनव्रीहिमुष्टीन्निरुप्य तत्संख्यया तथैव प्रोक्ष्यावघाताद्याज्यभागान्तं कर्म कृत्वाऽवदानधर्मेण च न्युद्धृतादवदायावदाय । सजूर्ऋ-

तुभिः सजूर्विधाभिः सजूरिन्द्राग्निभ्यां स्वाहा । इन्द्राग्निभ्यामिदं नमम १ ॥ सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वेभ्योदेवेभ्यः स्वाहा । विश्वेभ्योदेवेभ्य इदं० २ ॥ सजूर्ऋतुभिः सजूर्विधाभिः सजूर्द्यावापृथिवीभ्यां स्वाहा । द्यावापृथिवीभ्यामिदं० ३ ॥ इतित्रिभिर्मन्त्रैस्तिस्रश्चर्वाहुतीर्हुत्वा स्विष्टकृद्धोमानन्तरं हुतावशिष्टं सव्ये पाणौ कृत्वा दक्षिणेन पाणिनाभिमृश्य प्रजापतये त्वा ग्रहं गृह्णामि महां श्रियै मह्यं यशसे मह्यमन्नाद्याय । ततः । भद्रान्नः श्रेयः समनैष्ट देवास्त्वयाऽवसेन समशीमहि त्वा । स नो मयोभूः पितवाविशेह शं नो भव द्विपदे शं चतुष्पदे ॥ इति मन्त्रेण प्राश्य द्विराचम्य पूर्वोपवेशनस्थान एवोपविश्य । अमोऽसि प्राण तदृतं ब्रवीम्यमासि सर्वानसि प्रविष्टः । स मे जरां रोगमपनुद्य शरीरादमाम एधि मामृथा म इन्द्र । इति मन्त्रेणात्मनो नाभिमालभेत । ततः पत्नी भक्ष्यमहविःशेषममन्त्रकं प्राश्नीयात् । ततो यजमानो होमशेषं परिषेचनान्तं समापयेदिति ॥ इति श्रीमन्नृसिंहीये प्रयोगपारिजाते पाकयज्ञकाण्डे आग्रयणप्रकरणम् ॥

अथ प्रत्यवरोहणम् ॥ ये नृसिंह भवद्भक्तभक्तान्प्रत्यवरोहणम् । उन्नताः संनतीः कुर्युरुन्नतिं तान्निनीषसे ॥ अथ क्रमागतं प्रत्यवरोहणमुच्यते । तत्र कारिका—'वक्ष्ये प्रत्यवरोहणम् । मार्गशीर्षस्य मासस्य पौर्णमास्यां तदिष्यते । पूर्वेद्युर्वा भवेत्तद्वदुरुंकृत्य निवेशनम्' इति ॥ इदमत्र गृह्यम्—'मार्गशीर्ष्यां प्रत्यवरोहणं चतुर्दश्यां पौर्णमास्यां वा निवेशनं पुनर्नवीकृत्य लेपनास्तरणोपस्तरणैः' इति । अस्यार्थः—मार्गशीर्षेण युक्ता मार्गशीर्षी तस्याम् । पौर्णमास्यामिति वर्तते । सामीप्ये चेयं सप्तमी । यथा 'अग्नीषोमीयेण चरन्त्युत्तरवेद्याम्' इति । तेनायमर्थः—मार्गशीर्ष्याः पौर्णमास्याः समीपे या चतुर्दशी तस्यां प्रत्यवरोहणं नाम कर्म कर्तव्यमिति ।

पौर्णमास्यां वा । मार्गशीर्ष्यामिति वर्तते । अत्रत्वधिकरणे सप्तमी । तेन मार्गशीर्ष्यां पौर्णमास्यां वेति पूर्वेण सह विकल्पः । भाष्यकारस्त्वित्थं विवृतवान्—मार्गशीर्षी पौर्णमासी यस्मिन्मासे स मार्गशीर्षो मासः 'सास्मिन्पौर्णमासीति संज्ञायाम्' इत्यण् । तस्मिन्मासे भवायां चतुर्दश्यां पौर्णमास्यां वेत्यर्थः । नन्वेवं सति चतुर्दशीद्वित्वाद्द्विः कर्म प्राप्नोति । न । सकृदेव कार्यम् । 'सकृत्कृते कृतः शास्त्रार्थः' इति न्यायात्, चतुर्दश्यामित्येकवचनात्पौर्णमास्या सह विकल्पाच्च । नन्वेवमपि शुक्ले कृष्णे वा स्यात् । न । पौर्णमासीसाहचर्याच्छुक्ल एवेति । वा पुनरिति वचनादाश्वयुजीकर्मण्यपीत्थमेवालंकरणमिति गम्यते । नवीकृत्य नवमिव कृत्वेत्यर्थः । तच्चैतैरित्याह—लेपनेत्यादि । लेपनं कुड्यानामच्छिद्रीकरणम् । आस्तरणं च तेषामेवाच्छादनम् । उपस्तरणं भूमेः समीकरणम् । नवीकृत्येतिवचनादपामार्गादीन्यप्युद्वास्यानि । एतावदहनि कार्यम् ॥ अत्र भगवान्शौनकः—'मार्गशीर्षस्य मासस्य पौर्णमास्यामथापि वा । तस्य शुक्लचतुर्दश्यां नाम्ना प्रत्यवरोहणम् ॥ शास्त्रान्तरे तु हेमन्तशब्दोपपदमुच्यते ॥ वर्षासु वारिच्छिन्नस्य वेश्मनो लेपनादिभिः । कुर्यात्पुनर्नवीकारं पूर्वमेवावधानतः ॥ मृदन्तरेण कुड्यादेर्वारिमिश्रेण शुद्धये । भित्तीनां रोपणार्थं च परिमृज्यावलेपनम् ॥ छिद्रापिधानवन्मृष्टा तृणैस्तरणमुच्यते । निम्नस्योन्नमनं यत्स्यात्तदुपस्तरणं मतम् ॥ एवमेतैर्नवीकृत्य निवासं लेपनादिभिः । कटादेः शयनार्थस्याप्यहन्येव विशोधनम्' इति ॥ कारिका—'भास्वत्यस्तमिते कुर्यादन्वाधानादि पूर्ववत् । निर्वापप्रोक्षणे तूष्णीं पयसि श्रपयेच्चरुम् ॥ कृताज्यभागपर्यन्तमन्वारब्धः सुतादिभिः । अपश्वेतेति मन्त्राभ्यां जुहुयात्पायसाहु-

पाठा०—१ अपामार्गेति गृहसमीपप्रदेशादपामार्गशाकतिल्वकपरिव्याधाद्यान्समूलान्परिखायोद्वास्य मृदन्तरेण गृहमुपलिप्य तृणैराच्छाद्य भुवं समीकुर्यात । शयनार्थं च फलरहितधान्यतृणनिर्मित कट निर्मापयेत्यादि ज्ञेयम् ।

तिम् ॥ जपेदभयमित्याद्यमीक्षमाणो हविर्भुजम् । उक्त्वा शिवो न इत्यादि हेमन्तेति पदं स्मरन्' इति ॥ इदमत्र गृह्यम्—'अस्तमिते पायसस्य जुहुयुः। अप श्वेत पदा जहि पूर्वेण चापरेण च। सप्त च वारुणीरिमाः सर्वाश्च राजबान्धवीःस्वाहा॥ न वै श्वेतश्चाभ्यागारेऽहिर्जघान किंचन। श्वेताय वै दार्वाय नमःस्वाहेति नात्र सौविष्टकृदभयं नः प्राजापत्येभ्यो भूयादित्यग्निमीक्षमाणो जपति शिवो नः सुमना भवेति हेमन्तं मनसा ध्यायात्' इति ॥ अस्यार्थः—अथास्तमिते पायसस्यैकदेशं जुहुयुर्मन्त्राभ्याम् । 'तत्कालश्चैव बहुणाः' इति न्यायादुपलेपाद्यस्तमित एव कार्यम्। बहुवचनं पूर्ववत्। सौविष्टकृदिति स्विष्टकृदित्यर्थः सर्वत्र। अत्र कर्मणि यः स्विष्टकृत्स न कार्य इत्यर्थः। असत्यत्रग्रहणे प्रधानानन्तरमुच्यमानत्वात्प्रधानानन्तरं स्विष्टकृन्न भवतीत्यर्थः स्यादन्ते च स्यादेव। ननु प्रधानाहुत्यनन्तरं स्विष्टकृतः प्राप्तिरेव नास्ति। तथाहि—'एताभ्यो देवताभ्यो हुत्वा सौविष्टकृतं हुत्वे'त्यत्र सौविष्टकृतं हुत्वेत्येतदपार्थकम्। प्रधानानन्तरं स्विष्टकृतः प्रकृतितः प्राप्तत्वात्। तत्कुर्वन् ज्ञापयति—अन्यत्र यान्यागन्तून्यङ्गानि विहितानि तत्र तानि कृत्वा पश्चात्स्विष्टकृत्कार्य इति। तर्हि प्रधानानन्तरं स्विष्टकृत्प्रतिनिषेधशङ्कानिवृत्त्यर्थमत्र ग्रहणं कुर्वञ्ज्ञापयति अत्र प्रधानानन्तरमन्ते वा स्विष्टकृन्न भवतीति। तेनान्यत्र प्रधानानन्तरं वा कर्मणोऽन्ते वा स्विष्टकृदिति विकल्पः सिद्धः। अथवा सौविष्टकृतं हुत्वेत्येतत्क्रमार्थम्। असति तु तस्मिन् प्रधानानन्तरमेव प्राशनादि स्यात्। अत्र च प्रधानानन्तरं स्विष्टकृतः प्रकृतिप्राप्तत्वाचस्य च प्रतिषेधे सति कर्मण्येव प्रतिषेधो भवति कालान्तरे प्राप्त्यभावात्। एवंच सति अत्रग्रहणं कुर्वञ्ज्ञापयति अन्यत्र कर्मान्ते वा स्विष्टकृद्भवतीति। अभयं नः प्राजापत्येभ्यो भूयादित्यग्निमीक्षमाणो जपति शिवो नः सुमनाः भवेति हेमन्तं मनसा ध्या-

यात् । जपतीति लिङर्थे लट् । अर्थध्यानस्य मुख्यत्वेऽपि शब्दध्यानमेव कार्यमित्येवमर्थं मनोग्रहणम् । मन्त्रमुक्त्वा मनसा हेमन्तशब्दं संबुद्ध्यन्तं ध्यायेन्मन्त्रेण समानाधिकरणत्वायेति ॥ अत्र भगवान्—'कृत्वा यथार्हमर्केऽस्तं गते त्वौपासनानलम् । विहृत्य हुत्वाथ स्थालीपाकधर्मेण पायसम् ॥ श्रपयित्वा चरुं होमसमये समुपस्थिते । अन्वारब्धस्तु पुत्राद्यैरप श्वेत पदा जहि ॥ इत्यादि च स्विलोक्ताभ्यामृग्भ्यां हुत्वा यथाक्रमम् । अथामयं न इत्याद्यं मन्त्रं पश्यन्हुताशनम् ॥ जपेत्ततस्तु हेमन्तशब्दस्य मनसा जपम् । संबुद्ध्यन्तस्य कृत्वाथ शिवो नः सुमना भव । इत्येतस्यापि मन्त्रस्य मनसा जपमाचरेत्' इति ॥ कारिका—'स्वस्तरं स्वयमास्तीर्य पश्चादग्नेरतः परम् । तत्रोपविश्य च स्योनापृथिवीति जपेदृचम् ॥ एतत्प्रभृति मन्त्रज्ञा जपेयुस्तनया अपि । शयीत तत्र सामात्यः प्राक्शिरा उदगाननः ॥ गृहिणोऽनन्तरो यो यो ज्येष्ठस्तद्वच्छयीत सः । यथावकाशमितरे शेरते तद्वदेव ते ॥ उत्थायर्चमतोदेवाः प्राङ्मुखास्त्रिर्जपन्त्यथ । ऋचोऽस्याः प्रथमं पादं जपेयुर्दक्षिणामुखाः ॥ प्रत्यङ्मुखा द्वितीयं तु तृतीयमुदगाननाः । ततश्च स्विष्टकृद्वर्जं होमशेषं समापयेत्' इति ॥ इदमत्र गृह्यम्—'पश्चादग्नेः स्वस्तरः स्वास्तीर्णस्तस्मिन्नुपविश्य स्योना पृथिवि भवेति जपित्वा संविशेत्सामात्यः प्राक्शिरा उदङ्मुखो यथावकाशमितरे ज्यायाञ्ज्यायानन्वानन्तरो मन्त्रविदो मन्त्राञ्जपेयुः संहायाऽतो देवा अवन्तु न इति त्रिरेतां दक्षिणामुखाः प्रत्यङ्मुखा उदङ्मुखाश्चतुर्थम्' इति ॥ अस्यार्थः—यस्मिन् स्तरणे स्वयं शेते स स्वस्तरः स स्वास्तीर्णो भवति । स्वयमेव तमास्तृणीयादित्यर्थः । तस्मिन्ग्रहणममात्यानामपि तत्रैव प्रापणार्थम् । संविशेदिति शयीतेत्यर्थः । अमात्याः पुत्रादयो गृह्याः । उदङ्मुखवचनं दक्षिणामुखनिवृत्त्यर्थम् । तथाच दक्षिणेन पार्श्वेन शयनं भवति । यथावकाशमितरे

इतरे अमात्या यथावकाशं प्राक्शिरस उदङ्मुखाः संविशेयुरित्यर्थः । उत्तरविवक्षार्थमिदम् । ज्यायान् ज्यायान्वानन्तरः यो यो यस्माद्यस्माद्वृद्धतरः स स गृहिणोऽनन्तर संविशेद्यथावकाशं वेति विकल्पः । मन्त्रविदो मन्त्राञ्जपेयुः । तेषां मध्ये ये मन्त्रविदः पाठतोऽर्थतश्च ज्ञातारः ते मन्त्रान् जपेयुः । के पुनर्मन्त्राः । स्योनापृथिवीत्यारभ्य वक्ष्यमाणा अतोदेवा इत्यादिस्वस्त्ययनपर्यन्ताः । संहायाऽतो देवा अवन्तु न इति तिः । संहायेत्युत्थायेत्यर्थः । संहायशब्दः शयिलोत्थितस्यासने वर्तते । श्रूयते हि 'कलिः शयानो भवति संजिहानस्तु द्वापरः' इति । अतोदेवा इत्यृचं प्राङ्मुखास्त्रिर्ब्रूयुरित्यर्थः । 'तस्य नित्याः प्राञ्चः' इति श्रुतित्वात् ॥ एतां दक्षिणामुखाः प्रत्यङ्मुखा उदङ्मुखाश्चतुर्थम् । एतां अतोदेवा इत्येतामृचम् । एतामिति वचनं योगविभागार्थम् । इतरथा त्रिदिङ्मुखास्त्रिर्ब्रूयुः चतुर्थं चतुर्वारं त्रिदिङ्मुखाः सकृदित्येवमर्थः स्यात् । योगविभागे सति प्राङ्मुखास्त्रिः त्रिदिङ्मुखाः सकृदित्ययमर्थो लभ्यते । त्रिदिङ्मुखाश्च यथासंख्येन त्रीन्पादान्ब्रूयुः । चतुर्थवचनं त्रिरधिकारनिवृत्त्यर्थम् । सर्वं प्रायश्चित्तादि समापयेत् । ततो यथाशय्यं शेरते इति ॥ भगवांस्तु—'पश्चिमाग्रे पलालाद्यैरथात्मशयने विना । शय्यां शोभनमास्तीर्य तत्रासित्वा यथासुखम् ॥ जपेदृचमथ स्योना पृथिवीत्येवमादिकाम् । जपित्वा तत्र भार्यादिपुत्रैश्च सह संगतः ॥ शयीतोदङ्मुखः प्राच्यां शिरा दक्षिणपार्श्वतः । यथावकाशमितरे पौत्राद्यास्तत्र शेरते ॥ अनुज्येष्ठं शयीरंश्च गृहिणोऽनन्तरं सुताः । गृहिणोऽनन्तरं ज्येष्ठः संविशेत्तत्र चानुजः ॥ तदन्वपर इत्येवं क्रमेणान्येऽपि शेरते । ये मन्त्रान्मन्त्रितुं योग्याः स्त्रीबालादिविवर्जिताः ॥ शयनादुत्थाय स्योनापृथिवीत्यादिकामृचम् । जपित्वोत्थाय शयनादासित्वा प्राङ्मुखाः सह ॥ अतोदेवा अवन्त्वाद्यां त्रिर्जपित्वर्चमादितः । पश्चाद्दिशो दक्षिणाद्यास्तिस्रः

प्रोच्य यथाक्रमम् ॥ पादानृचोऽस्यासीन्सर्वे जपेयुः सह संगताः । संविश्य संविश्योत्थाय कुर्युश्चानुदिशं जपम् । अथचोत्थाय शयनाद्दक्षिणाप्रत्यगुत्तराः । दिशस्तिस्रः प्रतिदिशं प्रतीक्ष्यैव यथाक्रमम् ॥ जपेयुरेतामेवर्चं सकृत्सकृदखण्डिताम् । संविश्य संविश्योत्थाय कुर्युश्चानुदिशं जपम् ॥ अथोपरिष्टात्तन्त्रं च स्विष्टकृद्धोमवर्जितम् । विधाय रात्रिशेषं तु संविशेयुर्यथापुरम्' इति ॥ कारिका—'यथासख्यं शयित्वा ते संगता उदिते रवौ । जपेयुः सूर्यसूक्तानि तद्वत्स्वस्त्ययनानि च ॥ आनोभद्रा तथा स्वस्ति नो मिमीतां परावतः । संस्कृतेन गृहान्नेन ब्राह्मणान्भोजयेदथ ॥ ॐस्वस्तिशुभमित्युक्त्वा ॐस्वस्तीति वदन्ति ते' इति ॥ इदमत्र गृह्यम्—'संहाय सौर्याणि स्वस्त्ययनानि च जपित्वान्नं संस्कृत्य ब्राह्मणान्भोजयित्वा स्वस्त्ययनं वाचयीत' इति ॥ अस्यार्थः—संहाय संगम्य । इदानीं संगतिविधानात्पूर्वं यथासख्यं शेरत इति गम्यते । समागम्योदिते आदित्ये सौर्याणि स्वस्त्ययनानि च जपेयुः । सूर्यो नो दिव इति पञ्च उदुत्यं जातवेदसं त्रयोदश चित्रंदेवानां षट् नमोमित्रस्येति द्वादश एषां सौर्यसंज्ञा । स्वस्तिशब्दवन्ति स्वस्त्ययनानि आ नो भद्राः स्वस्ति नो मिमीताम् परावतो ये दिधिषन्त इत्येतानि गुरुः । शिष्यस्तु चतुर्थं । संहायेति चतुर्थं संहतं कृत्वा । चतुर्थवचनाज्ज्ञायते प्रतिदिशं संहाय संहाय शयित्वोत्थाय जपतीति । संहायवचनाच्च संवेशनमपि भवति । 'सूर्यदैवत्यसूक्तानि सूर्यो नः पञ्चकं मतम् । उदुत्यं त्रयोदशर्चं चित्रं षळर्चमेव च । नमोमित्रस्येति सूक्तं द्वादशर्चं प्रचक्षते' इति । सौर्यसूक्तानि दिवैवाध्येतव्यानि । 'अथ स्वस्त्ययनानीह आनोभद्रा दशर्चकम् । परावतो ये दिधिषन्सूक्तं सप्तदशर्चकम् ॥ स्वस्तिनोमि-

पाठा०—१ समवेत्यर्थ ।

मीशामिति पञ्चर्चं तु प्रचक्षते' इति । अन्नसंस्कारवचनं चरुशेषाद्ब्राह्मणभोजननिवृत्त्यर्थम् । तेनानुप्रवचनीये चरुशेषादिति सिद्धम् । तदुक्तं—'जपित्वा भक्ष्यभोज्यादि संस्कृत्य गुणवद्बहु । तेन विप्रान्भोजयित्वा भुक्तवद्भिस्तु तैरथ ॥ पुण्याहवाचनं कार्यमिति सूत्रविदो विदुः' इति । वाचयीतेति छान्दसम् ॥ अत्र भगवान्—'अथापरेद्युरुदिते सूर्ये सर्वेऽपि संगताः ॥ सौर्यान्सूर्योन इत्यावांस्तथा स्वस्त्ययनान्यपि ॥ तथा स्वस्तिन इत्यादि जपेयुरवधानतः ॥ अथान्नं गुणवत्कृत्वा स्वादु व्यञ्जनसंयुतम् । ब्राह्मणान्भोजयित्वा तैः पुण्याहमथ वाचयेत्' इति ॥

अथ मन्त्रार्थः—अप श्वेतेति । श्वेतो नाम सर्पराजः । हे श्वेत, पदा पादेन त्वदीयेन अप जहि पूर्वेण च अपरेण च । आगमनावस्थायामेवमुच्यते । तत्र हि पूर्वापरीभूतौ पादौ भवतः । अपहन्तव्यमाह । सप्त च वारुणीः वरुणसंबन्धिजले भवाः सर्पजातीः । पाशसंहतीरित्यन्ये । न केवलं सप्तैव । सर्वाश्च राजबान्धवीः । राजा वरुणः । सर्वा एव वरुणसंबन्धिनीः सर्पजातीः अपजहि ॥ ॥ न वै श्वेतश्चेति—श्वेतश्चाभ्यागारे तेनाभि निर्मितेन किंचनापि उक्तं अहिर्जघान । वैशब्दः पादपूरणार्थः । तस्मै श्वेताय दार्वाय, अथवा विदर्वपुत्रो वैदर्वः स एव वैदार्वः छान्दसो दीर्घः । ह्रस्वमेवापस्तम्बीयाः पठन्ति । तस्मै नमःस्वाहा ॥ ॥ अभयमिति—अग्निमीक्षमाण इतिवचनादाग्नेयं चक्षुः । हे अग्ने, त्वत्प्रसादान्नः अस्मभ्यं अभयं भूयात् । प्रजानां पतिः पालयिता स देवता येषां तेभ्यः प्राजापत्येभ्योऽसभ्यमिति ॥ ॥ शिवो न इति—नः अस्माकं शिवः सुखकरः सुमनाश्च भव । स्योना-पृथिवीति मन्त्रस्तु महानाम्नीप्रकरणेऽस्माभिर्व्याख्यातः । अतोदेवा इति मन्त्रोऽग्निमुखप्रकरणे व्याख्यातः ॥ इति मन्त्रार्थः ॥

अथ प्रयोगः ॥ मार्गशीर्ष्यां पौर्णमास्यां पूर्वेद्युश्चतुर्दश्यां वा प्रत्यवरोहणं नाम कर्म कुर्यात् । दिवैव निवेशनमलंकृत्य फलरहितधान्यतृणनिर्मितं शयनार्थं कटं संपाद्य भास्वत्यस्तमिते सायमौपासनानन्तरं तिथ्यादिसंकीर्तनपूर्वकं मम स्त्रीपुत्रादिसहितस्य जलस्थलचरसर्पबाधानिवृत्त्यभयहेमन्तसौमनस्यसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नित्यविधिरूपं प्रत्यवरोहणाख्यं कर्म करिष्य इति संकल्प्य तदङ्गं नान्दीश्राद्धं विधाय । पवित्रवन्त इत्याद्यनयोर्ब्रह्मा ऋषिः बृहस्पतिर्देवता जगतीछन्दः । आभ्यां पवित्रे धृत्वा पुनर्देशकालौ संकीर्त्य समिद्द्वयमादाय अद्य क्रियमाणे प्रत्यवरोहणहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये । अस्मिन्नन्वाहितेऽग्नावित्यादि चक्षुषी आज्येनेत्यन्तमुक्त्वा प्रधानदेवतां श्वेतं द्विःपायसेन इध्मसन्नहनेन रुद्रमित्यादि सद्यो यक्ष्य इत्यन्तमुक्त्वा समिद्द्वयमभ्याधाय परिसमूहनादिपूर्णपात्रनिधानान्तं कृत्वा प्रधानदेवतयोश्चतुरश्चतुरो व्रीहिमुष्टींस्तूष्णीं निरुप्य तथैव प्रोक्ष्य पयसि चरुश्रपणाज्यसंस्काराद्याज्यभागान्तं कृत्वा सुतादिभिरन्वारब्धोऽवदानधर्मेण पायसादवदाय । ॐअप श्वेत पदा जहि पूर्वेण चापरेण च । सप्त च वारुणीरिमाः सर्वाश्च राजबान्धवीः स्वाहा ॥ न वै श्वेतश्चाभ्यागारेऽहिर्जघान किंचन । श्वेताय वै दार्वाय नमः स्वाहा ॥ इति द्वे आहुती हुत्वा उभयत्र श्वेतायेदंनममेत्युद्दिश्य त्यक्त्वा । अभयं नः प्राजापत्येभ्यो भूयादित्यग्निमीक्षमाणो जपित्वा । शिवो नः सुमना भवेति हेमन्तं मनसा ध्यायेत् । ततोऽग्नेः पश्चात्पलालनिर्मितं शयनार्थं कटं स्वयमास्तीर्य स्त्रीपुत्रादिसहितस्तत्रासित्वा स्योनापृथिवीति ऋचं जपेत् । एतत्प्रभृति मन्त्रोच्चारणार्हाः स्त्रीबालव्यतिरिक्ताः स्योनापृथिवीत्यादीन्स्वस्त्ययनपर्यन्तान्मन्त्राञ्जपेयुः । ततस्तत्र प्राक्शिरा उदङ्मुखो दक्षिणपार्श्वेन शयीत । गृहिणोऽनन्तरं यथाज्येष्ठं सर्वे पुत्रपौत्रादयस्तथैव शयीरन् । तत उत्थायासित्वा प्राङ्मुखा

अतोदेवा इत्यृचं निर्जपित्वा पुनरपि तथैव शयित्वोत्थायासित्वा दक्षिणामुखाः अतोदेवा इत्यृचः प्रथमं पादं सकृज्जपित्वा पुनरपि तथैव शयित्वोत्थायासित्वा प्रत्यङ्मुखास्तस्या एव ऋचो द्वितीयं पादं सकृज्जपित्वा पुनरपि तथैव शयित्वोत्थायासित्वोदङ्मुखास्तस्या एव ऋचस्तृतीयं पादं सकृज्जपेयुः। ततो यजमानः स्विष्टकृद्वर्जं होमशेषं समापयेत्। ततो यथापूर्वं शयित्वोत्थाय उदिते सूर्ये कृतनित्यक्रियाः सौर्याणि स्वस्त्ययनानि च जपेयुः। उदुत्यमितित्रयोदशर्चस्य काण्वः प्रस्कण्वऋषिः सूर्यो देवता गायत्रीछन्दः अन्त्याश्चतस्रोऽनुष्टुभः। चित्रंदेवानामिति षळर्चस्य सूक्तस्याङ्गिरसः कुत्सऋषिः सूर्योदेवता त्रिष्टुप्छन्दः। नमोमित्रस्येति द्वादशर्चस्य सूक्तस्य सूर्यपुत्रोऽभितपाऋषिः सूर्योदेवता जगतीछन्दः दशमी त्रिष्टुप्। सूर्योनोदिवस्पात्विति पञ्चर्चस्य सूक्तस्य सौर्यश्चक्षुर्ऋषिः सूर्योदेवता गायत्रीछन्दः। आनोभद्रा इति दशर्चस्य सूक्तस्य राहूगणो गोतमऋषिः विश्वेदेवादेवता पञ्चाद्याः सप्तमी च जगत्यः षष्ठी विराट् शेषास्त्रिष्टुभः। स्वस्तिनो मिमीतामिति पञ्चर्चस्य सूक्तस्य अत्रिर्ऋषिः विश्वेदेवादेवता आद्यास्त्रयस्त्रिष्टुभः अन्त्ये अनुष्टुभौ। परातत इति सप्तदशर्चस्य सूक्तस्य मानवो नाभानेदिष्ठऋषिः विश्वेदेवा देवता जगतीछन्दः अन्त्ये त्रिष्टुभौ। इत्येतानि जपेयुः। ततो यजमानो ब्राह्मणान्संस्कृतान्नेन स्वादुव्यञ्जनयुक्तेन भोजयित्वा स्वस्ति वाचयेदिति॥ इति श्रीमन्नृसिंहीये प्रयोगपारिजाते पाकयज्ञकाण्डे प्रत्यवरोहणप्रकरणम्॥

इति श्रीमन्नृसिंहीये प्रयोगपारिजाते पाकसंस्थाकाण्डं संपूर्णम्॥

## ॥ अथ प्रयोगपारिजाते हविस्संस्थाकाण्डप्रारम्भः ॥

अथाष्टकाविधिरभिधीयते । तत्र कारिका—'हेमन्तशिशिराख्यर्त्वोः कृष्णपक्षचतुष्टये । अष्टमीष्वथ वैकस्यामष्टम्यामष्टका भवेत्' इति ॥ इदमत्र गृह्यम्—'हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका एकस्यां वा' इति । अस्यार्थः—हेमन्तशिशिरादृतू तत्रापरपक्षाः कृष्णपक्षाः । अष्टका इति कर्मनाम । एतदुक्तं भवति—मार्गशीर्षादिचतुर्षु मासेषु ये कृष्णपक्षाश्चत्वारस्तेषु च याश्चतस्रोऽष्टम्यस्तास्वष्टकाः कार्या इति । ऋतुद्वयमध्ये यदि मलमास आगच्छति तस्मिन्मासे न कर्तव्यमित्येवमर्थं चतुर्ग्रहणम् । अपिच बहुवचनस्य त्रिष्वेव चरितार्थत्वाच्छाखान्तरदर्शनाच्चोर्ध्वमाग्रहायण्यस्तत्र तिस्रोऽष्टका इति तिस्र एव स्युस्तन्निवृत्त्यर्थं चतुर्ग्रहणम् । एकस्यां वा । एकस्यामेवाष्टम्यामष्टकाः कार्याश्चतसृषु वेति विकल्प इति । अत्रैकस्यां वेत्यस्य हरदत्तकृता व्याख्या लिख्यते—एकस्यां वा एकस्यामष्टम्यां वाष्टका भवति । अत्रापस्तम्बः—'माघ्याः पौर्णमास्या उपरिष्टाद्व्यष्टकायास्तस्या अष्टमी ज्येष्ठया संपद्यते तामेकाष्टकेत्याचक्षते' इति । बोधायनेनाप्युक्तम्—'अथाष्टकाहोमास्तिष्येमास्यपरपक्षस्याष्टम्यां क्रियते एवं माघे एवं फाल्गुने यदि विहृतो यद्युवैव समस्त उपरिष्टान्माघ्याः पौर्णमास्या अपरपक्षस्य सप्तम्यामष्टम्यां क्रियेतापि वाष्टम्यामेवे'ति ॥ अत्र श्रीधरीये नारदस्तु—'स्मृत्यन्तरवशान्नृणां निर्हर्तुं च न शक्यते । यैः कैश्चित्कारणैर्विद्वान्द्याचत्र चलीन्क्रमात् । प्रोष्ठपन्मासि माघे वा नर्लिं द्याद्यथोदितम्' इति ॥ बृहस्पतिरपि—'अकृते मासकाले तु श्राद्धकालोऽत्र वक्ष्यते । कन्या-

यस्य नित्यजो चरुश्रपणमग्नि तत्स्थाने एतानि त्रीणि नित्येशौ श्रपयेत्। 'ओदनस्तु प्रसिद्धः स्यात्पायसः पयसा शृतः। आदेन-
मिश्रमिश्रस्तु कृसरः परिकीर्त्यते॥ तिलकल्कं च निक्षिप्य शृतो वा कृसरो भवेत्' इति। चतुरिति चतुःशरावपरिमितस्य वा
पान्नस्य पेषणं कृत्वाऽपूपान्श्रपयेत्। अपूपाः पिष्टमयाः। अपूपानां बहुसाधनसाध्यत्वात् स्त्रीकर्तृकत्वाच्च नित्येशौ श्रपणं न संभव-
तीति गृह्यविद्धानामेषोपादानमिच्छन्ति। वाशब्दो विकल्पार्थः। पूर्वाणि वा त्रीणि इदं वैकमिति। भोजने तु नायं द्रव्यनियमः
भवेषु होम एव। 'अष्टका हि नवम्यः स्युः पूर्वाह्णानि तथैव च। द्रव्यनयसाद्वैकत्वान्न यथासंख्यसंभवः॥ अल्पाष्टकं हि पूर्वेद्यु-
णीनि द्रव्याण्यन्यानि वा। अपूपद्रव्यमेकं वा नान्या व्याख्यानकल्पना' इति॥ अत्राहिताग्निमधिकृत्याह भगवान्—'अत्रा-
हकागाः पूर्वेद्युः नवम्यां श्राद्धमीरितम्। तत्पिण्डपितृयज्ञस्य प्रकारेण समापयेत्॥ निमन्त्रणादि विप्राणामर्घ्यदानावसानकम्।
पार्वणश्राद्धवत्कृत्वा तत्रमेभ्यः सदीप्सितम्॥ यथाश्रद्धं प्रदद्याच्च गन्धमाल्याम्बरादिकम्॥ तेष्वासनोपविष्टेषु पितृयज्ञोक्तमा-
र्गतः॥ दक्षिणाग्नीन्धनादीनि कुर्यात्कर्माण्यनुक्रमात्॥ पात्रासादनकाले तु तिस्रः स्थालीः पृथक्पृथक्। आमाद्य तासु शुद्धान्नं
कृसरं पायसं तथा॥ चरून्पचेत्त्रींस्तथैव दक्षिणाग्नौ यथाक्रमम्। तिलाक्षतयुतः पक्वश्चरुः कृसर उच्यते॥ चतुःशरावप्रमितैस्त-
ण्डुलैर्वा गृह्याग्निना॥ पक्वानपूपान्होमार्थं स्वीकुर्याद्वा यथारुचि॥ दीक्षोल्मुकप्रणयनप्रभृतीन्यप्यविस्तरात्। कर्माणि पितृयज्ञोक्ता-
न्यावरेदत्र कर्मणि' इति॥ कारिका—'ओदनादन्नमुद्धृत्य पृष्ठोक्तः पूर्ववद्द्विजैः। सोमायेति द्वयोः स्थाने ह्रस्वाद्यामिरुदीरताम्॥
अवदानादि तत्स्यादुक्ता संपन्नमित्यत। उद्धृत्य भुक्तशेषान्नं निदधाति चरुत्रये। स्थालीपाकोत्सर्गपर्यन्तं श्राद्धशेषं समापयेत्'

इति ॥ इदमत्र गृह्यम्—'उदीरतामवर उत्परास इत्यष्टाभिर्हुत्वा यावतीभिर्वा कामयीत' इति ॥ अस्यार्थः—यावतामन्त्रा आद्यकाभिरेवंजातीयकाभिः पितृलिङ्गाभिः कामयीत कामयेत् तावतीभिर्जुहुयात्। एतदुक्तं भवति—पिण्डपितृयज्ञविधानेनेध्माधानान्तं कुर्यात्। चरुश्रपणे विशेष उक्तः। ततो ब्राह्मणपच्छौचाद्याच्छादनान्तं पार्वणवत्कृत्वा ओदनादिभ्यस्त्रिभ्योऽक्तमन्त्रमुद्धृत्य घृताक्तं कृत्वानुज्ञाप्य अग्नौकरणमन्त्रयोः स्थाने उदीरतामित्यष्टाभिश्चतुर्दशभिर्वा हुत्वा मेक्षणमनुप्रहृत्य ब्राह्मणेभ्योऽन्नदानादिशेषनिवेदनान्तं पार्वणवत्कृत्वा भुक्तवत्सु पितृयज्ञवन्निनयनादिपात्रोत्सर्गान्तं कृत्वा ततः श्राद्धशेषं समापयेदिति ॥ गृह्यपरिशिष्टेऽपि—'एवमेवान्वष्टक्यं पूर्वेद्युर्मासिश्राद्धानि नयेदस्ति हि तेषु पिण्डपितृयज्ञकल्पः, अतस्ते तत्रत्या होममन्त्रा येभ्योऽन्येषु चतुर्ष्वि'ति ॥ अत्र भगवान्—'होमकालेऽप्यनुज्ञाप्य पित्र्यर्थान्ब्राह्मणान्वृतान्। उदीरतामित्यादिभिर्ऋग्भिरष्टाभिराहुतीः ॥ अष्टौ विदध्यात्प्रत्येकमनदाय चरुत्रयात्। यावत्यः पितृदैवत्याः प्रीणयन्ति पितॄनपि ॥ सर्वाभिरेव वा ताभिर्जुहुयाद्भक्तितस्ततः। पार्वणश्राद्धवद्विप्रान्भोजयेदविशेषतः ॥ पिण्डप्रदानप्रभृति पितृयज्ञवदाचरेत्। पात्राणि द्विश उत्सृज्य ब्राह्मणान्विसृजेत्ततः' इति ॥ अत्र पार्वणश्राद्धवदित्यतिदेशात्सपत्नीकपितृमातामहवर्गद्वयस्य श्राद्धं कर्तव्यमिति सूचितम् ॥ तत्र वचनानि च—'स्वेन भर्त्रा समं श्राद्धं माता भुङ्क्ते सदैव तत्। पितामही तथा स्वेन स्वेनैव प्रपितामही ॥ अन्वष्टकासु वृद्धौ च प्रतिसंवत्सरे तथा। अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥ पितरो यत्र पूज्यन्ते तत्र मातामहा अपि। अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत् ॥ कर्षूसमन्वितं मुक्त्वा तत्राद्यं श्राद्धषोडशम्। प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिति स्थितिः' इति ॥ इति सप्तमीश्राद्धविधिः ॥

कुम्भगते भानौ कृष्णपक्षे तदिष्यते' इति । एतच्छ्राद्धावश्यकत्वमुक्तं तत्रैव—'कन्याकुम्भगते सूर्ये पितरः प्रीतिसंयुताः । पितृलोकात्समायान्ति भूमौ वस्त्रोजनालयम् ॥ शून्यं प्रेतपुरं तावद्यावन्मीनतुलागतिः । वसन्ति गोत्रजान्नित्यं तृष्णाश्रमपरिश्रिताः । तस्मात्सर्वप्रयत्नेन यथाशक्ति प्रपूजयेत्' इति ॥ अग्निस्मृतावपि—'माघे भाद्रपदे मासि कुम्भेऽर्के वापि योषिति । यत्नादेवाष्टकाः कार्याः कृष्णपक्षेऽखिलैर्जनैः ॥ सिंहस्थे मकरस्थे वा प्रोष्ठपन्माघमासयोः । कृष्णपक्षेऽष्टकाः कार्या गृहस्थाद्यैः स्वशक्तितः' इति ॥ अत्र नक्षत्रयोगमाह बृहस्पतिः—'कृष्णपक्षे तु माघस्य मैत्राधनिष्ठमेषु च । तिथयः सप्तमीपूर्वाः पितॄणां प्रीतिदाः सदा' इति ॥ नृसिंहश्चाह—'माघे ज्येष्ठायुताष्टम्यां विशेषेण फलं भवेत् । ज्येष्ठायोगे नवम्यां वा श्राद्धं वृद्धिकरं भवेत्' इति ॥ एकाष्टकालक्षणमाह स एव—'माघे मासासिते पक्षे तिथिषु त्रिषु देवराट् । एकाष्टकेतिसंख्यासु शुभकेतोर्मतं त्विदम्' इति ॥ एकाभगवान्गौतमः—'माघे मासासिते पक्षे याष्टमी समुपस्थिता । श्राद्धं तत्राष्टका नाम सर्वैते स्मृतिचोदितम् ॥ तत्कुर्यात्पशुकल्पेन शाल्मीपाकेनैव वा । सप्तम्यां च नवम्यां च प्रत्येकं श्राद्धमुच्यते । तद्वयं चोच्यते पिण्डपितृयज्ञप्रकारतः' इति ॥ अथ तिथयो निर्णीयन्ते—अत्र सप्तम्यष्टमीनवमीषु श्राद्धत्रयं प्राधान्येनोक्तमिति प्रतिभाति । तथापि पूर्वेद्युरपरेद्युः श्राद्धद्वयस्याष्टमीमुपजीव्य प्रवृत्तत्वादष्टम्या एव प्रतिसांवत्सरिकवदपराह्णादेः कल्पादिकं विचार्य तदनुरोधेन पूर्वेद्युरपरेद्युःश्राद्धं कर्तव्यम् । तथा गृह्ये दर्शनात्–'पूर्वेद्युः पितृभ्यो दद्यादपरेद्युरन्वष्टक्य'मिति च । अष्टम्या एव प्राधान्यमाह बोधायनः—'उपरिष्टान्माघ्याः पौर्णमास्या अपरपक्षस्य सप्तम्यामष्टम्यां नवम्यामिति क्रियते अपि वाऽष्टम्यामेवे'ति ॥ ॥ अत्र विश्वेदेवौ कामकालावित्याह सायणीये

गृह्यः—'इष्टिश्राद्धे क्रतुर्दक्षावष्टम्यां कामकालकौ। नान्दीमुखे सत्यवसू काम्ये च धूरिलोचनौ ॥ पुरूरवार्द्रवौ चैव पार्वणे समुपस्थिते। नैमित्तिके कामकालावेवं सर्वत्र कीर्तयेत्' इति। अत्र नैमित्तिकं सपिण्डीकरणं ज्ञेयमिति ॥

अथ सप्तमीश्राद्धमुच्यते। तत्र कारिका—'कार्यं यत्कर्म सप्तम्यां तत्कुर्यात्पितृयज्ञवत्। ओदनं कृसरं चैव पायसं श्रपयेदिह ॥ गृहसिद्धा उपादेया अपूपाञ्जुहुयाद्यदि। पूर्वाहानां यथासंख्यं द्रव्याणां नेति केचन ॥ ओदनस्तिलमिश्रस्तु कृसरः परिकीर्त्यते। तिलकल्कं विनिक्षिप्य भृतो वा कृसरो भवेत् ॥ कृतेध्माधानपर्यन्तं पितृयज्ञविधानतः। वासःप्रदानपर्यन्तं श्राद्धं पार्वणवन्नयेत्' इति ॥ इदमत्र गृह्यम्—'पूर्वेद्युः पितृभ्यो दद्यादोदनं कृसरं पायसं चतुःशरावस्य वाऽपूपान्' इति। अस्यार्थः—पूर्वेद्युः सप्तम्यामित्यर्थः। अत्र पितृशब्देन पितृपितामहप्रपितामहा उच्यन्ते। अन्वष्टक्ये पितृभ्यो दद्यादित्यस्यां चोदनायां पिण्डदानं दृष्टम्। अतश्चोदनासामान्यादिहापि पिण्डदानं परिगृह्यते। ब्राह्मणभोजनं च कार्यमिति वक्ष्यामः। तेन पूर्वेद्युः पितृभ्यः पिण्डान्भोजनं च दद्यादित्यर्थः। पिण्डदाने इतिकर्तव्यतापेक्षास्ति। इह च तस्यानाम्नातत्वात्प्रकरणान्तरविहितोऽपि पिण्डपितृयज्ञकल्पः परिगृह्यते। शक्यते चासौ ग्रहीतुं शास्त्रसंबन्धकरणात्। अपि च अन्वष्टक्ये पिण्डपितृयज्ञकल्पो दृष्टः स चोदनासामान्यादिहापि भवति। अत्रैव तर्हि पिण्डपितृयज्ञकल्पेनेति कस्मान्नोक्तम्। स्त्रीभ्यश्चेत्यधिकारार्थं तत्रोक्तम्। स च कल्पोऽग्नौकरणे पार्वणस्य बाधको भवति एककार्यत्वात्। भोजनं तु पार्वणवद्भवति भोजनेऽपि तन्त्रस्यापेक्षितत्वात्। तच्च भोजनं पैतृकमेवेति कृत्वा पार्वणमेव तन्त्रं परिगृह्यते तस्य पैतृकत्वात्। तत्र विशेषमाह—ओदनं कृसरं पायसमिति। पिण्डपितृयज्ञकल्पो भवतीत्युक्तं

तत्रच नित्येऽग्नौ चरुश्रपणमस्ति तत्स्थाने एतानि त्रीणि नित्येऽग्नौ श्रपयेत्। 'ओदनस्तु प्रसिद्धः स्यात्पायसः पयसा शृतः। आदेन-तिलमिश्रस्तु कृसरः परिकीर्त्यते॥ तिलकल्कं च निक्षिप्य शृतो वा कृसरो भवेत्' इति। चतुरिति चतुःशरावपरिमितस्य वा धान्यस्य पेषणं कृत्वाऽपूपान्श्रपयेत्। अपूपाः पिष्टमयाः। अपूपानां बहुसाधनसाध्यत्वात् स्त्रीकर्तृकत्वाच्च नित्येऽग्नौ श्रपणं न संभवतीति गृहसिद्धानामेवोपादानमिच्छन्ति। वाशब्दो विकल्पार्थः। पूर्वाणि वा त्रीणि इदं वैकमिति। भोजने तु नायं द्रव्यनियमः अपितु होम एव। 'अष्टका हि चतस्रः स्युः पूर्वाह्नानि तथैव च। द्रव्यत्रयत्वादैकत्वान्न यथासंख्यसंभवः॥ प्रत्यष्टकं हि पूर्वेद्युस्त्रीणि द्रव्याण्यथापि वा। अपूपद्रव्यमेकं वा नान्या व्याख्यानकल्पना' इति॥ अत्राहिताग्निमधिकृत्याह भगवान्—'अत्राष्टकायाः पूर्वेद्युः सप्तम्यां श्राद्धमीरितम्। तत्पिण्डपितृयज्ञस्य प्रकारेण समापयेत्॥ निमन्त्रणादि विप्राणामर्घ्यदानावसानकम्। पार्वणश्राद्धवत्कृत्वा दत्वा तेभ्यः सदीप्सितम्॥ यथाश्रद्धं प्रदद्याच्च गन्धमाल्याम्बरादिकम्॥ तेष्वासनोपविष्टेषु पितृयज्ञोक्तमार्गतः॥ दक्षिणाग्नीन्धनादीनि कुर्यात्कर्माण्यनुक्रमात्॥ पात्रासादनकाले तु तिस्रः स्थालीः पृथक्पृथक्। आसाद्य तासु शुद्धान्नं कृसरं पायसं तथा॥ चरूनपचेत्त्रींस्तथैव दक्षिणाग्नौ यथाक्रमम्। तिलाक्षतयुतः पक्वश्चरुः कृसर उच्यते॥ चतुःशरावप्रमितैस्तण्डुलैर्वा गृहाग्निना॥ पक्वानपूपान्होमार्थं स्वीकुर्याद्वा यथारुचि॥ दीप्तोल्मुकप्रणयनप्रभृतीन्यप्यविस्तरात्। कर्माणि पितृयज्ञोक्तान्याचरेदत्र कर्माणि' इति॥ कारिका—'ओदनादन्नमुद्धृत्य पृष्ठोक्तः पूर्ववद्द्विजैः। सोमायेति द्वयोः स्थाने हुत्वाष्टाभिरुदीरताम्॥ अन्नदानादि तद्वत्स्यादुक्त्वा संपन्नमित्यथ। उद्धृत्य भुक्तशेषान्नं निदधाति चरुत्रये। स्यात्पात्रोत्सर्गपर्यन्तं श्राद्धशेषं समापयेत्'

इति ॥ इदमत्र गृह्यम्—‘उदीरतामवर उत्परास इत्यष्टाभिर्हुत्वा यावतीभिर्वा कामयीत’ इति ॥ अस्यार्थः—यावतीभिर्वा अधिकाभिरेवंजातीयकाभिः पितृलिङ्गाभिः कामयीत कामयेत् तावतीभिर्जुहुयात् । एतदुक्तं भवति—पिण्डपितृयज्ञविधानेनेध्माधानान्तं कुर्यात् । चरुश्रपणे विशेष उक्तः । ततो ब्राह्मणपच्छौचाद्याच्छादनान्तं पार्वणवत्कृत्वा ओदनादिभ्यस्त्रिभ्योऽक्तमन्नमुद्धृत्य घृताक्तं कृत्वानुज्ञाप्य अग्नौकरणमन्त्रयोः स्थाने उदीरतामित्यष्टाभिश्चतुर्दशभिर्वा हुत्वा मेक्षणमनुप्रहृत्य ब्राह्मणेभ्योऽन्नदानादिशेषनिवेदनान्तं पार्वणवत्कृत्वा भुक्तवत्सु पितृयज्ञवन्निनयनादिपात्रोत्सर्गान्तं कृत्वा ततः श्राद्धशेषं समापयेदिति ॥ गृह्यपरिशिष्टेऽपि—‘एवमेवान्वष्टक्यं पूर्वेद्युर्मासिश्राद्धानि नयेदस्ति हि तेषु पिण्डपितृयज्ञकल्पः, अतस्ते तत्रत्या होममन्त्रा येभ्योऽन्येषु चतुर्थी’ति ॥ अत्र भगवान्—‘होमकालेऽप्यनुज्ञाप्य पित्रर्थान्ब्राह्मणान्वृतान् । उदीरतामित्यादिभिर्ऋग्भिरष्टाभिराहुतीः ॥ अष्टौ निरूप्यात्मलोकमवदाय चरुनयात् । यानत्यः पितृदेवत्याः प्रीणयन्ति पितॄनपि ॥ सर्वाभिरेव वा ताभिर्जुहुयाद्भक्तितस्ततः । पार्वणश्राद्धवद्विप्रान्भोजयेदविशेषतः ॥ पिण्डप्रदानप्रभृति पितृयज्ञवदाचरेत् । पात्राणि द्विश उत्सृज्य ब्राह्मणान्विसृजेत्ततः’ इति ॥ अत्र पार्वणश्राद्धवदित्यतिदेशात्सपत्नीकपितृमातामहवर्गद्वयस्य श्राद्धं कर्तव्यमिति सूचितम् ॥ तत्र वचनानि च—‘स्वेन भर्त्रा समं श्राद्धं माता भुङ्क्ते स्वधां तथा । पितामही तथा स्वेन स्वेनैव प्रपितामही ॥ अन्वष्टकासु वृद्धौ च प्रतिसंवत्सरे तथा । अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥ पितरो यत्र पूज्यन्ते तत्र मातामहा अपि । अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत् ॥ कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशम् । प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिति स्थितिः’ इति ॥ इति सप्तमीश्राद्धविधिः ॥

नमिदादिशब्दान्तस्यैव कथंचिद्वाचकाः एवं मन्त्रा अपीति। एवमुत्तरेष्वपि पक्षेषु योज्यम् । एवं देवताविप्रतिपत्तौ सत्यां हशब्दं
प्रयुक्तवान् । नहुदेवत्ये तथैव पक्षो युक्तः लक्षणाद्याश्रयणे कारणाभावादिति ज्ञापयितुम् । प्रयाजेषु तु कारणं निरुक्ताद्विज्ञे-
यम् । पशुकल्पेनेत्यादि । पशुकल्पेनेति वचनं प्रोक्षणप्रतिषेधः पाशुकस्यैव प्रोक्षणस्य भवति न पश्वङ्गभूतस्थालीपाकप्रोक्षणस्येत्येव-
मर्थम् । संज्ञप्येत्यनुवादः । उत्सिच्येति वचनमुत्सिच्य सर्वदाऽनयैव वपां जुहुयादित्येवमर्थम् । तेनाग्न्यादिनामधेयेन होम इत्याद्याः
पक्षा निरस्ता भवन्ति ॥ अत्र भगवान्—'अथापरेद्युरष्टम्यामष्टकाश्राद्धमाचरेत् । संनिधाप्य द्विजान्भोक्तॄन्श्रद्धायुक्तान्निमन्त्रि-
तान् ॥ तत्कुर्यात्पशुकल्पेन स्थालीपाकपथेन वा । स्थालीपाकप्रकारेण करणे तु पुरस्तनम् ॥ तत्रमौपासने कृत्वा प्रणीतासादनावधि ।
मन्त्रस्थदेवतानां तु निरुप्य प्रतिदैवतम् ॥ चतुरश्चतुरो मुष्टीन्प्रोक्षणं च यथापुरा । तूष्णीं कृत्वा समोप्याग्नौ श्रपयित्वा यथाविधि ॥
निधाय पश्चिमेऽग्नेस्तं बर्हिष्येव चरुं ततः । आज्यसंस्कारपूर्वं तु पुरस्तन्त्रं समाप्य च' इति ॥ कारिका—'अग्नेनयेत्यृचौ द्वे तु
पञ्च ग्रीष्मादयस्तथा । अविज्ञातस्वरो मन्त्रः सौत्र एकश्रुतिर्भवेत् ॥ ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् । तथान्छादनदा-
नान्तं श्राद्धं पार्वणवद्भवेत् ॥ उद्धृत्य भोजनार्थान्नाद्द्वे हुत्वाथ पाणिषु । सोमायेति तु मन्त्राभ्यां मेक्षणेन करेण वा ॥ एकै-
कामाहुतिं केचिद्विगृहैव प्रजुह्वति । प्राशितेषु हुतेष्वन्नेष्वन्यदन्नं ददात्यथ ॥ उदीच्याः प्राहुरन्नैव न प्राश्नीयात्करे हुतम् । निधाय ॥ ४ ॥
वद्धुतं पात्रेष्वाचम्योपविशेदिति ॥ संपन्नवचनान्तं स्याच्छेषं पिण्डार्थमुद्धरेत् । ब्राह्मणानां समीपे तु पिण्डनिर्वापणं भवेत् ॥ न
कार्यमग्निं प्रत्येयादित्यायन तु कर्मणि । प्राशयेन्मध्यमं पिण्डं श्राद्धशेषं समापयेत् ॥ अन्वष्टक्यं च पूर्वेद्युर्मासिमासि च पार्व

णम्। चतुर्भिर्व्याहृतिहोमः स्यात्पिण्डांश्चाभिमर्शयेत्॥ काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टं तथाष्टमम्। चतुर्ष्वेषु कृते होमः पिण्डाश्चात्र द्विजान्तिके॥ पिण्डनिर्वपणं केचिन्नेच्छन्त्यत्र चतुष्टये' इति। इदमत्र सूत्रम्—'अथावदानानां स्थालीपाकस्य चाग्नेर्नव जुहुया राये अस्मानिति द्वे। ग्रीष्मो हेमन्त ऋतवः शिवा नो वर्षाः शिवा अभयाः शरदः। संवत्सरोऽधिपतिः प्राणदो नो अहोरात्रे कृणुतां दीर्घमायुः स्वाहा॥ शान्ता पृथिवी शिवमन्तरिक्षं द्यौर्नो देव्यभयं नो अस्तु। शिवा दिशः प्रदिश उद्दिशो न आपो विद्युतः परिपान्तु सर्वतः स्वाहा॥ आपो मरीचीः प्रवहन्तु नो धियो धाता समुद्रो वहन्तु पापम्। भूतं भविष्यदभयं विश्वमस्तु मे ब्रह्माभिगुप्तः स्याराक्षराणि स्वाहा॥ विश्वे आदित्या वसवश्च देवा रुद्रा गोप्तारो मरुतः सदन्तु। ऊर्जं प्रजाममृतं पिन्वमानः प्रजापतिर्मयि परमेष्ठी दधातु स्वाहा॥ प्रजापते न त्वदेतान्यन्यः सौविष्टकृदष्टमी ब्राह्मणान्भोजयेदित्युक्तम्' इति॥ अस्यार्थः—स्थालीपाकशब्देनात्र द्रव्यं गृह्यते। एकवचनं जात्यभिप्रायम्। तेनायमर्थः—पश्वङ्गस्थालीपाकस्यावदानानां च स्थालीपाकान्तरस्य चैते सप्त होममन्त्रा भवन्तीति। सौविष्टकृत्यष्टमीति। अष्टमीग्रहणं सर्वदा त्रिष्वपि इयमाहुतिरष्टमी भवतीत्येवमर्थम्। तेन मन्त्रैरेव होमो न कदाचिन्नामधेयेनेति सिद्धम्। अपिच यदा पश्वङ्गभूतः स्थालीपाकः पृथग्घूयते तदा स्विष्टकृदपि पृथक्कार्यमित्येतत्प्रदर्शितं भवति। मन्त्रैरेव च पृथग्घोमे स्विष्टकृदपि पृथक्कार्यम्। पृथग्घोमे हि अवदानानां सप्त स्थालीपाकस्य च सप्त ततः सौविष्टकृती पञ्चदशी स्यात्। सहपक्षे त्वष्टमी भवति। एवं च पृथग्घोमनिवृत्त्यर्थमष्टमीग्रहणं वेदितव्यम्। ब्राह्मणान्भोजयेदित्युक्तमिति। ब्राह्मणान्भोजयित्वा स्वस्त्ययनं वाचयीतेति यदुक्तं तदिह कार्यमित्यर्थः। एतदुक्तं भवति—होमं समाप्य ब्राह्मणपञ्चाशाद्यान्वादनान्तं कृत्वा भोजना-

र्थौदनादुद्धृत्य घृताक्तं कृत्वा पाणौ होमं कृत्वा भुक्तवत्स्वनाचान्तेषु पिण्डान्दत्वा स्वस्त्ययनं वाचयित्वा श्राद्धशेषं समापयेदिति । अथवा ब्राह्मणान्भोजयेत् ।इदमनन्तरे कर्मणीत्युक्तं यथोक्तं पूर्वेद्युः कर्म तत्र च भोजयेदित्युक्तं द्रष्टव्यमित्यर्थः । इतिशब्दोऽन्नभोजनपरामर्शी । इदमष्टम्यां भोजनं श्राद्धमित्युपदेशः । शाखान्तरे च दृश्यते तस्माच्छ्राद्धमिति ॥ अत्र भगवान्—'ततोऽवदाय हविषः प्रक्षिप्याथ जुहोत्यथ । अनुज्ञाप्य च पित्रर्थब्राह्मणानासनस्थितान् ॥ पूर्वमग्नेनयेत्याभ्यामृग्भ्यां हुत्वाथ लौकिकैः । ग्रीष्मो हेमन्तऋतव इत्याद्यैश्च यथाक्रमम् । मन्त्रैश्चतुर्भिः स्वाहान्तैर्गृह्याधीतैः पृथक्पृथक् । प्रजापतेनेत्याद्यन्ता एतैर्मन्त्रैश्च सप्तभिः ॥ हुत्वा यथाविधि ततः स्विष्टकृद्धोममष्टमम् । कृत्वोपरिष्टात्तन्त्रं च समाप्य च यथाविधि ॥ ततो निमन्त्रितान्विप्रान्भोजयित्वा यथेप्सितम् । दद्यात्पितृभ्यः पिण्डांश्च पितृयज्ञोक्तमार्गतः ॥ इत्याद्यं पुष्टिकामो वै निदध्यात्सादरं द्विजः । अद्रव्योऽपि यथाशक्ति कुर्यादेनाष्टकां बुधः ॥ योऽशक्तिकस्तथो कर्तुं दारिद्र्येनाष्टकामिमाम् । स प्रदद्यादनडुहे तृणमप्ययवामिना ॥ कक्षमेव दहेदेषा मेऽष्टकास्त्विति चिन्तयन् । अष्टकासमये जीवन्नत्वेवानष्टको भवेत्' इति । अत्र पाणिहोमविधिविशेषस्त्वाहिताग्निकर्तव्यपार्वणश्राद्धोक्तो द्रष्टव्यः ॥ इत्यष्टमीश्राद्धविधिः ॥

अथ नवमीश्राद्धविधिरभिधीयते । तत्र कारिका—'अन्वष्टक्यं भवेत्कर्म नवम्यां पितृयज्ञवत् । दक्षिणाप्रवणे वह्निं निधाय ज्वलयेत्ततः ॥ त्रिः परिस्तीर्य तं दर्भैः समूलैरप्रदक्षिणम् । अतिप्रणीतवह्नेश्च भवेदेवं परिस्तृतिः ॥ अकम्पयन्निदं कुर्यात्परिस्तरणमत्र तु । ओदनं कृसरं चैव पायसं श्रपयेत्तथा ॥ कुर्वीत दधिमन्थाख्यं मधुमन्थाख्यमेव च । सक्तवो दधिमिश्रास्तु दधि-

मन्थाः प्रकीर्तिताः। मधुमन्थाः प्रकीर्त्यन्ते मधुमिश्रास्तु सक्तवः॥ श्रपयित्वा चरूनग्नौ दधिमन्थानधिश्रयेत्॥ कुर्याल्लेखे अवस्तीर्य सकृच्छिन्नद्वयेन ते। अभिघार्य क्रमेणैतानुद्वासयति पूर्ववत्॥ मात्राद्यर्थं पृथक्कुर्यात्कशिपुं सोपबर्हणम्। कृत्वेध्माधानपर्यन्तं ब्राह्मणानुपवेशयेत्॥ कांश्चिद्विप्रान्पितृश्राद्धे स्त्रीश्राद्धे कांश्चिदेव तु। नोहेन्मात्रर्घ्यपात्रेषु तिलावापे पितॄन्पदम्॥ अर्घ्यप्रदानमन्त्रेषु मात्रादिपदमावपेत्। वासःप्रदानपर्यन्तं तद्वत्कृत्वोभयत्र च॥ मधुमन्थहविर्वर्जमुद्धृत्यान्नचतुष्टयात्। अनुज्ञातो द्विजैस्तद्वज्जुहुयादाहुतिद्वयम्। हविश्चतुष्टयात्केचिदूचिरेऽष्टाहुतीरिह। संपन्नवचनान्तं स्यादन्नदानादि पूर्ववत्' इति॥ इदमत्र गृह्यम्—'अपरेद्युरन्वष्टक्यं तस्यैव मांसस्य प्रकल्प्य दक्षिणाप्रवणेऽग्निमुपसमाधाय परिश्रित्योत्तरतः परिश्रितस्य द्वारं कृत्वा समूलं बर्हिस्त्रिरपसलैरविधून्वन्परिस्तीर्य हवींष्यासादयेदोदनं कृसरं पायसं दधिमन्थान्मधुमन्थांश्च पिण्डपितृयज्ञकल्पेन हुत्वा मधुमन्थवर्जं पितृभ्यो दद्यात्' इति। अस्यार्थः—अपरेद्युरपरस्मिन्नहनि नवम्यामन्वष्टक्यं नाम कर्म कार्यमित्यर्थः। तस्यैव मांसस्येति। योऽष्टम्यां पशुः कृतस्तस्यैव मांसं ब्राह्मणभोजनार्थं प्रकल्प्य संस्कृत्येत्यर्थः। भोजनार्थत्वं तु शास्त्रान्तरात्रगतम्। दक्षिणाप्रवण इति प्राक्प्रवणनिवृत्त्यर्थम्। उपसमाधायेति व्याख्यातम्। अग्निं तिरस्करिण्यादिभिः परिश्रित्योत्तरतो द्वारं करोति। पुनः परिश्रितस्येति वचनं परिश्रयणस्यानित्यत्वज्ञापनार्थम्। अत्रापि पिण्डपितृयज्ञकल्पोऽस्ति। तत्र विशेषमाह। धून्वन् परिस्तीर्येति। एतस्मिन्काले समूलं बर्हिर्गृहीत्वा अपसैलरप्रदक्षिणमविधून्वन्नकम्पयंस्त्रिः परिस्तृणीयात्। आसादयेदभिघार्य स्थालीपाकमित्यस्मिन्काले एतानि पश्चासादयेत्। एषां नित्ये श्रपणं कार्यम्। गृह्यकर्मणि सर्वत्रैव चरूणां नित्येऽग्नावेव श्रपणं कार्यं न लौकिके। अन्यत्र

प्रतिषेधात्। 'श्रपयित्वैककपालं चे'त्यत्र श्रपयित्वेति वचनस्य चरुवर्जितानां धानादीनां नित्याभिश्रपणनिषेधपरत्वेनापि संभवात्। 'सक्तवो दधिमिश्रास्तु दधिमन्थाः प्रकीर्तिताः। मधुमन्थाः प्रकीर्त्यन्ते मधुमिश्रा हि सक्तवः'। उल्लेखनकाले द्वे लेखे लिखेत्। उभे च सकृदाच्छिन्नैरवस्तृणीयादिति। पिण्डपितृयज्ञकल्पेनेत्यादि। इदं कर्म पिण्डपितृयज्ञविधानेन कार्यमित्यर्थः। 'अग्निप्रणयनं पात्रं सोमायेत्यादिमन्त्रकौ। उपस्थानं प्रवहणं निनयावतिदिश्यते' इति। हुत्वा दधिमन्थवर्जमिति। इध्माधानान्तं कृत्वा ब्राह्मणपृच्छौचाद्याच्छादनान्तं कृत्वा ओदनादिभ्यश्चतुर्भ्योऽन्नमुद्धृत्य मधुमन्थवर्जं घृताक्तमन्नमनुज्ञाप्य अग्नावाहुतिद्वयं हुत्वा मेक्षणमनुप्रहृत्य शेषनिवेदनान्तं कृत्वा पितृभ्यः पिण्डान्निपृणीयादित्यर्थः। पिण्डदाने मधुमन्था अपि ग्राह्या इति॥ अत्र भगवान्—'नवम्यामाचरेच्छ्राद्धमन्वष्टक्याभिधानकम्। तत्पिण्डपितृयज्ञोक्तप्रकारेण समाचरेत्॥ निमन्त्रणादि विप्राणामर्घ्यदानावसानकम्। अनाहिताग्निः कर्तव्यं पर्वश्राद्धवदाचरेत्॥ तत्र या ह्यष्टका पूर्वं पशुकल्पेन कल्पना। तदा तस्य पशोर्मांसमुपयुक्तावशेषितम्॥ विप्राणां भोजनार्थाय किंचिदत्राप्युपानयेत्। नतु होमाय मांसेन होमो नास्त्यत्र कर्मणि॥ दक्षिणावनते देशे स्थण्डिलं परिकल्पयेत। परिश्रयेच्च तं देशमथवा न परिश्रयेत्॥ परिश्रयणपक्षे तु कुर्वीत द्वारमुत्तरे। मूलेन सहितैर्दर्भैरधस्तात्परिकल्पिते॥ अप्रदक्षिणमत्र त्रिः परिस्तरणमाचरेत्। शुद्धान्नं कृसरान्नं च पायसं दधिसक्तवः॥ मधुमन्थास्तथेत्येवं पश्चात्र चरवः स्मृताः। सक्तवो मिश्रिता दध्ना दधिमन्था इति स्मृताः॥ त एव मधुसंमिश्रा मधुमन्था इति स्मृताः। मधुमन्थैर्विनान्येषां चतुर्णां होम इष्यते॥ केवलं पिण्डदानार्थे मधुमन्थपरिग्रहः। तत्र शुद्धौदनादींस्त्रीन्पचेदौपासनानले॥ तथैव दधिमन्थानप्यधिश्रित्याभिघार्य च। उ

चरवावतीर्यामेः पुनरप्यभिघारयेत् ॥' एवमेतानि चत्वारि हवींषि तु यथाक्रमम् । पश्चिमेऽग्नेः परिस्तीर्णदर्भेष्वेव विनिक्षिपेन् ॥
लेखोल्लेखनवेलायां द्वे लेखे उल्लिखेत्तयोः । पितॄणां पिण्डदानार्था पूर्वा स्त्रीणां तु पश्चिमा ॥ उभे च सकृदाच्छिन्नैस्तीर्णैः प्रच्छा-
दयेत्क्रमात् । यद्वा पिण्डप्रदानार्थमवटद्वितयं खनेत् ॥ लेखाद्वितयवत्पूर्वपश्चिमस्थे यथाक्रमम् । कुर्यात्ते च यथाकारे यदि वाप्य-
वटानि षट् ॥ कल्पयेत्तेषु पूर्वत्र पित्रर्थमवटत्रयम् । कुर्याद्वृत्तस्वरूपाणि कल्पयेदवटानि षट् । कल्पयेत्पृथगेवैवं कशिपुं सोपबर्ह-
णम् ॥ होमकाले चरूनन्यान्मधुमन्थविवर्जितान् । उद्धृत्य पात्रेष्वन्येषु पृथक् श्रित्वा च सर्पिषा ॥ अवदायानुपूर्व्येण पार्वणश्राद्ध-
होमवत् । जुहुयात्समनुज्ञाप्य पित्रर्थान्ब्राह्मणान्वृतान् ॥ अथैतान्भोजयेद्विप्रांस्तृप्ताः स्युस्ते यथा तथा' इति ॥ कारिका—'उद्धृत्य
भुक्तशेषान्नमेकीकृत्य च पञ्चभिः । पूर्वस्यामेव रेखायां पितॄणां निनयेज्जलम् ॥ पश्चिमायां तु रेखायां मातॄणां निनयेत्तथा ।
शुन्धन्तामिति पित्रादौ मात्रादिपदमावपेत् । दत्त्वा पिण्डान्पितृभ्यस्तु मात्रादिभ्यो ददात्यथ । मातृपिण्डेषु निनयेत्सुरा चाचाम-
मेव च । ओदनाग्रद्रवं प्राहुराचामं तु मनीषिणः । स्त्रीद्वित्वे वा बहुत्वे वा तेशब्दस्योह इष्यते । निर्दिशेन्नामनी द्वित्वे नामानि
बहवो यदि । नाम द्विवचनान्तं स्याद्द्वयोरप्येकनाम चेत् । नोह्या इति येशब्दं वृत्तिकारादयो यथा । जयन्तस्वामिनः शिष्य
ऊहं कुर्वन्ति या इति । द्वित्वे युवां बहुत्वे तु युष्मानिति पदं वदेत् । अनूहेनैव पिण्डानां सकृत्स्यादनुमन्त्रणम् । अभ्यज्जाथां-
पदं द्वित्वे बहुत्वेऽभ्यङ्ध्वमित्यथ ॥ द्वित्वेऽज्ञाथां पदं ब्रूयाद्बहुत्वेऽङ्ध्वंपदं वदेत् । दद्याद्दशामनूहेन मन्त्रस्यावृत्तिरिष्यते ॥ अनूहे-
नैव पिण्डाश्च सकृदेवोपतिष्ठते । अनूहेनोभयेषां स्याद्युगपच्च प्रवाहणम् ॥ पिण्डदानमनूहेन मन्त्रस्यावृत्तिरिष्यते । पिण्डद्वयमनूहेन

पर्णी वै प्राशयेदथ। स्वात्पात्रोत्सर्गपर्यन्तं श्राद्धशेषं समापयेत्' इति॥ इदमत्र सूत्रम्—'स्त्रीभ्यश्च सुरा चाचाममित्यधिकं कर्षूष्वेके द्वयोः षट्सु वा पूर्वासु पितृभ्यो दद्यादपरासु स्त्रीभ्यः' इति। अस्यार्थः—स्त्रीभ्यश्चेति। मात्रे पितामह्यै प्रपितामह्यै च पिण्डान्निपृणीयात्। तत्र च ओदनादिपञ्चभ्यः सुरा चाचामं चाधिकं भवतीत्यर्थः। पित्रादित्रयाणामेव पिण्डपितृयज्ञस्य दृष्टत्वान्नद्विधानं स्त्रीणां न प्राप्नोतीति कृत्वा पिण्डपितृयज्ञकल्पेनेत्येतदत्रानुवर्तनीयम्। 'ओदनाग्रद्रवं प्राहुराचामं हि मनीषिणः। गौडी माध्वी च पैष्टी च सुरा तु त्रिविधा स्मृता'। अधिकवचनं पश्चानामबाधनार्थम्॥ हरदत्तस्त्वाह—तण्डुलप्रक्षालनाम्बु आचामः, यवागूरित्येके इति। कर्षूष्वित्यादि। द्वयोर्लेखयोरुभयेषां पिण्डनिर्वापणमित्युक्तम्। कर्षूर्नाम अवटाः कर्ष्वौ च कर्ष्वश्च कर्ष्वः ताम्येके इच्छन्ति। यदा द्वे कर्ष्वौ तदा आयते भवतः। यदा षट् तदा परिमण्डलाः। द्वयोरिति वचनात्कर्ष्वोरित्येकशेषो लब्धः। पूर्वास्वित्यादि पूर्वा च लेखा पूर्वा च कर्षूः पूर्वेश्च कर्वो ताः पूर्वाः। एतदुक्तं भवति—द्विलेखा द्विकर्षू। षट्कर्षूपक्षे पूर्वस्यां लेखायां पूर्वस्यां कर्ष्वां पूर्वासु कर्षूषु पितृभ्यो निपृणीयादिति। अपरास्वित्यादि। पूर्ववदेकशेषः। अत्र किंचिद्वक्तव्यमस्ति। द्वे लेखे इत्युक्तं। पितृषु च स्त्रीषु च पृथक्पृथक् नवावराः युजो अयुजो वा ब्राह्मणा भवन्ति। प्रकृतौ समर्थनिगमेषु यजुर्निगदेषु विकृतावूह उक्तः। तेन स्त्रीपात्रेषु तिलावपने तिलोसीति मन्त्रेण पितृशब्दस्योहो न कार्यः प्रकृतावसमर्थत्वात्। पार्वणं हि तस्य प्रकृतिः। तत्र च पित्रादयस्त्रयोऽभिधातुमभिप्रेताः। नच पितृशब्दस्त्रीन्वक्तुं समर्थः। अथोच्येत तत्रापि पितृपात्रमेवास्य प्रकृतिः उत्तरे विकृती। पितृपात्रे च पितृशब्दः समर्थः विभक्तिमात्रं त्वसमर्थं। तेनोत्तरयोः पात्रयोः पितृशब्दस्य स्थाने

पितामहप्रपितामहशब्दौ द्विवचनान्तौ वक्तव्याविति । तदयुक्तम् । समानप्रकरणे प्रकृतिविकृतिभावो नास्तीति । ज्ञापितमेतच्चाव्यकारेण 'शन्यापदेनेति तु प्रणये'दित्यत्र । तेन त्रिष्वपि पितृशब्द एव प्रयोज्य इति सिद्धम् । यथा तत्र कथंचिद्गौण्या लक्षणया वान्यथावा नीनाह तथैवात्रापि मातरमिदध्याच्चेनोहो न कार्यः । अथ तत्रोत्तरयोः पात्रयोरप्यूहोऽभ्युपगम्यते तर्हि शुन्धन्तां पितर इत्यत्र त्रयाणां वचनमपार्थकं स्यात् । तस्मात्पितृशब्द एव सर्वथा प्रयोज्य इति सिद्धम् । शुन्धन्तां पितर इत्यत्र तु विभक्तिमात्रमसमर्थं प्रकृतिस्तु समर्थैव तेन तस्या ऊहः कार्यः—शुन्धन्तां मातरः शुन्धन्तां पितामह्यः शुन्धन्तां प्रपितामह्य इति । एतत्तेऽसौ येचत्वेत्यत्र यदि द्वे मातरौ स्यातां पितामह्यौ प्रपितामह्यौ वा तदा असावित्यत्र द्वयोरपि नामनी ब्रूयात् । यदि बह्व्यस्तदा बह्वीनामपि नामानि ब्रूयात् । तेशब्दस्स्थाने द्वौ मातरौ चेत् वामित्यूहः कार्यः । बह्व्यश्चेत् व इत्यूहः । येशब्दस्य केचिदूहेन स्त्रीलिङ्गं कुर्वन्ति तद्विचार्यम् । एतत्ते तत ये च त्वामत्रान्वित्यस्यायमर्थः—हे तत, एतत्पिण्डरूपमन्नं ते तुभ्यं ये चान्येऽत्र त्वामत्रानु यन्ति तेभ्यश्चेत्यर्थः । अनुयायिनश्च यदि स्त्रिय एव स्युस्तदोहो युज्यते—यदि पुमांस एव पुमांसश्च स्त्रियश्च वा तदा न युज्यते 'पुमान्स्त्रिये'ति पुंशब्दस्यैकशेषात् । आचार्येणाप्युक्तं 'पुंवन्मिथुन' इति । 'अनुयायिनश्च पुमांसश्च स्त्रियश्चेति प्रतिभाती'ति बौधायनवचनात् । इत्थं हि तेन पिण्डदाने पठितो मन्त्रः—एतत्ते ततासौ ये ते मातामहा ये ते आचार्या ये ते सखायो ये ते गुरवो ये ते ज्ञातयो ये तेऽमात्या ये तेऽन्तेवासिनस्तेभ्यस्ताभ्यश्च स्वधानम इति तेनोहो न कार्यः । आपस्तम्बेन तु—'एतत्ते मातरसौ याश्च त्वामत्रानु' इति मन्त्रः पठित इति कृत्वा केचिदूहं कुर्वन्ति तच्चिन्त्यम् । स्त्रीद्वित्वे युवामत्रानु बहुत्वे युष्मानत्रान्विति ।

अत्र पितरोऽमीमदन्त पितर इत्यत्र पितृशब्दस्योहो न कार्यः प्रकृतावसमर्थत्वात् । पिण्डपितृयज्ञो हि तयोः प्रकृतिः । तत्र च त्रयोऽभिधातुमभिप्रेताः तस्मादनूहः । उभयपिण्डानां सकृदेवानुमन्त्रणं कार्यं शक्यत्वान्न पृथक् । असावभ्यङ्क्ष्वासावङ्क्ष्वेत्यत्रच गौडिले मङ्गुले चागोशब्दस्य नोहः । अभ्यञ्जनार्थां अभ्यङ्क्ष्वम् । अञ्जनार्थां अङ्क्ष्वमिति यथार्थम् । स्त्रीणां पृथग्वासो दद्यादसंसर्गतान् । एतद्वः पितर इत्यत्रोहो न कार्यः असमर्थत्वादेव । मन्त्रावृत्तिरस्त्येव । पितृपिण्डान्स्त्रीपिण्डांश्च सकृदेवोपतिष्ठेत शक्यत्वान्न पृथक् । अनूहश्च पूर्ववत् । 'मनोन्वाहुवामहे' इत्यादौ त्वनूहः पूर्ववत् । तस्मादन्नं नोहेदिति प्रतिषेधाच्च । प्रवाहणं चोभयपिण्डानां युगपदेव शक्यत्वादनूहश्च पूर्ववत् क्रमत्वाच्च । 'वीरं मे दत्त पितरः' इति पितृणां मध्यमं पिण्डमादाय अनेनैव स्त्रीणां मध्यमपिण्डमप्यादद्दीत अनूहश्च पूर्ववत् । आधत्त पितर इति पिण्डद्वयं प्राशयेत् अनूहश्च पूर्ववत् क्रमत्वाच्च । यत्रत्वृचि ऊहमिच्छन्ति तत्र निदधाति 'आत्मनि मन्त्रान्संनमये'दिति 'इति मन्त्रे' इति च । एवं निलयनवर्जं पितृशब्दस्योहो नास्तीत्युक्तं । तत्र यद्युच्यते पितृशब्दो बहुवचनान्तः पित्रादींस्त्रीनेव वक्ति साहचर्यात् । यथा मित्राविति वरुणाविति चोक्ते मित्रावरुणौ प्रतीयेते साहचर्यात् तद्वदत्रापि । मातृस्तु वक्तुं न शक्नोति तत्साहचर्यस्य क्वचिदप्यप्रतीयमानत्वात् तस्मादूहः कार्य इति । तत्र ब्रूमः—असमर्थत्वादूहो नास्तीत्युक्तमेव । केवलाभिधानं संपादनीयम् । सपिण्डीकरणेन हि प्रेतत्वं निवर्त्य पितृत्वं नाम संस्कारविशेषः शास्त्रे गम्यते । तच्च मातृष्वप्यविशिष्टमिति मातॄरप्यभिधत्ते पितृशब्दः । एवंच कृतैकोद्दिष्टे शास्त्रान्तरदृष्टः पितृशब्दप्रतिषेधोऽप्युपपन्न ऊहवादिनोऽतिप्रसङ्गश्चास्ति । मात्रादयश्च त्रयोऽपि शब्दाः प्रसज्यन्ते । तेनाप्येवं नेष्यन्ते पुनरपि बहुविद्भिर्विचार्य कार्यमित्यलमतिविस्तरे-

णेति ॥ ॥ अत्र ब्राह्मणसंख्योक्ता गृह्ये—'नवावरान्भोजयेत्' इति । अस्यार्थः—'नवप्रसङ्गात्प्रकृतं विनिवर्तयति तेनान्वष्टक्ये नवावरान्भोजयेन्नियमेनेति । अयुजो वा । अशक्तौ प्रागप्ययुजो भोजयेत्सप्त पञ्च त्रीनेकं वा । सप्तपक्षे एकस्यैकः इतरयोस्त्रयस्त्रयः । पञ्चपक्षे एकस्य त्रयः इतरयोरेकैकः । इदं चान्वष्टक्य एवेति ॥ हरदत्तस्तु—अन्वष्टक्यविषयमेतदिति केचित् । सर्वाष्टकायामित्यन्ये । अष्टकायां नवावरान्ब्राह्मणान्भोजयेत् । पूर्वं विश्वेभ्योदेवेभ्य एकैकस्येत्यादिकं तत्रं भवति तच्च पार्वणादिविषयत्वात् । एतत्प्रकृतित्वाच्चाष्टकायाः । पिण्डपितृयज्ञो ह्यष्टकायाः प्रकृतिः । स्वधाग्रहणमपि नास्ति केवलं नवावरा भोजयितव्या इति केचित् । अन्येतु सर्वमनुतिष्ठन्ति । अयुजो वा अथवा प्रागपि नवभ्योऽप्ययुजो भोजयितव्यास्त्रयः पञ्च सप्तेति शक्त्यपेक्षया विकल्पः बहुवचननिर्देशादेकस्याप्रसङ्ग इति ॥ अत्र भगवान्—'भुक्तवत्स्वथ विप्रेषु पिण्डान्दद्याद्यथाविधि ॥ तत्र प्रकल्प्य षट् पिण्डान्मधुमन्थविमिश्रितान् । त्रींस्त्रीन्पिण्डान्पितृभ्यश्च स्त्रीभ्यश्च निर्वपेत्क्रमात् ॥ देशे पितृभ्यः पूर्वत्र तथा स्त्रीभ्यस्तु पश्चिमे । पिण्डान्पृथक्पृथग्दद्याद्धेखयोरवटेषु च ॥ स्त्रीपिण्डदानमन्त्राणामूहं च परिकल्पयेत् । शुन्धन्तां मातर इतिप्रकारेण यथार्हतः ॥ एकत्र पिण्डभागिन्यो द्वे स्यातां यदि तत्र तु । एतद्वां रुद्रदे यज्ञदे पिण्डो याश्च युवामनु ॥ इति ब्रूयादथैकस्मिन्नह्वयश्चेन्मातरादयः इति । एतद्वो यज्ञदे श्रीदे रुद्रदे याश्च वोन्विति ॥ स्त्रीपिण्डेषु त्रिषु सुरामाचाममधिकं दिशेत् ॥ ओदनाग्रोदकं प्राहुराचाममिति सूरयः ॥ अञ्जनादिप्रदाने च स्त्रीणां द्वित्वबहुत्वयोः । यज्ञदे रुद्रदेत्याद्यन्तमूहं परिकल्पयेत् ॥ एतद्वो मातरो वासो मानोतो युङ्ग्ध्वमित्यपि । ऊहं च कल्पयेत्स्त्रीणां वासोदानं प्रदापयेत् ॥ उभयेषां च पिण्डानां सकृदेवानुमन्त्रणम् । उपस्थानं च मन्त्रेण तथैव स्यात्प्रवाहणम् ॥

कल्पयेत्पृथगेतेषां कशिपुं चोपबर्हणम् । नवावरान्द्विजांस्तेषु त्रिषु कर्मसु भोजयेत् ॥ अशक्तौ सप्त पञ्च त्रीनयुग्मांश्च यथाबलम् ॥ सप्तपक्षे पित्रादिद्वितयस्य त्रयस्त्रयः । वरणीयास्तृतीयस्य एकएवावशिष्यते ॥ पञ्चपक्षे तु पित्रर्थं वरणीयास्त्रयोऽन्ययोः । द्वयोः प्रत्येकमेकैको वरणीयो विशिष्यते' इति ॥ इति नवमीश्राद्धविधिः ॥

अथाष्टकाश्राद्धाकरणे प्रत्यवाय उच्यते । 'यस्य ते प्रतिगच्छेयुरष्टकाभिरपूजिताः । मोघास्तस्य भवन्त्याशाः परत्रेह च सर्वशः' इति । तस्य प्रायश्चित्तमुच्यते ऋग्विधाने—'एभिर्द्युभिर्जपेन्मन्त्रं शतवारं तु तद्दिने । अन्वष्टक्यं यदा शून्यं पूर्णत्वं याति सर्वदा' इति ॥ करणेऽभ्युदय उच्यते हेमाद्रौ—'राजा तु लभते राज्यमधनश्चोत्तमं धनम् । क्षीणायुर्लभते चायुः पितृभक्तः सदा नरः' ॥ विष्णुधर्मोत्तरे—'स्वर्गं च मोक्षं च यशः सुखानि राज्यं च पुत्रानथ भूमिपत्वम् । श्रियश्च मुख्यान्विविधांश्च कामान्देवेश्वरः श्राद्धकृतो विधत्ते' इति ॥ ॥ एतदष्टकाश्राद्धमधिमासे न कर्तव्यमित्याह ज्योतिःपराशरः—'उपाकर्म तयोत्सर्गः प्रसवाहोत्सवाष्टकाः । मासवृद्धौ परे कार्या वर्जयित्वा तु पैतृकम्' इति । उत्तरे मासि कार्या इत्यर्थः । प्रसवाहोत्सवशब्देन जातेष्टिरेव गृह्यते । इत्यकरणे प्रायश्चित्तं करणे फलश्रुतिश्च ॥

अथ माघ्यावर्षश्राद्धम् ॥ अथाष्टकाविकृतिभूतमाघ्यावर्षश्राद्धं प्रतिमासमपरपक्षकर्तव्यश्राद्धं चाभिधीयते । तत्र कारिका—'माघ्यावर्षं नभस्यस्य कृष्णाष्टम्यां विधीयते । अष्टकाकर्मवत्कार्यं सप्तम्यादिष्वहःसु तत् ॥ माघ्यावर्षं नभस्यस्य कृष्णपक्षेऽह्नि कुत्रचित् । अन्वष्टक्यवदेव स्यात्पार्वणं नेति केचन ॥ प्रतिमासं कृष्णपक्षे चायुग्मेऽह्नि तु कुत्रचित् । पितृभ्य एव

तच्छ्राद्धमन्वष्टक्यविधानतः' इति ॥ इदमत्र गृह्यम्—'एतेन माध्यावर्षं प्रोष्ठपद्या अपरपक्षे मासिमासि चैवं पितृभ्योऽयुक्षु प्रतिष्ठापयेत्' इति । अस्यार्थः—एतेनेति पूर्वेद्युःप्रभृतिकृत्स्नकर्मातिदेशः । एतदुक्तं भवति—प्रोष्ठपद्याः समीपे योऽपरपक्षस्तत्राष्टम्यां माध्यावर्षं नाम कर्म कर्तव्यम् । तच्चैतेनात्राष्टकाकर्मणा व्याख्यातमिति । अत्रापि त्रिष्वप्यहस्सु कार्यमित्यर्थः । मासिमासि चेत्यादि । अपरपक्ष इत्यत्रापि संबध्यते मध्यगतस्य विशेषाभावात् प्रयोजनवत्त्वाच्च । तच्च पूर्वपक्षनिवृत्त्यर्थम् । एवमिति अकृत्स्नोपदेशार्थम् । तेनान्वष्टक्यमतिदिश्यते अनन्तरत्वात् । पितृभ्य इति मातृनिवृत्त्यर्थम् । प्रतिष्ठापयेत्कुर्यादित्यर्थः । एतदुक्तं भवति—प्रतिमासमपरपक्षे अयुग्मासु तिथिषु अन्वष्टक्यवत्पितृभ्य एव श्राद्धं कुर्यादिति समानकालत्वात्समानकार्यत्वाच्च पार्वणस्यास्य विकल्पः । एवंवा सूत्रच्छेदः—मासिमासि चैवं पितृभ्य इति । प्रतिमासमपरपक्षेऽन्वष्टक्यवत्पितृभ्य एव कुर्यादित्यर्थः । अयुक्षु प्रतिष्ठापयेदिति । श्राद्धकर्मणि सर्वमयुग्मासु संख्यासु प्रतिष्ठापयेत् । गन्धमाल्यादि सकृद्देयं त्रिः पञ्चकृत्वो वेत्यादीति ॥ अस्य माध्यावर्षगृह्यस्य हरदत्तकृता व्याख्या लिख्यते—एतेन माध्यावर्षं प्रोष्ठपद्यामपरपक्षे इति । एतेनानन्तरोक्तेनान्वष्टक्येन माध्यावर्षं कर्म व्याख्यातम् । तच्च प्रोष्ठपद्याः पौर्णमास्याः परो यः पक्षो भवति स माध्यावर्षसंयोगान्माध्यावर्षमिति भवति । तच्च त्रयोदश्याम् । तथाच याज्ञवल्क्यः—'यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते । तथा वर्षात्रयोदश्यां मघासु च न संशयः' इति । वर्षेतां या त्रयोदशी मघाभिः संपद्यते तस्यामित्यर्थः । अपरेति सामान्यविधानात्सर्वस्मिन्नेवापरपक्षे माध्यावर्षमिच्छन्ति । मासिमासि चैवम् । अथेदं माध्यावर्षं प्रोष्ठपद्यामपरपक्षे भवति एवं मासिमास्यपरपक्षे यत्पार्वणश्राद्धं वक्ष्यति तेन सहेदं विकल्प्यते

एककार्यत्वात्। यद्यप्येवं तथापि प्रोष्ठपद्या अपरपक्षे माध्यावर्षमेव नियमनम् अन्यथा पूर्वो भागोऽपार्थकः स्यात्। पितृभ्योऽप्सु प्रतिष्ठापयेदिति। पितृभ्यो यद्दीयते गन्धमाल्यादि तत्सर्वमपुक्संख्यया प्रतिष्ठापयेत्सकृत्त्रिः पञ्चकृत्वो वा दद्यादिति ॥ अत्र भगवान्—'एतेनैव प्रकारेण माध्यावर्षाभिधानकम्। श्राद्धं प्रोष्ठपदे मासि कृष्णपक्षे समाचरेत्' इति। इति माध्यावर्षपक्षश्राद्धम् ॥

अथाष्टकाश्राद्धातिदेशेनोक्तकाम्यश्राद्धविधिरभिधीयते ॥ तत्र कारिका—'पञ्चम्यां पुत्रकामस्येत्यादि काम्यं तदुच्यते। श्राद्धं यदुक्तमष्टम्यां तद्वदेव तदिष्यते ॥ विकल्पः पार्वणस्यास्य मासिश्राद्धस्य चेष्यते। काम्यश्राद्धे कृते नैव कार्ये मासिकपार्वणे। अष्टमीश्राद्धवत्कुर्यादाहिताग्निस्तु पार्वणम्' इति ॥ एवं काम्यश्राद्धविधिर्वृत्तिकारेण पार्वणश्राद्धसूत्रानन्तरं लिखित्वा व्याख्यातः। तथाच तत्रत्यवचनम्—'अन्वष्टक्यं च पूर्वेद्युर्मासिमासि च पार्वणं' इति। काम्यश्राद्धे पार्वणौ होमौ भुक्तशेषेण पिण्डदानं च। अनेन मासिश्राद्धस्य पार्वणश्राद्धस्य चैककार्यत्वादन्यतरेणैवालमिति। तत्र मासिश्राद्धं कृतं चेत्पर्वणि केवलं पिण्डपितृयज्ञः कार्य एव। काम्यश्राद्धं कृतं चेत्तेनैवालं न पुनर्मासिश्राद्धपार्वणश्राद्धे कार्ये। काम्यश्रुतिस्तु तिथिविशेषमपेक्ष्य कृतार्था न पुनरावर्तयितुं शक्नोति अग्निहोत्रद्रव्यवदिति ॥ गृह्यपरिशिष्टेऽपि—'मासिश्राद्धं यदि पर्वणि स्यात् पार्वणं तदा तेन विकल्पेत। काम्यं चेत्तत्र क्रियते तदा पार्वणं मासिश्राद्धं च तेनैव सिध्यतः' इति। भगवांस्तु—'काम्यश्राद्धमहं वक्ष्ये शौनको मुनिसत्तम। नापुत्रस्य लोकोऽस्तीति श्रुतिरेषा सनातनी ॥ देवतानामृषीणां च पितॄणामनृणः स्मृतः। ऋषिभ्यो ब्रह्मचर्येण पितृभ्यस्तु सुतेन च ॥ कुर्याद्यज्ञेन देवेभ्यः खोचितं धर्ममाचरन्। तस्माद्दणापाकरणं पितॄणामिह कुर्वताम् ॥ कन्यागतो यदादित्यः कृष्णपक्षेऽथ

पञ्चमी। श्राद्धमत्र गृही कुर्यान्मासिमासि च वत्सरम् ॥ प्रोष्ठपद्यां हि पञ्चम्यां पितृमान्न समाचरेत्। यज्ञोपवीती कुर्वीत पुत्रकामो द्विजोत्तमः ॥ तिलार्थं तु यवा ग्राह्या वृद्धिश्राद्धवदिष्यते। प्रोष्ठपदपरे पक्षे पञ्चम्यामाचरेत्सुधीः ॥ दक्षिणा च प्रदातव्या सुवर्णं वाससी तथा। दक्षिणाहीनकर्माणि निष्फलानि भवन्ति हि ॥ तस्माद्यत्नेन दातव्या दक्षिणा च स्वशक्तितः' इति। एवंच पञ्चमीग्रहणं नक्षत्राणां प्रदर्शनार्थम् ॥ अतएव ब्रह्मपुराणे—'कृत्तिकासु पितृनर्च्य स्वर्गं प्राप्नोति मानवः। अपत्यकामो रोहिण्यां सौम्ये तेजस्वितां लभेत् ॥ शौर्यमार्द्रासु चाप्नोति क्षेत्राणि च पुनर्वसौ। पुष्ये तु धनमक्षय्यमाश्लेषायां नरोत्तमः ॥ मघासु च प्रजां पुष्टिं सौभाग्यं फल्गुनीषु च। प्रदानशीलो भवति सापत्यं चोत्तरासु च ॥ प्रयाति श्रेष्ठतां शास्त्रे हस्ते श्राद्धप्रदो नरः। रूपं तेजोऽपि च त्वाष्ट्रे ऐश्वर्यं समवाप्नुयात् ॥ वाणिज्यलाभदा स्वाती विशाखा पुत्रकामदा। कुर्वतां चानुराधासु तदा सुचक्रवर्तिता ॥ आधिपत्यं च ज्येष्ठासु मूलेष्वारोग्यमुत्तमम्। अषाढासु यशःप्राप्तिरुत्तरासु विशोकता ॥ श्रवणे तु शुभांल्लोकान्धनिष्ठासु धनं महत्। वेदविद्यामभिजिति भिषक्सिद्धिं च वारुणे ॥ अजाविकान्प्रोष्ठपदि द्यविद्दिव्लं तथोत्तरे। रेवतीषु तथा कुप्यमश्विनीषु तुरंगमम्। श्राद्धं कुर्वंस्तथाप्नोति भरणीष्वायुरुत्तमम् ॥ एवं फलमवाप्नोति ऋक्षेष्वेतेषु तत्त्ववित्। तस्मात्काम्यानि श्राद्धानि देयानि विधिवद्द्विजैः' इति ॥ इति काम्यश्राद्धविधिः ॥

अथ मन्त्रार्थः। उदीरतामित्याद्यष्टौ मन्त्राः ॥ उदीरतामिति—त्रिविधाः पितरः उत्तमा मध्यमा अधमाश्चेति। यथाविधि श्रौतकर्मानुष्ठानेन पितृत्वं प्राप्ता उत्तमाः। स्मार्तकर्ममात्रपरा मध्यमाः। तत्रापि केचित्संस्कारैर्विकला अधमाः। एतदेवाभिप्रेत्य

'ये अग्निदग्धा ये अनग्निदग्धा' इत्यादिमन्त्र आम्नातः । तेष्वपरे केचिन्निकृष्टाः । उदीरतामुत्तमं हविः प्राप्नुवन्तु । परासः पितरः उदीरतां मध्यमाः ते सर्वे सोम्यासः सौम्या अनुग्रहपराः सन्तु । ये पितरः अवृकाः वृकवत् अरण्यश्ववदस्मासु हिंसां न कुर्वन्तः ऋतज्ञाः असदनुष्ठितं यज्ञं जानन्तः असून् प्राणानीयुः रक्षितुं प्राप्तास्ते पितरः हवेषु अस्मदीयेष्वाह्वानेषु नोऽस्मानवन्तु रक्षन्तु ॥ इदं पितृभ्य इति—यजमानोत्पत्तेः पूर्वमुत्पन्नाः ज्येष्ठभ्रातृपितामहादयो ये ईयुः पितृलोकं प्राप्ताः ये चान्ये उपरासः यजमानजन्मोपरि उत्पन्नाः कनिष्ठभ्रातृस्वस्रादयः पितृलोकं प्राप्ताः येऽप्यन्ये पार्थिवे पृथ्वीसंबन्धिनि रजसि रजोगुणकार्येऽस्मिन्कर्मणि आनिषत्ताः हविःस्वीकर्तुमागत्योपविष्टाः ये वान्ये केचिदन्ये बन्धुवर्गरूपाः विक्षु बन्धुरूपासु प्रजासु आनिषत्ताः श्राद्धादिस्वीकारायागत्योपविष्टाः । कीदृशीषु विक्षु । सुवृजनासु वृज्यते परित्यज्यते दारिद्र्यमनेनेति वृजनं धनं शोभनं वृजनं यासां ताः सुवृजनास्तादृशीषु धनसमृद्ध्या श्राद्धादिकमाचरन्तीत्यर्थः । सर्वेभ्य उक्तेभ्यः अस्मिन्कर्मणीदं नमोस्तु आहुतिप्रदानपूर्वको नमस्कारोस्तु ॥ आहं पितृन्सुविदत्रानिति—अहं यजमानः सुविदत्रान् मदीयां भक्तिं सुष्ठु जानतः पितॄन् आवित्सि आभिमुख्येन लब्धवानस्मि । विष्णोर्व्यापिनो यज्ञस्य नपातं विनाशाभावं च विक्रमणं च विशेषेण प्रवृत्तिं च लब्धवानस्मि । ये पितरो बर्हिषदः सन्ति ते इहास्मिन्कर्मणि आगमिष्ठाः अतिशयेनागताः आदरपूर्वं समागत्य स्वधया पुरोडाशाद्यन्नेन सह सुतस्याभिषुतस्य पित्वः पितोरन्नस्य भागं भजन्त सेवन्ते उपयुञ्जते ॥ बर्हिषद इति—बर्हिषदः बर्हिषि यज्ञे सीदन्तीति बर्हिषदः । अत्रापि ये वै यज्वानः ते बर्हिषदः पितर इत्यत्र श्रुतत्वाद्यागं कृत्वा प्रेत्य पितृलोकं प्राप्ताः बर्हिषदः तादृशाः हे पितरः,

अर्वागर्वाचीनानामस्माकं ऊती रक्षा भवद्भिः कर्तव्येति शेषः । वो युष्मदर्थं इमा हव्या एतानि हवींषि चकृम अतस्तानि जुषध्वं सेवध्वम् । ते हविर्जुषन्तो यूयं शंतमेन सुखतमेन अवसरेण निमित्तेन आगत आभिमुख्येन प्राप्नुत । अथानन्तरं नोऽस्मभ्यं शं सुखं योः दुःखवियोगं अरपः पापराहित्यं दधात दत्त ॥ उपहूताः पितरः सोम्यास इति—सोम्यासः सोम्याः अस्मद्नुग्रहपराः सोमसंपादिनो वा पितरः बर्हिष्येषु यागार्हेषु प्रियेषु तृप्तिकरेषु निधिषु निधिसदृशेषु हविष्षु निमित्तभूतेषु सत्सु उपहूताः अस्माभिराहूताः ते पितरः आगमन्तु आगच्छन्तु । आगत्य च इह अस्मिन्कर्मणि अस्माभिः प्रयुक्ताः स्तुतीरश्रुवन्तु शृण्वन्तु । श्रुत्वा च अधिब्रुवन्तु माधुर्यं यजमान इत्यादरेण कथयन्तु । ते तादृशाः पितरः अस्मानवन्तु रक्षन्तु ॥ आच्या जानु दक्षिणतो निषद्येति—पितृणामयं स्वाभाविको धर्मः 'अथैत पितरः प्राचीनावीती सव्यं जान्वाच्ये'ति वचनात् हे पितरः, विश्वे सर्वे यूयं जानु आच्य भूमौ निपात्य दक्षिणतः दक्षिणपार्श्वे निषद्य उपविश्य इममस्मदीयं यज्ञं अभिगृणीत अभिष्टुवत विशिष्टत्वमियोगात् । परया श्रीला चैतंगुणोऽयं यज्ञ इति प्रशंसतेत्यर्थः । अपिच वो युष्माकं यत्कर्मवैगुण्यजनितं आगः अपराधं पुरुषता मनुष्यत्वेन हेतुना कराम कृतवन्तः हे पितरः, तेन केनचिदपराधेन नोऽस्मान्मा हिंसिष्ट ॥ आसीनासो अरुणीनामिति—अरुणीनामारोचमानानां ज्वालानां वा देवतानां वा उपस्थे समीपस्थाने वेदंशे आसीनासः उपविष्टाः पितरो यूयं दाशुषे हविर्दत्तवते मर्त्याय मनुष्याय यजमानाय रयिं धनं धत्त दत्त । हे पितरः, यूयं तस्य यजमानस्य पुत्रेभ्यो वस्वो वसु धनं प्रयच्छत । ते तादृशा यूयं इहास्मदीये कर्मणि ऊर्जं धनं दधात धत्त ॥ ये नः पूर्वे इति—सोम्यासः सोमसंपादिनः वसिष्ठाः वस्तृतमाः कृताम्मोदनाः

धनवत्तमा नोऽस्माकं ये पूर्वे पितरः सोमपीथं सोमपानं अनूहिरे आनुपूर्व्येण देवेभ्यः प्राप्नुवन्तः । दत्तवन्त इत्यर्थः । उशन् पितृभिः सह भोगं कामयमानो यमः पितृपतिः उशद्भिः यमेन सह संभोगं कामयमानैः तेभिः तैः अस्मदीयैः पितृभिः सह रराणो रममाणः हवींषि अस्माभिः दत्तानि प्रतिकामं कामंप्रति अत्तु । यानि यानि हवींषि कामयते तानि तानि भक्षयत्वित्यर्थः ॥ ॥ अथाष्टमीश्राद्धमन्त्रार्थः ॥ अग्ने नयेति—हे अग्ने देव, अस्मान् शोभनेन पथा सुपथा राये धनाय नय गमय । विश्वानि सर्वाणि वयुनानि ज्ञानानि । इह ज्ञातव्यप्रवृत्तिर्वयुनशब्दः । सर्वाणि ज्ञातव्यानि विद्वान् त्वं अस्मदस्मत्तः एनः पापं युयोधि पृथक्कुरु अपनय । कीदृशम् । जुहुराणं कौटिल्ययुक्तम् । वयंच ते तुभ्यं भूयिष्ठां नमउक्तिं विधेम । लडर्थे लोट् । भूयोभूयो नमोवाक्यं ते कुर्म इत्युक्तं भवति ॥ अग्ने त्वमिति—हे अग्ने, नव्यः 'नु स्तुतौ' सर्वेषां नव्यः स्तुत्यस्त्वं अस्मान् स्वस्तिभिरविनाशैरुपायैः विश्वा विश्वानि दुर्गाणि दुरितानि अतिपारय अतिगमय । किंच तव प्रसादात् नोऽस्माकं पृथिवी भूमिश्च बहुला भोगसमृद्धा दीर्घा पूः पुरी च अस्त्विति शेषः । तथा तोकाय पुत्राय तनयाय तत्पुत्राय च शंयोर्भव । उत्पन्नानां दुरितानां शमनाय आगामिनां पृथग्भावाय च भव ॥ ग्रीष्मो हेमन्त इति—ग्रीष्म इति वसन्तस्यापि ग्रहणम् । हेमन्त इति शिशिरस्य । अतएव ऋतव इति बहुवचनम् । ग्रीष्मादिऋतवो नः शिवा भवन्तु । शरच्च नः अभया भवतु भयरहिता भवतु । संवत्सरश्चाधिपतिः । 'सर्वस्य संवत्सरः प्रजापतिरधिपति'रिति दर्शनात् । स च नः प्राणदो भवतु प्राणस्थितिहेतुर्भवतु । अहोरात्रे च कृणुतां अविच्छेदेन पुनःपुनरावर्तमाने कृणुताम् । अतएव नः दीर्घमायुरस्तुस्वाहा ॥ शान्ता पृथिवीति—पृथिवी नोऽस्माकं शान्ता भवतु । अन्तरिक्षं च शिवं

मनतु । द्यौः देवी नोऽभयमस्तु । दिशः प्राच्याद्याः प्रदिशः आग्नेय्याद्याः उद्दिशः ऊर्ध्वा दिशः परिपान्तु । आपः प्रसिद्धाः स्वाहा ॥ आपो मरीचीरिति—आपः प्रसिद्धाः मरीचीः मरीचयः । पूर्वसवर्ण ईकारः । सूर्यस्य रश्मयः अन्तरिक्षं 'अन्तरिक्षं मरीचयः' इत्यारण्यके दर्शनम् । धियः पुण्यानि कर्माणि नोऽस्मान् प्रवहन्तु प्रकृष्टदशां प्रापयन्तु । धातानाम देवताविशेषः सच समुद्रश्च नः पापं प्रवहतु प्रापयतु । नाशमिति शेषः । भूतं अतीतं भविष्यत् आगामि । इदं वर्तमानस्याप्युपलक्षणम् । इदं कालत्रयवर्तिभूतजातं विश्वं कर्म अभयं अभयंकरमस्तु । ब्रह्मणा देवेन परमात्मना हिरण्यगर्भेण वा अभिगुप्तः सर्वतो रक्षितः अहं स्याम् । प्रजाः पुत्रादिका राक्षाणि रक्षाणि छान्दसो दीर्घः । स्वानां रक्षिता भूयासम् । अपर आह स्वः स्वर्ग अक्षाणि 'अशूङ् व्याप्तौ' व्याप्नोमि । स्वरित्यत्र संहितायां दीर्घश्छान्दसः कंपो वा यथा स्वोर्णज्योतिरिति ॥ विश्व आदित्या इत्यादि—विश्वे आदित्याः सर्वे द्वादशापि आदित्याः वसवश्च देवाः अष्टौ वसवः रुद्राः एकादश गोप्तारः वृद्ध्यादिना मरुतश्चैकोनपञ्चाशत् एते सर्वे सदन्तु आगच्छन्तु । तथा प्रजापतिः ब्रह्मा परमेष्ठी ऊर्जमन्नं प्रजां पुत्रादिकां अमृतं च मयि पिन्वमानः क्षरन् दधातु स्थापयतु ॥ प्रजापते न त्वदेतान्यन्य इति—हे प्रजापते, त्वत्तोऽन्यः कश्चिदपि विश्वा विश्वानि जातानि उत्पन्नानि न परिता बभूव न परिगृह्णाति त्वदन्यः परिग्रहीतुं न कश्चिदपि शक्नोति । अतो यत्कामा वयं तुभ्यं जुहुमः तदभिलषितं नोऽस्माकमस्तु । वयं रयीणां धनानां पतयः स्यामेति । इति मन्त्रार्थः ॥

अथ (पूर्वेद्युः)सप्तमीश्राद्धप्रयोगः ॥ तत्र हेमन्तशिशिरयोश्चतुर्षु मासेषु साध्यमष्टकाश्राद्धं कुर्यात् । अशक्तौ माघमासे एव

कुर्यात् । तत्रायं क्रमः । पूर्वेद्युस्तदहरेव वा तिथ्यादिकं संकीर्त्य दर्शवत्पितॄनन्वष्ट्य नित्यविधिरूपमष्टकाश्राद्धं कर्तुकामः पूर्वेद्युः-श्राद्धं करिष्य इति संकल्प्य ब्राह्मणनिमन्त्रणादि द्वितीयसंकल्पान्तं कृत्वा ब्राह्मणान्संनिधाप्य अग्निसमिन्धनादि परिषेचनान्तं कृत्वा स्थालीत्रयपूर्वकं पात्राण्यासाद्य स्थाल्यां व्रीहिपूरणादिकं तण्डुलप्रक्षालनान्तं कृत्वा तण्डुलांस्तिसृषु स्थालीषु विभज्य शुद्धौदनं कृसरं पायसं च श्रपयित्वा अतिप्रणयनादिध्रुवायामाज्यनिषेचनान्तं कृत्वा चरुत्रयं क्रमेणाभिघार्योदगुद्वास्य अतिप्रणीताग्नेः पश्चिमतः क्रमेण दक्षिणसंस्थमासाद्य स्वागतवचनादि भस्ममर्यादाकरणानन्तरकर्तव्यं पाणिशोधनान्तं कृत्वा चरुत्रयं पात्रान्तरेषु पृथक्पृथगुद्धृत्य घृताक्तं कृत्वा प्राचीनावीती अग्नौकरिष्य इति पित्रर्थब्राह्मणाननुज्ञाप्य अतिप्रणीताग्नाविध्ममुपसमाधाय ध्रौवाज्येन मेक्षणमुपस्तीर्य शुद्धौदनस्य मध्यादङ्गुष्ठपर्वमात्रं मेक्षणेनावदाय पूर्वार्धात्तथैवावदाय कृसरौदनात्तथैवावदाय पायसात्तथैवावदाय स्थालीत्रयशिष्टं पृथक्पृथगभिघार्यावत्तं चैकवारमभिघार्य । उदीरतामित्यस्य शङ्खः पितरस्त्रिष्टुप् । अनेन मन्त्रेण मेक्षणेन हुत्वा पुनःपूर्ववदवदायावदाय इदंपितृभ्यो नम इत्यादिसप्तभिर्मन्त्रैः सप्तेत्यष्टावाहुतीर्हुत्वा प्रत्येकं पितृभ्य इदं नममेत्युद्देशत्यागौ कृत्वा यज्ञोपवीती मेक्षणमनुप्रहृत्याप उपस्पृश्य प्राचीनावीती हुतशिष्टचरुत्रयशेषं पिण्डार्थमुद्धृत्यान्नेषु निक्षिप्य शेषनिवेदनादि विप्रविसर्जनान्तं कृत्वा तदहरेव वर्गत्रयस्य तिलतर्पणं कृत्वा पूर्वोक्तनियमेन दिवसशेषं नयेत् । आहिताग्निश्चेद्ब्राह्मणनिमन्त्रणाद्याच्छादनान्तं कृत्वा दक्षिणाग्निप्रज्वलनादिहविरासादनान्तं कृत्वा पूर्ववद्ब्राह्मणाननुज्ञाप्य दक्षिणाग्नाविध्ममुपसमाधाय उदीरतामित्यादिभिरष्टाहुतीर्हुत्वा मेक्षणमनुप्रहृत्य होमशेषपरिवेषणादि ब्राह्मणविसर्जनान्तमनाहिताग्निवत्कुर्यात् ॥ इति सप्तमीश्राद्धप्रयोगः ॥

अथाष्टका(अष्टमी)श्राद्धप्रयोगः ॥ पूर्वेद्युः परेद्युर्वा देशकालौ संकीर्त्य प्राचीनावीती षष्ठीविभक्त्या दर्शवत्पितॄननूद्य नित्यविधिरूपमष्टकाश्राद्धं करिष्य इति संकल्प्य ब्राह्मणनिमन्त्रणादिद्वितीयसंकल्पान्तं कृत्वौपासनाग्निं प्रज्वाल्य । प्राणानायम्य देशकालौ संकीर्त्य अष्टकाश्राद्धाङ्गहोमं करिष्ये तत्र देवतापरिग्रहार्थमन्वाधानं करिष्य इत्यादि चक्षुषी आज्येनेत्यन्तमुक्त्वा । विश्वान्देवान् सप्तवारं चरुद्रव्येण शेषेण स्विष्टकृतमित्यादि सद्योयक्ष्य इत्यन्तमुक्त्वा समिद्धयमग्नावाधाय परिसमूहनादिपूर्णपात्रनिधानान्तं कृत्वा । सपवित्रं शूर्पं अग्नेः पश्चिमतो निधाय तत्र चतुरश्चतुरो मुष्टीः प्रधानदेवतासंख्याकास्तूर्ष्णीं निरुप्य तथैव प्रोक्षणावहननाद्याज्यभागान्तं कृत्वा भवदनुज्ञयाग्नौ होमं करिष्य इति पित्रर्थब्राह्मणाननुज्ञाप्य कुरुष्वेति तैरुक्तः अभ्युद्धारपूर्वं समन्त्रं होमं कुर्यात् । तत्र मन्त्राः । अग्नेनयेति मन्त्रद्वयस्यागस्त्योऽग्निस्त्रिष्टुप् । एताभ्यां ॥ ग्रीष्मो हेमन्त ऋतवः शिवा नो वर्षाः शिवा अभयाः शरन्नः । संवत्सरोऽधिपतिः प्राणदो नोऽहोरात्रे कृणुतां दीर्घमायुः स्वाहा ॥ शान्तापृथिवी शिवमन्तरिक्षं द्यौर्नो देव्यभयं नो अस्तु । शिवा दिशः प्रदिश उदिशो न आपो विद्युतः परिपान्तु विश्वतः स्वाहा ॥ आपो मरीचीः प्रवहन्तु नो धियो धाता समुद्रो वहन्तु पापम् । भूतं भविष्यदभयं विश्वमस्तु मे ब्रह्माभिगुप्तः स्वाराक्षाणि स्वाहा ॥ एतान्मन्त्रानेकश्रुत्योक्त्या हुत्वा । प्रजापते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् । अनेन च हुत्वा सर्वत्र विश्वेभ्यो देवेभ्य इदं नममेत्युद्दिश्य त्यक्त्वा स्विष्टकृदादिहोमशेषं समाप्य स्वागतवचनाद्यर्घशेषमवनयनान्तं कृत्वा ब्राह्मणसमीपे आग्नेय्यां दिशि भुवं संप्रोक्ष्य पूर्ववत्प्रथमपात्रं न्युब्जीकृत्य गन्धदानादि पाणिशोधनान्तं कृत्वा भोजनार्थादन्नादुद्धृत्य घृताक्तं कृत्वा पित्रर्थब्राह्मणसमीपे उपविशेत् । पाणिं पर्युक्ष्य तत्र प्राचीनावीती दक्षिणाग्र-

कान्दर्भानास्तीर्य मेक्षणमुपस्तीर्य मेक्षणेन वा द्विवारमवदाय पात्रस्थमवत्तं चाभिघार्य सोमायपितृमतेस्वधानम इति मन्त्रेण पाणौ हुत्वा । पूर्ववदवदाय अग्नयेकव्यवाहनायस्वधानम इति मन्त्रेण तथैव जुहुयात् । एवमेव सर्वत्र जुहुयात् । ततो ब्राह्मणास्तदन्नं पात्रे निक्षिप्य आचम्य पूर्ववदुपविशेयुः । ततः कर्तान्नपरिवेषणं कृत्वा पाणिहोमशिष्टमन्नं सर्वं परिविष्यान्नत्यागादिसंपन्नवचनान्तं कृत्वा भोजनार्थादन्नादन्नं पिण्डार्थमन्नमुद्धृत्य पुनः प्रकिरणार्थमपि तथैवोद्धृत्य ब्राह्मणैरुत्तरापोशनहस्तप्रक्षालने कृते यज्ञोपवीती स्वयमाचम्य भोजनपात्राद् बाहुमात्रमुत्सृज्य स्फ्येन लेखाद्वयमपहता इति मन्त्रेण कृत्वा शुद्धाभिरद्भिः प्रोक्ष्य क्रमेण सकृदाच्छिन्नद्वयेनास्तीर्य प्राचीनावीती शुन्धन्तां पितरः सपत्नीका इत्यारभ्याभ्युपस्थानवर्जं ब्राह्मणविसर्जनान्तं सर्वं कृत्वा तदहरेव वर्गद्वयस्य तिलतर्पणं कुर्यात् ॥ इत्यष्टमी(अष्टका)श्राद्धप्रयोगः ॥

अथ नवमीश्राद्धप्रयोगः ॥ कर्ता पूर्वेद्युः परेद्युर्वा प्राणानायम्य देशकालौ संकीर्त्य प्राचीनावीती दक्षिणामुखः सव्यं जान्वाच्य पितृवर्गं पत्नीसहितं सपत्नीकं मातामहवर्गं च षष्ठीविभक्त्यानूद्य नित्यविधिरूपमन्वष्टक्यश्राद्धं पिण्डपितृयज्ञव्यतिषक्तपार्वणविधानेनान्नेन हविषा सद्यः करिष्य इति संकल्प्य निमन्त्रणादिद्वितीयसंकल्पान्तं कृत्वा ब्राह्मणान्संनिधाप्य दक्षिणाप्रवणे देशे औपासनाग्निं विधिवत्प्रतिष्ठाप्य परिसमुह्य प्राग्दक्षिणाग्रैर्दर्भैः समूलैरकम्पयन् त्रिवारमप्रदक्षिणं परिस्तीर्य पात्रासादनार्थं दर्भानास्तीर्य चरुस्थालीत्रयस्योलूखलमुसलधुवकृष्णाजिनसकृदाच्छिन्नत्रयेध्ममेक्षणकमण्डलूनेकैकश आसेयसंस्थमासाद्य स्थाल्यां व्रीहिपूरणादितण्डुलप्रक्षालनान्तं कृत्वा स्थालीषु तण्डुलान्विभज्य शुद्धौदनं तिलमिश्रौदनं पायसं च श्रपयित्वा किंचिदोदनाग्रद्रवं पा-

मान्तरेणादाय संभृत्य अतिप्रणीय तमपि पूर्ववत्परिस्तीर्य स्फ्येन पितृवर्गोद्यर्थं पश्चिमापवर्गं लेखात्रयमुल्लिख्य प्रत्येकमद्भिरभ्युक्ष्य गन्धदान्छिन्नैर्नैकैकैर्भा रेखामाच्छाद्य ध्रुवायामाज्यमासिच्यौपासनाग्नेर्दक्षिणतः कुशेष्वासाद्य स्रुवेणाज्यमादाय चरुत्रयं प्रत्ये-
कमभिघार्याभिकदगुद्वास्यातिप्रणीताग्नेः पश्चाद्दर्भेषु क्रमेण दक्षिणसंस्थमासाद्य दधिमिश्रगोधूमपिष्टरूपसक्तून् मधुमिश्रगोधूमपिष्ट-
रूपसक्तून् पात्रद्वये संभृत्य दधिमन्थसक्तूनौपासनेऽधिश्रित्याभिघार्योदगुद्वास्य पायसं दक्षिणत आसाद्य अभ्यञ्जनाञ्जनकशिपू-
पबर्हणानि प्रत्येकं त्रयमौपासनाग्नेर्दक्षिणत आसाद्य स्वागतवचनादिपित्रर्थब्राह्मणानां तृतीयनिमन्त्रणान्तं कृत्वा । अर्घ्यासादनकाले
तैजसानि नवसंख्यानि पात्राण्यासादयेत् । मातृद्वित्वे बहुत्वे वा पितामहीप्रपितामहीद्वित्वे बहुत्वे वा तत्संख्याकानि पात्राण्या-
सादयेत् । एवं देवतासंख्यया पात्राण्यासाद्य प्रोक्ष्योत्तानानि कृत्वा प्रतिपात्रं दर्भत्रयं निधाय जलं संपूर्य शंनोदेवीरित्यादिमन्त्रेण
मजलं गन्धदनुमन्त्र्य तिलोसीत्याद्यनूक्तेन मन्त्रेण प्रतिपात्रं मन्त्रावृत्त्या तिलान्निक्षिप्य गन्धपुष्पाणि च निक्षिप्य पितृपात्रं संपन्नमि-
त्यादिग्यालिङ्गमभिमृश्य पूर्ववत्पित्रादीनां नामगोत्ररूपपूर्वकमुक्त्वावाह्यार्चयित्वा उपवीती पित्रादिसर्वेषां नामगोत्ररूपाण्युच्चार्य सं-
पादिता वः स्वधा अर्घ्या इति तत्तत्पात्रं क्रमेण पुरतः संस्थाप्य पूर्ववत्पितरिदं तेऽर्घ्यमिति पितॄणामर्घ्यं दत्वा मातरिदं तेऽर्घ्यं इत्या-
दिना मातृवर्गस्य दत्वा पूर्ववन्मातामहवर्गस्य दत्वा सर्वेषां पात्राणां जलं क्रमेण पितृपात्रे संपूर्य तज्जलेन मुखमभ्युक्ष्य गन्धाद्यैस्तिलक-
गणपाणिशोधनान्तं कृत्वा चरुत्रयाद्दधिमन्थाच्च पात्रचतुष्टये क्रमेण हविः पृथगुद्धृत्य घृताक्तं कृत्वा अग्नौकरिष्य इति पित्रर्थब्रा-
ह्मणाननुज्ञाप्य क्रियतामिति तैरुक्तोऽतिप्रणीताग्नावध्मुपसमाधाय मेक्षणे उपस्तीर्य तेनाङ्गुष्ठपर्वमात्रं क्रमेण हविश्चतुष्टयस्य मध्या-

हीं ति । एतद्देशोक्तानां श्रवणाकर्मसर्पबल्याश्वयुजीकर्माग्रयणप्रत्यवरोहणानां प्रायश्चित्तमिति मन्तव्यम् । पार्वणश्राद्धाष्टकाश्राद्धयोस्तत्तत्प्रकरणोक्तप्रायश्चित्तं कर्तव्यमिति ॥

॥ इति श्रीमन्नृसिंहीये प्रयोगपारिजातेऽष्टकाश्राद्धविधिः समाप्तः ॥

अवसितोऽत्र षोडशसंस्कारात्मकः पाकसंस्थासंक्षेपयुक्तः प्रथमो भागः ॥

अयं ग्रन्थः गोमान्तकप्रान्तविराजमानसुप्रसिद्धपेडणेग्रामवास्तव्येन

पणशीकरोपाह्वविद्वद्वरश्रीमल्लक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणा संस्कृतः

मुम्बय्यां श्रेष्ठिवर श्रीमान् तुकाराम जावजी इत्यभिख्येन स्वीये निर्णयसागराख्य-
मुद्रणयन्त्रालये रामचन्द्र येसु शेडगेद्वारा मुद्रयित्वा प्रकाशितः ।

शालिवाहनशाके १८३८, सन १९१६ ईसवी

---

Published by Tukaram Javaji and Printed by Ramchandra Yesu Shedge, at the
Nirnaya-sagar Press, 23, Kolbhat Lane, Bombay

इति श्रीमन्नृसिंहीयस्य प्रयोगपारिजातस्य

षोडशसंस्कारकाण्डं पाकसंस्थाकाण्डसंक्षेपश्च संपूर्णः ।